श्रीजामनगरे स्वकीये जैनभास्करोदयमुद्रालये पंडितहीरालालतनुजेन व्यवस्थाकारिणा
विठ्ठलजिदाख्येन मुद्रितं प्रसिद्धीकृतं च ।



## प्रस्तावना.

इह जगति किल सकलजगज्जंतूपकारार्थं भव्यजनहृदयकमलदिनकरेण सुरासुरनतांह्रिकमलेन केवलालोकभास्करेण भगवता श्रीसिद्धार्थनंदनेन ( महावीरेण ) मुक्तिसदनगमनसहायानतुल्यमपारसंसारपारावारभ्रमणाकुलजंतूनां प्रवरप्रवहणभूतं षट्त्रिंशदध्ययनसंबद्धं श्रीमदुत्तराध्ययनं नाम सूत्रं प्ररूपितमस्ति, तच्च सूत्रं भगवतोंतेवासिनाऽनेकशिष्यगणधारिणा गुणवता श्रीसुधर्मस्वामिना श्रीजंबूस्वामिनोऽग्रे व्याख्यातमस्ति. अथ चतुर्थे आरके व्यतीते सति पंचमारके हीनज्ञानवतां जनानामुपदेशद्वारेण जिनधर्मबोधिप्रापणार्थं केश्चिद् बुद्धिमद्भिराचार्यैरस्य सूत्रवर्यस्य संस्कृतभाषया टीकारूपो विस्तारो विहितः, यद्यप्यस्य सूत्रस्यानेकाः टीकाः श्रीमद्भिराचार्यैं रचिता विद्यमानाः संति, तथापि तेषां मध्ये मुग्धजनानां सरलोपदेशदात्री श्रीखरतरगच्छालंकारश्रीमल्लक्ष्मीकीर्तिगणिशिष्यवाचकलक्ष्मी-

वल्लजगणिना विरचितास्ति, तस्मात्तस्या मुद्रणद्वारेण प्रसिद्धिं कर्तुं योग्यं विचारितमस्ति श्रीजामनगरनिवास्योशवालवणिग्वंशसंभूतश्रेष्ठिवर्यसौजाग्यचंद्रस्य धर्मपत्न्या गंगास्वरूपिण्या केसराख्यया श्रेष्ठिन्या स्वजर्तुः स्वर्गगमनानंतरं पुण्यार्थं.

अथेह किल मतिमांद्याद् दृष्टिदोषोद्भूताः स्खलना दृष्टिगोचरीजवेयुस्तदा तत् क्षमणीयं विबुधैः पाठकगणैः, यतः—गच्छतः स्खलनं क्वापि। जवत्येव प्रमादतः॥ हसंति दुर्जनास्तत्र। समादधति सज्जनाः ॥ १ ॥ यदि पाठकवृंदा एतस्माद्ग्रंथाद्धंसा इव सारं गृहीत्वा हर्षं प्राप्स्यंते तदा प्रसिद्धिकर्ता स्वं कृतार्थं मंस्यते. इत्यलं विस्तरेण. ॥ श्रीरस्तु ॥



**सूचना**—आ पुस्तकनो गेर-उपयोग न थवा माटे जे जुज किम्मत राखवामां आवी छे, तेना उपजेला रुपीयामांथी एक बीजुं पुस्तक छापवानुं नक्की करेलुं छे, अने ते पण जुज किम्मते आपवामां आवशे.

ता० क०—आ पुस्तकमां २३३-३४-३५-३६ नो पृष्टनो आंक छापवो रही गयो छे, तेने बदले २३७-३८-३९-४० ना आंक बेवडा छे ते वांचकवृन्दे संबंध प्रमाणे अनुक्रमे समजी लेवा.

अथ यस्य संस्मरणार्थमिदं पुस्तकं मुद्रापितमस्ति तस्य श्रेष्टिनः संक्षिप्तं जीवनचरित्रं लिख्यते—



अत्रैव क्षेत्रे भरते समस्ति । हाल्लारदेशो धनधान्यपूर्णः ॥ तत्रास्ति रम्यं जिनमंदिराढ्यं । सुरोघशस्यं नगरं नवीनं ॥ १ ॥ धर्मे रक्तास्तत्र जैना वसंति । तत्र ज्ञातिरोशवालाभिधाना ॥ यस्यामासीज्जैनधर्मे प्रवीनः । वर्यः श्रेष्टी कर्पूरादिश्च चंद्रः ॥ २ ॥ तस्याभवत्कुलशिरोमणितुल्यपुत्रः । सौभाग्यचंद्र इति नाम विराजितश्च ॥ बाल्यादभूज्जिनमते रतमस्य चित्तं । कालं निजं गमयतिस्म सुसाधुभक्त्यां ॥ ३ ॥ न्यायेनोपार्जिता लक्ष्मी—स्तेन व्यापारवारिधेः ॥ व्ययं यस्याश्च जैनेंद्र—पथि सत्पथि सोऽकरोत् ॥ ४ ॥ सिद्धाचले गतस्मान्यदा स । यात्रानिमित्तं प्रविलासिचित्तः ॥ यात्रार्थमायातजनस्य वृंदं । दृष्ट्वा हृदि चिंतयतिस्म चैवं ॥ ५ ॥ अथैषामाश्रयायात्र । धर्मशालां विधाय वै ॥ करोमि सद्व्ययं लक्ष्म्याः । पुण्यं च समुपार्जये ॥ ६ ॥ विचारमित्थं सुहृदो निजस्य । गत्वा जगौ रत्नजिदाख्यकस्य ॥ तेनापि तत्रानुमतिश्च दत्ता । द्राग्यां च साकारि सुधर्मशाला ॥ ७ ॥ अद्यापि दर्शयत्यस्य ।

विनीतत्वं महाधियः ॥ गोघानिवासिमित्रस्य । नाम्नैषा हि विराजते ॥ ८ ॥ जातोऽन्यदा हृ-
दि विचार इतीह तस्य । यत्कारयामि निजबंधुगणस्य यात्रां ॥ ज्ञात्वा हि तस्यैव महर्द्धिके-
न । श्रेष्ठिद्वयेन निजसंमतिरत्र दत्ता ॥ ९ ॥ शुभे वर्षे महासंघो । प्रयाणमकरोदथ ॥ रैवता-
चलयात्रायै । जीर्णदुर्गं पुरं ययौ ॥ १० ॥ तत्र यात्रां विनिर्माय । प्रभूतद्रविणव्ययात् ॥ पा-
दलिप्तपुरं प्राप्तः । श्रीसंघः सुखभाक्ततः ॥ ११ ॥ नानाविधाः क्रिया धर्म्या । आराध्य नि-
जजन्म च ॥ सफलं मन्यमानास्ते । न्यवर्तंत सुयात्रिकाः ॥ १२ ॥ मुंबापुर्यां विमलमतिभृ-
त्स करोतिस्म सारं । सुव्यापारं फलदमनिशं सद्व्ययं चातनोति ॥ वार्धक्ये वै सततसुखदं
भावयन् जैनधर्मं । निश्चिंतोऽसौ गमयति सदा साधुभक्त्यां स्वकालं ॥ १३ ॥ कार्तिकस्य च-
तुर्दश्यां । स्मृतपंचनमस्कृतिः ॥ कालं कृत्वा च प्रापासौ । सुखेन सुमनःश्रियं ॥ १४ ॥ तस्य
संस्मृतिलेशाय । ग्रंथो मुद्रापितोऽस्त्ययं ॥ भवतु भव्यलोकानां । मोक्षसंपादनक्षमः ॥ १५ ॥

( मनःसुखलालेन विरचितं )



॥ श्रीजिनाय नमः ॥

# ॥ अथ श्री उत्तराध्ययनसूत्रं सटीकं प्रारभ्यते ॥

( मूलकर्ता—श्रीसुधर्मास्वामी.
टीकाकार—श्रीलक्ष्मीवल्लभसूरिः )

अर्हंतो ज्ञानभाजः सुरवरमहिताः सिद्धिसौधस्थसिद्धाः । पंचाचारप्रवीणाः प्रगुणगुणधराः पाठकाश्चागमानां ॥ लोके लोकेशवंद्याः सकलयतिवराः साधुधर्माभिलीनाः । पंचाप्येते सदासा विदधतु कुशलं विघ्ननाशं विधाय ॥ १ ॥ श्रीवीरं क्षीरसिंधूदकविमलगुणं मन्मथारिप्रघातं । श्रीपार्श्वं विघ्नवल्लीवनदलनविधौ विस्फुरत्कांतिधारं ॥ सानंदं चंद्रभूत्या हतवचनरसं दत्तहृत्कर्णबोधं । वंदेऽहं भूरिभक्त्या त्रिभुवनमहितं वाङ्मनःकाययोगैः ॥ २ ॥ उत्तराध्ययनसूत्रवृत्तयः । संति यद्यपि जगत्यनेकशः ॥ मुग्धहृत्सदनबोधदीपिकां । दीपिका-

विनीतत्वं महाधियः ॥ गोघानिवासिमित्रस्य । नाम्नैषा हि विराजते ॥ ८ ॥ जातोऽन्यदा हृदि विचार इतीह तस्य । यत्कारयामि निजबंधुगणस्य यात्रां ॥ ज्ञात्वा हि तस्यैव महर्द्धिकेन । श्रेष्ठिद्वयेन निजसंमतिरत्र दत्ता ॥ ९ ॥ शुभे घस्रे महासंघो । प्रयाणमकरोदथ ॥ रैवताचलयात्रायै । जीर्णदुर्गं पुरं ययौ ॥ १० ॥ तत्र यात्रा विनिर्माय । प्रभूतद्रविणव्ययात् ॥ पादलिप्तपुरं प्राप्तः । श्रीसंघः सुखभाक्ततः ॥ ११ ॥ नानाविधाः क्रिया धर्म्या । आराध्य निजजन्म च ॥ सफलं मन्यमानास्ते । न्यवर्तंत सुयात्रिकाः ॥ १२ ॥ मुंबापुर्यां विमलमतिभृत्स करोतिस्म सारं । सुव्यापारं फलदमनिशं सद्व्ययं चातनोति ॥ वार्धक्ये वै सततसुखदं भावयन् जैनधर्मं । निश्चिंतोऽसौ गमयति सदा साधुभक्त्यां स्वकालं ॥ १३ ॥ कार्तिकस्य चतुर्दश्यां । स्मृतपंचनमस्कृतिः ॥ कालं कृत्वा च प्रापासौ । सुखेन सुमनःश्रियं ॥ १४ ॥ तस्य संस्मृतिलेशाय । ग्रंथो मुद्रापितोऽस्त्ययं ॥ भवतु भव्यलोकानां । मोक्षसंपादनक्षमः ॥ १५ ॥

( मनःसुखलालेन विरचितं )



अगारं गृहं यस्य सोऽनगारोऽगृहः, तस्य नियतवासरहितस्य. ॥ १ ॥

॥ मूलम् ॥—आणानिद्देसकरे । गुरूणमुववायकारए ॥ इंगियाकारसंपन्ने । से विणीय-
त्ति वुच्चइ ॥ २ ॥ व्याख्या—स शिष्यो विनीत इत्युच्यते, स इति कः? यः शिष्य आज्ञा-
यास्तीर्थंकरप्रणीतसिद्धांतवाण्या निर्देश उत्सर्गापवादकथनं तस्य कारको भवति, अथवाज्ञा-
या गुरुवाक्यस्य निर्देशः प्रामाण्यमाज्ञानिर्देशस्तं करोतीत्याज्ञानिर्देशकरः. पुनर्यः शिष्यो गुरू-
णां समीपे पातः स्थितिस्तत्कारक उपपातकारकः; गुरूणां दृग्गोचरे तिष्ठतीत्यर्थः. पुनर्यः
शिष्य इङ्गिताकारसंपन्नो भवति, गुरूणामिङ्गितं मानसिकं चेष्टितं जानाति, पुनर्गुरूणामाकारं
बाह्यं शरीरचेष्टितं च जानाति, इङ्गितं निपुणमतिगम्यं, प्रवृत्तिनिवृत्तिज्ञापकं. ईषद्भ्रूशिरः-
कंपनादिकं, आकारः स्थूलमतिगम्यश्चलनादिदिशावलोकनादिसूचकः, यदुक्तं—अवलोकनं
दिशानां । विजृंभणं शाटकस्य संवरणं ॥ आसनशिथिलीकरणं । प्रास्थितलिङ्गानि चैतानि
॥ १ ॥ तस्माद्यः शिष्यो गुरोरिङ्गिताकारौ सम्यक् प्रकर्षेण जानातीतीङ्गिताकारसंपन्नः. एता-
दृशः शिष्यो विनयवान् उच्यते ॥ २ ॥ अथाविनीतस्य लक्षणमाह—

मिव तनोम्यहं पुनः ॥३॥ प्राप्तचारुविभवो गिरां गिरः। श्रीगुरोश्च विशदप्रभावतः ॥ वक्ति लक्ष्म्युपपदस्तु वल्लभः, सज्जना मयि भवंतु सादराः ॥ ४ ॥ युग्मं ॥ श्रेयसे स्तादृगुणभृतां। चतुर्दशशतीशतां ॥ श्रीपुंडरीकमुख्यानां। या द्विपंचाशदुत्तरा ॥ ५ ॥

॥ मूलम् ॥—संजोगा विप्पमुक्कस्स। अणगारस्स भिक्खुणो ॥ विणयं पाउकरिस्सामि। आणुपुव्विं सुणेह मे ॥ १ ॥ व्याख्या—श्रीसुधर्मास्वामी जंबूस्वामिनं वक्ति, जंबूस्वामिनमुद्दिश्य अन्यानपि शिष्यान् वदति, भो शिष्याः! अहं आनुपूर्व्या अनुक्रमेण भिक्षोर्भिक्षया मधुकरवृत्त्याहारं गृहीत्वा शरीरधारकस्य साधोर्विनयं प्रादुःकरिष्यामि प्रकटीकरिष्यामि, मे मम विनयं प्रकटीकरिष्यतो यूयं वाक्यं शृणुत? यतो जिनशासनस्य मूलं विनयधर्म एव, उक्तं च श्रीदशवैकालिके—विणयाउ नाणं, नाणाउ दंसणमित्यादि. कथंभूतस्य भिक्षोः? संयोगात् बाह्याभ्यंतरभेदेन द्विविधात् विप्रमुक्तस्य विशेषेण रहितस्य, तत्र बाह्यसंयोगो धनधान्यपुत्रमित्रकलत्रादि, अचित्तसचित्तादिरूपः, अभ्यंतरसंयोगो मिथ्यात्ववेदत्रिकहास्यादिषट्कक्रोधादिचतुष्करूपः. एवंविधद्विविधसंयोगाद्विरतस्य. पुनः कीदृशस्य भिक्षोः? अनगारस्य, न विद्यते

अगारं गृहं यस्य सोऽनगारोऽगृहः, तस्य नियतवासरहितस्य. ॥ १ ॥

॥ मूलम् ॥—आणानिद्देसकरे । गुरूणमुववायकारए ॥ इंगियाकारसंपन्ने । से विणीय-त्ति वुच्चइ ॥ २ ॥ व्याख्या—स शिष्यो विनीत इत्युच्यते, स इति कः? यः शिष्य आज्ञायास्तीर्थंकरप्रणीतसिद्धांतवाण्या निर्देश उत्सर्गापवादकथनं तस्य कारको भवति, अथवाज्ञा गुरुवाक्यस्य निर्देशः प्रामाण्यमाज्ञानिर्देशस्तं करोतीत्याज्ञानिर्देशकरः. पुनर्यः शिष्यो गुरूणां समीपे पातः स्थितिस्तत्कारक उपपातकारकः, गुरूणां दृग्गोचरे तिष्टतीत्यर्थः. पुनर्यः शिष्य इङ्गिताकारसंपन्नो भवति, गुरूणामिङ्गितं मानसिकं चेष्टितं जानाति, पुनर्गुरूणामाकारं बाह्यं शरीरचेष्टितं च जानाति, इङ्गितं निपुणमतिगम्यं, प्रवृत्तिनिवृत्तिज्ञापकं. ईषद्भ्रूशिरःकंपनादिकं, आकारः स्थूलमतिगम्यश्चलनादिदिशावलोकनादिसूचकः, यदुक्तं—अवलोकनं दिशानां । विजृंभणं शाटकस्य संवरणं ॥ आसनशिथिलीकरणं । प्रास्थितलिङ्गानि चैतानि ॥ १ ॥ तस्माद्यः शिष्यो गुरोरिङ्गिताकारौ सम्यक् प्रकर्षेण जानातीतीङ्गिताकारसंपन्नः. एतादृशः शिष्यो विनयवान् उच्यते ॥ २ ॥ अथाविनीतस्य लक्षणमाह—

॥ ३ ॥

॥ मूलम् ॥—आणाणिद्देसकरे । गुरूणमुववायकारए ॥ पडिणीए असंबुद्धे । अविणीएत्ति वुच्चइ ॥ ३ ॥ व्याख्या—स शिष्योऽविनीत इत्युच्यते, य आज्ञायास्तीर्थंकरवाक्यस्य गुरोर्वाक्यस्य चानिर्देशकरोऽप्रमाणकर्ता ज्ञानविराधकः, पुनर्यो गुरूणामनुपपातकारको भवति, गुरूणां दृग्विषये स्थितिं न करोति, आदेशभयाद् दूरं तिष्ठतीत्यर्थः. पुनर्यः शिष्यो गुरूणां प्रत्यनीको गुरूणां छलान्वेषी, पुनर्योऽसंबुद्धस्तत्त्वस्यावेत्ता, एतादृशलक्षणोऽविनीतो भवति. ॥ ३ ॥ अत्र कूलवालकस्य दृष्टांतः—यथा एकस्य आचार्यस्य क्षुल्लकोऽविनीतः, तमाचार्यः शिक्षार्थं वाचा ताडयति, स क्षुल्लको रोषं वहति. अन्यदा आचार्यस्तेन क्षुल्लकेन समं सिद्धशैलं वंदितुं गतः, तत उत्तरत आचार्यस्य वधाय तेन पृष्ठस्थितेन क्षुल्लकेन शिला मुक्ता, आयांत्याचार्येण दृष्टा, स्वपादौ प्रसारितौ, अन्यथा स आचार्यो मृतोऽभविष्यत्. आचार्येण शापोऽस्मै क्षुल्लकाय दत्तः, हे दुरात्मन्! त्वं स्त्रीतो विनंक्ष्यसि, अथ स क्षुल्लक आचार्योऽयं मिथ्यावादी भवत्विति विचिंत्य पृथग्भूतस्तापसाश्रमे गत्वा तिष्ठति, तत्रासन्ननदीकूले आतापनां कुरुते, मार्गसमीपे सार्थं विलोकयति, यदि शुद्धं प्राप्नोति तदाहारं गृ-

ह्लाति, नो चेत्तदा तपः करोति, तस्यातापनाप्रजावेण नद्यन्यत्र व्यूढा, ततो लोकैरस्य कूल-
वालक इति नाम कृतं. इतश्च श्रेणिकपुत्रः कूणिको राजा स्वपत्नीपद्मावतीप्रेरितः स्वज्रातृ-
हल्लविहल्लपार्श्वे जनकश्रेणिकार्पितदिव्यकुंरुलाष्टादशसरिकहारसेचनकहस्त्यादिकं वस्तु मा-
र्गितवान्. तौ च सर्वं लात्वा मातामहचेटकमहाराजपार्श्वे वैशालीनगर्यां गतौ, कूणिकेन
मातामहचेटकमहाराजपार्श्वात् सर्ववस्तुसहितौ तौ ज्रातरौ मार्गितौ, शरणागतवज्रपंजरवि-
रुदं वहता तेन चेटकमहाराजेन न प्रेषितौ, ततो रुष्टः कूणिकः समाराधितशक्रचमरप्रजावे-
ण स्वजीवितं रक्षन्नमोघबाणेन चेटकमहाराजं संग्रामे निर्जित्य वैशालीनगरीमध्ये क्षिप्तवान्.
मज्जितवप्रां च तां वैशालीं नगरीं स कूणिको रोधयतिस्म. नगरीमध्यस्थितश्रीमुनिसुव्रत-
स्वामिस्तूपप्रभावात्तां नगरीं ग्रहीतुं न शक्नोति, ततो बहुना कालेन देवतयैवमाकाशे ज-
णितं—समणे जइ कूलवालए। मागहिअं गणिअं रमिस्सए॥ राया य असोगचंदए। वे-
सालिं नयरीं गहिस्सए ॥ १ ॥ कूणिकेनेमां वाणीं श्रुत्वा स कूलवालकश्रमणो विलोक्यमान-
स्तत्र स्थितो ज्ञातः, राजगृहादाकारिता मागधिका गणिका, तस्याः सर्वं कथितं, तयापि प्र-

तिपन्नं तं कूलवालकश्रमणमहमत्रानेष्यामीति. सा कपटश्राविका जाता, सार्थेन तत्रागता, तं कूलवालकं वंदित्वा भणति स्थाने स्थाने चैत्यानि साधूंश्च वंदित्वाहं भोजनं कुर्वे, यूयमत्र श्रुताः, ततो वंदनार्थमागता, अनुग्रहं कुरुत? प्रासुकमेषणीयं भक्तं गृह्णीत? इति श्रुत्वा कूलवालकश्रमणस्तस्या उत्तारके गतः, तया च नेपालगोटकचूर्णसंयोजिता मोदका दत्ताः, तद्भक्षणानंतरं तस्यातीसारो जातः, तया औषधप्रयोगेण निवर्तितः, प्रक्षालनोद्वर्तनादिभिस्तया तस्य चित्तं भेदितं, स कूलवालकश्रमणस्तस्यामासक्तोऽभूत्, तयापि स्ववशीभूतः स साधुः कूणिकसमीपमानीतः, कूणिकेनोक्तं भोः कूलवालकश्रमण! यथेयं वैशालीनगरी गृह्यते तथा क्रियतां? कूलवालेनापि तद्वचः प्रतिपद्य नैमित्तिकवेषेण वैशालीनगर्यभ्यंतरे गत्वा मुनिसुव्रतस्वामिस्तूपप्रभावो नगरीरक्षको ज्ञातः, नैमित्तिकोऽयं नगरीलोकैः पृष्टः कदा नगरीरोधोऽपगमिष्यति? स प्राह यदैनं स्तूपं यूयमपनयत तदा नगरीरोधापगमो भवतीति श्रुत्वा तैर्लोकैस्तथा कृतं. कूलवालकश्रमणेन बहिर्गत्वा सज्जितः कूणिकस्तेन तदैव स्तूपप्रभावरहिता सा नगरी भग्ना, एवं पतितः कूलवालकश्रमणोऽविनीतत्वात्. इति कूलवालककथा.

अथाविनीतस्य दोषपूर्वं दृष्टांतमाह—

॥ मूलम् ॥—जहा सूणी पूइकन्नी । निक्कसिज्जइ सव्वसो ॥ एवं दुस्सीलपडिणीए । मुहरी निक्कसिज्जइ ॥ ४ ॥ व्याख्या—एवममुनाप्रकारेणानेन दृष्टांतेन दुःशीलो दुष्टाचारः प्रत्यनीको गुरूणां द्वेषी, पुनर्मुखरी वाचालः, एतादृशः कुशिष्यो दुर्विनीतो निष्कास्यते गणात् संघाटकात् बाह्यः क्रियते, अथवा मुहुरी मुखं अरिर्यस्य स मुखारिरसंबद्धभाषी, प्राकृतत्वात् मुहुरीतिशब्दः. केन दृष्टांतेन निष्कास्यते? यथा पूतिकर्णी सटितकर्णी शुनी कुर्कुरी सर्वतः सर्वस्थानकाद्गृहादितः सर्वैर्निष्कास्यते, अत्र शुनीनिर्देशोऽधिकनिंदासूचकः, सटितकर्णीतिविशेषणेन सर्वांगं कृमिकुलाकुलं सूचितं, इत्यनेन दुर्विनीतत्वं त्याज्यं. ॥ ४ ॥

अथ पुनस्तदेव दृढयति—

॥ मूलम् ॥—कणकुंडगं चइत्ताणं । विठं भुंजइ सूयरो ॥ एवं सीलं चइत्ताणं । दुस्सीले रमई मिए ॥ ५ ॥ व्याख्या—एवममुना प्रकारेणानेन दृष्टांतेन मिए इति मृगो मूर्खोऽविवेकी शीलं सम्यगाचारं त्यक्त्वा दुःशीले दुष्टाचारे रमते, अत्र शीलशब्दो विनयाचार-

सूचकः, केन दृष्टांतेन तदाह—यथा शूकरः कणकुंडकं तंदुलजन्यभृतं भाजनं त्यक्त्वा विष्टां भुंक्ते तथा शीलं त्यक्त्वा मूर्खः कुशीलमादत्ते, दुःशीलस्य विष्टोपमा, मूर्खस्य शूकरोपमा, शीलस्य तंदुलभृतभाजनोपमा. ॥ ५ ॥

॥ मूलम् ॥—सुणिया भावं साणस्स । सूयरस्स नरस्स य ॥ विणए ठविज्ज अप्पाणं । इच्छंतो हियमप्पणो ॥ ६ ॥ व्याख्या—आत्मनो हितमिछन् पुरुष आत्मानं विनये स्थापयेत्, किं कृत्वा? शुनः कुर्कुरस्य, च पुनः शूकरस्य नरस्याभावमशुभं भावं दृष्टांतं निश्चयमानं, ' सुणिय ' इति श्रुत्वा पूर्वगाथायां शुनी पूतिकर्णीति स्त्रीलिंगनिर्देशः कृतः, इदानीं शुन इति लिंगव्यत्ययः प्राकृतत्वात्. ॥ ६ ॥

॥ मूलम् ॥—तम्हा विणयमेसिज्जा । सीलं पडिलभेजए ॥ बुद्धपुत्ते नियागट्ठी । न निक्कसिज्जइ कण्हुइ ॥ ७ ॥ व्याख्या—तस्मात्कारणात् बुद्धपुत्रो बुद्धानामाचार्याणां पुत्र इव पुत्रो बुद्धपुत्रः, आचार्याणां शिष्यः पुनर्नियोगो मोक्षस्तमर्थयतीति नियोगार्थी, एतादृशः साधुर्विनयमेषयेद्विनयं कुर्यात्. यतो विनयाच्छीलं सम्यगाचारं प्रतिलभेत स विनयवान्.

शीलवान्. कण्हुई इति कस्मादपि स्थानान्न निष्कास्यते सर्वत्राप्याद्रियते, अयं परमार्थः— विनयवान् सर्वत्र सादरो नवति. ॥ ७ ॥

॥ मूलम् ॥—निसंते सिया मुहरी । वुद्धाणं अंतिए सया ॥ अट्ठजुत्ताणि सिक्खिज्जा निरट्ठाणि उवज्जए ॥ ८ ॥ व्याख्या—अथ विनयपरिपाटीं दर्शयति—नितरामतिशयेन शांतो निशांतः क्रोधरहितः साधुः, सियाशब्देन स्यात् नवेत् साधुना क्षमावता नाव्यं, पुनः सुशिष्योऽमुखरी अवाचालः स्यात्, पुनर्वृद्धानामाचार्याणां ज्ञाततत्वानामंतिके समीपे अर्थयुक्तानि हेयोपादेयसूचकानि सिद्धांतवाक्यानि शिक्षेत. तु पुनर्निरर्थकानि निःप्रयोजनानि धर्मरहितानि स्त्रीलक्षणादिसूचकानि कोकवात्स्यायनादीनि वर्जयेत्. ॥ ८ ॥

॥ मूलम् ॥—अणुसासिउ न कुप्पिज्जा । खंतिं सेविज्ज पंमिए ॥ खुद्देहिं सह संसग्गिं । हासं कीमं च वज्जए ॥ ए ॥ व्याख्या—पुनर्विनयी साधुरनुशासितो गुरुनिः कठोरवचनैस्तर्जितोऽपि हितं मन्यमानः सन्न कुप्येत् कोपं न कुर्यात्, पंमितस्तत्वज्ञः क्षांतिं सेव्येत क्षमां कुर्वीत. पुनः सुसाधुः क्षुद्रैर्बालैः सहाथवा क्षुद्रैः पार्श्वस्थादिनिर्नग्नधर्मैः सह संसर्ग

संगतिं वर्जयेत्, पुनर्हास्यं पुनः क्रीडां च वर्जयेत्. ॥ ९ ॥

॥ मूलम् ॥—मा य चंडालियं कासी । बहुयं मा य आलवे ॥ कालेण य अहिज्जित्ता । तओ झाइज्ज एगगो ॥ १० ॥ व्याख्या—भो शिष्य! त्वं चंडालीकं माकार्षीः, चंडः क्रोधस्तेनालीकं, एवं लोभाद्यलीकं, कषायवशान्मिथ्याभाषणं माकार्षीः, पुनर्बहुकं बहु एव बहुकं, आलजालरूपं त्वं न आलपेर्मा ब्रूयाः, बहुभाषणात् बहवो दोषा भवंति, च पुनः काले प्रथमपौरुषीसमये अधीत्याध्ययनं कृत्वा, तत एकक एकाकी सन् ध्यायेदधीतमध्ययनं भवान् चिंतयेत्, एको भावतो द्रव्यतश्च, भावतो रागद्वेषरहितः, द्रव्यतः पशुपंडकादिरहितोऽपाश्रये स्थितः. ॥ १० ॥

॥ मूलम् ॥—आहच्च चंडालियं कट्टु । न निण्हुविज्ज कयाइवि ॥ कडंकडित्ति भासिज्जा । अकडंतो कडित्ति य ॥ ११ ॥ व्याख्या—आहत्य कदाचित्क्रोधादिकषायवशादलीकं दुःकृतं कृत्वा विनीतः साधुर्गुरूणामग्रतो न निह्नवीत, कृतस्य दुःकृतस्यापलपनगोपनं न विधेयं, कृतं कार्यं कृतमेव भाषेत, अकृतं कार्यं कृतं न भाषेत, अयं परमार्थः—गुरूणां

पुरतः सुविनीतेन सत्यवादिना वाच्यं. ॥ ११ ॥

॥ मूलम् ॥—मा गलियस्सेव कसं । वयणमिच्छे पुणो पुणो ॥ कसं व दट्ठुमाइन्ने । पावगं परिवज्जए ॥ १२ ॥ व्याख्या—अथ विनीताविनीतयोर्दृष्टांतमाह—विनीतः साधुराकीर्ण इव सुविनीताश्व इव गुरोर्वचनं शिक्षारूपं करणयोग्यस्य कार्यस्य प्रवृत्तिसूचकं. कशाघातरूपस्य कशस्य निवृत्तिसूचकं च मा इच्छेत्, पुनः पुनर्न इच्छेत्, किंतु एकवारं ज्ञापितं तत्तत्स्वकार्यं गुरोश्चित्तं च जानीते, किं कृत्वेव कशं प्राजनकं दृष्ट्वा? इव यथा गल्यश्वो दुर्विनीततुरगोऽश्ववारस्य कशाघातमिच्छेत्, तथा विनीतो वचनतर्जनं नेच्छेत्तथा सुविनीतशिष्य आचार्यस्याकारमिंगितं ज्ञात्वा पापानुष्ठानं वर्जयेदित्यर्थः. ॥ १२ ॥

॥ मूलम् ॥—अणासवा थूलवया कुसीला । मिउंपि चंडं पकरेंति सीसा ॥ चित्ताणुया लहु दक्खोववेया । पसायए ते हु दुरासयंपि ॥ १३ ॥ व्याख्या—अथ पुनर्विनीताविनीतयोराचारमाह—पूर्वार्धेन दुर्विनीतशिष्याणामाचारं वदति, एतादृशाः शिष्या मृदुमप्याचार्यं सरलमपि गुरुं चंडं कोपसहितं कुर्वंति, एतादृशाः कीदृशाः? अनाश्रवा गुरुवचनेऽस्थि-

ताः, आश्रवो वचने स्थित इति हैमः, न आश्रवा अनाश्रवाः, पुनर्ये स्थूलवचसः स्थूलमनिपुणं वचो येषां ते स्थूलवचसोऽविचार्यभाषिणः, पुनः कुशीलाः. अथोत्तरार्द्धेन विनीतस्याचारं वदति—चित्तानुगा आचार्यचित्तानुगामिनः, पुनर्लघु शीघ्रं दाक्ष्यं चातुर्यं तेनोपपेता लघुदाक्ष्योपपेताः, त्वरितं चातुर्यसहिता एतादृशाः शिष्या दुराश्रयं क्रूरमपि सक्रोधमपि गुरुं प्रसादयेयुः प्रसन्नं कुर्युः. ॥ १३ ॥ अत्र चंडरुद्राचार्यकथा—

उज्जयिन्यां चंडरुद्रसूरिः समायातः, स रोषणप्रकृतिः साधुभ्यः पृथगेकांतस्थाने आसांचक्रे, माभूत्कोपोत्पत्तिरिति चित्ते विचारयति. इतश्चेभ्यसुतः कोऽपि नवपरिणीतः सुहृत्परिवृतस्तत्रागत्य साधून् वंदते, कैश्चित्तन्मित्रैर्हास्येन प्रोक्तममुं प्रव्राजयत? साधुभिर्वैरमित्यभिधाय गुरुर्दर्शितः, तेऽपि गुरुसमीपे गताः, तथैव तैरुक्तं, गुरुभिर्भूतिमानयेति प्रोक्ते तेन नवपरिणीतेन हास्यादेव स्वयं भूतिरानीता, गुरुभिर्बलादेव गृहीत्वा तल्लोचः कृतः, सुहृदः खिन्नास्तदा नष्टाः, तस्य तु कृतलोचस्य लघुकर्मतयाऽतःपरं मम प्रव्रज्यैवास्त्विति परिणामः संपन्नः, ततस्तेनोक्तं केलिः सत्यीभूतोऽथान्यत्र गम्यते, गुरुराह अहो शिष्य! सांप्रतं रात्रि-

जाता, अहं रात्रौ न पश्यामि, तेन शिष्येण स्वस्कंधे गुरुरारोपितः, उच्चनीचप्रदेशे मार्गे व-हता तेन गुरोः खेद उत्पादितः, खिन्नेन तेन गुरुणाऽस्य शिरसि दंडप्रहारा दत्ताः, असौ मनस्येवं विचारयत्यहो महात्मायं मयेदृशीमवस्थां प्रापित इति सम्यग्भावयतस्तस्य केवल-ज्ञानमुत्पन्नं, केवलज्ञानबलेन समप्रदेश एव वहन् गुरुभिरेष उक्तः, मारिः सार इति कीदृ-शः समो वहन्नसि? तेनोक्तं युष्मत्प्रसादान्मे समं वहनं, गुरुभिरुक्तं किरे ज्ञानं समुत्पन्नं त-व? तेनोक्तं ज्ञानमेव, गुरुभिरुक्तं प्रतिपात्यप्रतिपाति? तेनोक्तमप्रतिपाति. गुरवस्तु हा मया केवली आशातितः, इत्युक्त्वा तच्छिरसि दंडप्रहारोद्भूतं रुधिरप्रवाहं पश्यंतः पुनः पुन-स्तत् क्षामणं कुर्वतः केवलज्ञानमापुरिति विनीतशिष्यैरीदृशैर्भाव्यं. ॥ १३ ॥

॥ मूलम् ॥— नापुट्ठो वागरे किंचि ! पुट्ठो वा नालियं वए ॥ कोहं असच्चं कुविज्जा । धारिज्जा पियमप्पियं ॥ १४ ॥ व्याख्या—सुविनीतशिष्योऽपृष्टः सन्न किंचिद्व्याकुर्यात् व्यागृ-णीयात्, न किंचिदपृष्टो वदेत्, अथवाऽपृष्टोऽल्पं पृष्टोऽपृष्टः सन् विनीतः किमपि न व्यागृणी-यात्, अपृष्टोऽल्पमपि न ब्रूयादिति भावः, अथवा पृष्टः सन्नलीकं न वदेत्. पुनः क्रोधमस-

ताः, आश्रवो वचने स्थित इति हैमः, न आश्रवा अनाश्रवाः, पुनर्ये स्थूलवचसः स्थूलम-
निपुणं वचो येषां ते स्थूलवचसोऽविचार्यभाषिणः, पुनः कुशीलाः. अथोत्तरार्द्धेन विनीत-
स्याचारं वदति—चित्तानुगा आचार्यचित्तानुगामिनः, पुनर्लघु शीघ्रं दाक्ष्यं चातुर्यं तेनोप-
पेता लघुदाक्ष्योपपेताः, त्वरितं चातुर्यसहिता एतादृशाः शिष्या दुराश्रयं क्रूरमपि सक्रोधमपि
गुरुं प्रसादयेयुः प्रसन्नं कुर्युः. ॥ १३ ॥ अत्र चंडरुद्राचार्यकथा—

उज्जयिन्यां चंडरुद्रसूरिः समायातः, स रोषणप्रकृतिः साधुभ्यः पृथगेकांतस्थाने आ-
सांचक्रे, माभूत्कोपोत्पत्तिरिति चित्ते विचारयति. इतश्चेभ्यसुतः कोऽपि नवपरिणीतः सुहृ-
त्परिवृतस्तत्रागत्य साधून् वंदते, कैश्चित्तन्मित्रैर्हास्येन प्रोक्तममुं प्रव्राजयत? साधुभिर्वैरमि-
त्यभिधाय गुरुर्दर्शितः, तेऽपि गुरुसमीपे गताः, तथैव तैरुक्तं, गुरुभिर्भूतिमानयेति प्रोक्ते तेन
नवपरिणीतेन हास्यादेव स्वयं भूतिरानीता, गुरुभिर्बलादेव गृहीत्वा तल्लोचः कृतः, सुहृदः
खिन्नास्तदा नष्टाः, तस्य तु कृतलोचस्य लघुकर्मतयाऽतःपरं मम प्रव्रज्यैवास्त्विति परिणामः
संपन्नः, ततस्तेनोक्तं केलिः सत्यीभूतोऽथान्यत्र गम्यते, गुरुराह अहो शिष्य! सांप्रतं रात्रि-

जाता, अहं रात्रौ न पश्यामि, तेन शिष्येण स्वस्कंधे गुरुरारोपितः, उच्चनीचप्रदेशे मार्गे वहता तेन गुरोः खेद उत्पादितः, खिन्नेन तेन गुरुणाऽस्य शिरसि दंडप्रहारा दत्ताः, असौ मनस्येवं विचारयत्यहो महात्मायं मयेदृशीमवस्थां प्रापित इति सम्यग्भावयतस्तस्य केवलज्ञानमुत्पन्नं, केवलज्ञानबलेन समप्रदेश एव वहन् गुरुभिरेष उक्तः, मारिः सार इति कीदृशः समो वहन्नसि? तेनोक्तं युष्मत्प्रसादान्मे समं वहनं, गुरुभिरुक्तं किरे ज्ञानं समुत्पन्नं तव? तेनोक्तं ज्ञानमेव, गुरुभिरुक्तं प्रतिपात्यप्रतिपाति? तेनोक्तमप्रतिपाति. गुरवस्तु हा मया केवली आशातितः, इत्युक्त्वा तच्छिरसि दंडप्रहारोद्भूतं रुधिरप्रवाहं पश्यंतः पुनः पुनस्तत् क्षामणं कुर्वतः केवलज्ञानमापुरिति विनीतशिष्यैरीदृशैर्भाव्यं. ॥ १३ ॥

॥ मूलम् ॥— नापुट्ठो वागरे किंचि । पुट्ठो वा नालियं वए ॥ कोहं असच्चं कुव्विज्जा । धारिज्जा पियमप्पियं ॥ १४ ॥ व्याख्या—सुविनीतशिष्योऽपृष्टः सन्न किंचिद्व्याकुर्यात् व्यागृणीयात्, न किंचिदपृष्टो वदेत्, अथवाऽपृष्टोऽल्पं पृष्टोऽपृष्टः सन् विनीतः किमपि न व्यागृणीयात्, अपृष्टोऽल्पमपि न ब्रूयादिति भावः, अथवा पृष्टः सन्नलीकं न वदेत्. पुनः क्रोधमस-

रयं कुर्यात्, गुरुभिर्निर्भर्त्सितः कदाचित्सक्रोधः स्यात्तदापि क्रोधं विफलं कुर्यात्, अप्रियमपि गुरुवचनं प्रियमिवात्मनो हितमिव स्वमनसि धारयेत्. ॥ १४ ॥ अथ क्रोधस्यासत्यकरणे उदाहरणं—यथा कस्यचित्कुलपुत्रस्य भ्राता वैरिणा व्यापादितः, अन्यदा कुलपुत्रो जनन्या भणितः, हे पुत्र! त्वद्भ्रातृघातकं वैरिणं घातय? ततः स वैरी तेन कुलपुत्रेण शीघ्रं निजबलाज्जीवग्राहं गृहीत्वा जननीसमीपे आनीतो भणितश्चारे भ्रातृघातक! अनेन खड्गेन त्वामहं क हन्मि? तेनाप्युद्भामितं प्रचंडं खड्गं दृष्ट्वा भयभीतेन भणितं, यत्र शरणागता हन्यंते, एतद्वचः श्रुत्वा कुलपुत्रेण जननीमुखमवलोकितं, जनन्या च सत्वमवलंब्योत्पन्नकरुणया भणितं, हे पुत्र शरणागता न हन्यंते, यतः—सरणागयाण विस्सं—भियाण पणयाण वसणपत्ताणं ॥ रोगियअजुंगमाणं । सप्पुरिसा नेव पहरंति ॥ १ ॥ तेन कुलपुत्रेण भणितं कथं रोषं सफलीकरोमि? जनन्योक्तं वत्स! सर्वत्र न रोषः सफलीक्रियते, जननीवचनात् स तेन मुक्तः, तयोश्चरणेषु पतित्वा क्षामयित्वा चापराधं स गतः. एवं क्रोधमसत्यं कुर्यात्. 'धारिज्जा पियमप्पियं' एतत्पदकथा यथा—वीतभयपत्तने एकदा महदशिवमुत्पन्नं, त-

ध्ययनम्
२

"विश्वपामेल प्रणामकरन
॥ १४ ॥

ॅ सत्पुरुषो मारता नहीं=

त्रिशम्य त्रयो मांत्रिकास्तत्रायाताः, राज्ञः पुरस्तैः कथितं वयमशिवमुपशमयिष्यामः, राज्ञा त्रणितं केन प्रकारेण? तेषां मध्ये एकेनोक्तं मंत्रसिद्धं ममैकं त्रूतमस्ति, तदत्यंतं रूपवत्रो- पुररथ्यादिषु त्रमद्यः पश्यति स म्रियते, यस्तद्दृष्ट्वाऽधोमुखः स्यात्स सर्वरोगैर्मुच्यते, राज्ञा त्रणितमलमनेनातिरोषणेन भूतेन! अथ द्वितीयमांत्रिकेणोक्तं मम त्रूतं महाकायं लंबोदरं विस्तीर्णकुक्षि पंचशीर्षमेकपादं विकृतरूपमट्टट्टहासं कुर्वद्दृष्ट्वा यो हसति तस्य शिरः सप्तधा स्फुटति, यस्तु तद्भूतं धूपपुष्पस्तुत्यादिभिः पूजयति स सर्वरोगैर्मुच्यते, राज्ञोक्तमनेनापि भूतेन सृतं! अथ तृतीयेन मांत्रिकेणोक्तं ममाप्येवंविधत्रूतमस्ति, परं प्रियाप्रियकारिणं जनं दर्शनादेव रोगेभ्यो मोचयति, राज्ञोक्तमेवं त्रवतु. तथा कृते तन्नगराशिवमुपशांतं. ततो नृपादिजनैः स तृतीयमांत्रिकः पूजितः. एवं साधुरपि पूजां निंदां प्रियाप्रियं सहेत. उक्तं च—लाभालाभे सुखे दुःखे । जीविते मरणे तथा ॥ स्तुतिनिंदाविधाने च । साधवः सम- चेतसः ॥ १ ॥ स्तुतिनिंदादावनगारोऽद्वेषवान् साधुर्भवतीति. ॥ १४ ॥ क्रोधाद्यसत्यताकरणं चात्मदमने एव स्यादतस्तदुपदेशं तत्फलं चाह—

॥मूलम्॥—अप्पा चेव दमेयव्वो। अप्पा हु खलु दुद्दमो॥ अप्पा दंतो सुही होइ। अस्सिं लोए परत्थ य ॥१५॥ व्याख्या—आत्मा एव दमितव्यो वशीकर्तव्यः, हु इति निश्चयेन खलु यस्मात्कारणादात्मा दुर्दमो वर्तते आत्मानं दमन् जीवः सुखीभवति. अस्मिन् लोके च पुनः परत्र परभवे च सुखीभवति. ।१५। आत्मदमने दृष्टांतः—यथैकस्यां पल्ल्यां द्वौ भ्रातरौ तस्करनायकौ स्तः, सार्थेन सह गच्छतां साधूनां वर्षाऋतुः प्राप्ता, न च तत्र कोऽपि साधुभक्तोऽस्ति, तेन साधवस्तस्करनायकयोः समीपे गताः, तान् प्रणम्य कथयतः किं प्रयोजनं भवतां? साधु भिर्भणितमस्माकं वर्षासु विहर्तुं न कल्पते, ततो वर्षावासप्रायोग्यमुपाश्रयं प्रार्थयामः, ताभ्यां च सहर्षं साधूनामुपाश्रयो दत्तस्तत्र विश्वस्तास्तिष्ठंति साधवः, चौरनायकाभ्यां भणितमस्माकं गृहेषु संपूर्णं भक्तादि गृहीतव्यं, साधुभिर्भणितं न कल्पते एकस्मिन् गृहे पिंडग्रहणं साधूनां, ततः सर्वेषूचितगृहेषु विहरिष्यामः, उपाश्रयदानेनैव भवतां महापुण्यसंबंधो जातः, उक्तं च—'जो देइ उवस्सयं। मुनिवराण तवनियमजोगजुत्ताणं॥ तेणं दिन्ना वत्थन्न—पाणसयणासणविगप्पा ॥ १ ॥ तवसंजमसप्पाउं। नाणप्पासो जणोयप्पारो य ॥ जो ...

वगाह—कारी सिवायरो तस्स ॥ २ ॥ पावइ सुरनररिधी—सुकुलुप्पत्ती य भोगसामिद्धी ॥ निठरइ भवमगारी । सिज्जादाणेण साहूणं ॥ ३ ॥ इदं साधुवचः श्रुत्वा तावत्यंतं परितुष्टौ, तेषां साधूनामुपद्रवं रक्षतो विश्रामणादिभक्तिं च कुरुतः, सुखेन साधूनां वर्षाकालोऽतिक्रांतः, गच्छद्भिः साधुभिस्तयोश्चौरनायकयोरन्यव्रतग्रहणाऽसमर्थयोर्निशाभोजननियमो दत्तस्तोयरेव मुपदिष्टः—मालिंति महीयलं जा—मिणीसु रयणीअरा समं तेण ॥ ते विहलंति य कुरूं । राइए भुंजमाणाउ ॥ १ ॥ मेहं पवीलिआउ । हणंति वमणं च मछिया कुणइ ॥ जूआ जलोयरं तह । कोलिउ कुट्ठरोगं च ॥ २ ॥ वालो सरस्स भंगं । कंटो लगइ गलंमि दारुं च ॥ तालुंमि विंधइ अली । वंजणमऊंमि भुज्जंतो ॥ ३ ॥ जीवाण कंथुमाइण । घायणं भायणधोअणाइसु ॥ एमाइ रयणिभोअण । दोसे को साहिउं तरइ ॥ ४ ॥ उलूककाकमार्जार—गृध्रसंवरशूकराः ॥ अहिवृश्चिकगोधाश्च । जायंते रात्रिभोजनात् ॥ ५ ॥ अतोऽस्मिन् व्रते दृढप्रयत्नैर्भवितव्यमिति भणित्वा गताः साधवः, तावपि चौरनायकौ सपरिवारौ कियन्मार्गमनुगम्य निवृत्तौ, मुनिसेवया कृतार्थत्वं मन्यमानौ तिष्ठतः. अन्यदा ताभ्यां धा-

॥मूलम्॥—अप्पा चेव दमेयव्वो। अप्पा हु खलु डुद्दमो॥ अप्पा दंतो सुही होइ। अस्सिं लोए परत्थ य ॥१५॥ व्याख्या—आत्मा एव दमितव्यो वशीकर्तव्यः, हु इति निश्चयेन खलु यस्मात्कारणादात्मा दुर्दमो वर्तते आत्मानं दमन् जीवः सुखीभवति. अस्मिन् लोके च पुनः परत्र परभवे च सुखीभवति. ।१५। आत्मदमने दृष्टांतः—यथैकस्यां पल्ल्यां द्वौ भ्रातरौ तस्करनायकौ स्तः, सार्थेन सह गच्छतां साधूनां वर्षाऋतुः प्राप्ता, न च तत्र कोऽपि साधुभक्तोऽस्ति, तेन साधवस्तस्करनायकयोः समीपे गताः, तान् प्रणम्य कथयतः किं प्रयोजनं भवतां? साधु भिर्भणितमस्माकं वर्षासु विहर्तुं न कल्पते, ततो वर्षावासप्रायोग्यमुपाश्रयं प्रार्थयामः, ताभ्यां च सहर्षं साधूनामुपाश्रयो दत्तस्तत्र विश्वस्तास्तिष्ठंति साधवः. चोरनायकाभ्यां भणितमस्माकं गृहेषु संपूर्णं भक्तादि गृहीतव्यं, साधुभिर्भणितं न कल्पते एकस्मिन् गृहे पिंडग्रहणं साधूनां, ततः सर्वेषूचितगृहेषु विहरिष्यामः, उपाश्रयदानेनैव भवतां महापुण्यसंबंधो जातः, उक्तं च—'जो देइ उवस्सयं। मुनिवराण तवनियमजोगजुत्ताणं॥ तेणं दिन्ना वत्थन्न— पाणसयणासणविगप्पा ॥ १ ॥ तवसंजमसयाउं । नाणप्पासो जणोवयारो य ॥ जो भा णम-

वगाढ—कारी सिग्घयरो तस्स ॥ २ ॥ पावइ सुरनररिधी—सुकुलुप्पत्ती य भोगसामिद्धी ॥ निवरइ भवमगारी । सिज्जादाणेण साहूणं ॥ ३ ॥ इदं साधुवचः श्रुत्वा तावत्यंतं परितुष्टौ, तेषां साधूनामुपद्रवं रक्षतो विश्रामणादिभक्तिं च कुरुतः, सुखेन साधूनां वर्षाकालोऽतिक्रांतः, गच्छद्भिः साधुभिस्तयोश्चौरनायकयोरन्यव्रतग्रहणाऽसमर्थयोर्निशाभोजननियमो दत्तस्तोयरेव मुपदिष्टः—मालिंति महीयलं जा—मिणीसु रयणीअरा समं तेण ॥ ते विबलंति य कुरुं । राइए भुंजमाणाउ ॥ १ ॥ मेहं पवीलिआउ । हणंति वमणं च मच्छिया कुणइ ॥ जूआ जलोयरं तह । कोलिउ कुट्ठरोगं च ॥ २ ॥ वालो सरस्स भंगं । कंटो लगइ गलंमि दारुं च ॥ तालुंमि विंधइ अली । वंजणमज्झंमि भुजंतो ॥ ३ ॥ जीवाण कुंथुमाइण । घायणं भायणधोअणाईसु ॥ एमाइ रयणिभोअण । दोसे को साहिउं तरइ ॥ ४ ॥ उलूककाकमार्जार—गृध्रसंवरशूकराः ॥ अहिवृश्चिकगोधाश्च । जायंते रात्रिभोजनात् ॥ ५ ॥ अतोऽस्मिन् व्रते दृढप्रयत्नैर्भवितव्यमिति भणित्वा गताः साधवः, तावपि चौरनायकौ सपरिवारौ कियन्मार्गमनुगम्य निवृत्तौ, मुनिसेवया कृतार्थत्वं मन्यमानौ तिष्ठतः. अन्यदा ताभ्यां धा-

टीगताभ्यां बहुगोमहिषमानीतं, अंतरालमार्गे तत्परिवारपुरुषैः कैश्चिन्महिषो व्यापादित-स्तद्भोजनाय सपरिवारौ तौ तत्र स्थितौ, केचित्परिवारपुरुषा मद्यानयनार्थं ग्राममध्ये गताः, महिषव्यापादकैः परस्परमिति विमृष्टं, मांसार्द्धे विषं प्रक्षिप्य मद्ये गतेभ्यो दीयते, तदा बहुगोमहिषं भागे आगच्छति आत्मनामिति विमृश्य तैस्तथैव कृतं, भवितव्यतावशेन ग्राममध्ये गतैरपि तथैव संचिंत्य मद्यार्द्धे विषं प्रक्षिप्तं, तत्रागताः परस्परं मिलिताः कूटचित्ताः सर्वेऽपि, तौ चौरनायकौ तु निःकूटौ स्तः, तावता सूर्योऽस्तं गतः, तौ चौरनायकौ रात्रिभोजननियमभंगभयेन न भुक्तौ, अन्ये परस्परदत्तविषसंयुक्तमद्यमांसभक्षणेन मृताः कुगतिं गताः, तौ भ्रातरौ इहलोके परलोके च सुखिनौ जातौ रात्रिभोजनव्रतग्रहणेन जिह्वेंद्रियदमनात्. इति चौरनायकदृष्टांतः ॥

॥ मूलम् ॥—वरं मे अप्पा दंतो । संजमेण तवेण य ॥ माहं परेहिं दम्मंतो । बंधणेहिं वहेहि य ॥ १६ ॥ व्याख्या—अथ किं चिंतयन्नात्मानं दमयेदित्याह—संयमेन च पुनस्तपसा मया स्वात्मा दांतो वशीकृतो वरं भव्यः, अत्रात्माशब्देन देह आत्मन आधारभूत-

त्वात्, दांतोऽसंयममार्गान्निषिद्धो भव्यः संयमेन सप्तदशविधेन, तथा तपसा द्वादशविधेनात्मा पंचेंद्रियरूपः साधुमार्गे नेतव्यः, यथा दुर्विनीतोऽश्वो वृषभो वोन्मार्गात् ताजनकेन नोदनकाष्ठेन मार्गे नीयते, तथायमात्मापीत्यर्थः. पुनर्मनस्येवं चिंतयेदहं परैरन्यलोकैर्वधनैः शृंखलादिभिश्च पुनर्वधैर्लकुट्यंकुशचपेटाताजनकादिभिर्दमितो मा भवेयं यदान्ये मम ताडनातर्जनादिभिर्दमनं करिष्यंति तदा मम श्रेयो नास्ति, यदुक्तं—'सह कलेवर खेदमाचिंतयन् । स्ववशता हि पुनस्तव दुर्लभा ॥ बहुतरं च सहिष्यसि जीव रे । परवशो न च तत्र गुणोऽस्ति ते ॥ १ ॥ इत्यादि शिक्षयात्मा वशीकर्तव्यः. ॥ १६ ॥ अत्र सेचनकदृष्टांतः—एकस्यामटव्यां महत्तरं गजयूथं वसति, यूथाधिपतिर्जातं जातं कलभकं विनाशयति. अन्यदा तत्रैका करिणी सगर्भिणी जाता एवं चिंतयति, यदा कथमपि मे गजबालको जायते तदानेन विनाश्यते, ततः सा करिणी यूथादपसरति, यावता यूथाधिपतिना यूथमवलोक्यते तावता द्वितीये तृतीये दिवसे सा यूथमध्ये गत्वा मिलति, एवं कुर्वत्या तयाऽन्यदा ऋष्याश्रमपदं दृष्टं, सा तत्रालीना गुप्तस्थाने प्रसूता, गजकलभो जातः, स गजः कुमारैः सहारा-

मान् सिंचति, ततस्तापसैस्तस्य सेचनक इति नाम कृतं, स वयस्यो जातः, भ्रमंतं यूथाधिपतिं दृष्ट्वा नवोदितबलः स मारितवान्, स्वयं यूथाधिपतिर्जातः, तापसाश्रममपि समूलं विनाशितवान्. सन्मातेवान्यायकारिण्यत्र प्रच्छन्नं प्रतिष्ठत्विति विचारितवांश्च. ततस्ते रुष्टा ऋषयः पुष्पफलपूर्णहस्ताः श्रेणिकस्य राज्ञः पार्श्वे गताः, कथितं च तैः सर्वलक्षणसंपूर्णो हस्ती सेचनकनामा वने तिष्ठति, ततः श्रेणिकेन स्वयं तद्वने गत्वा महता बलेन गृहीत्वानीय स आलानस्तंभे बद्धः, ऋषिभिस्तत्रागत्येति निर्भर्त्सितः, हे गजराज! क्व ते शौंडीर्यं गतं? प्राप्तं त्वयाऽस्मदविनयफलमिति श्रुत्वा स गजः प्रकामं रुष्टः स्तंभं भंक्त्वा तेषां पृष्ठे धावितः, ते सर्वे हतप्रहताः कृताः, प्राप्तोऽटव्यां, भग्नाः पुनरपि तेषामाश्रयाः, पुनः श्रेणिकः तद्ग्रहणाय गतः, पूर्वभवसंगतदेवेन गजस्योक्तं, हे वत्स! परेभ्यो दमनात्स्वयंदमनं वरमिति, तद्वचः श्रुत्वा स्वयमागत्यालानस्तंभमाश्रितः, यथा ह्यस्य स्वयं दमनाद्गुणो जातस्तथाऽन्येषामिति. ॥

॥ मूलम् ॥—पणिणीयं च बुद्धाणं । वाया अदुव कम्मुणा ॥ आवी वा जइ वा रहस्से ।

नेव कुज्जा कयाइवि ॥ १७ ॥ व्याख्या—अथ पुनर्विनयशिष्यमाह—च पुनर्बुद्धानामाचार्याणां प्रत्यनीकं शत्रुत्वावं वाचा वचनेन कृत्वा न कुर्यात्, त्वं किं जानासीत्यादिरूपेण निर्भर्त्सनां न कुर्यादथवा कर्मणा क्रियया संस्तारकोल्लंघनेन चरणादिना संघट्टनेनाविनयं न कुर्यात्तदपि आवी इति लोकसमक्षं यदि वा रहस्यैकांते कदापि सुशिष्यो गुरुभिः सह शत्रुत्वावं न कुर्यादित्यर्थः. शत्रोरपि गुणा ग्राह्या । दोषा वाच्या गुरोरपि ॥ इति कुमतिनिरासार्थं कदापि नेव शब्दस्य ग्रहणं ॥ १७ ॥

॥ मूलम् ॥—न पक्खउ न पुरउ । नेव किच्चाण पिट्ठउ ॥ न जुंजे ऊरुणा ऊरुं । सयणे नो पडिस्सुणे ॥ १८ ॥ अथासनस्य विधिमाह—विनीतः साधुः पक्षतो न निषीदेत्पंक्तिसमावेशात्, गुरुणा सह समानत्वं स्यात्. तस्माद्गुरोर्बाहुना सह बाहुं कृत्वा न तिष्ठेत्. पुनर्गुरूणां पुरतोऽग्रतोऽपि न निषीदेत्, वंदनां कुर्वतः पुरुषस्य गुरूणां मुखावलोकनं न स्यात्, कृत्यानामाचार्याणां पृष्ठतोऽपि न स्थातव्यं, गुरुशिष्ययोरुभयोरपि मुखादर्शने तथाविधरसवत्त्वाभावः स्यात्, न च पुनर्गुरूणामुरुणा जंघया सहोरुं जंघां युंजेत् संघट्टयेदत्यासंगादवि-

नयः स्यात्. पुनः शिष्यो गुरूणां वचनं शयने शय्यायां शयानः सन्नासीनो वा न प्रतिशृणुयात्, गुरुभिरुक्ते सति शय्यायां स्थितेनैव शिष्येणैवं कुर्म इति न वक्तव्यं, किंतु गुरूणां समीपे आगत्य वचनं श्रोतव्यमित्यर्थः ॥ १८ ॥

॥ मूलम् ॥—नेव पल्लत्थियं कुज्जा । पक्खपिंडं च संजए ॥ पाए पसारिए वावि । न चिट्ठे गुरुणंतिए ॥ १९ ॥ पुनरासनविधिमाह—व्याख्या—शिष्यो गुरोः समीपे पर्यस्तिकां नैव कुर्यात्, जंघोपरि पादमोचनं न विदधीत, च पुनः पक्षपिंडं जानुजंघोपरि वस्त्रवेष्टनात्मिकां योगपट्टाश्रयिकामथवा बाहुद्वयेनैव कायबंधात्मिकां गुरूणां पार्श्वे न कुर्यात्, चशब्दः पुनरर्थे, पुनर्गुरूणामंतिके सन्मुखं वा पादौ प्रसार्य न तिष्ठेत्. ॥ १९ ॥

॥ मूलम् ॥—आयरिएहिं वाहित्तो । तुसिणीउ न कयाइवि ॥ पसायपेही नियागट्ठी उवचिट्ठे गुरुणं सया ॥ २० ॥ व्याख्या—पुनः सुशिष्य आचार्यैर्गुरुभिर्व्याहृत आहूतः सन् कदाचिदपि तूष्णीको न भवेत्, अत्र कदापि शब्दात् ग्लानाद्यवस्थायामपि गुरुभिरामंत्रितः शक्तौ सत्यां मौनं कृत्वा श्रुतमश्रुतं न कुर्यादित्यर्थः. कथंभूतः सुशिष्यः? प्रसादप्रेक्षी, प्रसा-

दं गुरूणां स्नेहं प्रेक्षितुं शीलं यस्य सः प्रसादप्रेक्षी, यतः-अन्येषु शिष्येषु सत्सु गुरवो मां शब्दयंति, ततो मम महद्भाग्यमिति मनसि चिंतयति,:पुनः कथंभूतः सुशिष्यः? नियागट्ठी, मोक्षार्थी विनयस्य मोक्षकारणत्वात्. सुशिष्योऽनेन विधिना गुरुं सदोपतिष्ठेत्सेवेत. ॥ २० ॥ पुनर्विनयशिक्षां वदति—

॥ मूलम् ॥—आलवंते लवंते वा । न निसीइज्ज कयाइवि ॥ चइऊण आसणं धीरो । जओ जुत्तं पडिस्सुणे ॥ २१ ॥ व्याख्या—धीरो बुद्धिमान् यतो यत्नवान् सन् शिष्यो यद्धेयं कार्यं गुरुभिरुपदिष्टं तत्कार्यं प्रतिशृणुयादंगीकुर्यात्. पूर्वं गुरावालपति सतीषद्वदति सत्यथवा गुरौ लपति सति वारंवारं कथयति सति सुशिष्यो न निषीदेत्, गुरुणा कार्ये उक्ते सत्यासनं स्वस्थानं त्यक्त्वा धीरो धैर्यवान् यत्नेनैकाग्रचित्तेन यद् गुरुणा कार्यमुक्तं भवेत्तत्कार्यमंगीकुर्यादित्यर्थः. ॥ २१ ॥

॥ मूलम् ॥—आसणगओ न पुछिज्जा । नेव सिज्जागओ कया ॥ आगम्मुक्कुडुओ संतो । पुछिज्जा पंजलिउडो ॥ २२ ॥ व्याख्या—आसने गतः स्वस्थाने स्थित एव सुशिष्यो गुरुंप्रति

सूत्रार्थादिकं न पृछेत्तथा पुनः शय्यां गतो रोगाद्युपद्रवं विना कदापि शयानः सूत्रादिकं न पृछेत्तर्हि किं कुर्यादित्याह—गुरोः समीपमागत्योत्कुटुको मुक्तासनः कारणतः पादपुंछनादिस्थः सन् शांतो वा प्रांजलिर्बद्धांजलिः सूत्रार्थादिकं पृछेत्. ॥ २२ ॥

॥ मूलम् ॥—एवं विणयजुत्तस्स । सुत्तं अत्थं च तदुभयं ॥ पुछमाणस्स सीसस्स । वागरिज्ज जहा सुयं ॥ २३ ॥ व्याख्या—आचार्य एवममुनाप्रकारेण विनययुक्तस्य शिष्यस्य सूत्रमर्थं च तदुभयं सूत्रार्थं पृछमानस्योभयं पूर्वोक्तं सूत्रार्थं व्याकुर्याद्वदेद्विनयवतः शिष्यस्याग्रे. यथा श्रुतं गुरुपरंपरातो यथा ज्ञातं सूत्रार्थं गुरुः कथयेदित्यर्थः. ॥ २३ ॥

॥ मूलम् ॥—मुसं परिहरे भिख्खू । न य उहारिणिं वए ॥ भासादोसं परिहरे । मायं च वज्जए सया ॥ २४ ॥ व्याख्या–भिक्षुः साधुर्मृषां भाषां परिहरेत्, च पुनः ' उहारिणिं ' अवधारिणीं निश्चयात्मिकामेवमेवेतिरूपां भाषां न ब्रवीत. भाषादोषं सावद्यानुमोद- ॥ २४ ॥
नादिकं परिहरेत्, च पुनर्मायां वर्जयेत्, एकस्या मायाया ग्रहणेनान्येषामपि क्रोधमानलोभादीनां ग्रहणं सर्वान् कषायान् परिवर्जयेत्, कषायाणां वर्जनान्मृषाभाषाया वर्जनं स्यादे-

व, कारणाभावे कार्याभावः ॥ २४ ॥

॥ मूलम् ॥—न लविज पुट्ठो सावज्जं । न निरठं न मम्मयं ॥ अप्पणट्ठा परठा वा ।
उत्तयस्संतरेण वा ॥ २५ ॥ व्याख्या-पुनः साधुः पृष्टः सन् सावद्यं सपापवचनं न लपेन्न
भाषेत, निरर्थकं वचनं च नालपेत, न च मर्मकं मर्मरूपं वाक्यं साधुर्ब्रूयात्, क्रियतेऽनेनेति
मर्म लोकराजविरुद्धादिकं, अथवा मर्मणि गच्छतीति मर्मगं, यस्मिन् कर्मणि प्रकटीभूते स-
ति मनुष्यस्य मरणमेव स्यात्तदपि वाक्यमात्मार्थं वाथवा परार्थं वाथवोभयार्थमंतरेण प्रयो-
जनं विनापि च न वदेदित्यर्थः. ॥ २५ ॥ स्वगतदोषत्यागमुक्त्वोपाधिकृतदोषत्यागमाह—

॥ मूलम् ॥—समरेसु अगारेसु । संधीसु य महापहे ॥ एगो एगत्थिए सद्धिं । नेव
चिट्ठे न संलवे ॥ २६ ॥ व्याख्या—एतेषु स्थानेष्वेक एकाकी सन् साधुरेकाकिन्या स्त्रिया
सार्धं न तिष्ठेत्, न चैकाकी साधुरेकया कामिन्या सह संलपेत्. तानि कानि स्थानानि?
समरेषु गर्दभकुटीरेषु लोहकारशालासु वा, तथाऽगारेषु शून्यगृहेषु, तथा संधिषु गृहद्वयां-
तरालेषु, तथा महापथे राजमार्गे, अत्रैकस्याग्रहणमत्यंतदुष्टत्वप्रतिपादनार्थं. ॥ २६ ॥ अ-

थ गुरुभिः शिक्षार्थं शिक्षमाणः शिष्यः किं कुर्यादित्याह—

॥ मूलम् ॥—जं मे बुद्धाणुसासंति । सीएण परुसेण वा ॥ मम लाहुत्तिपेहाए । पय- ओ तं पडिस्सुणे ॥ २७ ॥ व्याख्या–बुद्धा गुरवो यन्मे मम शीतेन शीतलवचनेन वाथवा प- रुषेण कठोरवचनेनाऽनुशासति शिक्षां प्रयच्छंति तन्मम 'लाहुत्ति' मम लाभायाप्राप्तवस्तु प्राप्तये भविष्यतीति प्रेक्षयेति बुद्ध्वा प्रयतः प्रयत्नवान् सन् शिष्यो गुरुवचनं प्रतिशृणुयादं- गीकुर्यात्, न च गुरूणां कठोरवाक्यात् क्रोधं कुर्यात् ॥ २७ ॥

॥ मूलम् ॥—अणुसासणमोवायं । दुक्कडस्स य चोयणं ॥ हियं तं मन्नइ पन्नो । वेसं होइ असाहुणो ॥ २८ ॥ व्याख्या—'पन्नत्ति' प्रज्ञावान् प्राज्ञः शिष्य उपाये मृदुपरुषभाष- णादौ भवमपायं गुरुशिक्षावाक्यं, तथा च पुनर्दुःकृतस्य प्रेरणं हा किमिदं दुष्टं कर्म कृतमि- त्यादिरूपं तद्वचनं हितमिहलोकपरलोकसुखदं मनुते, 'असाहुणो' असाधोः कुशिष्यस्य तद्गुरूणां परुषवाक्यं द्वेष्यं द्वेषोत्पादकं भवति. ॥ २८ ॥ इममेवार्थं पुनर्दृढीकरोति—

॥ मूलम् ॥—हियं विगयभयाबुद्धा । फरुसंपि अणुसासणं ॥ वेसं तं होइ मूढाणं ।

खंतीं सोहिकरं पयं ॥ २९ ॥ व्याख्या–विगतजयाः सप्तजयरहिता बुद्धा ज्ञाततत्वाः, एतादृशाः शिष्या आचार्यकृतमनुशासनं परुषमपि कठोरमपि हितं मन्वते, मूढानां मूर्खाणां कुशिष्याणां क्षांतिं क्षमाकरं शोधिकरमात्मशुद्धिरुत्पादकं; पुनः पदं ज्ञानादिस्थानमेतादृशं गुरूणां शिक्षावचनं द्वेष्यं द्वेषहेतुकं जवति. ॥ २९ ॥

॥ मूलम् ॥ आसणे उवचिट्ठिज्जा । अणुच्चे अक्कुए थिरे ॥ अप्पोट्ठाई निरुट्ठाई । निसीइज्जप्पकुक्कुए ॥ ३० ॥ व्याख्या–सुशिष्य एतादृशे आसने उपतिष्ठेत्, कीदृशे आसने तदाह–अनुच्चे द्रव्येण जावेनानुच्चे गुरोरासनाद्धीने, पुनरकचे चीत्कारादिशब्दरहिते, तादृशस्यासनस्य शृंगारांगत्वात्, पुनः स्थिरे आसने समपादे तिष्ठेत्. अथ स साधुरीदृशे आसने कीदृशः सन् तिष्ठेत्तदाह–अल्पोत्थायी, कार्ये सत्यप्यल्पमुत्तिष्ठतीत्येवंशीलोऽल्पोत्थायी, मुहुर्मुहुरासनान्नोत्तिष्ठेत्, पुनः कीदृशः? निरुत्थायी निमित्तंविना नोत्तिष्ठेत्, स्थिरं तिष्ठेदित्यर्थः. पुनः पुनरुत्थानशीलस्य साधुत्वं न जवेत्, पुनः स साधुः कीदृशो जवेत्? अल्पकुक्कुचो जवेत्, हस्तपादशिरःप्रमुखशरीरावयवान् धुन्वानो निश्चलस्तिष्ठेदित्यर्थः. ॥ ३० ॥ चरणे विन-

यरूपामेषणामाह—

॥ मूलम् ॥—कालेण णिक्खमे भिक्खू । कालेण य पडिक्कमे ॥ अकालं च विवज्जित्ता ।
काले कालं समायरे ॥ ३१ ॥ व्याख्या—काले प्रस्तावे भिक्षुः साधुर्निःक्रमेद्भिक्षार्थं निर्गच्छे-
त्, च पुनः काले एव प्रतिक्रमेदाहारं गृहीत्वा स्वस्थानाय पश्चादागच्छेत्, अकालमप्रस्तावं
विशेषेण वर्जयित्वा क्रियाया असमयं त्यक्त्वा काले क्रियायोग्यप्रस्तावे एव कालं तत्समय-
योग्यक्रियासमूहं समाचरेत्कुर्यात्. ॥ ३१ ॥

॥ मूलम् ॥—परिवाडीए न चिट्ठिज्जा । भिक्खू दत्तेसणं चरे ॥ पडिरूवेण एसित्ता ।
मियं कालेण भक्खए ॥ ३२ ॥ व्याख्या—भिक्षुः साधुः परिपाट्यां गृहस्थगृहे जीमनवारा-
दौ भोजनस्थितपुरुषाणां पंक्तौ न तिष्ठेत्, तत्र भिक्षोरप्रीतिशंकादिदोषसंभवात्. पुनर्भिक्षुः
साधुर्दत्ते दाने गृहस्थेन दीयमाने आहारदाने एषणां चरेदाहारदोषविलोकनं कुर्यात्, न तु
जिह्वालौल्येन सदोषाहारं गृह्णीयात्. तद्भुक्तमाहारं प्रतिरूपेण सुविहितप्राचीनमुनीनां रू-
पेण. यथा पूर्वाचार्यस्थविरकल्पैः साधुभिः पात्रे आहारं निर्दोषं गृहीतं, तथा गृहीत्वा तद्-

प्याहारं मितं स्तोकं स्वकुक्षिपूर्तिमात्रं गृहीतव्यं, अमितभोजने वहुदोषसंभवात्. एवंविधिनाहारमानीय कालेन नमस्कारपूर्वकप्रत्याख्यानपारणसमयेन सिद्धांतोक्तविधिना भक्षयेदाहारं कुर्यादित्यर्थः. ॥ ३२ ॥ पुनर्गृहस्थगृहे आहारग्रहणविधिमाह—

॥ मूलम् ॥—नाइदूरमणासन्ने । नन्नेसिं चक्खुफासउ ॥ एगो चिट्ठिज्ज भत्तट्ठा । लंघित्ता तं नइक्कमे ॥ ३३ ॥ व्याख्या—साधुर्गृहस्थगृहे नातिदूरं तिष्टेत्, पूर्वसमागतापरभिक्षुनिर्गमननिरोधसंभवात्, आहारदूषणस्यादर्शनाच्च, पुनस्तथा नासन्नस्तिष्टेत्, आसन्ने न तिष्टेदपरभिक्षूणामप्रीतिसंभवात्. पुनरन्येषां भिक्षुकापेक्षया गृहस्थानां चक्षुःस्पर्शतश्चक्षुःस्पर्शे न तिष्टेत्, यथाऽन्ये भिक्षवो गृहस्थस्य चक्षुः स्पर्शे तिष्टंति तथा न तिष्टेदित्यर्थः. कथं तिष्टेत्तदाह—एकांतदेशे यथा गृहस्थ एवं न जानाति, अयं साधुरन्यभिक्षुनिर्गमनमिछति, एवमेकः पुराऽऽगतभिक्षुकोपरि द्वेषरहितो भक्तार्थमाहारार्थं साधुः पूर्वमागतं तं भिक्षुं लंघयित्वा नातिक्रमेदुल्लंघ्य न प्रविशेदित्यर्थः. ॥ ३३ ॥ पुनराहारग्रहणविधिमाह—

॥ मूलम् ॥—नाइ उच्चे व णीए वा । नासन्ने नाइ दूरउ ॥ फासुअं परकडं पिंडं । पडिगाहिज्ज संजए ॥ ३४ ॥ व्याख्या—उच्चैः स्थाने मालादावाहारं न गृह्णीयात्, आहारस्याहारदातुर्वा पतनसंभवात्, च पुनर्नीचैः स्थानेऽपि भूमिगृहादावाहारं न गृह्णीयात्तत्र चैषणायासंभवात्, दायकस्य कष्टादिसंभवाद्वा, अथवात्युच्चैः सरसाहारलब्धेरहं लब्धिमानित्यभिमानरहितः, आहारेऽलब्धेरहं दीनोऽस्मि मह्यं कोऽपि न ददातीति दीनबुद्धिरहित इति भावः. उच्चत्वनीचत्वरहितो नासन्नो नातिनिकटवर्ती नातिदूरवर्ती, यथायोग्यस्थाने स्थितः प्रासुकं निर्दूषणं नवकोटिविशुद्धं परकृतं गृहस्थेनात्मार्थं कृतं पिंडमाहारं संयतो जितेंद्रियः साधुः प्रतिगृह्णीयात्. ॥ ३४ ॥ अथाहारकरणस्थानमाह—

॥ मूलम् ॥—अप्पपाणप्पबीयंमि । पडिछिन्नंमि संवुडे ॥ समयं संजए भुंजे । जयं अप्परिसाडियं ॥ ३५ ॥ व्याख्या—संयतः साधुरेतादृशे स्थाने समकं साधुभिः समं ज्यं यतमानः सन् सुरसुरचवचवकसकसकुरडकुरडादिशब्दमकुर्वाणः, अपरिसाटितं सिक्थुपातनेन रहितमाहारं भुंजीत, कीदृशे स्थाने? अल्पबीजे बीजग्रहणोपलक्षणेन सर्वैकेंद्रियरहिते,

पुनः कीदृशे? प्रतिछन्ने संपातितजीवरक्षाथ संवृते पार्श्वतः कटकुट्याद्याछादिते, अन्यथा रंकादिदीनयाचकादीनां याचने दानाभावे निंदाया उत्पत्तेः प्रदेशसंभवात्, दाने सति पुण्यबंधसद्भावात्, तस्मान्निरवद्यस्थाने आहारं कुर्यात्. ॥ ३५ ॥ अथाहारकरणप्रस्तावे वाग्यतनामाह—

॥ मूलम् ॥—सुकडित्ति सुपक्कित्ति । सुछिन्ने सुहडे मडे ॥ सुनिट्ठिए सुलट्ठित्ति । सावज्जं वज्जए मुणी ॥ ३६ ॥ व्याख्या—मुनिरेतादृशं सावद्यं सपापं वचनं वर्जयेन्न ब्रुवीतैतादृशं, कीदृशं तदाह—सुकृतमिदमन्नादि, पुनः सुपक्वं घृतपूरादि, सुछिन्नमिदं शाकादि सुहृतं कारेल्लकादिस्थं कटुकत्वं सम्यक्वचनं, अथवा वटकादिना मगदसीरककंसारादिना, घृतं सुष्टु हृतं, तथा पुनर्मृतं मुद्गादिके सुष्टु घृतं मृतमेतदाहारं सम्यग्निष्ठां प्राप्तं सरसत्वं प्राप्तं, पुनरिदमाहारं सुलष्टमखंडोज्ज्वलतंदुलहरितमुद्गादिनिष्पन्नमेतत् प्रधानं भोजनमित्यादिकं वचनं वर्जयेत्, निरवद्यं तु भाषेत, यथा क्रमात् सुकृतं धर्मध्यानादि सुपक्वं वचनविज्ञानादि, सुष्टु छिन्नं स्नेहपाशादि, सुष्टु हृतं मिथ्यात्वादि, सुष्टु मृतं पंडितमरणेन, सु-

निष्टितं साध्वाचारे सुलष्टं व्रतग्रहणमित्यादि निरवद्यं वचनं ब्रूयादित्यर्थः. ॥ ३६ ॥

॥ मूलम् ॥—रमए पंक्रिए सासं । हयं जद्दंव वाहए ॥ बालं सम्मइ सासंतो । गलियस्संव वाहए ॥ ३७ ॥ व्याख्या—अत्र गुरुरिति कर्तृपदमनुक्तमप्यग्रहीतव्यं. गुरुः पंक्रितान् विनीतशिष्यान् शासयन्, शिष्यां ददन् पाठयन् रमते रतिमान् स्यात् प्रयत्नो जवेदित्यर्थः, क इव? वाहक इव, अश्ववार इव, यथाश्ववारो जद्रं सुशिक्षितं हयं वाहयन् खेलयन् रमते हर्षितो जवेत्, बालं मूर्खं शिष्यं शासदाचार्यः श्राम्यति श्रमं प्राप्नोति, कमिव? गल्यश्वं दुर्विनीततुरंगं वाहक इवाश्ववार इव, यथाश्ववारो दुर्विनीततुरगं वाहयन् खेदं प्राप्नोति, तथा कुशिष्यं पाठयन् गुरुर्दुःखितो जवेदित्यर्थः. ॥ ३७ ॥

॥ मूलम् ॥—खुरुकुया मे चवेमा मे । अक्कोसाय वहाय मे ॥ कल्लाणमणुसासंतो । पावदिठित्ति मन्नइ ॥ ३८ ॥ व्याख्या—दुर्विनीतशिष्यः कल्याणमिहलोकपरलोकहितमनुशासतं शिक्षयंतमाचार्यं पापा दृष्टिरस्येति पापदृष्टेरयमाचार्यः पापदृष्टिरस्ति, पापकारी वर्तते, मे मह्यं चपेटा ददाति, मे मह्यमाक्रोशान् दुर्वचनानि श्रावयति, पुनर्मे मह्यं बंधान् कंबा-

द्विधातान् ददाति, अपरं समीहितं किमपि न दृश्यते. आचार्यः केवलं मह्यं टकारादीनेव ददातीति मन्यते. न तु हितकारकमाचार्यं मनुते. ॥ ३७ ॥ अथ पुनर्विनीतदुर्विनीतयोर्वर्णनमाह—

॥ मूलम् ॥—पुत्तो मे भायणाइत्ति । साहू कल्लाणमन्नइ ॥ पावदिट्ठीउ अप्पाणं । सासं दासित्ति मन्नइ ॥ ३९ ॥ व्याख्या—साधुः सुशिष्यः कल्लाणं हितकारकं गुरुं गुरुवचनं वा कल्याणकारकं मनुते, अयमभिप्रायः—यदा सुशिष्यंप्रत्याचार्यो गुरुरनुशास्ति तदा सुशिष्यो मनस्येवं जानाति, आचार्यो मे मम पुत्रस्येव भ्रातुरिव ज्ञातेः स्वजनस्य स्वस्येवानुशास्ति, स्वकीयस्य बुद्ध्या मे मह्यं पाठयति, पापदृष्टिः कुशिष्यो गुरुणा शास्यमानमात्मानं दासमिव मनुते, अयं मां दासमिव तर्जयतीति मनसि दुःखितो भवत्याचार्यं निंदतीत्यर्थः. ॥ ३९ ॥

॥ मूलम् ॥—न कोवए आयरिअं । अप्पाणंपि न कोवए ॥ बुद्धोवघाइ न सिया । न सिया तुत्तगवेसए ॥ ४० ॥ व्याख्या—विनीतशिष्यराचार्यं न कोपयेत्तथापरमपि न कोपयेत्तथात्मानमपि न कोपयेत्, पुनः शिष्यो बुद्धोपघात्याचार्यस्योपघातकारी न स्यात्, युगप्र-

निष्टितं साध्वाचारे सुब्रष्टं व्रतग्रहणमित्यादि निरवद्यं वचनं ब्रूयादित्यर्थः. ॥ ३६ ॥

॥ मूलम् ॥—रमए पंमिए सासं । हयं नद्दंव वाहए ॥ बालं सम्मइ सासंतो । गलियस्संव वाहए ॥ ३७ ॥ व्याख्या—अत्र गुरुरिति कर्तृपदमनुक्तमप्यग्रहीतव्यं. गुरुः पंमितान् विनीतशिष्यान् शासयन्, शिष्यां ददन् पाठयन् रमते रतिमान् स्यात् प्रयत्नो नवेदित्यर्थः, क इव? वाहक इव, अश्ववार इव, यथाश्ववारो नद्रं सुशिक्षितं हयं वाहयन् खेलयन् रमते हर्षितो नवेत्, बालं मूर्खं शिष्यं शासदाचार्यः श्राम्यति श्रमं प्राप्नोति, कमिव? गल्यश्वं दुर्विनीततुरंगं वाहक इवाश्ववार इव, यथाश्ववारो दुर्विनीततुरगं वाहयन् खेदं प्राप्नोति, तथा कुशिष्यं पाठयन् गुरुर्दुःखितो नवेदित्यर्थः. ॥ ३७ ॥

॥ मूलम् ॥—खुरुकुया मे चवेरुा मे । अक्कोसाय वहाय मे ॥ कल्लाणमणुसासंतो । पावदिट्ठित्ति मन्नइ ॥ ३८ ॥ व्याख्या—दुर्विनीतशिष्यः कल्याणमिहलोकपरलोकहितमनुशासतं शिक्षयंतमाचार्यं पापा दृष्टिरस्येति पापदृष्टेरयमाचार्यः पापदृष्टिरस्ति, पापकारी वर्तते, मे मह्यं चपेटा ददाति, मे मह्यमाक्रोशान् दुर्वचनानि श्रावयति, पुनर्मे मह्यं बंधान् कंबा-

दिघातान् ददाति, अपरं समीहितं किमपि न दृश्यते. आचार्यः केवलं मह्यं टक्करादीनेव ददातीति मन्यते. न तु हितकारकमाचार्यं मनुते. ॥ ३८ ॥ अथ पुनर्विनीतदुर्विनीतयोर्वर्णनमाह—

॥ मूलम् ॥—पुत्तो मे नायणाइत्ति । साहू कल्लाणमन्नइ ॥ पावदिट्ठीउ अप्पाणं । सासं दासित्ति मन्नइ ॥ ३९ ॥ व्याख्या—साधुः सुशिष्यः कल्याणं हितकारकं गुरुं गुरुवचनं वा कल्याणकारकं मनुते, अयमभिप्रायः—यदा सुशिष्यंप्रत्याचार्यो गुरुरनुशास्ति तदा सुशिष्यो मनस्येवं जानाति, आचार्यो मे मम पुत्रस्येव भ्रातुरिव ज्ञातेः स्वजनस्य स्वस्येवानुशास्ति, स्वकीयस्य बुद्ध्या मे मह्यं पाठयति, पापदृष्टिः कुशिष्यो गुरुणा शास्यमानमात्मानं दासमिव मनुते, अयं मां दासमिव तर्जयतीति मनसि दुःखितो भवत्याचार्यं निंदतीत्यर्थः. ॥ ३९ ॥

॥ मूलम् ॥—न कोवए आयरिअं । अप्पाणंपि न कोवए ॥ बुद्धोवघाइ न सिया । न सिया तुत्तगवेसए ॥ ४० ॥ व्याख्या—विनीतशिष्यराचार्यं न कोपयेत्तथापरमपि न कोपयेत्तथात्मानमपि न कोपयेत्, पुनः शिष्यो बुद्धोपघात्याचार्यस्योपघातकारी न स्यात्, युगप्र-

निष्टितं साध्वाचारे सुत्रष्टं व्रतग्रहणमित्यादि निरवद्यं वचनं ब्रूयादित्यर्थः. ॥ ३६ ॥

॥ मूलम् ॥—रमए पंमिए सासं । हयं नद्दंव वाहए ॥ बालं सम्मइ सासंतो । गलियस्संव वाहए ॥ ३७ ॥ व्याख्या—अत्र गुरुरिति कर्तृपदमनुक्तमप्यग्रहीतव्यं. गुरुः पंमितान् विनीतशिष्यान् शासयन्, शिष्यां ददन् पाठयन् रमते रतिमान् स्यात् प्रयत्तो नवेदित्यर्थः, क इव? वाहक इव, अश्ववार इव, यथाश्ववारो नद्रं सुशिक्षितं हयं वाहयन् खेलयन् रमते हर्षितो नवेत्, बालं मूर्खं शिष्यं शासदाचार्यः श्राम्यति श्रमं प्राप्नोति, कमिव? गल्यश्वं दुर्विनीततुरंगं वाहक इवाश्ववार इव, यथाश्ववारो दुर्विनीततुरगं वाहयन् खेदं प्राप्नोति, तथा कुशिष्यं पाठयन् गुरुर्दुःखितो नवेदित्यर्थः. ॥ ३७ ॥

॥ मूलम् ॥—खुड्डुया मे चवेडा मे । अक्कोसाय वहाय मे ॥ कल्लाणमणुसासंतो । पावदिठ्ठित्ति मन्नइ ॥ ३८ ॥ व्याख्या—दुर्विनीतशिष्यः कल्याणमिहलोकपरलोकहितमनुशासतं शिक्षयंतमाचार्यं पापा दृष्टिरस्येति पापदृष्टिरयमाचार्यः पापदृष्टिरस्ति, पापकारी वर्तते, मे मह्यं चपेटा ददाति, मे मह्यमाक्रोशान् दुर्वचनानि श्रावयति, पुनर्मे मह्यं बंधान् कंबा-

प्रांजलिपुटः सन् क्रुद्धमाचार्यं विध्यापयेच्छांतं कुर्यात्, क्रुद्धस्य गुरोरग्रे सुशिष्येणैवं वक्तव्यं, हे स्वामिन् पुनरेवं न कुर्यां क्षमापराधोऽयं क्षंतव्यः ॥ ४१ ॥

॥ मूलम् ॥--धम्मज्जियं च ववहारं । बुद्धेहायरियं सया ॥ तमायरंतो ववहारं । गरहं नाभिगच्छइ ॥ ४२ ॥ व्याख्या—साधुस्तं व्यवहारं साध्वाचारमाचरन् गर्हां नाभिगच्छति, मुनिनिंदां न प्राप्नोति, व्यवह्रियते अंगीक्रियते धर्मार्थिभिरिति व्यवहारस्तमंगीकुर्वन्, पुनर्यश्च व्यवहारो धर्मा[illegible] व्यवहारं, यो व्यवहारः सदा सर्वदा बुद्धैर्ज्ञाततत्त्वैराचरितः, कथंभूतं व्यवहारं? व्यपहारं विशेषेणापहरति पापमिति [illegible] व्यवहारं [illegible] अनेन प्राणातिपाताद्याश्रवनिवारकः साध्वाचारो दर्शितः. ॥ ४२ ॥

॥ मूलम् ॥--मणोगयं वक्कगयं । जाणित्तायरियस्स उ ॥ तं परिगिज्झ वायाए । कम्मुणा उववायए ॥ ४३ ॥ व्याख्या सुशिष्य आचार्यस्य मनोगतं मनसि स्थितं कार्यं पुनर्वाक्यगतं कार्यं पूर्वं ज्ञात्वा पश्चात्तत्कार्यं वाचा परिगृह्यांगीकृत्याहमेतत्कार्यं करोमीत्युक्त्वा कर्मणा क्रियया तत्कार्यमुत्पादयेत्, गुरोर्मनसि स्थितं गुरूक्तं गुरुणा क्रियमाणं कार्यं सुशिष्ये-

धानाचार्योपघातिकुशिष्यवन्न स्यात्, पुनस्तोत्रगवेषकोऽपि न स्यात्, यथा दुर्विनीततुरगः प्राजनकगवेषको भवेत्तथा सुशिष्यो द्रव्यतो भावतश्च तोत्रस्य प्राजनकस्य गवेषको न भवेत्. द्रव्यतोऽत्रं चपेटादि, भावतोऽत्रं व्यथाकारिवचनं ज्ञेयं. अत्र दृष्टांतः—कोऽप्याचार्योऽष्टविधगणिसंपत्समन्वितो बहुश्रुतः प्रकृत्यापि शांतः क्षीणजंघाबलः क्वापि ग्रामे स्थितः. तत्र कुशिष्याः सततं वैयावृत्यविधिविधानभग्नपरिणामैर्गुरुमारणार्थं सदौषधादिचिंताकारकाणामपि श्रावकाणां पुर इति प्रवदंति गुरवो नाशनं चिकीर्षवः किमप्यौषधादिकं न गृह्णन्ति, इत्युक्त्वांतप्रांतमाहारमानीय गुरवे प्रयच्छंति, 'वदंति नित्यावस्थायित्वेनात्मनां गृहस्था अतिविशिष्टं न किंचिद्यच्छंति. ततः श्राद्धैः संलेखनास्वरूपं गुरवः पृष्टाः, शिष्याणां कूटमप्रीतिं च ज्ञात्वा कृतमेवानशनं तैरित्येवमाचार्योपघाती न स्यात्. ॥ ४० ॥

॥ मूलम् ॥—आयरियं कुवियं नच्चा । पत्तिएण पसायए ॥ विज्झवेज्ज पंजलिउडो । वइज्ज न पुणत्ति य ॥ ४१ ॥ व्याख्या—सुशिष्य आचार्यं गुरुं पत्तिएण प्रीतिसमुत्पादकेन वचनेन प्रसादयेत्प्रसन्नं कुर्यात्, किं कृत्वा? कुपितं ज्ञात्वा गुरुं सक्रोधं ज्ञात्वा विनीतशिष्यः

प्रांजलिपुटः सन् क्रुद्धमाचार्यं विध्यापयेच्छांतं कुर्यात्, क्रुद्धस्य गुरोरग्रे सुशिष्येणैवं वक्तव्यं, हे स्वामिन् पुनरेवं न कुर्यां ममापराधोऽयं क्षंतव्यः ॥ ४१ ॥

॥ मूलम् ॥--धम्मज्जिअं च ववहारं । बुद्धेहायरियं सया ॥ समायरंतो ववहारं । गरहं नाभिगच्छइ ॥ ४२ ॥ व्याख्या—साधुस्तं व्यवहारं साध्वाचारमाचरन् गर्हां नाभिगच्छति. व्यवह्रियते अंगीक्रियते धर्मार्थिभिरिति व्यवहारस्तमंगीकुर्वन् मुनिर्निंदां न प्राप्नोति, तं कीदृशं व्यवहारं, यो व्यवहारः सदा सर्वदा बुद्धैर्ज्ञाततत्त्वैराचरितः, पुनर्यश्च व्यवहारो धर्मार्जितो धर्मेण साधुधर्मेणोत्पादितः. कथंभूतं व्यवहारं? व्यपहारं विशेषेणापहरति पापमिति व्यपहारस्तं व्यपहारमनेनेन प्राणातिपाताद्याश्रवनिवारकः साध्वाचारो दर्शितः. ॥ ४२ ॥

॥ मूलम् ॥-- मणोगयं वक्कगयं । जाणित्तायरियस्स उ ॥ तं परिगिज्झ वायाए । कम्मुणा उववायए ॥ ४३ ॥ व्याख्या सुशिष्यराचार्यस्य मनोगतं मनसि स्थितं कार्यं पुनर्वाक्यगतं कार्यं पूर्वं ज्ञात्वा पश्चात्तत्कार्यं वाचा परिगृह्यांगीकृत्याहमेतत्कार्यं करोमीत्युक्त्वा कर्मणा क्रियया तत्कार्यमुत्पादयेत्, गुरोर्मनसि स्थितं गुरूक्तं गुरुणा क्रियमाणं कार्यं सुशिष्ये-

ण त्वरितं विधेयमित्यर्थः. ॥ ४३ ॥

॥ मूलम् ॥—वित्ते अ चोइए निच्चं । खिप्पं हवइ सुचोइए ॥ जहोवइठ्ठं सुकयं । कि-
च्चाइं कुवइ सया ॥ ४४ ॥ व्याख्या—वित्तो विनयादिगुणेन प्रसिद्धो विनीतशिष्योऽनोदितो-
ऽप्रेरितोऽपि सर्वेषु कार्येषु नित्यं प्रवर्तते, कदाचित्स्वयं कार्यं कुर्वाण आचार्येण प्रेरितश्चेत्तदा
क्षिप्रं भवति शीघ्रं कार्यकृद्भवति, कार्यं कुर्वन्नाचार्यप्रेरितः शिष्य एवं न ब्रूयादहं तु कार्यं
करोम्येव, किं भवद्भिर्वृथैव प्रलप्यते? यथोपदिष्टं सुकृतं कार्यं सदा कुर्वीत, एकं कार्यं वाथ-
वा कृत्यानि बहूनि कार्याणि कुर्वीत, गुर्वादेशेष्वालस्यं न विधेयं, प्रसन्नतया तदेव कार्यं त्व-
रितं विधेयमित्यर्थः. ॥ ४४ ॥

॥ मूलम् ॥—नच्चा नमइ मेहावी । लोए कित्ती य जायए ॥ हवइ किच्चाण सरणं ।
भूयाणं जगई जहा ॥ ४५ ॥ व्याख्या—मेधावी बुद्धिमान् साधुर्नमति विनयं करोति, किं
कृत्वेति विनयशिष्यां ज्ञात्वा तस्य नम्रस्य लोके कीर्त्तिर्जायते, पुनः स विनयवान् साधुः कृत्या-
नामुचितकार्याणां शरणं भवत्याश्रवो भवति, केषां का? यथा भूतानां तरूणां जगति पृथ्वी

यथा आश्रयभूता तथा सर्वेषां साधुकार्याणां विनयी साधुराश्रयो भवतीत्यर्थः. ॥ ४५ ॥

॥ मूलम् ॥–पुज्जा जस्स पसीयंति । संबुद्धा पुव्वसंथुया ॥ पसन्ना लाभइस्संति । विउलं अट्ठियं सुयं ॥ ४६ ॥ व्याख्या–पूज्या आचार्या गुरवो यस्य शिष्यस्य प्रसीदंति प्रसन्ना भवंति, ते गुरवः प्रसन्नाः संतस्तं शिष्यंप्रति विपुलमार्थिनं विस्तीर्णं वांछितं श्रुतं श्रुतज्ञानं लाभयिष्यंति, कथंभूताः? पूज्याः संबुद्धाः सम्यग्ज्ञाततत्वाः, पुनः कथंभूताः? पूर्वसंस्तुताः, पूर्वं सम्यक्प्रकारेण स्तुताः पठनकालात्पूर्वमेव संस्तुता विनयेन परिचिता रंजितास्तत्काल-विनयस्य कृतिप्रतिक्रियारूपत्वेन तथाविधप्रसादाऽजनकत्वात्, तेन सर्वदा संस्तुताः. अथ-च। कथंभूतं? श्रुतमार्थिकमर्थो मोक्षः प्रयोजनमस्येति, आर्थिकमर्थान्मोक्षोत्पादकं श्रुतधर्मं प्रापयिष्यंति. ॥ ४६ ॥

॥ मूलम् ॥—स पुज्जसत्थे सुविणीयसंसए । मणोरुई चिट्ठइ कम्मसंपया ॥ तवो समा-यारिसमाहिसंवुडे । महज्जुई पंचवयाणि पालिया ॥ ४७ ॥ व्याख्या—स सुशिष्य आचा-र्येभ्यो लब्धश्रुतधर्मे मनोरुचिस्तिष्ठति, मनसो रुचिर्नैर्मल्यं यस्य स मनोरुचिर्निर्मलचित्तः,

अथवा मनसो गुरोश्चित्तस्य रुचिर्यस्य स मनोरुचिः, गुरुचित्तस्थ बुद्धियुक्त इत्यर्थः. पुनः कीदृशः? सुशिष्यः कर्मसंपदा दशधा समाचारी करणसंपदोपलक्षितः, पुनः कीदृशः? पूज्यशास्त्रः, पूज्यं सर्वजनश्लाघ्यं शास्त्रं यस्य स पूज्यशास्त्रः, गुरुमुखादधीतं शास्त्रं विनयपूर्वकमधीतं च पूज्यं शास्त्रं भवत्येव. यदुक्तं-नहि भवति निर्विगोपक-मनुपासितगुरुकुलस्य विज्ञानं ॥ प्रकटितपश्चिमभागं । पश्यत नृत्यं मयूरस्य ॥ १ ॥ पुनः कीदृशः? सुशिष्यः सुविनीतसंशयः सुतरामतिशयेन विनीतो दूरीकृतः संशयो यस्य स सुविनीतसंशयोऽपगतसंशयो लब्धरहस्य इत्यर्थः. पुनः कीदृशः? स सुशिष्यस्तपःसमाचारी समाधिसंवृतस्तपसः समाचारीतपःसमाचरणं समाधिश्चित्तस्य स्वास्थ्यं, तपः समाचारी च समाधिश्च तपःसमाचारीसमाधी, ताभ्यां संवृतो निरुद्धाश्रवः, पुनः कीदृशः सुशिष्यः? महाद्युतिर्महती द्युतिर्यस्य स महाद्युतिः, महातपास्तेजोलेश्यापुलाकलब्ध्यादिसहितो भवति, तादृशः सन् पंचमहाव्रतानि पालयित्वा कीदृशो भवति? ॥ ४७ ॥ तदाह-

॥ मूलम् ॥—स देवगंधव्वमणुस्सपूइए । चइत्तु देहं मलपंकपुव्वयं ॥ सिद्धे वा हवइ

सासए। देवे वा अप्परए महड्ढिएत्तिवेमि ॥ ४८ ॥ व्याख्या—स पूर्वोक्तलक्षणसहितो मुनिर्विनयीशिष्यो देवैर्द्वादशकल्पवासिभिर्गंधर्वैर्देवगायनैस्तथा मनुष्यैः पूजितो भवति, ततश्चायुःक्षये देहं त्यक्त्वा सिद्धो भवति, कथंभूतः सिद्धः? शाश्वतो जन्ममरणरहितः, कथंभूतं देहं? मलपंकपूर्वकं मनुष्यशरीरं हि औदारिकं शुक्ररक्तजनितं भवति, तादृशं त्यक्त्वा सिद्धिभाक् स्यात्, अथवा देवो भवति, देवः कीदृशः? अल्परतोऽल्पमविद्यमानं रतं क्रीडितं मोहनीयजनितं कर्म यस्य सोऽल्परतः, अथवाल्परजा रजोरहितः, पुनः कथंभूतो देवः? महर्द्धिको महती ऋद्धिर्यस्य स महर्द्धिकः, ऋद्धिविकुर्वणा तया सहित इति परिसमाप्तो. एवममुना प्रकारेण वा एतद्विनयश्रुताध्ययनं ब्रवीमि गणधराद्युपदेशेन, न तु स्वबुद्ध्या ब्रवीमि. ॥ ४८ ॥

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां प्रथमाध्ययनार्थः संपूर्णः ॥ १ ॥



अथवा मनसो गुरोश्चित्तस्य रुचिर्यस्य स मनोरुचिः, गुरुचित्तस्थ बुद्धियुक्त इत्यर्थः. पुनः कीदृशः? सुशिष्यः कर्मसंपदा दशधा समाचारी करणसंपदोपलक्षितः, पुनः कीदृशः? पूज्यशास्त्रः, पूज्यं सर्वजनश्लाघ्यं शास्त्रं यस्य स पूज्यशास्त्रः, गुरुमुखादधीतं शास्त्रं विनयपूर्वकमधीतं च पूज्यं शास्त्रं भवत्येव. यदुक्तं-नहि भवति निर्विगोपक-मनुपासितगुरुकुलस्य विज्ञानं ॥ प्रकटितपश्चिमभागं । पश्यत नृत्यं मयूरस्य ॥ १ ॥ पुनः कीदृशः? सुशिष्यः सुविनीतसंशयः सुतरामतिशयेन विनीतो दूरीकृतः संशयो यस्य स सुविनीतसंशयोऽपगतसंशयो लब्धरहस्य इत्यर्थः. पुनः कीदृशः? स सुशिष्यस्तपःसमाचारी समाधिसंवृतस्तपसः समाचारीतपःसमाचरणं समाधिश्चित्तस्य स्वास्थ्यं, तपः समाचारी च समाधिश्च तपःसमाचारीसमाधी, ताभ्यां संवृतो निरुद्धाश्रवः, पुनः कीदृशः सुशिष्यः? महाद्युतिर्महती द्युतिर्यस्य स महाद्युतिः, महातपास्तेजोलेश्यापुलाकलब्ध्यादिसहितो भवति, तादृशः सन् पंचमहाव्रतानि पालयित्वा कीदृशो भवति? ॥ ४७ ॥ तदाह-

॥ मूलम् ॥—स देवगंधव्वमणुस्सपूइए । चइत्तु देहं मलपंकपुव्वयं ॥ सिद्धे वा हवइ

धराणामनंतरागमो गणधरशिष्याणां हि परंपरागमः, तस्मात् श्रीमहावीरस्वामिना स्वयमेव ज्ञाताः, परि समंतात् सह्यंते साधुभिरिति परीषहा द्वाविंशतिर्यान् द्वाविंशतिपरीषहान् भिक्षुः साधुः श्रुत्वा गुरुमुखात् कर्णे धृत्वा ज्ञात्वा यथास्वरूपेणावबुध्य यान् परीषहान् जित्वा पुनः पुनरभ्यासेन परिचितान् कृत्वा, पुनर्यान् परीषहानभिभूय धैर्येण तिरस्कृत्य भिक्षाचर्यायां परिव्रजन् साधुस्तैर्द्वाविंशतिपरीषहैः स्पृष्ट आश्लिष्टः सन्न विहन्येत संयमरूपशरीरपातेन न म्रियेत इति सुधर्मस्वामिना प्रोक्ते सति जंबूस्वामी गुरुंप्रति पृच्छति—कयरे खलु बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइया? जे भिक्खू सुच्चा नच्चा जिच्चा अभिभूय भिक्खायरियाए परिव्वयंतो पुट्ठो नो विहन्निज्जा ॥ हे स्वामिन्! कतरे के ते किंनामानः. खलु निश्चयेन, खलु शब्दो वाक्यालंकारे, वा द्वाविंशतिपरीषहा यान् श्रुत्वा ज्ञात्वा जित्वाऽभिभूय भिक्षाचर्यायां परिव्रजन् साधुर्यैर्द्वाविंशतिपरीषहैः स्पृष्टः सन्न विहन्येत. तदा श्रीसुधर्मास्वामी जंबूस्वामिनंप्रति वदति—इमे खलु ते बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइया, जे भिक्खू सुच्चा नच्चा जिच्चा अभिभूय भिक्खायरियाए परि-

## ॥ अथ द्वितीयं परीषहाध्ययनं प्रारभ्यते ॥

अयं च विनयः परीषहजेतृभिः साधुभिः कर्तव्यस्तस्मात् सुधर्मास्वामी जंबूस्वामिनं प्रत्याह—

॥ मूलम् ॥—सुअं मे आउसंतेणं भगवया एवमक्खायं, इह खलु बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइआ, जे भिक्खू सुच्चा नच्चा जिच्चा अभिभूय भिक्खायरियाए परिव्वयंतो पुट्ठो नो विहन्निज्जा ॥ इत्याद्यालापकं, अस्यार्थः–' आउसं ' इति शिष्यस्यामंत्रणं, हे आयुष्मन्! हे शिष्य! मे मया श्रुतं, ' तेणं ' इति तेन सद्गुरुणा प्रसिद्धेन भगवता ज्ञानवतैवमाख्यातमेवं समंतात् कथितं. इहास्मिन् जिनशासने हे शिष्य! हे जंबू! श्रमणेण भगवता महावीरेण काश्यपगोत्रेण खलु निश्चयेन द्वाविंशतिपरीषहाः प्रवेदिताः प्रकर्षेण स्वयं साक्षाद्ज्ञाताः. तीर्थंकराणां स्वयं संबुद्धत्वादात्मागमः, गणधराणामनंतरागमः, तीर्थंकरेभ्यो यादृशमर्थं गणधराः शृण्वंति, तादृशमनंतरं धारयंति, तस्माद्गण-

धराणामनंतरागमो गणधरशिष्याणां हि परंपरागमः, तस्मात् श्रीमहावीरस्वामिना स्वयमेव ज्ञाताः, परि समंतात् सह्यंते साधुभिरिति परीषहा द्वाविंशतिर्यान् द्वाविंशतिपरीषहान् भि- क्षुः साधुः श्रुत्वा गुरुमुखात् कर्णे धृत्वा ज्ञात्वा यथास्वरूपेणावबुध्य यान् परीषहान् जित्वा पुनः पुनरभ्यासेन परिचितान् कृत्वा, पुनर्यान् परीषहानभिभूय धैर्येण तिरस्कृत्य भिक्षा- चर्यायां परिव्रजन् साधुस्तैर्द्वाविंशतिपरीषहैः स्पृष्ट आश्लिष्टः सन्न विहन्येत संयमरूपशरी- रपातेन न भ्रियेत इति सुधर्मस्वामिना प्रोक्ते सति जंबूस्वामी गुरुंप्रति पृच्छति—कयरे ख- लु बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइया? जे भिक्खू सुच्चा नच्चा जिच्चा अभिभूय भिक्खायरियाए परिव्वयंतो पुट्ठो नो विहन्निज्जा ॥ हे स्वामिन्! कतरे के ते किंनामानः. खलु निश्चयेन, खलु शब्दो वाक्यालंकारे, वा द्वाविंशतिपरीषहा यान् श्रुत्वा ज्ञात्वा जित्वाऽभिभूय भिक्षाचर्यायां परिव्रजन् साधुर्यैर्द्वाविंशतिपरीषहैः स्पृष्टः सन्न विहन्येत. तदा श्रीसुधर्मास्वामी जंबूस्वामिनंप्रति वदति–इमे खलु ते बावीसं परीसहा समणेणं भगवया महावीरेणं कासवेणं पवेइया, जे भिक्खू सुच्चा नच्चा जिच्चा अभिभूय भिक्खायरियाए परि-

च्चयंतो पुठो नो विहन्निज्जा ॥ हे जंबू! इमे वक्ष्यमाणा हृदि वर्तमानत्वात् प्रत्यक्षा ये त्वया सोढास्ते द्वाविंशतिपरीषहाः श्रमणेन जगवता महावीरेण काश्यपेन प्रवेदिता, यान् परीषहान् श्रुत्वा ज्ञात्वा जित्वाजिभूय जिक्षाचर्यायां परिव्रजन् साधुः परीषहैः स्पृष्टः सन्न विहन्येत, तं जहा–तेषां परीषहाणां नामान्युच्यंते, दिगंछापरीसहे १ पिवासाप० २ सीयप० ३ उसणप० ४ दंसमसप० ५ अचेलप० ६ अरतिप० ७ इत्थीप० ८ चरियाप० ९ निसीहियाप० १० सिज्जाप० ११ अक्कोसप० १२ वहप० १३ जायणाप० १४ अलाजप० १५ रोगप० १६ तणफासप० १७ जल्लप० १८ सक्कारप० १९ पन्नाप० २० अन्नाणप० २१ दंसणप० २२ नामानि सुगमान्येव. नवरं दिगंछाशब्देन देशीजाषया क्षुधोच्यते, सा क्षुधेव षट्कायमर्दनपातकजयेनाहारपाकादि निवर्तते, न शुद्धाहारालाजेन वा, परि समंतात् सह्यते इति परीषहो दिगंछापरीषहः, एवमपरेष्वपि व्युत्पत्तिः कार्या. परीषहाणां नामान्युक्त्वा स्वरूपेण वक्तुकामः संबंधार्थमाह—

॥ मूलम् ॥—परीसहाणं पविजत्ती । कासवेणं पवेइया ॥ तं जे उदाहरिस्सामि । आ-

णुपुर्व्विं सुणेह मे ॥ १ ॥ व्याख्या—हे शिष्याः परीषहाणां प्रविभक्तिः प्रकर्षेण विभजनं प्रविभक्तिः, पृथक्पृथग्विभागः प्रविभक्तिः, काश्यपेन काश्यपगोत्रीयेण श्रीमहावीरदेवेन प्रवेदिता विद् ज्ञाने प्रकर्षेण ज्ञाता इत्यर्थः. तां परीषहाणां प्रविभक्तिमहमानुपूर्व्यामनुक्रमेण भवतामुदाहरिष्यामि, मे मम कथयिष्यतस्तां परीषहप्रविभक्तिं यूयं शृणुत? ॥ १ ॥ अत्र सर्वेषु परीषहेषु पूर्वं क्षुधाया निर्देशः, सर्वेषु परीषहेषु क्षुधाया दुस्सहत्वात्, यदुक्तं—'खुहासमा वेयणा नत्थि' इति. अथ द्वाभ्यां गाथाभ्यां क्षुधापरीषहजयं वदति—

॥ मूलम् ॥—दिगंछापरिगए देहे । तवस्सी भिक्खु थामवं ॥ न छिंदे न छिंदावए । न पए न पयावए ॥ २ ॥ कालीपव्वंगसंकासे । किसे धमणिसंतए ॥ मायन्ने असणपाणस्स । अदीणमणसो चरे ॥ ३ ॥ व्याख्या—तपस्वी साधुर्दिगंछा क्षुधा, तया परिगते व्याप्ते देहे सति न छिंद्यात्, तरूणां फलादिकं स्वयं न त्रोटयेत्, न चापरेण छेदयेत्, न च स्वयमन्नादिकं शाकादिकं च पचेत्, न च परेण पाचयेत्, नवकोटिशुद्धिबाधां न कुर्यात्, कथंभूतस्तपस्वी स्थामवान् मनोबलयुक्तः, पुनः कीदृशः? कालीपर्वांगसंकाशः, काली काक-

जंघा, तस्याः पर्वाणि मध्ये तनूनि भवंति, अंत्ये स्थूलानि भवंति, तदाकाराणि बाहुजंघा-
द्यंगानि भवंति यस्य तपस्विनो जानुकूर्परादयोऽवयवाः काकजंघासदृशा दृश्यंते इत्यर्थः. का-
लीपर्वसंकाशांग इति पाठो युज्यते कालीपर्वांगसंकाशः, इति पाठस्त्वार्षत्वात्, प्राकृतत्वात्
संकाशशब्दस्य परनिपातः, अंगशब्दस्य पूर्वनिपातः, पुनः कथं भूतस्तपस्वी? कृशः,
पुनः कथंभूतस्तपस्वी? धमनीसं ततः धमनीभिर्नाडीभिः संततो व्याप्तो यस्य शरीरं
नसाभिर्व्याप्तं दृश्यते इत्यर्थः. पुनः कीदृशस्तपस्वी? अशनपानस्य मायन्नत्ति मात्र-
ज्ञो मात्रमन्नपानेन स्वस्योदरपूर्तिमप्रमाणं जानाति, यावताऽहारेण स्वकीयोदरपूर्तिः
स्यात्तावत्प्रमाणमेवाहारं गृह्णीयात्, ननु यस्तपस्वी रसादिलौल्यादधिकं गृह्णातीत्यर्थः, इति
मात्रज्ञः पुनर्यस्तपस्वी अदीनमनाः, अदीनं मनो यस्य सोऽदीनमनाः, तपसः पारणादावा-
हारस्याप्राप्तावप्यदीनचित्तः सन् चरेत्, संयममार्गे प्रवर्त्तेत, अलब्धे तपसो वृद्धिर्लब्धे देह-
धारणा इति बुद्धिं चित्ते दधानस्तिष्ठेदित्यर्थः. ॥ २ ॥ ३ ॥ तत्र दृष्टांतो यथा—

उज्जयिन्यां हस्तिमित्रश्रेष्ठी वर्तते, तस्य हस्तिभूतनाम बालकोऽस्ति, अन्यदा हस्ति-

मित्रश्रेष्ठिनः प्रिया मृता, दुःखगर्भ वैराग्येण हस्तिमित्रश्रेष्ठी हस्तिभूतदारकेण समं प्रव्रजि-
तः. अन्यदा दुर्भिक्षे साधुभिः समं विहरन्नसौ हस्तिमित्रसाधुरुज्जैनीकटनगरमार्गाटव्यां कं-
टकेन विद्धपादोऽग्रे विहर्तुमक्षमोऽटव्यामेव स्थितः, तमक्षमं दृष्ट्वा साधुभिर्भणितं वारकेण
त्वां मार्गे वहिष्यामः, मा विषादं कृथाः, तेन भणितं मदायुः स्तोकमेवास्ति, अतोऽहमत्रैव
भक्तं प्रत्याख्यामि. यूयं यात? मदर्थमत्र स्थितस्यान्यस्य कस्यापि साधोर्माभूद्विनाश इत्युक्त-
वंतं क्षमयित्वा भक्तपानप्रत्याख्यानं कारयित्वा तत्रैव मुक्त्वा चानिच्छंतमपि क्षुल्लकं गृहीत्वा
ते साधवश्चेलुः. क्षुल्लकोऽर्धमार्गात्तान् विप्रतार्य पितृमोहेन तत्रायातः, तावता गृहीताऽनशनः
स मृतो देवोऽभूत्, क्षुल्लको सोऽज्ञात्वा तं मृतं न जानाति, सुप्तस्य तत्कलेवरस्य पार्श्व एव भ्र-
मति. क्षुधार्तोऽपि फलादिकं न गृह्णाति, ततः स देवः क्षुल्लकमोहेन निजदेहमधिष्टायावदद्व-
त्स! गच्छ भिक्षायां? क्षुल्लकेन भणितं कुत्र व्रजामि? तेन भणितमेषु धवनिकुंजेषु त्वं व्रज?
तन्निवासिनो जना भिक्षां दास्यंति. ततस्तथेति भणित्वा क्षुल्लकस्तत्र गतो धर्मलाभमुच्चचार,
स देवो नरनारीरूपं विधाय करं प्रसार्य दिव्यशक्त्या तस्मै भक्तपानादि ददौ, तावद्यावद्

दुर्भिक्षे निवृत्ते भोजकटनगरात् पश्चाद्वलिताः साधवस्तेनैव मार्गेण तत्रागताः, जीर्णशबं दृष्ट्वा ज्ञातदिव्यप्रयोगास्तं क्षुल्लकं गृहीत्वा विजह्रुः. यथा ताभ्यां पितृपुत्राभ्यां क्षुत्परीषहः सोढस्तथा सांप्रतिकमुनिभिरपि सोढव्यः. ॥ अथ भिक्षार्थमटतस्तृषाया उदयः स्यात्तदा तत्परीषहोऽपि सोढव्यः, इममेवार्थं गाथाद्वयेनाह—

॥ मूलम् ॥—तओ पुट्ठो पिवासाए । दुगंछीलज्ज संजए ॥ सीओदगं न सेविज्जा । वियरुस्से सणं चरे ॥ ४ ॥ छिन्नावाएसु पंथेसु । आउरे सु पिवासिए ॥ परिसुक्कमुहे दीणे । तं तितिक्खे परीसहं ॥ ५ ॥ व्याख्या—ग्रामनगरादौ भिक्षार्थं भ्रमन् दुगंछी अनाचाराद्भीतः, एतादृशो लज्जसंयतो लज्जायां सं सम्यक् यतते यत्नं कुरुते इति लज्जसंयतो लज्जावान् साधुर्न हि निर्लज्जो धर्मार्हः, तस्माल्लज्जसंयतस्तपस्वी, ततः क्षुधापरीषहानंतर एव पिपासया तृषया स्पृष्टः सन् शीतोदकमप्रासुकजलं न सेवेत न पिबेदित्यर्थः. ' वियरुस्स ' प्रासुकजलस्य शस्त्रपरिणितस्य रसांतरं वर्णांतरं च प्राप्तस्य वह्न्यादिना शुद्धस्यैषणाय ग्रहणाय चरेत, प्रासुकपानीयग्रहणाय गृहस्थगृहे व्रजेदित्यर्थः. ॥ ४ ॥ अथ ग्रामनगरादिभ्यो बहिर्वनाटव्या-

दिमार्गे व्रजन् साधुश्चेत्तृषया पीडितः स्यात्तदापि तृषापरीषहं सहेत्न तु तत्र साधुनैवं ज्ञात-व्यमत्र कोऽपि गृहस्थो दाता न दृश्यतेऽहं स्वयमेव जलं गृहीत्वा पिबामि. तदेव मार्गविष-म्यमाह—' छिन्नेति ' एतादृशेषु पथिषु मार्गेषु पूर्वोक्तस्तपस्वी पिपासापरीषहं तितिक्षेत स-हेत, कीदृशेषु? पथिषु छिन्नो गत आपातो लोकानां गमनागमनं येभ्यस्ते छिन्नापातास्तेषु, कीदृशः? स्वयं तपस्व्यातुरस्तृषाया आकुलतनुः, पुनः कीदृशः? सुपिपासितः, सुतरामति-शयेन पिपासितोऽत्यंतं तृषितः, पुनः कीदृशः? परिशुष्कमुखो गतनिष्ठीवनत्वेन शुष्कतालु-जिह्वोष्ठः. पुनः कीदृशः? एतादृशोऽप्यदीनः. ॥ ५ ॥ अत्र धनमित्रकथा—

उज्जयिन्यां धनमित्रो वणिक्, धनशर्मनाम्ना स्वसुतेन समं प्रव्रजितः. अन्यदा मार्गे क्षुल्लकस्तृट्पीडितो नदीं दृष्ट्वा पित्रावादि वत्स पिब जलं पश्चादालोचनया दोषशुद्धिर्भावि-नी, इत्युक्ते क्षुल्लो नेच्छति, ततः पिता साधुः स्वशंकानिरासार्थं शीघ्रं नदीमुत्तीर्याग्रे गतः, क्षुल्लो नद्यां प्रविष्टो जलांजलिमुत्क्षिप्य चिंतितवान्, कथं जलं पिबामि? यतः—एगंमि उ-दगबिंदुंमि । जे जीवा जिणवरेहिं पन्नत्ता ॥ ते पारेवयमित्ता । जंबूदीवे न मायंति ॥ १ ॥

जह जलं तह वणं । जह वणं तह निच्चिउ अग्गी ॥ ते ऊवाऊसहगया । न सा य पच्चक्खया चेव ॥ १ ॥ हंतूण परप्पाणे । अप्पाणं जे कुणंति सप्पाणं ॥ अप्पाणं दिवसाणं । कए य नासेइ अप्पाणं ॥ ३ ॥ इति संवेगेन जलमंजलितः पश्चाद्यत्नेन मुक्तं, ततस्तृषया मृत्वा स देवो जातः, अवधिज्ञानावगतपूर्वभववृत्तांतेन तेन साधूनामनुकंपया पथि गोकुलं कृतं, तत्र तक्रादि शुद्धमिति गृहीत्वा साधवः सुखिनो जाताः, अग्रे चलिताः, तेन देवेन स्वस्वरूपज्ञापनार्थमेकस्य साधोर्विंटिका गोकुले स्थापिता, विंटिग्रहणार्थं पश्चाद्व्यावृत्तमुनिवचसा सर्वैरपि साधुभिर्ज्ञातगोकुलाभावैस्तत्र दिव्यमाया ज्ञाता, तत्पिंडभोजनविषयं मिथ्यादुःकृतं दत्तं. ततस्तत्रायातेन देवेन पितरं मुक्त्वा सर्वे साधवो वंदिताः, पित्राऽवंदनकारणं पृष्टः सर्वं स्ववृत्तांतं पितुर्जलपानानुमतिं च प्रोच्य गतो देवः स्वस्थानं, एवं क्षुल्लकवत्तृट्परीषहः सोढव्यः. ॥ २ ॥ अथ क्षुधापिपासापीडितस्य कृशस्य शीतमपि शरीरे लगति, तदपि सोढव्यं, तदपि गाथाद्वयेनाह—

॥ मूलम् ॥—चरंतं विरयं लूहं । सीयं फुसइ एगया ॥ नाइवेलं मुणी गछे । सुच्चाणं

जिणसासणं ॥ ६ ॥ न मे निवारणं अत्थि । छवित्ताणं न वियसे ॥ अहं तु अग्गिं सेवामि । इइ भिक्खू न सेवए ॥ ७ ॥ व्याख्या—एकदा महाशीतकालादौ प्रतिमावहनादौ कायोत्सर्गे स्थितं तपस्विनं शीतं स्पृशेच्छरीरे लगेत्तदा स मुनिस्तपस्व्यतिवेलं स्वाध्यायकरणप्रस्तावमतिक्रम्य शीतभीतः सन् स्थानांतरं न गच्छेत्, किं कृत्वा? जिनशासनं श्रुत्वा, जिनशासने हि जीवोऽन्यो देहश्चान्यः, कीदृशं मुनिं? ग्रामानुग्रामं चरंतं, विहरंतं, अथवा मुक्तिनगरानुकूले साधुमार्गे विचरंतं, पुनः कीदृशं? लूहं रुक्षं स्निग्धभोजनतैलाभ्यंगादित्यागेन रुक्षांगं, पुनः कीदृशं? विरतमग्निप्रज्ज्वालनाद्विरतं, तदा पुनः शीतपीडितो भिक्षुरिति न चिंतयेदिति न विचारयेत्, इतीति किं? मे मम 'छवित्ताणं' देहचर्माच्छादनं शीतनिवारणं किमपि न विद्यते नास्ति, तेनाहमग्निं सेवामीति चिंतितमपि न कुर्यात्, तदाग्निसेवनं दूरमेव त्यक्तं. अत्र भद्रबाहुशिष्याणां कथा—

राजगृहे चत्वारो वयस्या वणिजः श्रीभद्रबाहुगुर्वंतिके प्रव्रज्य श्रुतं चाधीत्यैकाकिप्रतिमया विहरंतस्तत्रवेयुः, तदा हेमंत आसीत्, ते च भिक्षाभोजनमादाय तृतीयपौरुष्यां न्य-


॥ ४९ ॥

वर्तंत, रात्रौ पृथक् पृथगवसन्, तेषामेकस्य चरमपौरुषी वैभाराद्रिगुहाद्वारेऽवगाढा, तत्रैव सोऽस्थात्, द्वितीयः पुरोद्याने, तृतीयस्तूद्यानसमीपे, चतुर्थस्तु पुराभ्यर्णे. तत्र यो वैभाराद्रिगुहासन्नः स महाशीतव्यथितो रजन्याद्ययामे मृतः, उद्यानस्थो द्वितीययामे मृतः, उद्यानासन्नस्तृतीये यामे मृतः. पुरासन्नस्तु पुरोष्मणाल्पशीतत्वेन चतुर्थे प्रहरे मृतः, सर्वेऽप्येते साधवो दिवं जग्मुः. एवं शीतपरीषहः सोढव्यः. ॥ ३ ॥ शीतकालानंतरं ग्रीष्मकालस्यागमनं स्यात्, तत्परीषहोऽपि सोढव्यः.

॥ मूलम् ॥—उसिणप्परियावेणं । परिदाहेण तज्जिए ॥ घिंसु वा परितावेणं । सायं नो परिदेवए ॥ ८ ॥ उण्हाहि तत्तमेहावी । सिणाणं नो विपत्थए ॥ गायं नो परिसिंचिज्जा न वीइज्जा य अप्पयं ॥ ए ॥ व्याख्या—मेधावी स्थिरबुद्धिमान् साधुर्ग्रीष्मे उष्णकाले वा शब्दाद्वरदि ऋतावपि सातं सुखहेतुं न परिदेवेत, कदा मम शरीरे शीतलत्वं स्यादिति न प्रलापं कुर्वीत. कीदृशः साधुः? उष्णपरितापेन यः परिदाघस्तेन तर्जितः, ग्रीष्मकाले सूर्यस्यातपेन भूमिशिलादयः परितप्ताः संति, तत्र साधुरातापनां कुर्वंस्तप्तभूमेः शिलातो लो-

स्कारशालासमीपत्वाद्वा परिदाघेन बहिः प्रस्वेदमलाभ्यां वह्निना वा, अंतश्च तृष्णारूपेण नार्जितोऽतिपीडितः. पुनरप्युक्तमर्थमेव दृढयति—मेधावी साधुरुष्णाभितप्तः स्नानं नैव प्रार्थयेत् नाभिलषेत्, पुनर्गात्रं शरीरं नो परिसिंचेत्, न च प्रस्वेदादिसद्भावे आत्मानं स्वदेहं वीजयेत्, वीजनेन शरीरस्य न वा न प्रक्षेपं कुर्यादित्यर्थः. अत्रारहन्नककथा यथा—

नगरानगर्यामर्हन्मित्राचार्यपार्श्वे दत्तनामा वणिग्भद्राभार्यारहन्नकपुत्रेण समं प्रव्रजितः, पित्रा सर्ववैयावृत्त्यकरणेनेतस्ततः परिभ्रम्य भव्यभिक्षाभोजनसंपादनेन स बालोऽत्यंतं सुखी कृतः, उपविष्ट एव भुंक्ते. कदापि भिक्षार्थं न भ्रमति, तद्भिक्षार्थं स्वभिक्षार्थं च पितुरेव भ्रमणात्. अन्यदा पितरि मृते साधुभिः प्रेरितः स बालो ग्रीष्मे मासे भिक्षार्थं गतः, तापाभिभूतः प्रोत्तुंगगृहच्छायायामुपविशति, पुनस्तत उत्तिष्ठति, शनैः शनैर्याति. एवं कुर्वतमतिसुकुमारं तमरहन्नककुमारं रूपेण कंदर्पावतारं दृष्ट्वा काचित्प्रोषितवणिग्भार्याकार्ये गृहे स्थापितवती, तया सह स विषयासक्तोऽभूत्. अथ तन्माता साध्वी पुत्रमोहेन ग्रथिलीभूयारे अरहन्नक! अरे अरहन्नक! इति निर्घोषयंती चतुष्पथादिषु भ्रमति. एकदा गवाक्षस्थेनारह-

न्नकेन तादृशावस्था माता दृष्टा, संजातात्यंतसंवेगः स गवाक्षादुत्तीर्य पादयोः पतित्वा मातरमेवाह हे मातः! सोऽहमरहन्नकः, इति तद्वचःश्रवणात्स्वस्थचित्ता माता तमेवमाह वत्स! भव्यकुलजातस्य तव केयमवस्था? स प्राह मातश्चारित्रं पालयितुमहं न शक्नोमि, सा प्राह तर्ह्यनशनं कुरु? मातृवचसा स तप्तशिलायां सुप्त्वा पादपोपगमनं चकार. सम्यगुष्णपरीषहं विसह्य समाधिनाग्देवत्वं प्राप्तवान्. एवमन्यैरपि साधुभिरुष्णपरीषहः सोढव्यः. ॥ ५ ॥ ततो ग्रीष्मकालादनंतरं वर्षाकालः समागच्छति, वर्षाकाले दंशमशकादय उत्पद्यंते, तैश्च पीडितेन सता तत्परीषहः सोढव्यः. ॥ ८ ॥ ए ॥

॥ मूलम् ॥—पुट्ठो य दंसमसएहिं । समरेव महामुणी ॥ नागो संगामसीसे वा । सूरो अभिहणे परं ॥ १० ॥ न संतसे न वारिज्जा । मणंपि न पउसए ॥ उवेहतहणे पाणे । भुंजंते मंससोणियं ॥ ११ ॥ व्याख्या—महामुनिर्महातपस्वी दंशमशकैर्जंतुभिः स्पृष्टो भक्षितः सन्न संत्रसेत्, त्रासं न प्राप्नुयात्, पुनस्तान् दंशादीन् न निवारयेत. तेषां वारणे ह्याहारांतरायः स्यात्, मनोऽपि न प्रदूषयेत्, मनोऽपि कलुषं न कुर्यात्, निवारणं तु दूरे एव व्य-

९, तेषु सनत्स्वपि क्रोधं न कुर्यात्, किंतु तेषु दंशमशकादिषु दुष्टजीवेषु मांसशोणितं पलरुधिरं भुंजानेपूपेक्षेत, उदासीनभावे वर्तेत, रागद्वेषरहितो भवेत्, प्राणांस्तान् दंशमशकादीन् मांसरुधिरं भुंजानान्न हन्यात्. अत्र श्रमणभद्रकथा यथा—

चंपायां जितशत्रुनृपस्य पुत्रः श्रमणभद्रो युवराजा श्रीधर्मघोषांते प्रव्रज्यैकाकित्वविहारेण विहरन्नन्यदा शरदि कृतावटव्यां प्रतिमास्थितो दंशमशकैः पीड्यमानोऽपि निश्चलः स्वयमनंतशो भुक्तनरकवेदनास्वरूपं चिंतयन् समाधिना मृत्वा दिवं गतः. एवं दंशमशकपरीषहः सोढव्यः. ॥ ५ ॥ अथ च दंशमशकादिभिः पीड्यमानो वस्त्राशास्याकारो न स्यादतोऽचेलपरीषहमाह—

॥ मूलम् ॥—परिजुन्नेहिं वत्थेहिं । डुक्खामित्ति अचेलए ॥ अदुवासचेलए दुक्खं । इइ भिक्खू न चिंतए ॥ १२ ॥ एगया अचेलए होइ । सचेलए अवि एगया ॥ एयं धम्मं हियं नच्चा । नाणी नो परिदेवए ॥ १३ ॥ व्याख्या—भिक्षुः साधुर्वस्त्रेषु परिजीर्णेष्विति न चिंतयेत्, मनसि न विचारयेत्. इतीति किं? अहं वस्त्राभावेऽचेलको निर्वस्त्रो भविष्यामि, न

विद्यते चेलं वस्त्रं यस्य सोऽचेलक इति दैन्यं न कुर्यात्. अथवैतादृशं जीर्णं स्फुटितवस्त्रं मां दृष्ट्वा कश्चिद्धर्मात्मा दाता मह्यं वस्त्रं दास्यति तदाहं सचेलको वस्त्रसहितो भविष्यामीति प्रमोदभागपि न स्यात्, एतावता वस्त्रस्याप्राप्तौ वस्त्रस्य प्राप्तौ वा विषादो वा हर्षो वा साधुना न विधेयः, प्राप्त्यप्राप्त्योः सदृशे न भाव्यमित्यर्थः. ॥ १२ ॥ पुनः साधुरेवं चिंतयेत् एकदा जिनकल्पावस्थायां साधुरचेलकः स्यात्, इयमपि साधोरेवावस्था, स्थविरकल्पेऽपि दुर्लभवस्त्रत्वेन पूर्ववस्त्रस्य जीर्णत्वान्नाशे जाते सत्यपरवस्त्रप्राप्त्यभावेन निमित्तं विनापि निर्वस्त्रः स्यात्, तदा मनसि साधुनेति चिंतनीयं. इदानीमहं जिनकल्पावस्थां भजामि, जिनकल्पी मुनिरचेलक एव तिष्ठति. पुनरेकदा स्थविरकल्पावस्थाचिंतनेनोभयं धर्मं ज्ञात्वा ज्ञानी साधुर्नो परिदेवेत, नो विलापं कुर्वीत. कीदृशं धर्मं? हितं हितकारकं. ॥१३॥ अत्र दृष्टांतो यथा–

दशपुरे नगरे सोमदेवो द्विजोऽस्ति, तस्य भार्या रुद्रसोमा नाम्नी वर्तते, तयोः पुत्रावार्यरक्षितफल्गुरक्षितौ स्तः, आर्यरक्षितेन पितुर्विद्या पूर्णा गृहीता, पश्चात्पाटलिपुत्रे नगरेऽधिकविद्यापठनाय कस्यचिदुपाध्यायपार्श्वे गतः, तत्र तेन सांगोपांगाश्चत्वारो वेदाः पठिता-

फल्गुरक्षितो भ्राता तस्याकारणाय समायातः, आर्यरक्षितेन तत्रैव प्रतिबोध्य प्रव्राजितः. एकदार्यरक्षितः श्रीवज्रस्वामिनं पृच्छति भगवन्नतःपरं पूर्वपाठः कियानवशिष्टोऽस्ति? वज्रस्वाम्याह वत्स! त्वया बिंदुमात्रं पठितं, समुद्रोपमं दशमं पूर्वमस्ति, ततोऽसौ श्रमपरिणामः प्राह नाहमतःपरं पूर्वपाठं कर्तुं शक्नोमि, गुरवस्तु दशमपूर्वार्धस्य स्वस्मिन्नेव व्युच्छेदं ज्ञात्वा मौनेन स्थिताः. असौ गुरूननुज्ञाप्य स्वसांसारिकवंदापनार्थं दशपुरनगरे प्राप्तः, गच्छतस्तस्य गुरुणा सूरिपदं दत्तं. अथार्यरक्षितसूरिस्तत्र स्वमातृभगिनीप्रमुखसर्वसांसारिकवर्गो दीक्षां ग्राहितः, पिता तु प्रतिबोधितोऽपि साधुलिंगं न गृह्णाति, स्वज्ञातीयजनानां लज्जां च वहति. आचार्या दीक्षाग्रहणाय तस्य बहु कथयंति.

ततः स कथयति पृथुलवस्त्रयुगल १ यज्ञोपवीत २ कमंडलु ३ छत्रिका ४ उपानद्भिः समं चेदीक्षां ददासि तदा लामि. ततो लाभं दृष्ट्वा तादृशमेव तं गुरुः प्रव्राजितवान्, ग्राहितश्चरणकरणस्वाध्यायं. अन्यदा चैत्यवंदनार्थं गता आचार्याः, तत्र साधुशिक्षिता गृहस्थार्भकका वदंति एनं छत्रिणं मुक्त्वा सर्वान् साधून् वंदामहे, ततः स वृद्धो वक्ति मम पुत्रा नप्त्रादय

र्यरक्षितोऽपि शुभं शाकुनं चिंतयन् गत इक्षुवाटकं. तत्रैकस्मिन् पार्श्वे स्थित्वा ढड्ढरश्राद्धवंद-
नविधिं दृष्ट्वोपाश्रयमध्ये प्रविष्टः, वंदितास्तोसलिपुत्राचार्याः, तैः पृष्टं स्वरूपं प्रयोजनं च स-
र्वमप्युक्त्वा मम दृष्टिवादमध्यापयंत्विति वदंतं तं सूरयः प्रोचुर्यद्यस्मदंतिके प्रव्रज्यां गृह्णासि
तदा तमध्यापयामः, तेनोक्तमेवमप्यस्तु. ततः स प्रव्रजितः कथयति भगवन्नत्र सकललोक-
व्याक्षिप्तस्य मम विद्याग्रहणं स्वल्पमेव भावि, तेन काप्यन्यत्र गम्यते, गुरुभिस्तथा कृतं.
भाणितोऽसौ सोपांगान्येकादशांगानि. अथ पूर्वपठनार्थं तोसलिपुत्राचार्यैरसावार्यरक्षितः श्री-
वज्रस्वाम्यंतिके प्रेषितः, पथि गच्छन्नवंत्यां श्रीभद्रगुप्तसूरीणां निर्यापनां कृतवान्, तैश्चांत्यस-
मये प्रोक्तं पठता त्वया वज्रस्वामिमंडल्यां न स्थेयं, यतस्तन्मंडलीस्थितो तेनैव सह म्रियते.
एवं तच्छिक्षां श्रुत्वा ततो गतः, श्रीवज्रस्वामिपार्श्वे तैश्च रात्रौ क्षीरभृतं पात्रमागंतुकेन शि-
ष्येण किंचिदूनं पीतमिति स्वप्नो दृष्टः. ततस्तेन पृथग्मंडलीं कृत्वाऽधीतानि श्रीवज्रस्वामिपा-
र्श्वे नव पूर्वाणि. वज्रस्वामी तु पृथग्मंडलीकारणं ज्ञात्वा न किंचित्तस्योक्तवान्. दशमपूर्वा-
धिकाराः केचन यावत्तेन पठितास्तावद्दशपुराच्चिरकालविरहार्दितमातृपितृप्रमुखकुटुंबप्रेरितः

फल्गुरक्षितो भ्राता तस्याकारणाय समायातः, आर्यरक्षितेन तत्रैव प्रतिबोध्य प्रव्राजितः. एकदार्यरक्षितः श्रीवज्रस्वामिनं पृच्छति भगवन्नतःपरं पूर्वपाठः कियानवशिष्टोऽस्ति? वज्रस्वाम्याह वत्स! त्वया बिंदुमात्रं पठितं, समुद्रोपमं दशमं पूर्वमस्ति, ततोऽसौ श्रान्तपरिणामः प्राह नाहमतःपरं पूर्वपाठं कर्तुं शक्नोमि, गुरवस्तु दशमपूर्वार्धस्य स्वस्मिन्नेव व्युच्छेदं ज्ञात्वा मौनेन स्थिताः. असौ गुरूननुज्ञाप्य स्वसांसारिकवंदापनार्थं दशपुरनगरे प्राप्तः, गच्छतस्तस्य गुरुणा सूरिपदं दत्तं. अथार्यरक्षितसूरिस्तत्र स्वमातृभगिनीप्रमुखसर्वसांसारिकवर्गो दीक्षां ग्राहितः, पिता तु प्रतिबोधितोऽपि साधुलिंगं न गृह्णाति, स्वज्ञातीयजनानां लज्जां च वहति. आचार्या दीक्षाग्रहणाय तस्य बहु कथयंति.

ततः स कथयति पृथुलवस्त्रयुगल १ यज्ञोपवीत २ कमंडलु ३ छत्रिका ४ उपानद्भिः समं चेद्दीक्षां ददासि तदा लामि. ततो लाभं दृष्ट्वा तादृशमेव तं गुरुः प्रव्राजितवान्, ग्राहितश्चरणकरणस्वाध्यायं. अन्यदा चैत्यवंदनार्थं गता आचार्याः, तत्र साधुशिक्षिता गृहस्थडिंभका वदंति एनं छत्रिणं मुक्त्वा सर्वान् साधून् वंदामहे, ततः स वृद्धो वक्ति मम पुत्रा नप्त्रादय

एते वंदिताः, अहं कस्मान्न वंदितः? किं मया दीक्षा न गृहीता? ते आहुः किं दीक्षितस्य छत्रमंगलादीनि स्युः? ततो गुरुष्वागतेषु स वृद्धो वक्ति पुत्र! मम डिंभका अपि हसंति. ततो न कार्यं छत्रेण. एवं प्रयोगेण क्रमतो धौतिकवस्त्रं मुक्त्वा सर्वं त्याजितः, बहुशस्तथा प्रयोगकरणेऽपि धौतकं न मुंचति. अन्यदैकः साधुर्गृहीतानशनः स्वर्गं गतः. तत आचार्यैर्वृद्धस्य धौतिकत्याजनाय साधून्प्रत्येवमुक्तं य एनं वृद्धसाधुं व्युत्सृष्टं स्कंधेन वहति तस्य महत्पुण्यं. ततः स स्थविरो वक्ति पुत्रात्र किं बहुनिर्जरा? आचार्या आहुर्बाढं.

ततः स वक्त्यहं वहामि, आचार्या वदंत्यत्रोपसर्गा जायंते, चेटकरूपाणि लग्यंते, यदि शक्यतेऽधिसोढुं तदा वरं, यदि क्षोभो भविष्यति, तदाशुभमस्माकं भविष्यति एवं स्थिरीकृत्य स तत्र नियुंजितः, साधुसाध्वीसमुदायः पृष्ठौ स्थितः, यावत्तेन साधुशवं स्कंधे समारोप्य वोढुमारब्धं तावत्तस्य धौतिकं गुरुशिक्षितडिंभकैराकर्षितं, स लज्जया यावत्तत्साधुशवं स्कंधान्मुंचति तावदन्यैरुक्तं मा मुंच? मा मुंच? एकेन चोलपट्टको दवरकेण कृत्वा कटौ बद्धः, स तु लज्जया तत्साधुशवं द्वारभूमिंयावदुद्धृत्य तत्र व्युत्सृज्य पश्चादागतो व-

कि हे पुत्राय महानुपसर्गो जातः, आहुराचार्या आनीयतां धौतिकं परिधाप्यतां? ततः स वक्त्यथालं धौतिकेन, यद् द्रष्टव्यं तद् दृष्टमेव, अथ चोलपट्ट एवास्तु, पूर्वं तेनाचेलपरीषहो न सोढः, पश्चात्सोढः. ॥ ६ ॥ अथाचेलकस्य शीतादिभिररतिः स्यात्, अतस्तत्परीषहमाह—

॥ मूलम् ॥—गामाणुगामं रीअंतं । अणगारं अकिंचणं ॥ अरईअणुप्पएसे । तं तितिक्खे परीसहं ॥ १४ ॥ अरइं पिट्ठओ किच्चा । विरए आयरक्खिए ॥ धम्मारामे निरारंभे । उवसंते मुणीचरे ॥ १५ ॥ व्याख्या—अरतिः संयमेऽधैर्यं यदाऽनगारमनुप्रविशेदरतिपरीषहो मुनिं स्पृशेत्तदा साधुस्तं परीषहं तितिक्षेत सहेत. किं कुर्वंतमनगारं? ग्रामानुग्रामं रीयंतं, ग्रामं ग्राममन्विलङ्ग्रामं, एकं ग्रामं व्रजतो मुनेरंतराले आगतं ग्राममनुग्रामं, तत्र विचरंतं, कीदृशं? अकिंचनं, न विद्यते किंचनं यस्य सोऽकिंचनस्तं परिग्रहरहितं, पुनरुक्तमर्थं दृढयति—मुनिररतिपरीषहे उत्पन्ने सत्यरतिं पृष्ठतः कृत्वा दूरे कृत्वा धर्मारामः सन् संयममार्गे चरेद्विचरेत्. धर्मे आरमते रतिं करोतीति धर्मारामः, पुनः कीदृशः साधुः? विरत आश्रवाद्रहितः पुनः कीदृशः? निरारंभ आरंभरहितः, पुनः कीदृशः? उपशांतो निःकषायः. ॥१५॥

अत्र पुरोहितपुत्रराजपुत्रयोःकथा यथा—

अचलपुरे जितशत्रुनृपपुत्रोऽपराजितनामा रोहाचार्यपार्श्वे दीक्षितः, अन्यदा विहरंस्तगरां नगरीं गतः, तावतोज्जयिन्या आर्यरोहाचार्यास्तत्रागताः, पृष्टं साधुना तेनोज्जयिन्याः स्वरूपं, तैरुक्तं सर्वं तत्र वरं, परं नृपपुत्रामात्यपुत्रौ साधूनुद्वेजयतः. ततो गुरूनापृच्छ्य स्वभ्रातृव्यबोधार्थं शीघ्रमुज्जयिन्यां गतः. तत्र भिक्षावेलायां लोकैर्वार्यमाणोऽपि बाढस्वरेण धर्मलाभ इति पठन् राजकुले प्रविष्टः, राजपुत्रामात्यपुत्राभ्यां सोपहासमाकारितोऽवागच्छत? वंद्यते, ततः स तत्र गतः, ताभ्यामुक्तं वेत्सि नर्तितुं? तेनोक्तं बाढं, परं युवां वादयतां? तौ तादृशं वादयितुं न जानीतः, ततस्तेन तथा तौ कुट्टितौ पृथक्कृतहस्तपादादिसंधिबंधिनौ यथात्यंतमारारटिं कुरुतः, तौ तादृशावेव मुक्त्वा साधुरुपाश्रये समायातः. ततो राजा सर्वबलेन तत्रायातस्तमुपलक्ष्य प्रसादनाय तस्य पादयोः पतितः, उवाच च स्वामिन्! सापराधावपीमौ सज्जीकार्यौ, अतःपरमपराधं न करिष्यतः, साधुनोक्तं यदीमौ प्रव्रजतस्तदा मुंचामि, राज्ञोक्तमेवमप्यस्तु. ततस्तौ प्रथमं लोचं कृत्वा प्रव्राजितौ, तत्र राजपुत्रो निःशंकितो धर्मं करो-

ति, इतरस्त्वमर्षं वहति, अहं बलेन पराजित इत्युद्वेगं चेतसि वहति, परं पालयतो द्वाव-
पि चारित्रं शुद्धं मृत्वा तौ दिवं गतौ. अस्मिन्नवसरे कौशांब्यां तापसश्रेष्टी मृत्वा स्वगृहे
शूकरो जातस्तत्र जातिस्मरणं प्राप्तवान्, सर्वं स्वसुतादिकुटुंबं प्रत्यभिजानाति, परं वक्तुं न
किंचिच्छक्नोति. अन्यदा सुतैरेष शूकरो मारितः स्वगृहे एव सर्पो जातः, तत्रापि जातिस्मरण-
वांस्तैरेव मारितः, पुत्रपुत्रो जातः, तत्रापि जातिस्मरणमाप, स एवं चिंतयति कथमेतां पूर्व-
जननीं मातरमहमुल्लपामि? कथं चेमां पूर्वभवपुत्रं पितरमहमुल्लपामीति विचार्य सौनमाश्रि-
तः. मूकवतनाम्जातः. अन्यदा केनचिच्चतुर्ज्ञानिना तद्बोधं ज्ञात्वा स्वशिष्ययोर्मुखे गाथा प्रे-
षिता. यथा—तावस किमिणा मूअ—वएण पडिवज्ज जाणिअं धम्मं ॥ मरिऊण सूअरो-
रग । जाओ पुत्तस्स पुत्तत्ति ॥ १ ॥ एतां गाथां श्रुत्वा प्रतिबुद्धो गुरूणां सुश्रावकोऽभूत्. ए-
तस्मिन्नवसरे सोऽमात्यपुत्रजीवदेवो महाविदेहे तीर्थंकरसमीपे पृछति किमहं सुलभबोधिर्दु-
र्लभबोधिर्वा? इति प्रश्ने प्रोक्तं तीर्थंकरेण त्वं दुर्लभबोधिः कौशांब्यां मूकभ्राता भावीति ल-
ब्धोत्तरः स सुरो गतो मूकपार्श्वे, तस्य बहु द्रव्यं दत्वा प्रोक्तवान् यदाहं त्वन्मातुरुदरे उत्प-

स्ये तदा तस्या आम्रदोहदो भविष्यति, स दोहदः सांप्रतं मद्दर्शितसदाफलाम्रफलैस्त्वया तदानीं तस्याः पूर्णीकार्यः, पुनस्त्वया तथा विधेयं यथा तदानीं मम धर्मप्राप्तिः स्यात्. एवमुक्त्वा गतो देवः. अन्यदा देवलोकाच्च्युत्वा स देवस्तस्या गर्भे समुत्पन्नस्तस्याश्चाम्रदोहदः समुत्पन्नः, मूकेन पूर्वोक्तरीत्या पूरितः, पुत्रो जातः, मूकस्तु तं बालं लघुमपि करे कृत्वा देवान् साधूंश्च वंदापयति, परं स दुर्लभबोधित्वेन तान् दृष्ट्वारटति. एवमा बालकालादपि भृशं प्रतिबोधितोऽपि स न बुध्यति. ततो मूकः प्रव्रजितः, गतः स्वर्गं. अथ देवीभूतेन मूकजीवेन स दुर्लभबोधिर्बालः प्रतिबोधकृते जलोदरव्यथावान् कृतः, वैद्यरूपं कृत्वा देवेनोक्तमहं सर्वरोगोपशमं करोमि, जलोदरी वक्ति मम जलोदरोपशांतिं कुरु? वैद्येनोक्तं तवासाध्योऽयं रोगः, तथाप्यहं प्रतीकारं करोमि यदि मम पृष्टावौषधकोत्थलकं समुत्पाट्य मयैव सहागमिष्यसि. तेनोक्तमेवं भवतु. ततो वैद्येन स जलोदरी सज्जीकृतः समाधिभाग्जातः, तस्योत्पाटनायौषधकोत्थलकस्तेन दत्तः, स तत्पृष्ठौ भ्रमंस्तं कोत्थलकमुत्पाटयति, देवमायया स कोत्थलकोऽतीवभारवान् जातः, तमतिभारं वहन् स खिद्यति, परं

तमुत्सृज्य पश्चाद्गंतुं न शक्नोति. माभूत्पश्चाद्गतस्य मे पुनर्जलोदरव्यथेति विमर्शं कुर्वन् वैद्यस्यैव पृष्ठे कोथलकं वहन् भ्रमति.

एकदैकदेशे स्वाध्यायं कुर्वतः साधवो दृष्टास्तत्र तौ गतौ. वैद्येनोक्तं त्वं दीक्षां गृहीष्यसि यथा त्वां मुंचामि, स जातजन्मो वक्ति गृहीष्याम्येव, ततो वैद्येनाप्यस्य दीक्षा दापिता, देवे च स्वस्थानं गते तेन दीक्षा परित्यक्ता, देवेन पुनरपि तथैव जलोदरं कृत्वा वैद्यरूपधरेण पुनरसौ दीक्षां ग्राहितः, पुनर्गते च देवे तेन दीक्षा त्यक्ता, तृतीयवारं दीक्षां दापयित्वा वैद्यरूपो देवः सार्धं तिष्ठति स्थिरीकरणाय. एकदा तृणभारं गृहीत्वा स देवः प्रज्ज्वलद्ग्रामे प्रविशति. ततस्तेन साधुनोक्तं ज्वलति ग्रामे कथं प्रविशसि? देवेनोक्तं त्वमपि क्रोधमानमायालोभैः प्रज्ज्वलिते गृहवासे वारंवारं वार्यमाणोऽपि पुनः कथं प्रविशसि? वैद्यरूपेण देवेनैवमुक्तोऽपि स न बुध्यते. अन्यदा तावटव्यां गतौ, देवः कंटकाकुले मार्गे चरति, स प्राह कस्मादुन्मार्गेण यासि? देवेनोक्तं त्वमपि विशुद्धं संयममार्गं परित्यज्याधिव्याधिरूपे कंटकाकीर्णे संसारमार्गे कस्माद्यासि? एवं देवेनोक्तेऽपि स न बुध्यते. पुनरेकस्मिन् देवकुले तौ गतौ,

तत्र यक्षं ईप्सितपूजापूज्यमानोऽपि पुनः पुनरधोमुखः पतति, स कथयत्यहो यक्षस्याधमत्वं! यत्पूज्यमानोऽप्ययमधोमुखः पतति, देवेनोक्तं त्वमप्येतादृशोऽधमः, यदृंद्यमानः पूज्यमानोऽपि त्वं पुनः पुनः पतसि, ततः स साधुर्वक्ति कस्त्वं? देवेन मूकरूपं दर्शितं, पूर्वभवसंबंधश्च कथितः, स वक्त्यत्र कः प्रत्ययः? ततो वैताढये चैत्यवंदापनार्थं देवेनासौ प्रापितः, तत्रैकस्मिन् सिद्धायतनकोणे दुर्लभबोधिदेवेन स्वबोधाय मूकविदितं स्वकुंडलयुगलं स्थापितमभूत्, तत्तदानीं दर्शितं, ततस्तस्य जातिस्मरणं जातं, तेनास्य चारित्रदृढताभूत्, अस्य पूर्वमरतिः पश्चाद्रतिः. ॥ ७ ॥ अथ संयमेऽरतिसद्भावे सति स्त्रीभ्रीहा स्यात्, न च परीषहोऽपि सोढव्यः. अतस्तत्परीषहमाह—

॥ मूलम् ॥—संगो एस मणुस्साणं । जाउ लोगंमि इत्थीउ ॥ जस्स एआ परिणया । सुकडं तस्स सामन्नं ॥ १६ ॥ एयमादाय मेहावी । पंकभूयाउ इत्थीउ ॥ न ताहिं विहन्निज्जा चरिज्जत्तग्गवसए ॥ १७ ॥ व्याख्या—लोकेऽस्मिन् संसारे मनुष्याणामेताः स्त्रियः संगो जातो-

(स्ति, नराणां स्त्रियो बंधनं वर्त्तते, यथा मृगाणां ...

ति जीवो यस्मात्स संगो बंधनमित्यर्थः; अत्र मनुष्यग्रहणं तेषामेव मैथुनसंज्ञाया आधिक्यात्, यथा मक्षिकाणां श्लेष्मासंगो बंधनं, तथा पुरुषाणां स्त्रियो बंधनमित्यर्थः, यस्य साधोरेताः स्त्रियः परि समंताद् ज्ञपरिज्ञया ज्ञाताः प्रत्याख्यानपरिज्ञया प्रत्याख्याताः परित्यक्ताः, अनर्थहेतुरूपा ज्ञाताः, अत्र प्राकृतत्वात्तृतीयास्थाने षष्ठी, येन साधुना स्त्रिय एतादृशो ज्ञातास्तस्य साधोः श्रामण्यं सुकृतं साध्वाचारः सफलः ॥ १६ ॥ मेधावी धर्ममर्यादावांस्ताभिः स्त्रीभिर्न विहन्यात्, संयमजीवितघातेनात्मानं न विनाशयेत्, किंत्वात्मगवेषकः सन् चरेत्, आत्मानं गवेषयतीत्यात्मगवेषकः. किं कृत्वा? एवमादायैतद् ज्ञात्वा, एतदिति किं? स्त्रियः पंकभूताः. मुक्तिमार्गे कर्दमभूताः, मुक्तिपथप्रवृत्तानां बंधकत्वेन मालिन्यकारणं स्त्रियः संतीति ज्ञात्वा. तस्मात् स्त्रीणां संगं विहाय मया संसारादात्मा निस्तारणीयः, इति बुद्धिमान्.



अत्र स्थूलिभद्रकथा यथा—

पाटलिपुत्रनगरे नवमो नंदराजा, तस्य राज्यचिंताकारकः शकडालनामा मंत्री वर्तते, तेन स्ववृद्धपुत्रः स्थूलभद्रनामा लीलाविलासार्थं तन्नगराधिवासिन्याः कोशावेश्याया गृहे मुक्तस्तत्र मार्गित सुवर्णादि यथेष्टं प्रेषयति, द्वितीयपुत्रः श्रीयकनामा राजांगपार्श्ववर्त्ती

विहितः. अस्मिन्नवसरे तन्नगरवास्तव्यो वररुचिनामा भट्टो नवीनकृतैरष्टोत्तरशतकाव्यैर्नंदभूपालं प्रत्यहं स्तौति, राजा च तस्मै द्रव्यदित्सुः शकडालमंत्रिमुखं विलोकते, शकडालमंत्री तु मिथ्यात्वबुद्धिभीरुर्न तत्काव्यानि स्तौति, मंत्रिप्रशंसां विना राजा तस्मै न किंचिद्दत्ते, वररुचिना तु मंत्रिभार्या स्ववचनामृतेन तोषिता स्वभर्तारं शकडालमंत्रिणं प्रत्याह वररुचेः काव्यानि त्वया नृपपर्षदि व्याख्येयानि, यथास्थितवस्तुप्ररूपणे सम्यक्त्वस्य भूषणं न तु दूषणमित्यादि स्ववनितावचोयुक्त्या तत्काव्यप्रशंसनं प्रतिपन्नं, प्रभाते पर्षदि भूपतेः पुरो वररुचिप्रोक्तानि काव्यानि मंत्रिणा प्रशंसितानि, तत्प्रशंसानंतरमेव राज्ञा वररुचिभट्टाय दीनाराणामष्टोत्तरशतं दत्तं. ततः प्रतिदिनं विप्रो भूपतेः पुरोऽष्टोत्तरशतकाव्यानि नवानि वक्ति, स्तुतिप्रांते भूपप्रदत्तं दीनाराष्टशतं गृह्णाति, ततो बुद्धिमान् वररुचिनामा भट्टः शतसहस्रवित्तव्ययेन यागहोमादि करोति. मंत्री तु तथा वर्धमानं मिथ्यात्वं दृष्ट्वा तद्दाननिषेधाय राज्ञः पुर एवमुवाच हे राजन्नस्य ब्राह्मणस्यैतावद्धनं दत्वा कथं कोशक्षयो विधीयते, अयं तु पर-

काव्यहरणात्कविस्तस्करोऽस्ति, राज्ञोक्तं किमसौ पुरातनकवितानि काव्यानि मत्पुरो वक्ति?
मंत्रिणोक्तमेतदुक्तानि काव्यानि सप्तापि मत्पुत्र्यः पठंति, राज्ञोक्तं प्रातरेतदुक्तानि काव्यानि
तव सप्तपुत्रीपार्श्वे पाठनीयानि. ततो मंत्रिणा सर्वं शिक्षयित्वा सप्तापि पुत्र्यः प्रभाते भूपप-
र्षदि यवन्यंतरिताः स्थापिताः, ताश्च क्रमात्प्रथमा पुत्र्येकवारश्रुतसर्वग्रंथधारिका, द्वितीया
तु द्विर्वारश्रुतसर्वग्रंथधारिका, एवं सर्वा अपि यावत्सप्तमी पुत्री सप्तवारश्रुतग्रंथधारि-
का, एतादृशधारणान्विताः संति. अथ तत्र समायातो वररुचिः स्वकृतकाव्यानि नृपतेः पु-
रो वक्तुमारेभे, स्तुत्यंते भूपतिनोक्तमहो भट्टैतानि काव्यानि त्वत्कृतानि परकृतानि वा?
सोऽवग्मत्कृतान्येव. राज्ञोक्तमेतानि काव्यानि मंत्रिणः सप्तपुत्रीणां मुखे समायांति, स वक्ति
यदि ता वक्ष्यंति तदाहमसत्यः, एवं तेनोक्ते यवन्यंतराद्यक्षानाम्नी प्रथमा पुत्री भूपतेः पुरः
समागत्य सर्वाणि तानि काव्यानि पपाठ. एवं क्रमात्सर्वा अपि तानि काव्यानि पेठुः, त-
था प्रज्ञासद्भावात्ततो निष्कासितो राजकुलाद्वररुचिर्भूपेन, सभाजनेन च तिरस्कृतः सर्वत्रा-
पमानं प्राप्तः. अथ तेनेदं कपटं प्रारब्धं. संध्यायां गंगाजलांतर्यंत्रं कृत्वा दीनारपंचशतीं मु-

त्वा प्रभाते तत्र गत्वा गंगां स्तौति, स्तुत्यंते लोकसमक्षं जलयंत्रग्रंथिपादेनाक्रम्य हस्ते गृहीत्वा जनेभ्यो दर्शयति मत्स्तुतिरंजिता गंगा मह्यमेवं दत्ते, राज्ञा तु कार्पण्यान्ममासत्कलंकमारोप्य तिरस्कारः कृत इति च वदति, तद्वार्ताश्रवणाल्लजितो राजा तद्वृत्तांतं शकडालमंत्रिणोऽग्रे कथयामास, मंत्रिणा तत्र चरप्रेषणेन तज्जालयंत्रं ज्ञात्वा दीनारपंचशतग्रंथिमानाय्य स्वकरे धृतः, प्रभाते तत्र भूपतिः सनगरलोकस्तत्रायातः, वररुचिरपि गंगां स्तौति, स्तुत्यंते पादाक्रमेण हस्ताभ्यां च जलमालोकयन्नपि न ग्रंथिमाप्नोति, विखिन्नो वररुचिः, मंत्रिणैवमुक्तं भो वररुचे! तव कव्ये किं ग्रंथिक्षेपो विस्मृतः? किं वा क्षिप्तोऽपि दीनारग्रंथिरन्येनापहृतः? यद्वा नंदराज्ये परद्रव्यापहारी कोऽपि नास्तीत्युक्त्वा स ग्रंथिः सर्वजनानां भूपतेर्वररुचेश्च दर्शितः, चरप्रेषणवृत्तांतश्च प्रकटितः. ततो लोकैर्धिक्कृतः खिन्नो वररुचिर्मुखमाछाद्य मंत्रिदत्तं च ग्रंथिं लात्वा स्वगृहे गतः, ततःपरं मंत्रिछिद्राणि विलोकयते, परं न पश्यति, ततो मंत्रिगृहदास्या सह स स्नेहं चकार, तद्गृहवार्तां च पृछति, सापि तत्स्नेहलुब्धा सर्वं कथयति. अन्यदा तस्याग्रे तयाप्रोक्तमधुना श्रीयकविवाहः समायातोऽस्ति. राजा गृ-

हे आकारयिष्यति, तत्सत्काराय नवीनछत्रचामरसिंहासनशस्त्रादिसामग्री जायमानास्ति. ततो वररुचिश्छिद्रं मनसि कृत्वा नागरिकार्भकान् मोदकदानेनेदं पाठयति—नंदराय नवि जाणइ । जं सगडाल करेसि ॥ नंदराय मारी उ करी । सिरिय उ राज ठवेसि ॥ १ ॥ पठंति ते तथैव मार्गे मार्गे, तद्राजवाटिकां गच्छता राज्ञा श्रुतं, मंत्रिगृहे चराः प्रेषिताः, तैस्तत्र छत्रादिसामग्री जायमाना दृष्टा, राज्ञोऽग्रे कथिता, राजा रुष्टः, प्रभाते प्रणामार्थं गतेन मंत्रिणा क्रोधवह्निज्वालामालाकुलो दृष्टः, ज्ञातं च स्वकीयसकलकुटुंबक्षयकारिराजकोपस्वरूपं, त्वरितमेव पश्चात्स्वगृहे गतः, श्रीयकस्याग्रे राजकोपस्वरूपमुवाच, एवं च सचिवेन तस्य शिक्षा दत्ता हे वत्स! कल्ये यदाहं नृपस्य प्रणामं करोमि तदा त्वया खड्गेन मच्छिरश्छेदः कार्यः, अन्यथा सर्वकुटुंबक्षयमसौ करिष्यति, मुखक्षिप्ततालपुटविषस्य मम शिरश्छेदे तव न कोऽपि दोष इति पैत्रवचस्तेन महता कष्टेन प्रतिपन्नं. प्रभाते राज्ञोऽग्रे तथैव कृतं, राजपर्षदि हाहाकारो जातः, राज्ञोक्तं हे श्रीयक! किमिदं त्वया कृतं? श्रीयकः प्राह हे राजन्! मम पित्रा न प्रयोजनं, किंतु तवाज्ञायां प्रयोजनं, यत्तवानिष्टं तन्ममाप्यनिष्टमेवेत्यसौ मया

हतः, तुष्टो भूपतिः श्रीयकस्य कथयति त्वं मंत्रिमुद्रां गृहाण? तेनोक्तं मम वृद्धभ्राता स्थूलभद्रः कोशागृहे तिष्ठति. ततः स्थूलभद्रो नृपेणाकारितस्तत्रायातः, नृपेणोक्तं मंत्रिमुद्रां गृहाण? तेनोक्तमालोच्य गृहीष्ये. ततोऽशोकवाटिकायां गत्वालोचयति संसारस्यानित्यतां, पितृविनाशकारिण्या मुद्रायाः शाकिन्या इव त्यागार्हतामालोच्य लोचोऽनेन कृतः, गृहीता स्वयं तपस्या, राजसभायां समायातस्यास्य नृपेणोक्तं भोः स्थूलभद्रालोचितं? स्थूलभद्रः प्राह, लोचितं शिरो मयेत्युक्त्वा गतः स्थूलभद्रः क्वचिन्नगरे संभूतिविजयसूरेः शिष्यो जातः.

अथ भ्रातृमोहेन श्रीयकः कोशागृहे आलापनाय गच्छति वदति च हे कोशे! त्वत्पतिर्मद्भ्राता स्थूलभद्रो यतिर्जातः, त्वत्पतिपिता शकडालश्च कथं गतस्तत्कारणमसौ वररुचिर्ज्ञेयः, स च त्वद्भगिन्यामुपकोशायां रक्तोऽस्ति, यथेयममुं मद्यपानरतं करोति तथा विधीयतामित्युक्त्वा श्रीयकः स्वगृहे गतः.

अथ कोशावचनादुपकोशा तं वररुचिं मद्यपानरतं चकार. ज्ञाततद्वृत्तांता च कोशा मद्यपानमसौ कुर्वन्नस्तीति श्रीयकायाचख्यौ. अन्यदा राज्ञा शकडालः स्मारितोऽहो गुणवान् शक्तो

भक्तो महामंत्री ममाभूत्, ईदृशोऽप्यसौ यदित्थं मृतस्तन्मे मनसि दूयते, इति राज्ञोक्तमाकर्ण्य श्रीयकः प्राह यन्मे पितेत्थं मृतस्तत्र मद्यपानकार्ययं वररुचिरेव कारणं, श्लोकशिक्षणं डिम्भानां तेनैव कृतमित्यादि वार्तां चकार. राजा पप्रछ वररुचिः किं मद्यपानं करोति? श्रीयकः प्राह श्वो दर्शयिष्यामीत्युक्त्वा स्वगृहे श्रीयकः गतः. अथ प्रभाते नृपपर्षदुपविष्टानां सर्वेषां नराणां करेषु संकेतितपुरुषेण कमलानि श्रीयको दापितवान्, मदनफलचूर्णमिश्रितं कमलं च वररुचये दापितवान्. तद्गंधमात्राद्वररुचिना पीतं मद्यं तत्रैव वांतं, राज्ञा तस्य धिक्कारपूर्वं नागरिकविप्रवृंदवचसा तप्तत्रपुपानं कारितं, स मृतः. अथ क्रमाद्विहरंतः स्थूलिभद्रादिशिष्यसहिताः श्रीसंभूतिविजयाचार्याः पाटलिपुरे चतुर्मासकस्थित्यै समायाताः. तत्रैकः शिष्यः कृतचतुर्मासकोपवासः सिंहगुहायां गुर्वाज्ञया स्थितः. एकश्च दृष्टिविषसर्पबिले स्थितः, एकः पुनः कूपदारुणि तथैव स्थितः. स्थूलभद्रस्तु नित्याहारकारी कोशावेश्यागृहे गुर्वाज्ञया स्थितः. कोशया तस्य पुरस्तादृशा हावभावा विहिता यथा परमयोगीश्वरोऽपि द्रवति, परमेतस्य मनो न मनागपि क्षुभितं, प्रत्युत सा सुशीला श्राविका विहिता, शेषं चारित्रं तु प्रसिद्धमेव. एवं यथा

स्थूलिजद्रेण स्त्रीपरीषहः सोढस्तथापरैरपि साधुजिः सोढव्यः. अथैकत्र स्थितस्य मुनेः स्त्रीप्रसंगः स्यात्, अतश्चर्या कार्येति हेतोश्चर्यापरीषहः सोढव्यः, अतस्तमाह—

॥ मूलम् ॥—एग एव चरे लाढे । अजिजूय परीसहे ॥ गामे वा नगरे वावि । निगमे रायहाणिए ॥ १८ ॥ असमाणो चरे जिख्खू । नेय कुज्जा परिग्गहं ॥ असंतत्तो गिहडेहिं । अणिकेजपरिव्वए ॥ १९ ॥ व्याख्या—लाढः साधुरेक एव चरेत्, लाढयति यापयति आत्मानमेषणीयाहारेण निर्वाहयतीति लाढः, कुत्र कुत्र विचरेत्? ग्रामे वाथवा नगरेऽपि, अथवा राजधान्यामपि द्रव्येण जावेन चैकाक्येव विचरेत्, तत्र ग्रामः कंटकादिवेष्टितः, नगरं प्राकारादियुक्तं, निगमो वणिग्जनस्थानं, राजधानी राजस्थानमेतेषु विहारं कुर्यात्, परं कीदृशः सन् जिक्षुर्विचरेत्? असमानः सन्, न विद्यते समानो यस्य सोऽसमानः, गृहस्थोऽन्यतीर्थिलोकेज्योऽधिकः सर्वोत्कृष्टः, पुनः कीदृशः? गृहस्थैरसंसक्तो गृहस्थैः सहासं मिलितः, पुनः कीदृशः? अनिकेतः, न विद्यते निकेतो गृहं यस्य सोऽनिकेतोऽनगारः, एतादृशः सन् परिव्रजेत्. सर्वतो विहरेत्. ॥ १९ ॥ अत्र संगमस्थविरदृष्टांतः—

कोल्लागपुरे संगमस्थविरा बहुश्रुता यथास्थितोपसर्गापवादनिपुणा दुर्भिक्षे गणं देशांतरे प्रेष्य स्वयं नगरं नवभागीकृत्य व्यवस्थिताः, नगरदेवता च तेषां गुणै रंजिता. अन्यदा तत्र गुरुवंदनार्थं दत्तनामा शिष्यः समायातः, तद्भक्त्यर्थं गुरवः सपात्रं तं सार्धं लात्वा भिक्षायां गताः, एकस्येभ्यस्य चक्रकप्रकृतेर्गृहे बालो व्यंतरेण गृहीतः सदा रोदति, उपायशतसहस्रकरणेऽपि व्यंतरदोषोपशांतिर्न जाता, गुरवस्तद्गृहे गताः, चप्पुटिकाकरणपूर्वं मा रुद बालेत्युक्तं, आचार्यतपस्तेजसा व्यंतरो नष्टः, तुष्टास्तन्मातृपितृप्रभृतिस्वजनास्तेभ्यो मोदकादिकमाहारं गाढाग्रहेण दत्तवंतः, ते मोदकास्तस्यैव शिष्यस्य गुरुभिर्दत्ता, स्वयं त्वंतप्रांतमाहारं विहृत्य भुक्तवंतः, प्रतिक्रमणावसरे तस्य शिष्यस्य पिंडदोषमालोचयेति गुरुभिरुक्तं, शिष्यश्चिंतयत्यसौ धात्रीपिंडं सदा भुंक्ते, मम त्वेवं कथयतीति चिंतनसमय एव तज्ज्ञापनार्थं देवतयांधकारं विकुर्वितं, स भृशं बिभेति, गुरुं प्रति च वक्ति अहमत्र दूरस्थो बिभेमि, गुरवः प्राहुरेहि मत्समीपे? स वक्त्यस्मिन् घोरांधकारे नाहमागंतुं शक्नोमि, गुरुभिस्थूत्कृतकृतलिप्ता स्वांगुली दर्शिता, तदुद्योतेन सोऽत्रायातः, परं चिंतयति गुरवो दीपकं रक्षयंति. एवं चि-

तयन्नेवासौ देवतया चपेटान्निस्तार्जितः, ज्ञातस्वरूपैर्गुरुन्निस्तस्य नवन्नागीकरणादिकं स्वरूपं प्रकाशितं, यथा संगमस्थविरैर्विहारक्रमापरपर्यायश्चर्यापरीषहोऽध्यासितस्तथा ग्लानत्वावस्थायामपि क्षेत्रनवन्नागीकरणेनापि चर्यापरीषहोऽन्यैरध्यासितव्यः. अथ यथा ग्रामादिष्वप्रतिबद्धेन चर्या सह्यते, तथा शरीरादिष्वप्यप्रतिबद्धेन नैषेधकीपरीषहोऽपि सहनीयः, अतस्तं परीषहमाह—

॥ मूलम् ॥—सुसाणे सुन्नगारे वा। रुक्खमूले व एगउ॥ अकुक्कुउ निसीइज्जा। न य वित्तासए परं ॥२०॥ तळ से अछमाणस्स। उवसग्गान्निधारए॥ संकान्नीउ न गच्छिज्जा। उछित्ता अन्नमासणं ॥२१॥ व्याख्या—साधुरेकक एकाकी सन् श्मशानेऽथवा शून्यागारे शून्यगृहेऽथवा वृक्षमूले निषीदेदुपविशेत्, परं तत्र कीदृशः सन्? अकौकुच्यः, नास्ति कौकुच्यं यस्य सोऽकौकुच्यः, कौकुच्यं हि न्नंडविट्चेष्टोच्यते, तया रहितः सम्यक् साधुमुद्रायुक्त इत्यर्थः. पुनः साधुस्तत्र निषण्णः सन् परमन्यं जीवं न वित्रासयेत्; तत्स्थं जीवं स्थानन्नष्टं न कुर्यादित्यर्थः. ॥२०॥ पुनस्तदेव दृढयति 'तळेति' पुनस्तत्र श्मशानादावास्थीयमानस्य न्निक्षोर्यदोपसर्गा न्नवेयुस्तदा

तानुपसर्गान् साधुरनिधारयेत्. किमेते उपसर्गा वराका मम करिष्यंति? स्वयमेवोपशाम्य यास्यंतीति मनिः कर्तव्येत्यर्थः. परं शंकाभीतः सन् तत आसनादातापनास्थानादुत्थायान्यदामनं न गच्छेत्, आस्यते उपविश्यतेऽस्मिन्नित्यासनं, आतापनास्थानमुच्यते. ॥ २१ ॥ अत्र कुरुदत्तसाधुकथा—

हस्तिनागपुरे इभ्यपुत्रः कुरुदत्तनामा प्रव्रजितो विहरन् क्रमात्साकेतपुरदूरप्रदेशे प्रतिमायां स्थितः, तत्र चरमपौरुष्यां गोधनापहारिणश्चौराः समायाताः, तत्पृष्ठौ त्वरितं गताः, पश्चाद्गोस्वामिनः समायातास्तैश्चौरमार्गस्वरूपे पृष्टे स यतिर्न किंचिद् ब्रूते. ततः संजातकोपैस्तैः शिरसि मृत्पालिं कृत्वांगाराः क्षिप्ताः, स यतिर्मनागप्यक्षतः, तां वेदनामधिसहमानः सिद्धिं गतः. एवं नैषेधिकीपरीषहः सोढव्यः. अथ नैषेधिक्यामातापनादिस्थाने स्वाध्यायादिकं कृत्वा शय्यायामुपाश्रये आगच्छेत्, अतस्तत्परीषहमाह—

॥ मूलम् ॥—उच्चावयाहिं सिज्जाहिं । तवस्सी भिक्खु थामवं ॥ नाइवेलं विहन्नेज्जा । पावदिट्ठी विहन्नई ॥ २३ ॥ पइरिक्कुवस्सयं लध्धुं । कल्लाणं अदुवपावगं ॥ किमेगराइं करि-

स्सई । एवं तत्थ हियासए ॥ २३ ॥ व्याख्या—तपस्वी भिक्षुरुच्चावचाभिः शय्याभिरुपाश्रयैः कृत्वा स्थामवान् भवेत्, धैर्ययुक्तो भवेत्, कीदृशीभिः शय्याभिः? उच्चाश्च अवचाश्च उच्चावचास्ताभिरुच्चावचाभिः, उच्चाः शीतादिरक्षणगुणैर्युक्ताः, अवचास्तद्विपरीताः, तादृशीभिः, शय्यते यासु ताः शय्या उपाश्रया उच्यंते. तत्रोपाश्रयेषु स्थितः साधुरतिवेलां साधुमर्यादां न विहन्यात्, हर्षविषादाभ्यां साधुमर्यादायां तिष्ठेत्, सद्गुणयुक्तां शय्यां लब्ध्वा हर्षभाग्न भवेत्, गुणैर्हीनां शय्यां लब्ध्वा विषादभाग् न स्यात्. पापदृष्टिराचारहीनः, उच्चावचाभिः शय्याभिरतिवेलां साधुमर्यादां विहन्यात्, हर्षविषादयुक्तः स्यात्. ॥ २२ ॥ साधुः प्रतिरिक्तं पशुपंडकस्त्र्यादिरहितमुपाश्रयं लब्ध्वा तत्रैवमध्यासीतैवं विचारयेत्, कीदृशमुपाश्रयं? कल्याणं शुभं सुखदायकं, अथवा पापकं दुःखदायकमेतादृशमुपाश्रयं प्राप्यैवं चिंतयेत्, एवमिति किं? मे ममानयैकरात्रिस्थितियोग्यया स्थित्या किं कार्यं? एकरात्रं ममात्र निवासः करणीयः, किं करिष्यति कल्याणमुपाश्रयं प्राप्येति चिंतयेत्, पुण्यवंतो जना एतादृशेषु स्थानेषु तिष्ठंति, अन्ये पामरास्तृणमयमृत्तिकामयेषु नित्यं वसंति, मम त्वस्यां स्थितौ न ममत्वं विधेयं,

सुखदुःखं वा सहेत, जिनकल्पापेक्षयैकरात्रं, एकरात्रिर्यत्र तदेकरात्रं, उपाश्रयं वसेत्, जिनकल्पो ह्येकरात्रमुपाश्रयं शुभं वाऽशुभं वा सेवेत. स्थविरकल्पो मुनिः कतिपयाहोरात्रिवासी भवेत्, स्थविरकल्पः पंचरात्रं नगरे वसति. ॥ २३ ॥ अत्र यज्ञदत्तपुत्रयोः कथा यथा—

कौशांब्यां यज्ञदत्तद्विजपुत्रौ सोमदत्तसोमदेवनामानौ प्रव्रजितौ गीतार्थौ जातौ. अन्यदा तत्पितरावुज्जयिन्यां गतौ, तावपि साधू विहरंतौ तत्र गतौ. तत्र तदादेशरीत्या स्वगृहे क्रियमाणं विविधोपधिमिश्रं मद्यापरपर्यायं विकटं ( उष्णजलं ) स्वजनैर्दत्तं तौ तत्स्वरूपमजानंतौ जलविशेषबुद्ध्या पीतवंतौ, परिणते च तस्मिन् ज्ञातमद्यस्वरूपौ तौ कृतपश्चात्तापौ नष्टौ राग्याद्वेवानशनं पादपोपगमनामकं नदीतटस्थकाष्ठोपरि प्रपन्नौ. ततोऽकालवृष्ट्या नदीपूरेण प्लावितौ समुद्रांतः प्रविष्टौ, तत्र जलचरोपसर्गं विषह्य दिवं गतौ. इमौ हि नीरपूरागमेऽपि शयनतो न पृथग्भूतौ. एवं शय्यापरीषहः सोढव्यः. अथ शय्यास्थितस्य तत्रोपद्रवे जाते सति रागद्वेषरहितस्य साधोर्यदा कश्चिच्छय्यातरो वा शय्यातरादन्यो वा वचनैराक्रोशेदिति हेतोराक्रोशपरीषहोऽपि सोढव्यः, अतस्तत्परीषहमाह—

॥ मूलम् ॥—अक्कोसिज्ज परो भिक्खुं । न तेसिं पडिसंजले ॥ सरिसो होइ बालाणं । तम्हा भिक्खू न संजले ॥ २४ ॥ सुच्चाणं परुसा भासा । दारुणा गामकंटया ॥ तुसिणीओ उवेहिज्जा । न ताओ मणसी करे ॥ २५ ॥ व्याख्या—परोऽन्यः कश्चिद्यदि भिक्षुं साधुमाक्रोशेत दुर्वचनैस्तर्जयेत्. तदा तस्मै न प्रतिसंज्वलेत्, तस्योपरि क्रोधं न कुर्यादित्यर्थः, यदि तस्योपरि साधुरपि क्रोधं कुर्यात्तदा सोऽपि बालानां मूर्खाणां सदृशो भवेत्, तस्माद्भिक्षुर्न संज्वलेद्गालीं श्रुत्वा प्रतिगालीं न दद्यात्, तदा किं कुर्यादित्याह—' सुच्चा ' साधुस्तूष्णीको मौनी सन्नुपेक्षेत, औदासीन्येन तिष्ठेत्, रागद्वेषरहितो भवेत, ता भाषा मनसि न कुर्यात्, किं कृत्वा? परुषाः कठोरा भाषाः श्रुत्वा, कीदृशीः भाषाः? दारुणाः, दारयंति संयमधैर्यं विदारयंतीति दारुणाः, पुनः कीदृशीः? ग्रामकंटकाः, ग्राम इंद्रियगणस्तस्य कंटका इव कंटका ग्रामकंटका दुःखोत्पादकाः, यदुक्तं—चांडालः किमयं द्विजातिरथवा शूद्रोऽथवा तापसः । किं वा तत्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि वा ॥ इत्यस्वल्पविकल्पजल्पमुखरैः संभाष्यमाणो जनै–र्नो रुष्टो न हि चैव हृष्टहृदयो योगीश्वरो गच्छति ॥१॥ पुनर्गालीं श्रुत्वेति

चिंतयेत्—ददतु ददतु गालीर्गालिमंतो भवंतो । वयमपि तदभावाद्गालिदानेऽप्यशक्ताः ॥ जगति विदितमेतद्दीयते विद्यमानं । ददतु शशविषाणं ये महात्यागिनोऽपि ॥ १ ॥ इति विचार्य शमत्वेन तिष्ठेत्. अत्रार्जुनमालाकारर्षिकथा यथा—

अथ राजगृहे नगरेऽर्जुननामा मालिकोऽस्ति, तस्य प्रिया स्कंदश्रीनाम्नी वर्तते, स स्ववाटिकामार्गस्थं पुराद्बहिर्मुद्गरपाणियक्षं निरंतरं स्वगोत्रदेवत्वेनार्चति. अन्यदा वाटिकागन्त्र्यार्जुनमालिकस्य समीपे सा भोज्यं गृहीत्वा वाटिकायां यांती यक्षभवनस्थैः षट्पुरुषैर्दृष्टा, भोगार्थं यक्षभवनांतः प्रवेशिता, तदानीमेव तत्र यक्षपूजार्थं मालिकः समायातः, तं बध्ध्वा षडपि पुरुषास्तस्या भोगे प्रवृत्ताः, स पश्यत्येवं च चिंतयति मयैष यक्षो मुधैवार्चितः, यदेतस्य पुर इत्थं पराभूयते. ततो यक्षस्तच्छरीरमनुप्रविश्य तान् षडपि पुरुषान् स्त्रीसप्तमान् मारयतिस्म. एवं प्रत्यहं मारयति. ततो लोकोऽपि तस्मिन् मार्गे राजगृहपुरात्तावन्न निर्गच्छति यावत्सप्त मारिता न स्युः, अन्यदा श्रीवीरस्तत्र समवसृतः, न कोऽपि तद्भयेन वंदनार्थं गच्छति, सुदर्शनश्रेष्ठी तु यद्भवति तद्भवतु, मया त्ववश्यं श्रीवीरस्तत्र गत्वा वंदनीय एवेति विचिंत्य

ध्ययनम्
॥ ७५ ॥

तन्मार्गे चलितः, तं दृष्ट्वा मालिकशरीरप्रविष्टो मुद्गरपाणिर्यक्षो धावितः. ततः सुदर्शनश्रेष्ठिनार्हत्सिद्धसाधुश्रुतधर्मशरणं प्रपन्नं, सागारिकमनशनमपि गृहीतं, कायोत्सर्गेण स्थितं, ततो धर्मप्रभावात्स यक्षस्तमाक्रमितुं न शक्नोति, पश्चाद्यक्षो मालिकशरीरं मुक्त्वा गतः, स्वस्थीभूतो मालिकः श्रेष्ठिमुखाद्वीरागमनं श्रुत्वा श्रेष्ठिना सह वंदनार्थं गतः, वीरवचसा प्रतिबुद्धोऽसौ दीक्षां गृहीतवान्, राजगृहनगरमध्य एव गृहे गृहे भिक्षार्थं भ्रमति, लोकास्तु स्वजनमारकोऽयमित्याक्रोशान् ददति, स मनोवचनकायशुद्ध्या तानाक्रोशान् विषह्योत्पन्नकेवलज्ञानः शिवमगात्. एवमन्यैरप्याक्रोशपरीषहः सोढव्यः. अथ कश्चिदाक्रोशको दुर्वचनवादी साधोर्वधमपि कुर्यात्, तदा तमपि सहेत, अतस्तत्परीषहमाह—

॥ मूलम् ॥—हओ न संजले भिक्खू । मणंपि न पओसए ॥ तितिक्खं परमं नच्चा । भिक्खू धम्मं विचिंतए ॥ २६ ॥ समणं संजयं दंतं । हणिज्जा कोइ कत्थई ॥ नत्थि जीवस्स नासुत्ति । एवं पेहिज्ज संजए ॥ २७ ॥ व्याख्या—भिक्षुः साधुर्हतो यष्ट्यादिभिस्ताडितो न संज्ज्वलेन्न क्रोधाध्मातः स्यात्, मनोऽपि न प्रद्वेषयेत्, चित्तं सद्वेषं न कुर्यादित्यर्थः. किं कु-

त्वा? तितिक्षां क्षमां परमामुत्कृष्टां ज्ञात्वा दशविधसाधुधर्मे क्षांतिमुत्कृष्टां विचार्य भिक्षुर्धर्मं विचिंतयेत्. मम धर्म एव रक्षणीय इति विचिंतयेदित्यर्थः. ॥ २६ ॥ कश्चिद् दुष्टः कुत्रचिदनार्यदेशे श्रमणं साधुं हन्यात्. प्राणापहारमपि कुर्यात्तदा संयतः साधुरेवं संप्रेक्षेत विचारयेत्, एवमिति किं? जीवस्य नाशो नास्ति, शरीरस्य नाशो विद्यते, न च शरीरनाशे जीवनाशः, कीदृशं साधुं? संयतं जितेंद्रियं, पुनः कीदृशं? दांतं क्रोधादिरहितं, साधुना मनस्येवं चिंतनीयं कदाचिदहमस्मिन् शरीरनाशावसरे क्रोधं करिष्यामि तदा मम धर्मरूपजीवितव्यनाशो भविष्यति, न चास्मिन्ननित्यदेहे नष्टे ममात्मनो धर्मस्य च नाशो भावीति. यदुक्तं—दोषो मेऽस्तीति युक्तं शपति शपति वा तं विनाज्ञः परोक्षे। दृष्ट्याः साक्षान्न साक्षादिति शपति न मां ताडयेत्ताडयेद्वा ॥ नासून् मुष्णाति तान् वा हरति सुगतिदं नैष धर्मं ममाहो । इत्थं यः कोऽपि हेतौ सति विशदयति स्याद्धि तस्येष्टसिद्धिः ॥ १ ॥ अत्र स्कंदकशिष्याणां कथा यथा—

श्रावस्त्यां जितशत्रुर्नृपः, धारिणी प्रिया, तयोः पुत्रः स्कंदकः, पुरंदरयशा पुत्री कुंभका-

रकटके पुरे दंडकिनृपस्य दत्ता, तस्य पुरोहितः पालको मिथ्यादृक्. अन्यदा श्रावस्त्यां मुनिसुव्रतस्वामी समवसृतः, तस्य देशनां श्रुत्वा स्कंदकः श्रावको जातः. एकदा पालकपुरोहितो दूतत्वेन श्रावस्त्यां प्राप्तः, राजसभायां जैनसाधूनामवर्णवादं वदन् स्कंदकेन निरुत्तरीकृत्य निर्घाटितः स स्कंदककुमारस्य छिद्राणि पश्यति.

अन्यदा स्कंदककुमारः श्रीमुनिसुव्रतस्वामिपार्श्वे पंचशतकुमारैः सह प्रव्रजितो गीतार्थो जातः, स्वामिना ते कुमारशिष्यास्तस्यैव दत्ता. अन्यदा स स्वामिनं पृच्छति भगवन्! भगिनीं वंदापनार्थं गच्छामि? स्वामिना भणितं तत्र मरणांतिकोपसर्गोऽस्ति, स्कंदकेनोक्तं भगवन्! वयमाराधका विराधका वा? स्वामिना भणितं त्वां मुक्त्वा सर्वेऽप्याराधकाः, स्वामिनैवमुक्तेऽपि भवितव्यतावशेन पंचशतशिष्यपरिवृतः स कुंभकारकटकपुरे गतः, पालकेन तथागच्छंतं श्रुत्वा पूर्ववैरं स्मरता साधुस्थितियोग्योद्याने षट्त्रिंशदायुधानि भूमौ स्थापितानि, स्कंदकाचार्यस्तु तत्रैव समवसृतः ततः पालकेन नृपस्याग्रे कथितं महाराजायं स्कंदकः पंचशतसाधवोऽपि च सहस्रयोधिनः परीषहभग्नास्तव राज्यं गृहीतुकामाः समायातास्त्वां हनिष्यंति, राज्यं च गृ

हीष्यंति, यदि न प्रत्ययस्तदोद्यानं विलोकय? एभिरायुधानि भूमौ गोपितानि संति. नृपेणोद्यानं विलोकितं, आयुधानि दृष्टानि क्रोधात्तेन ते साधवस्तस्यैव दत्ताः, तेन सर्वेऽपि ते यंत्रेण पीलिताः, वधपरीषहस्य सम्यगधिसहनादुत्पन्नकेवलज्ञानास्ते सिद्धाः, स्कंदकाचार्यस्तु सर्वेषां शिष्याणां तथाविधमरणं दृष्ट्वोत्पन्नक्रोधः सर्वस्याप्यस्य दाहकोऽहं स्यामिति कृतनिदानोऽग्निकुमारेषूत्पन्नः. अथाचार्यस्य रजोहरणं रुधिरलिप्तं गृध्रैः पुरुषहस्तं ज्ञात्वा चंचुपुटेनोत्पाट्य पुरंदरयशापुरः पातितं, सापि महतीमधृतिं चकार, साधवो गवेषिताः, किंतु न दृष्टाः, प्रत्यभिज्ञानानि कंबलाद्युपकरणानि, ज्ञातं च तया साधवो मारिता इति. ततो धिक्कृतस्तया नृपतिः, अहं तव मुखं न पश्यामि, प्रव्रजिष्याम्येवेति वदंतीं तां स्कंदकभगिनीं देवाः श्रीमुनिसुव्रतस्वामिसमीपे मुक्तवंतः. स्वामिना सा दीक्षिता. ततोऽग्निकुमारदेवेन तेन सनगरो देशो दग्धः. ततो दंडकारण्यं जातं, अद्यापि तथैव तज्जनैर्भण्यते. एभिः साधुभिर्वधपरीषहः सोढस्तथापरैरपि सोढव्यः, न तु स्कंदकाचार्यवत्कर्तव्यं. अथ परैरभिहतस्यौषधादिकयाच्ञा स्यात्तस्माद्याच्ञापरीषहोऽपि सोढव्यः, अतस्तत्परीषहमाह—

॥ मूलम् ॥—दुक्करं खलु जो निच्चं । अणगारस्स भिक्खुणो ॥ सव्वं से जाइयं होइ । नत्थि किंचि अजाइयं ॥ २८ ॥ गोयरग्गपविट्ठस्स । पाणी नो सुप्पसारए ॥ सेओ अगारवासु-त्ति । इइ भिक्खु न चिंतए ॥ २९ ॥ व्याख्या—खल्विति निश्चयेन भोः स्वामिन्ननगारस्य भिक्षोर्नित्यं कष्टं, अपरस्य च कदाचित्कष्टमुत्पद्यते, भिक्षोस्तु नित्यमेव कष्टं, यदुक्तं—गात्रभंगः स्वरे दैन्यं । प्रस्वेदो वेपथुस्तथा ॥ मरणे यानि चिह्नानि । तानि चिह्नानि याचने ॥ १ ॥ इत्युक्तत्वाद्भिक्षोर्नित्यं महत्कष्टं, तत्किं कष्टमित्याह—से इति तस्य भिक्षोः सर्वं वस्तु याचितं सद्भवति, अयाचितं गृहस्थादमार्गितं किंचिदपि नास्ति, तस्माद्भिक्षष्टं भिक्षुजीवितमिति. पुनस्तदेव दृढयति—' गोयरेति ' गोचराग्रप्रविष्टस्य भिक्षार्थं प्रविष्टस्य साधोः पाणिर्हस्तः पिंडग्रहणार्थं न सुप्रसार्यः, गौरिव चरति यस्मिन् स गोचरः, गोचरेऽग्रं प्रधानपिंडग्रहणं गोचराग्रं, तन्निमित्तं प्रविष्टस्य गृहस्थगृहे प्रस्थितस्य भिक्षायां करप्रसारणं दुःकरं भिक्षामार्गणं दुष्करं, को नित्यं सम्यग्वपुष्मान्नरः भिक्षां मार्गयति? तस्मादागारवासो गृहवासः श्रेयानिति भिक्षुर्मनसि न चिंतयेत्, यथारण्ये याञ्चापरीषहो दुस्सहो न तथा श्रीमद्गृ-

द्दाकीर्णे पुरे, अतः स्त्रीणां निजरूपकृतमनर्थं दृष्ट्वा वलदेवर्षिः पुरप्रवेशं निषेध्य यत एव याश्चापरीषहं सोढवान्. तत्कथा यथा—

द्वारिकानगर्यामेकदा श्रीनेमिः समवसृतः, कृष्णेन द्वारिकाक्षयस्वमरणकारणं पृष्टं, नेमिना मद्यपानविकलीभूतत्वत्कुमारोपसर्गसमुद्भूतक्रोधाद् द्वीपायनाद् द्वारिकाक्षयस्त्वन्मरणं च त्वद्भ्रातृव्यजंगकुमारादेवेति प्रोक्तं, वासुदेवेन द्वारिकायां निषिद्धमपि मद्यपानं भवितव्यतावशेन कृष्णपुत्रैः कृतं, विकलीभूतैश्च तैः क्रीडार्थं नगरवहिर्गतैस्तत्रातापनां कुर्वन् द्वीपायनर्षिर्दृष्टः, अरे! त्वं द्वारिकाक्षयकारी भविष्यसीत्युक्त्वा यष्टिमुष्ट्यादिभिरुपसर्गितः कोपाद् द्वारिकाक्षयनिदानं चकार, स तन्मारणेनैव मृतोऽग्निकुमारेषूत्पन्नः, तेन च द्वारिकाक्षयः कृतः, कृष्णवलदेवावेव निर्गतौ, अटव्यां तृषाक्रांतेन वासुदेवेनोक्तं नाहमतःपरं चलितुं शक्नोमि, पानीयमानीय मे देहि? ततो वलदेवेन पानीयार्थं दूरे गते पादोपरि पादं कृत्वा कृष्णः सुप्तः.

अथ प्रागेव श्रीनेमिनाथवचनश्रवणसंजातभयेन जराकुमारेण वनवासं प्रपन्नेन तदानीमित-

स्ततो भ्रमता तत्रैवायातेन मृगभ्रांत्या मुक्तबाणेन विद्धपादः कृष्णः पंचत्वमाप. तत्रापि तत्रा-यातेन बलदेवेन न मे भ्राता मृतः, किंतु मद्विलंबागमनोद्भरोषादेष मौनमाश्रितोऽस्तीति बुद्ध्या तच्छवं स्वस्कंधे समुत्पाटितं, पूर्वसंगतिकदेवेन प्रतिबोधे कृते बलदेवेन दीक्षा गृहीता. एकदा कस्मिंश्चिद् ग्रामे भिक्षार्थमायातस्य बलदेवस्य रूपं दृष्ट्वा व्यामोहगतया कूपकंठस्थया कयाचिन्नार्या घटभ्रांत्या स्वबालकंठ एव पाशितस्ततो बलदेवमुनिना प्रतिबोधिता सा बालगलात्पाशं दूरीचकार. ततो भिक्षार्थं ग्रामप्रवेशनियमो गृहीतः, वन एव तृणकाष्टहारकेभ्यो भिक्षां गृह्णाति, यदि तेभ्यो न प्राप्नोति तदा तप एव करोतीति. यथा बलदेवेन तुच्छलोकेभ्योऽपि भिक्षा मार्गिता, ततो याञ्चापरीषहः सोढस्तथापरैरपि सोढव्यः. एवं याञ्चापरीषहे बलदेवकथा. ॥ २९ ॥ अथ याञ्चायां न लभेत तदाऽलाभपरीषहमाह—

॥ मूलम् ॥—परेसु घासमेसिज्जा । भोयणे परिनिट्ठिए ॥ लद्धेवि अलद्धे वा । नाणुतप्पिज्ज पंडिए ॥ ३० ॥ अज्जेवाहं न लब्भामि । अवि लाभो सुए सिया ॥ जो एवं पडिसंचिक्खे । अलाभो तं न तज्जए ॥ ३१ ॥ व्याख्या—साधुः परेषु गृहस्थेषु ग्रासं कवलमेषयेत्, तत्र

च भोजने ओदनादौ परिनिष्ठिते संपूर्णे सिद्धे वा लब्धे प्राप्ते सति वाथवाऽलब्धेऽल्पे लब्धेऽनिष्टे लब्धे वा पंक्तितो मुनिर्नानुतृप्येत्, लब्धिमानहं यतो मया संपूर्णं मिष्टं वाहारं लब्धं, अनिष्टेऽल्पे लब्धे तथा न दूयेतेत्यनुक्तोऽप्यर्थो गृह्यते. ॥ ३० ॥ तदा किं कुर्यादित्याह—अद्यैवाहमाहारं न लभामि, अपि संभावनायां संभावयामि. अद्यैवाहारं न प्राप्तं, परं ' सुए ' इति श्वः प्रभाते आगामिदिने लाभः स्यादाहारस्य प्राप्तिर्भवेत्. उपलक्षणत्वादन्येद्युरपरेद्युरन्यतरेद्युर्वा मा वाभूत्, यः साधुरेवं प्रतिसमीक्षते इति चिंतयति, तं साधुमलाभपरीषहो न तर्जयेत्, नाभिभवेत् . ॥ ३१ ॥ अत्र ढंढणकुमारकथा—

कस्मिंश्चिद् ग्रामे कोऽपि कृशशरीरी कुटुंबी वसति, अन्येऽपि बहवस्तत्र कुटुंबिनो वसंति, वारकेण ते राजवेष्टिं कुर्वंति, राजसत्कपंचशतवाहनानि वाहयंति. एकदा तस्य कृशशरीरिणः पंचशतहलवाहनवारकः समायातः, तेन च वाहिता वृषभाः, भक्तपानवेलायामप्येकोऽधिकश्चापो दापितस्तदांतरायं कर्म बद्धं. ततो मृत्वासौ बहुकालमितस्ततः संसारे परिभ्रम्य कस्मिंश्चिद्भवे कृतसुकृतवशेन द्वारिकायां कृष्णवासुदेवस्य पुत्रत्वेन समुत्पन्नः, ढंढ-

णेति तस्य नाम प्रतिष्टितं. स ढंढणकुमारः श्रीनेमिपार्श्वेऽन्यदा प्रव्रजितः, लाभांतरायवशा-न्महत्यामपि द्वारिकायां हिंडमानो न किंचिदन्नादि लभते, यदि कदाचिल्लभते तदा सर्वथा-सारमेव. ततस्तेन स्वामी पृष्टः, स्वामिना तु सकलः पूर्वभववृत्तांतस्तस्य कथितः, तेन चायमभिग्र-हो गृहीतः-परलाभो मया न ग्राह्यः, अन्यदा वासुदेवेन स्वामिनःपृष्टं भगवन्नेतावत्सु श्रमणसहस्रे-षु को दुष्करकारकः? स्वामिना ढंढणर्षि रेव दुष्करकारक इत्युक्तं, कृष्णेनोक्तं स इदानीं क्वास्ति? स्वामी प्राह त्वं नगरं प्रविशंस्तं द्रक्ष्यसि, ततः कृष्णः श्रीनेमिजिनं प्रणम्योछितः, पुरद्वारे प्रविश-न् साधुं दृष्टवान्, हस्तिस्कंधादुत्तीर्य कृष्णस्तं ववंदे, तेन वंद्यमानोऽयं साधुरेकेनेभ्येन दृष्टः, चिं-तितं च तेनाहो एष महात्मा कृष्णेन वंद्यते. एवं चिंतयत तत्र तस्य गृहे ढंढणर्षिः प्रविष्ट-स्तेन मोदकैः प्रतिलाभितः. ततः स स्वामिसमीपे गत्वा पृछति मम लाभांतरायः क्षीणः किं? स्वामिनोक्तमेष वासुदेवलाभः, मम परलाभो न कल्पते इत्युक्त्वा नगराद्बहिर्गत्वोचितस्थं-डिले मोदकान् विधिना परिष्टापयन् शुभध्यानारोहेण केवली जातः. एवमन्यैरपि परीषहः सोढव्यः. अलाभादनिष्टाहारलाभादंत्याहारप्रांत्याहारभोजनाच्छरीरे रोगा उत्पद्यंते, अतो रो-

गपरीषहोऽपि सोढव्यः. ततो रोगपरीषहमाह—

॥ मूलम् ॥—नच्चा उप्पइयं दुक्खं । वेयणाए दुहट्टिए ॥ अदीणो थावए पन्नं । पुट्ठो तत्थ हियासए ॥ ३२ ॥ नेगच्छं नाभिनंदिज्जा । संचिक्खत्त गवेसए ॥ एयं खु तस्स सामन्नं। जं न कुज्जा न कारए ॥ ३३ ॥ व्याख्या—वेदनया दुःखार्तितो मुनिरदीनः सन् प्रज्ञां स्थापयेत्, बुद्धिं स्थिरां कुर्यात्, किं कृत्वा? दुःखमुत्पतितमुद्भूतं ज्ञात्वा, तत्र वेदनायां दुःखे वा रोगपरीषहमध्यासेत सहेत, कीदृशो मुनिः? ' पुट्ठो ' स्पृष्टो रोगैर्व्याप्तः, दुःखयतीति दुःखं रोगस्तेनार्तः पीडितः क्रियते इति दुःखार्तितः, तादृशोऽपि प्रज्ञां स्थापयेत्, रोगार्तस्य हि प्रज्ञा चंचला स्यात्, साधुस्तु रोगसद्भावेऽपि प्रज्ञां स्थिरामेव विदधीतेत्यर्थः. तदा रोगार्तः किं कुर्यादित्याह—' नेगच्छमिति ' साधुः रोगार्तश्चिकित्सां रोगप्रतीकारं रोगं नाभिनंदेत्, नानुमन्येत, तदा चिकित्सायाः कारणं करणं दूरत एव त्यक्तं. यदा मनस्यपि चिकित्साचिंतनं साधुर्न कुर्यात्, कीदृशः साधुः? आत्मगवेषकः, आत्मानं संयमजीवं गवेषयतीत्यात्मगवेषकः, एतादृशः सन् ' संचिक्खे ' समाधिना तिष्ठेत्, पीडया पीडितो न क्रंदेदित्यर्थः,

खु यस्मात्कारणाच्छ्रामण्यं साधुत्वं, 'एयं' एतदेव, 'जं इति' यस्मात्कारणाद्रोगे समुत्पन्ने स्वयं चिकित्सां न कुर्यात्, अन्येनापि न कारयेत्, जिनकल्पिकापेक्षयायमाचारः,' स्थविरकल्पिकाः पुनः कारयंत्यपीति वृद्धसंप्रदायः. अत्र कालवैशिककथा यथा—

मथुरायां जितशत्रुनृपोऽतिसुरूपां कालाख्यां वेश्यामंतःपुरेऽक्षिपत्, तस्याः पुत्रः कालवैश्यकस्तस्य भगिनी मुद्गशैलनगरस्वामिना परिणीता. अन्यदा स कुमारः शृगालशब्दं श्रुत्वा स्वभृत्यानपृच्छत्कस्यायं स्वरः? तैरूचे फेरुकस्वरोऽयं, कुमारेणोक्तं फेरुकोऽत्रानीयतां? तैरानीतः शृगालः कुमारेण हन्यमानः खीखीति कृत्वा मृतः, अकामनिर्जरया व्यंतरो जातः. अन्यदा कुमारः स्थविरांतिके प्रव्रजितः, गीतार्थो जातः, एकाकिविहारप्रतिमां प्रतिपन्नः, तस्यार्शो रोगो बभूव, नं चिकित्सां कारयति, नाप्यौषधं करोति तथाविधप्रत्याख्यानात्. अन्यदा विहरन्नसौ मुद्गशैलपुरे गतः, तत्र तन्नगरस्वामिपरिणीतया तद्भगिन्यार्शोघ्नौषधमिश्रा भिक्षा दत्ता. तेन चाजानतार्शोघ्नौषधिमिश्र आहारो गृहीतः, औषधप्रयोगे च ज्ञाते भग्नं मे प्रत्याख्यानमित्यधिकरणदोषशंकया भक्तं प्रत्याख्यातं पुराद्बहिः, तत्र च तेन शृगालजीवे-

न व्यंतरीभूतेनोपयोगदानेनासावुपलक्षितः, समुत्पन्नवैरेण च नवप्रसूतशिवारूपेण खीखीकुर्वता खाद्यमानः शिवोपसर्गमर्शोरोगं च सोढवान्. एवमन्यैरपि रोगः सोढव्यः. अथ रोगादियुक्तस्य शयनादौ दुस्सहतृणस्पर्शः स्यात्, अतस्तत्परीषहमाह—

॥ मूलम् ॥—अचेलगस्स लूहस्स । संजयस्स तवस्सिणो ॥ तणेसु सुयमाणस्स । हुज्जा गायविराहणा ॥ ३४ ॥ आयवस्स निवाएणं । अउला हवइ वेयणा ॥ एवं नच्चा न सेवंति । तंतु जंतणतज्जिया ॥ ३५ ॥ व्याख्या—तपस्विनः संयतस्य तृणेषु शयमानस्य, तृणैर्गात्रविराधना भवेत्, कीदृशस्य संयतस्य? अचेलकस्य वस्त्ररहितस्य, पुनः कीदृशस्य? रूक्षस्य तैलाभ्यंगादिरहितस्य, यदा शरीरे तृणैः कृत्वा पीडा स्यात्तदा किं कुर्यादित्याह—'आयवस्सेति' तृणतर्जितास्तृणस्पर्शपीडिताः साधवः, तंतुजं वस्त्रं सूत्रवस्त्रं कंबलादिवस्त्रं वा न सेवंति नाचरंति, किं कृत्वा? एवं ज्ञात्वा, एवमिति किं? आतपस्य निपातेन धर्मस्य संयोगेनातुला वेदना भवति, तापशीतवर्षावातादिपीडास्माभिः सोढुं न शक्यते. अथवा तप्यते पीड्यते शरीरमनेनेत्यातपः, तृणपाषाणादिरप्युच्यते, तस्य संगेनास्मच्छरीरे महती वेदना भ-

वति, यदि वस्त्रादीनां प्रस्तरणं स्यात्तदास्मच्छरीरे तृणादिभिः पीमा न स्यादिति विचिंत्य वस्त्रकंबलादिकं न परिगृह्णंति, इति जिनकल्पापेक्षयेदमुक्तं वर्तते. अत्र भद्रर्षिकथा यथा—

श्रावस्त्यां जितशत्रुपुत्रो भद्रः प्रव्रजितः, विरुद्धराज्ये विहरन् हेरकोऽयमिति भ्रांत्या नृपनरैर्धृतः, पृष्टोऽप्यब्रुवन् क्रुद्धैस्तैः क्षुरेण तक्षितो दर्भैश्च वेष्टयित्वा मुक्तः. ततः स तद्वेदनामधिसेहे. एवं तृणस्पर्शपरीषहः साधुभिरप्यधिसह्यः. अथ तृणादिस्पर्शाच्छरीरे प्रस्वेदाद्रजःस्पर्शान्मलोपचयः स्यात्. तदा मलपरीषहोऽपि सोढव्यः, अतस्तमाह—

॥ मूलम् ॥—किलिन्नगायमेहावी । पंकेण य रयेण वा ॥ घिंसु वा परियावेणं । सायं नो परिदेवए ॥ ३६ ॥ वेइज्ज निज्जरापेही । आरियं धम्मणुत्तरं ॥ जाव सरीरभेउत्ति । जल्लं काएण धारए ॥ ३७ ॥ व्याख्या—मेधावी साधुर्घिंसु ग्रीष्मकाले वा शब्दाच्छरद्यपि परितापेन गाढोष्मणा पंकेन प्रस्वेदादार्द्रीभूतमलेन, अथवा रजसाऽमलेन परिशुष्य काठिन्यं प्राप्तेन धूल्या वा क्लिन्नगात्रः सन् बाधितशरीरः सन् सातं सुखं न परिदेवेत, मलापहारात्सुखं न वांछेत्, सातार्थं विलापं न कुर्यादित्यर्थः. ॥ ३६ ॥ तदा किं कुर्यादित्याह—

'वेयज्जेति' निर्जरापेक्षी कर्मक्षयमीप्सुः साधुस्तावत्कायेन जल्लं धारयेत्, देहेन मलं धारयेत्. पुनर्वेऽज्ञ मलपरीषहं वेदयेत सहेत, तावत्कथं? यावच्छरीरस्य भेदः शरीरस्य पातः स्यात्, साधुः कीदृशः सन्? आर्यं श्रुतचारित्ररूपं धर्मं प्रपन्नः सन्नित्यध्याहारः, कीदृशं धर्मं? अनुत्तरं सर्वोत्कृष्टं. ॥ ३० ॥ श्राद्धसुनंदहष्टे भेपजार्थी साधुस्तत्कथा यथा—

चंपायां सुनंदो वणिग्दानवान्. अन्यदा मलाविलसाधुं दृष्ट्वा मलधारिणं शेषं सर्वसाधूनां भव्यमिति जुगुप्सां कृतवान्, मृत्वासौ कौशांब्यामिभ्यपुत्रोऽभूत्, स प्रस्तावे दीक्षां गृहीतवान्. तदानीं तत्कर्मोदयेन देहे दुर्गंधोऽभूत्, स यतिर्यत्र यत्र प्रयाति तत्र तत्रोड्डाहो भवति. ततो गुरुभिस्तस्य भ्रमणं निषिद्धं, तेन रात्रौ जिनदेवताराधनार्थं कायोत्सर्गः कृतः, तुष्टदेवतया सुगंधीकृतः, तथाप्युड्डाहभवने पुनरप्याराधितया देवतया सर्वसमानगंधः कृतः. अनेन हि साधुना जल्लपरीषहो देवताराधनेन न सोढः. एवमन्यैः साधुभिर्न कार्यं. अथ समलः साधुः शुचीन् सत्क्रियमाणान् दृष्ट्वा सत्कारादि न स्पृहयेत्, अतस्तत्परीषहमाह—

॥ मूलम् ॥—अभिवायणमब्भुठाणं । सामी कुज्जा निमंतणं ॥ जे ताइं पडिसेवंति । न

ते संपेहए मुणी ॥ ३८ ॥ अणुक्कसाई अप्पिछे । अन्नाएसी अलोलुए ॥ रसेसु नाणगिज्झि-
ज्जा । नाणुतप्पिज्ज पन्नवं ॥ ३ए ॥ व्याख्या—मुनिस्ते इति तेभ्यो न स्पृहयेत्, यत एते ध-
न्या इति न चिंतयेदित्यर्थः, तेभ्यः केभ्यः? ये तानि प्रतिसेवंते, तानि कानि? स्वामी राजा-
दिः, अभिवादनं नमस्कारमसभ्यं कुर्यात्, अथवा स्वाम्यभ्युत्थानमसभ्यं कुर्यादशनादिस-
न्मानं कुर्यात्, पुनरस्माकं निमंत्रणं कुर्यात्, एतावता राज्ञा निमंत्रितानाहारादिभ्यः प्रार्थि-
तान् द्रव्यलिंगिनः साधून् न कीर्तयेदित्यर्थः, पुनः साधुः कीदृशो भवेत्तदाह—अनुत्कशा-
यी सत्कारादिना हर्षरहितस्तादृशो भवेत्, नोत्कोऽनुत्कः शेते इत्येवंशीलोऽनुत्कशायीति श-
ब्दार्थः, यत्र कश्चिदासनदानाभ्युत्थाननिमंत्रणादिकं करोति तत्र गमनायोत्को न भवति, उ-
त्कंठितो न भवति. अथवाणुकषायी, सत्कारादिकं यो न करोति तस्मै क्रोधमकुर्वाणोऽक्रो-
धः, पुनः कीदृशः? अल्पेछो धर्मोपकरणमात्रधारी, अनेन निर्लोभत्वमुक्तं. पुनः कीदृशः?
'अन्नाएसी' अज्ञातैषी जातिकुलसद्रव्यनिर्द्रव्यादिनाऽपरीक्षितोऽज्ञातस्तादृशं गृहस्थमाहारा-
दर्थमेषयतीत्येवंशीलमज्ञातैषी, पुनः कीदृशो भवेत्? अलोलुपः सरसाहारे लांपट्यरहितः, पु-

नः साधुरन्यान् सरसाहारजक्षणासक्तान् वीक्ष्य रसेषु नानुगृध्येत्, सरसाहारभिक्षां नाभिकांक्षेदित्यर्थः. पुनः ' पन्नवं इति ' प्रज्ञावान् साधुर्नानुतप्येत, अन्येषां सत्कारं दृष्ट्वा हा मम कोऽपि सत्कारं न करोति किमर्थमहं प्रव्रजित इति चिंतापरो न जवेत्. ॥ ३ए ॥ अत्र श्राद्धश्रमणयोः कथा यथा—

मथुरायामिंद्रदत्तः पुरोहितोऽस्ति, स जिनशासनप्रत्यनीकः स्वगवाक्षस्थः सन्नधो निर्गतो जैनयतेर्मस्तकोपरि निजचरणं विततं करोति. एवं निरंतरं कुर्वाणं तं दृष्ट्वा साधुर्न कोऽपि कुप्यति. परमेकः श्रावकः कुपितस्तत्पादछेदप्रतिज्ञामकरोत्, अन्यानि तच्छिद्राण्यलजमानेन तेन श्रावकेण तत्स्वरूपं गुरोः पुरः कथितं, गुरुणोक्तं सह्यते सत्कारपुरस्कारपरीषहः साधुनेति, तेन स्वप्रतिज्ञा कथिता, गुरुभिरुक्तमस्य गृहे किं जायमानमस्ति? तेनोक्तं नवीनप्रासादे राजा निमंत्र्यमाणोऽस्ति पुरोहितेन, गुरुभिरुक्तं तर्हि त्वं तस्मिन् प्रासादे प्रविशंतं राजानं करे धृत्वा प्रासादोऽयं पतिष्यतीति कथयेः, अहं च प्रासादं विद्यया पातयिष्यामि. ततस्तेन तथा कृते प्रासादः पतितः. राज्ञोक्तं किमिदं जातं? श्रेष्ठिनोक्तं हे महाराजानेन तव

मारणाय कपटं मंत्रितमभूत्. ततो रुष्टेन राज्ञा स पुरोहितस्तस्य श्रेष्ठिनोऽर्पितः, तेन श्रेष्ठि- नेंद्रकीलके तस्य पादं क्षिप्त्वा प्रतिज्ञापूरणार्थं च पिष्टमयं पादं कृत्वा छिन्नवानुक्तवांश्च सर्वं तत्स्वरूपं, पुरोहितेनोक्तमतःपरं नैवेदृशं करिष्यामीति. जातानुकंपेन श्रावकेण स मुक्तः. अत्र सत्कारपुरस्कारपरीषहः सोढव्यः साधुभिः, श्रावकेण तु न सोढव्य इति. अथ सत्कारे सति प्रज्ञाप्रकर्षापकर्षविह्वलत्वं न विधेयं, अतः प्रज्ञापरीषहोऽपि सोढव्यः.

॥ मूलम् ॥ से नूणं मए पुव्विं । कम्मा नाणफला कडा ॥ जेणाहं नाभिजाणामि । पुट्ठो केण य कण्हुई ॥ ४० ॥ अह पच्छा उइज्जंति । कम्माणाणफला कडा ॥ एवमस्सासि अप्पाणं । नच्चा कम्मविवागयं ॥ ४१ ॥ व्याख्या—प्रज्ञापरीषहोऽपि द्विधा सोढव्यः, प्रज्ञाप्रकर्षे सत्येवं चिंतनीयं, येन कारणेन केनापि पुरुषेण 'कण्हुई' कुत्रचित्प्रश्ने पृष्टः सन्नाहं पुरुषप्रश्नोत्तरं जानामि, तत्प्रश्नस्योत्तरं ददामि. अथेदानीं ज्ञानफलानि कर्माणि कृतानि पश्चादुदेष्यंति पश्चादुदयं प्राप्स्यंति, कर्मणां विपाकं ज्ञात्वैवमात्मानं त्वमाश्वासय? भोः शिष्य! न तु प्रज्ञाप्रकर्षे गर्वं कुर्या इत्यर्थः, प्रज्ञाप्रकर्षेऽयमर्थः कार्यः. अथ प्रज्ञाप्रकर्षपक्षे प्रज्ञाहीन-

त्वेऽर्थं वदति, येन केनचित्पुरुषेण कस्मिंश्चित्सुगमेऽपि जीवादिप्रश्ने पृष्टः सन्नाहं नाभिजानामि, तन्नूनं मया पूर्वं पूर्वभवेऽज्ञानफलानि धर्माचार्यगुरुश्रुतनिंदारूपाणि कृतानि, ततोऽहं प्रज्ञाहीनः संजातोऽस्मि. अथाज्ञानफलानि कृतानि कर्माण्यपि पश्चादग्रेतनजन्मानि 'उदेष्यंति' उदेष्यंत्युदयं प्राप्स्यंतीति कर्मविपाकं ज्ञात्वैवमात्मानमाश्वासय? उदयप्राप्तानां ज्ञानावरणकर्मणां विघाताय यत्नः कार्य इत्यात्मानमनुशासयेत्यर्थः. अतो हि प्रज्ञोदये हर्षो न विधेयः, प्रज्ञाभावे विषादे कृते ह्यार्तध्यानपरत्वं स्यात्, प्रज्ञाप्रकर्षोपरि कालिकाचार्यसागरचंद्रयोः कथा यथा—

उज्जयिनीतः कालिकाचार्याः प्रमादिनः स्वशिष्यान् मुक्त्वा सुवर्णकूले स्वशिष्यसागरचंद्रस्य समीपे प्राप्ताः. सागरचंद्रस्तु तानेकाकिनः समायातान् नोपलक्षयति, कालिकाचार्या अपि न किंचित्स्वस्वरूपोपलक्षणं दर्शयंति. अन्यदा सागरचंद्रेण पर्षदि सिद्धांतव्याख्यानं प्रारब्धं. चमत्कृता लोकाः सिद्धांतव्याख्यानं प्रशंसंति, कालिकाचार्याणां सागरचंद्रेण पृष्टं मद्व्याख्यानं कीदृशं? तैरुक्तं भव्यं, तेन चाचार्यैः समं तर्कवादः प्रारब्धः, परं तुल्यतया

वक्तुं न शक्नोति. गुरुं स चमत्कृतः.

अथ शिष्यास्ततः शय्यातरेण तिरस्कृतास्त्रपां प्राप्ताः स्वगुरुं गवेषयंतश्चलिताः, कालिकाचार्याः समागांतीति प्रसिद्धिं कुर्वाणाः सुवर्णभूमौ प्राप्ताः, सागरचंद्रः कालिकाचार्याः समायांतीति वृद्धस्य पुरः प्रोक्तवान्. वृद्धः प्राह मयापि श्रुतमस्ति, सागरचंद्रस्तेषां सन्मुखमायातः, तस्य तैः पृष्टं किमत्र कालिकाचार्याः समायाताः संति न वा? तेनोक्तमेको वृद्धः समायातोऽस्ति, नापरः कोऽपीति. तेऽप्युपाश्रयांतः समायाताः, उपलक्षिताः कालिकाचार्याः, प्रणतास्तैः. सागरचंद्रेण पश्चादुपलक्ष्य तेषां मिथ्यादुःकृतं दत्तं, हा मया श्रुतलवगर्वाध्मातेन श्रुतनिधयो गुरवआशातिना इति च कथितं. कालिकाचार्यैरुक्तं हे वत्स! श्रुतगर्वो न कार्यः. यथा सागरचंद्रेण श्रुतमदः कृतस्तथापरैर्न श्रुतमदः कार्यः. अथ प्रज्ञाप्रकर्षे गर्वः, प्रज्ञाभावे दैन्यचिंतनं, इत्युभयथाऽज्ञानं. अतस्तत्परीषहोऽपि सोढव्यः, इति कारणादज्ञानपरीषहमाह—

॥ मूलम् ॥—निरठगंमि विरउ । मेहुणाउ सुसंवुडो ॥ जो सरकं नाभिजाणामि । धम्मं कल्लाणपावगं ॥ ४२ ॥ तवोवहाणमादाय । पडिमं पडिवजाउ ॥ एवंपि विहरउ मे । छ-

छमं न निअट्टइ ॥ ४३ ॥ व्याख्या—अहं निरर्थकेऽर्थाभावे सति मैथुनात्कामसुखाद्विरक्तो निवृत्तः, मैथुनग्रहणं दुस्त्यजत्वात्, यतोऽहं दुःकरं कार्यं कृतवान्, योऽहं सुसंवृतो जितेंद्रियोऽपि साक्षात्स्फुटं धर्मं वस्तुस्वभावं कल्याणं शुभं पापकमशुभमभिजानामि, यदि मैथुनान्निवृत्तो जितेंद्रियत्वेऽपि काचिदर्थसिद्धिर्ज्ञानसिद्धि र्भवेत्तदा मम ज्ञानमुत्पद्येत, मम तु ज्ञानं नोत्पन्नं तदा वृथाहं मैथुनमत्यजं, वृथैव चेंद्रियजयमकरवं, पुनरिदमपि न चिंतयेत्. तपो भद्रमहाभद्रसर्वतोभद्राद्युपधानं सिद्धांतपठनोपचाररूपं, एकभुक्तनिर्विकृत्याचाम्लोपवासादिकमादायांगीकृत्य पुनः प्रतिमां भिक्षोरभिग्रहविशेषक्रियां द्वादशविधां प्रतिपद्यमानस्य ममैवं विहरतः साधुमार्गे विहारं कुर्वतोऽपि छद्मस्थज्ञानावरणादिकर्म न निवर्तते, अहं तपः करोम्युपधानं वहामि प्रतिमां च धरामि साधुमार्गे विहरामि तथापि केवली न भवामीति न विचारणीयं. अयमज्ञानपरीषहः. अत्राज्ञानपरीषहे कथा—

गंगातीरे द्वौ भ्रातरौ वैराग्याद्दीक्षां गृहीतवंतौ, तत्रैको विद्वान् जातः, द्वितीयस्तु मूर्खः, यो विद्वान् सोऽनेकशिष्याध्यापनादिना खिन्न एवं चिंतयत्यहो धन्योऽयं मे भ्राता यः

सुखेन तिष्ठति, निद्रादिकमवसरे कुर्वन्नस्ति, अहं तु शिष्याध्यापनादिकष्टे पतितोऽस्मीति चिंतयन् काव्यमिदं चकार—मूर्खत्वं हि सखे ममापि रुचितं यस्मिन् यदष्टौ गुणा। निश्चिंतो बहुभोजनोऽत्रपमना नक्तं दिवा शायकः ॥ कार्याकार्यविचारणांधबधिरो मानापमाने समः । प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥१॥ परं नैवं चिंतयति—नानाशास्त्रसुभाषितामृतरसैः श्रोत्रोत्सवं कुर्वतां । येषां यांति दिनानि पंडितजनव्यायामखिन्नात्मनां ॥ तेषां जन्म च जीवितं च सफलं तैरेव भूर्भूषिता । शेषैः किं पशुवद्विवेकरहितैर्भूभारभूतैर्नरैः ॥२॥ एवं पंडितगुणानचिंतयन् मूर्खगुणांश्चासतोऽपि चिंतयन् ज्ञानावरणीयं कर्म बध्ध्वा दिवं गतः, ततश्च्युतो भरतक्षेत्रे आभीरपुत्रो जातः, क्रमेण परिणीतः, तस्य पुत्रिका जाता, सा रूपवती. अन्यदानेकाभीरा घृतभृतशकटाः किंचिन्नगरंप्रति गछंति, असावपि तत्सार्थे घृतभृतं शकटं गृहीत्वा चलितः, मार्गे सा पुत्री शकटखेटनं करोति. ततस्तद्रूपव्यामोहितैराभीरपुत्रैरपथे खेटितानि शकटानि, तानि सर्वाणि भग्नानि, तादृशं संसारस्वरूपं दृष्ट्वा संजातवैराग्यः स आभीरस्तां पुत्रीमुद्वाह्य दीक्षां जग्राह. उत्तराध्ययनयोगोद्वहनावसरेऽसंखया-

ध्ययनोद्देशे कृते तस्याभीरभिक्षोर्ज्ञानावरणोदयो जातः, न तदध्ययनमायाति, आचाम्लान्येव करोति. उच्चैःस्वरेण तदध्ययननिर्घोषं करोति. एवं च कुर्वतस्तस्य द्वादशवर्षप्रांतेऽज्ञानपरीषहं सम्यगधिसहमानस्य केवलज्ञानं समुत्पन्नं. एवमज्ञानपरीषहे आभीरसाधुकथा. यस्य च ज्ञानाजीर्णं स्यात्तेनापि ज्ञानपरीषहो न सोढस्तत्रार्थे स्थूलभद्रकथा यथा—

स्थूलभद्रस्वामी विहरन् बालमित्रद्विजगृहे गतः, तत्र तमदृष्ट्वा तद्भार्यां पृष्टवान् क ते पतिर्गतः? सा प्राह परदेशे धनार्जनार्थं गतोऽस्ति. ततः स्वामी तद्गृहस्तंभमूलस्थितं निधिं पश्यन् स्तंभाभिमुखं हस्तं कृत्वा 'इदमीदृशं स च तादृशः' इति भणित्वा गतः. ततः कालांतरे गृहागतस्य विप्रस्य तद्भार्यया स्थूलभद्रस्वामिवचो ज्ञापितं, तेन पंडितेन ज्ञातमत्रावश्यं किंचिदस्ति. ततः खानितः स्तंभः, लब्धो निधिः. एवं स्थूलभद्रेण ज्ञानपरीषहो न सोढः, शेषसाधुभिरपीदृशं न कार्यं. अथाज्ञानदर्शनेऽपि कश्चित्संशयः स्यादतस्तत्परीषहः कथ्यते—

॥ मूलम् ॥—नत्थि नूणं परे लोए । इड्ढी वावि तवस्सिणो ॥ अडुवा वंचिओ मित्तो । ई- ई भिक्खू न चिंतए ॥ ४४ ॥ अभू जिणा अत्थि जिणा । अडुवावि भविस्सई ॥ मुसंते एव-

माहंसु । ईई भिख्खू न चिंतए ॥ ४५ ॥ व्याख्या—नूनमिति संभावनायां परलोके नास्ति, परलोके गतः कोऽपि नात्रागत्य वदति, तस्मात्प्रत्यक्षस्याभावान्नास्ति परलोकः, वाऽथवा तपस्विनोऽपि साधोरपि काचिद् ऋद्धिरामर्षौषधिवपुषौषधिखेलौषधिप्रमुखा काचिन्नास्ति न दृश्यते, अथवा किं बहुना? अहं वंचितोऽस्मि, ऋषिभिष्ठगितोऽस्मीति भिक्षुर्न चिंतयेन्न विचारयेत्. ते जिनाः केवलिन एवमाहुः कथयंतिस्म तन्मृषा तदसत्यं, एवं तत् किं? जनास्तीर्थकराः केवलिनो वाऽभूवन्, पुनर्जिनाः संति, सांप्रतं वर्तमानकाले महाविदेहक्षेत्रादौ संति, अथवाग्रे भविष्यंतीति यदूचुस्तदसत्यं, प्रत्यक्षमदृश्यमानत्वात्. इति विचारे क्रियमाणे सम्यक्त्वसंगः स्यात्, तस्मादिति न विचारणीयं, सम्यक्त्वपरीषहः सोढव्यः. अत्रार्याषाढसूरिकथा—

वत्साभूम्यामाषाढभूतिसूरयस्तत्र गच्छे यो यः कालं करोति तं तं निर्जरयामासुः, अंत्यसमये तेषामेवं कथयंति युष्माभिः स्वर्गे सुरीभूय मम दर्शनं देयं, ते च स्वर्गे गच्छंति, परमाचार्याणां दर्शनं न ददति. तथा च सूरीणां परलोकशंका जायते. एकदैको विनेयः प्रका-

मं स्वजक्तः समाधिमरणसमये सूरिजिरेवमुक्तस्त्वया स्वर्गे देवीभूयावश्यं मम दर्शनं देयं, न प्रमाद्यं, सोऽपि मृत्वा देवो जातः, परं विचित्ररचनानाट्यादिदर्शनेन व्यग्रत्वान्नात्रायातः, तावता सूरिजिरेवं चिंतितं नास्त्येव परलोकस्ततः कोऽपि नात्रागच्छति, यदि परलोकः स्यात्तदा मच्छिष्याः कृतप्रतिज्ञा अपि कथं न दर्शनं दद्युः? ततो मयाद्ययावद् व्रतानि पालितानि, तपांसि तप्तानि, कष्टानि कृतानि, सर्वाण्यप्यनुष्ठानानि मुधा जातानि, मुधा मया जोगास्त्यक्ताः, वंचितोऽहमिति मिथ्यात्वं प्रतिपन्नाः, गच्छं मुक्त्वैकाकिन एव लिंगमात्रधरा निर्गताः. अत्रांतरे तेन जक्तशिष्येण देवीभूतेन कियद्दिनानि यावन्नाट्यादि विलोक्य गुरुप्रेमणाऽत्रायातं, मिथ्यात्वं गता गुरवो दृष्टाः, तत्प्रतिबोधार्थं कस्यचिद्ग्रामस्य सीम्नि नाट्यं विचक्रे, तत्राचार्याः षण्मासान् यावन्नाट्यं पश्यंतः क्षुधादिकं नानुभूतवंतः, नाट्यं देवेन विसृष्टं, आचार्या अग्रतश्चलिताः. ततस्तेनैव सुरेण तेषामाचार्याणां संयमपरीक्षार्थं षट्कायनामानः षड् दारकाः सर्वालंकारविभूषितांगा विकुर्विताः, प्रथमं पृथ्वीकायिकः कुमारस्तेषामाचार्याणां दृष्टौ पतितः, आचार्या आहुः, भो बाल! भूषणानि ममार्पय? स नार्पयति, तदनु सूरिजि-

रसौ गले गृहीतः, ततश्च भयभ्रांतो बालः प्राह भदन्तोऽहं पृथ्वीकायिकः कुमारः, अस्यां सैंद्राटव्यां त्वां शरणं श्रितः, भवादृशानामेवं कर्तुं न युक्तं हे स्वामिन्! मदुक्तैका कथा श्रूयतां तथाहि—एकः कुलालः खानौ मृदं खनन् मृदाक्र[illegible] एवं भणति—जेण भिक्खं बलिं देमि । जेण पोसेमि नाइउं ॥ सा मे मही अक्कमइ । जायं सरणउ भयं ॥ १ ॥ एतन्न्यायेन शरणागतस्यापि कथमेवं पराभवं करोषि? सूरिभिरुक्तमतिपंडितोऽसि बालेत्युक्त्वा तदंगाभरणानि गृहीतानि, पात्रे क्षिप्तानि, गतः पृथ्वीकायिकः. स्तोकांतरे गच्छद्भिराचार्यैर्द्वितीयोऽप्कायिकनामा बालको दृष्टः, सोऽपि तथैवोवाच, तत्कथिता कथा चेयं—

एकः पाटलनामा तालचरः प्रकामं वाग्मी, सोऽन्यदा गंगाश्रोतसि प्रविष्टः. तेन च ह्रियमाणोऽसौ तटस्थजनेनाभाषि हे पाटल! प्राज्ञ! किंचित्सूक्तं पठ? सोऽवादीत्—जेण रोहंति बीआणि । जेण जीवंति कासवा ॥ तस्स मज्झे मरिस्सामि । जायं सरणउ भयं ॥२॥ एवमप्कायिककुमारेण कथोक्ता, तथापि तस्याभरणानि तेनाचार्येणातिपंडितोऽसि हे कुमारेत्युक्त्वा गृहीतानि, सोऽपि तथैव गतः. अग्रेऽग्निकायिकः कुमारस्तस्यापि तथैवोक्तिप्रत्युक्ती, त-



=लणयाचका
=कांइकसुत्ता
सन्नलातो=

तत्कथिता कथा चेषा—

एकस्य तापसस्याग्निनोटजो दग्धः, स वक्ति—जमहं दिवा य राउं य । तप्पेमि महुसप्पिणा ॥ तेण मे उडउं दड्ढो । जायं सरणउ भयं ॥ १ ॥ अस्मिन्नेवार्थे द्वितीया कथा—कश्चित्पथिकः पथि व्याघ्रभीत्याग्निशरणं श्रितः, तेनैव तस्यांगं दग्धं. स प्राह—मए वग्घस्स भीएणं । पावउ सरणीकउ ॥ तेण दड्ढं मम अंगं । जायं सरणउ भयं ॥ २ ॥ एवं कथाद्वयं कथयतस्तस्य कुमारस्य तेनाचार्येण तथैवोक्त्वाभरणानि गृहीतानि, अथ वायुकुमारो सिंचितस्तस्य तथैवोक्तिः, तत्कथिता कथा चेयं—एको घननिचितशरीरो वायुजातिः, स चान्यदा वायुभग्नांगो दंडधारी मार्गे गच्छन् केनाप्युक्तो हंहो दृढांग! त्वं कथमीदृग्जातः, सत्याह—जिट्ठासाढेसु मासेसु । जो सुहो होइ मारुउ ॥ तेण मे भज्जए अंगं । जायं सरणउ भयं ॥ ॥ ३ ॥ एवं कथां कथयतोऽपि तस्य कुमारस्याभरणानि तेनाचार्येण गृहीतानि. अग्रे च वनस्पतिकायिकः कुमारः, सोऽपि तथैवाख्यत्, तदुक्ता कथा चेयं—एकस्मिन् वृक्षे केषांचित्पक्षिणामावासोऽस्ति, तत्र बहूनि तेषामपत्यानि जातानि. अन्यदा वृक्षमूलादुद्भिता वल्ली स-

मंताद्वेष्टयंती वृक्षशिखरमारूढा. एकदा तामारुह्य सर्पस्तत्सीमां प्राप्तो नीडस्थान्यपत्यानि भक्षितवान्, मातृपितृपक्षिभिरुक्तं—जाव वुत्थं सुहं वुत्थं । पायवे निरुवद्दवे ॥ मूलाउ उट्ठीआ वल्ली । जायं सरणउ भयं ॥ १ ॥ एवमुक्तेऽपि वनस्पतिकायिकस्याभरणानि तेनाचार्येण गृहीतानि. अथ त्रसकायिकः कुमारः कथामाह—एकस्मिन्नगरे परचक्रागमे पुरं प्रविशतश्चांडालानशौचशीलया जनैर्निष्कास्यमानान् दृष्ट्वा मध्यस्थजनाः केचिदाहुः—अब्भिंतरिआ भीआ । पिल्लंती बाहिरे जणे ॥ दिसं भयहमायंगा । जायं सरणउ भयं ॥ १ ॥ त्रसकायिको द्वितीयां कथामाह—एकस्मिन्नगरे राजा स्वयं चौरः, पुरोहितो भांडीवहः, तयोरन्यायं दृष्ट्वा लोकाः परस्परं वदंति—जह राया सयं चोरो । भंडिउ य पुरोहिउ ॥ दिसं भयह नागरगा । जायं सरणउ भयं ॥ १ ॥ अथाऽसौ तृतीयां कथामाह—

एकस्मिन् ग्रामे एकस्य ब्राह्मणस्य पुत्री यौवनस्थातीवदर्शनीयास्ति, तस्यां पितुर्भोगेच्छाभूत्, परं लज्जातः कस्याप्यग्रे न कथयति, दुर्बलो जातः, पत्न्या दुर्बलत्वकारणं पृष्टं, स स्वसुताभोगेच्छां प्राह, तया प्रोक्तं मा विषीद! तवेच्छामहं पूरयिष्यामीत्युक्त्वा मातैकांते पुत्रीं प्रा-

ह हे वत्सेऽस्माकं पूर्वं पुत्रीं यक्षा भुंजंति, पश्चाद्वरस्य दीयते. ततो यक्षः कृष्णचतुर्दश्यां त्व-
द्वावासे समायास्यति, त्वया तस्यापमानं न कार्यं, रात्रौ त्वयोद्योतो न कार्यः. एवं मात्रोक्ते
सा पुत्री रात्रिप्रस्तावे स्वगृहे सुप्ता, यक्षं साक्षात्पश्यामीति कौतुकेन दीपकः कृतः, परं श-
रावसंपुटे रक्षितस्तेन तद्गृहांतरुद्योतो न दृश्यते, रात्रौ तत्र पिता यक्षरूपः प्रविष्टः, तेनेयं
भुक्ता, रतक्लांतश्च तत्रैव सुप्तो निद्राणश्च, अनया च कौतुकेन शरावसंपुटं दूरीकृत्य दीपोद्यो-
ते दृष्टो जनकः, ज्ञातं मातृकपटं, तया चिंतितं यद्भवति तद्भवतु, मयानेनैव सह विलासः
कार्यः, इति चिंतयित्वा जागरितेन तेन समं पुनर्भोगान् भुक्त्वा सा सुप्ता, सोऽपि सुप्तः,
द्वावपि निद्राणौ, प्रभातेऽपि न जाग्रतः, प्रातर्ब्राह्मणी तत्रागत्य तौ तथा सुप्तौ दृष्ट्वेमां मा-
गधिकां पठति—अइरुग्गएवि सूरिए। चेइए अ थूभगएवि वायसे ॥ भित्तीइगएवि आ-
यवे सहि। सुहिए हु जणे न बुज्झइ ॥ १ ॥ अस्या व्याख्या—अचिरोद्गतकेऽपि च सूर्ये,
कोऽर्थः? प्रथमोदिते रवौ चैत्यस्तूपगते च वायसे अनेनोच्चविवस्वतीत्याह, भित्तिगते चात-
पे, अनेनोच्चतर इत्यर्थः, हे सखि! सुखिनो हुर्वाक्यालंकारे, जनो न बुध्यते, न निद्रां जहा-

तिं, अनेनात्मनो दुःखित्वं प्रकटयति, सा हि भर्तृविरहदुःखिता न रात्रौ निद्रां लब्धवती। इति मागधिकार्थः. जननीप्रोक्तामिमां मागधिकां श्रुत्वा पुत्री विनिद्रा प्राह—तुमेवह अंब मालवे । मा हु विमाणे य जक्कमागयं ॥ जक्को अ न हु एह तायए । अन्नं माय गवेस तातयं ॥ १ ॥ अस्या व्याख्या—त्वमेवांब मातः! ह इत्यामंत्रणे अलाप्युक्तवती शिक्षासमये, यथा ' माहुत्ति ' मैव ' विमाणयत्ति ' यक्षमागतं विमुखं मा कुर्याः ' जक्कोयत्ति ' अयं यक्षः, न त्वयं तातकः पिता, हे मातरन्यं तातं गवेषयेति मागधिकार्थः. ॥ १ ॥ पुनर्माता भणति—नव मासह कुच्छि धारिया । जस्सापस्सपुरीसमद्दियं ॥ धुयाए तएसिगेहिउं । हरिउं सरणासरणयं ॥ १ ॥ अस्या व्याख्या—नवमासान् यावत्कुक्षौ धारिता, यस्याः प्रश्रवणं पुरीषं च मर्दितं, ' धुयाए तएत्ति ' तया दुहित्रा ' मेत्ति ' मम गेहिको भर्ता हृतश्चौरितस्ततो हेतोः शरणमशरणं मम जातमिति गम्यं, हितं कुर्वत्या ममाहितं जातमिति मागधिकार्थः. ॥ १ ॥ यथा तस्याः पुत्र्या मातृपित्राभ्यां विनाशः कृतस्तथा मातृपितृतुल्येन भवता मद्विनाशः क्रियमाणोऽस्ति. एवं त्रसकायिकेनोक्तेऽपि स आचार्यो न निवर्तते. अथ—

त्रसकायिकश्चतुर्थीं कथामाह—

एकस्मिन् ग्रामे एकेन ब्राह्मणेन यज्ञार्थं सरोऽकारि, सरःसमीपे वनमपि च कारितं, तत्रानेकान् पशून् जुह्वन् द्विजो मृतस्तत्रैव ग्रामेऽजोऽजनि, स चरणार्थं वहिर्याति, सरो वनं च पश्यति, ततो जातिस्मरणवान् जातः. अन्यदा तत्सुतेन यज्ञः कर्तुमारेभे, तदर्थमसावेवाजस्तेन सुतेन तत्रैव नीयमानो गाढस्वरेण पूत्कारं कुर्वन् केनचिन्मुनिना सातिशयज्ञानेन दृष्टो भणितश्च—विअरू खणावी तइं ठगल । तइआरोविअरुक्ख ॥ जन्नपवत्तण तइं कीयउं । काइं बूबू मुरक्ख ॥ १ ॥ 'वियरुत्ति' देशीवचनस्तटाकिकेत्यर्थः. यतिप्रणीतामिमां मागधिकां श्रुत्वाऽजो जातिस्मरणधरो मौनवान् जातः, तत्पुत्रेण साधुः पृष्टः कथमसौ मौनी जातः? साधुः प्राहायं तव पिताजयागकरणादज एव जातः, तत्पुत्रेणोक्तमत्रार्थेऽभिज्ञानं किं? साधुः प्राह तव गृहांगणभूनिहितनिधिमसौ पादाग्रेण दर्शयिष्यति. ततस्तथैव तेनाजेन कृतं, पुत्रस्याजस्य च धर्मप्राप्तिर्द्वयोरपि देवलोकगतिर्जाता. एवं तेन ब्राह्मणेन शरणं मे भविष्यतीति कृत्वा तटाकसमीपे यज्ञारामो विहितः, स एवास्य वधस्थानतया भवनेन

शरणाद्भयमुत्थितमिति शब्दपदं जातं. एवं जवंतोऽपि शरणागतानामस्माकमनर्थकारिणो जाताः. एवमुक्तेऽपि त्रसकायिककुमारस्याभरणानि गृहीतानि. एवं षण्णामपि कुमारकाणां पंडितवादिनो यूयमित्युक्त्वाभरणान्यादायाग्रे चलितः सूरिः. पुनस्तेन देवेन सम्यक्त्वपरीक्षार्थं हारकंकणाद्यलंकृता साध्व्येका दर्शिता, तां दृष्ट्वा सूरिरेवमाख्यत्, हे प्रवचनोड्डाहकारिके! दूरतो व्रज? मुखं मा दर्शय? रुष्टया तयोक्तं—राइसरिसवमित्ताइं । परछिद्दाइं पाससि ॥ अप्पणो बिल्लमित्ताइं । अपि छिद्दाइं न पाससि ॥ १ ॥ तव पतद्गृहे किमस्तीति तया प्रत्युतोपालब्धस्तथाप्यसौ न प्रतिबुद्धः. अग्रे चलता तेनाचार्येण स्कंधवारगतो राजा दृष्टः, तेन राज्ञाचार्यो वंदितः, प्रोक्तं च हे प्रभो! पात्रकं धर! प्रासुकमोदकान् गृहाण? ततः स पात्रक्षिप्ताभरणदर्शनभीत्यावददहमद्याहारं न करिष्ये, राज्ञा च हठाज्झोलिकातः पात्रं कर्षितं, आभरणानि दृष्टानि, राज्ञोक्तं हे अनार्य! किं त्वया मत्पुत्रा व्यापादिताः? इत्यादिवचनैस्तर्जितः स सूरिर्भयभ्रांतो न किंचिद्वक्ति, पश्चान्मायाजालं संहृत्य स शिष्यदेवः प्रकटीभूतः, स्ववृत्तांतं चाकथयत्, एवं चोपदिष्टवान् हे प्रभो! यथा त्वया नाट्यं पश्यता षण्मासान् या-

वस्तुतया न ज्ञाता, एवं देवा अपि दिव्यनाट्यं पश्यंतो न किंचित्स्मरंति, नाप्यत्रागमनोत्साहं कुर्वंति. यतः सिद्धांतेऽप्युक्तं—संकंतदिव्वपेमा । विसयपसत्ता सम्मत्तकत्तव्वा ॥ अणहीणमणुअकज्जा । नरभवमसुहं न इंति सुरा ॥ १ ॥ इत्यादि शिष्यदेववाक्यैः स प्रतिबुद्धः, सिध्धांतवचनाभ्यां कृत्वा पुनः संयमे लीनः, पूर्वं तेन दर्शनपरीषहो न सोढः, पश्चात्सोढः. अथ कस्य कर्मण उदये कः परीषहोदयः स्यादित्याह—दर्शनमोहनीयोदयाद्दर्शनपरीषहः स्यात्. ज्ञानावरणीयोदये प्रज्ञापरीषहः स्यात्, तस्यैवोदयेऽज्ञानपरीषहोऽपि स्यात्, अंतरायकर्मोदयेऽलाभपरीषहः स्यात्, चारित्रमोहनीयकर्मोदये आक्रोश १ अरति २ स्त्री ३ नैषेधिकी ४ अचेल ५ याचना ६ सत्काराः ७. एते सप्तपरीषहा उत्पद्यंते, शेषा एकादश वेदनीयकर्मोदये उत्पद्यंते. ॥ ४५ ॥ अथ सर्वोपसंहारगाथामाह—

॥ मूलम् ॥—एए परीसहा सव्वे । कासवेणं पवेईया ॥ जे भिक्खू न विहन्निज्जा । पुट्ठो केणइ कण्हुइ त्ति बेमि ॥ ४६ ॥ व्याख्या—एते द्वाविंशतिः सर्वे परीषहाः काश्यपेन श्रीमहावीरेण प्रवेदिताः, प्रकर्षेण ज्ञाताः, यान् ज्ञात्वा भिक्षुः साधुः केनापि परीषहेण स्पृष्टः

सन् कुत्रचित्कस्मिंश्चित्प्रदेशे कस्मिंश्चित्काले वा न विहन्येत संयमान्न पात्येत. ॥ ४६ ॥ इदं हि कर्मप्रवादनामाष्टमो हि पूर्वस्तस्य सप्तदशं प्राभृतं, तस्योद्धारलेशं द्वितीयमध्ययनमुत्तराध्ययनस्य. ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यश्रीलक्ष्मीवल्लभगणिविरचितायां द्वितीयमध्ययनं संपूर्णं. ॥ श्रीरस्तु ॥



## ॥ अथ तृतीयमध्ययनं प्रारभ्यते ॥

अथ द्वितीयाध्ययनेन सह तृतीयाध्ययनस्य संबंधमाह—किमालंबनं कृत्वैते परीषहाः सोढव्याः? इति प्रश्ने उत्तरं चतुरंगदुर्लभत्वालंबनेन संबंधमाह—

॥ मूलम् ॥—चत्तारि परमंगाणि । दुल्लहाणीह जंतुणो ॥ माणुसत्तं सुई सद्धा । संय-

मंमि य वीरियं ॥ १ ॥ व्याख्या—एतानि चत्वारि परमांगानि, परमाण्युत्कृष्टानि, अंगानि मोक्षसाधनोपायानि, परमत्वं ह्येतेषां प्राप्तिं विना मुक्तिप्राप्तेरभावात्, कथंभूतानि परमांगानि? जंतोर्जीवस्य दुर्लभानि, एतानि कानि? मनुष्यत्वं मनुष्यजन्म, पुनः श्रुतिर्धर्मस्य श्रवणं, पुनः श्रद्धा धर्मे रुचिः, पुनः ' संजमंमि ' संयमे साध्वाचारपालने वीर्यं सामर्थ्यं वलस्य स्फोरणं, अत्र—चुल्लगपासकधन्ने । जूए रयणे य सुमिणचक्के अ ॥ चम्मयुगे परमाणू । दस दिठंता मणुअलंभे ॥ १ ॥ दशदृष्टांतवन्मनुष्यत्वं दुर्लभमुक्तं, तत्र चोल्लगदृष्टांतो यथा—

चोल्लगं परिपाटीभोजनं, तदर्थं कथा—कांपिल्यनगरे ब्रह्मराजा, चुलनी भार्या, तयोः पुत्रो ब्रह्मदत्तः. एकदा मृतः पिता, ब्रह्मपुत्रो वाल इति कृत्वा मित्ररूयप्रहितो दीर्घपृष्टनामा राजा तद्राज्यं रक्षति, स चुलन्यामासक्तो जातः, ब्रह्मदत्तेन तयोरनाचारो ज्ञातः, शूलाप्रोतपिष्टमयकर्कुटकर्कुट्यादिसंबंधफलदर्शनेन ताभ्यां स्वानाचारभीताभ्यां कन्या ब्रह्मदत्तस्य परिणायिता, जतुगृहं च कारितं. तावता धनुमंत्रिणा तयोः कपटं ज्ञातं, जतुगृहात्सुरंगा खानिता, सुरंगाद्वारेऽश्वद्वयं स्थापितं, स्वपुत्रस्य वरधनुनाम्नस्तत्स्वरूपं ज्ञापितं, सुरंगामार्गश्च

दर्शितः. ब्रह्मदत्तस्य वरधनुरनुचरः कृतः. अन्यदा मातृप्रेरितो ब्रह्मदत्तः कन्यासहितो जतुगृहे सुप्तः, वरधनुः प्रत्यासन्न एव सुप्तः, मध्यरात्रौ मात्रा ज्वालितं गृहं, उत्थितो ब्रह्मदत्तस्तस्य च वरधनुना सुरंगामार्गो दर्शितः. ततो निर्गत्य वरधनुमित्रेण सह ब्रह्मदत्तोऽश्वद्वयमधिरुह्य दूरदेशे गतः, अत्यंतपथश्रमादश्वद्वयं मृतं. पादचारेण मित्रेण सह ब्रह्मदत्तः पृथिव्यां भ्रमति. एकदा दीर्घपृष्ठप्रेषितं सुभटवृंदं दृष्ट्वा वरधनुः पृथग्गतः, कुमारस्त्वेक एव भ्रमन् केनचिद्विप्रेण दृष्टः, तेन सहाटवीमुत्तीर्णः, पृथग्व्रजंतं विप्रं प्राह कुमारो भो! यदा मम राज्यप्राप्तिः स्यात्तदा त्वयागंतव्यमिति. अथ कुमारो महाराजा जातः, चक्रवर्तिपदवीं प्राप्तः, तदानीमागतः स ब्राह्मणः, उपानद्ध्वजप्रयोगेण मिलितः, चक्रवर्तिनोपलक्षितः, कुशलं पृष्टं, प्रोक्तं च मनोऽभीष्टं मार्गय? स प्राह ब्राह्मणीं पृष्ट्वा मार्गयिष्यामि, गतस्तस्याः समीपं, कथितवानेवं चक्रवर्ती मम तुष्टोऽस्ति, किं मार्गयामि? तया विमृष्टं—प्रवर्धमानः पुरुष—स्त्रयाणामुपघातकः ॥ पूर्वोपार्जितमित्राणां । दाराणामथ वेश्मनां ॥ १ ॥ इति विमृश्योक्तं किं संतापकारिणा बहुपरिग्रहेण? प्रार्थय? भरतक्षेत्रे प्रतिगृहं भोजनं दीनारयुगलं च? ततो

विप्र आगत्य तथैव चक्रिणं प्रार्थयामास, चक्री हसित्वोवाच भो किमनया विडंबनया? देशग्रामभांडागारादि प्रार्थय? स तदेव प्रार्थयति, नान्यत्किमपीति. चक्रिणा विचारितं—जो जत्तिअस्स अत्थस्स । भायणं तस्स तत्तिअं होइ ॥ वुठेवि दोणमेहे । न डुंगरे पाणियं ठाइ ॥ १ ॥ इति विचिंत्य प्रतिपन्नं तच्चक्रिणा, प्रथमदिने स्वगृहे सकुटुंबस्य तस्य भोजनं कारितं दीनारयुगलं च दत्तं. एवं स ब्राह्मणो भरतक्षेत्रसंबंधिसमस्तगृहेषु भोजनं गृहीत्वा पुनश्चक्रिणो गृहे भोजनं कर्तुमायाति किं? कदाचिद्दिव्यानुभावादायात्यपि, परं मनुष्यावतारात्परिभ्रष्टः पुनर्मनुष्यावतारे नायातुं शक्नोतीति. मनुष्यभवदुर्लभतायां चोल्लगदृष्टांतः प्रथमः. पाशकदृष्टांतो यथा—

गोल्लदेशे चणकग्रामोऽस्ति, तत्र चणकब्राह्मणः श्राद्धः, एकदा तस्य गृहे साधवः स्थिताः. तदानीं सदंष्ट्रस्तस्य पुत्रो जातः, दर्शितः साधूनां, साधुभिरुक्तं सदंष्ट्रत्वेनासौ राजा भविष्यति. पित्रा विमृष्टमसौ राजा भूत्वा नरकं गमिष्यतीति भीत्या तस्य दंष्ट्रा घर्षिता, पुनस्तादृशो गुरूणां दर्शितः, तैरुक्तमेकपुरुषांतरितो राजा भविष्यतीति. तस्य बालस्य चा-

णिक्य इति नाम दत्तं.अथासौ वर्धमानश्चतुर्दश विद्यास्थानानि पठित्वा कालांतरेण परिणीतः. अन्यदा चाणिक्यस्त्री भ्रातृविवाहे गता, तत्रान्या अपि सद्द्रव्यपतिकास्तद्भगिन्यो बह्व्यः समायाताः, ताश्च मातृपितृभ्रातृभिर्बहुमानिताः, इयं चोपेक्षितप्राया खिन्नैवमचिंतयन्मम पत्युर्निर्धनत्वेनैते पित्रादयोऽपि मां न मन्यंते, खिन्ना सती सा पश्चादायाता, चाणिक्येन तस्याः खेदस्वरूपं पृष्टं, तया पितृगृहे सर्वासां भगिनीनां मानं स्वापमानं चोक्तं, चाणिक्यश्चिंतयति—अलियंपि जणो धण—इत्थयस्स लयणत्तणं पयासेइ ॥ परमत्थबंधवेणवि । लज्जिज्जइ हीणविहवेण ॥ १ ॥ तथा—कज्जविहूणाण नेहो । अत्थविहूणाण गउरवं लोए ॥ पक्खिवन्ने निव्वहणं । कुणंति जे ते जए विरला ॥ २ ॥ इति चिंतयित्वा द्रव्योपार्जनार्थं नंदराजाधिष्ठिते पाटलीपुरे गतः, तत्सभायां पूर्वदिग्न्यस्ते आसने निषण्णः, तत्र नंदेन समं कश्चिन्नैमित्तिकस्तत्रायातः, तेनोक्तमेष ब्राह्मणो नंदवंशस्य छायामतिक्रम्य स्थितोऽस्तीति, तद्वाक्यश्रवणाद् भृत्यैरुत्थापितो द्वितीये आसने उपविष्टः, प्रथमे करवर्तिं स्थापयति, तृतीये दंडकं, चतुर्थे जपमालां, पंचमे यज्ञोपवीतमेवं चेष्टां कुर्वन्नसौ नंदभृत्यैः शठ इति कृत्वा य-

भ्यादिभिरन्ताडितो द्वेषमापन्नस्तदानीमेवमुवाच—कोशेन भृत्यैश्च निबद्धमूलं । पुत्रैश्च मि-
त्रैश्च विवृद्धशाखं ॥ उत्पाट्य नंदं परिवर्तयामि । महाद्रुमं वायुरिवोग्रवेगः ॥ १ ॥ ततो वि-
चांतरितो राजा भविष्यामीति स साधुवचः स्मरन् भाग्यवंतं पुरुषं विलोकयन् मेदिन्यां भ्र-
मति. अन्यदा नंदस्य मयूरपालकाणां ग्रामे गतः परिव्राजकवेषेण चाणिक्यः, तत्र मयूरपा-
लकगुरुस्य गर्भिण्याः स्त्रियश्चंद्रपानदोहदो जातः, तया पित्रादीनामुक्तं, पित्रादिभिर्गृहागतस्य
चाणिक्यस्योक्तं, चाणिक्येनोक्तमहं बुद्ध्या दोहदमस्याः पूरयिष्यामि, यद्यस्याः पुत्रमष्टवा-
र्षिकं मे ददत? तैस्तथेति प्रतिपन्नं, चाणिक्येन सा सच्छिद्रमंडपे शायिता, तन्मुखाभिमुखो-
ंस्तरप्रदेशे शर्करामिश्रदुग्धभृतस्थालप्रयोगो विहितः, तद्बिंदवस्तस्या मुखे पतिताः, तत-
स्तद्दोहदपूर्तिर्जाता, कालक्रमेण पुत्रो जातस्तस्य चंद्रगुप्त इति नाम दत्तं, यावच्चंद्रगुप्तस्तत्र
वर्धते. तावच्चाणिक्योऽपि देशांतरे धातुर्वादादिकं शिक्षयित्वा पुनस्तत्रागतः, स चंद्रगुप्तो
दारकैः समं राजनीत्या क्रीडां कुर्वन् दृष्टः, तत्र समागत्य स बालश्चाणिक्येन याचितः,
बालकेनोक्तं मां गृहाण? चाणिक्येनोक्तं गोस्वामी त्वां तारयिष्यति, तेनोक्तं वीरभोग्या

वसुंधरा, चाणिक्येन ज्ञातमयं महानुदारचरित इति ज्ञात्वा कस्यचित्प्रत्यासन्नपुरुषस्य पृष्टमयं कस्य सुतः? तेन मातुर्दोहदपूरकं चाणिक्यमुपलक्ष्य तव पुत्रोऽयमित्युक्तं, चाणिक्य उवाच हे बाल! त्वं चल मया समं? त्वामहं राजानं करोमि, चलितश्चाणिक्येन समं बालः, परदेशशिक्षितधातुर्वादद्रव्यबलेन लोको घनो मेलितः, गत्वा पाटलीपुरं रुद्धं, नंदो बहिर्निर्गत्य तेन समं युद्धं चकार, भग्नश्चाणिक्यः. मेलितो लोकः सर्वोऽपीतस्ततो जगाम, चंद्रगुप्तं लात्वा चाणिक्यो नष्टः, नंदपुरुषा अश्वारूढास्तं विलोकयंति. एते त्वागताः, अहं तु सबालः पादचारी, अश्वारूढाणामेतेषां पुरः क्व यास्यामीति ध्यात्वा सरस्तीरस्थितं रजकं दृष्ट्वा चाणिक्यः प्राह भो रजक! मारणाय नंदभट्टाः समायांति, तद्वचः श्रुत्वा रजको नष्टः, चाणिक्यः स्वयं रजको जातः. चंद्रगुप्तस्तु सरसि प्रवेशितः, एको नंदाश्ववारस्तत्रायातः, तेन पृष्टं भो रजक! चंद्रगुप्तः क्व गतः? रजकः प्राह अस्मिन् सरसि प्रविष्टः, अश्ववारेण स्वघोटकस्तस्यार्पितः, खड्गमपि तस्यार्पितं. स्वयं तु सरःप्रवेशाय यावत्सज्जो भवति. तावता तेनैव खड्गेन स चाणिक्येन द्विधा कृतः, पश्चात्सरसो निष्कासितश्चाणिक्येन चंद्रगुप्तः, अश्वमधिरोहितः. पथि गच्छता



= इनकोचरित्र उध

चाणिक्येन चंद्रगुप्तः पृष्टो यो यस्यां वेलायां त्वं मयाश्ववारस्य दर्शितस्तदा तव मनसि किमभूत्? चंद्रगुप्तेनोक्तं मयैवं ज्ञातं मम हितायैवं भवताहं दर्शितः. चाणिक्येन ज्ञातं योग्योऽयमेव, पश्चाच्चंद्रगुप्तः क्षुधार्तो जातः, ततश्चाणिक्येन क्वापि स्थाने सद्यो भुक्तस्य बटुकस्य जठरं द्विधाकृत्य दधिकूरं गृहीतं, भोजितश्चंद्रगुप्तः. ततो ग्रामे ग्रामे भिक्षां कुर्वंश्चाणिक्यो भ्रमति. एकदा कस्मिंश्चिद् ग्रामे चाणिक्य एकस्या वृद्धाया गृहे भिक्षार्थं गतः. तत्र तया बालकानां भोजनाय भाजने हैरेयी क्षिप्ता, एकेन बालेन मध्ये हस्तः क्षिप्तः, दग्धः स रोदिति तयोक्तं रे मूढ! त्वमपि चाणिक्यवन्न जानासि, चाणिक्येनोक्तं हे मातश्चाणिक्यः कस्मान्मूढः? तयोक्तं पूर्वं पार्श्वानि गृह्यंते, ततो मध्ये हस्तः पात्यते भोजने राज्यग्रहणे च. तत् श्रुत्वा गतश्चाणिक्यो हिमवत्पार्श्वे, तत्र पर्वतनामा परिव्राजको राजा, तेन सह मैत्री कृता चाणिक्येन. तस्य प्रस्तावे उक्तं नंदराज्यं लात्वार्धमर्धं त्वया चंद्रगुप्तेन च भुज्यते. प्रतिपन्नं परिव्राजकराजेन. ततः सैन्येन सह द्वावपि चलितौ, मार्गस्थग्रामनगराणि स्वायत्तीकुरुतः. एकदा मार्गे महदेकं नगरमागतं, तद् गृहीतुं न शक्यते, परिव्राजकवेषेण चाणिक्यो नगरम-

ध्ये प्रविष्टः, तदंतर्देवदेवीमूर्तयः सप्रन्नावा दृष्टाः, विचित्रया मायया पौरान् विप्रतार्य ताः सर्वा दूरीकृताः, ततो नगरं गृहीतं. क्रमेण ससैन्यौ तौ पाटलीपुत्रपरिसरे गतौ, रुद्धं तन्नगरं, नंदो धर्मद्वारेण निर्गममभार्गयत्, ताभ्यामुक्तमेकरथे यावन्माति तावत्प्रमाणं वित्तदारासुतादिकं लात्वा निर्गच्छ? नंदेन तथैव कृतं.

एका नंदपुत्री रथस्थिता निर्गच्छंती पुनः पुनश्चंद्रगुप्तं पश्यति, नंदेन न्नणितं याहि? सा रथादुत्तीर्य चंद्रगुप्तरथे गत्वा यावदारुहति तावत्तद्रथे नवारका न्नग्नाः, अमंगलमिति ज्ञात्वा चंद्रगुप्तेन सा निषिद्धा, चाणिक्येनोक्तमिमां मा निवारय? नवपुरुषयुगानि यावत्तव वंशो न्नावीति, प्रतिपन्नं तेन. अथ परिव्राजकराजचंद्रगुप्तचाणिक्याः पाटलिपुरमध्ये प्रविष्टाः, गता राजगृहे राज्यं द्विधा विन्नज्य गृहीतं, तत्रैका विषकन्यास्ति, तां दृष्ट्वा परिव्राजकराजः कामविह्वलो जातः, चाणिक्येन सा तस्यैव दत्ता, तस्याः प्रथमसंगेनैव स विषार्तो जातः, यावता चंद्रगुप्तो विषप्रतीकारं करोति तावता चाणिक्येन न्रृकुटिः कृता, कर्णे चेमं श्लोकं पठितवान्—तुल्यार्थं तुल्यसामर्थ्यं । मर्मज्ञं व्यवसायिनं ॥ अर्धराज्यहरं मित्रं । यो न हन्यात्स हन्यते ॥ १ ॥ त-

नश्चंद्रगुप्तस्तत्पत्नीकाराद् दूरीभूतः, परिव्राजकराजस्तु मृतः. ततश्चंद्रगुप्तः संपूर्णं राज्यं करोति. परं नंदमनुष्याश्चौर्येण देशोपद्रवं कुर्वंति. एकदा चाणिक्यश्चौरदमनोपायं चिंतयन्नगराद्बहिर्गतः, तत्र नलदामकुविंदः स्वपुत्रं मत्कोटकैरुच्चाटितं दृष्ट्वा कोपात्तेषां विलं खनित्वा प्रज्वालयन् दृष्टः, चाणिक्येन चिंतितं योग्योऽयमिति तस्यैव तलारत्वं दत्तं, पश्चात्स चौरनिग्रहं करोति. प्रत्युत किंचिदुपकारादि न करोति, तेन सर्वेऽपि चौराः प्रकटिता व्यापादिताश्च, जातं निष्कंटकं राज्यं. अथ कोशार्थं चाणिक्य उपायं करोति, एकदा पाटलिपुत्रसंबंधिनो व्यवहारिणो भोजनार्थमाकारिताः, भोजनांते तेषां चंद्रहासमदिरा दत्ता, ते विह्वलीभूतास्तावता चाणिक्यः समुत्थाय नृत्यन्नेवं पठति—दो मज्झ धाउरत्ताइं। कंचणकुंडिआनि दंडं च ॥ रायावि अ मे सही। इत्थ विना मे होलं वाएहि ॥ १ ॥ इदं श्रुत्वापरः कश्चित्समुत्थाय जन्मनोऽपि यन्न प्रकटितं तद्वदति, इतः सहस्रयोजने हस्तिपददेशे टंककानां लक्षमस्ति, अत्रार्थे ममापि होलं वादय? अपरः पठति मया तिलाढक उप्तोऽस्ति, ततो मम ते तिला यल्लक्षाणां निष्पत्स्यंते. अत्रार्थे ममापि होलं वादय? अन्यः पठति तावंतो मे गात्रः संति,

यासां नवनीतेन महागिरिनदीप्रवाहो रुध्यते. अपरः प्राह तावंतो मे वरूवाः संति यासा-मेकदिनजातैः किशोरपुच्छकेशैः पाटलिपुरनगरमंकुलं छादयामि. अन्यः प्राह तादृशा मे शालयः संति, यद्वीजैः प्रत्यहं शालयो नवीना भवंति, अतार्थे ममापि होलं वादय? एवं सर्वेषां वित्तमर्यादां श्रुत्वा चाणिक्येन यथायोग्यं वित्तं गृहीतं. अथ चाणिक्यः सुवर्णोपार्जनोपायं चिंतयन् देवमाराराध, तुष्टेन देवेन तस्य जयिनः पाशका दत्ताः, चाणिक्येन तैः पाशकैः कश्चिन्नरः शिक्षितो द्यूतार्थं प्रेरितः, स गृहीतसुवर्णटंककस्थालः पुराभ्यंतरे भ्रमन्नेवं वक्ति, अहं यदि जयामि तदा सुवर्णटंककमेकं गृह्णामि, मां यद्यन्यो जयति तदा तस्य सुवर्णटंककस्थालमिदं ददामीति श्रुत्वा बहवो जनास्तेन समं द्यूतक्रीडां कुर्वंति, परं हारिमेव जना आप्नुवंति. स तु सर्वत्र जयति. एवं पाशकयुक्तस्य तत्पुरुषस्य पराजयो दुर्लभस्तथा मनुष्यत्वप्राप्तिर्दुर्लभेति पाशकदृष्टांतः. [ २ ]

'धन्नेति' भरतसत्कानि सर्वाण्यपि धान्यान्येकत्र संमील्य मध्ये सर्षपप्रस्थप्रक्षेपः केनचिद्देवेनाभिधीयते, तत्सर्वमेकीकृत्य कस्याश्चिदतिवृद्धाया दीयते, तस्या यथा सर्वधान्यानां प्र-

त्येकं पृथक्करणं डुष्करं, तथा मनुष्यत्वमपि दुर्लजं. ( ३ ) ' जूएत्ति ' एको राजा तस्याष्टोत्तरशतस्तंजालंकृता सजास्ति, स्तंजे स्तंजे च १०७ कोणाः संति. एकदा तस्य राज्ञः पुत्रो राजानं मारयित्वा स्वयं जोक्तुमीहते, तस्याध्यवसायो मंत्रिणा ज्ञातः, कथितश्च राज्ञे, राज्ञापि पुत्रायोक्तं हे पुत्र योऽस्माकमनुक्रमं न सहते, स द्यूतं खेलयति, यदि जयति तदा तस्य राज्यं दीयते, द्यूतक्रीमनविधिरयं वर्तते, कुमारस्यैकवारं दायो जवति, राज्ञो यथेछया जवंति. एवमष्टोत्तरशतस्तंजानामेकैकं कोणमष्टोत्तरशतवारं जयति, तदा तस्य राज्यं दीयते, त्वमप्येवं कुर्विति राज्ञोक्तं कुमारस्य. यथास्य कुमारस्यैतत्करणं डुष्करं, तथा मनुष्यत्वमपि दुर्लजं. ( ४ ) रयणत्ति ' एकस्मिन्नगरे कस्यचिद्व्यवहारिणो नानारत्नानि, स लोजान्न व्यापारयति. अन्यदा पितरि देशांतरगते पुत्रैः कोटिध्वजत्वार्थं दूरदेशांतरीयपुरुषाणां हस्ते तानि दत्तानि, जाताः पुत्राः कोटिध्वजाः, कियता कालेन पिता गृहमागतः, ज्ञातवान् रत्नविक्रीणनं, रोषं विधाय पुत्रानेवमूचे मम रत्नानि पश्चाद्दापयंतु, यथा तत्पश्चाद्वालनं डुष्करं, तथा मनुष्यत्वमपि दुर्लजं. ( ५ ) ' सुविणेत्ति ' पाटलिपुरात्कलाकुशलो मूलदेवो राजपुत्रो द्यूत-

व्यसनात्पित्रा पराभूतो निर्गतो गुटिकाकृतवामनरूप उज्जयिनीं गतः, तत्र तादृशा रूपेणैव तेन वीणाकला जनानां दर्शिता, विस्मिता जनाः, वीणाकलावार्ता सर्वत्र प्रसृता, श्रुता च देवदत्तया वेश्यया. ततस्तया तस्याकारणाय चेटी प्रहिता, तया चागत्यैवमुक्तं भो वामन! त्वां मत्स्वामिन्याकारयति, तेनोक्तं—या विचित्रविटकोटिनिघृष्टा । मद्यमांसनिरतातिनिकृष्टा ॥ कोमला वचसि चेतसि दुष्टा । तां भजंति गणिकां न विशिष्टाः ॥ १ ॥ वामनेनैवमुक्तेऽपि तया चेट्या विचित्रैः सामवचनैर्गृहमानीतः, देवदत्तया च तेन समं वीणावादो विहितः, वामनेन वीणाकलादिभिर्देवदत्ता जिता, पादयोर्निपत्यैवमूचे भो पुरुष! स्वरूपं प्रकटय? अनया कलया ज्ञायते त्वमीदृशो वामनरूपवान्नासि, मूलरूपं ते पृथग्भविष्यतीति तव रूपं प्रकटय? वामनेन वेश्यावचनरंजितेन स्वरूपं प्रकटितं, सापि भृशं तद्रूपचमत्कृता प्रकाममाग्रह्य स्वगृहे तं स्वभोगासक्तं चकार, अतीवतत्प्रीतिपात्रं बभूव. अन्यदा पूर्वं तस्या आसक्तवान् व्यवहारिपुत्रोऽचलनामा गृहे समायातः, अक्कयोक्तं वत्से! इभ्यपुत्रं भज? मुंचैनं निःस्वं मूलदेवं? तयोक्तं मूलदेवो गुणवानयमचलो निर्गुणः. अक्कयोक्तमुभयोः परीक्षा क्रि-



३

यने. नाव्यामुनयोः पार्श्वे इक्षव आनायिताः, मूलदेवेन निस्त्वचः कर्पूरवासिताः सुसंस्कृता आनीताः, अचलेन शकटं भृत्वेक्षव आनीताः, तथाप्यक्षावचसेक्षगुणेण पराभूतो मूलदेवो वेन्नातटं प्रस्थितः, अटव्यां गच्छतो मूलदेवस्योपवासत्रयं जातं, चतुर्थदिवसे क्वापि ग्रामे भिक्षायां गत्वा माषा लब्धाः, मूलदेवेन तद्भक्षणार्थं सरसि गच्छता कश्चिन्महातपस्वी दृष्टः, तदभिमुखं गत्वा निस्तारय मां? विस्तारय पात्रं? इत्यादिश्युक्तानिमान् माषान् गृहाणेत्युक्त्वा ते माषास्तस्मै दत्ताः, तदा तत्साहससंतुष्टा देवी गगनमार्गेऽवदत्त्वोः पथिक! मार्गय गाथार्द्धं पदकृतेन? ततो मूलदेवोऽवदत्—धन्नाणं खु नराणं । कुम्मासा हुंति साहुपारणए ॥ गणियं च देवदत्तं । गज सहस्सं च रज्जीणं ॥ १ ॥ तया चोक्तं ह्यचिरादपि ते सर्वः संजनिष्यति. तस्यामेव रात्रौ देवकुल्यां मूलदेवेन सुखेन स्ववदनप्रविष्टश्चंद्रः स्वप्ने दृष्टः, तदानीमेव तत्रैव सुप्तैकेन कार्पटिकेन तादृश एव स्वप्नो दृष्टः, मूलदेवः स्वस्तरादुत्थितो यावत्स्वप्नं विचारयति. तावत्सोऽपि स्वस्तरादुत्थाय स्वगुरोः पुरस्तं स्वप्नमाचख्यौ, गुरुरपि स्वप्नस्य घृतगुडमन्वितमंडकं प्राप्स्यसीति वभाषे, मूलदेवस्तत उत्थाय नगरांतः स्वप्नपाठकगृहे गत्वा घनं

विनयं कृत्वा स्वप्नपाठकाय स्वप्नमाचख्यौ, तेनोक्तं सप्तमदिवसे तव राज्यं भविष्यतीत्युक्त्वा स्वपुत्री तेन मूलदेवाय परिणायिता. अपुत्रस्तन्नगरस्वामी मृतः, पंचदिव्यैर्मूलदेवस्य राज्यं दत्तं, देवदत्तां च गणिकां तत्रानाय्य मूलदेवराजा स्वराज्ञीं चकार. अन्यदा तत्र व्यापारार्थमागतोऽचलव्यवहारी, राज्ञा मूलदेवेनोपलक्षितः, शुल्कमिषेण भृशं पराभूतः, स्वतेजो मूलदेवेन दर्शितं, अचलः स्वापराधं क्षमयामास, राज्ञीवचसा मूलदेवेन मुक्तः. अथ स कार्पटिकः स्वस्वप्नानुसारिस्वप्नदर्शिनं मूलदेवकुमारं राजानं जातं श्रुत्वा पुनस्तादृशस्वप्नार्थी तस्यामेव देवकुल्यां सुप्तः, परं तादृशं स्वप्नं न प्राप. एवं यथास्य कार्पटिकस्य तादृशस्वप्नप्राप्तिर्दुःप्राप्या, तथा मनुष्यत्वाद्भ्रष्टस्य जीवस्य मनुष्यत्वप्राप्तिर्दुःप्रापेति. (६)

'चक्रेति' इंद्रपुरे इंद्रदत्तराजा, तस्य २२ पुत्राः. अन्यदा तेन राज्ञैका मंत्रिपुत्र्यूढा, सा वणिक्पुत्रीति परिणीयोपेक्षिता, कदापि न भुक्ता. एकदा सा ऋतुस्नानं कुर्वती राज्ञा दृष्टा, पृष्टं च सेवकानां कस्येयं पत्नी, तैरुक्तं युष्माकं पत्नी मंत्रिपुत्री, राज्ञा तदावासे गत्वा सा भुक्ता, तस्याः पुत्रो जातः, स राजसदृश एव, यत उक्तं—ऋतुस्नानसमये यं पश्यति

नारी तत्सदृशं जनयति गर्भमिति. तया स्वपितुर्मंत्रिणो राजभोगसंभवगर्भप्रस्तावः प्रोक्तः,
मंत्रिणा तु तद्दिनं राज्ञोल्लापाभिज्ञानादिकं स्ववहिकायां लिखितं, क्रमाद् वृद्धिं गतः, स मं-
त्रिणैव पालितः, कदापि राज्ञो नैव दर्शितः, मंत्रिणा कलाचार्यपार्श्वे ७२ कलाः पाठितः, २२
पुत्रास्त्वविनिता न पठंति. अथ मथुरायां पुरि जितशत्रुपुत्री निवृत्तिनाम्नी कृतराधावेधवरप्र-
तिज्ञा स्वयंवरणमंडपे तिष्टति, तत्र २२ पुत्रपरिकरित इंद्रदत्तराजा गतः, मंत्र्यपि स्वपुत्रीपुत्रं
सार्धं लात्वा तेनैव सह तत्र गतः, अनेकदेशायातराजपुत्रेषूपविष्टेषु सत्स्विंद्रदत्तराज्ञा २२ स्व-
पुत्रा राधावेधसाधनायोत्थापितास्तैर्यथाक्रमं बाणावली मुक्ता, परं नैकेनापि राधावेधः साधि-
तः, बाणपात इतस्ततो वभूव, सर्वेऽप्यन्ये राजपुत्राः परस्परं दत्तताला हसिताः, इंद्रदत्तस्य
राज्ञो महान् खेदो जातः, मंत्रिणोक्तं राजन्! कथं खेदो विधीयते? मत्पुत्रीजातस्त्वत्पुत्रो
वर्तते, सोऽवश्यं राधावेधं साधयिष्यतीति प्रोच्य राज्ञः पुरः स पुत्र आनीतः, वहिकालि-
खितं साभिज्ञानं, तद्दिनवर्णा दर्शिताः, तेन पुत्रेण स्वपितरं राजानं प्रणम्य राधावेधस्थानेऽ-
धस्तैलभृतकटाहिकासंक्रांतोर्ध्वभ्रमच्चक्रारपुत्रिकामध्यस्थितकन्यादर्शितपुत्रिकानिवेशितदृष्टि-

रधोवदनेनोर्ध्वबाहुनोर्ध्वस्था पुत्तलिकैकेनैव बाणेन विद्धा, साधितो राधावेधः, कन्या च परिणीता, पितुः परमो हर्षो बभूव. २२ पुत्राणां महाविषादः समभूत्. अथ यथा राधावेधचक्रं दुर्जेयं, तथा मनुष्यत्वमपि दुःप्राप्यमिति. (७) 'चम्मेति' कच्छपस्तदुदाहरणं यथा—एको ह्रदः सहस्रयोजनप्रमाणः सर्वत्र शैवालव्याप्तः, क्वापि स्थाने एकं छिद्रं कच्छपग्रीवाप्रमाणं, एकेन कच्छपेन ग्रीवा प्रसारिता, दृष्टं सचंद्रनक्षत्रचक्रं, दृष्ट्वा स स्वकुटुंबाकारणाय मध्ये प्रविष्टः, स्वकुटुंबसहितमितस्ततो तच्छिद्रं गवेषयति, परं न पश्यति, यथा तस्य तच्छिद्रं दुःप्राप्यं. तथा मनुष्यत्वमपि दुःप्रापमिति. (८) 'जुगेति' युगसमिलादृष्टांतस्तथाहि—केनचिद्देवेन युगं समुद्रस्य पूर्वांते मुक्तं, तच्छिद्रान्निष्कास्य समिला समुद्रस्य पश्चिमांते मुक्ता, सा समिला सागरसलिलेनेतस्ततः प्रेर्यमाणा कदाचिद्दैवयोगेन पुनस्तच्छिद्रं प्रविशेन्न पुनर्मनुष्यजन्म लभेतेति. (९) 'परमाणुत्ति' केनचिद्देवेन कश्चित्स्तंभश्चूर्णीकृतः, तस्य परमाणवो नलिकायां भृताः, सा नलिका तेनैव देवेन मेरुमारुह्य फूत्कृता, उड्डीताश्चेतस्ततस्तत्परमाणवः, तानेकत्र संमील्य पुनस्तस्तंभस्य करणं यथा दुष्करं, तथेदं मनुष्यत्वं भ्रष्टं सत्पुनरपि प्राप्तुं दुष्करमिति दश दृष्टांताः.

॥ मूलम् ॥—समावन्ना ण संसारे । नाणागोत्तासु जाइसु ॥ कम्मा णाणाविहा कट्टु । पुढो विस्संभया पया ॥ २ ॥ व्याख्या—संसारे समापन्नाः, अत्र णं शब्दालंकारे प्राप्ताः प्रजा जंतुसमूहा विश्वभृतो भवंति. जगत्पूरका भवंति, किं कृत्वा? नानाविधासु पृथग्जातिष्वेकेंद्रियादिषु नानाविधानि कर्माणि कृत्वा, कीदृशीषु जातिषु? नानागोत्रासु नाना बहुप्रकारेण गोत्रं नाम यासां ता नानागोत्रास्तासु नानागोत्रासु. बहुविधानासु. ॥ २ ॥

॥ मूलम् ॥—एगया देवलोएसु । नरएसुवि एगया ॥ एगया आसुरं कायं । अहाकम्मं हिं गछइ ॥ ३ ॥ व्याख्या—एकदैकस्मिन् काले देवलोकेषु देव उत्पद्यते, पुनः स एव जीव एकदा नरकेषु नारक उत्पद्यते, एकदा आसुरं कायं, असुरकुमारभावं प्राप्नोति. एवं जीवो यथा कर्म निर्गछति, यस्मिन् समये जीवो यादृशानि कर्माणि बध्नाति [तादृशीं] गतिं जीवो व्रजतीत्यर्थः. ॥ ३ ॥

॥ मूलम् ॥—एगया खित्तिउ होइ । तउ चंमालबोक्कसो ॥ तउ कीडपयंगो य । तउ कुंथु पिपीलिआ ॥ ४ ॥ व्याख्या—जीव एकदा क्षत्रियो भवति, ततोऽनंतरं स जीवश्चंमा-

लो जवति, ततश्च बोक्कसोऽपि जीवो जवति. यस्य शूद्रः पिता जवति माता च ब्राह्मणी ज-वति, तत्पुत्रो बोक्कस उच्यते, ततस्तत्र जातौ धर्मस्य दुर्लजत्वात्कीटो जवति, च पुनः पतंगो जवति, ततश्च कुंथुर्जवति, पिपीलिका कीटिका भवति, ग्रंथांतरे एतेऽपि जातिकुलजेदा उक्ताः संति, यस्य ब्राह्मणः पिता शूद्री माता जवति स निषीद उच्यते, यस्य ब्राह्मणः पिता वैश्या माता जवति स चांबुष्ट उच्यते, यस्य च निषादः पितांबुष्टा च माता जवति स बोक्कस इत्युच्यते ॥ ४ ॥

॥ मूलम् ॥—एवमावट्टजोणीसु । पाणिणो कम्मकिव्विसा ॥ न निव्विज्जंति संसारे । सव्वठेसु व खत्तिया ॥ ५ ॥ व्याख्या—प्राणिनो जीवाः संसारे, एवममुना प्रकारेणावर्तयोनिषु न निर्विजंते नोद्विजंते नोद्विग्ना जवंति, आवर्तेन पुनः पुनः परिभ्रमणेन स्पृष्टा योनय आवर्तयोनयस्तेषु चतुरशीतिलक्षप्रकारेषु, कीदृशाः प्राणिनः? कर्मकिल्बिषाः, कर्मजिः किल्बिषा मलिना अधमा वा, केषु के इव नोद्विजंते? सर्वार्थेषु क्षत्रिया इव, सर्वे च तेऽर्थाश्च सर्वार्थास्तेषु धनकनकजूमिवनितागजाश्वादिपदार्थेषु क्षत्रिया राजान इव, तथा प्राणिनोऽपीत्यर्थः.

॥ मूलम् ॥—कम्मसंगे हि संमूढा । दुक्खिया बहुवेयणा ॥ अमाणुसासु जोणीसु । विणिहम्मंति पाणिणो ॥ ६ ॥ व्याख्या—प्राणिनो जीवा अमानुषीषु योनिषु मनुष्यवर्जितयोनिषु ' विणिहम्मंति ' विशेषेण निहन्यंते विशेषेण निपात्यंते, अर्थादेकेंद्रियद्वींद्रियत्रींद्रियचतुरिन्द्रियेषु वारंवारमुत्पद्यंत इत्यर्थः, कीदृशाः प्राणिनः? कर्मसंगैः कर्मसंयोगैः संमूढाः संत्रासाः, पुनः कीदृशाः? दुःखिताः, पुनः कीदृशाः? बहुवेदनाः. ॥ ६ ॥

॥ मूलम् ॥—कम्माणं तु पहाणाए । आणुपुवीकयाइउं ॥ जीवा सोहिमणुपत्ता । आययंति मणुस्सयं ॥ ७ ॥ व्याख्या—तु पुनर्जीवाः शोधिं दुष्टकर्मनाशस्वरूपां लघुकर्मणामनुप्राप्ताः संतो मनुष्यत्वमाददते नृजन्म प्राप्नुवंतीत्यर्थः, कयानुपूर्व्या? अनुक्रमेण शनैः शनैः कदाचित्कर्मणां मनुष्यगतिविघ्नकराणां प्रकर्षेण हानिः प्रहानिस्तया प्रहाण्या प्रकर्षेण हीनतया.

॥ मूलम् ॥—माणुसं विग्गहं लद्धा । सुईधम्मस्स दुल्लहा ॥ जं सुच्चा पडिवज्जंति । तवखंतिमहिंसयं ॥ ८ ॥ व्याख्या—मानुष्यं विग्रहं लब्ध्वा मानुष्यं शरीरं प्राप्य तस्य धर्मस्य श्रुतिर्दुर्लभा, धर्मश्रवणं दुःप्राप्यमित्यर्थः, यं धर्मं श्रुत्वा जीवास्तप उपवासादिकं क्षांतिं क्षु-

…महिंस्रतां सदयत्वं प्रतिपद्यंतेंगीकुर्वंति, यस्य धर्मस्य श्रवणाज्जीवास्तपस्विनो भवंति, क्षमावंतो भवंति, दयालवश्च भवंतीत्युक्तेन बौद्धादीनां धर्मनिषेधः कृतः. ॥ ८ ॥

॥ मूलम् ॥—आहच्च सवणं लद्धुं । सद्धा परमदुल्लहा ॥ सुच्चा नेयाउअमग्गं । बहवे परिभस्सई ॥ ९ ॥ व्याख्या—' आहच्चेति ' कदाचित् श्रवणं धर्मश्रवणं लब्धं प्राप्तं, तदा धर्मश्रवणं लब्ध्वापि श्रद्धा धर्मे रुचिः परमदुर्लभात्यंतदुःप्राप्या, श्रद्धाया दुर्लभे हेतुमाह—बहवो मनुष्या नैयायिकं न्यायमार्गं जैनमार्गं श्रुत्वा परिभ्रस्यंति, न्यायमार्गात्स्खलंते, न्याये पंचसमवायकारणे भवं नैयायिकं, पंचसमवायकारणवादकं जैनं दर्शनं. ॥ ९ ॥ अत्र निह्नवानां दृष्टांताः, तत्र प्रथमनिह्नवोदाहरणं यथा—

कुंडपुरे श्रीवीरस्वसा सुदर्शना, तस्याः पुत्रो जमालिः, वीरपुत्री प्रियदर्शना तस्य पत्नी, तया सह जमालिर्वीरपादांते दीक्षां जग्राह, जमालिना सह पंचशतक्षत्रियाः प्रव्रज्यां जगृहुः, प्रियदर्शनया सह सहस्रस्त्रियः प्रव्रज्यां जगृहुः, स्वामिना स्थविराणामर्पितः, स्थविरैश्चास्यैकादशांगान्यध्यापितानि, अर्पितश्च पंचशतसाधुसहस्रसाध्वीपरिवारः. अथ जमालिर्भग-

नाऽननुज्ञातः क्रमेण विहारं कुर्वन् श्रावस्तिं गतः, तिंदुकोद्याने कोष्टकचैत्ये समवसृतः, अंतप्रांताहारैस्तत्र तस्योत्पन्नो रोगः, तेन न शक्नोत्युपविष्टुं, वदति च जमालिः शिष्यान्प्रति मदर्थं संस्तारकं कुरुत? शिष्येण संस्तारकः कर्तुमारब्धः, उपविष्टुमशक्नुवता जमालिना त्वरितं हे शिष्य! कृतः संस्तारकः तेनोक्तं न कृतः, किंतु क्रियमाणोऽस्ति. ततस्तेन चिंतितं यद्भगवान् महावीर आख्याति क्रियमाणं कृतमिति, तन्मिथ्या प्रत्यक्षमिदं दृश्यते, क्रियमाणेऽपि संस्तारके कार्त्स्न्येनाऽनिष्पत्त्या कृतत्वाभावात्. एवं स्वमनसि विचार्य सर्वान् स्वशिष्यानाकार्यैवमाचष्टे, भो शिष्या यद्भगवानेवमाचष्टे 'किज्जमाणे कडे, चलमाणे चलिए, उदीरिज्ज उदीरिए' इत्यादि. तत्सर्वं मिथ्या, क्रियमाणेऽपि संस्तारके शयनरूपार्थसाधकत्वाभावेन कृतत्वाभावादिति जमालिना प्रोक्ते सति केचिन्निर्ग्रंथा एनमर्थं श्रद्दधति. केचिन्न श्रद्दधते. ये न श्रद्दधति ते जमालिमेवोपसंपद्य विचरंति, ये च न श्रद्दधति त एवमाहुर्हे जमाले! श्रीमन्महावीरस्यायमाशयः—यत्क्रियमाणं स्यात्तदेव कृतं भवति, क्रियमाणत्वपर्यायविशिष्टकृतत्वं, क्रियमाणत्वकृतत्वपर्यायाभ्यां पूर्वोत्तरावस्थाभ्यामेकस्मिन्नेवार्थे संभवति, न

तु तयोः पृथक्पदार्थांतरसंक्रमो जवतीति वीरवाक्यसत्यतास्तीति प्रतिपद्यस्व? ' कडेमाणे कडे, चलिज्जमाणे चलिए ' इत्यादि. एवं तैः शिष्यैरुक्तोऽपि तन्न प्रतिपद्यते, स्ववाक्कदाग्रहं न मुंचति जमालिः, तदा ते मुक्त्वा जमालिं श्रीमहावीरं प्रतिपन्नाः, शनैः शनैरपरेऽपि महावीरं प्रतिपन्नाः, सहस्रसाध्वीपरिवृता प्रियदर्शना जमालिवाक्यं सत्यं मन्यमाना पृथिव्यां विचरति. एकदा स ढंककुंजकारशालायामुत्तीर्णा, ढंकेन तस्याः प्रतिबोधनाय वस्त्रांतेंगारः क्षिप्तस्तया च दह्यमानं स्ववस्त्रं दृष्ट्वा दग्धं मम वस्त्रमिति प्रोक्तं, कुंजकारेणोक्तं हे साध्वि! जवन्मते ' डज्झमाणं डज्झं ' इति नोच्यते, तत्कथमिदं प्रोक्तं जवत्या? इत्यादि कुंजकारयुक्तिजिः सा प्रतिबुद्धा जमालिंप्रति वीरवाक्यसत्यतायुक्तीराख्यत, जमालिस्तु नैव प्रतिपद्यते, तया सहस्रसाध्वीपरिवृतया जमालिर्मुक्तः, श्रीवीरः प्रतिपन्नः. एकदा श्रीवीरश्चंपानगर्यां समवसृतः, जमालिस्तत्समवसरणे समागतः श्रीमहावीरंप्रत्याह हे जगवंस्तव शिष्याश्छद्मस्था एव विपत्स्यंते, अहं तु केवली जातः. अथ तं गौतमः प्राह हे जमाले! यदि त्वं केवल्यसि तदा त्वं मत्प्रश्नद्वयव्याख्यानं कुरु? केवलिनां हि ज्ञानदर्शने न क्वचित्स्खलतः, प्रश्नद्वयं चेदं—

लोकः शाश्वतो वाऽशाश्वतो वा? जीवः शाश्वतो वाऽशाश्वतो वा? इति गौतमेन पृष्टे जमालिर्मौनतागेव स्थितः. तदानीं श्रीमहावीरः प्राह हे जमाले! संति मम शिष्या एके केचिद्ये प्रश्नद्वयमिदं व्याख्यांति, तथाहि—हे जमालेऽयंलोकः पूर्वं नाभूत्, अग्रे न भविष्यति, सांप्रतं नास्तीति वक्तुं न शक्यते, तस्मादयं लोकस्त्रिकालस्थायित्वेन शाश्वतः, उत्सर्पिणीविषयो भूत्वावसर्पिणीविषयो भवति, इत्यादिपर्यायैरशाश्वत इति, जीवोऽपि त्रिकालविषयित्वेन शाश्वतः, देवत्वमनुष्यत्वपर्यायैरशाश्वत इति. एवमाख्यातं भगवतो वाक्यं जमालिर्न श्रद्दधे. ततो निःक्रांतः स आत्मानं परांश्च व्युद्ग्राहयन् बहून् वर्षान् यावत् श्रामण्यपर्यायं पालयित्वा बहुभिः षष्ठाष्टमादिभिरात्मानं भावयित्वाऽर्धमासिक्या संलेखनयाऽनशनमाराध्य 'कडेमाणे कडेत्ति' उत्सूत्रमनालोच्य कालमासे कालं कृत्वा लांतककल्पे त्रयोदशसागरोपमस्थित्या किल्विषदेवत्वेनोत्पन्नः, तदुत्सूत्रप्ररूपणेन च बहुसंसारं समुपार्जितवान्. यदुक्तं भगवत्यां—पंचेंदियतिरिक्खजोणियदेवमणुस्सभवग्गहणाइं संसारमणुपरियट्टित्ता, तओ पच्छा सिज्झिस्सइ, बुज्झिस्सइ, सव्वदुक्खाणमंतं करिस्सइ इति प्रथमनिह्नवजमाल्युदाहरणं. (१) अथ द्वितीयनिह्नवा-

दाहरणं कथ्यते—

राजगृहे नगरे गुणशिलके चैत्ये चतुर्दशपूर्वपाठी वसुनामाचार्यः समवसृतः, तच्छिष्यस्तिष्यगुप्तोऽस्ति. सोऽन्यदा सर्वात्मप्रवादपूर्वस्येदमालापकं पठति, यथा—एगे भंते जीवप्पएसे जीवेत्ति वित्तवं सिया, णो इणठे समठे, एवं दो जीवपएसे तिन्नि संखिज्जा, असंखिज्जा वा, जाव एगपएसेण वि अणंतो जीवत्ति वत्तवं सिया, णो इणठे समठे, एवं दो जीवपएसे तिन्नि संखिज्जा, असंखिज्जा वा, तम्हा कसिणे पडिपुन्ने लोगागासपएसे तुल्लपएसे जीवेत्ति वत्तवं सिआ, इत्यादि. अत्र स विप्रतिपन्नः, यदि सर्वे जीवप्रदेशा एकप्रदेशहीना जीवव्यपदेशं न लभंते, स चैकैकः सर्वांतिमो जीव इति वक्तव्यः स्यात्तद्भावनाभावितत्वात्, इति तस्यांतप्रदेशे जीवभ्रांतिः. ततः स शिष्य आमलकप्पानगर्यां गतः, तत्र मित्रश्रीनाम्ना श्रावकेण स्वगृहे निमंत्रितः, लड्डुकांतिमप्रदेश एकः, सेवनिकाखाद्यांतिमप्रदेश एक एव, भृतहिंगिकालध्यादेक एव, कूरादिकरणं, भृतघृतपात्रमध्यादेक एव बिंदुः. एवं सर्वसंबंध्येकैकप्रदेशो दत्तः, पुनः श्राद्धेनोक्तं भगवन् यूयं प्रतिलाभिताः, वयं कृतार्थाः कृताः, तेनोक्तं भोः

श्राद्ध! किं त्वया दत्तं? श्रावकेणोक्तं तव सिद्धांतानुसारेण मया पूर्णं दत्तं, अंतिमेऽवयवे द-
त्ते पूर्णोऽवयवी दत्तः, अंतिमे प्रदेशे यथा जीवस्तथा सर्वोऽप्यवयवी अंत्यावासे वक्तव्य इति
वीरसिद्धांतानुसारेण न किंचिन्मया दत्तमस्तीत्यादियुक्तिभिर्मित्रश्रीश्राद्धेन स प्रतिबोधितः.
इति श्रीद्वितीयनिह्नवतिष्यगुप्तोदाहरणं. (२) एतौ द्वौ निह्नवौ श्रीवीरे जीवत्येवाभूतां. अ-
थ तृतीयनिह्नवोदाहरणं कथ्यते—

श्रीवीरनिर्वाणात् २१४ वर्षेषु गतेषु श्वेतांबिकायां पोलासोद्याने आषाढाचार्याः स्वशिष्या-
नागाढयोगानुद्वाहयंतो हृदयशूलेन रात्रावकस्मान्मृताः, स्वर्गं जग्मुः. तत्रोपयोगे दत्ते स्नेहा-
त्स्वदेहमधिष्ठाय शिष्याणामागाढयोगक्रियाः पूर्णाश्चक्रुः, अन्यं च नवीनमाचार्यं संस्थाप्य
सर्वेषां स्ववृत्तांतं निवेद्य स्वस्थानं ययुः, तच्छिष्यास्तत्स्वरूपं दृष्ट्वाऽव्यक्तमतं प्रतिपन्नाः, न ज्ञा-
यते को देवः कः श्रमण इति चिंतयंति वदंति च, न कोऽपि कंचिद्वंदते, सर्वोऽपि व्यवहार-
स्तैर्लुप्तः. एकदा ते सर्वेऽपि राजगृहं गताः, तत्र परमश्रावकेण मौर्यवंशोत्पन्नेन बलभद्रनृपे-
ण तत्प्रतिबोधाय चोरा एते इति कृत्वा धृताः, यष्टिमुष्ट्यादिभिर्मारिताः, ते कथयंति नो

महाराज ! त्वं श्रमणोपासकः, वयं श्रमणाः, कस्मादस्माकमनर्थं कारयसि ? राज्ञोक्तमेव मा वदंतु, युष्माकमव्यक्तं मतं, तदनुसारेण न विद्मो वयं यद्भवंतः श्रमणा भवन्मतापेक्षया वयं न श्रमणोपासकाः, इत्यादि वाग्युक्तिभिः ते प्रतिबुद्धाः. इति तृतीयनिह्नवाव्यक्तमतसाधू-

दाहरणं. ( ३ ). अथ चतुर्थनिह्नवोदाहरणं यथा—

वीरात् २२० वर्षेषु गतेषु मिथिलायां लक्ष्मीगृहोद्याने महागिरिशिष्यः कोण्डिन्यनामा-स्ति, तस्यापि शिष्योऽश्वमित्रः. अन्यदाऽनुप्रवादपूर्वस्य नैपुणिकनामकं वस्तु पठन्निसमालाप-कं पठितवान्, यथा—सव्वे पडुपन्ननेरइया वुच्छिज्जिस्संति, एवं जाव वेमाणियंति. एतदा-लापकार्थमसावित्थं विचारितवान्, सर्वे नैरयिका देवाश्च यदि व्युच्छेदं प्राप्स्यंतीत्यत्र रहस्य-मुक्तं, तदावश्यं सर्वनैरयिकादयः क्षणविनश्वराः संतीति क्षणक्षयवादं प्ररूपयन्नसावेकदा रा-जगृहे गतः, तत्र शौल्किकैः श्रावकैः तं कुट्टयितुमारेभे. स प्राह यूयं श्राद्धाः, वयं साधवः, कथं कुट्यते ? श्रावका ऊचुर्भवन्मतेन वयं श्राद्धा भवद्भिर्दृष्टास्ते विनष्टाः, वयं तु नवीना ए-वोत्पन्नाः, ये भवंतो यतयः पूर्वमस्माभिर्दृष्टास्ते विनष्टाः, यूयं तु नवीना एव क्षणक्षयवादि-

त्वान्नवन्मतस्येति श्रावकैः स शिक्षितः प्रतिबुद्धः. इति चतुर्थनिह्नवोदाहरणं. (४) अथ पंचमनिह्नवोदाहरणं—

वीरात् द्विशताष्टाविंशतिवर्षेषु गतेषु उल्लुकानदीतीरे एकस्मिन् खेटवनपुरे उल्लुकातीताभिधानं वनमस्ति, तत्र महागिरिशिष्यो धनगुप्त उल्लुकातीतपरत्रतीरे तिष्ठति, तस्य शिष्यो गंगाचार्यः पूर्वतीरे तिष्ठति, स स्वगुरुवंदनार्थं परत्र तीरे जिगमिषुर्नद्यामुत्तरन् खल्वाटमस्तकत्वेनाधः शीतमुपरि चातप इति क्रियाद्वयं युगपदेवानुभवन् 'जुगवं दो नत्थि उवओगा' इति भगवद्वचनमन्यथा मन्यमानो निह्नवो जातः, आचार्यैर्बहुयुक्तिभिर्बोधितोऽपि न मन्यते. एकदा स राजगृहे वीरप्रभोद्याने मणिनागयक्षभवने उत्तीर्णः, तत्र व्याख्यानागतलोकानां पुरः क्रियाद्वयस्य युगपदनुभवो भवतीति स्वमतं प्ररूपयन् यक्षेण मुद्गरमुत्पाट्य कोपं च दर्शयित्वा तर्जितोऽरे मयात्रैव समवसृतवीरमुखात् श्रुतं, यत्क्रियाद्वयस्यानुभवो युगपन्न भवति, समयसूक्ष्मत्वेन युगपदनुभवाभिमानो भ्रम एवेति, त्वं किं वीरादप्यधिक एवेति यक्षेणैव स प्रतिबोधितः. इति पंचमनिह्नवकथा. (५) अथ षष्ठनिह्नवोदाहरणं कथ्यते—

महाराज! त्वं श्रमणोपासकः, वयं श्रमणाः, कस्मादस्माकमनर्थं कारयसि? राज्ञोक्तमेव मा वदंतु, युष्माकमव्यक्तं मतं, तदनुसारेण न विद्मो वयं यद्भवंतः श्रमणा नवन्मतापेक्षया वयं न श्रमणोपासकाः, इत्यादि वाग्युक्तिभिः ते प्रतिबुद्धाः. इति तृतीयनिह्नवाव्यक्तमतसाधूदाहरणं. (३). अथ चतुर्थनिह्नवोदाहरणं यथा—

वीरात् २२० वर्षेषु गतेषु मिथिलायां लक्ष्मीगृहोद्याने महागिरिशिष्यः कोण्डिन्यनामास्ति, तस्यापि शिष्योऽश्वमित्रः. अन्यदाऽनुप्रवादपूर्वस्य नैपुणिकनामकं वस्तु पठन्निममालापकं पठितवान्, यथा—सव्वे पडुपन्ननेरइया वुच्छिजिस्संति, एवं जाव वेमाणियंति. एतदालापकार्थमसावित्थं विचारितवान्, सर्वे नैरयिका देवाश्च यदि व्युच्छेदं प्राप्स्यंतीत्यत्र रहस्यमुक्तं, तदावश्यं सर्वनैरयिकादयः क्षणविनश्वराः संतीति क्षणक्षयवादं प्ररूपयन्नसावेकदा राजगृहे गतः, तत्र शौल्किकैः श्रावकैः तं कुट्टयितुमारेभे. स प्राह यूयं श्राद्धाः, वयं साधवः, कथं कुट्यते? श्रावका ऊचुर्भवन्मतेन वयं श्राद्धा भवद्भिर्दृष्टास्ते विनष्टाः, वयं तु नवीना एवोत्पन्नाः, ये भवंतो यतयः पूर्वमस्माभिर्दृष्टास्ते विनष्टाः, यूयं तु नवीना एव क्षणक्षयवादि-

त्वाद्भवन्मतस्येति श्रावकैः स शिक्षितः प्रतिबुद्धः. इति चतुर्थनिह्नवोदाहरणं. ( ४ ) अथ पंचमनिह्नवोदाहरणं—

वीरात् द्विशताष्टाविंशतिवर्षेषु गतेषु उल्लुकानदीतीरे एकस्मिन् खेटवनपुरे उल्लुकातीताभिधानं वनमस्ति, तत्र महागिरिशिष्यो धनगुप्त उल्लुकातीतपरत्रतीरे तिष्ठति, तस्य शिष्यो गंगाचार्यः पूर्वतीरे तिष्ठति, स स्वगुरुवंदनार्थं परत्र तीरे जिगमिषुर्नद्यामुत्तरन् खल्वाटमस्तकत्वेनाधः शीतमुपरि चातप इति क्रियाद्वयं युगपदेवानुभवन् ' जुगवं दो नत्थि उवओगा ' इति भगवद्वचनमन्यथा मन्यमानो निह्नवो जातः, आचार्यैर्बहुयुक्तिभिर्बोधितोऽपि न मन्यते. एकदा स राजगृहे वीरप्रभोद्याने मणिनागयक्षभवने उत्तीर्णः, तत्र व्याख्यानागतलोकानां पुरः क्रियाद्वयस्य युगपदनुभवो भवतीति स्वमतं प्ररूपयन् यक्षेण मुद्गरमुत्पाट्य कोपं च दर्शयित्वा तर्जितोऽरे मयात्रैव समवसृतवीरमुखात् श्रुतं, यत्क्रियाद्वयस्यानुभवो युगपन्न भवति, समयसूक्ष्मत्वेन युगपदनुभवाभिमानो भ्रम एवेति, त्वं किं वीरादप्यधिक एवेति यक्षेणैव स प्रतिबोधितः. इति पंचमनिह्नवकथा. ( ५ ) अथ षष्ठनिह्नवोदाहरणं कथ्यते—

वीरात्पंचशतचतुश्चत्वारिंशद्वर्षेषु गतेष्वंतरंजिकापुर्यां भूतगृहं चैत्यं, तत्र श्रीगुप्तनामाचार्याः समवसृताः, तद्वंदनार्थं प्रत्यासन्नाद् ग्रामाद्रोहगुप्तः शिष्यः समायातः, स एकमुदरबद्धलोहपट्टं जंबूवृक्षशाखाकरं च परिव्राजकं दृष्ट्वा पप्रच्छ किमिदमिति, स प्राह ज्ञानेन ममोदरं स्फुटति, तेनात्र लोहपट्टो बद्धोऽस्ति, जंबूद्वीपे च मत्तुल्यः कोऽपि नास्तीति जंबूशाखा करे बद्धास्तीति, परिव्राजकेन तदानीमेव पटहो वादितो नास्ति विश्वे कश्चिद्यो मया सह वादं करोति, रोहगुप्तेनाहं वादं करिष्यामीति वदता पटहो वारितः, स परिव्राजकस्ततो राजद्वारे गतः, रोहगुप्तस्तु गुरुसमीपे समायातः, पटहच्छोभकरणवृत्तांतः कथितः, गुरव ऊचुर्वरं न कृतं, स विविधविद्याबलवान्, यदि त्वं स्याद्वादयुक्तिभिस्तं वादे पराजेष्यसि, तदासौ कुविद्याभिस्तवोपद्रवं करिष्यति. रोहगुप्तः प्राह गुरुभिस्तथा मम प्रसादः कार्यो यथा मम वादे जयः स्यादुपद्रवश्च यः न कश्चित् स्यात्. गुरुभिस्तस्य मयूरीनकुलीप्रमुखा विद्या दत्ताः, रजोहरणं चाभिमंत्र्य दत्तं, यदेमाभिर्विद्याभिस्तव तस्य पराभवो न तिष्ठति, तदा तत्कुविद्याभिमुखमिदं रजोहरणं भ्रामणीयं, गुरुं वंदित्वा स राजसभायां गतः, तत्र मिलितौ

वादिप्रतिवादिनौ, रोहगुप्तेनोक्तं वराकोऽयं परिव्राजकः किं जानाति? पूर्वपक्षो मयास्यैव द-त्तः, यथेष्टमसौ मे प्रश्नयतु? परिव्राजकेन चिंतितमसौ पूर्णविद्यावान् मया केनापि प्रकारे-ण जेतुमशक्यस्ततोऽस्यैव सिद्धांतपक्षमहं गृह्णामि, न ह्यसौ स्वसिद्धांतपक्षमुत्थापयिष्यति, ममै-व जयो भविष्यतीति विचिंत्य परिव्राजकेनोक्तमहं राशिद्वयमंगीकुर्वे, जीवराशिरजीवराशि-श्च, पुण्यराशिः पापराशिश्चेत्यादि. बुद्धिमता रोहगुप्तेन तदानीं जीवोऽजीवो नो जीवश्चेति रा-शित्रयमुक्तं. जीवास्त्रसादयः, अजीवा घटादयः, नोजीवा गृहकोकिला छिन्नपुच्छास्ति, यथा दंडकस्य दंडस्यादिमध्यमंत्यं चेति प्रकारत्रयं. एवं सर्वत्रेत्यादिवचोभिः स परिव्राजको निर्लोठितो रोहगुप्तस्याभिमुखं वृश्चिकान् मुमोच, रोहगुप्तस्तु मयूरानमुचत्, मयूरैस्तु ते सर्वे भक्षिताः. ततः परिव्राजकः सर्पानमुचत्, रोहगुप्तस्तु नकुलान् मुमोच, नकुलैस्तु निर्नाशिताः सर्पाः, त-तः स परिव्राजक उंदरान् मुमोच, रोहगुप्तस्तु मार्जारान् मुमोच, मार्जारैस्तु ते भक्षिताः. ततः परिव्राजकेन मृगा मुक्ताः, रोहगुप्तेन व्याघ्रा मुक्ताः, व्याघ्रैर्मृगा भक्षिताः. ततः परिव्रा-जकेन शूकरा मुक्ताः, रोहगुप्तेन तु सिंहा मुक्ताः, सिंहैः शूकरा भक्षिताः. एवं परिव्राजकेन

ये ये जीवा मुक्तास्तत्प्रतिपक्षा रोहगुप्तेन मुक्तास्तैश्च ते विनाशिताः. अथात्यंतखिन्नेन परिव्राजकेन गर्दभी मुक्ता, रोहगुप्तेन सा रजोहरणेनाहता परिव्राजकस्यैवोपरि विष्टां कृत्वा गता. ततः स परिव्राजको राजादिभिर्हीलितो राजद्वाराङ्गले गृहीत्वा बहिः कृतः. अथ रोहगुप्तः परिव्राजकं जित्वा गुरुसमीपे समागतः, सर्वं वादस्वरूपं जगौ, गुरुणोक्तं वरं कृतं, परं त्वया राजसभायां गत्वा राशित्रयस्थापनाविषयं मिथ्यादुःकृतं देयं, जिनशासने राशिद्वयस्यैव व्यवस्थापनात्, रोहगुप्तोऽवदन्मया तादृशायां राजसभायां गत्वा मिथ्यादुःकृतं दत्वा स्ववचनमप्रमाणीकर्तुमशक्यं. गुरुणोक्तं नात्र त्रपा कार्या, अवश्यं तत्र गत्वा मिथ्यादुःकृतं देहि? एवं वारंवारं गुरुणोक्तः खिन्नः प्रकामं धृष्टो भूत्वावदद्राशित्रयमेवास्ति, नात्र कश्चिद्दोषः, ततो गुरुशिष्ययोरेव वादो लग्नः, आचार्या राजद्वारं गताः, शिष्येण समं वादं कर्तुमारेभिरे, वादं कुर्वतोस्तयोः षण्मासा गताः, राज्ञोक्तं मम राजकार्यं सीदति, भवतां वादसमाप्तिर्न जाता, ततो यांतु स्वस्थाने भवंतः, गुरुभिरुक्तं कल्यदिवसे वादनिर्णयं करिष्यामि. ततः प्रभाते राजादिजनपरिवृता गुरवः कुत्रिकापणे समागताः, तद्धनिकं जगुर्देहि जीवानिति

गुरुणोक्ते तेन कुमारकुमारीहस्त्यश्वाद्यनेके जीवा दर्शिताः, देह्यजीवानिति गुरुणोक्ते तेन घटपट्टादयोऽर्था दर्शिताः, देहि नोजीवानिति गुरुणोक्ते कुत्रिकापणधनिकः प्राह न संति लोकत्रये नोजीवाः. यल्लोकत्रये भवति तदेव कुत्रिकापणे भवति नान्यत्. एवं चत्वारिंशच्छत-प्रश्नकरणेन निर्लोठितो रोहगुप्तो निर्विषयीकृतः, स गणान्निह्नव इति कृत्वा निष्कासितः, तेन वैशेषिकमतं प्रकटीकृतं. षट् पदार्थास्तेनैव प्ररूपिताः, इति च्लूर्ज स पठ्यते. इति षष्ठ-निह्नवकथा. ( ६ ) अथ सप्तमनिह्नवकथा यथा—

श्रीवीरपंचशतचतुरशीतिवर्षेषु गतेषु दशपुरे इक्षुगृहोद्याने आर्यरक्षितसूरिः समायातः, तस्य गोष्ठामाहिलः १, फल्गुरक्षितः २, दुर्बलिकापुष्पश्चेति ३ शिष्यत्रयं वर्तते, इतश्च मथुरायामक्रियावादिजिनः. तत्र प्रतिवादी कोऽपि नास्तीति तत्रत्यसंघेनार्यरक्षितसूरेर्ज्ञापितं, तैश्च तत्र गोष्ठामाहिलो वादलब्धिमानिति प्रेषितः, तेन तत्र गत्वा राजसभायां स पराजितः, मथुराश्राद्धैश्च गोष्ठामाहिलो वर्षाचतुर्मासकं स्थापितः, तावता दशपुरे श्रीआर्यरक्षितसूरिः स्वमरणमासन्नं ज्ञात्वा स्वपट्टस्थापनायामेवं चिंतयति—वुढो गणहरसद्दो । गोअमाईहिं धी-

रपुरिसेहिं ॥ जो तं ठवेइ अपछे । जाणंतो सो महापावो ॥ १ ॥ एवं चिंतयित्वा सर्वोऽपि संघ आकारितः, तस्याग्रे सूरिणोक्तमहं गोष्टामाहिलंप्रति घृतघटसदृशो जातः, यथा घृतघटाद् घृतमपनीयते, तदा बहवो घृतबिंदवस्तल्लग्नास्तिष्टंति, तथा मया यदा गोष्टामाहिलः पाठितस्तदा मया स्वकोष्टे बहवो विद्यांशा रक्षिताः, फल्गुरक्षितंप्रत्यहं तैलघटसदृशो जातः, यथा तैलघटात्तैलमपनीयते, तदा तत्र तैलबिंदवः स्तोका एव तिष्टंति, तथा मया यदा फल्गुरक्षितः पाठितस्तदास्य कोष्टे मया घना विद्याः क्षिप्ताः, स्तोका एव रक्षिताः, दुर्बलिकापुष्पंप्रत्यहं निष्पापघटसदृशो जातः, यथा निष्पापघटान्निष्पापा अपनीयंते, तदा नैकोऽपि तत्र तिष्टति, तथा यदा मया दुर्बलिकापुष्पः पाठितस्तदास्य कोष्टे सर्वा विद्याः क्षिप्ताः, नैकापि विद्या रक्षितास्तीत्यार्यरक्षिकसूरिणोक्ते संघः प्राह भगवन्! दुर्बलिकापुष्प एवाचार्यः क्रियतां? तस्यैव सर्वविद्यास्पदत्वेन योग्यत्वात्. तदा संघवचः श्रुत्वार्यरक्षितसूरिभिः स्वपट्टे दुर्बलिकापुष्पसूरिः कृतः, उक्तं च दुर्बलिकापुष्पस्य हे वत्स! यथाहं फल्गुरक्षितगोष्टामाहिल्लादीनां लालनपालनविधौ प्रवृत्तस्तथा त्वयापि प्रवर्तितव्यं, फल्गुरक्षितादीनामपि गुरु-

गच्छद्भिस्तैः परस्परमुक्तं भो आत्मभिः सम्यग् राज्ञो न पृष्टं, का मथुरा ग्राह्येति. सहस्रमल्लेनोक्तं द्वे अपि मथुरे ग्राह्ये, यत्र दुष्करं तत्राहं यास्यामि, एवमुक्त्वा स गतः पांडुमथुरायां, गृहीता च सा बलेन, उक्तं च—सूरे त्यागिनि विदुषि च । वसति जनः स च जनाद्गुणी भवति ॥ गुणवति धनं धनाच्छ्रीः । श्रीमत्या जायते राज्यं ॥ १ ॥ नगरीं गृहीत्वा स पश्चादायातः, राज्ञा तुष्टेन भणितं भो तुष्टोऽहं मार्गय मनोऽभीष्टं? ततस्तेनोक्तं मम देहि सर्वत्र स्वेच्छाभ्रमणं? दत्तं राज्ञा. अथासौ निरंतरं स्वेच्छया सर्वत्र भ्रमन् रात्रौ मध्याह्नेऽन्त्यप्रहरे वा समायाति, कदाचिन्नायात्यपि स्वगृहे, दिवसे यावद् गृहे नायाति तावत्तस्य भार्या न भुंक्ते, रात्रौ यावन्नायाति तावन्न स्वपिति. अन्यदा सा प्रकामं खिन्ना श्वश्रूःप्रत्याह हे मातस्त्वत्पुत्रोऽर्धरात्रे कदाचिदायाति, कदाचिदंत्यप्रहरे समायाति, कदाचिन्नायात्यपि, दिवसेऽपि रात्रावपि चायमकाल एव समायाति, अहं निद्रार्ता क्षुधार्ता च तिष्टामि, तदा श्वश्वा भणितमद्य त्वया द्वारं दत्वा शयनीयं, अहं जाग्रती स्थास्यामि, तद्दिवसे रात्रौ तथैव कृतं, स मध्यरात्रौ समायातः, द्वारमुद्घाटयेत्युक्तवान्. मात्रा भणितं यत्रास्यां वेलायां द्वाराण्युद्घाटानि

न्नवंति तत्र व्रज? स रोषान्निर्गतः, कृष्णाचार्योपाश्रय एवोद्घाटितो दृष्टः, मध्ये प्रविष्टः, वं-
दित्वा न्नणति मां प्रव्राजयत? आचार्या नेच्छंति, तेन स्वयमेव लोचः कृतः. ततस्तस्याचार्यै-
र्लिंगं दत्तं, आचार्यास्तमादाय ततो विहृताः, कालांतरेण तत्रैव पुनरायाताः. राजा तद्वंद-
नार्थमायातः, गुरूननुज्ञाप्य सहस्रमल्लः स्वगृहे आकारितः, तस्य स्वगृहागतस्य रत्नकंबलं
राज्ञा दत्तं, सोऽपि गुरुसमीपे समायातः, गुरुन्निस्तद्रत्नकंबलमनापृच्छ्य गृहीतं ज्ञात्वा सह-
स्रमल्ले उपाश्रयाद्बहिर्निर्गते सति रत्नकंबलं खंडशः कृत्वा यतीनां पादप्रोंछनानि कृत्वा दत्ता-
नि, स आगतः, तत्स्वरूपं ज्ञातं; सकषाय एव स्थितः. अन्यदा गुरुन्निर्व्याख्यायां जिनक-
ल्पिका वर्ण्यंते, जिनकल्पिका द्विविधाः पाणिपात्राः पतद्ग्रहधराश्च, सप्रावरणा अप्रावरणा-
श्चेत्यादिजिनकल्पिकमार्गो वर्णितः, सहस्रमल्लेन पृष्टं किमसौ मार्गः सांप्रतं न क्रियते? गुरु-
न्निरुक्तं स मार्गः सांप्रतं व्युच्छिन्नोऽस्ति, तेनोक्तं यद्येष मार्गोऽनुष्ठीयते, तदा नास्त्यस्य व्युच्छे-
दः, परलोकार्थिनैष एव मार्गोऽनुष्टेयः, सर्वथा निःपरिगृहत्वमेव श्रेयः, सूरिन्निरुक्तं धर्मोपक-
रणमेवेति न तु परिग्रहः, तथाहि—जंतवो बहवः संति। दुर्दृश्या मांसचक्षुषां ॥ तेच्यः

मत्वास्या मा विरक्तो भवत्विति ष्टा, आवासोपरिस्थयैकया गणिकया दृष्टास्सजातैर्लोको उरसि शाटिका व्युत्सृष्टा, सा नेच्छति, एषा देवतया दत्तेति भ्रातृवचसा तया शाटिका प- रिधृता. अथ शिवभूतिना कोण्डिन्नः कोट्टवीरश्चेति शिष्यद्वयं प्रतिबोध्य दीक्षितं, ततो बो- टिकमतं मिथ्यादर्शनं प्रवृत्तं. ' सुच्चा नेआउयं मग्गं । बहवे परिभस्सइ ॥ ' एतत्पदद्वयो- परि सप्तनिह्नवोदाहरणानि. ॥ ए ॥

॥ मूलम् ॥—सुइं च लध्धुं सध्धं च । वीरियं पुण डुल्लहं ॥ बहवे रोयमाणावि । नो अणं पडिवज्जए ॥ १० ॥ व्याख्या—च पुनः श्रुतिं लब्ध्वा, च पुनः श्रद्धां लब्ध्वा, वीर्य पुनर्दुर्लभं. चारित्रपालने बलस्फोरणं दुर्लभं, बलस्फोरणदुर्लभत्वे हेतुमाह, यतो बहवो जना रोचमाना अपि धर्मे रुचिं कुर्वाणा अप्येतद्वीर्यं प्रति नो प्रतिपद्यंते, वीर्य नो अंगीकुर्वते, श्रेणिकादिवदत्. ॥ १० ॥

॥ मूलम् ॥—माणुसत्तंमि आयाउ । जो धम्मं सुच्च सद्दहे ॥ तवस्सी वीरियं लध्धुं । संवुडे निद्धुणे रयं ॥ ११ ॥ व्याख्या—मनुष्यत्वे आगतः सन् यो धर्मं श्रुत्वा श्रद्धते स तप-

स्वी वीर्यं लब्ध्वा संवृतः सन् निरुद्धाश्रवः सन् रजः कर्ममलं निर्धुनोति, निश्चयेन धुनोति दूरीकरोति. मुक्तिं प्राप्नोतीत्यर्थः. ॥ ११ ॥ चतुरंग्या इहैव फलमाह—

॥ मूलम् ॥—सोही उज्जूय नूयस्स । धम्मो सुद्धस्स चिट्ठई ॥ निव्वाणं परमं जायइ । घयसित्तिव पावए । १२ । व्याख्या—ऋजुन्नूतस्य चतुरंगीं प्राप्य मोक्षगमनार्थं सरलीभूतस्य शुद्धिर्न्नवति, कषायकालुष्यरहितः स्यात्, शुद्धस्य कषायकालुष्यरहितस्य धर्मस्तिष्ठति, क्षमादिदशविधधर्मः स्थिरो भवति, धर्मयुक्तस्य परममुत्कृष्टं निर्वाणं मोक्षो जायते, स जीवन्मुक्तो न्नवतीत्यर्थः, तपस्तेजसा जाज्वल्यमानो न्नवति, क इव? घृतसिक्तः पावक इव, घृतेन हुतोऽग्निरिव. ॥१२॥

॥ मूलम् ॥—विगिंच कम्मुणा हेउं । जसं संचिणु खंतिए ॥ सरीरं पाढवं हिच्चा । उड्ढं पक्कमई दिसं ॥ १३ ॥ व्याख्या—शिष्यंप्रति गुरुर्वदति—हे साधो! त्वं कर्मणो हेतुं मिथ्यात्वाविरतिकषाययोगादिकं ' विगिंच ' विवेकं कुरु? पृथक्कुरु? पुनः क्षांत्या क्षमया कृत्वा यशः संयमं विनयं वा संचिनु? संचयः पुनरेवं कुर्वन् पार्थिवं शरीरं हित्वोर्ध्वां दिशं मोक्षंप्रति प्रकामति, न्नवान् व्रजति, त्वं प्रयासीत्यर्थः, पृथिव्या न्नवं पार्थिवं पृथ्वीविकारं. १३

॥ मूलम् ॥—विसालसेहिं सीलेहिं । जक्खा उत्तरउत्तरा ॥ महासुक्काव दिप्पंता । मन्नंता अपुणच्चवं ॥ १४ ॥ व्याख्या—साधवो विसदृशैरत्युत्कृष्टैः शीलैः साधुव्रतैर्यक्षा देवा उत्तरोत्तराः सौधर्मादिष्वच्युतांतेषु तिष्टंतीति क्रियासंबंधः. कीदृशास्ते देवाः? महाशुक्ला इव चंद्रादित्यादय इव देदीप्यमानाः, पुनस्ते किं कुर्वाणाः? अपुनश्च्यवं मन्यमाना अतिसौख्यत्वात्कयाऽपुनर्मरणं मन्यमानाः. ॥ १४ ॥

॥ मूलम् ॥—अप्पिया देवकामाणं । कामरूवविउव्विणो ॥ उद्धं कप्पेसु चिठ्ठंति । पुव्वा वाससया बहु ॥ १५ ॥ व्याख्या—पुनः कीदृशास्ते यक्षाः? देवकामान् प्रति पूर्वजवाचीर्णैर्व्रतैर्देवकामान् देवसौख्यानिप्रत्यर्पिताः, पुनः कीदृशाः? कामरूपविकुर्विणः, कामरूपं स्वेच्छया रूपं विकुर्वंति विरचयंतीत्येवंशीलाः कामरूपविकुर्विणः. अथ तत्र देवलोकेषु कथं यावत्तिष्टंति? बहूनि पूर्ववर्षशतानि यावत्तिष्टंति, बहुनितिशब्देनासंख्येयानि वर्षशतानि यावद्देवसुखानि भुंजंति, पूर्ववर्षशतायुषामेव चरणयोग्यत्वेन विशेषतो देशनौचित्यज्ञापनार्थमित्थमुपन्यासः—बहुभिः पूर्वैर्जघन्येनैकं पल्योपमं जवति, बहुभिर्वर्षशतैः पूर्वः, बहुभिः पूर्वशतैः सागरोपमं जवति.

॥ मूलम् ॥—तब ठिच्चा जहाठाणं । जख्खा आउक्खये चुआ ॥ उवंति माणुसं जोणिं । सदसंगेभिजायए ॥ १६ ॥ व्याख्या—तत्र देवलोकेषु यथास्थानं स्थित्वा यक्षा देवा आयुःक्षये च्युताः संतो मानुषीं योनिमुत्पद्यंते प्राप्नुवंति, तत्र दशांगा अभिजायंते, अत्र प्राकृतत्वादेकवचनं, दशभिरंगैः सह वर्तंत इति सदशांगाः, अथवा स इति ते इत्यर्थः, दश अंगानि येषां ते दशांगा इति पृथक् पदं, एकवचनेन कश्चिन्नवांगादेरपीति ज्ञापनार्थं. ॥ ॥ १६ ॥ कानि दशांगानि?—

॥ मूलम् ॥—खित्तं वत्थुं हिरण्णं च । पसवो दासपोरुसं ॥ चत्तारि कामखंधाणि । तब से उववज्जइ ॥ १७ ॥ व्याख्या—ते देवास्तत्रोत्पद्यंते, तत्र कुत्र? यत्र चत्वार एते कार्यस्कंधा भवंति, तत्र कुत्र? यत्र क्षेत्रं सम्यग्भवति ग्रामारामादिकं, अथवा सेतुकेतूभयात्मकं १, यत्र वास्तुगृहं सम्यग्भवति २, यत्र हिरण्यं सुवर्णं रूप्यं वा ३, यत्र पशवो घोटकहस्त्यादयः 'दासपोरुसं' चेटकचेटीपत्तिप्रमुखादिकं ४, चत्वार एते स्कंधा वर्तंते, काममनोज्ञशब्दादयस्तेषां हेतवः स्कंधास्तत्पुद्गलसमूहाः, अनेनैकमंगमुक्तं. ॥ १७ ॥

हमुदाहरे ॥ १ ॥ व्याख्या—एके महापुरुषा गौतमादयो घातिकर्मरहिता अर्णवात्संसारसमुद्रात्तीर्णाः पारं प्राप्ताः, कीदृशादर्णवात्? महौघात्, महानोघो यस्य स महौघस्तस्मात्, अत्र प्राकृतत्वाद्विभक्तिव्यत्ययः. हे जंबू! तत्र देवमनुष्यसभायामेकस्तस्मिन् काले, अत्र भरतक्षेत्रे एकस्य तीर्थंकरस्य विद्यमानत्वादेको महावीरः, इमं प्रश्नं पृष्टव्यार्थरूपं प्रश्नयोग्यं वाक्यमुदाजहे उदाहृतवान्, कथंभूत एकः? महाप्रज्ञः, महती केवलात्मिका प्रज्ञप्तिर्यस्य स महाप्रज्ञः. ॥ १ ॥

॥ मूलम् ॥—संतिमे य दुवे ठाणा । अक्खाया मारणंतिया ॥ अकाममरणं चेव । सकाममरणं तहा ॥ २ ॥ व्याख्या—इमे प्रत्यक्षे द्वे स्थाने आख्याते, जीवनिवासाश्रयावाख्याते. पूर्वं तीर्थंकरैः कथिते, कीदृशे द्वे स्थाने? मारणांतिके, मरणमेवांतो मरणांतस्तत्र भवं मारणांतिकं, तस्मिन् मरणावस्थायां जाते इत्यर्थः. ते द्वे स्थाने के? एकमकाममरणं च पुनरन्यत्तथा सकाममरणं. अकाममरणं बालमरणं, सकाममरणं पंडितमरणं, चैवशब्दौ पादपूरणार्थौ. मरणं सप्तदशधा—आवीचीमरणं १ अवधिमरणं २ अंतिम ३ वलय ४ वशार्त

=कहेहै=

॥१८७॥

= इच्छ्यवीत्रयनीपी पाहोयहै=

ल प्रत्तमा त्पाहोयहै=

= जीसगतीसे पायोहोफीर नसगतीमे

५ अंतःशल्य ६ तद्भव ७ पंडित ८ बाल ए मिश्र १० छद्मस्थ ११ केवली १२ विहायस १३ गृ-
ध्रपृष्ट १४ भक्तपरिज्ञा १५ इंगिनी १६ पादपोपगमनं १७ चेति.

॥ मूलम् ॥ बालाणं अकामं तु । मरणं असयंभवे ॥ पंडियाणं सकामं तु । उक्कोसेणं सयं भवे ॥ ३ ॥ व्याख्या—बालानां मूर्खाणामकामं, अकामेनानीप्सितत्वेन म्रियतेऽस्मिन्निव्यकाममरणमसकृद्वारंवारं भवेत्, तु पुनः पंडितानां सकामं, सह कामेनेप्सितेन म्रियतेऽस्मिन्निति सकाममरणं, यस्मिन्नागते सत्यसंत्रस्ततयोत्सवभूतत्वेन सकाममिव सकामं, तादृशं मरणं पंडितानामुत्कृष्टं सकृदेकवारमेव भवेत्, उत्कर्षेणोपलक्षितं केवलिसंबंधीत्यर्थः, जघन्येन तु शेषचारित्रवतः सप्ताष्टवारान् भवेत्. ॥ ३ ॥

॥ मूलम् ॥—तत्थिमं पढमं ठाणं । महावीरेण देसियं ॥ कामगिद्धे जहा बाले । भिसं कूराइ कुव्वई ॥ ४ ॥ तत्र तयोर्द्वयोर्मरणयोर्मध्ये प्रथमं स्थानं महावीरेणाकामं मरणं देशितं कथितं, तथा येन प्रकारेण कामगृद्धाः कामेष्विंद्रियसुखेषु गृद्धाः कामगृद्धा विषयिणो जीवाः, अत एव बाला मूर्खा भृशमत्यर्थं वारंवारमकाममरणमतिकुर्वते; अशक्तावपि मनसा

दुःकर्माणि कृत्वा मुहुर्मुहुर्म्रियंत इत्यर्थः, कीदृशा मूर्खाः? क्रूराः. ॥ ४ ॥

॥ मूलम् ॥—जे गिद्धे कामभोगेसु । एगे कूडाय गच्छई ॥ न मे दिट्ठे परे लोए । चक्खुदिट्ठा इमा रई ॥ ५ ॥ व्याख्या—कामभोगेषु य एकः कश्चित्क्रूरकर्मा पुरुषः कूटाय नरकस्थानाय नरकस्थानं गच्छति नरकं व्रजतीत्यर्थः, कूटं प्राणिनां पीडाकरं स्थानं. द्वितीयास्थाने चतुर्थी प्राकृतत्वात्. अथवा य एकः कश्चित्कामभोगेषु गृद्धः स कूटाय गच्छति, मृषाभाषादि कूटं, तस्मै प्रवर्तते, तं प्रति कश्चिदुक्ति—भो त्वं धर्मं कुरु? तदा स वक्ति यथा परलोको न दृष्टः, इमेयं रतिः कामभोगसुखं रतिः चक्षुर्दृष्टा प्रत्यक्षं दृश्यमाना वर्तते. ॥ ५ ॥

॥ मूलम् ॥—हत्थागया इमे कामा । कालिया जे अणागया ॥ को जाणइ परे लोए । अत्थि वा नत्थि वा पुणो ॥ ६ ॥ व्याख्या—इमे कामाः कामभोगा हस्तागताः, हस्ते आगता हस्तागताः स्वाधीनाय वर्तत इत्यर्थः. येऽनागता आगामिजन्मनि भविष्यंतीत्यागामिनः, कामभोगसुखास्ते कालिकाः काले भवाः कालिका अनिश्चिताः, को जानाति परलोकः परभवोऽस्ति वा नास्ति वेति भावः. ॥ ६ ॥

॥ मूलम् ॥—जणेण सद्धिं हुक्खामि । इइ बाले पगब्भई ॥ कामभोगाणुराएणं । केयं संपडिवज्जई ॥ ७ ॥ व्याख्या—ततः स कामभोगरसगृद्धः पुमान् बाल इति प्रगल्भते, इति धाष्टर्यं गृह्णाति, इत्युक्त्वा धृष्टो भवति, इतीति किं? अहं जनेन सार्धं भविष्यामि, अयं कामभोगसुखभोक्ता जनो यादृशो भविष्यति, तेन सार्धमहमपि भविष्यामि. स बाल इत्युक्त्वा कामभोगानुरागेण कामभोगस्नेहेन क्लेशं स प्रतिपद्यते, क्लेशमिह परत्र च बाधात्मकं दुःखं भजत इत्यर्थः. ॥ ७ ॥

॥ मूलम् ॥—तओ से दंडं समारभइ । तसेसु थावरेसु अ ॥ अट्ठाए अणट्ठाए । भूयगामं विहिंसई ॥ ८ ॥ व्याख्या—ततः कामभोगानुरागात्स धाष्टर्यवान् त्रसेषु च पुनः स्थावरेषु, दंडं समारभते, मनोदंडवाक्कायैः पीडां समारभते, अर्थेन द्रव्योत्पादननिमित्तं, अनर्थेन निःप्रयोजनेन वा भूतग्रामं भूतानां पृथिव्यप्तेजोवायुवनस्पत्येकेंद्रियद्वींद्रियत्रींद्रियचतुरिंद्रियपंचेंद्रियादिजीवानां वर्गं विशेषेण हिनस्ति. अत्राजपालकथा यथा—

एकः पशुपालो वटतलेऽजासु सुप्तासु तत्पत्राणि छिद्रीकुर्वन्नश्वापहृतेन कुतश्चिदाया-

तेन कस्यचिद्राज्ञः पुत्रेण दृष्टो भणितश्चारेऽहं यस्य कथयामि तदक्षीणि त्वं पातयिष्यसि किं? तेन तत्प्रतिपन्नं, राजपुत्रेण स स्वनगरे नीतः. एकदाऽश्ववाहनिकार्थं गच्छतो राज्ञोऽक्षिणी राजपुत्रप्रेरितः स पातयामास, पश्चात्स राजपुत्रो राजा जातः, पशुपालस्यैवमुवाच वरं वृणु? तेनोक्तं यत्राहं वसामि तदेव ग्रामं देहि? राज्ञा तद् ग्रामं तस्य दत्तं, तेन च तत्र घनास्तुंबवल्ल्य आरोपिताः, निष्पन्नेषु च तुंबेषु गुडेन सार्धं तुंबखंडानि खादन् गायति, यथा—अट्टमट्टंपि सिक्खिज्जा। सिक्खियं न निरत्थयं ॥ अट्टमट्टपसाएण। खज्जाए गुरुतुंबयं ॥ १ ॥ तेन हि पशुपालेन वटपत्राण्यनर्थाय छिद्रितानि, अक्षीणि पुनरर्थायोत्पाटितानि, उभयत्रापि प्राणवधः कृत इति. ॥ ८ ॥

॥ मूलम् ॥—हिंसे बाले मुसावाई। माइल्ले पिसुणे सढे ॥ भुंजमाणे सुरं मंसं। सेसमेयंति मन्नई ॥ ९ ॥ व्याख्या—स बालो हिंस्रो हिंसनशीलो भवति, पुनर्मृषावादी भवति, माइल्लो मायाकारकः कपटवान्, पिशुनः परनिंदकः, पुनः शठो वेषाद्यन्यथाकरणेन धूर्तो मूर्खो वा, सुरां मांसं च भुंजानोऽपि मे ममैतत् श्रेयः कल्याणमिति मन्यते, अत एव शठ इत्यर्थः.

॥ मूलम् ॥—कायसा वयसा मत्ते । वित्ते गिद्धे अ इत्थिसु ॥ दुहओ मलं संचिणइ । सिसुनागुव्व मट्टियं ॥ १० ॥ व्याख्या—पुनः कीदृशः सः? कायेन मत्तः, पुनर्वचसा मत्तः, पुनर्वित्ते द्रव्ये गृद्धो लोभी च, पुनः स्त्रीषु गृद्धः, कायेन मत्तो यतस्ततः प्रवृत्तिमान् बलवानहं रूपवानहमिति चिंतयन्, वा वचसात्मगुणान् कथयन् मुखरोऽहमिति वा चिंतयन्, उपलक्षणत्वान्मनसा मदोन्मत्तो धारणादिशक्तिमानहमिति वा चिंतयन् स 'दुहओत्ति' द्विधा द्वाभ्यां रागद्वेषाभ्यां मलं संचिनुते मलसंचयं कुरुते, कः कामिव? शिशुनागोऽलसो द्वींद्रियजीवविशेषो भूनागो यथा मृत्तिकां संचिनुते, स च स्निग्धतनुतया बहिःप्रदेशे शरीरे रेणुभिरवगुंठ्यते, अंतश्च मृत्तिकामेवाश्नाति, ततश्च मृत्तिकातो बहिर्निस्सरन् सूर्यकिरणैः शुष्यन् क्लिश्यति विनश्यति, विनश्य च मृत्तिकाया एव वृद्धिं कुरुते, तथा सोऽपि मलं कर्ममलं वर्धयति, कर्मणैवोत्पद्यते, पुनः कर्ममलवृद्धिं करोतीत्यर्थः. ॥ १० ॥

॥ मूलम् ॥—तओ पुट्ठो आयंकेण । गिलाणो परितप्पइ ॥ पभीओ परलोगस्स । कम्माणुप्पेहि अप्पणो ॥ ११ ॥ व्याख्या—ततोऽष्टकर्ममलसंचयादनंतरमातंकेन रोगेण स्पृष्टः सन्



=बोलवामेवमोहु यारहुं=

ग्लानः ग्लानिं प्राप्तः परितप्यते परिखिद्यते परलोकात्प्रभीतः, कथंभूतः सः? आत्मनः कर्मानुपेक्षी यदा रोगादिग्रस्तो भवति तदा स्वयं जानाति मम कर्मणां विपाको जातः, मया पुरा यान्यशुभानि कर्माणि कृतानि तस्मादहं परलोकेऽपि दुःखी भविष्यामि, इति स्वकृतकर्मापेक्षी स्वकृतकर्मविचारक इत्यर्थः. ॥ ११ ॥

॥ मूलम् ॥—सुया मे नरए ठाणा । असीलाणं च जा गई ॥ बालाणं कूरकम्माणं । पगाढा जत्थ वेयणा ॥ १२ ॥ व्याख्या—मे मया नरके स्थानानि श्रुतानि, या गतिर्नरकादिः. अशीलानां दुःशीलानां गतिर्विद्यते, यत्र यस्यां गतौ क्रूरकर्मणां बालानां मूर्खाणामात्मद्विनविध्वंसकानां प्रगाढा वेदनास्ति. ॥ १२ ॥

॥ मूलम् ॥—तत्थोववाइयं ठाणं । जहा मे तमणुस्सुयं ॥ अहाकम्मेहिं गच्छंतो । सो पच्छा परितप्पइ ॥ १३ ॥ व्याख्या—तत्र नरकेषु औपपातिकं स्थानं वर्तते, उपपाते भवमौपपातिकं, तत्रौपपातिके स्थानेंतर्मुहूर्तादनंतरं भेदनच्छेदनताडनतर्जनादिकं स्यात्, यथा तन्नरकादिस्थानं मे मयानुश्रुतं वर्तते, अवधारितमिति चिंतयन् पश्चादायुःक्षये यथा कर्मनिर्ग-

ब्रन् स परितप्यति. ॥ १३ ॥

॥ मूलम् ॥—जहा सागम्जिं जाणं । सम्मं हिच्चा महापहं ॥ विसमं मग्गमाइन्नो । अक्खे भग्गंमि सोयइ ॥ १४ ॥ व्याख्या—यथा शाकटिकः समं समीचीनं महापथं राजमार्गं हित्वा त्यक्त्वा विषमं मार्गमुत्तीर्णः सन् यानं शकटं 'अक्खे' धुरि भग्ने सति शोचति चिंतयति, शकटभंगस्य शोकं करोति, यतो धिग्मामहं जानन्नपि शकटभंगकष्टमवाप्तवान्. ॥१४॥

॥ मूलम् ॥—एवं धम्मं विउकम्म । अहम्मं पडिवज्जिया ॥ बाले मच्चुमुहं पत्ते । अक्खे भग्गेव सोयइ ॥ १५ ॥ व्याख्या—एवममुना प्रकारेण धर्मं व्युत्क्रम्य विशेषेणोल्लंघ्याधर्मं प्रतिपद्य बालो मूर्खो मृत्युमुखं मरणमुखं प्राप्तः सन् शोचते शोकं कुरुते, क इव? अक्षे भग्ने शाकटिक इव. ॥ १५ ॥

॥ मूलम् ॥—तउ से मरणं तंमि । बाले संतस्सई भया ॥ अकाममरणं मरइ । धुत्तेव कलिणा जिए ॥ १६ ॥ व्याख्या—ततः स मूर्खो मरणांते भयात् संत्रसते संत्रासं प्राप्नोति, अकाममरणं म्रियते, म्रियमाणः सन् शोकं विदधाति, क इव? धूर्तो द्यूतकारी कलिना द्यू-

तदोपेन जितः, केनचित्ततोऽधिकेन दुष्टेन जितो गृहीतग्रन्थः सन् शोचते, तथा शोचत इ-
त्यर्थः. अनेन सह मया किमर्थं क्रीडा कृता? अहं हारितः. ॥ १६ ॥

॥ मूलम् ॥—एयं अकाममरणं । वालाणं तु पवेइयं ॥ एत्तो सकाममरणं । पंडियाणं
सुणेह मे ॥ १७ ॥ व्याख्या—बालानामकाममरणमेतत्प्रवेदितं, तुशब्दो निश्चयार्थे, मूर्खा-
णामेवाकाममरणमित्यर्थः, तीर्थकरैः कथितं, इतः प्रस्तावादनंतरं मे मम कथयतः पंडिता-
नां सकाममरणं यूयं शृणुत? ॥ १७ ॥

॥ मूलम् ॥—मरणंपि सपुन्नाणं । जहा मे तमणुस्सयं ॥ विप्पसन्नमणाघायं । संजया-
णं वुसीमओ ॥ १८ ॥ व्याख्या—सपुण्यानां पुण्यवतां संयतानां यथा मे मया मरणमनुश्रुत-
मवधारितं, तो भव्यास्तत्सकाममरणं भवद्भिर्मनसि धार्यं, कीदृशं सकाममरणं? विप्रसन्नं
विशेषेण कषायादिमलराहित्येन प्रसन्नं निर्मलं, पुनः कीदृशं? अनाघातं, न विद्यते आघा-
तो यत्नवत्त्वेनान्यजीवानां संयमजीवितव्यस्य च नाशो यस्मिंस्तदनाघातं, कीदृशानां संयतानां?
' वुसीमओ ' आर्षत्वाद्वश्यवतां, वश्य आत्मा येषां ते वश्यवंतः, तेषां जितात्मनामित्यर्थः. ॥

॥ मूलम् ॥—न इमं सव्वेसु भिक्खुसु । न इमं सव्वेसुगारिसु ॥ नाणासीला अगारत्था । विसमसीला य भिक्खुणो ॥ १९ ॥ व्याख्या—इदं पंमितमरणं सर्वेषां भिक्षूनां साधूनां न भवति, किंतु केषांचित्साधूनां भवेत्, सर्वेषामगारिणां गृहस्थानामपीदं पंमितमरणं न भवति, किंतु केषांचिदेव भवेत्; यतोऽगारस्था गृहस्था नानाशीला नानाचारा भवंति, च पुनर्भिक्षवोऽपि साधवोऽपि विषमशीला विषमं विसदृशं शीलं येषां ते विषमशीलाः, केचित्सनिदानतपःकारकाः, केचिन्निदानरहिततपःकारिणः, केचिन्निर्मलचारित्रिणः, केचिद्बकुशचारित्रिणः, इति कथनेन तीर्थांतरीयास्तु वेषधारिणो दूरत एवोत्सारिताः. ॥ १९ ॥

॥ मूलम् ॥—संति एगेहिं भिक्खुहिं । गारत्था संयमुत्तरा ॥ गारत्थेहिं य सव्वेहिं । साहवो संजमुत्तरा ॥ २० ॥ व्याख्या—एकेभ्यो भिक्षुभ्यो निह्नवभग्नचारित्रादिभ्यः पाखंमिकुतीर्थिभ्यश्च, अगारस्था अपि गृहस्था अपि संयमुत्तराः संति, संयमेन देशविरतिलक्षणेन धर्मेणोत्तराः प्रधानाः संति, सर्षपमेरुपर्वतयोरिवांतरमस्ति, सर्वेभ्यो द्विविधत्रिविधप्रत्याख्यानधरेभ्योऽगारस्थेभ्यः साधवः षम्व्रतषट्कायरक्षकाः संयमेन सप्तदशभेदेनोत्तराः प्रधानाः स-

मीचीनाः संति. अत्र दृष्टांतः—एकः श्रावकः साधुं पृछति श्रावकाणां साधूनां च मिथः कियदंतरं? साधुनोक्तं मेरुसर्षपोपममंतरं, तत आकुलीभूतः स श्रावकः पुनः पृछति कुलिङ्गिनां श्रावकाणां मिथः कियदंतरं? साधुनोक्तं तदपि मेरुसर्षपोपममंतरं. ततः स श्रावकः स्वस्थो जात इति. ॥ २० ॥

॥ मूलम् ॥—चीराजिणं नगिणिणं । जडी संघाडिमुंडिणं ॥ एयाणिवि न तायंति । दुस्सीलं परियागयं ॥ २१ ॥ व्याख्या—एतानि सर्वाणि द्रव्यलिंगानि 'परियागयं' प्रव्रज्यां गतं दीक्षां प्राप्तं, अर्थात् द्रव्यलिङ्गिनं दुःशीलं न त्रायंते संसारात्, दुःकर्मविपाकाद्वा न रक्षंति, एतानि कानि लिंगानि तान्याह—चीराणि वकुलानि वकुलचीरधारित्वं, अजिनं चर्मधारित्वं, नगिणिणं नग्नत्वं, जडीति जटाधारित्वं, संघाटीत्वं वस्त्रसंघातोत्पन्ना, तया युक्तत्वं कंथाधारित्वं, मुंडिणं मुंडत्वं, एतानि सर्वाणि द्रव्यलिंगानि न मोक्षदानि भवंतीत्यर्थः. ॥ २१ ॥

॥ मूलम् ॥—पिंडोलएव दुस्सीले । नरगाउ न मुच्चई ॥ भिरकाए वा गिहत्थे वा । सु-

त्तए कमइ दिवं ॥ २२ ॥ व्याख्या—पिंमोलगोऽपि भिक्षुर्यदि नरकान्न मुच्यते तदा दुःशीलः कषायादियुक्तस्तु नरकान्न मुच्यत एव, पिंमं परदत्तग्रासमवलगते सेवत इति पिंमोलगः, अत्र निश्चयमाह—भिक्षादो भिक्षुरथवा गृहस्थो वा भवेत् तयोर्भिक्षादगृहस्थयोः साधुश्रावकयोर्मध्ये यः सुव्रतः सुष्टु शोभनानि व्रतानि यस्य स सुव्रतः, स दिवं स्वर्गं क्रमति व्रजतीत्यर्थः, अत्र द्रम्मककथा—राजगृहे कश्चिद् द्रम्मक उद्यानिकानिर्गतजनेभ्यो भिक्षामलभमानो रुष्टः सर्वेषां चूर्णनाय वैभारगिरिशिलां चालयन् शिलांतर्निपतितः, शिलातले चूर्णितवपुः सप्तमं नरकं गतः. एवं भिक्षुरपि दुर्ध्यानेन दुःशीलत्वान्नरकमेव गच्छतीति परमार्थः. ।२३।

॥ मूलम् ॥—अगारी सामाइयंगाइ । सड्ढी काएण फासए ॥ पोसहं दुहओ पक्खं । एगराइं न हावए ॥ २४ ॥ व्याख्या—अगारी गृहस्थः सामायिकांगानि सामायिकस्यांगानि सामायिकांगानि निःशंकितनिःकांक्षितनिर्विचिकित्सितामूढदृष्टिप्रमुखाणि कायेन स्पृशति, कीदृशः सन्? श्रद्धी श्रद्धावान् सन्, पुनर्गृहस्थः, उभयोः शुक्लकृष्णपक्षयोः पौषधं सेवते, चतुर्दशीपूर्णिमास्यादिषु पौषध आहारपौषधादिकं कुर्यात्, एकरात्रिमप्येकदिनमपि न हाप-

येत्, न हानिं कुर्यादित्यर्थः. रात्रिग्रहणं दिवा व्याकुलतायां रात्रावपि पौषधं कुर्यात्, चेदेवं न स्यात्तदा चतुर्दश्यष्टम्युद्दिष्टा, महाकल्याणकपूर्णिमाचतुर्मासकत्रयस्य दिवसे पौषधं कुर्यात्, सामायिकांगत्वेनैव सिद्धे भेदेनोपादानमादरख्यापनार्थम्. ॥ २३ ॥

॥ मूलम् ॥—एवं सिक्खासमावन्ने । गिहवासेवि सुव्वए ॥ मुच्चई छविपव्वाओ । गच्छे जक्खसलोगयं ॥ २४ ॥ व्याख्या—एवममुना प्रकारेण शिक्षासमापन्नः श्रद्धाचारसहितो गृहवासेऽपि सुव्रतो द्वादशव्रतधारकः सन् त्वक्पर्वतो मुच्यते, त्वक् चर्मपर्वजानुकूर्परगुल्फादि, ततो मुक्तो भवति, औदारिकशरीरान्मुच्यते, पुनः स श्राद्धो यक्षसलोकतां गच्छेत्, सह लोकेन वर्तत इति सलोकः, यक्षैर्देवैः सलोको यक्षसलोकस्तस्य भावो यक्षसलोकता तां देवजातित्वं प्राप्नोतीत्यर्थः. अत्र पण्डितमरणप्रस्तावेऽप्यवसरप्रसंगाद्बालपण्डितमरणमुक्तं. ॥ २४ ॥

॥ मूलम् ॥—अह जे संवुडे भिक्खू । दुण्हं अन्नयरे सिया ॥ सव्वदुक्खपहीणे वा । देवे वावि महड्ढिए ॥ २५ ॥ व्याख्या—अथानंतरं यः संवृतः पंचाश्रवनिरोधको भिक्षुः सर्वदुःखप्रहीणे मोक्षेऽथवा देवे देवलोके, तयोर्द्वयोः स्थानयोर्मध्येऽन्यतरस्मिन्नेकस्मिन् स्थाने



= जलवाके जिने

स्यात्, कीदृशो देवः स्यात? महर्द्धिको महती ऋद्धिर्यस्य स महर्द्धिकः. ॥ २५ ॥

॥ मूलम् ॥—उत्तराइं विमोहाइं । जुइमंताणु पुव्वसो ॥ सामाइन्नाइ जक्खाहिं । आवासाइं जसंसिणो ॥ २६ ॥ दीहाउया इड्ढिमंता । समिद्धा कामरूविणो ॥ अहुणोववन्नसंकासा । भुज्जो अच्चिमालिप्पभा ॥ २७ ॥ ताणि ठाणाणि गछंति । सिक्खित्ता संयमं तवं ॥ भिक्खाए वा गिहत्थे वा । जे संति परिनिव्वुडा ॥ २८ ॥ व्याख्या—ते भिक्षादा भिक्षावृत्तयः साधवोऽथवा गृहस्थाः श्राद्धाः संयमं पुनस्तपः शिक्षयित्वा हृदि धृत्वा तानि स्थानानि गछंति प्राप्नुवंतीति तृतीयगाथायाः संबंधः. ते के भिक्षादाः? पुनस्ते के च गृहस्थाः? ये परिनिर्वृताः संति, परि समंतान्निर्वृता विधूतकषायमलाः, तानि कानि स्थानानि? उत्तराणि सर्वेभ्यो देवलोकेभ्य उपरिस्थानि पंचानुत्तरविमानानि, पुनः कीदृशानि तानि? विमोहान्यज्ञानरहितानि, येषु स्थानेषूत्पन्नानां देवानां मिथ्यात्वाभावात् सम्यक्त्वं भवतीत्यतो विमोहानि, पुनः कीदृशानि? द्युतिमंति दीप्तियुक्तानि प्राकृतत्वाल्लिंगव्ययः. पुनः कीदृशानि स्थानानि? यक्षैर्देवैः समाकीर्णानि सहितानि, पुनः कीदृशानि? आसमंतादाह्लादपूर्वकं दुःखराहित्येन

च्यते येषु तान्यावासानि. कथंभूतास्ते भिक्षादा गृहस्थाश्च? यशस्विनः, कुत्रचिट्टीकांतरेऽत्र गाथायामुक्तानि साधुश्राद्धानां विशेषणानि संति, पुनः कीदृशा भिक्षादगृहस्थजीवदेवाः? 'दीहाउया' दीर्घायुषः पल्यसागरोपमजीविनः, पुनः कीदृशाः? ऋद्धिमंतो रत्नादियुक्ताः, पुनः कीदृशाः? समृद्धा अत्यंतप्रकटाः, पुनः कीदृशाः? कामरूपिणः, कामं स्वेच्छापूर्वं रूपं येषां ते कामरूपिणः, यादृशं रूपं मनसि वांछंति तादृशं कुर्वंतीत्यर्थः. पुनः कीदृशाः? अधुनोत्पन्नसंकाशाः, येषां कांतिऋद्धिदीप्तिवर्णादिकं दृष्ट्वेति ज्ञायते यदेते इदानीमुत्पन्नाः संति, पुनः कीदृशाः? भूयोऽर्चिर्मालिप्रभाः कोटिसूर्यप्रभाः अर्चिषा ज्योतिषा मालंते शोभंते इत्येवंशीला अर्चिर्मालिनः सूर्याः, भूयांसश्च तेऽर्चिर्मालिनश्च भूयोर्चिमालिनस्तद्वत्प्रभा येषां ते भूयोऽर्चिर्मालिप्रभाः.

॥ मूलम् ॥—तेसिं सुच्चाण पुज्जाणं । संजयाणं वुसीमउ ॥ न संतसंति मरणंते । सीलवंता बहुस्सुया ॥ ३० ॥ व्याख्या—शीलवंतः साध्वाचारसहिता बहुश्रुताः साधवो मरणांते मरणे समीपे समागते सति न संत्रसंति न भयं प्राप्नुवंति. किं कृत्वा? तेषां सत्पूज्यानां संयतानां भावितभिक्षूणामुक्तस्वरूपस्थानप्राप्तिं श्रुत्वा, पुनः कीदृशानां संयतानां? वश्यवतां.

॥ मूलम् ॥—तुलया विसेसमादाय । दयाधम्मस्स खंतिए ॥ विप्पसीइज्ज मेहावी । तहाभूएण अप्पणा ॥ ३० ॥ व्याख्या—मेधावी बुद्धिमान् साधुस्तथाभूतेन विपयकषायरहितेनात्मना विप्रसीदेत्, विशेपेण प्रसन्नतां भजेत्, किं कृत्वा? बालपंडितमरणे 'तुलिया' इति तोलयित्वा परीक्ष्य पुनर्विशेषमादाय बालमरणात्पंडितमरणाच्च विशेषं विशिष्टत्वमादाय गृहीत्वा तथैव दयाधर्मस्य यतिधर्मस्य क्षांत्या क्षमया कृत्वा विशेषमादायान्येभ्यो धर्मेभ्यः क्षमया साधुधर्मो विशिष्ट इति ज्ञात्वा विप्रसीदेत् कषायादिभ्यो विरक्तो भवेदित्यर्थः. ॥३०॥

॥ मूलम् ॥—तओ काले अभिप्पेए । सड्ढी तालसमंतिए ॥ विणइज्ज लोमहरिसं । भेयं देहस्स कंखए ॥ ३१ ॥ व्याख्या—ततः कषायोपशमनानंतरं काले मरणसमयेऽभिप्रेते सति रुचिते सति श्रद्धी श्रद्धावानंतिके गुरूणां समीपे तादृशं ब्रूयात्, उत्पन्नं रोमहर्षं रोमांचं हा मे मरणं भावीति भयाभिसूचकं रोमोद्गमं विनयेत् स्फेटयेत्, मरणभयं न कुर्यात्, देहस्य भेदं कांक्षेत्, शरीरस्य त्यागमभिलषेत्, यादृशो हर्षो दीक्षावसरे यादृशो हर्षः संलेखनावसरे, तादृशो हर्षो मरणसमयेऽपि विधेयो न भेतव्यमित्यर्थः. ॥ ३१ ॥

॥ मूलम् ॥—अह कालम्मि संपत्ते । आघाय स समुस्सयं ॥ सकाममरणं मरई । तिण्हमन्नयरं मुणित्ति बेमि ॥ ३२ ॥ व्याख्या—अथ काले मरणे संप्राप्ते सति मुनिः समुच्छ्रयमभ्यंतरशरीरं बाह्यशरीरं च, अभ्यंतरं कार्मणशरीरं, बाह्यमौदारिकशरीरं, आघाय विनाश्य त्रयाणां सकाममरणानां मध्येऽन्यतरेणैकेन सकाममरणेन म्रियते, तानि त्रीणि सकाममरणानीमानि—भक्तपरिज्ञा भक्तप्रत्याख्यान १ इंगिनी २ पादपोपगमनाख्यानि ३. यत्र भक्तस्य त्रिविधस्य चतुर्विधस्य चाहारस्य प्रत्याख्यानं भक्तप्रत्याख्यानं १, यत्र मंडलं कृत्वा मध्ये प्रविश्य मंडलाद्बहिर्न निःस्रीयते तादिंगिनीमरणं २, यत्र छिन्नवृक्षशाखावदेकेन पार्श्वेन निपत्यते, पार्श्वस्य परावर्तो न क्रियते तत्पादपोपगमनं. एतेषां त्रयाणां मध्येऽन्यतरेण मरणेन म्रियते, इति सुधर्मास्वामी जंबूस्वामिनं प्रति कथयति हे जंबू! अहं भगवद्वचसा त्वां ब्रवीमि. ॥ ॥ ३२ ॥ इत्यकामसकाममरणीयमध्ययनं पंचमं. ॥

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायामकामसकाममरणीयाख्यस्य पंचमस्यार्थः संपूर्णः ॥ श्रीरस्तु ॥

## ॥ अथ षष्टमध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययनेऽकामसकाममरणे उक्ते, तत्र सकाममरणं निर्ग्रंथस्य भवति, ततो निर्ग्रंथस्याचारः षष्ठेऽध्ययने कथयति, अयं पंचमषष्टाध्ययनयोः संबंधः.

॥ मूलम् ॥—जावंति विज्जा पुरिसा । सव्वे ते दुक्खसंभवा ॥ लुप्पंति बहुसो मूढा । संसारंमि अणंतिगे ॥ १ ॥ व्याख्या—यावंतोऽविद्याः पुरुषास्ते सर्वेऽपि मूढाः संसारे बहुशो वारंवारं लुप्यंते, आधिव्याधिवियोगादिभिः पीड्यन्ते. न विद्यते विद्या सम्यग्ज्ञानं येषां तेऽविद्याः, अत्र नञ् कुत्सितार्थवाचकः, ये कुत्सितज्ञानसहिता मिथ्यात्वोपहतचेतसो वर्तन्ते, ते मूर्खाः संसारे दुःखिनो भवंति. कीदृशे संसारे? अनंतकेऽपारे. कीदृशास्तेऽविद्याः? दुःखसंभवाः, दुःखसंभवो येषु ते दुःखसंभवा दुःखभाजनमित्यर्थः. यावंतोऽविद्या इत्यत्र प्राकृतत्वादकारोऽदृश्यः. ॥ १ ॥ अत्राविद्यापुरुषोदाहरणं यथा—कश्चिद् द्रम्मकोऽभाग्यात् क्वापि

किंचिदवाप्नुवन् पुराद्बहिरेकस्मिन् देवकुले रात्रावुषितः, तत्रैकं पुरुषं कामकुंभप्रसादेन यथेष्टभोगान् भुञ्जानं वीक्ष्य प्रकामं सेवितवान्, तुष्टेन तेन तस्य भणितं भो तुभ्यं कामकुंभं दद्राम्युत कामकुंभं विधायिनीं विद्यां ददामि? तेन विद्यासाधनपुरश्चरणादिभीरुणा विद्याभिमंत्रितं घटमेव मे देहीति भणितं, विद्यापुरुषेण विद्याभिमंत्रितो घट एव तस्मै दत्तः, सोऽपि तत्प्रसादात्सुखी जातः. अन्यदा पीतमद्योऽयं पुरुषस्तं कामकुंभं मस्तके कृत्वा नृत्यन् पातितवान्, भग्नः कामकुंभस्ततो नासौ किंचिदर्थमवाप्नोति, शोचति चैवं यदि मया तदा विद्या गृहीताऽभविष्यत्तदाभिमंत्र्य नवं कामकुंभमकरिष्यं, पूर्ववदेव सुखी चाभविष्यं. एवमविद्या नरा दुःखसंभवाः क्लिश्यंते. ॥ १ ॥

॥ मूलम् ॥—समिक्ख पंडिए तम्हा । पासजाइपहे बहु ॥ अप्पणा सच्चमेसिज्जा । मेत्तिं भूएसु कप्पए ॥ १ ॥ व्याख्या—तस्मादज्ञानिनां मिथ्यात्विनां संसारभ्रमणत्वात्पंडितस्तत्त्वज्ञ आत्मना स्वयमेव परोपदेशं विनैव सत्यमेषयेत्, सद्भ्यो हितं सत्यमर्थात्संयममभिलषेत्. पुनः पंडितो भूतेषु पृथिव्यादिषु षट्कायेषु मैत्रीं कल्पयेत्. किं कृत्वा? बहून् पाश-

जातिपथान् समीक्ष्य, पाशाः पारवश्यहेतवः पुत्रकलत्रादिसंबंधास्त एव मोहहेतुतयैकेन्द्रि-
यादिजातीनां पंथानः पाशजातिपथास्तान् पाशजातिपथान् दृष्ट्वा, यदा हि पुत्रकलत्रादिषु
मोहं करोति तदैकेन्द्रियत्वं जीवो बध्नाति. ॥ २ ॥

॥ मूलम् ॥—माया पियाएहुसा त्राया । त्रज्जा पुत्ताय उरसा ॥ नालं ते मम ताणाय
। लुप्पंतस्स सकम्मुणा ॥ ३ ॥ व्याख्या—पंडित इति विचारयेदित्यध्याहारः कर्तव्यः, इती-
ति किं? एते मम त्राणाय मम रक्षायै नालं न समर्थाः, कथंभूतस्य मम? स्वकर्मणा लुप्त-
स्य स्वकर्मणा पीड्यमानस्य, एते के? माता पिता स्नुषा बंधुर्भ्राता सहोदरो त्रार्या पत्नी पुत्राः
पुत्रत्वेन मानिताः, च पुनः ' उरसा ' स्वयमुत्पादिताः, एते सर्वेऽपि स्वकर्मसमुद्भूतदुःखा-
द्रक्षणाय न समर्था त्रवंतीत्यर्थः. ॥ ३ ॥

॥ मूलम् ॥—एयमठ्ठंसपेहाए । पासे समियदंसणे ॥ छिंदे गेहिं सिणेहं च । न कंखे पु-
व्वसंथवं ॥ ४ ॥ व्याख्या—शमितदर्शनः शमितं ध्वस्तं दर्शनं मिथ्यादर्शनं येन स शमितद-
र्शनः, अथवा सम्यक्प्रकारेण इतं प्राप्तं दर्शनं सम्यक्त्वं येन स समितदर्शनः, एतादृशः

संयम्येतदर्थं पूर्वोक्तमर्थमशरणादिकं 'सपेहाए' स्वापेक्षया स्वबुद्ध्या 'पासेइ' इति पश्येत्, हृद्यवधारयेत्, च पुनर्गेहं गृद्धिं रसतां, च पुनः स्नेहं पुत्रकलत्रादिषु रागं छिंद्यात्, पुनः पूर्वसंस्तवं न कांक्षेत्. पूर्वं संस्तवः पूर्वपरिचय एकग्रामादिवासस्तं न स्मरेत्. ॥ ४ ॥

॥ मूलम् ॥—गवासं मणिकुंमलं । पसवो दासपोरुसं ॥ सव्वमेयं चइत्ताणं । कामरूवी नविस्ससि ॥ ५ ॥ व्याख्या—पुनरपि पंमित आत्मानमिति शिक्षयेत्, अथवा गुरुः शिष्यं प्रत्युपदिशति हे आत्मन्! अथवा हे शिष्य! एतत्सर्वं त्यक्त्वा कामरूपी स्वेछाचारी नविष्यसि, परलोके च निरतीचारसंयमपालनाद्देवनवे वैक्रियादिलब्धिमांस्त्वं नविष्यसि, एतत्किं तदाह—गवाश्वं, गावश्चाश्वाश्च गवाश्वं, पुनर्मणिकुमलं, मणयश्चंद्रकांताद्याः, कुमलग्रहणेनान्येषामप्यलंकाराणां ग्रहणं स्यात्, सर्वे मणयः सर्वाण्यलंकाराणि चेत्यर्थः, पशवोऽजैडकपक्षमपट्यास्रुत्पादकरोमधारकाः कुर्कुरादयश्च, दासा गृहदासीन्यः समुत्पन्ना जीवाः, पौरुषा निजकुलोत्पन्नपुरुषाः, दासाश्च पौरुषाश्च दासपौरुषं. एते सर्वेऽपि मरणान्न त्रायंत इत्यर्थः, तस्मात्पूर्वमेतत्त्यक्त्वा संयमं परिपालयेदित्यर्थः. ॥ ५ ॥

॥ मूलम् ॥—थावरं जंगमं चेव । धणं धन्नं उवक्करं ॥ पच्चमाणस्स कम्मेहिं । नालं दुक्खाउ मोअणे ॥ ६ ॥ व्याख्या—पुनरेतत्सर्वं वस्तु कर्मभिः पच्यमानस्य जीवस्य दुःखान्मोचनेऽलं समर्थं न भवति. एतत्किं? स्थावरं गृहादिकं, च पुनर्जंगमं पुत्रमित्रभृत्यादि, पुनर्धनं गणिमादि, धान्यं व्रीह्यादि, पुनरुपस्करं गृहोपकरणं. ॥ ६ ॥

॥ मूलम् ॥—अप्पत्थं सव्वउ सव्वं । दिस्स पाणे पियायए ॥ न हणे पाणिणो पाणे । भयवेराउ उवरए ॥ ७ ॥ व्याख्या—साधुः सर्वतः सर्वप्रकारेण सर्वमध्यात्मं सुखदुःखादिकं 'दिस्स' इति दृष्ट्वा सर्वप्रकारेण सर्वं सुखदुःखादिकमात्मनि स्थितं ज्ञात्वा सुखदुःखयोर्वेदकमात्मानं ज्ञात्वा इष्टसंयोगादिहेतुभ्यः समुत्पन्नं सुखं सर्वस्यात्मनः प्रियं स्यात्, इष्टवियोगादिहेतुभ्यः समुत्पन्नं दुःखं सर्वस्यात्मनोऽप्रियं ज्ञात्वेत्यर्थः. च पुनः प्राणिनो जीवान् प्रियात्मनो दृष्ट्वा, प्रिय आत्मा येषां ते प्रियात्मानस्तान् प्रियात्मान्, सव्वे जीवावि इच्छेति। जीविउं न मरिज्जिउं ॥' इति दृष्ट्वा हृदि विचार्य प्राणिनो जीवस्य प्राणानिंद्रियोच्छ्वासानिःश्वासायुर्बलरूपान्न हन्यात्, भयाद्वैराच्चोपरमेत्, निवर्तेत. अथवा कथंभूतः साधुः? भया-

दूराडुपरतो निवर्तितः, इति साधुविशेषणं कर्तव्यं. ॥ ७ ॥

॥ मूलम् ॥—आयाणं नरयं दिस्स । नाइयज्ज तणामवि ॥ दोगुंछी अप्पणो पाए। दिन्नं भुंजिज्ज भोअणं ॥ ८ ॥ व्याख्या—साधुस्तृणमपि 'नाइयज्ज' इति नाददीत, अदत्तं न गृह्णीत, किं कृत्वा? आदानं नरकं दृष्ट्वा, आदीयत इत्यादानं धनधान्यादिकं परिग्रहं, नरकं नरकहेतुत्वान्नरकं ज्ञात्वेत्यर्थः. पुनः साधुः 'पाए दिन्नं, पात्रे दत्तं गृहस्थेन पात्रमध्ये प्रक्षिप्तं भोजनं शुद्धाहारं 'भुंजेज्ज' भुंजीत, कथंभूतः सन्? 'अप्पणो दुगंछी' आत्मनो जुगुप्सी सन्, आहारसमये आत्मनंदकः सन् अहो धिग्ममात्मानं! अयमात्मा देहो वाहारं विना धर्मकरणेऽसमर्थः, किं करोमि? धर्मनिर्वाहार्थमस्मै भाटकं दीयत इति चिंतयन्नाहारं कुर्यात्, न तु बलपुष्ट्याद्यर्थमाहारं विधीयत इति चिंतयेत्. अत्रादत्तपरिग्रहाश्रवद्वयनिरोधादन्येषामप्याश्रवाणां निरोध उक्त एव. ॥ ८ ॥

॥ मूलम् ॥—इहमेगे उ मन्नंति । अप्पच्चक्खाय पावगं ॥ आयारियं विदित्ताणं । सव्वदुक्खा विमुच्चई ॥ ९ ॥ व्याख्या—इहास्मिन् संसारे एके केचित्कापिलिकादयो ज्ञान-

वादिन इति मन्यंते, इतीति किं? पापकं हिंसादिकमप्रत्याख्याय पापमनालोच्यापि मनुष्य आचारिकं स्वकीयस्वकीयमतोद्भवानुष्ठानसमूहं विदित्वा ज्ञात्वा, सर्वदुःखाद्विमुच्यते, एतावता तत्वज्ञानान्मोक्षावाप्तिः, इति वदंति, जैनानां तु ज्ञानक्रियाभ्यां मोक्षः, ज्ञानवादिनां तु ज्ञानमेव मुक्त्यंगमिति. ॥ ए ॥

॥ मूलम् ॥—नणंता अकरिंता य । बंधमोक्खपइन्निणो ॥ वाया वीरियमित्तेणं । समासासंति अप्पयं ॥ १० ॥ व्याख्या—पुनस्त एव ज्ञानवादिनो बंधमोक्षप्रतिज्ञिनो वाचा वीर्यमात्रेण केवलं वाक्शूरत्वेनात्मानं समाश्वासयंति, बंधश्च मोक्षश्च बंधमोक्षौ, तयोः प्रतिज्ञायं ज्ञानं येषां ते बंधमोक्षप्रतिज्ञिनो बंधमोक्षज्ञा इत्यर्थः. यतः—मन एव मनुष्याणां । कारणं बंधमोक्षयोः ॥ यत्रैवालिंगिता कांता । तत्रैवालिंगिता सुता ॥ १ ॥ इत्यादि प्रतिज्ञां कुर्वाणास्ते किं कुर्वंतः? आत्मानमाश्वासयंति नणंतो ज्ञानमभ्यस्यंतः, च पुनरकुर्वंतः क्रियामनाचरंतः प्रत्याख्यानतपःपौषधव्रतादिकां क्रियां निंदंतः, ज्ञानमेव मुक्त्यंगतयांगीकुर्वंत इत्यर्थः.

॥ मूलम् ॥—न चित्ता नायए नासा । कर्ज विज्जाणुसासणं ॥ विसन्ना पावकम्मेहिं ।

करे विस्वास देवे

की काइ जरुरन्ही

६=रहेतु

वाला पंक्रियमाणिणो ॥ ११ ॥ व्याख्या—पंक्तिमानिन आत्मानं पंक्तिंमन्या ज्ञानाहंकार-धारिण इति न जानंति, इत्यध्याहारः, इतीति किं? चित्राः प्राकृतसंस्कृताद्याः षड्भाषाः, अथवान्या अपि देशविशेषान्नानारूपा जाषा वा पापेन्यो दुःखेन्यो न त्रायंते न रक्षंते, तर्हि विद्यानां न्यायमीमांसादीनामनुशासनमनुशिक्षणं विद्यानुशासनं कुतस्त्रायते न त्रायत इत्यर्थः. अथवा विद्यानां विचित्रमंत्रात्मिकानां रोहिणीप्रज्ञप्तिकागौरीगंधार्यादिषोडशविद्यादेव्यधिष्ठितानामनुशासनमनुशिक्षणमाराधनं कुतो नरकात् त्रायते? कीदृशास्ते वालाः? अतत्वज्ञाः, पुनः कीदृशास्ते? पापकर्मभिर्विषण्णा विविधमनेकप्रकारं यथास्यात्तथा सन्नाः पापपंकेषु कक्षिता इत्यर्थः. ॥ ११ ॥

॥ मूलम् ॥—जे केइ सरीरे सत्ता । वन्ने रूवे य सव्वसो ॥ मणसा कायवक्केण। सव्वे ते दुक्खसंजवा ॥१२॥ व्याख्या—ये केचन ज्ञानवादिनः शरीरे सक्ताः सुखान्वेषिणश्च संति, तथा पुनर्ये वर्णे शरीरस्य गौरादिके, च पुनस्तथारूपे सुंदरनयननासादिके, चशब्दाच्छब्दे रसे गंधे स्पर्शे च सर्वथा मनसा कायेन वाक्येन सक्ताः संलग्नाः संति ते सर्वे दुःखसंजवा दुःखस्य संजवा

दुःखसंज्ञवा दुःखन्नाजनं भवंति, मृगपतंगमीनमधुपमातंगवदिहलोके यथा मरणदुःखन्नाजः, परलोकेऽप्यार्तध्यानेन मृता दुःखिनः स्युरित्यर्थः. ॥ १२ ॥

॥ मूलम् ॥—आवन्ना दीहमद्धाणं । संसारंमि अणंतए ॥ तम्हा सवदिसं पस्स । अप्पमत्तो परिव्वए ॥ १३ ॥ व्याख्या—तेऽज्ञानवादिनो विषयिणोऽनंतकेऽपारे संसारे दीर्घमध्वानं मार्गमापन्नाः प्राप्ताः संति, तस्मात्कारणात्सर्वां दिशं नवभ्रमणरूपामष्टादशभावदिशो दृष्ट्वा साधुरप्रमत्तः प्रमादरहितः सन् विचरेत्, अष्टादशन्नावदिशश्चेमाः—पुढवि १ जल २ जलण ३ वाउ ४ । मूला ५ खंध ६ ग्गा ७ पोरबीया य ८ ॥ बि ९ ति १० चउ ११ पंचिंदियतिरि १२ । नारया १३ देवसंघाया १४ ॥ १ ॥ समुच्छिम १५ कम्मा १६ कम्म—गा य १७ मणुया तहंतरदीवा १८ ॥ न्नावदिसा दिस्सइजं । संसारी नियमेआहि ॥ २ ॥ इति संसारे प्रमादिनो जीवा इमास्वष्टादशन्नावदिशासु पुनः पुनर्भ्रमंतीत्यर्थः. ॥ १३ ॥

॥ मूलम् ॥—बहिया उड्डमादाय । नावकंखे कयाइवि ॥ पुव्वकम्मक्खयट्ठाए । इमं देहं समुद्धरे ॥ १४ ॥ व्याख्या—साधुः पूर्वकर्मक्षयार्थमिमं देहं समुद्धरेत्, सम्यक् शुद्धाहा-

रेण धारयेत, पुनः कदापि परीपहोपसर्गादिभिः पीडितोऽपि न कस्यापि साहाय्यसत्कांक्षेन्नाभिलपेत्. अथवा कदापि विषयादिभ्यो न स्पृहयेत्. किं कृत्वा? ' बहिया ' संसाराद्बहिस्तात्संसाराद्बहिर्भूतमूर्ध्वं लोकाग्रस्थानं मोक्षमादायाभिलष्य. ॥ १४ ॥

॥ मूलम् ॥—विगिंच कम्मुणो हेउं । कालकंखी परिव्वए ॥ मायं पिंडस्स पाणस्स । कडं लध्धूण नक्खए ॥ १५ ॥ व्याख्या—कालकांक्ष्यवसरज्ञः साधुः कर्मणां हेतुं कर्मणां कारणं मिथ्यात्वाविरतिकषाययोगादिकं ' विगिंच ' विविच्यात्मनः सकाशात्पृथक्कृत्य परित्यज्य संयममार्गे संचरेत्, कालं स्वक्रियानुष्ठानस्यावसरं कांक्षतीत्येवंशीलः कालकांक्षी, पुनः स साधुः पिंडस्याहारस्य तथा पानस्य पानीयस्य मात्रां परिमाणं लब्ध्वा भक्षयेत्, यावत्या मात्रयात्मसंयमनिर्वाहः स्यात्तावत्प्रमाणमाहारं पानीयं च गृहीत्वा कुर्यादित्यर्थः. कथंभूतमाहारं? कडं गृहस्थेनात्मार्थं कृतं, प्राकृतत्वाद्विभक्तिव्यत्ययः ॥ १५ ॥

॥ मूलम् ॥—सन्निहिं च न कुविज्जा । लेवमायाइ संजए । पक्खी पत्तं समादाय । निरवक्खो परिव्वए ॥ १६ ॥ व्याख्या—च पुनः संयतः साधुर्लेपमात्रयापि संनिधिं न कुर्यात्. ले-

पस्य मात्रा लेपमात्रा, तया लेपमात्रया सं सम्यक्प्रकारेण निधीयते स्थाप्यते दुर्गतावात्मा येन स संनिधिर्घृतगुडादिसंचयस्तं न कुर्यात्, यावता पात्रं लिप्यते तावन्मात्रमपि घृतादिकं न संचयेत्, भिक्षुराहारं कृत्वा पात्रं समादाय पात्रं गृहीत्वा निरपेक्षः सन्निःस्पृहः सन् परिव्रजेत्, साधुमार्गे प्रवर्तेत. क इव? ' पक्खी इव ' यथा पक्ष्याहारं कृत्वा पत्रं तनूरुहमात्रं गृहीत्वोड्डीयते, तथा साधुरपि कुक्षिशंबलो भवेत्. ॥ १५ ॥

॥ मूलम् ॥—एसणासमिउ लज्जू । गामे अ नियउ चरे ॥ अप्पमत्तो पमत्तेहिं । पिण्डवायं गवेसए ॥ १६ ॥ व्याख्या—एषणासमितो निर्दोषाहारग्राही साधुर्ग्रामे नगरे वाऽनियतो नित्यवासरहितः सन् चरेत्, संयममार्गे प्रवर्तेत, कीदृशः साधुः? लज्जुर्लज्जालुः, लज्जा संयमस्तेन सहितः, पुनः कीदृशः? अप्रमत्तः प्रमादरहितः, पुनः साधुः ' पमत्तेहिं ' इति प्रमत्तेभ्यो गृहस्थेभ्यः पिण्डपातं भिक्षां गवेषयेत्, गृह्णीत, पंचमीस्थाने तृतीया. ॥ १७ ॥

॥ मूलम् ॥—एवं से उदाहु—अणुत्तरनाणी अणुत्तरदंसी । अणुत्तरनाणदंसणधरे ॥ अरहा नायपुत्ते । भयवं वेसालिवियाहिएत्ति बेमि ॥ १८ ॥ व्याख्या—सुधर्मास्वामी जंबूस्वामिनं प्र-

त्याह हे जंबू! से इति सोऽर्हन् ज्ञातपुत्रो महावीरः ' एवं उदाहु ' एवमुदाहृतवान्. अहं तवाग्रे इति ब्रवीमि, अर्हद्भिरिन्द्रादिभिः पूज्यो ज्ञातः प्रसिद्धः सिद्धार्थक्षत्रियस्तस्य पुत्रो ज्ञातपुत्रः, कीदृशो महावीरः? भगवानष्टमहाप्रातिहार्याद्यतिशयमाहात्म्ययुक्तः, पुनः कीदृशः? विशाला त्रिशला तस्याः पुत्रो वैशालिकः, अथवा विशालाः शिष्यास्तीर्थं यशःप्रभृतयो गुणा यस्येति वैशालिकः, पुनः कीदृशो महावीरः? ' वियाहिए ' इति व्याख्याता विशेषेणाख्याता द्वादश परीषदासु समवसरणे धर्मोपदेशं व्याख्याता धर्मोपदेशक इत्यर्थः. पुनः कीदृशो महावीरः? अनुत्तरज्ञानी सर्वोत्कृष्टज्ञानधारी, पुनः कीदृशः? अनुत्तरदर्शी, अनुत्तरं सर्वोत्कृष्टं पश्यतीत्येवंशीलोऽनुत्तरदर्शी, पुनः कीदृशः? अनुत्तरज्ञानदर्शनधरः, केवलवरज्ञानदर्शनधारीत्यर्थः. अत्र पूर्वमनुत्तरज्ञान्यनुत्तरदर्शीति विशेषणद्वयमुक्त्वा पुनरनुत्तरज्ञानदर्शनधर इति विशेषणमुक्तं, तेन केवलदर्शनयोरेकसमयांतरेण युगपदुत्पत्तिः सूचिता, अनयोः कथंचिद्भेदोऽभेदश्च सूचितः, पुनरुक्तिदोषो न ज्ञेयः. ॥ १८ ॥ इति क्षुल्लकग्रंथित्वाध्ययनं. अत्राध्ययने क्षुल्लकस्य साधोर्निर्ग्रंथित्वमुक्तमित्यर्थः. ॥



इसप्रकार केता

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां क्षुल्लकग्रंथित्वाध्ययनस्य षष्टस्यार्थः संपूर्णः ॥ श्रीरस्तु ॥



॥ अथ सप्तममध्ययनं प्रारभ्यते ॥

अत्र पूर्वाध्ययने साधोर्निर्ग्रंथत्वमुक्तं, तच्च यो रसेष्वगृद्धो भवेत्तस्यैव स्यात्, रसगृद्धस्य कष्टमुत्पद्यते, तेन रसगृद्धस्य कष्टोत्पत्तिदृष्टांतसूचकमुरभ्रादिपंचदृष्टांतमयं सप्तममुरभ्रीयाख्यं कथ्यते, इति षष्टसप्तमयोः संबंधः.

॥ मूलम् ॥—जहाएसं समुद्दिस्सा । कोइ पोसिज्ज एलयं ॥ उयणं जव संदिज्जा । पोसिज्जा विसयंगणे ॥ १ ॥ व्याख्या—यथा कोऽपि कश्चिन्निर्दयः पुमानादेशं, आदिश्यते विधिव्यापारेषु प्रेर्यते परिजनो यस्मिन्नागते स आदेशस्तं प्राघूर्णकं समुद्दिश्याश्रित्य स्वकांगणे

=पोषणकरे=

स्वकीयगृहांगणे एलकमेकमूरणकं पोषयेत्, तस्मै एलकायोदनं सम्यग्धान्यं यवसं मुद्गमा-
पादिकं दद्यात्, ततश्च पोषयेत्, पुनः पोषयेदित्युक्तं तदत्यादरख्यापनार्थं, अपिशब्दः संभा-
वने, संभाव्यत एषु एवंविधः कोऽपि गुरुकर्मेत्यर्थः. ॥ १ ॥ अत्रोदाहरणं यथा—एकमूरणकं
प्राघूर्णकार्थं पोष्यमाणं लाल्यमानं दृष्ट्वैको वत्सः खिन्नः क्षीरमपिबन् गवा मात्रा पृष्टः कथं न
वत्स! क्षीरं पिबसि? स आह मातरेष उरणकः सर्वैर्लोकैः पाल्यते, व्रीहींश्चार्यते, पुत्र इव वि-
विधैरलंकारैरलंक्रियते, अहं तु मंदभाग्यः शुष्काण्यपि तृणानि न प्राप्नोमि, न च निर्मलं पा-
नीयमपि प्राप्नोमि, न च मां कोऽपि लालयति, माता प्राह पुत्र! अस्यैतान्यातुरचिह्नानि, य
था मर्तुकाम आतुरो यद्यन्मार्गयति पथ्यमपथ्यं वा तत्तत्सर्वं दीयते, तद्वत्तत्सर्वमप्यस्य दीय-
ते. अयमसौ मारयिष्यते तदा त्वं द्रक्ष्यसि. अन्यदा तत्र प्राघूर्णकः समायातः, तदर्थं तमू-
रणकं मार्यमाणं दृष्ट्वा भीतः स वत्सः पुनः स्तन्यपानमकुर्वन्मात्राऽनुशिष्टो हे पुत्र! किं त्वं
भीतोऽसि? पूर्वं मयोक्तं न स्मरसि किं? आतुरचिह्नान्येतानीति, य एवं व्रीहींश्चारितः प्रका-
मं लालितः स एव मार्यते, त्वं तु शुष्काण्येव तृणानि चरितवानसीति मा भैषीः? नैव मा-

रयिष्यसे, इति मात्रोक्तो वत्सः सुखेनैव स्तन्यपानमकरोत्. एवं यो यथेष्टविविधास्वादलंपटोऽधर्ममाचरति स नरकायुर्बध्नातीत्यर्थः. ॥ १ ॥

॥ मूलम् ॥—तओ पुट्ठे परिवूढे। जायमेए महोदरे ॥ पीणिए विउले देहे। आएसं परिकंखए ॥ २ ॥ व्याख्या—ततः स एलकः कीदृशो जातः? ततः स उरभ्रः पुष्ट उपचितमांसः, परिवृढो युद्धादौ समर्थः, सर्वेष्वन्येषूरभ्रेषु मुख्य इव दृश्यमाणः, पुनः कीदृशः? जातमेदाः पुष्टीभूतचतुर्थधातुः, पुनः कीदृशः? महोदरो विशालकुक्षिः, पुनः कीदृशः? प्रीणितो यथेप्सितभोजनादिना संतुष्टीकृतः, एतादृशः सन् स उरभ्रो विपुले विस्तीर्णे देहे सत्यादेशं प्राघूर्णकं परिकांक्षति प्रतीक्षतीव. ॥ २ ॥

॥ मूलम् ॥—जाव न एइ आएसे। ताव जीवइ से दुही ॥ अह पत्तंमि आएसे। सीसं छित्तूण भुज्जई ॥ ३ ॥ व्याख्या—स उरभ्रस्तावज्जीवति प्राणान् धारयति, कीदृशः सः? दुःखी, दुःखमस्य भावीति दुःखी, भाविनि भूतोपचारात्, यद्यपि वर्तमानकाले तस्य सुखमस्ति तथापि दुःखस्यागामित्वाद् दुःख्युच्यते, तावदिति किं? यावदादेशः प्राघूर्णको नैति नागच्छ-

ति. अथादेशे प्राप्ते सति शीर्षं छित्वा स उरभ्र आदेशेन समं स्वामिनापि भुज्यते. ॥ ३ ॥

॥ मूलम् ॥—जहा से खलु उरब्भे । आएसाए समीहिए ॥ एवं बाले अहम्मिठे । ईहइ नारयाउयं ॥ ४ ॥ व्याख्या—यथा स उरभ्र आदेशाय समीहितः कल्पितः, एवमिति तथा बालः कार्याकार्यविचाररहितोऽधार्मिष्टो नरकायुरीहते, इव नरकगतियोग्यकर्मकरणेन नरकाय कल्पित इत्यर्थः. ॥ ४ ॥

॥ मूलम् ॥—हिंसे बाले मुसावाई । अद्धाणम्मि विलोवए ॥ अन्नदत्तहरे तेणे । माई कन्नुहरे सढे ॥ ५ ॥ इत्थीविसयगिद्धे अ । महारंभपरिग्गहे ॥ भुंजमाणे सुरं मांसं । परिवूढे परं दमे ॥ ६ ॥ अयकक्करभोई य । तुंदिल्ले चिय सोणिए ॥ आउयं नरए कंखे । जहा एसं च एलए ॥ ७ ॥ व्याख्या—तिसृभिर्गाथाभिः पूर्वोक्तमेव दृढयति—एतादृशो नरो नारके इति नरकगतौ नरकायुरर्थान्नरकस्यायुः कांक्षति, नरकगतियोग्यकर्माचरणात्स नरो नरकगतिमेव वांछति, नरकाय कल्पितः, कः कमिव? एलकः पूर्वोक्त उरभ्र आदेशमिव यथा केनचित्पापेन यथेप्सितभोजनेन पोषित उरभ्र आदेशमिच्छति, कीदृशः सः? हिंस्रो हिंसन-

शीलः, पुनः कीदृशः? बालोऽज्ञानी, पुनः कीदृशः? मृषावादी, पुनः कीदृशः? अध्वनि विलोपको जिनमार्गलोपकः, पुनः कीदृशः? अन्यादत्तहरः, अन्येषामदत्तं हरतीत्यन्यादत्तहरः, अदत्तादानसेवीत्यर्थः. पुनः कीदृशः? स्तेनश्चौर्येण कल्पितवृत्तिः, पुनः कीदृशः? मायी कापट्ययुक्तः, पुनः कीदृशः? कस्यार्थं नु इति वितर्के हरिष्यामीति विचारो यस्य स कन्नुहरः, पुनः कीदृशः? शठो वक्राचारः. ॥ ५ ॥ पुनः कीदृशः? स्त्रीविषये गृद्धः, पुनः कीदृशः? महारंभपरिग्रहः, महांतावारंभपरिग्रहौ यस्य स महारंभपरिग्रहो महारंभी, पुनर्महापरिग्रही, पुनः कीदृशः? सुरां मद्यं मांसं च भुंजानः, पुनः कीदृशः? परिवृढ उपचितमांसत्वेन स्थूलः, पुनः कीदृशः? परंदमः, परमन्यं जीवं दमतीति परंदमः परपीडाकारकः, आत्मार्थं परजीवोपघातक इत्यर्थः. ॥ ६ ॥ पुनः कीदृशः? अजकर्करभोजी, अजस्य छागादेः कर्करमतिभ्रष्टं चणकवद्भुज्यमानं कर्करायते तन्मेदो दंतुरं पक्वं शूलाकृतं मांसं तद्भुंक्ते, इत्येवंशीलोऽजकर्करभोजी, पुनस्तुंदमस्यास्तीति तुंदिलो यथेप्सितभोजनेन वर्धितोदरः, अत एव चितशोणितो वर्धितरुधिरः, रुधिरवृद्ध्यान्येषामपि धातूनां वृद्धिर्गृह्यते. ॥ ७ ॥ पूर्वं ' हिंसे बाले ' इ-

त्यादिनारंभोक्तिः कथिता, 'भुंजमाणे सुरं मांसं' इत्यनेन दुर्गतिगमनलक्षणनात्कष्टोत्पत्तिः कथिता. अथ गाथाद्वयेन साक्षादिहैव कष्टं कथयति—

॥ मूलम् ॥—आसणं सयणं जाणं । वित्ते कामे अ भुंजिआ ॥ दुस्साहडं धणं हिच्चा । बहुसंचिणियारयं ॥ ८ ॥ तओ कम्मगुरूजंतू । पच्चुपन्नपरायणे ॥ अयव्व आगयाएसे । मरणं तंमि सोयए ॥ ९ ॥ व्याख्या—ततस्तदनंतरं प्रत्युत्पन्नपरायणः, प्रत्युत्पन्ने प्रत्यक्षभुज्यमानविषयसुखे परायणः प्रत्युत्पन्नपरायणः, परलोकसुखनास्तिकवादी जनो मरणांते मरणस्यांतः सामीप्यं मरणांतस्तस्मिन् मरणांते मरणे समागते सति शोचते शोकं कुरुते इति संबंधः. तत इति कुतः? पूर्वं किं कृत्वेत्याह—आसनं सुखासनादिकं, शयनं खट्वाडम्बरादिकं, हिंडोलखट्वादिकं, यानं गड्डिकादिकं, वित्तं द्रव्यं कामान् विषयान् भुक्त्वा दुःखाहृतं, दुःखेनाह्रियत इति दुःखाहृतं दुःखोत्पाद्यं धनं त्यक्त्वा, पुनर्बहु प्रचुरं रजःपातकं संचिणिया संचित्य समुपार्ज्य, एतावता बहुभिः परिग्रहैः पातकमुपार्ज्यायुर्षोंते स आरंभी जीवः शोचते. कथंभूतः सः? जंतुः कर्मगुरुः, कर्मभिर्गुरुः कर्मगुरुः, गुरुकर्मा, स क इव शोचते? अज इव

यथा पूर्वोक्तोऽज आदेशो प्राघूर्णके आगते सति शोचते, तथा स महारंभी परिग्रही विषयी जीवो मरणसमये शोचत इत्यर्थः. ॥ ९ ॥ पुनस्तदेव दृढयति—

॥ मूलम् ॥—तउ आउपरिक्खीणे । चुआ देहा विहिंसगा ॥ आसुरीयं दिसं बाला । गछंति अवसा तमं ॥ १० ॥ व्याख्या—तत आयुषि परिक्षीणे सति ते विहिंसका विशेषेण हिंसाकारका नरा देहाच्च्युता मनुष्यशरीराद्भ्रष्टाः संत आसुरीयं दिशं गछंति, कीदृशास्ते बालाः? मूर्खा असुराणां रौद्राणां रुद्रकर्मकारिणामियं भावदिशा आसुरी, तां, पुनः कीदृशास्ते? अवशाः परवशा इंद्रियवशवर्तिनो वा. कीदृशीमासुरीं दिशं? तममिति तमोंधकारं, तद्युक्तत्वात्, तमःस्तोममयीं नरकगतिमिति भावः. ॥ इति प्रथम एलकस्य दृष्टांतः. अथ काकिन्याम्रदृष्टांतमाह—

॥ मूलम् ॥—जहा कागिणिए हेउं । सहस्सं हारए नरो ॥ अपछं अंबगं भुच्चा। राया रज्जं तु हारए ॥११॥ व्याख्या—यथा कश्चिन्नरः काकिन्या हेतोः सहस्रं टंकानां सहस्रं हारयेत्, काकिणी तु रूपकद्रव्यस्याशीतितमो भागस्तदर्थं कश्चित्कृपणः टंकानां दीनाराणां सह-

त्नं पातयेत्. सोऽतीवमूर्खशिरोमणिः. अत्र मनुष्यभोगसुखस्य तुच्छत्वेन कपर्दिकादृष्टांतः, तु पुनः कश्चिद्राजाऽपथ्यमाम्रफलं भुक्त्वा राज्यं हारितवान् हारयेद्वा. अत्र भोगसुखस्य तुच्छत्वोपरि काकिण्याम्रदृष्टांतद्वयोदाहरणे दर्श्येते—एकेन केनापि द्रमकेण वृत्तिं कुर्वता महोपक्रमेण कार्षापणसहस्रमर्जितं, स तद्वासनिकां कटौ बध्ध्वा सार्थेन समं गृहं प्रस्थितः, मार्गे भोजनार्थं चैकं रूपकमशीतिकाकिणीभिर्भित्वा दिने दिने एकया काकिण्या भुंक्ते. एवं मार्गे तेनैकोनाशीतिकाकिण्यो भक्षिताः, एका काकिण्यवशिष्टास्ति, सा च सद्यः सार्थे चलिते विस्मृता, अग्रे गच्छतस्तस्य सा स्मृतिपथमागता, एवं च तेन चिंतितमेकदिने भोजनार्थं मे रूपकभेदः कर्तव्यो भविष्यतीति क्वचिद्वासनिकां संगोप्य पश्चान्निवृत्तः. तत्र सा काकिणी केनचिद् हृता, यावच्च वासनिकास्थाने पुनरायाति तावत्सापि केनचिद् हृता, ततोऽसावुभयभ्रष्टो गृहं गतः शोचति. अथाम्रदृष्टांतो दर्श्यते—कस्यचिद्राज्ञ आम्रजीर्णेन विसूचिकाभूत्, वैद्यैर्महतोपक्रमेण तामपनीयोक्तं चेदाम्राणि पुनस्त्वं खादसि तदा विनश्यसि. ततस्तेन राज्ञा स्वदेशे आम्रा उत्खातिताः. अन्यदा स राजाश्वापहृतो दूरतरवने गतः, तत्राम्रवृक्षछायायामु-

प्रविष्टः, पक्कान्याम्राणि दृष्ट्वा चलचित्तो मंत्रिणा वार्यमाणोऽपि भक्षितवान्, तदानीमेव स मृतः, एवं काकिण्याम्रसदृशमनुष्यकामासेवनतो बालनरेण देवकामा हार्यंति इति परमार्थः. ॥

॥ मूलम् ॥—एवं माणुस्सगा कामा । देवकामाण अंतिए ॥ सहस्सगुणिआ भुज्जो । आउं कामाय दिव्विया ॥ १२ ॥ व्याख्या—एवममुना प्रकारेण काकिण्याम्रदृष्टांतेन काकिण्याम्रसदृशा मानुष्यकाः कामा देवसुखानामंतिके देवसुखानां समीपे ज्ञेयाः. इह च दिव्यकामानामतिभूयस्त्वेन कार्षापणसहस्रराज्यतुल्यता सूचिता. मनुष्यकामानामग्रे भूयो वारंवारं सहस्रगुणिताः सहस्रैस्ताडिताः 'दिव्विया' इति दिव्यका देवसंबंधिनः कामाः शब्दादयो ज्ञेयाः, आयुर्जीवितमपि देवसंबंधिसहस्रगुणितं ज्ञेयं. दिव्यकाः कामाश्च यथा मनुष्यकामानामग्रे वारंवारं सहस्रगुणितास्तथायुरपि मनुष्यायुर्देवायुषोरंतरं ज्ञेयं. ॥ १२ ॥

॥ मूलम् ॥—अणेगवासा नउया । जा सा पन्नवओ ठीई ॥ जाणि जीयंति दुम्मेहा । कुणे वाससया उए ॥ १३ ॥ व्याख्या—प्रज्ञावतः क्रियासहितज्ञानयुक्तस्य या स्थितिर्विद्यते, सा भवतामस्माकं च प्रतीतास्ति, तत्र स्थितौ यान्यनेकवर्षनयुतानि, अनेकान्यसंख्येयानि

वर्षनयुतानि येषु तान्यनेकवर्षनयुतानि, अर्थाद्यानि पल्योपमसागराणि जवंति, अत्र प्राकृतत्वादनेकवर्षनयुता इति पुल्लिंगनिर्देशः कृतः. अथवा यत्र देवस्थितावनेकवर्षनयुता यानीति ये कामा जवंति तानि सर्वाणि पल्योपमसागराणि, तत्प्रमाणान्यायूंषि दिव्यस्थितिविषयजूतानि, फुर्मेधसो फुर्बुद्धयः पुरुषा जने वर्षषतायुषि महावीरस्वामिवारके मनुष्यविषयैर्जीयंते हार्यंते, देवयोनियोग्यायुःकामसुखरहिताः क्रियंते, तुब्रमनुष्यसुखलब्धा मूर्खा देवस्थितिसुखहीना जवंति, अत एव फुर्मेधस इत्युक्तं. दुर्दुष्टा मेधा येषां ते फुर्मेधस इति. ॥ १३ ॥ अथ द्वाभ्यां गाथाभ्यां व्यवहारोपमामाह—

॥ सूलम् ॥—जहा य तिन्नि वणिया । मूलं घित्तूण निग्गया॥ एगुब लहए लाजं । एगो मूलेण आगउ ॥१४॥ एगो मूलंपि हारित्ता । आगउ तब वाणिउ ॥ ववहारउवमा एसा । एवं धम्मे वियाणह ॥ १५ ॥ व्याख्या—यथा च त्रयो वणिजः कस्माच्चिद्व्यापारिणः समीपान्मूलं नीवीद्रव्यं गृहीत्वा स्वकीयनगरादपरनगरे गताः. अत्र त्रिषु वणिग्जनेष्वेको लाजं लजते, एको मूलेन नीवीद्रव्येण सह समागतः, एको मूलं द्रव्यमपि हारयित्वा द्यूतमद्यपर-



=आसक्त हुआ

स्त्रीवेश्यासेवनादिकुव्यापारैर्गमयित्वा स्वगृहमागतः. एषा व्यवहारे उपमास्ति, एषैवोपमा धर्मेऽपि यूयं जानीथेत्यर्थः. ॥ १५ ॥

॥ मूलम् ॥— माणुसत्तं भवे मूलं । लाभो देवगई भवे ॥ मूलछेएण जीवाणं । नरगतिरिक्खत्तणं धुवं ॥ १६ ॥ व्याख्या—मनुष्यो मृत्वा मनुष्य एव भवेत्, तदा मनुष्यत्वं मूलद्रव्यसदृशं ज्ञेयं, यो मनुष्यभवाच्च्युत्वा देवो भवेत्तदा देवत्वं लाभतुल्यं ज्ञेयं, यत्पुनर्मनुष्याणां नरकतिर्यक्त्वप्राप्तिर्भवेत्तदा मूलछेदेन ध्रुवं निश्चितं दुर्भाग्यत्वं ज्ञेयं. ॥ १६ ॥

॥ मूलम् ॥—दुहओ गईबालस्स । आवईवहमूलिया ॥ देवत्तमाणुसत्तं च । जं जिए लोलया सढे ॥ १७ ॥ व्याख्या—बालस्य मूर्खस्य द्विधा गतिर्भवेत्, कथंभूता गतिः? 'आवईवहमूलिया' आपद्वधमूलिकाः, आपदो विपदो वधस्ताडनादिः, आपदश्च वधश्चापद्वधौ, तौ मूलं यस्याः सापद्वधमूलिका. जं इति यस्मात्कारणात्स बालो मूर्खो देवत्वं मानुषत्वं च हारितः, कीदृशः सन्? लोलया लांपट्येन जितः, पुनः कीदृशः? शठो धूर्तः ॥ १७ ॥

॥ मूलम् ॥—तओ जिए सया होई । दुविहं दुग्गए गए ॥ दुल्लहा तस्स उम्मग्गा । अ-

धाए मुचिरादवि ॥ १८ ॥ व्याख्या—ततो देवत्वमनुष्यत्वजयाद्देवगतिमनुष्यगतिहारणात्स मूर्खः सकृद्वारंवारं दुर्गतिं गतो नवतीत्यध्याहारः. तस्य बालस्य सुचिरादपि ' अद्धाए ' प्रभृतेऽप्यागामिनि काले ' उमग्गा ' उन्मज्जनमुन्मज्जा तस्या दुर्गतेः सकाशान्निःसृतिर्दुर्लहा दुर्लना नवति, निःसरणं दुष्करं नवेदित्यर्थः. ॥ १८ ॥

॥ मूलम् ॥—एवं जियं सपेहाए । तुलिया बालं च पंमियं ॥ मूलियंते पवेसंति । माणुसं जोणिमिंति जे ॥ १९ ॥ व्याख्या—एवममुना प्रकारेण बालं मूर्खं जनं संप्रेक्ष्यालोच्य, च पुनर्बालं मूर्खं, पुनः पंमितं तत्वज्ञं तुलित्वा तोलयित्वेति विचारणीयं. इतीति किं? ते मनुष्या मूलियं मौलिकं मूले नवं मौलिकं मूलद्रव्यं प्रविशंति लनंते, ते के? ये मनुष्या मानुषं योनिमेंति प्राप्नुवंति ते मूलरक्षकव्यवहारितुल्या ज्ञेयाः. ॥ १९ ॥

॥ मूलम् ॥—वेमायाहिं सिरकाहिं । जे नरा गिहिसुव्वया ॥ उविंति माणुसीं जोणिं । कम्मसच्चा हु पाणिणो ॥ २० ॥ व्याख्या—मानुषीं योनिं के नजंति तदाह—ये नरा विमात्रानिर्विविधप्रकारानिः शिक्षानिर्गृहिता नवंति, गृहिणश्च ते सुव्रताश्च गृहिसुव्रता गृहीत-

-देवगति मनु गतिने हारी: जोजो इने स राते विचारव

॥२३७॥ स्याधका =

अ तथिले कयुछे "महा आरम्भवडे, महापरिग्रहवडे, मांस नक्षणवडे, अने पंचेंद्रियना वधवडे आत जीवो नरकतुं आयुष्य बांधे छे" तेमज "गूढहृदयवालो, शठ अने शल्यसहित एवो जीव

सम्यक्त्वादिगृहस्थद्वादशव्रताः, ते प्राणिनस्ते जीवा हु निश्चयेन मानुषं योनिमुत्पद्यंते. वंध्य-
फलानि कर्माणि ज्ञानावरणीयादीनि येषां ते सत्यकर्माणः कर्मसत्याः, प्राकृतत्वात्कर्मशब्दस्य
प्राग्निपातः. ॥ २० ॥

॥ मूलम् ॥–जेसिं तु विउला सिरका । मूलयंते अइछिया ॥ सीलवंता सविसेसा । अ-
दीणा जंति देवयं ॥ २१ ॥ व्याख्या—तुरेवार्थे, येषां जीवानां विपुला विस्तीर्णा शिक्षा ग्र-
हणासेवनादिकास्ति ते जीवा मूलकमिव नृनवत्वमतिक्रांताः संतो देवत्वं यांति प्राप्नुवंति.
किंभूतास्ते जीवाः? शीलवंतः सदाचाराः, पुनः कथंभूतास्ते? सविशेषाः, सह विशेषणोत्त-
रगुणेन वर्तंत इति सविशेषाः, पुनः कीदृशाः? अत एवादीनाः, न दीनाः संतोषभाज इत्यर्थः.

॥ मूलम् ॥—एवं अदीणवं भिरकुं । अगारिं च वियाणिया ॥ कहं नु जिच्चमेलिरकं ।
जिच्चमाणो न संविदे ॥ २२ ॥ व्याख्या—पंमितः पुमान् ' मेलिरकं ' ईदृक्षं ' जिच्चं ' इति
जेयं जेतव्यं देवगतिमनुष्यगतिरूपं जीयमान इंद्रियविषयैर्हार्यमाणः, कथं नु न संविदेत्?
कथं न जानीत? अपि तु पंमितो ज्ञपरिज्ञयैवं जानीतैव. किं कृत्वा? एवममुना प्रकारेणा-



= ओतं श्रोयको =
=परलोकमां अम
रो शुधासे=

देन्यवंतं संतुष्टिभाजं भिक्षुं साधुं, च पुनरगारिणं गृहस्थं ' वियाणिया ' विशेषेण देवगति-
मनुष्यगतित्वागामित्वलक्षणेन ज्ञात्वा तस्मात्पंडितो धर्ममार्गे सावधानो भवेदित्यर्थः. ॥२२॥
॥ मूलम् ॥—जहा कुसग्गे उदयं । समुद्देण समं मिणे ॥ एवं माणुस्सगा कामा । दे-
वकामाण अंतिए ॥ २३ ॥ याख्या—यथा कुशाग्रे उदकं समुद्रेण समं मन्यते, एवं मानु-
ष्यकाः कामा देवकामानामंतिके समीपे ज्ञेयाः. ॥ २३ ॥
॥ मूलम् ॥—कुसग्गमित्ता इमे कामा । संनिरुद्धंमि आउए ॥ कस्स हेउं पुरा काउं ।
जोगक्खेमं न संविदे ॥ २४ ॥ व्याख्या—संनिरुद्धे संक्षिप्ते आयुषीमे प्रत्यक्षा मनुष्यसंबंधि-
नः कामाः कुशाग्रमात्राः संतीत्यध्याहारः, एवं सत्यपि जनः कस्य हेतुं पुरस्कृत्य कं हेतुं किं
कारणमाश्रित्य योगं, च पुनः क्षेमं न संविदे न जानीते, योगं क्षेमं च कथं न जानातीत्या-
श्चर्यमित्यर्थः. ॥ २४ ॥
॥ मूलम् ॥—इह कामा नियट्टस्स । अत्तट्ठे अवरज्झई ॥ सुच्चा नेआउयं मग्गं । जं
भुज्जो परिभस्सई ॥ २५ ॥ व्याख्या—इहेत्यत्र दृष्टांतपंचके क्रमात्—अपायबहुलत्वं १, तु-

ह्वं २, आयव्ययतो लाभं ३, हारणं ४, समुद्रजलदृष्टांतं च ५ ज्ञात्वेह नरभवे कश्चिद्गुरुकर्मा जीवस्तस्य कामाद्भोगसुखादनिवृत्तस्य, आत्मार्थो मोक्षोऽपराध्यति नश्यति विषयिणो जीवस्य मोक्षो न भवतीत्यर्थः. अत्र हेतुमाह—जं इति यस्मात्कारणात्स गुरुकर्मा जीवो नैयायिकं मार्गं मोक्षमार्गं श्रुत्वा भूयो वारंवारं परिभ्रश्यति, संसारगर्तायां पततीत्यर्थः. ॥२५॥

॥ मूलम् ॥—इह कामनियट्टस्स । अत्तठे नावरज्झई ॥ पूइदेहनिरोहेण । भवे देविन्ति मे सुयं ॥ २६ ॥ व्याख्या—हे शिष्य! मे मयेति श्रुतं, इतीति किं? इहास्मिन्नरभवे कामान्निवृत्तस्य जीवस्य लघुकर्मण आत्मार्थो मोक्षो न नश्यति, स च पुमान् पूतिदेहनिरोधेनौदारिकदेहत्यागेन शतनपतनविध्वंसनधर्मात्मकपिंडाभावेन देवो भवेद्देवशरीरं प्राप्नुयात्. ॥

॥ मूलम् ॥—इड्ढी जुइ जसो वन्नो । आउयं सुहमणुत्तरं ॥ भुज्जो जत्थ मणुस्सेसु । तत्थ से उववज्जइ ॥ २७ ॥ व्याख्या—स निर्विषयी कामान्निवृत्तो जीवस्तत्र मनुष्येषु भूयो वारंवारमुत्पद्यते, तत्र कुत्र? यत्र मनुष्येषु ऋद्धिः स्वर्णरूप्यरत्नमाणिक्यादिका भवंति, तत्र द्युतिर्देहस्य कांतिर्भवति, पुनर्यत्र यशो भवति, पराक्रमादुत्पन्नधर्मविशेषरूपं यश उच्यते, पु-

नर्यत्र वर्णो गांजीर्यादिगुणैर्वर्णनं, वर्णः श्लाघा, अथवा वर्णशब्देन गौरवादिगुणो वा, पुनर्यत्रायुः संपूर्णं प्रचुरं च जवति, पुनर्यत्र सुखं जवति, एतेषां सर्वेषामनुत्तरपदेन विशेषणं कर्तव्यं, अनुत्तरं सर्वोत्कृष्टं देवजवापेक्षयेतदुक्तव्यम्. ॥ २७ ॥

॥ मूलम् ॥—वालस्स पस्स वालत्तं । अहम्मं पडिवज्जिया ॥ विच्चा धम्मं अहम्मिट्ठे । नरए उववज्जइ ॥ २८ ॥ व्याख्या—हे शिष्य! तं वालस्य हिताहितज्ञानरहितस्य वालत्वं मूर्खत्वं पश्य? स अधार्मिष्टो वालो धर्मं त्यक्त्वाऽधर्मं प्रतिपद्य नरके उत्पद्यते. ॥ २८ ॥

॥ मूलम् ॥—धीरस्स पस्स धीरत्तं । सवधम्माणुवत्तिणो ॥ विच्चा अधम्मं धम्मिट्ठे । देवेसु उववज्जई ॥ २९ ॥ व्याख्या—हे शिष्य! धीरस्य पंडितस्य धीरत्वं पश्य? त्वं विचारय? धिया राजत इति धीरः, धियं बुद्धिं राति ददातीति धीरः, तस्य कीदृशस्य धीरस्य? सर्वधर्मानुवर्तिनः, सर्वे ये क्षांत्यादयो धर्मास्ताननुवर्तितुमनुकूलत्वेन चरितुं शीलं यस्य स सर्वधर्मानुवर्ती, तस्य क्षांत्यादिदशविधधर्मधारकस्य, कीदृशं धीरत्वं तदाह—स धर्मिष्ठो धीरोऽधर्मं त्यक्त्वा देवेषूत्पद्यते. ॥ २९ ॥



उत्पन्न होवे

॥ मूलम् ॥—तुलियाण बालभावं । अबालं चेव पंडिए ॥ चइऊण बालभावं । अबालं सेवइ मुणीति बेमि ॥ ३० ॥ व्याख्या—मुनिस्तीर्थंकरादेशकारी साधुरेवममुना प्रकारेण बालस्य बालभावं, च पुनः पंडितस्याबालं पंडितत्वं, 'तुलिया' इति तोलयित्वा, णकारो वाक्यालंकारे, पश्चात्पंडितस्तत्वज्ञः पुमान् बालभावं मूर्खत्वं त्यक्त्वाबालं पंडितत्वं सेवयेत्, अंगीकुर्यादित्यर्थः इत्यहं ब्रवीमि, सुधर्मास्वामी जंबूस्वामिनं प्रत्याह. ॥ ३० ॥ इत्यौरभ्रीयाख्यं सप्तममध्ययनं संपूर्णं. ॥ ७ ॥

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां सप्तमाध्ययनस्यार्थः संपूर्णः ॥ श्रीरस्तु ॥



॥ अथाष्टममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययने विषयत्याग उक्तः, स च निर्लोभस्यैव भवति, ततोऽष्टममध्ययनं कपिलस्य महामुनेर्दृष्टांतगर्भितं निर्लोभत्वदृढीकरणत्वं कथ्यते. पूर्वं च कः कपिलः? कथं च स

मुनिर्जातः? अतस्तदुत्पत्तिरुच्यते—

कौशांव्यां नगर्यां जितशत्रुराजा राज्यं करोतिस्म, तत्र काश्यपो ब्राह्मणः, स चतुर्दशविद्यास्थानपारगः पौराणां राज्ञश्चातीवसम्मतः, तस्य राज्ञा महती वृत्तिर्दत्ता, काश्यपब्राह्मणस्य यशानाम्नी भार्या वर्तते, तयोः पुत्रः कपिलनामास्ति, तस्मिन् कपिले बाल एव सति काश्यपो ब्राह्मणः कालं गतः, तदधिकारो राज्ञान्यस्मै ब्राह्मणाय दत्तः, सोऽश्वारूढश्छत्रेण ध्रियमाणेन नगरांतर्व्रजति. एकदा तं तथा व्रजंतं दृष्ट्वा यशा भृशं रुरोद. कपिलेन पृष्टं मातः किं रोदिषि! सा प्राह वत्स! तव पितेदृश्या ऋद्ध्या पुरांतर्भ्रमन्नभूत्, मृते च तव पितरि, त्वयि चाविद्वुपि सत्ययं तव पैत्र्यं पदं प्राप्तस्ततो रोदिमि, कपिल ऊचेऽहं भणामि, यशा प्राह हे पुत्रात्र तव न कोऽप्येतल्लीत्या पाठयिष्यति, इतस्त्वं श्रावस्त्यां व्रज? तत्र त्वत्पितृमित्र इंद्रदत्तो ब्राह्मणस्त्वां पाठयिष्यति. ततः कपिलः श्रावस्त्यां तत्समीपं गतः, तेन पृष्टं कस्त्वं? कुत आयातः? कपिलेन सर्वं स्वरूपमूचे. तेन मित्रपुत्रत्वात्सविशेषं पाठ्यते, परं स्वगृहे भोजनं तस्य कारयितुं न शक्यते.

ततोऽनेन शालिभद्रनामा तत्रत्यो व्यवहारी प्रार्थितो यथास्य त्वया निरंतरं भोज्यं देयं, त्वत्प्रसादान्निश्चिंतोऽसौ पठिष्यति, तेनापितत्प्रतिपन्नं, कपिलः शालिभद्रगृहे प्रत्यहं भुंक्ते, इंद्रदत्तगुरुसमीपे चाध्येति, शालिभद्रगृहे चैका दासी वर्तते, दैवयोगात्तस्यामसौ रक्तोऽभूत्. अन्यदा सा गर्भिणी जाता, सा कपिलंप्रत्याहाहं तव पत्नी जाता, ममोदरे त्वज्जर्भो जातोऽतस्त्वया मे भरणपोषणादि कार्यं. कपिलस्तद्वचःश्रवणाद्भृशं खिन्नः परमामधृतिं प्राप, न च तस्यां रात्रौ निद्रां प्राप. पुनस्तया भणितं स्वामिन्! खेदं मा कुर्याः? मदुक्तमेकमुपायं शृणु? अत्र धननामा श्रेष्ठी वर्तते, तस्य यः प्रथमं प्रभाते गत्वा वर्धापयति तस्य स सुवर्णमाषद्वयं ददाति, ततस्त्वमद्य प्रभाते गत्वा प्रथमं वर्धापय? यथा सुवर्णमाषद्वयं प्राप्नुयाः कपिलस्तस्या वचः श्रुत्वा मध्यरात्रावुत्थितः, तस्य धाम्न्यपरः कश्चिन्मा प्रथमं यायादित्यौत्सौक्येन गच्छन् कपिलः पुरारक्षकैर्गृहीतः, चौरधिया बद्धः, प्रभाते पुरस्वामिनः पुरो नीतः, पुरस्वामिना पृष्टं कस्त्वं? किमर्थमर्धरात्रौ निर्गतः? तेन सकलं स्वरूपं प्रकटीकृतं, सत्यवादित्वात्तस्य तुष्टो राजा प्राह यत्त्वं मार्गयसि तदहं ददामि, स प्राह विमृश्य मार्गयामि, राजा

=आशीर्वादिदेवे=

आह यावशोकवनिकायां? विचारय स्वेष्टं? कपिलस्तत्र गत इति चिंतयितुमारब्धवान्, चेद्दहं सुवर्णमाषद्वयं मार्गयामि, तदा तस्या दास्याः शाटिकामात्रं जायते, न त्वाभरणानि, ततः सहस्रं मार्गयामि तदापि तस्या आभरणानि न जायंते, ततोऽहं लक्षं मार्गयामि, तदापि मम जात्यतुरंगमोत्तमगजेंद्रप्रवररथादिसामग्री न जायते, ततः कोटिं मार्गयामीति चिंतयन्नेव स्वयं संवेगमागतः, सुवर्णमाषद्वयार्थं निर्गतस्यापि मम कोट्यापि तुष्टिर्न जातेति धिगिमां तृष्णामिति विचार्य स्वमस्तके लोचं कृतवान्, शासनदेवतया तस्य रजोहरणादिलिंगमर्पितं, कपिलो द्रव्यभावाभ्यां यतिर्भूत्वा राज्ञः पुरः समागतः, राज्ञा भणितं त्वया विचारितं किं? स आह—जहा लाहो तहा लोहो। लाहा लोहो विवड्ढइ॥ दोमासकणयकज्जं। कोडिएवि न निट्ठियं॥ १॥ इति विचार्याहं त्यक्ततृष्णः संयमी जातः, राज्ञोक्तं कोटिमपि तवाहं ददामि, तेनोक्तं सर्वोऽपि परिग्रहो मया व्युत्सृष्टः, न मे कोट्यापि कार्यमित्युक्त्वा स श्रमणस्ततो विहृतः षण्मासान् यावच्छद्मस्थ एवासीत्, पश्चात्केवली जातः. इतश्च राजगृहनगरांतरालमार्गे बलभद्रप्रमुखाश्चौराः संति, एतेषां प्रतिबोधो मत्तो भविष्यतीति ज्ञात्वा स

पासमाणो न लिप्पई ताई ॥ ४ ॥ व्याख्या—भिक्षुः साधुस्तथाविधं पूर्वोक्तं कर्मबंधहेतुं सर्वग्रंथं बाह्याभ्यंतरभेदेन द्विविधं परिग्रहं विशेषेण प्रजह्यात्परित्यजेत्, च पुनर्भिक्षुः कलहं क्रोधं, चकारान्मानमायालोभादीन् विप्रजह्यात्, पुनः साधुः सर्वेषु कामजातेष्विंद्रियविषयेषु न लिप्यते नासक्तो भवेत्, किं कुर्वन्? पश्यन् विषयविपाकं चिंतयन्नित्यर्थः. पुनः कीदृशः साधुः? ताई त्रायी सर्वजीवानामभयदानदायीत्यर्थः. ॥ ४ ॥

॥ मूलम् ॥—भोगा मिसदोसविसन्ने । हियनिस्सेयसबुद्धिवुच्चत्थे ॥ बाले य मंदिए मूढे । बज्झइ मच्छियाव खेलंमि ॥ ५ ॥ व्याख्या—एतादृशो बालोऽज्ञानी कर्मणा बध्यते, कर्मणा बद्धश्च संसारान्निर्गन्तुं न शक्नोति, संसार एव सीदंति, कस्मिन् क इव? खेले श्लेष्मणि मक्षिकाजंतुरिव, कथंभूतो बालो जनः? मंदो धर्मक्रियायामलसः, पुनः कीदृशः? मूढो मोहव्याकुलमनाः, पुनः कीदृशः? विषयामिषदोषविषण्णः, विषया एव गृद्धिहेतुत्वादामिषं विषयामिषं, तदेव दोषो जीवस्य दूषणकरणत्वाद्विषयामिषदोषस्तत्र विशेषेण सन्नो निमग्नो विषयामिषदोषविषण्णः, पुनः कीदृशः? हितनिःश्रेयसबुद्धिपर्यस्तः, हितमात्मसुखं, निःश्रेयसो

मोक्षः, हितं च निःश्रेयसश्च हितनिःश्रेयसौ; तयोर्विषये या बुद्धिर्हितनिःश्रेयसबुद्धिस्तस्याः सकाशाद्विशेषेण पर्यस्तः पराङ्मुखो हितनिःश्रेयसबुद्धिविपर्यस्तः स्वर्गापवर्गसुखाद्भ्रष्ट इत्यर्थः.

॥ मूलम् ॥—दुपरिच्चया इमे कामा । नो सुजहा अधीरपुरिसेहिं ॥ अह संति सुव्वया साहु । जे तरंति अतरं वणियव्व ॥ ६ ॥ व्याख्या—इमे प्रसिद्धाः कामा अधीरपुरुषैर्न सुजहाः, न सुखेन हातुं योग्या इत्यर्थः, मिष्टान्नादिभोजनवत्. कीदृशा इमे कामाः? अत एव दुःपरित्यजाः. अथ केचित्सुव्रताः साधवः संति, येऽतरं तरीतुमशक्यं संसारं तरंति. के इव? वणिज इव, यथा वणिजः सामुद्रिका व्यापारिणोऽतरं महासमुद्रं प्रवहणैस्तरंति, अत्र वा-शब्दो हीवार्थे. ॥ ६ ॥ =ते सर्व साधुओ संसार ने तरे छे, ते उपर कहे छे.=

॥ मूलम् ॥—समणा मुएगे वयमाणा । पाणवहं मिया अयाणंता ॥ मंदा निरयं गच्छंति । बाला पावियाहिं दिट्ठीहिं ॥ ७ ॥ व्याख्या—एके केचित्कुतीर्थ्या मिथ्यात्विनः पापिकाभिः पापहेतुकाभिर्दृष्टिभिर्बुद्धिभिः प्राणवधमधर्ममजानंतो नरकं गच्छंति, कथंभूतास्ते मृगाः? अविवेकिनः, पुनः कीदृशास्ते? मंदा जडाः, यथा केचिद्रोगग्रस्ताभिर्दृष्टिभिः सम्य-



=सत्वरहित=
=अर्थात् धीरपुरुषो तजी सके=
=पापवाली=

ग्मार्गमजानंतः कस्मिंश्चिद् दुःखव्याप्ते मार्गे व्रजंति, पुनस्ते केचित्कुतीर्थ्याः किं कुर्वंतः? मु इति वयं श्रमणा इति 'वयमाणा' वदंतः श्रमणधर्मरहिता अपि स्वस्मिन् श्रमणत्वं मन्यमाना इत्यर्थः, यदि प्राणवधमपि न जानंति, तदान्येषां मृषावादादीनां तु ज्ञानं तेषु कुत एव संभाव्यते? कथंभूतास्ते? मंदा मिथ्यात्वरोगग्रस्ताः, पुनः कथंभूतास्ते? बाला विवेकहीनाः, विवेकहीनत्वं हि तेषां पापशास्त्रेषु धर्मशास्त्रबुद्धित्वात्. तद्यथा—ब्रह्मणे ब्राह्मणमालभेत, इंद्राय क्षत्रमालभेत, मरुद्भ्यो वैश्यं, नमसे शूद्रं, तथा—यस्य बुद्धिर्न लिप्येत । हत्वा सर्वमिदं जगत् ॥ आकाशमिव पंकेन । नासौ पापेन लिप्यते ॥१॥ धर्मो हि बालैरज्ञेयः.

॥ मूलम् ॥—न हु पाणवहमणुजाणे । मुच्चिज्ज कयाइ सव्वदुक्खाणं ॥ एवमायरिएहिं अक्खायं । जेहिं इमो साहुधम्मो पन्नत्तो ॥ ८ ॥ व्याख्या—तैराचार्यैः पूज्यैराचार्यैरेवमाख्यातमित्युक्तं, तैः कैः? यैराचार्यैरयं साधुधर्मः साध्वाचारः, अथवा सम्यग्धर्मः प्रज्ञप्तः कथितः, इतीति किं? जीवः प्राणिवधं जीवस्य हिंसामनुजानन्ननुमोदयन् 'हु' इति निश्चये कदापि सर्वदुःखेभ्यो न मुच्येत, अत्र प्राणिवधस्यानुमोदनायास्त्यागात्करणकारणयोरपि त्याग उक्तः,



मानसीअ
ासे =

प्राणिवधकरणकारणानुमतित्यागाच्च मृषावादादत्तादानमैथुनपरिग्रहादीनामपि करणकारणानुमतस्यापि निषेधो ज्ञेयः. ॥ ८ ॥

॥ मूलम् ॥—पाणे य नाइवाइज्जा । से समीइत्ति वुच्चई ताई ॥ तउ से पावयं कम्मं । निज्जाइ उदगंव थलाउ ॥ ९ ॥ व्याख्या—यः साधुः प्राणान् जीवान्नातिपातयेन्न विश्वासयेत्, स्वनं न हिंस्यात्, चशब्दात्प्राणहिंसायाः कारणानुमत्योरपि निषेध उक्तः, स त्राता जीवरक्षाकारी साधुः समित उच्यते. से इत्यथानंतरं सर्वजीवरक्षणादनंतरं ततस्तस्मात्समितात्समितिगुणयुक्तात्साधोः पापकं कर्माशुभं कर्म निर्याति निर्गच्छति, कस्मात्कमिव? स्थलादुन्नतभूतलादुदकं पानीयं निर्गच्छति, उन्नतभूतले यथोदकं न तिष्ठति, तथा समिते साधौ पापकं न तिष्ठतीति. ॥ ९ ॥

॥ मूलम् ॥—जगनिस्सिएहिं भूएहिं । तसनामेहिं थावरेहिं च ॥ नो ते समारभे दंडं । मणसा वयसा कायसा चेव ॥ १० ॥ व्याख्या—जगल्लोकास्तत्र निश्रिता आश्रितास्तेषु जगन्निश्रितेषु त्रसेषु थावरेषु च जीवेषु मनसा वचसा, च पुनः कायेन, तेषु दंडं न समारभे-

त, वधं न कुर्यादित्यर्थः. अत्रोज्जयिन्यां आद्रपुत्रस्य कथा वाच्या. ॥ १० ॥

॥ मूलम् ॥—सुद्धेसणाउ नच्चाणं । तत्त ठविज्ज भिक्खु अप्पाणं ॥ जायाए गासमेसि-
ज्जा । रसगिद्धे न सया भिक्खाए ॥ ११ ॥ व्याख्या—भिक्षुः साधुः शुद्धैषणां ज्ञात्वा शुद्धा-
हारग्रहणं विज्ञाय तत्र निर्दोषग्रहणे आत्मानं स्थापयेत्, पुनः साध्वाचारं वदति—भिक्षा-
द्धे भिक्षाचरो मुनिर्यात्रायै शरीरनिर्वाहाय ग्रासमाहारमेषयेद्गवेषयेत्, न पुनः साधू रसगृ-
द्धः स्यात्. ॥ ११ ॥

॥ मूलम् ॥—पंताणि चेव सेविज्जा । सीयपिंडपुराणकम्मासं ॥ अदुव बुक्कसं पुलागं वा ।
जवणठा य निसेवए मंथुं ॥ १२ ॥ व्याख्या—साधुर्यापनार्थं शरीरनिर्वाहार्थं प्रांतानि नि-
रसाण्यन्नपानीयानि सेवेत, च पुनरंतान्यपि सेवेत, तानि प्रांतान्यंतान्यन्नपानीयानि कानी-
आह—शीतं पिंडं, शीतः शाल्यादिस्तस्य पिंडः शीतपिण्डस्तं, पुनः पुराणकुल्माषं, पुराणाः
प्रभूतकालं यावत्संचिताः, पुराणाश्च ते कुल्माषाश्च पुराणकुल्माषाः पुरातनराजमाषास्तान्,
प्राकृतत्वादेकवचनं, ' अदुव ' अथवा ' बुक्कसं ' अतिनिपीडितरसं तुषमात्रस्थितं, बुक्कसं

मुद्गादीनां तुषं वा, अथवा पुलाकमसारं वल्लचणकादिकं, पुनः शरीरधारणार्थं मथू बदरचूर्णं निषेवेत, बदरचूर्णस्यापि रूक्षतया प्रांतत्वं, अत्र यापनार्थमित्युक्तं तेनायमर्थो ज्ञेयः, यदि त्वतिपातादिना तद्देहयापना नैव स्यात्ततो न निषेवेत, अपि स्थविरो ग्लानश्च येनाहारेण शरीरे सुखं स्यात्तदाहारं सेवेत, अयमर्थो ज्ञेयः. ॥ १२ ॥

॥ मूलम् ॥—जे लक्खणं च सुविणं च । अंगविज्जं च जे पउंजंति ॥ न हु ते समणा वुच्चंति । एवं आयरिएहिं अक्खायं ॥ १३ ॥ व्याख्या—हु इति निश्चयेन ते श्रमणा उच्यंते, आचार्यैरेवमाख्यातं, ते के? ये लक्षणं सामुद्रिकशास्त्रोक्तं द्वात्रिंशत्प्रमाणं माषतिलकादिकं च, च पुनः स्वप्नं स्वप्नशास्त्रं—गजारोहणाद्भवेद्राज्यं । श्रीप्राप्तिः श्रीफलागमात् ॥ पुत्राप्तिः फलिताम्रस्य । सौभाग्यं माल्यदर्शनात् ॥ १ ॥ इत्यादि. अंगविद्यामंगस्फुरणफलशास्त्रं यथा—शिरसः स्फुरणे राज्यं । हृदयस्फुरणे सुखं ॥ बाह्वोश्च मित्रमेलापो । जंघयोर्भोगसंगमः ॥१॥ इत्यादि सर्वं मिथ्याश्रुतं साधुना न प्रयोज्यमित्यर्थः, यदाह धर्मदासगणिः—जोइसनिमित्तअक्खर-कोउयआएसभूयकम्मेहिं ॥ करणाणुमोयणिज्जे । साहुस्स तवक्खओ होइ ॥१॥ ॥१३॥

॥ मूलम् ॥—इह जीवियं अनियमित्ता । बप्भट्ठा ससमाहिं जोएहिं ॥ ते कामजोगरसगिद्धा । उववज्जंति आसुरे काए ॥ १४ ॥ व्याख्या—ते कामजोगरसगृद्धा आसुरे काये उत्पद्यंते, किं कृत्वा? इहास्मिन् संसारे जीवितमात्मानं तपोविधानादिना, 'अनियमित्ता' इत्यनियंत्र्यावशीकृत्य, ते के? ये समाधियोगेभ्यः प्रभ्रष्टाः, समाधिना स्थैर्येण योगा मनोवाक्कायानामेकीभावाः समाधियोगास्तेभ्यः प्रभ्रष्टाः प्रकर्षेणाधः पतिताः. पुनः कीदृशास्ते? कामजोगरसगृद्धा विषयसेवनस्वादलोला आसुरे कायेऽसुरकुमारयोनौ, अत्र 'अनियमित्ता' इत्युक्तेन किंचिदनुष्ठानं कृत्वाऽसुरकुमारत्वेनोत्पद्यंते, नितरामतिशयेन यमित्वा नियम्य, न निरुद्ध्यानिरुद्ध्योत्कृष्टं तपोऽकृत्वेत्यर्थः. ॥ १४ ॥

॥ मूलम् ॥—ततोवि य उवट्टित्ता । संसारं बहु अणुपरियट्टंति ॥ बहुकम्मलेवलित्ताणं । बोही होइ सुदुल्लहा तेसिं ॥ १५ ॥ व्याख्या—ततोऽपि च ततोऽसुरनिकायादुध्धृत्य निःसृत्य बहुं संसारमनुपर्यटंति बहुलं संसारं भ्रमंति, पुनस्तेषां संसारे भ्रमतां बोधिः सम्यक्त्वलब्धिः सुदुर्लभा भवति, कथंभूतानां तेषां? बहुकर्मलेपलिप्तानां प्रचुरकर्मपंकखरंटितानां. ॥

॥ मूलम् ॥–कसिणंपि जो इमं लोगं । पडिपुन्नं न दलिज्ज इक्कस्स ॥ तेणावि से न तुस्सिज्जइ । इइ दुप्पूरए इमे आया ॥ १६ ॥ व्याख्या–यदिशब्दस्याध्याहारः, यदि कश्चिदिंद्रादिदेव एकस्य कस्यचित्पुरुषस्य प्रतिपूर्णं धनधान्यादिपदार्थैर्भृतं समस्तलोकं विश्वं दद्यात्, तदापि तेन धनधान्यादिपरिपूर्णसमस्तलोकदानेन स पुरुषो न तुष्येत्, इति हेतोरयमात्मा दुःपूरकः, दुःखेन पूर्यत इति दुःपूरः, दुःपूर एव दुःपूरकः. ॥ १६ ॥ पूर्वोक्तमर्थमेव दृढयति–

॥ मूलम् ॥–जहा लाहो तहा लोहो । लाहा लोहो पवड्ढइ ॥ दोमासकणयकज्जं । कोडिएवि न निट्ठियं ॥ १७ ॥ व्याख्या—यथा लाभस्तथा लोभः, लाभाल्लोभः प्रवर्धते, द्विमाषं द्विमाषप्रमितस्वर्णग्रहणार्थं कृतं कार्यं स्वर्णकोटीभिरपि 'न निट्ठियं' न निष्ठितं, पूर्णं न जातमित्यर्थः. माषं तु पंचगुंजाप्रमाणं, माषद्वयप्रमितस्वर्णेन कार्यं दास्याः पुष्पतांबूलवस्त्राभूषणादिमूल्यरूपं, तत्कार्यं कोटिद्रव्येणापि परिपूर्णं नाभूत्. ॥ १७ ॥ स्त्रीमूला हि तृष्णेति हेतोस्तत्परिहारार्थं गाथामाह–

मूलम्–नो रक्खसीसु गिज्झिज्जा । गंडवच्छासुणेगचित्तासु ॥ जाओ पुरिसं पलोभित्ता । खेलंति ज-



= संतोषनहीप

हाव दासेहिं ॥१८॥ व्याख्या—राक्षसीषु नो गृध्येत्र विश्वसेत्, ज्ञानादिजीवितापहाराद्राक्षसीत्युक्तं. कथंभूतासु स्त्रीषु? गंडवक्षस्सु, गंडं गडुस्तदुपमत्वादुच्चैः कुचौ वक्षसी यासां ता गंडवक्षसस्तासु गंडवक्षस्सु, उच्चकुचस्फोटकवक्षस्कासु, वैराग्योत्पादनार्थं कुचयोर्गडूपमानं, विरक्त्योत्पादमुपमानं. पुनः कीदृशीषु स्त्रीषु? अनेकचित्तासु, अनेकेषु पुरुषेषु चित्तं यासां ता अनेकचित्तास्तासु, अथवानेकेषां पुरुषाणां चित्तं यासु ता अनेकचित्तास्तासु, अथवानेकानि चित्तानि संकल्पविकल्परूपाणि चिंतनानि यासां ता अनेकचित्तास्तासु, याः स्त्रियो राक्षस्यः पुरुषं कुलीनं मानवं प्रलोभयित्वा त्वमेव मम भर्ता, त्वमेव मम जीवितं, त्वमेव मम शरणमित्यादिवचनैर्वशीकृत्य प्रीतिमुत्पाद्य तैः पुरुषैः सह रमंते क्रीडंति. कैः? यथा दासैर्यथैव दासैः क्रीड्यते, ते कुलीनपुरुषा अपि स्त्रीभिर्व्यामोहिताः संतो दासप्राया भवंति, यथा दासागम्यतां? स्थीयतां? इदं कार्यं क्रियतां? इदं कार्यं मा क्रियतामिति वचनं श्रुत्वा स्वाम्यादेशकारिणो भवंति, तथा नारीणां वशवर्तिनः पुरुषाः किंकरा भवंतीत्यर्थः. ॥ १८ ॥

॥ मूलम् ॥—नारीसु नोपगिज्झिज्जा । इत्थी विप्पजहे अणगारे ॥ धम्मं च पेसलं न-

## ॥ अथ नवममध्ययनं प्रारभ्यते ॥

अष्टमेऽध्ययने हि निर्लोभत्वमुक्तं, निर्लोभः पुरुषो हींद्रादिभिः पूज्यः स्यात्, अतो नवमेऽध्ययने नमिराजर्षिरिंद्रेणागत्य भावपूर्वकं वंदितः, इत्यष्टमनवमाध्ययनयोः संबंधः. तत्र नमिस्तु प्रत्येकबुद्धः, प्रत्येकबुद्धाश्चत्वारः, समकालसुरलोकच्यवनप्रत्येकप्रतिबोधप्रव्रज्याग्रहणकेवलज्ञानोत्पत्तिसिद्धिगमनभाजो जाताः, तेषु प्रथमः करकंडूः १, द्वितीयो द्विमुखः २, तृतीयो नमिराजा ३, चतुर्थो नगातिः ४, इति. तेषां प्रत्येकबुद्धानां कथानकमुच्यते, तत्र प्रथमं करकंडूकथा यथा—करकंडू कलिंगेसु । पंचालेसु अ दुम्मुहो ॥ नमी राया विदेहेसु । गंधारेसु य नग्गई ॥१॥ श्रीवासुपूज्यजिनपतिकल्याणकपंचकास्तपापायां चंपायां नगर्यां दधिवाहननामा नृपोऽभूत्, तस्य चेटकमहाराजपुत्री पद्मावती प्रिया जाता. सान्यदा गर्भिणी बभूव, गर्भानुभावेन च तस्या ईदृशं दोहदमुत्पन्नं, अहं पुंवेषधरा भर्त्रा धृतातपत्रा गजाम्रभा-

च्चा । तत्थ ठविज्ज भिक्कू अप्पाणं ॥ १९ ॥ व्याख्या—अनगारः साधुः स्त्रीषु न गृध्येन्न गृद्धिं कुर्यात्, अनगारः स्त्रियं विशेषेण प्रजह्यात्परित्यजेत्, पुनर्भिक्षुर्धर्मं ब्रह्मचर्यादिरूपं पेशलं मनोज्ञं ज्ञात्वा तत्र धर्मे आत्मानं स्थापयेत्. ॥ १९ ॥

॥ मूलम् ॥—इइ एस धम्मे अरकाए । कविलेणं विसुद्धपन्नेणं ॥ तरिहिंति जे उ काहिंति । तेहिं आराहिया दुवे लोगित्ति बेमि ॥ २० ॥ व्याख्या—इत्यमुना प्रकारेणैष धर्मः कपिलेनाख्यातः कथितः, कथंभूतेन कपिलेन? विशुद्धप्रज्ञेन केवलज्ञानयुक्तेन, ये पुरुषाः कपिलकेवलिनोक्तं धर्मं करिष्यंति ते पुरुषाः संसारं तरिष्यंति, पुनस्तैः पुरुषैर्द्वावपि लोकावाराधितौ सफलीकृतावित्यर्थः. ॥ २० ॥ इत्यादिदोधकान् कपिलोक्तान् श्रुत्वा तत्र केचिच्चौराः प्रथमेनैव दोधकेन प्रतिबुद्धाः, केचिद् द्वितीयेन. एवं पंचशतचौरा अपि प्रतिबुद्धाः प्रव्राजिताश्च. ॥ इति कापिलीयमध्ययनमष्टमं संपूर्णम्. ॥

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यश्रीलक्ष्मीवल्लभगणिविरचितायां कपिलिकाध्ययनस्यार्थः संपूर्णः ॥ श्रीरस्तु ॥

नति तावत्सा राज्ञी वृक्षावलंबेन तत्स्कंधादुत्ततार, गजस्तु ग्रीष्मतापितः सरोन्तर्विवेश, राज्ञी कांतारं दृष्ट्वा भृशं भीता सती मनस्येवं चिंतयामास क च तन्नगरं? क च सा श्रीः? क तन्मंदिरं? क सा सुखशय्या? दुःकर्मणां विपाकात्सर्वं मे गतं. अथवात्र वने विचित्रश्वापदैश्चेत्प्रमादवशगाया मम मृत्युर्भविष्यति, तदा मम दुर्गतिरेवेति मत्वाऽप्रमत्ता सत्याराधनां व्यधात्, सुकृतान्यनुमोद्य सर्वजीवेषु क्षामणां कृत्वानशनं सागारं प्रपेदे, नमस्कारं ध्यायंती तत उत्थाय सैकया दिशा गच्छंती पुरस्तादेकं तापसं ददर्श, तापसेनेयमेवं पृष्टा वत्से! त्वं कस्य पुत्री? कस्य प्रिया वा? आकृत्यैव त्वं मया भूरिभाग्ययुता ज्ञाता, इयं का तवावस्था? कथय? वयमभयाः शमिनस्तापसाः स्मः. सा राज्ञी तं तापसं निर्विकारं निर्मलधर्मकरं च ज्ञात्वा स्ववृत्तांतं सकलं जगौ, एतस्या राज्ञ्याः पितुश्चेटकराज्ञो मित्रेण तेन तापसेनोक्तं वत्से! नातःपरं त्वया चिंता कार्या, अयं भवः सर्वविपदामास्पदं, सर्ववस्तूनामनित्यता चिंतनीया. एवं प्रतिबोध्य सा राज्ञी तेन तापसेन स्वाश्रमं नीता, तस्याः प्राणयात्रा फलैः कारिता.

च्चा । तत्थ ठविज्ज भिक्खू अप्पाणं ॥ १९ ॥ व्याख्या—अनगारः साधुः स्त्रीषु न गृद्ध्येन्न गृद्धिं कुर्यात्, अनगारः स्त्रियं विशेषेण प्रजह्यात्परित्यजेत्, पुनर्भिक्षुर्धर्मं ब्रह्मचर्यादिरूपं पेशलं मनोज्ञं ज्ञात्वा तत्र धर्मे आत्मानं स्थापयेत्. ॥ १९ ॥

॥ मूलम् ॥—इइ एस धम्मे अक्खाए । कविलेणं विसुद्धपन्नेणं ॥ तरिहिंति जे उ काहिंति । तेहिं आराहिया दुवे लोगित्ति बेमि ॥ २० ॥ व्याख्या—इत्यमुना प्रकारेणैष धर्मः कपिलेनाख्यातः कथितः, कथंभूतेन कपिलेन? विशुद्धप्रज्ञेन केवलज्ञानयुक्तेन, ये पुरुषाः कपिलकेवलिनोक्तं धर्मं करिष्यंति ते पुरुषाः संसारं तरिष्यंति, पुनस्तैः पुरुषैर्द्वावपि लोकावाराधितौ सफलीकृतावित्यर्थः. ॥ २० ॥ इत्यादिदोधकान् कपिलोक्तान् श्रुत्वा तत्र केचिच्चौराः प्रथमेनैव दोधकेन प्रतिबुद्धाः, केचिद् द्वितीयेन. एवं पंचशतचौरा अपि प्रतिबुद्धाः प्रव्राजिताश्च. ॥ इति कापिलीयमध्ययनमष्टमं संपूर्णम्. ॥

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यश्रीलक्ष्मीवल्लभगणिविरचितायां कपिलिकाध्ययनस्यार्थः संपूर्णः ॥ श्रीरस्तु ॥

तति तावत्सा राज्ञी वृक्षावलंबेन तत्स्कंधादुत्ततार, गजस्तु ग्रीष्मतापितः सरोन्तर्विवेश, राज्ञी कांतारं दृष्ट्वा भृशं भीता सती मनस्येवं चिंतयामास क्व च तन्नगरं? क्व च सा श्रीः? क्व तन्मंदिरं? क्व सा सुखशय्या? दुःकर्मणां विपाकात्सर्वं मे गतं. अथवात्र वने विचित्रश्वापदैश्चेत्प्रमादवशगाया मम मृत्युर्भविष्यति, तदा मम दुर्गतिरेवेति मत्वाऽप्रमत्ता सत्यागधनां व्यधात्, सुकृतान्यनुमोद्य सर्वजीवेषु क्षामणां कृत्वानशनं सागारं प्रपेदे, नमस्कारं ध्यायंती तत उत्थाय सैकया दिशा गच्छंती पुरस्तादेकं तापसं ददर्श, तापसेनेयमेवं पृष्टा वत्से! त्वं कस्य पुत्री? कस्य प्रिया वा? आकृत्यैव त्वं मया भूरिभाग्ययुता ज्ञाता, इयं का तवावस्था? कथय? वयमत्रयाः शमिनस्तापसाः स्मः. सा राज्ञी तं तापसं निर्विकारं निर्मलधर्मकरं च ज्ञात्वा स्ववृत्तांतं सकलं जगौ, एतस्या राज्ञ्याः पितुश्चेटकराज्ञो मित्रेण तेन तापसेनोक्तं वत्से! नातःपरं त्वया चिंता कार्या, अयं भवः सर्वविपदामास्पदं, सर्ववस्तूनामनित्यता चिंतनीया. एवं प्रतिबोध्य सा राज्ञी तेन तापसेन स्वाश्रमं नीता, तस्याः प्राणयात्रा फलैः कारिता.

गारूढारामे संचरामि, लज्जयेदं दोहदं नृपतेः पुरो वक्तुमशक्ता सा कृशांगी बभूव. राज्ञान्यदा तस्याः कृशांगकारणं पृष्टं, अतिनिर्बंधेन सा स्वदोहदं कथयामास. राजात्यंतं तुष्टस्तां पट्टहस्तिस्कंधे समारोप्य स्वयं तच्छिरसि छत्रं धृतवान्, तादृश एव राजा गजारूढराज्ञीपश्चाद्भागे स्थितो वने ययौ, तस्मिन् समये तत्र जलदारंभो बभूव, तत्र सल्लकीप्रमुखविविधवृक्षपुष्पगंधैर्जलसिक्तमृद्गंधैश्च विह्वलीभूतः स करी मदोन्मत्तः स्ववासभूमिं स्मरन्नटवीं प्रत्यधावत्, अश्ववारैः पदातिभिश्चासौ न स्पृष्टः, तेन गजेन गर्भान्वितया कदलीकोमलशरीरया राज्या सार्धं स राजा महाटव्यां नीतः, समविषमोन्नतदूरासन्नाननेकभावान् पश्यन् भूपतिर्वनमेकमायातं दृष्ट्वा भार्यांप्रतीदमवदत्, हे भद्रे! पुरःस्थस्यास्य वटस्य शाखामेकामवलंबेथास्त्वं, अहमप्येकां शाखामाश्रयिष्यामि, गजस्त्वेवमेव यातु? एवमुक्त्वा राजा वटशाखायां लग्नः, राज्ञी तु भयव्यग्रा वटावलंबं कर्तुमक्षमा हस्तिनाग्रतो नीता, राजा तु वटादुत्तीर्य शनैः शनैर्मिलितसैन्यः पत्नीविरहदुःखितश्चंपायां प्रविष्टः, राज्ञी दुष्टेन तेन हस्तिना महतीमटवीं नीता, तृषाकुलः स हस्ती चतुर्दिक्षु पानीयं पश्यन्नेकं सरो दृष्ट्वा तत्पाल्यावतीर्य यावदधः प-

अथ च देशसीम्नि तां नीत्वा स तापस एवं जगाद हे पुत्रि! अतःपरं हलाकृष्टा सावद्या धरा वर्तते, सा मुनिभिर्नोल्लंघनीया, ततोऽहं पश्चाद्वलामि, अयं मार्गो दंतपुरस्य वर्तते, तत्र दंतवक्रनामा राजा वर्तते, इतः सुसार्थेन सह त्वं पुरे गच्छेः. एवं निगद्य स तापसः स्वाश्रमं जगाम, राज्ञी पुरांतः साध्व्युपाश्रये जगाम, तत्र साध्व्या पृष्टे तया सकलोऽपि वृत्तांतः कथितः. साध्वी तस्या एवमुपदेशं ददौ—अस्मिन् बहुदुःखागारे संसारे गृहवास एव सर्वेषां सर्वोऽपि भवविस्तारो भवद्भिस्त्याज्यः. एवं साध्वीवचसा वैराग्यं गता सा तदैव दीक्षां जग्राह. व्रतविघ्नभयात्सा संतमपि गर्भं न जगौ, कालांतरे तस्या उदरवृद्धौ साध्व्या पृष्टं किमेतदिति. तयोक्तं मम पूर्वावस्थासंभवो गर्भो वर्तते, मया तु व्रतविघ्नभयान्नोक्तः, ततो महत्तरा साध्वी तां साध्वीमुड्डाहनाभयेनैकांते संस्थापयामास. काले सा पुत्रं प्रसूय रत्नकंबलेन संवृतं पितृनाममुद्रांकितं च कृत्वा श्मशाने द्राग्मुमोच, तदा श्मशानपतिर्जनंगमस्तं बालकं तथाविधमालोक्य गृहीत्वा चानपत्यायाः स्वपत्न्याः समार्पयत्. सा श्रमणी गुप्तचर्यया तं व्यतिकरं ज्ञात्वा महत्तराया अग्रे एवमाचख्यौ मृत एव मया बालो जातस्ततो मया

त्यक्तः. स बालो लोकोत्तरकांतिर्जनंगमधाम्नि दत्तावर्णिकनामा ववृधे, सा साध्वी सततं बहिर्व्रजंती पुत्रस्नेहेन मातंग्या सह कोमलालापैः संगतिं चक्रे, स बालः प्रातिवेश्मिकबालकैः सह क्रीडन् महत्तेजसा भृशं राजते, आगर्भं बहुशाकाद्यशनदोषेण तस्य बालकस्य कंडूलतादोषोऽभवत्, स्वयं राजचेष्टां कुर्वाणः स बालः परबालैः सामंतीकृतैर्देहकंडूया करैः कारयति, ततो लोकैः करकंडूरिति तस्य नाम दत्तं, सा साध्वी तद्विलोकनार्थं मातंगपाटके निरंतरं याति, भिक्षालब्धं मोदकादि तस्मै ददाति, श्रमणत्वेऽप्यपत्यजा प्रीतिस्तस्या दुस्तरेति बालकोऽपि तस्या दृष्टाया बहु विनयं करोति, प्रीतिं च दधाति, स बालकः षड्वर्षः पितुरादेशात् श्मशानं रक्षति. अन्यदा तस्मिन् श्मशाने रक्षति सति कोऽपि साधुर्लघुं साधुंप्रति तत् श्मशानस्थं सुलक्षणं वंशं दर्शितवानुक्तवांश्च मूलश्चतुरंगुलत इमं वंशमादाय यः स्वसमीपे स्थापयति सोऽवश्यं राज्यं प्राप्नोति, इदं साधुवचस्तेनबालकेन तत्रस्थेनैकेन द्विजेन च श्रुतं, द्विजस्तु तं वंशमाचतुरंगमूलं छित्वा यावद् गृह्णाति तावत्करकंडुना तत्करात्स वंशो गृहीतः स्वकरे, कलहं कुर्वतो द्विजस्य करकंडुनोक्तं मत्पितृश्मशानवनोद्भवंशं नाहमन्यस्मै दास्ये, स



-पीतारेपासेरारे

ब्राह्मणः करकंडूबालश्चेति द्वावपि विवदंतौ नगराधिकारिपुरो गतौ, नगराधिकाराभ्राण-
तमहो बाल! तवायं वंशः किं करिष्यति? स प्राह ममायं राज्यं दास्यति, तदाधिकारिणः
स्मितेवमूचुर्यदा तव राज्यं भवति तदा त्वयास्य ब्राह्मणस्यैको ग्रामो देयः, शिशुस्तद्वचोंगी-
कृत्य स्वगृहमगात्, स विप्रोऽन्यविप्रैः संभूय तं बालं हंतुमुपाक्रमत्, तं द्विजोपक्रमं ज्ञात्वा
करकंडूपिता जनंगमः स्वकलत्रपुत्रयुक्तस्तं देशं विहायानश्यत्.

अथ सकुटुंबः स जनंगमः क्षितितलं भ्रमन् कंचनपुरं जगाम, तत्रापुत्रनृपे मृते सति
सचिवैरधिवासितस्तुरगः करकंडुं दृष्ट्वा हेषारवं कृतवान्, तं सलक्षणं दृष्ट्वा नगरलोका जय-
जयारवं चक्रुः, अवादितान्यपि वाद्यानि स्वयं निनेदुः, स्वयं छत्रं शिरसि स्थितं. ततोऽमा-
त्यैरपि नवीनानि वस्त्राणि परिधाप्य स करकंडुस्तमश्वमारोहितः, यावन्नगरलोकैः परमप्र-
मोदेन स पुरांतः प्रवेशितस्तावद्विप्रास्तं म्लेछोऽयमिति कृत्वा न मेनिरे, तदा क्रुद्धः स शि-
शुस्तं दंडं रत्नमिव करे जग्राह, अधिष्टातृदेवैर्व्योम्नीति घुष्टं य इमं राजानमवगणयिष्यति
तस्य मूर्ध्न्यसौ दंडः पतिष्यति, इत्युक्त्वा सुरास्तच्छिरसि पुष्पवृष्टिं चक्रुः, भीताः संतो विप्रा-

स्तस्य स्तुतिं कृत्वा वारंवारमाशीर्वादमुच्चरंति. अथ करकंडुरेवमुवाचाहो ब्राह्मणा एते भव-
द्भिश्चांडाला गर्हितास्ततः सर्वेऽप्यमी वाटधानकवास्तव्याश्चांडालाः संस्कारैर्ब्राह्मणाः कार्याः,
संस्कारादेव ब्राह्मणो जायते, न तु जात्या कश्चिद् ब्राह्मणो भवतीति भवदागमवचनात्.
अथ ते ब्राह्मणाः प्रकामं भीतास्तन्नगरवाटधानकवास्तव्यांश्चंडालान् संस्कारैर्ब्राह्मणान् चक्रुः.
उक्तं च—दधिवाहनपुत्रेण । राज्ञा तु करकंडुना ॥ वाटधानकवास्तव्या—श्चांडाला ब्राह्मणीकृ-
ताः ॥ १ ॥ अत्युत्सवेन कांचनपुरे प्रवेशितः स करकंडुरमात्यैर्नृपपट्टेऽभिषिक्तः, क्रमात्स म-
हाप्रताप्यभूत्. अन्यदा स वंशप्रतिवादी विप्रस्तं भूपं निशम्य ग्रामाभिलाषुकः सन् करकं-
डुनृपपर्षदि प्राप्तः, करकंडुनोपलक्ष्य तस्य विप्रस्योक्तं तव यदिष्टं तत्कथय? ब्राह्मणेनोक्तं म-
द्गृहं चंपायां वर्तते, तेन तद्विषयग्राममेकमहमीहे. अथ करकंडुनृपश्चंपापुर्नाथस्य दधिवाहन-
नृपतेरस्मै द्विजाय त्वद्विषयग्राममेकं देहीत्याज्ञां प्राहिणोत्. आज्ञाहारिणं करकंडुनृपस्य दू-
तं विस्मितचित्तः क्रुद्धश्चंपापतिर्दधिवाहनः प्राहारे स म्लेच्छबालः स मृगतुल्यः करकंडुः सिं-
हतुल्येन मया सह विरुध्यते, परवस्त्वभिलाषभवस्य पातकस्य तव स्वामिनः शुद्धिं भरवक-

...निवान्, करकंडुनृपो राज्यद्वयं पालयामास, चंपायामेव स्वावासमकरोत्. तस्य गो-
...न्यासन्. संस्थानाकृतिवर्णविशिष्टानि गोकुलानि कोटिसंख्यानि तेन मेलितानि स-
...निरंतरं गच्छन् प्रकामं प्रमोदं लभते. अन्येद्युः स्फटिकसमान एको गोवत्सस्तेन गो-
कुलमध्ये दृष्टः, अयं कंठपर्यंतदुग्धपानैः प्रत्यहं पोषणीय इति गोपालान् स आदिष्टवान्. अ-
न्यदा स सांडः पुष्टतनुर्बलशाली घनघर्घरशब्देनान्यवृषजान् त्रासयन् भूपतिना दृष्टः, तथा-
पि नृपतिस्तस्मिन् वृषे प्रीतिपर एव बभूव.

अथ साम्राज्यकार्यकरणव्यग्रो भूपतिः कतिचिद्वर्षाणि यावद्गोकुले नायातः. अन्यदा
तद्दर्शनोत्कंठः स नृपतिस्तत्र समायातः, स वृषः क इति गोपालान् नृपतिः पप्रच्छ, गोपालै-
र्जराजीर्णः पतितदशनो हीनबलो वत्सैर्घट्टितदेहः कृशांगः स दर्शितः. तं तथाविधं दृष्ट्वा भ-
वदशां विषमां विचारयन् करकंडुराजैवं चिंतयति यथायं वृषजः पूर्वावस्थां मनोहरां परित्य-
ज्येमां वृद्धावस्थां प्राप्तः, तथा सर्वोऽपि संसारी संसारे नवां नवामवस्थां प्राप्नोति, मोक्षे चै-
कावस्था, मोक्षस्तु जिनधर्मादेव प्राप्यते, अतो जिनधर्ममेव सम्यगाराधयामीति परं वै-

तीर्थस्नानं दास्यति. एवमुक्त्वा दधिवाहनेन तिरस्कृतः स दूतस्तत्र गत्वा करकंडुनृपाय यथार्थमवदत्. करकंडुनृपोऽपि प्रकामं क्रुद्धः स्वसैन्यपरिवृतश्चंपापुरसमीपे समायातः. दधिवाहनोऽपि पुरीदुर्गं सज्जीकृत्य स्वयं बहिर्निस्ससार. उभयोः सैन्ये सज्जीभूते यावता योध्धुं लग्ने तावता सा साध्वी तत्रागत्य करकंडुनृपतिप्रत्येवमूचेऽहो करकंडुनृप! त्वयाऽनुचितं पित्रा सह युद्धं किमारब्धं? करकंडुनृपः प्राह हे महासति! कथमेष दधिवाहनोऽस्माकं पिता? साध्वी स्वस्वरूपमखिलं तमूचे, स आर्यां मातरं दधिवाहनं च पितरं मत्वा जहर्ष, तथापि करकंडुनृपोऽभिमानात्स्वपितरं दधिवाहनं नंतुं नोत्सहते, तदा साध्व्यपि दधिवाहनसमीपे गता, दधिवाहनभृत्यैरुपलक्षिता, दधिवाहनभूपाय राज्ञी साध्वीरूपा समागतेति वर्धापनिका दत्ता. अथ दधिवाहननृपोऽपि तां साध्वीं ननाम, गर्भवृत्तांतं च पप्रछ. साध्व्यूचे सोऽयं ते तनयो येन सह त्वया युद्धमारब्धमस्ति. अथ दधिवाहननृपः प्रीतात्मा पादचारी करकंडुनृपंप्रति गत्वा हे वत्स! उत्तिष्ठेत्युक्त्वा तमुत्थाप्याश्लिष्य च शिरस्याजिघ्रनहर्षाश्रुजलसहितैस्तीर्थजलैः पुत्रोऽयं राज्यद्वयेऽपि दधिवाहनेनाभिषिक्तः, दधिवाहनः कर्मविनाशाय स्वयं दी-

राग्यं प्रातः करकंडुराजा स्वयमेव प्राग्भवसंस्कारोदयात्प्रतिबुद्धः सद्यः शासनदेव्यर्पितलिंगस्तृणवद्राज्यं परित्यज्य प्रव्रज्यामाददे. उक्तं च—श्वेतं सुजातं सुविभक्तशृंगं। गोष्ठांगणे वीक्ष्य वृषं जरार्तं ॥ ऋद्धिं च वृद्धिं च समीक्ष्य बोधा—त्कलिङ्गराजर्षिरवाप धर्मम् ॥ १ ॥ इति करकंडुनृपचरित्रं समाप्तम्. ॥

यदा हि करकंडुराजा प्रतिबुद्धस्ततो द्विमुखराजा प्रतिबुद्धस्ततो द्विमुखचरित्रं प्रोच्यते—कांपिल्यपुरे जयवर्मराजा, तस्य गुणमाला प्रियास्ति. अन्येद्युर्जयवर्मराजा स्थपतीनेवमाहाद्भुतमास्थानमंडपं कुरुत? वास्तुज्ञैस्तैर्भूमिपूजापुरस्सरं भूमिभागं परीक्ष्य सुमुहूर्ते खातं विरचितं, तत्र खाते पंचमदिवसे नानामणिर्नंद्धितः खमणिरिव प्रज्ज्वलन् मुकुटो दृष्टः, तैर्विज्ञप्तो राजा भूपं भूषितस्तं मुकुटं जग्राह, विचित्रवादित्रनिर्घोषपूर्वं महतोत्सवेन तं मुकुटं भाण्डे स्थापयत्, वस्त्राद्यैः सत्कृताः शिल्पिनो विमानसदृशमास्थानमंडपं सद्यश्चक्रुः, चित्रकरैस्तत्रय एव चित्रितं. भूपः शुभमुहूर्ते तं मुकुटं मस्तके निधाय तस्मिन्नास्थानमंडपे सुवर्णासने निविष्टः. तस्मिन् मुकुटे मूर्ध्नि स्थिते सति राज्ञो मुखद्वयं दृश्यते. तदनु स राजा



=अप्पाकारीको=

लोके द्विमुखतया विख्यातः. अथेयं मुकुटकथा—

अवंतीशेन चंडप्रद्योतेन तत् श्रुत्वा स्वदूतस्तत्र प्रहितः, दूतोऽपि तत्र गत्वा द्विमुखं प्रत्येवमवादीत्, हे राजन्! तव मुकुटमिमं चंडप्रद्योतभूपतिर्मार्गयति, यदि तव जीवितेन कार्यं, तदा तस्यायं प्रेष्यः. एवं दूतवचः श्रुत्वा द्विमुखनरेंद्रः प्रोवाच रे दूत! तव स्वामिनो मम मुकुटग्रहणाभिलाषः स्ववस्तुहारणायैव जातोऽस्ति, त्वं तत्र गत्वा स्वस्वामिनं ब्रूयाः, शिवादेवी राज्ञी १ अनलगिरिनामा हस्ती २, अग्निभीरुनामा रथः ३, लोहजंघनामा दूतश्चेति ४, वस्तुचतुष्टयं ममार्पयेति प्रोच्य स दूतो गले धृत्वा बहिर्निष्कासित उज्जयिन्यां गत्वा चंडप्रद्योताय तद्वचो निवेदयामास. अथ क्रुद्धो चंडप्रद्योतनृपतिर्गणनायकतुरंगमगजेंद्ररथपदातिदलपरिवेष्टितः स्थाने स्थाने प्राभृतपूर्वकमभ्यागतानेकराजसैन्यवर्धमानबलः पंचालदेशसीमां प्राप. द्विगुणोत्साहो द्विमुखनृपस्तैः सप्तसुतैः सैनिकलक्षैश्च परिवेष्टितश्चंडप्रद्योतबलं तेन भग्नं, नष्टं च चंडप्रद्योतं रथान्निपात्य बध्ध्वा च स्वपुरं निन्ये, द्विमुखस्तं स्वावासे भव्यरीत्या रक्षितवान्. अन्यदा चंडप्रद्योतेन प्रकामसुरूपां सलावण्यां कन्यामेकां वीक्ष्य यामि-

कानामेवमुक्तं, अस्य द्विमुखराज्ञः कत्यपत्यानि संति? इयमंगजा कस्यास्ति? यामिका ऊचुरस्य राज्ञो वनमालापत्नी सप्तसुतान् सुषुवे. अन्यदा तया चिंतितं मया सप्त पुत्रा जनिता लालिताश्च, पुत्री तु नैकापि जनितेति तन्मनोरथपूर्तये सा मदनयक्षमाराराध. अन्यदा सा कल्पद्रुममंजरिकां स्वप्ने ददर्श. क्रमेणेमां कन्यां सुषुवे, यक्षोपयाचितं दत्वास्या मदनमंजरीति नाम कृतं, सांप्रतं सर्वलोकचमत्कारकरी यौवनागमे इयं जाता. इति यामिकवचनं श्रुत्वाऽप्सरसोऽधिकं च तद्रूपं दृष्ट्वा कामार्तश्चंडप्रद्योतश्चिंतयतीयं चेन्मम पत्नी स्यात्तदा मम जीवितं सफलं स्यात्, राज्यभ्रंशोऽपि मे कल्याणाय जातो यदियं मया दृष्टा, चेद् द्विमुखो राजेमां मह्यं दत्ते, तदाहमस्य यावज्जीवं सेवको भवामि, चंडप्रद्योतस्येदृशोऽभिप्रायस्तदा यामिकैर्ज्ञात्वा द्विमुखराज्ञे कथितः, राजाज्ञया यामिकैश्चंडप्रद्योतः सभायामानीतः, द्विमुखराज्ञाऽभ्युत्थानं कृत्वा चंडप्रद्योतः स्वार्धासने निवेशितः, प्रांजलीभूय चैवं बभाषे, मत्प्राणास्तव वशगाः संति, मद्विभूतयस्त्वदायत्ताः संति, त्वं मम प्रभुरसि, अहमतःपरं सदैव तव सेवकोऽस्मि. अथ तद्भाववेत्ता द्विमुखराजा चंडप्रद्योताय तदैव निजां पुत्रीं ददौ, ज्योतिर्विद्भिः सुमुहूर्ते दत्ते चं-

डप्रद्योतनृपो द्विमुखराजपुत्रीं परिणीतवान्, करमोचनावसरे च तस्मै धनं द्रव्यं दत्तमवंती-देशं च दत्तवान्, कन्यासहितं चंडप्रद्योतं स्वदेशे द्विमुखो विसर्जितवान्. अन्यदा द्विमुख-नरेंद्रस्य पुरे लोकैरिंद्रस्तंभोऽद्भुतः कृतः पूजितश्च, द्विमुखनृपोऽपि तं भृशं पूजितवान्, त-स्मिन्महे व्यतीतेऽन्येद्युस्तमिंद्रस्तंभं विलुप्तशोभममेध्यांतः पतितं द्विमुखराजा ददर्श, एवं च चिंतयामास जनैर्यः पूजितो मणिमालाकुसुमादिभिश्च शृंगारितः, सोऽयमिंद्रस्तंभः सांप्रत-मीदृशो जातः, यथायं स्तंभः पूर्वापरावस्थाभेदमाप्तस्तथा सर्वोऽपि संसारी भिन्नां भिन्नाम-वस्थामाप्नोति, अवस्थाभेदकारणं रागद्वेषावेव, तत्प्रलयस्तु समताश्रयणाद्भवति, समता च ममतापरित्यागाद्भवति, ममतापरित्यागस्तु संयमं विना न भवतीति वैराग्यमापन्नः शासन-देवतासमर्पितवेषः सर्वविरतिसामायिकं द्विमुखराजा स्वयं प्रतिपद्य प्रत्येकबुद्धो बभूव. उक्तं च—वीक्ष्यार्चितं पौरजनैः सुरेश—ध्वजं च लुप्तं पतितं परेऽह्नि ॥ भूतिं त्वभूतिं द्विमुखो निरीक्ष्य । बुद्धः प्रपेदे जिनराजधर्मं ॥१॥ इति द्वितीयप्रत्येकबुद्धद्विमुखचरित्रं समाप्तं. ॥२॥

यदानीं द्विमुखराजा प्रतिबुद्धस्तदानीमेव नमिराजा प्रतिबुद्धः, अथ तृतीयप्रत्येकबुद्ध-

नमिचरित्रमुच्यते—मालवमंगलमंगलं सुदर्शनपुरमस्ति, तत्र मणिरथो राजा, तस्य भ्राता युगबाहुर्वर्तते, तस्य भार्या सुशीला सुरूपा मदनरेखा वर्तते, सा बालावस्थात आरभ्य सम्यक्त्वमूलद्वादशव्रतानि जग्राह, तस्याः पुत्रश्चंद्रयशा वर्तते. अन्यदा मणिरथेन मदनरेखा दृष्टा, तद्रूपमोहितो नृप एवं चिंतयतीयं मदनरेखा मम कथं वशीभवति? प्रथमं साधारणैः कृत्यैस्तां विश्वासयामि, पश्चात्कामाभिलाषमपि तस्याः समये कारयिष्येऽहं, दुष्करं कार्यं बुद्ध्या किं न सिद्ध्यति? एवं चिंतयित्वा राजा तस्यै कुसुमतांबूलवस्त्रालंकारादि प्रेषयति, सापि निर्विकारा ज्येष्ठप्रेषितत्वात्सर्वं गृह्णाति. एकदा मणिरथस्तामेकांते स्वयमित्युवाच हे भद्रे! त्वं मां भर्तारं विधाय यथेष्टं सुखं भुंक्ष्व? सा जगौ हे राजन्! तव लघुबंधुसत्ककलत्रे मयि एतादृशं वचनमयुक्तं, त्वं निष्कलंकभूरिसत्वश्च पंचमो लोकपालोऽसि, एवं वदंस्त्वं किं न लज्जसे? शस्त्राग्निविषयोगैर्मृत्युसाधनं वरं, निजकुलाचाररहितं जीवितं न श्रेयः, परस्त्रीलंपटाः स्वजीवितं यशश्च नाशयंति. तयैवं प्रतिबोधितोऽपि नृपः कदाग्रहं न मुमोच, एवं च व्यचिंतयद्यावदस्याः प्रीतिपात्रं मदनबंधुर्युगबाहुर्व्यापाद्यते तदेयं मम वशीभवति. अन्यदा मद-

नरेखा स्वप्ने पूर्णेंदुं ददर्श, तया युगबाहवे निवेदितः, युगबाहुना कथितं तव सुलक्षणः पुत्रो भविष्यति, तस्या गुरुदेववंदनार्चादोहद उत्पन्नः, युगबाहुस्तमपूपुरत्.

अन्यदा युगबाहुर्वसंते मदनरेखया सममुद्याने रंतुं गतः, तत्रैव रात्रौ कदलीगृहे सुप्तः, परिवारा समंतात्तद्गृहं वेष्टयित्वा स्थितः, तदावसरं ज्ञात्वा मणिरथनृपस्तत्रैकाकी समायातः, अद्य युवराजात्र कथं सुप्त इति यामिकान्प्रत्युवाच, युगबाहुरपि कदलीगृहाद्बहिरागत्य मणिरथपादौ ननाम, नमतोऽस्य स्कंधदेशे मणिरथः खड्गं चिक्षेप, उवाचैवं च धिग्मे प्रमादतः करात्खड्ग पतितं, मणिरथेंगिताकारेण तद्दुःकर्म ज्ञात्वाऽपि स्वामीत्युपेक्षितः. इतोऽवसरे इत्युक्तश्च मणिरथः सद्यस्ततो गतः. पितृघातवार्ता निशम्य चंद्रयशः पुत्रो घातचिकित्सितैः परिवृतस्तत्रायातः, चिकित्सिकैरंत्यावस्थागतं युगबाहुं निरीक्ष्य धर्म एवास्यौषधमित्युक्तं, मदनरेखा भर्तुरंत्यावस्थां विलोक्य विधिनाराधनां कारयामास हे दयिता मे विज्ञप्तिं शृणु? धनांगनादिषु मोहं त्यज? जैनधर्मं स्वीकुरु? हितं भजस्व? धर्मप्रसादादेव प्रधानं कुटुंबगेहादिकं भवांतरे प्राप्स्यसि, सर्वाण्यपि पापानि सिद्धसाक्षिकमालोचय? पुण्यान्यनुमोद-



=बलन=

य? सर्वजीवान् क्षामय? अष्टादशपापस्थानानि व्युत्सृज? अनशनं कुरु? शुभभावनां भावय? चतुःशरणान्याश्रय? परमेष्टिमंत्रस्मरणं कुरु? मनसा सम्यक्त्वमाश्रय? इत्येवं मदनरेखावचनानि श्रद्दधानः पंचपरमेष्टिमंत्रं स्मरन् युगबाहुः परलोकमसाधयत्. अथ मदनरेखा मनस्येवं चिंतयामास यत्स्वतंत्रो ज्येष्टो मम शीलं विध्वंसयिष्यति, ततो निःसरणावसरो मम सांप्रतमेवास्तीति निश्चित्य मदनरेखा वेगतो निर्गता, सद्य एकाकिन्येव व्रजंत्युत्पथमाश्रिता, क्वापि महत्यामटव्यां प्राप्ता, विभावरी विरराम, जातं प्रभातं, सा देवगुरुनामस्मरणं चकार, मध्याह्ने सा प्राणयात्रां फलैरेवाकरोत्, तस्यामेवाटव्यां सुप्तायास्तस्याः शीलप्रभावेण न किंचिद्भयं बभूव, सा सत्यर्धरात्रौ पुत्रं सुषुवे, पितृनामांकितमुद्रां तस्यांगुलौ क्षिप्त्वा रत्नकंबलेन वेष्टयित्वा शुचिभूमौ निक्षिप्य मदनरेखा शौचार्थं सरसि गता, तत्र स्नानं कुर्वंती जलकरिणा शुण्डादंडेन गृहीता नभस्युत्क्षिप्ता, नभसोऽपि च पतंतीं तां कश्चिद्युवा विद्याधरो वैताढ्यं निनाय. सा विद्याधरं प्राह बंधोऽहमद्य निश्यटव्यां पुत्रमजीजनं, स तु रत्नकंबलवेष्टितो मया तत्रैव मुक्तोऽस्ति, अहं तु सरसि स्नानं कुर्वंती जलकरिणोत्क्षिप्ता त्वया गृ-

हीतात्रानीता. अथ त्वं ततो मत्पुत्रमिहानय? मां वा तत्र नय? अन्यथा बालस्य तत्र मरणापन्नविष्यति, त्वं प्रसीद? मां पुत्रेण मेलय? पुत्रभिक्षाप्रदानेन त्वं मे दयां कुरु? सोऽपि युवा विद्याधर एतस्यां सरागं चक्षुः क्षिपन्नेवमुवाच. गंधारदेशे रत्नवाहं नाम नगरमस्ति, तत्र विद्याधरेंद्रो मणिचूडो वर्तते, अस्य प्रिया कमलावती मणिप्रनामानं पुत्रं मां प्रासूत, यौवनावस्थां गतस्य च मे श्रेणिद्वयराज्यं दत्वा मणिचूडः स्वयं प्रव्रज्यां जग्राह, स चारणमुनिश्चतुर्ज्ञानी नूत्वा सांप्रतमष्टमे ( नंदीश्वर ) द्वीपे जिनबिंबानि नंतुं समायातोऽस्ति, अहं तत्र वंदितुं गबन्ननूवं, अंतराले त्वां दृष्ट्वा लात्वा चाहं पुनरत्रागतः, अतःपरं त्वं मे प्रिया नव? तवादेशकरोऽहमस्मि, तव पुत्रसंबंधो मया प्रज्ञप्तीविद्यया ज्ञातः, अश्वापहृतो मिथिलेश्वरः पद्मरथाख्यस्तत्रायातः, तं बालं सुरूपं दृष्ट्वा गृहीत्वा च स्वपत्न्यै ददौ, तत्र स प्रकामं सुखनागस्ति. एवं तद्वचः श्रुत्वा मदनरेखाचिंतयदयं स्वतंत्रो युवा हठो मे शीलनंगं करिष्यतीति तावत्कालं मे विलंबः श्रेयान् यावदस्य पिता साधुर्न वंद्यते, तदुपदेशात्सर्वं नव्यं नविष्यतीति ध्यात्वा मदनरेखावदत् हे नद्र! त्वं मां प्रथमं नंदीश्वरे नय? यथाहं तज्जिन-

बिंबानि, वंदे, पश्चात्कृतकृत्याऽहं तवेप्सितं करिष्यामि. एवं तयोक्ते सहर्षो मणिप्रभस्तां विमानांतर्निधाय नंदीश्वरद्वीपे गतः, तत्र शाश्वतजिनबिंबानि नत्वा मदनरेखात्मानं कृतार्थं मन्यमाना मणिप्रभेण समं चतुर्ज्ञानधरं चारणश्रमणं प्रासादमंडपोपविष्टं मणिचूडमुनिं प्रणनाम, स मुनिस्तां सतीं मत्वा स्वसुतं च लंपटं मत्वा तथा देशनां विस्तारयामास यथासौ युवा विद्याधरः स्वदारसंतोषव्रतं जग्राह, मदनरेखां च स्वांबां भगिनीं च मेने. अथ सा हृष्टमानसा सती पुत्रस्य कुशलोदंतं पप्रच्छ, मुनिराह हे महानुभावे! शोकं मुक्त्वा सर्वं सुतवृत्तांतं शृणु? जंबूद्वीपे पुष्कलावती विजयोऽस्ति, तत्र मणितोरणा पुरी, तस्यां मितयशा राजा, स च चक्रवर्त्यभूत्, तस्य पुष्पवती कांता, तयोः पुष्पसिंहरत्नसिंहाभिधानौ पुत्रावभूतां, तौ सदयौ विनीतौ धर्मकर्मरतौ स्तः. अन्यदा तौ राज्ये स्थापयित्वा चक्रवर्ती तपस्यां जग्राह, तौ द्वावपि भ्रातरौ चतुरशीतिलक्षपूर्वयावद्राज्यं प्रपालयतः. एकदा च तौ दीक्षां गृहीतवंतौ, षोडषपूर्वलक्षाणि यावद्दीक्षां प्रपालयतः, अंते समाधिना मृत्वाऽच्युतकल्पे सामानिकौ देवौ जातौ. ततश्च्युत्वा धातकीखंडभरते हरिषेणराज्ञः समुद्रदत्ताभार्यासुतौ सागरदेवदत्ताभिधानौ

धार्मिकौ सहोदरौ जातौ. अन्यदा तौ द्वादशतीर्थंकरस्य दृढसुव्रतस्य बहु व्यतिक्रांते तीर्थे सुगुरुसमीपे दीक्षामगृह्णीतां, तृतीये दिवसे तौ द्वावपि विद्युत्पातेन मृत्वा शुक्रदेवलोके महर्द्धिकौ देवावभूतां. अन्येद्युस्तौ देवावत्रैव भरते श्रीनेमिजिनेश्वरमिति पृष्टवंतौ हे भगवन्! नावद्यापि कियान् संसारस्तिष्ठति? स भगवान् प्राह युवयोर्मध्ये एको मिथिलापुरि पद्मरथो नृपो भविष्यति, तेन पद्मरथेनाश्वापहृतेन तस्मिन् वने समायातेन हे महानुभावे! स तव पुत्रो दृष्टो गृहीतश्च मिथिलायां नीत्वा स्वपत्न्यै समर्पितश्च, तेन तज्जन्मोत्सवो महान् विहितः. अत्रांतरे तत्र नंदीश्वरप्रासादेंतरिक्षादेकं विमानमवततार, तन्मध्यादेको दिव्यविभूषाधरः सुरो निर्गत्य मदनरेखां त्रिःप्रदक्षिणीकृत्य प्रथमं प्रणनाम, पश्चान्मुनिं प्रणम्याग्रे निविष्टः सुरो मणिप्रभविद्याधरेण विनयविपर्यासकारणं पृष्टः प्राहाहं पूर्वभवे युगबाहुर्मणिरथनाम्ना बृहद्भ्रात्रा निहतः, अनया ममाराधनावशनादिकृत्यानि कारितानि, तत्प्रभावादहमीदृशो ब्रह्मदेवलोके देवो जातः, ततो धर्माचार्यत्वादहमिमां प्रथमं प्रणतः. एवं खेचरं प्रतिबोध्य स सुरो मदनरेखां जगौ हे सति! त्वं समादिश? किं ते प्रियं कुर्वे? सा प्राह मम मुक्तिरेव



रितपणरो- णो-

प्रिया, नान्यत्किमपि, तथापि सुताननं द्रष्टुमुत्सुकां मां त्वमितो मिथिलां पुरीं नय? तदा-
हं निर्वृतात्मना परलोकहितं करिष्यामीत्युक्तवंतीं तां देवो मिथिलापुरीं निनाय, तत्र प्रथ-
मं मदनरेखा जिनचैत्यानि नत्वा श्रमणीनामुपाश्रये जगाम, वंदित्वा पुरो निविष्टां तां प्रव-
र्तिन्येवं प्रतिबोधयामास मूढचेतसो जना धर्माद्विना भवद्वयमिच्छंतोऽपि मोहवशेन पुत्रादि-
षु स्नेहं कुर्वंति, संसारे हि मातृपितृबंधुभगिनीदयितावधूप्रियतमपुत्रादीनामनंतशः संबंधा
जाताः, लक्ष्मीकुटुम्बदेहादिकं सर्वं विनश्वरं, धर्म एवैकः शाश्वतः, इत्यादि साध्वीवाक्यैः प्र-
तिबुद्धा सा सती देवेन पुत्रदर्शनार्थं प्रार्थिता एवमाह, भववृद्धिकरेण प्रेमपूरेण ममालं,
अतःपरं तु साध्वीचरणमेव शरणमित्युक्त्वा साध्वीसमीपे सा प्रव्रज्यां जग्राह. देवस्तां वंदि-
त्वा स्वस्थाने जगाम, पद्मरथस्य गृहे यथा यथायं बालो वर्धते तथा तथा तस्यान्ये राजानोऽनम-
न्. ततः पद्मरथो राजा तस्य बालस्य नमिरिति नाम कृतवान्, वृद्धिं व्रजतस्तस्य बालस्य क-
लाचार्यसेवनात्सर्वाः कलाः समायाताः, सकललोकलोचनहरं यौवनमप्यस्यायातं, पित्रा
चाष्टाधिकसहस्रराजकन्यापाणिग्रहणं कारितं, पद्मरथोऽस्मै राज्यं दत्वा स्वयं तपस्यां गृहीत्वा

केवलज्ञानं प्राप्य मोक्षं गतवान्. नमिराजा प्राज्यं राज्यं पालयामास, न्यायेन यशःपात्रमभूत्. अथ पूर्वं युगबाहुं हत्वा मणिरथनृपः सिद्धमनोरथः स्वं धाम जगाम, तत्र तदानीमेव प्रचंडसर्पेण दष्टस्तुर्यं नरकं जगाम, द्वयोर्भ्रात्रोरौर्ध्वदेहिकं कृत्वा मंत्रिभिर्युगबाहुपुत्रश्चंद्रयशा राज्येऽभिषिक्तः, स न्यायेन राज्यं पालयति. अन्यदा नमिराज्ञो धवलकांतिर्गजो मदोन्मत्त आलानस्तंभमुन्मूल्यापरान् हस्तिनोऽश्वान् मनुष्यानपि त्रासयंश्चंद्रयशानृपनगरसीम्नि समायातः, चंद्रयशानृपस्तमागतं श्रुत्वा समंतात्सुभटैर्वेष्टयित्वा स्ववशीकृत्य च जग्राह. नमिराजाष्टभिर्दिनैस्तां वार्तां श्रुत्वा चंद्रयशांतिके दूतं प्रेषितवान्, दूतोऽपि तत्र गत्वा धवलकरिणं मार्गयामास, कुपितश्चंद्रयशा दूतं गले धृत्वा नगराद्बहिर्निष्कासयामास, दूतोऽपि नमेः पुरो गत्वा स्वापमानं जगौ, कुपितो नमिराजाऽतुलसैन्यैः परिवेष्टितोऽविछिन्नप्रयाणैः सुदर्शनपुरसमीपे समायातः, चंद्रयशा भूपतिः स्वसैन्यपरिवेष्टितो यावदभिमुखं युद्धार्थं चलितस्तावदपशकुनैर्वारितो मंत्रिभिरेवमूचे, स्वामिन्! कोट्टं सज्जीकृत्य तव सांप्रतं पुरांतरेऽवस्थातुं युक्तं, कालविलंबेनैतत्कार्यं कर्तव्यं. ततश्चंद्रयशाः शतघ्नीभिर्जलाद्युपस्करैश्च कोट्टं सज्जी-



कृतवान्, नमिस्तं कोट्टं स्वसैन्यैरवेष्टयत्, अधःस्थैः सैनिकैः सहोर्ध्वस्थानां सैनिकानां महान् संग्रामः प्रवृवृते, नमिः कोट्टभंगं विधातुमुपायान् विविधान् करोति, चंद्रयशा नृपस्तु कोट्टरक्षणे विविधानुपायान् करोति. अस्मिन्नवसरे तयोर्माता साध्वी मदनरेखा प्रवर्तिनीमनुज्ञाप्य तत्संग्रामवारणार्थं प्रथमं नमिराजसैन्ये समायाता, नमिरपि तां साध्वीं ननाम, आसने चोपविश्य नमेः पुरः सा साध्व्येवं वाचं विस्तारयामास, अनंतदुःखैकभाजनेऽस्मिन् संसारे नृभवं प्राप्य पापैस्त्वं किं मुह्यसे? हे राजन्! तव बंधुना चंद्रयशसा स्वयमागतो हस्ती चेद् गृहीतस्तर्हि तेन समं कथं युद्धं करोषि? क्रुद्धस्त्वं न किंचिद्वेत्सि, यदुक्तं—लोभी पश्येद्धनप्राप्तिं । कामिनीं कामुकस्तथा ॥ भ्रमं पश्येद्यथोन्मत्तो । न किंचिच्च क्रुधाकुलः ॥ १ ॥ इदं साध्वीवचो निशम्य नमिश्चिंतयामासायं चंद्रयशा युगबाहुपुत्रोऽस्ति, अहं तु पद्मरथपुत्रोऽस्मि, इयं साध्वीसत्यवादिनी सती कथं मम चानेन समं भ्रातृत्वं वदतीति विमृश्य साध्वीं प्रत्येवं भाषतेस्म हे पूज्ये! असौ क? अहं क? भिन्नकुलसंभवयोर्मेदेतयोः कथं भ्रातृत्वं वदसीति नमिनोक्ते साध्वी प्राह हे वत्स! यौवने ऐश्वर्यभवं मदं मुक्त्वा यदि शृणोसि तदा

केवलज्ञानं प्राप्य मोक्षं गतवान्. नमिराजा प्राज्यं राज्यं पालयामास, न्यायेन यशःपात्रमभूत्. अथ पूर्वं युगबाहुं हत्वा मणिरथनृपः सिद्धमनोरथः स्वं धाम जगाम, तत्र तदानीमेव प्रचंडसर्पेण दष्टस्तुर्यं नरकं जगाम, द्वयोर्भ्रात्रोरौर्ध्वदेहिकं कृत्वा मंत्रिभिर्युगबाहुपुत्रश्चंद्रयशा राज्येऽभिषिक्तः, स न्यायेन राज्यं पालयति. अन्यदा नमिराज्ञो धवलकांतिर्गजो मदोन्मत्त आलानस्तंभमुन्मूल्यापरान् हस्तिनोऽश्वान् मनुष्यानपि त्रासयंश्चंद्रयशानृपनगरसीम्नि समायातः, चंद्रयशानृपस्तमागतं श्रुत्वा समंतात्सुभटैर्वेष्टयित्वा स्ववशीकृत्य च जग्राह. नमिराजाप्तभिर्दिनैस्तां वार्तां श्रुत्वा चंद्रयशांतिके दूतं प्रेषितवान्, दूतोऽपि तत्र गत्वा धवलकरिणं मार्गयामास, कुपितश्चंद्रयशा दूतं गले धृत्वा नगराद्बहिर्निष्कासयामास, दूतोऽपि नमेः पुरो गत्वा स्वापमानं जगौ, कुपितो नमिराजाऽतुलसैन्यैः परिवेष्टितोऽविछिन्नप्रयाणैः सुदर्शनपुरसमीपे समायातः, चंद्रयशा भूपतिः स्वसैन्यपरिवेष्टितो यावदभिमुखं युद्धार्थं चलितस्तावदपशकुनैर्वारितो मंत्रिभिरेवमूचे, स्वामिन्! कोट्टं सज्जीकृत्य तव सांप्रतं पुरांतरेऽवस्थातुं युक्तं, कालविलंबेनैतत्कार्यं कर्तव्यं. ततश्चंद्रयशाः शतघ्नीभिर्जलाद्युपस्करैश्च कोट्टं सज्जी-

कृतवान्, नमिस्तं कोट्टं स्वसैन्यैरवेष्टयत्, अधःस्थैः सैनिकैः सहोर्ध्वस्थानां सैनिकानां महान् संग्रामः प्रववृधे, नमिः कोट्टभंगं विधातुमुपायान् विविधान् करोति, चंद्रयशा नृपस्तु कोट्टरक्षणे विविधानुपायान् करोति. अस्मिन्नवसरे तयोर्माता साध्वी मदनरेखा प्रवर्तिनीमनुज्ञाप्य तत्संग्रामवारणार्थं प्रथमं नमिराजसैन्ये समायाता, नमिरपि तां साध्वीं ननाम, आसने चोपविश्य नमेः पुरः सा साध्व्येवं वाचं विस्तारयामास, अनंतदुःखैकभाजनेऽस्मिन् संसारे नृभवं प्राप्य पापैस्त्वं किं मुह्यसे? हे राजन्! तव बंधुना चंद्रयशसा स्वयमागतो हस्ती चेद् गृहीतस्तर्हि तेन समं कथं युद्धं करोषि? क्रुद्धस्त्वं न किंचिद्वेत्सि, यदुक्तं—लोभी पश्येद्धनग्रासिं । कामिनीं कामुकस्तथा ॥ भ्रमं पश्येदथोन्मत्तो । न किंचिच्च क्रुधाकुलः ॥ १ ॥ इदं साध्वीवचो निशम्य नमिश्चिंतयामासायं चंद्रयशा युगबाहुपुत्रोऽस्ति, अहं तु पद्मरथपुत्रोऽस्मि, इयं साध्वीसत्यवादिनी सती कथं मम चानेन समं भ्रातृत्वं वदतीति विमृश्य साध्वींप्रत्येवं भापतेस्म हे पूज्ये! असौ क? अहं क? भिन्नकुलसंभवयोर्मेदेतयोः कथं भ्रातृत्वं वदसीति नमिनोक्ते साध्वी प्राह हे वत्स! यौवने ऐश्वर्यभवं मदं मुक्त्वा यदि शृणोसि तदा

॥२७९॥

सकलं स्वरूपं कथ्यते. अथ श्रोतुमुत्सुकाय नमिनृपाय सर्वं पूर्वस्वरूपं साध्वी जगाद, पुनरेवं सा बभाषे सुदर्शनपुरस्वामी युगबाहुस्तवास्य च पिता, अहं मदनरेखा तव मातेति, पद्मरथस्तु तव पालकः पिता, त्वमनेन भ्रात्रा समं मा विरोधं कुरु? बुध्यस्व हितमिति साध्वीप्रोक्तं तथा युगबाहुनामांकितकरमुद्रादर्शनतश्च सर्वं नमिः सत्यं मेने. तां साध्वीं प्रकामं चित्तोल्लासेन स्वमातरं मत्वा विशेषान्ननाम नमिः, उवाच च मातर्यत्त्वया प्रोक्तं तत्सर्वं तथ्यमेव, नात्र काचिद्विचारणास्ति, ममेयं करमुद्रा युगबाहुसुतत्वं ज्ञापयति, अयं चंद्रयशा मे ज्येष्ठभ्राता वर्तते, परं लोकः कथं प्रत्यायते? लघुभ्रातृवात्सल्यतो ज्येष्ठश्चेत्सन्मुखमायाति तदाहमुचितं विनयं कुर्वन् शोभामुद्वहामि. एवं नमिनृपोक्तमाकर्ण्य सा साध्वी दुर्गद्वारवर्त्मना प्रविश्य राजसौधे जगाम. चंद्रयशाभूपस्तु तामकस्मादागतामुपलक्ष्य स्वमातरं साध्वीं विशेषादभ्युत्थाय ननाम. उचितासनोपविष्टां तां साध्वीं वृत्तांतं पृष्टवान्. साध्वी सकलं वृत्तांतं नमिराजमिलनं यावत्कथयामास, चंद्रयशा नृपस्तं नमिं निजलघुभ्रातरं मत्वा सभालोकान्प्रत्येवमुवाच—सुलभाः संति सर्वेषां । पुत्रपत्न्यादयः शुभाः ॥ दुर्लभः सोदरो बंधु–

=विश्वासहे= =भाग्सि= =जाणकरके=

र्लभ्यते सुकृतैर्यदि ॥ १ ॥ इत्युक्त्वा चंद्रयशानृपोऽपि पुराद्बहिर्निर्गतः, नमिरपि तं ज्येष्ठभ्रातरमभ्यागच्छंतं दृष्ट्वा सिंहासनाडुत्थाय भूतलमिलच्छिराः प्रणनाम, चंद्रयशा नृपोऽपि स्वकराभ्यां तं भूतलादुत्थाप्य भृशमालिलिंग. तुल्याकारौ तुल्यवर्णौ तावेकमातृपितृत्वसंभूतत्वेन तदा परमप्रीतिपदं जातौ. लोकैः सहोदरौ ज्ञातौ, चंद्रयशा नृपस्तु तदानीमेव नमिबंधवे सुदर्शनपुरराज्यं ददौ, स्वयं संग्रामांगणमध्ये दीक्षां ललौ, क्रमेण राज्यद्वयं पालयन्नमिः क्षितौ प्रचण्डाज्ञां जज्ञे. अन्यदा नमेर्वपुषि दाघज्वरो जातः, पूर्वकर्मदोषेण तस्य षण्मासिकी पीडा समुत्पन्ना, निद्रामपि न लेभे, अंतःपुरीनूपुरशब्दा अपि कर्णशूलायासन्, नमिराज्ञो दाघज्वरशांतये स्वयं चंदनं घर्षयंतीनामंतःपुरीणां वलयशब्दास्तु वज्रप्राया बभूवुः, तत्र तानि वलयानि समस्तान्युत्तारितानि, एकैकं मंगलाय रक्षितं, तदानीं शब्दाश्रवणेन नमिना कश्चिन्निकटस्थः सेवकः पृष्टः कथमधुना कंकणशब्दा न श्रूयन्ते? तेनोक्तं स्वामिन्! भवत्पीडाकरत्वेनांतःपुरीभिः कंकणान्युत्तारितानि, एकैकं मंगलाय रक्षितमिति, नैकैककंकणशब्दाः श्रूयंते परस्परघर्षणाभावात्. एवं तद्वचः श्रुत्वा प्रतिबुद्धो नमिरेवं चिंतयामास यथा संयो-

गतः शुभा अशुभाः शब्दा जायंते, तथा रागादिका दोषाः संयोगत एव भवंति, यद्यस्माद्योगादहं मुक्तः स्यां तदा सर्वसंगं विमुच्य दीक्षां गृह्णामि, तस्येति ध्यायमानस्य रात्रौ सुखेन निद्रा समायाता, निद्रायां स्वप्नमेवं ददर्श, गजमारुह्याहं मंदिरगिरिमारूढः, प्रातः प्रतिबुद्धः स नीरोगो जातः, स एवं व्यचिंतयदमुं पर्वतं क्वाप्यहमदर्शं. एवमुहापोहं कुर्वतस्तस्य जातिस्मरणमुत्पन्नं, नमिराजा पूर्वभवं ददर्श, यदाहं पूर्वभवे शुक्रकल्पे सुरोऽभूवं, तदार्हज्जन्माभिषेककरणायाहमस्मिन् मेरावागमं. अथ कंकणदृष्टांतेनैकत्वं सुखकारीति चिंतयन् प्रत्येकबुद्धत्वं प्राप्य प्रव्रजितो नमिः, तदा राज्यमंतःपुरमेकपदे त्यजंतं नमिं ब्राह्मणरूपेण शक्रः समागत्य परीक्षितवान्, प्रणतवांश्च. शक्रपरीक्षासमये नमिराजसत्कं शक्रप्रश्ननमिराजप्रत्युत्तररूपं सूत्रं कथयति—

॥ मूलम् ॥—चईऊण देवलोगाउ । उववन्नो माणुसंमि लोगंमि ॥ उवसंतमोहणिज्जो । सरई पोराणियं जाइं ॥ १ ॥ जाईसरित्त भयवं । सहसं बुद्धो अणुत्तरे धम्मे ॥ पुत्तं ठवित्तु रज्जे । अभिनिक्खमई नमी राया ॥ २ ॥ व्याख्या—द्वाभ्यां गाथाभ्यां संबंधं वदति—नमी

मनोरथोऽस्ति. तदा शालराज्ञा भगिनीपुत्रो गांगलिः स्वराज्येऽभिषिक्तः, शालमहाशालौ द्वावपि प्रव्रजितौ, भगिनी श्रमणोपासिका जाता, भगवांस्ततो विहारं चकार. शालमहाशालमुनी एकादशांगान्यधीतौ, भगवान् राजगृहे समवसृतः, तत्रानेकभव्यान् प्रतिबोध्य स्वामी चंपायां गतः, तत्र शालमहाशालौ स्वामिनंप्रत्येवमूचतुर्यदि भवदाज्ञा स्यात्तदा वयं पृष्टिचंपायां व्रजामः, यदि कश्चित्तत्र प्रतिबुध्यते सम्यक्त्वं वा लभते तदास्माकं महान् लाभो भवतीति. स्वामिना तदा तयोर्गौतमः सार्थे दत्तः, गौतमस्वामी ताभ्यां सह पृष्टिचंपायां गतः, तदा गांगलिराजा पितृमातृभ्यां पिठरयशोमतीभ्यां सह वंदितुमायातः. समागतायां पर्षद्येवं देशनां चकार—

भो भव्याः! विषयप्रसक्ता मा तिष्टत? अनेकदुःखदारुणे संसारे प्रतिवंधं मा कुरुत? कष्टेन मनुष्यादिसामग्री प्राप्तास्ति, संध्याभ्ररागसदृशो यौवनादिप्रपंचोऽस्ति, क्षणदृष्टो नष्टः सकलसंयोगोऽस्ति, जलबिंदुचंचलं जीवितमस्ति, ततो जिनधर्मे प्रकाममुद्यमं कुरुत? तथा कृतेऽचिरेण शाश्वतपदप्राप्तिर्भवतां भवतीति गौतमदेशनां श्रुत्वा गांगलिः प्रतिबुद्धो भणति,

भगवन्नहं भवदंतिके प्रव्रज्यां गृहिष्ये, नवरं मातृपितरौ पृछामि, ज्येष्टपुत्रं च राज्ये स्थापयामि. एवमुक्त्वा गृहे गत्वा मातृपितरौ पृष्टौ, ताभ्यामुक्तं यदि त्वं प्रव्रजिष्यसि तदा वयमपि प्रव्रजिष्यामः. ततः पुत्रं राज्ये स्थापयित्वा गांगलिराजा स्वमातृपितृभ्यां सह प्रव्रजितः. गौतमस्वामी तैः शिष्यैः सह पश्चाद्वलितः, मार्गे शालमहाशालयोः शुभाध्यवसायेन केवलज्ञानमुत्पन्नं, पुनरग्रे गछतां गांगलिप्रमुखाणां त्रयाणामपि शुभध्यानेन केवलज्ञानमुत्पन्नं. एवं सर्वेऽपि ते गौतमसहिताश्चंपायां गताः. गौतमस्वामिना भगवच्चरणौ प्रणतौ, शालमहाशालादिकेवलिनो भगवतः प्रदक्षिणां कृत्वा तीर्थं प्रणम्य केवलपर्षदभिमुखं चलिताः, तावदुत्थितो गौतमस्तान्प्रत्येवं भणति भोः शिष्याः क्व व्रजत? वंदत तीर्थंकरं? तावता भगवान् प्राह गौतम! केवलिनो माशातयेति भगवद्वचसा गौतमस्तान् क्षामयति, मनस्येवं च चिंतयति, अहं न सेत्स्यामि, मदीयाः शिष्याः केवलज्ञानमासादयंति, किंत्वद्य यावन्मया केवलज्ञानं न प्राप्तं. इतोऽवसरे मिथो देवानामेवं संलापो वर्तते यदद्य भगवता व्याख्यानावसरे एवमादिष्टं यो भूमिचरः स्वलब्ध्याष्टापदाद्रौ चैत्यानि वंदते स तेनैव भवेन सिद्धिं या-

नीति श्रुत्वा गौतमः स्वामिनं पृछति हे भगवन्नहमष्टापदे चैत्यानि वंदितुं यामीति. भगवतोक्तं व्रजाष्टापदे? तत्र चैत्यानि वंदस्व? ततो हृष्टो गौतमो भगवच्चरणौ वंदित्वा तत्र गतः, पूर्वं हि तत्राष्टापदे तादृग्जनसंवादं दृष्ट्वा पंचपंचशतपरिवारास्त्रयः कोडिन्नदिन्नसेवालाख्यास्तापसा गताः संति, तेषु कोडिन्नस्तापसः सपरिवार एकांतरोपवासेन भुंक्ते, पारणे मूलकंदान्याहारयति, सोऽष्टापदे प्रथममेखलारूढोऽस्ति. द्वितीयो दिन्नतापसः सपरिवारः प्रत्यहं षष्ठपारणके परिशटितानि पर्णानि भुंक्ते, स द्वितीयमेखलामारूढोऽस्ति. तृतीयः सेवालतापसः सपरिवारो निरंतरमष्टमपारणके सेवालं भुंक्ते, स तृतीयमेखलामारूढोऽस्ति.

एवं तेषु क्लिश्यमानेषु गौतमः सूर्यकिरणावलंबेन तत्रारोढुमारब्धः. ते तापसाश्चिंतयन्त्येष स्थूलवपुः कथमत्राधिरोढुं शक्यते? वयं तपस्विनोऽप्यशक्ताः. एवं चिंतयत्स्वेव तेषु पश्यत्सु स गौतमः क्षणादष्टापदपर्वतशिखरमधिरूढः, ते पुनरेवं चिंतयंति यदासावतरिष्यति तदास्य शिष्या वयं भविष्यामः. अथ गौतमस्वामी प्रासादमध्ये प्राप्तो निजनिजवर्णपरिमाणोपेताश्चतुर्विंशतिजिनेंद्राणां भरतकारिताः प्रतिमा ववंदे, तासां चैवं स्तुतिं चकार—'ज-

गचिंतामणि जगनाह । जगगुरु जगरक्खण ॥ ’ इत्यादि स्तुतिं कृत्वा पूर्वदिग्नागे पृथिवीशिलापट्टकेऽशोकवरपादपस्याध एकरात्रौ पर्युषितः. इतश्च शक्रलोकपालो वैश्रमणस्तत्र चैत्यानि वंदितुमायातः, प्रत्येकं चैत्यानि वंदित्वाशोकतरोरधः समायातः, गौतमस्वामिनं वंदित्वाग्रे निषण्णः, तस्याग्रे गौतम एवं धर्मं कथयति—धर्मार्थकामास्त्रयः पुरुषार्थाः, तत्रार्थकामसाधकत्वेन धर्म एव प्रधानः, स च देवगुरुभक्तिरागेण नवति, देवः पुनः सर्वज्ञः सर्वदर्श्यष्टादशदोषरहितो नवति, गुरवः सुसाधवो नवंति, साधवः समशत्रुमित्राः समलोष्टुकांचनाः पंचसमितास्त्रिगुप्ता अममा अमत्सरा जितेंद्रिया जितकषाया निर्मलब्रह्मचर्यधराः स्वाध्यायध्यानशक्ता डुश्चरेण तपश्चरणा अंतप्रांताहाराः शुष्कमांसरुधिराः कृशशरीरा भवंति. इमां गौतमक्रियमाणां देशनां श्रुत्वा वैश्रमणमनस्येवं विसंवादो जातोऽहो एतेषां विशेषपुष्टिद्युतिधरं शरीरं, यतिवर्णनं चेदृशमिति वैश्रमणमनोवितर्कं ज्ञात्वा गौतमस्तदा पुंमरीकाध्ययनं प्ररूपितवान्. तथा च—

पुष्कलावतीविजये पुंमरीकिण्यां नगर्यां महापद्मराजानवत्, तस्य पद्मावती राज्ञी ब-

भूत्, तस्याः कुक्षिसंभूतौ पुंडरीककंडरीकनामानौ पुत्रौ जातौ, पितर्युपरते पुंडरीको राजा जातः, कंडरीको युवराजा जातः. अन्यदा तत्र स्थविराः साधवः समायाताः, स्थिता नलिनीवनोद्याने, कंडरीकसहितो पुंडरीकस्तत्र गतो वंदित्वाग्रे निषण्णो धर्मदेशनां शुश्राव, पुंडरीकः श्रावकधर्मं प्रपन्नवान्, कंडरीकः प्रबुद्धस्तान् प्रत्येवं जगादाहं भवन्निकटे प्रव्रज्यां गृहीष्ये, नवरं पुंडरीकराजानं पृष्ठामीत्युक्त्वा पुंडरीकंप्रत्यहं प्रव्रजामीत्युक्तवान्, पुंडरीकोऽप्याह इदानीं त्वं मा प्रव्रज्यां गृहाण? तवाद्य राज्याभिषेकं करोमि, त्वं निश्चिंतः सन् राज्यं पालय? यथेष्टं सुखं भज? कंडरीको नैतदंगीकुरुते, पुनः प्रव्रज्याग्रहमेव कुरुते, यावदसौ राज्यादिलोभेन गृहे स्थापयितुं पुंडरीकेण न शक्यते, तावत्संयमकष्टं पुंडरीकोऽस्य दर्शयति— अयं संयमः सत्यः सर्वदुःखक्षयंकरः, परं वालुकास्वादसदृशः, गंगाप्रमुखमहानदीप्रवाहसन्मुखगमनवद् दुःसाध्यः, भुजाभ्यां समुद्रतरणवत्कष्टानुष्ठेयः, अत्र द्वाविंशतिपरीषहाः सोढव्याः, ततः सुकुमालशरीरेण भवता नायं संयमः पालयितुं शक्यः, तस्माद् गृह एव तिष्ट? राज्यसुखं च भजेति पुंडरीकेणोक्तः कंडरीकः प्राह, कापुरुषाणां परलोकपराङ्मुखाणामिह-


= पालनोरे—

लोकविषयसुखतृष्णावतामयं संयमो दुःपाल्योऽस्ति, अहं च विषयसुखपराङ्मुखः परलोकसंमुखः शूरतरोऽस्मीति नाहं संयमाद्बिभेमीति वदंतं कंडरीकं पुंडरीको राजा संयमायानुज्ञातवान्. पुंडरीककारितमहामहःपूर्वकं कंडरीकः संयमं गृहीतवान्; क्रमेण स्थविरांतिके स एकादशांगानि पपाठ. चतुर्थषष्ठाष्टमादितपांसि चकार. एकदा तस्य तपस्विनस्तपःपारणके तुच्छाहारैर्दाघज्वरादयो रोगाः प्रादुर्भूताः, तथाप्यसौ स्थविरैः समं विहारं चकार.

एकदा ते स्थविराः कंडरीकेण समं विहरंतः पुंडरीकिण्यां नगर्यां समायाताः, नलिनीवने समवसृताः, पुंडरीकराजा तेषां वंदनाय तत्रायातः, स्थविराणां देशनां श्रुत्वा कंडरीकमृषिं वंदते, तद्वपुः सरोगं पश्यति, पुनः स्थविरांतिके समागत्यैवमवादीद्यदि स्थविराणामाज्ञा स्यात्तदाहं कंडरीकमुनेर्वपुषि प्रासुकौषधादिभिश्चिकित्सां कारयामि, यूयं मम यानशालायां तावत्कालं तिष्टत? ततस्ते स्थविराः कंडरीकेण समं यानशालायां गत्वा स्थिताः. ततः स पुंडरीकराजा कंडरीकस्य प्रासुकौषधैश्चिकित्सां कारयति, त्वरितमेव तस्य रोगोपशांतिर्जाता, स्थविरास्ततो विहारं चक्रुः, रोगातंकाद्विप्रमुक्तोऽपि कंडरीकमुनिर्मनोज्ञाहारादि-

मूर्छितस्ततो विहारं कर्तुं नेछति, कंडरीकस्य तादृशं स्वरूपमाकर्ण्य पुंडरीकराजा तदंतिके समागत्यैवमाह धन्यस्त्वं, कृतपुण्यस्त्वं, सुलक्षणस्त्वं, सुलब्धमनुष्यजन्मस्त्वं, येन राज्यमंतःपुरं च परिहृत्य संयममादत्तवान्, एवं द्विर्वारं त्रिर्वारं वा पुंडरीकेणोक्ते प्राप्तलज्जः पुंडरीकराजानमापृच्छ्य कंडरीकः स्थविरैः समं ततो विजहार. कियत्कालमुग्रविहारं कृत्वा पश्चात्संयमाद्विखिन्नः शनैः शनैः स्थविरांतिकान्निर्गत्य पुंडरीकिण्यां नगर्यामशोकवाटिकायामशोकवरपादपस्याधः समागत्य शिलापट्टमारूढ उपहतमनःसंकल्पः किंचिद् ध्यायन्नेव तिष्ठति. ततः पुंडरीकधात्री प्रसंगात्तत्रायाता, तं दृष्ट्वा पुंडरीकाय न्यवेदयत्, पुंडरीकोऽपि तत्रागत्य तं त्रिःप्रदक्षिणीकृत्य धन्यस्त्वमित्याद्युक्तवान्, कंडरीकस्य तद्वचनं न रोचते, सर्वथा संयमाद्भ्रष्टं तं ज्ञात्वा पुंडरीकः पुनरेवमुवाचाहो भ्रातस्ते यदि विषयार्थस्तदेदं राज्यं गृहाणेत्युक्त्वा तं राज्येऽभिषिक्तवान्, स्वयं तु पंचमौष्टिकं लोचं कृत्वा संयममुपात्तवान्, कंडरीकसत्कं पात्रोपकरणादिकं च गृहीतवान्. स्थविराणामंतिके प्रव्रज्यां गृहीत्वाहारं गृहीष्ये, नान्यथेत्यभिग्रहं कृत्वा स्थविराभिमुखमेकाक्येव चलितः, कंडरीकस्तु राजगृहांतर्गत्वा तस्मिन्नेव दिने सर-

समाहारं भुक्तवान्, रात्रौ च तस्य तदाहारस्य रसात्कृशशरीरस्योदरे महाव्यथोत्पन्ना, न कोऽपि तस्याग्रे मंत्रिसामंतादिकश्चिकित्सार्थं समायाति, प्रव्रज्यापरित्यागादयोग्य इत्ययं सर्वैरपि लोकैरुपेक्षितः, स आर्त्तरौद्रध्याने उपपन्नः कालं कृत्वा सप्तमनरकपृथिव्यां नारकत्वेनोत्पन्नः. पुंडरीकस्तु स्थविरांतिके गत्वा पुनर्दीक्षां गृहीतवान्, प्रथममष्टमं तपः कृतवान्, पारणे च शीतलरूक्षाहारेण वपुषि महावेदना समुत्पन्ना, ततस्तेनानशनं विहितं, चत्वारि शरणानि कृतानि, आलोचितप्रतिक्रांतः पुंडरीकः कालं कृत्वा सर्वार्थसिद्धविमाने देवत्वेनोत्पन्नः, इममाख्यानं वैश्रमणाग्रे उक्त्वैवं पुनरुवाचाहो देवानुप्रिय! दुर्बलशरीरोऽपि कंडरीकः सप्तमीं भूमिं गतवान्, सबलशरीरोऽपि पुंडरीकः सर्वार्थसिद्धिविमाने गतस्तस्माद् दुर्बलशरीरं संयमसाधनं तद्व्याघातकं, एवं नियमो नास्ति, किंतु ध्यानमेव तत्साधनं, यस्य शुभध्यानं स संयमाराधकः, यस्य तु ध्यानमशुभं स संयमविराधकः.

एवं गौतमस्वामिव्याख्यानं श्रुत्वा वैश्रमणो वंदित्वा स्वस्थानं गतः. गौतमः प्रभाते चैत्यानि नमस्कृत्याष्टापदात्प्रत्यवतरतिस्म, तापसास्तदैवमाहुर्यूयमस्मद्गुरवो वयं भवच्छिष्या भ-

वामः, तदा गौतमस्वामी भणति मम धर्माचार्यस्त्रिलोकगुरुर्वर्धमाननामास्ति, ते च जणंति यु-ष्माकमप्याचार्यो वर्तते किं? गौतमः प्राहेदृशो मम धर्माचार्यो वर्तते, यथा सर्वज्ञः सर्वद-र्शी रूपसंपदा तिरस्कृतत्रिलोकरूपः किंकरीकृतसकलसुरासुरविरचितसमवसरणोपविष्ट उप-रिधृतश्छत्रत्रयः सुरेंद्रवीज्यमानचामरयुगलः चतुस्त्रिंशदतिशयनिधानः श्रमणजगवान् श्रीम-हावीरनामा वर्तते.

एवं वीतरागस्वरूपमाकर्ण्य तेषां तापसानां सम्यक्त्वोपचयः संपन्नः. ततः सर्वेऽपि ताप-सा गौतमस्वामिना प्रव्राजिताः, शासनदेव्या तेषां सर्वेषां लिंगान्युपनीतानि, तैः सर्वैः शि-ष्यैः सह गौतमस्वामी ततश्चलितः कस्मिंश्चिद् ग्रामे गतः, जिक्षावेला जाता, गौतमेनोक्तं युष्मवतां रोचते तदुक्तव्यं, मया तदानीयते, तैरुक्तं पायसमानेयं, सर्वलब्धिसंपन्नो गौतमः क्वचिद् गृहे पतद्ग्रहं पायसेन जृतवान्, उपाश्रये आगत्य सर्वेषां तेषां मंरुल्यामुपवेशितानां पात्रेषु क्षीरं परिवेषितवान्, न च क्षीरं क्षीणं जवति, महानसिकलब्धिमता गौतमेन पत-द्ग्रहेंगुष्टक्षेपाज्जेमतामेव सेवालतापसानामीदृशः परिणामो जातोऽहोऽस्माकं शुजकर्मोदयो

१०

जातः, यतोऽनभ्रवृष्टिसदृशः समस्तशास्त्रार्णवपारगामीदृशो गुरुरस्मान्निर्लब्धः, इत्यादि भावनां भावयतां तेषां तदैव केवलज्ञानमुत्पन्नं. दिन्नतापसानां तु भोजनानंतरं चलितानां भगवत्समीपे प्राप्तानां भगवतश्छत्रादिविभूतिं च पश्यतां तथाविधशुभाध्यवसाययोगेन केवलज्ञानमुत्पन्नं. कौडिन्नतापसानां तु स्वामिनं साक्षाद् दृष्ट्वा तादृशाध्यवसायेनैव केवलज्ञानमुत्पन्नं. गौतमस्वामी भगवच्चरणौ प्रणनाम, ते तापसमुनयः केवलिनस्त्रिःप्रदक्षिणीकृत्य केवलिपर्षदभिमुखं चलिताः; तदा गौतमस्वामी भणतीहागच्छत? भगवंतं प्रणमत? भगवान् महावीरः प्राह गौतम! केवलिनो माशातय? ततो गौतमस्तेषां मिथ्यादुष्कृतं ददौ. ततःपरं गौतमस्य महत्यधृतिर्जाता. ततो भगवान् महावीरः गौतमस्वामिनंप्रत्याह गौतम! पूर्वभवपरिचितत्वेन तव मयि महान् रागोऽस्ति, तत्क्षयमंतरेण तव केवलज्ञानं नोत्पद्यते, क्षीणे च तस्मिन्नेव भवे तवावश्यं केवलमुत्पत्स्यते, प्रशस्तोऽपि रागः केवलप्रतिबंधको भवत्येव, त्वमहं च द्वावपि निर्वाणे तुल्यौ भविष्याव इति माऽधृतिं कार्षीरिति. तदानीं स्वामी महावीरो द्रुमपत्तयमध्ययनं प्ररूपितवान्. इदं चाध्ययनं सूत्रतोऽर्थतश्च भगवता श्रीमहावीरेणैव प्ररूपित-

मिति श्रीमदुत्तराध्ययनवृहद्वृत्तौ. ततो ये वदंत्युत्तराध्ययनसूत्रे वीरवाणीस्पर्शोऽपि नास्ति ते कुमतय एव बोधव्याः.

॥ मूलम् ॥—डुमपत्तए पंडुरए । जहा निवडइ राइगणाण अच्चुए ॥ एवं मणुआण जीवियं । समयं गोयम मा पमायए ॥ १ ॥ व्याख्या—भगवान् श्रीमहावीरदेवो गौतमस्वामिनमुद्दिश्यान्यानपि भव्यजीवानुपदिशति—हे गौतमैवमनेन दृष्टांतेन मनुजानां मनुष्याणां जीवितं जानीहि त्वं समयं समयमात्रमपि मा प्रमादीः? प्रमादं मा कुर्याः? अत्र समयमात्रग्रहणमत्यंतप्रमादनिवारणार्थं, अनेन केन दृष्टांतेन? तद् दृष्टांतमाह—यथा रात्रिगणानामत्यये गमने, रात्रीणां गणा रात्रिगणाः कालपरिणामा रात्रिदिवससमूहास्तेषामत्ययेऽतिक्रमे पांडुरकं डुमपत्रकं पक्कं वृंताच्छिथिलीप्रायं पर्णं निपतति, तथैव दिनानामत्यये आयुर्लक्षणे वृंते शिथिले जाते सति जीवितं शरीरं पतति, जीवो जातो यस्मिंस्तज्जीवितं शरीरमित्यर्थः, जीवितस्य कालस्य विनाशाभावात्, जीवितशब्देन शरीरमुच्यते. यदाह निर्युक्तिकारः—परियत्तिय लावन्नं । चलंति संधिं मुअंति विंटग्गं ॥ पत्तं वसणं पत्तं । काले पत्ते भणइ

गाहं ॥ १ ॥ जह तुज्झे तह अम्हे । तुज्झेवि अहो हिआ जहा अम्हे ॥ अप्पाहेइ पमंतं । पंडुअपत्तं किसलयाणं ॥ २ ॥ नवि अत्थि नवि अ होही । उल्लावो किसलपंडुपत्ताणं ॥ उवमा खलु एस कया । नवियजणा विवोहट्टाए ॥ ३ ॥ यथा हि किसलयानि पांडुपत्रेणानुशिष्यंते तथान्योऽपि यौवनगर्वितोऽनुशासनीयः. ॥ १ ॥ अथायुषोऽनित्यत्वमाह—

॥ मूलम् ॥—कुसग्गे जह उसबिंदुए । थोवं चिट्ठइ लंबमाणए ॥ एवं मणुयाण जीवियं । समयं गोयम मा पमायए ॥ २ ॥ व्याख्या—हे गौतम! समयमात्रमपि मा प्रमादीः? तत्र हेतुमाह—कुशस्याग्रेऽवश्याय बिंदुर्लंबमानः सन् स्तोकं स्तोककालं तिष्ठति, वातादिना प्रेर्यमाणः सन् पतति, तथा मनुष्याणां जीवितमायुरस्थिरं ज्ञेयं. एवमायुषोऽनित्यत्वं ज्ञात्वा धर्मे प्रमादो न विधेय इत्यर्थः. ॥ २ ॥

॥ मूलम् ॥—इइत्तरियंमि आउए । जीविए अ बहुपच्चवायए ॥ विहुणाहि रयं पुरेकडं । समयं गोयम मा पमायए ॥ ३ ॥ व्याख्या—इत्युक्तदृष्टांतेनेत्वरे स्वल्पकालपरिमाणे मनुष्यस्यायुषि नो गौतम! पुराकृतं रजः प्राचीनकृतं पातकं दुःकर्मविशेषेण धुनीहि? जीवा-

त्पृथक्कुरु? हे गौतम! पुनर्जीवितकेऽर्थात्सोपक्रमे आयुषि बहवः प्रत्यवाया उपघातहेतवोऽध्यवसायादयो वर्तते यस्मिंस्तद्बहुप्रत्यवायकं, तस्मिन् बहुप्रत्यवायके समयमपि मा प्रमादं कुर्याः? अत्रायुःशब्देन निरुपक्रममायुर्भण्यते, जीवितशब्देन सोपक्रमं भण्यते. एति प्राप्नोत्युपक्रमहेतुभिरतः प्रवर्त्यतया यथास्थित्यैवमनुभवमित्यायुः,तस्मिन्नायुषि निरुपक्रमे आयुषि स्वल्पपरिमाणेऽपि दुःकृतं दूरीकुरु? यद्यपि पूर्वकोटिप्रमाणमायुर्भवति, तथापि देवापेक्षया स्वल्पमेव ज्ञेयमतृप्तत्वात्. यदुक्तं—धनेषु जीवितव्येषु । रतिकामेषु भारत ॥ अतृप्ताः प्राणिनः सर्वे । याता यास्यंति यांति च ॥ १ ॥ अत्र सोपक्रमनिरुपक्रमायुर्ज्ञानं केवलिन एव भवेत्. ॥ ३ ॥

॥ मूलम् ॥—दुल्लहे खलु माणुसे भवे । चिरकालेणवि सव्वपाणिणं ॥ गाढा य विवागकम्मुणो । समयं गोयम मा पमायए ॥ ४ ॥ व्याख्या—खल्विति निश्चयेन सर्वप्राणिनां सर्वजीवानां चिरकालेनापि मनुष्यो भवो दुर्लभो दुःप्राप्यो वर्तते, तत्र हेतुमाह—कर्मणां मनुष्यगतिविघातकानां विपाका विगाढा विशेषेण गाढा विगाढा विनाशयितुमशक्यास्तस्मा-



॥३४३॥ विनाशकरव राव्त है

त्समयमात्रमपि प्रमादं मा कुर्याः. ॥ ४ ॥ कथं मनुजत्वं दुर्लभमित्याह—

॥ मूलम् ॥—पुढविकायमइगउ । उक्कोसं जीवो उवसंवसे ॥ कालं संखाईअं । समयं गोयम मा पमायए ॥ ५ ॥ व्याख्या—जीवः संसारी पृथ्वीकायमधिगतः पृथ्वीकायभावं प्राप्तः सन्नुत्कर्षत उत्कृष्टकालं संख्यातीतमसंख्योत्सर्पिण्यवसर्पिणीमानं कालं संवसेत्तद्रूपतयावतिष्ठेत्, तस्मात्समयमात्रमपि मा प्रमादीः? ॥ ५ ॥

॥ मूलम् ॥—आउक्कायमइगउ । उक्कोसं जीवो उवसंवसे ॥ कालं संखाईअं । समयं गोयम मा पमायए ॥ ६ ॥ व्याख्या—तथाप्कायमधिगतो जीव उत्कृष्टमसंख्योत्सर्पिण्यवसर्पिणीमानं कालं संवसेत्, तस्मात् समयमात्रमपि मा प्रमादीः? ॥ ६ ॥

॥ मूलम् ॥—तेउक्कायमइगउ । उक्कोसं जीवो उवसंवसे ॥ कालं संखाईअं । समयं गोयम मा पमायए ॥ ७ ॥ व्याख्या—एवं तेजस्कायमग्निकायमधिगतो जीव उत्कृष्टं संख्यातीतं कालमसंख्योत्सर्पिणीकालं संवसेत्, तस्मात्समयमात्रमपि प्रमादं मा कुर्याः? ॥ ७ ॥

॥ मूलम् ॥—वाउक्कायमइगउ । उक्कोसं जीवो उवसंवसे ॥ कालं संखाईअं । समयं

गोयम मा पमायए ॥ ८ ॥ व्याख्या—एवं जीवो वायुकायमधिगतोऽप्युत्कृष्टमसंख्योत्सर्पिण्य-वसर्पिणीप्रमाणकालं संवसेत्, तस्मात् समयमात्रमपि प्रमादं मा कुर्याः? ॥ ८ ॥

॥ मूलम् ॥—वणस्सइकायमइगओ । उक्कोसं जीवो उवसंवसे ॥ कालमणंतं दुरंतं । समयं गोयम मा पमायए ॥ ९ ॥ व्याख्या—जीवः संसारी वनस्पतिकायमधिगत उत्कर्षत उत्कृष्टं कालमनंतमुत्सर्पिण्यवसर्पिणीमानमनंतकायिकापेक्षं वसेत्, कथंभूतमनंतं कालं? दुरंतं, दुष्टोन्तो यस्य स दुरंतस्तं, ते हि वनस्पतिकायमधिगता जीवास्ततस्थानादुध्धृता अपि प्रायो विशिष्टं नरादिभवं न लभंते, तस्माद् दुरंतमिति विशेषणं. ॥ ९ ॥

॥ मूलम् ॥—बेंदियकायमइगओ । उक्कोसं जीवो उवसंवसे ॥ कालं संखिज्जसन्नियं । समयं गोयम मा पमायए ॥ १० ॥ व्याख्या—द्वींद्रियकायं जीवोऽधिगतः सन्नुत्कृष्टं कालं संख्यातसंज्ञकं, संख्याताऽसंख्यातवर्षसहस्रात्मिका संज्ञा यस्य स संख्यातसंज्ञकस्तं संख्यातसंज्ञकं संख्यातवर्षसहस्रात्मकं कालं द्वींद्रियकायं तिष्ठेदित्यर्थः, ततसमयमात्रमपि गौतम मा प्रमादं कुर्याः? ॥ १० ॥



=निकल्योइको=

॥ मूलम् ॥—तेंदियकायमइगर्ड । उक्कोसं जीवो उवसंवसे ॥ कालं संखिज्जसन्नियं । समयं गोयम मा पमायए ॥ ११ ॥ व्याख्या—एवं जीवस्त्रींद्रियकायमधिगतः संख्यातवर्षसहस्रात्मकं कालमुत्कृष्टं वसेत्, तेन त्वं समयमात्रमपि प्रमादं मा कुर्याः? ॥ ११ ॥

॥ मूलम् ॥—चउरिंदियकायमइगर्ड । उक्कोसं जीवो उवसंवसे ॥ कालं संखिज्जसन्नियं । समयं गोयम मा पमायए ॥ १२ ॥ व्याख्या—एवं जीवश्चतुरिंद्रियकायेऽधिवसन् संख्यातवर्षसहस्रात्मकं कालमधिवसेत्, तस्मात्त्वं प्रमादं समयमात्रमपि मा कुर्याः? ॥ १२ ॥

॥ मूलम् ॥—पंचिंदियकायमइगर्ड । उक्कोसं जीवो उवसंवसे ॥ सत्तट्ठभवगाहणे। समयं गोयम मा पमायए ॥ १३ ॥ व्याख्या—पंचेंद्रियकायमधिगतः पंचेंद्रियत्वं प्राप्तः सन्नुत्कृष्टं सप्ताष्टभवग्रहणे संवसेत्, सप्ताष्टौ वा परिमाणं येषां ते सप्ताष्टाः, सप्ताष्टाश्च ते भवाश्च सप्ताष्टभवास्तेषां ग्रहणं सप्ताष्टभवग्रहणं, तस्मिन्. यदा हि पंचेंद्रियो मृत्वा पंचेंद्रियो भवेत्तदोत्कृष्टं सप्ताष्टवारं स्यादित्यर्थः. तस्मात्समयमात्रमपि मा प्रमादीः? कश्चित्पुण्यवान् संख्यातायुष्को जीवः सप्तभवान् करोति, कश्चिदसंख्यातायुष्को जीवोऽष्टभवान् वा करोति,

एवं ज्ञात्वा प्रमादो न विधेयः. ॥ १३ ॥

॥ मूलम् ॥—देवे नेरइअइगर्ज । उक्कोसं जीवो उवसंवसे ॥ इक्केक्कत्नवगाहणे । समयं गोयम मा पमायए ॥ १४ ॥ व्याख्या—देवे देवन्नवे नरके नरकन्नवेऽधिगतः संसारी जीव उत्कृष्टमेकैकस्मिन् न्नवग्रहणे संवसेत्, तस्मात्समयमात्रमपि प्रमादं मा कुर्याः? देवो मृत्वा देवो न स्यात्, नारको मृत्वा नारको न स्यात्, एकमन्यन्नवांतरं कृत्वा पश्चात्स्यादित्यर्थः, तस्मादेकैकभवग्रहणमित्युक्तं. ॥ १४ ॥

॥ मूलम् ॥—एवं न्नवसंसारे । संसरइ सुहासुहेहिं कम्मेहिं ॥ जीवो पमायवहुलो । समयं गोयम मा पमायए ॥ १५ ॥ व्याख्या—एवममुना प्रकारेण जीवो भवसंसारे न्नवभ्रमणे शुभाशुभैः कर्मभिः प्रेर्यमाणः संसरति पर्यटति. कीदृशो जीवः? प्रमादबहुलः, प्रमादो बहुलो यस्य स प्रमादबहुलः प्रमादवतीत्यर्थः, तस्मात्प्रमादस्य दुर्निवारत्वं ज्ञात्वा समयमात्रमपि प्रमादं मा कुर्याः? ॥ १५ ॥ मनुष्यत्वप्राप्तोऽप्युत्तरोत्तरगुणास्तिर्दुर्लभेत्याह—

॥ मूलम् ॥—लध्धूणवि माणुसत्तणं । आयरियत्त पुणरेव डुल्लहं ॥ बहवे दसुयामिल-

समजीजाय नहीं=

ख्कुया । समयं गोयम मा पमायए ॥ १६ ॥ व्याख्या—मनुष्यत्वमपि लब्ध्वा आर्यत्वमार्यदेशोत्पत्तिभावं पुनरपि दुर्लभं, यद्यपि मनुष्यत्वं जीवः प्राप्नोति, तदाप्यार्यदेशे मनुष्यत्वं दुर्लभमित्यर्थः. यत्र देशेषु धर्माधर्मजीवाजीवविचारः स आर्यो देशस्तत्रोत्पत्तिर्दुर्लभा, पुनरपि बहवो जीवा दस्यवश्चौरा देशानां प्रांते पर्वतादिषु निवासकारिणस्तस्करा भवंति, म्लेछाः के? येषां वाक् सम्यक्केनापि न ज्ञायते ते म्लेछा उच्यंते. पुलिंदा नाहला नेष्टा । शबरा बरटा भटाः ॥ माला भिल्लाः किराताश्च । सर्वेऽपि म्लेछजातयः ॥ १ ॥ तत्र च धर्माधर्मज्ञानं दुर्लभं, तस्मात्समयमात्रमपि प्रमादं मा कुर्याः. ॥ १६ ॥

॥ मूलम् ॥—लध्धूणंवि आयरियत्तणं । अहिणपंचेंदिया हु दुल्लहा ॥ विगलिंदिया हु दीसई । समयं गोयम मा पमायए ॥ १७ ॥ व्याख्या—आर्यत्वमार्यदेशोत्पत्तिभावमपि लब्ध्वा, हु इति निश्चये, अहीनपंचेंद्रियता पुनर्दुर्लभा, हु इति बाहुल्येन बहूनां विकलेंद्रियता दृश्यते, विकलानि रोगाद्युपहतानींद्रियाणि येषां ते विकलेंद्रियास्तेषां भावो विकलेंद्रियता, सा दृश्यते. बहवो हि दुःकर्मवशाद्रोगोद्रेकेण विगतनेत्रश्रवणरसनस्पर्शनकचरणवीर्याः



१०

दृश्यंते, ते च धर्मानुष्ठानकरणेऽसमर्था भवंति, तस्मात्वं समयमात्रमपि हे गौतम! प्रमादं मा कुर्याः. ॥ १७ ॥

॥ मूलम् ॥ अहीणपंचिंदियत्तंपि से लहे । उत्तमधम्मसुइ हु दुल्लहा ॥ कुतिच्छिनिसेवए जणे । समयं गोयम मा पमायए ॥ १८ ॥ व्याख्या—से इति स जीवोऽहीनपंचेंद्रियत्वमपि चेल्लभेत तदापि हु इति निश्चयेनोत्तमधर्मश्रुतिर्दुर्लभा, जिनधर्मस्य श्रवणं दुःप्राप्यमित्यर्थः. तत्र हेतुमाह—जनो लोकः कुतीर्थिनिषेवकः स्यात्, कुतीर्थिनां मिथ्यात्विनां निषेवकः, कुतीर्थिनो हि सत्कारयशोलाभार्थिनो भवंति, ते च प्राणिनां विषयादिसुखसेवनोपदेशेन वल्लभत्वमुत्पाद्य जनान् रंजयंति, अतस्तेषां सेवा सुकरा, तेषां मुखाद्धर्मवार्ता कुत इत्यर्थः.

॥ मूलम् ॥—लध्धूणवि उत्तमं सुइं । सद्दहणा पुणरवि दुल्लहा ॥ मिछत्तनिसेवए जणे । समयं गोयम मा पमायए ॥ १९ ॥ व्याख्या—उत्तमधर्मस्य श्रुतिमपि लब्ध्वा पुनः श्रद्धा दुर्लभा, तत्वरुचिर्दुःप्राप्या, यतो हि जनो लोको मिथ्यात्वनिषेवकः स्यात्, मिथ्यात्वं हि कुगुरुकुदेवकुधर्मलक्षणं नितरां सेवते इति मिथ्यात्वनिषेवकः. तस्मान्मिथ्यात्वोदयाज्जिनधर्मरु-

चिर्दुर्लजा, तस्मात्समयमात्रमपि त्वं मा प्रमादीः? ॥ १ए ॥

॥ मूलम् ॥—धम्मंपि हु सद्दहंतया । दुल्लहिया काएण फासया ॥ इह कामगुणेसु मुछिया । समयं गोयम मा पमायए ॥ २० ॥ व्याख्या—धर्मं जिनोक्तं धर्मं श्रद्दधतः, जिनोक्तमागमं साधुश्राद्धधर्मं वा सर्वं सत्यमिति जानतोऽपि जीवस्य कायेन शरीरेण, कायग्रहणेन कायसंबद्धयोर्वाङ्मनसोरपि ग्रहणं, तस्मात्कायेन वचसा मनसा च स्पर्शना दुर्लजिका, धर्मक्रियानुष्ठानकरणं दुःकरमित्यर्थः. इह जगति जीवाः कामगुणेषु विषयेषु मूर्छिता लोलुपा जवंति, विषयिणो हि धर्मक्रियास्वयोग्याः, हे गौतम! धर्मक्रियानुष्ठानकरणं दुःकरमिति समयमात्रमपि प्रमादं मा कुर्याः. ॥ २० ॥

॥ मूलम् ॥—परिजूरइ ते सरीरयं । केसा पंमुरया हवंति ते ॥ से सोयबले य हायई । समयं गोयम मा पमायए ॥ २१ ॥ व्याख्या—हे गौतम! ते शरीरकं परिजीर्यति, परि समंतात्सर्वप्रकारेण वयोहानिर्जरया जीर्णत्वमनुजवति, तव पुनः केशाः पांडुरकाः श्वेता जवंति, अत्र ते तवेति कथनात्प्रत्यक्षानुजवेन संदेहो न कर्तव्यः, यथा हस्तकंकणस्यात्मदर्शा-

वलोकनं. यथा तव शरीरं तथा सर्वेषामेव ज्ञेयमित्यर्थः. से इति तच्छ्रोत्रबलं हीयते हीनं स्यात्, तच्छब्दग्रहणाद्यच्छब्दग्रहणं कर्तव्यं, यत् श्रोत्रयोर्बलं तरुणावस्थायां स्यात्तद् वृद्धावस्थायां हीयत इत्यर्थः. अत्र पूर्वं श्रोत्रग्रहणं धर्मश्रवणत्वख्यापनार्थं, यतो हि धर्मश्रवणादेव धर्मकरणमतिः स्यादित्यर्थः, तस्मात् श्रोत्रबले सति धर्मश्रवणादरः कर्तव्यः, तत्र समयमात्रमपि त्वं मा प्रमादीः? ॥ २१ ॥

॥ मूलम् ॥–परिजूरइ ते सरीरयं । केसा पंडुरया हवंति ते ॥ से चक्खुबले य हायई । समयं गोयम मा पमायए ॥ २२ ॥ व्याख्या–गाथायाः पूर्वार्धस्यार्थः पूर्ववद् ज्ञेयः, तत्पूर्वसत्कं चक्षुर्बलं हीयते, तद्धानौ च धर्मकरणं दुर्लभं ज्ञात्वा मा प्रमादं कुर्याः. ॥ २२ ॥

॥ मूलम् ॥–परिजूरइ ते सरीरयं । केसा पांडुरया हवंति ते ॥ से घाणबले य हायई । समयं गोयम मा पमायए ॥ २३ ॥ व्याख्या—तत्पूर्वसत्कमपि घ्राणबलं नासाबलं हीयते, तस्मान्नासाबले सति त्वया सुरभिदुरभिगंधग्रहणेन विषये रागद्वेषकरणवेलायां प्रमादो न विधेयः.

॥ मूलम् ॥–परिजूरइ ते सरीरयं। केसा पांडुरया हवंति ते ॥ से जिब्भबले य हायई ।

समयं गोयम मा पमायए ॥ २४ ॥ व्याख्या—तव जिह्वाबलं हीयते, यादृशं तरुणावस्थायां भवेत्तादृशं वृद्धावस्थायां न स्यात्. तस्माज्जिह्वाबले सति स्वाध्यायादिधर्मक्रियायां प्रमादं मा कुर्याः.

॥ मूलम् ॥—परिजूरइ ते सरीरयं । केसा पांडुरया हवंति ते ॥ से फासबले य हायई । समयं गोयम मा पमायए ॥ २५ ॥ व्याख्या—तत्स्पर्शबलं शरीरबलं हीयते, यादृशं यौवने शरीरबलं भवेत्तादृशं जरायां न स्यात्, तस्माद्धर्मानुष्ठानादौ प्रमादं मा कुर्याः. ॥ २५ ॥

॥ मूलम् ॥—परिजूरइ ते सरीरयं । केसा पांडुरया हवंति ते ॥ से सव्वबले य हायई । समयं गोयम मा पमायए ॥ २६ ॥ व्याख्या—तत्तरुणावस्थासत्कं सर्वबलं करचरणदंतादीनां बलं हीयते, तस्मात्समयमात्रमपि त्वं मा प्रमादीः? ॥ २६ ॥

॥ मूलम् ॥—अरइगंडं विसुइया । आयंका विविहा फुसंति ते ॥ विवडइ विद्धंसइ सरीरं । समयं गोयम मा पमायए ॥ २७ ॥ व्याख्या—हे गौतम! ते तव विविधा नानाप्रकारा आतंका रोगाः शरीरं स्पृशंति, ते के चातंकाः? अरतिश्चतुरशीतिविधिवातोद्भूतचित्तोद्वेगो वातप्रकोप इत्यर्थः, गंडं रुधिरप्रकोपोद्भूतस्फोटकः, विशूचिकाऽजीर्णोद्भूतवमनाध्मातविरे-



हाकादोपधरित
हवानुमउ नीरे

चादिसद्योतमृत्युकृतरुक्, इत्यादयो रोगा आतंका देहं पीमयंति, तै रोगैः पीमिते शरीरे सति धर्माराधनं डुःकरं, ते शरीरं रोगाजिभूतं सद्विपतति, विशेषेण बलापचयान्नश्यति, पुनः शरीरं ते नव विध्वस्यते. जीवमुक्तः सद्विशेषेणाधः पतति. अत्र सर्वत्र यद्यपि ते तवेत्युक्तं, गौतमे च केशपांकुरत्वादींडियाणां हानिश्च न संजवति, तथापि तन्निश्रयापरशिष्यादिवर्गे प्रतिबोधार्थमुक्तं, दोषाय न नवति, तथा च प्रमादो न विधेयः. ॥ २७ ॥

॥ मूलं ॥—वुछिंद सिणेहमप्पणो । कुमयं सारइयंव पाणियं ॥ से सवसिणेहवज्जिए । समयं गोयम मा पमायए ॥ २८ ॥ व्याख्या—हे गौतमात्मनः स्नेहं मयि विषये रागं व्युछिंधि? अपनय स्नेहं? बंधनं त्यजेत्यर्थः. किं किमिव? कुमुदं कमलं पानीयमिव, यथा कुमुदं पानीयं त्यक्त्वा पृथक्तिष्टति, तथा त्वमपि स्नेहं त्यक्त्वा पृथग्नवेत्यर्थः. कीदृशं पानीयं? शारदं. शरदि ऋतौ नवं शारदं. अत्र पानीयस्य शारदमिति विशेषणेन मनोरमत्वं स्नेहस्य दर्शितं. स्नेहो हि संसारिणो जीवस्य मनोहरो लगति, सेशब्दोऽथशब्दार्थः, अथ त्वं सर्वस्नेहवर्जितः सन् समयमात्रमपि प्रमादं मा कुर्याः. ॥ २८ ॥

॥ मूलं ॥—चिच्चा धणं च भारियं । पव्वइउहिसि अणगारियं ॥ मा वंतं पुणोविआ-इए । समयं गोयम मा पमायए ॥ २९ ॥ व्याख्या—हे गौतम! यदि त्वमनगारितां साधुत्वं प्रव्रजितोऽसि प्रकर्षेण प्राप्तोऽसि, किं कृत्वा? धनं च पुनर्भार्यां च त्यक्त्वा, तदा पुनरपि वांतं त्यक्तं मा पिब? त्यक्ते वस्तुनि पुनर्ग्रहणादरं मा कुर्याः? एतस्मिन् विषये समयमात्रमपि मा प्रमादीः? ॥ २९ ॥

॥ मूलं ॥—अवउज्झिय मित्तबंधवं । विउलं चेव धणोहसंचयं ॥ मा तं बीइयं गवेसए । समयं गोयम मा पमायए ॥ ३० ॥ व्याख्या—हे गौतम! मित्रबांधवं 'अवउज्झिय' अपोह्य त्यक्त्वा, च पुनर्धनौघसंचयं, धनस्यौघः समूहो धनौघस्तस्य संचयो राशीकरणं, तदप्यपोह्य त्यक्त्वा, 'बितीयमिति' द्वितीयवारं पुनरित्यर्थः, तन्मित्रबांधवधनौघसंचयादि मा गवेषयेत्, तस्मात्समयमात्रमपि मा प्रमादीः? ॥ ३० ॥

॥ मूलम् ॥—न हु जिणो अज्ज दिस्सइ । बहुमए दिस्सइ मग्गदेसिए ॥ संपइ नेयाउए पहे । समयं गोयम मा पमायए ॥ ३१ ॥ व्याख्या—पुनरपि गौतमादीन् दृढीकरोति श्री-

महावीरः—हे गौतम! संप्रतीदानीं मयि विद्यमाने प्रत्यक्षप्रमाणेन गृह्यमाणे सति नैयायिके मुक्तिरूपे पथि मार्गे मा प्रमादं भवान् कुर्यात्, यद्यपि तवेदानीं केवलज्ञानं नास्ति, तथाप्यहं विद्यमानोऽस्मीति सांप्रतं संशयाभावेन प्रमादस्त्याज्यः. अग्रे तु मद्विरहे एतादृशा भाविनो भव्यजीवा ये भविष्यंति ये इति विचिंत्येत्यनुमानप्रमाणं विधाय नैयायिके मार्गे साधुधर्मे मयि च स्थिरा भविष्यंति, तत्किमनुमानं कृत्वाऽप्रमादिनः स्थिराश्च भविष्यंति तदाह-मार्ग इव मुक्तिनगरंप्रति पंथा इव देशितः कथितो मार्गदेशितः, अयं जीवदयाधर्मो मुक्तिमार्ग इव कथितो दृश्यते, अद्येदानीं जिनो न दृश्यते, कथंभूतोऽयं मार्गदेशितः? बहुमतः, बहुभिर्बहूनां वा मतो बहुमतः, अथवा बहवो मता नया यस्मिन् स बहुमतः, नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतादिसप्तनयात्मकः, ज्ञानदर्शनचारित्राणि मोक्षमार्गः, अपरमते ह्येकांतवादित्वं, तस्मादयं जैनमतस्तु बहुमतः. एवंविधोऽयं मुक्तिमार्गोऽतींद्रियार्थदर्शिनं जिनं केवलिनं विना न स्यात्, तस्मादस्य बहुमतस्य मुक्तिमार्गस्य, एवं भव्या ज्ञास्यंति चेदयं मुक्तिमार्गोऽस्ति जिनो नास्ति, तदास्य मार्गस्य कश्चिदुक्ताप्यासीत्, न च

स कश्चिदुक्तापि सामान्यः, किंत्वस्य धर्मस्योपदेष्टा कश्चिदाप्तो जिन एव भवितुमर्हति, इति भविद्भिरहेऽप्यप्रमादिनो भविष्यंति, संप्रति मयि केवलिनि सत्यस्मिन्नैयायिके पथि सर्वथा प्रमादस्त्याज्य एवेति भावः. निश्चित आयो मुक्तिलक्षणो लाभो यस्मिन् स नैयायिको ज्ञानदर्शनचारित्ररूपरत्नत्रयात्मक इत्यर्थः. अथ पुनरप्यस्या गाथाया अयमर्थोऽप्यस्ति—हे गौतमाद्येदानीं भवान् जिनः केवली न दृश्यते, दृश्यत इति क्रियाबलाद्भवानिति पदमनुक्तमपि गृह्यते, परं बहुभिर्मतो मान्यो ज्ञातो वा बहुमतः, अर्थात्प्रसिद्धो मार्ग इव जिनत्वभवनमार्गो देशितो मया तवोपदिष्टः, स मार्गस्त्वया विलोक्यत एव, तस्मात् संप्रतीदानीं मयि जिने सति नैयायिके मार्गे मदुक्ते मार्गे समयमात्रमपि मा प्रमादीः? मयि विद्यमाने सति मयि विषये मोहाद्भवान् जिनो न वर्तते, पश्चात्त्वं जिनो भावी, तस्मादिदानीं मद्वचने प्रामाण्यं विधेयमित्यर्थः. ॥ ३१ ॥

॥ मूलम् ॥—अवसोहिय कंटयापहं । उत्तिन्नोसि पहं महालयं ॥ गछसि मग्गं विसोहियं । समयं गोयम मा पमायए ॥ ३२ ॥ व्याख्या—हे गौतम! त्वं महालयं पंथानमुत्ती-

र्णोऽसि, महान् सम्यग्ज्ञानदर्शनचारित्रलक्षण आलय आश्रयो यस्मिन् स महालयस्तं महालयं, एतादृशं पंथानं राजमार्गं प्राप्तोऽसि, किं कृत्वा? कंटकपथमवशोध्य, कंटकानां बौद्धचरकसांख्यादीनां पंथः कंटकपंथः, आकारः प्राकृतिकः. अथवा कंटैः कुतीर्थिकैराकीर्णो व्याप्तः कुत्सितपंथाः कंटकापथस्तं परिहृत्य सम्यग्मुक्तिमार्गं राजमार्गमिव प्राप्तोऽसि. हे गौतम! यदि विशेषेण शोधिते निरवद्ये मार्गे गच्छसि तदा समयमात्रमपि प्रमादं मा कुर्याः. ॥ ३२ ॥

॥ मूलम् ॥—अवले जह भारवहए । मग्गे विसमेवगाहिया ॥ पच्छा पच्छाणुतावए । समयं गोयम मा पमायए ॥ ३३ ॥ व्याख्या—हे गौतम! यथा कश्चिद्भारवाहको विषमं मार्गमवगाह्य विषमे मार्गे स्वर्णादिभारमुत्पाट्य समे मार्गेऽबलः स्यात्, स च भारवाहकः पश्चाद् गृहमागत्य पश्चादनुतप्यते पश्चात्तापपीडितः स्यात्, कोऽर्थः? यथा कश्चिद्भारवाहकः शिरसि कतिचिद्दिनानि यावद्विषमे मार्गे स्वर्णादिभारमुद्वहति, तदनंतरं कुत्रचित् पाषाणादिसंकुले मार्गे भारेणाक्रांतोऽहमिति ज्ञात्वा तं भारमुत्सृजति, स च भारवाहकः पश्चाद् गृहमागतः सन् निर्धनत्वेन पश्चादनुतप्यते, पश्चात्तापपीडितः स्यात्, तथा त्वमपि विषमं मार्गं तारुण्या-

दिवयोविशेषं महाव्रतभारमुद्वाह्य समे मार्गे यौवनोत्तारे कुत्रचित्परीषहादिना स्खलन् महाव्रतभारं त्यजन्नबलो भवन् पश्चादंत्ये वयस्यागतः संयमधनरहितो भूत्वा मा पश्चादनुतप्येः, मा पश्चात्तापपीडितो भूया इति विचिंत्य समयमात्रमपि मा प्रमादीः? ॥ ३३ ॥

॥ मूलम् ॥—तीणोसि अणवं महं । किं पुण चिठ्ठसि तीरमागओ ॥ अभितुर पारंगमित्तए । समयं गोयम मा पमायए ॥ ३४ ॥ व्याख्या—हे गौतम! त्वमर्णवं भवसमुद्रं तीर्ण एवासि, उल्लंघितप्रायोऽसि, किं पुनस्तीरमागतः सन् तिष्ठसि? औदासीन्यं भजसि? हे गौतम! भवार्णवस्य पारं गंतुमभित्वरस्व? पारगमने उत्तालो भवेत्यर्थः. तीरमत्र मुक्तिपदमुच्यते, तस्मात्समयमात्रमपि मा प्रमादीः? ॥ ३४ ॥

॥ मूलम् ॥—अकलेवरसेणमुस्सिया । सिद्धिं गोयम लोयं गच्छसि ॥ खेमं च सिवं अणुत्तरं । समयं गोयम मा पमायए ॥ ३५ ॥ व्याख्या—हे गौतम! त्वं सिद्धिं नामकं लोकं स्थानं गमिष्यसि प्राप्स्यसि, किं कृत्वा? अकलेवरश्रेणिमुत्सृज्य, न विद्यते कलेवरं शरीरं येषां तेऽकलेवराः सिद्धास्तेषां श्रेणिरुत्तरोत्तरप्रशस्तमनःपरिणतिपद्धतिः क्षपकश्रेणिस्तामकले-

वरश्रेणिमुत्सृज्य, उत्तरोत्तरसंयमस्थानप्राप्त्योन्नतामिव कृत्वा, कथंभूतं सिद्धिलोकं? क्षेमं परचक्राद्युपद्रवरहितं, पुनः कीदृशं? शिवं सकलदुरितोपशमं, पुनः कीदृशं? अनुत्तरं सर्वोत्कृष्टमित्यर्थः ॥ ३५ ॥

॥ मूलम् ॥—बुद्धे परिनिव्वुडे चरे । गामगए नगरे च संजए ॥ संतिमग्गं च बूहए। समयं गोयम मा पमायए ॥३६॥ व्याख्या—हे गौतम! परिनिर्वृतः शांतरससहितः सन् चर? संयमं सेवस्व? कीदृशः? ग्रामे गतो ग्रामगतः, च पुनर्नगरे गतः, चशब्दाद्वने वा स्थितः, पुनः कीदृशः? संयतः सम्यग्यत्नं कुर्वाणः, पुनः कीदृशः? बुद्धो ज्ञाततत्वः, च पुनर्हे गौतम! शांतिमार्गं त्वं बृंहयेः, भव्यजनानामुपदेशद्वारेण वृद्धिं वृद्धिं प्रापयेः, अत्र कार्ये समयमात्रमपि मा प्रमादीः? ॥ ३६ ॥

॥ मूलम् ॥—बुद्धस्स निसम्म भासियं । सुकहियमट्ठपओवसोहियं ॥ रोगं दोसं च छिंदिया । सिद्धिं गए गोयमुत्ति बेमि ॥ ३७ ॥ व्याख्या—गौतमः सिद्धिं मुक्तिस्थानं प्राप्तः, किं कृत्वा? बुद्धस्य श्रीमहावीरदेवस्य सुष्टु शोभनं भाषितं सुभाषितं सम्यगुपदेशं निशम्य श्रो-

त्रद्वारेण हृद्यवधार्य च, पुना रागद्वेषं च छित्वा, कीदृशं सुभाषितं? सुकथितं, सुतरामतिशयेन शोजनप्रकारेणोपमायोगेन कथितं, तथाहं तवाग्रे ब्रवीमीत्यर्थः. ॥ ३७ ॥ इति द्रुमपत्राख्यं दशममध्ययनं संपूर्ण. ॥ १० ॥

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यश्रीलक्ष्मीवल्लनगणिविरचितायां दशमाध्ययनस्यार्थः संपूर्णः ॥ श्रीरस्तु ॥



## ॥ अथैकादशमध्ययनं प्रारन्यते ॥

अथ दशमेऽध्ययने प्रमादपरिहारार्थमुपदेशो दत्तः, स च विवेकिन एव स्यात्. विवेकी च बहुश्रुतो नवेत्. अत एकादशमध्ययनं बहुश्रुताख्यं बहुश्रुतवर्णनमुच्यते.

॥ मूलम् ॥—संजोगा विप्पमुक्कस्स । अणगारस्स जिक्खुणो ॥ आयारं पाउकरिस्सामि । आणुपुव्विं सुणेह मे ॥ १ ॥ व्याख्या—हेजंबू! संयोगाद् विप्रमुक्तस्य अनगारस्य नि-

क्षोः आचारं साधुयोग्यक्रियां वहुश्रुतपूजारूपं वहुश्रुतस्वरूपज्ञानं आनुपूर्व्या अनुक्रमेण प्रादुःकरिष्यामि प्रकटीकरिष्यामि, मे मम कथयिष्यतस्त्वं शृणु? ॥ १ ॥ अथवा साधोराचारं आकारं वहुश्रुतस्य आकारं, वहुश्रुतः कीदृग् स्यात्? तत्प्रकटीकरिष्यामि ॥ १ ॥ प्रथमं तत्परिज्ञानार्थं अवहुश्रुतस्य लक्षणमाह—

॥ मूलम् ॥—जे यावि होइ निविज्जे । थद्धे लुद्धे अणिग्गहे ॥ अभिक्खणं उल्लवइ । अविणीए अवहुस्सुए ॥ २ ॥ व्याख्या—यश्च यो मनुष्यो निर्विद्यो भवति, अपिशब्दात् यः सविद्यो वा भवति, स चेत् स्तब्धोऽहंकारी भवति, पुनर्लुब्धो भवति, रसादिषु लोलुपो भवति, पुनर्योऽनिग्रह इंद्रियदमरहितो भवति, पुनर्योऽभीक्ष्णं वारंवारं उल्लपति, उत्प्रावल्येन यथातथा अविचारितं लपति, वाचालो भवति, स पुरुषोऽविनीतो विनयधर्मरहितोऽवहुश्रुत उच्यते. सविद्योऽपि अवहुश्रुतः स्यात् चेत् स विद्यत्वस्य फलं न प्राप्नुयात्, तद्विपरीतो वहुश्रुतः स्यात्. ॥ २ ॥ अवहुश्रुतस्य कारणमाह—

॥ मूलम् ॥—अह पंचहिं ठाणेहिं । जेहिं सिक्खा न लब्भइ ॥ थंभा कोहा पमाएणं ।

रोगेणालस्सेण य ॥ ३ ॥ व्याख्या—अथ श्रोतुः पुरुषस्य उत्कीर्णताकरणे यैः पंचभिः स्थानैः पंचभिः प्रकारैः शिक्षा ग्रहणासेवनारूपा न लभ्यते, न प्राप्यते, तानि पंच स्थानानि शृणु इत्यध्याहारः. स्तंभः, क्रोधः, प्रमादः, रोगः, आलस्यं च. स्तंभादहंकारात् शिष्यो योग्यो न भवति, तथा क्रोधादपि शिष्यो योग्यो न भवति, तथा पुनः प्रमादेन मदविषयकषायनिद्राविकथारूपेण उपदेशयोग्यो न स्यात्, तथा रोगेण वातपित्तश्लेष्मकुष्टशूलादिव्याधिना शिक्षाग्रहणार्हो न भवति. तथा आलस्येन अनुद्यमेन, चशब्देन एतैः सर्वप्रकारैः. अथवा एतेषां स्थानानां मध्ये एकेनापि स्थानेन शिक्षा न प्राप्यते, गुरूपदिष्टशास्त्रार्थाभ्यासं कर्तुं न शक्नोति, शिक्षालाभस्याभावात् अबहुश्रुतत्वं स्यात्. ॥ ३ ॥ अथाग्रेतनगाथायां बहुश्रुतहेतूनाह—

॥ मूलम् ॥—अह अट्ठहिं ठाणेहिं । सिक्खासीलत्ति वुच्चइ ॥ अहस्सिरे सया दंते । न य मम्ममुदाहरे ॥ ४ ॥ व्याख्या—अथानंतरमेतैरष्टभिः स्थानैरष्टभिः प्रकारैः शिक्षाशील इत्युच्यते, शिक्षां ग्रहणासेवनारूपशास्त्रं शीलं ते धारयतीति शिक्षाशीलः. तानि अष्टप्रका-



शिक्षाशीलस्या
॥३६२॥ स्थाना
वाचहै

राणीमानि—' अहस्सिरे ' अहसनशीलः, पुनः सदा दांतो जितेंद्रियः, पुनर्यो मर्म न उदाहरेत्, य एतादृशो भवति, स गुरूणां शिक्षायोग्यो भवति, गुणिनो ग्रहणाद्गुणानां ग्रहणं कर्तव्यं. ॥ ४ ॥

॥ मूलम् ॥—नासीले न विसीले । न सिया अइलोलुए ॥ अकोहणे सच्चरई। सिक्खासीलेत्ति वुच्चई ॥ ५ ॥ व्याख्या—पुनरेतादृशः शिक्षाशील उच्यते, एतादृशः कः? यः सर्वथा अशीलो न स्यात्, न विद्यते शीलं यस्य सः अशीलः शीलरहित इत्यर्थः. पुनर्यो विशीलो न स्यात्, विरुद्धशीलो विशीलः, अतीचारैः कलुषितव्रतो न स्यात्. यः पुनरतिलोलुपोऽतिरसास्वादलंपटो न स्यात्, अथवा अतिलोभसहितो न स्यात्, पुनर्योऽक्रोधनः क्रोधेन रहितः स्यात्, पुनर्यः सत्यरतिः स्यात्, स शिक्षाशीलः स्यादित्यर्थः. हास्यवर्जनं १ दांतत्वं २, परमर्मानुद्घाटनं ३, अशीलवर्जनं ४, विशीलवर्जनं ५, अतिलोलुपत्वनिषेधनं ६, क्रोधस्य अकरणं ७, सत्यभाषणं ८ च. एतैरष्टभिः प्रकारैर्बहुश्रुतत्वं स्यादिति भावः. ॥ ५ ॥ अथ अबहुश्रुतत्वबहुश्रुतत्वहेत्वोरविनीतविनीतयोः स्वरूपमाह—

॥ मूलम् ॥—अह चउद्दसठाणेहिं । वट्टमाणे उ संजए ॥ अविणीए वुच्चई सो उ । निव्वाणं च न गच्छइ ॥ ६ ॥ व्याख्या—अथ चतुर्दशसु स्थानेषु वर्तमानः संयतोऽविनीत उच्यते, स चाविनीतो निर्वाणं मोक्षं च न गच्छति, न प्राप्नोति. अथवा निर्वाणं निर्वाणकारणं ज्ञानदर्शनचारित्रलक्षणं रत्नत्रयं सुखकारणं न प्राप्नोति. अत्र ' चतुर्दशसु स्थानेषु ' इति सप्तम्यर्थे प्राकृतत्वात्तृतीयाबहुवचनं. ॥६॥ अथ तानि चतुर्दशस्थानानि तिसृभिर्गाथाभिराह—

॥ मूलम् ॥—अभिक्खणं कोही हवइ । पबंधं च पकुव्वइ ॥ मित्तिज्जमाणो वमइ । सुयं लध्धूण मज्जइ ॥ ७ ॥ अवि पावपरिक्खेवी । अवि मित्तेसु कुप्पइ ॥ सुप्पियस्सावि मित्तस्स । रहे भासई पावगं ॥ ८ ॥ पइन्नवाई दुहिले । थद्धे लुद्धे अणिग्गहे ॥ असंविभागी अवियत्ते । अविणीइत्ति वुच्चई ॥ ९ ॥ व्याख्या—अथ तानि चतुर्दश स्थानानि विभजति. य ईदृशो भवति स च पुमान् अविनीत इत्युच्यते. ईदृशः कीदृशः? अभीक्ष्णं वारंवारं क्रोधी भवति, क्रोधं करोति. च पुनः प्रबंधं क्रोधस्य वृद्धिं, कुपितोऽपि कोमलवचनैरपि क्रोधस्य अत्यजनं, क्रोधस्य स्थिरीभावं प्रकुरुते. मित्रीयमाणोऽपि, ' मित्र ममास्तु अयं ' इति विचिंत्यमा-



११=रहतो नी= =कहवे= =त्यागनहीकरे=

नोऽपि पश्चाद्वमति त्यजति. कोऽर्थः? पूर्वं हि मित्रभावं कृत्वा पश्चात्त्वरितं मित्रत्वं त्रोटयति. ननु साधवो हि कुत्रापि मित्रत्वं स्नेहभावं केनापि सह न कुर्युः, संयोगाद्विप्रमुक्ता भवेयुः, तर्हि कथं ' मित्तिज्जमाणो वमइ ' इत्युक्तं? अत्र हि षट्जीवनिकायेषु व्रतग्रहणसमये मैत्रीं विधाय शिथिलाचारित्वेन तां मैत्रीं त्यजेयुरित्यर्थः. अथवा केनापि धर्मशिक्षाशास्त्रार्थदानादिना उपकारः कृतः स च हितकारत्वान्मित्रप्रायस्तत्र उपकारलोपत्वेन कृतघ्नत्वेन मित्रत्वं वमति. अविनीतस्यैतल्लक्षणमित्यर्थः. पुनर्यः श्रुतं लब्ध्वा माद्यति, ज्ञानाभ्यासादहंकारं करोति विद्यामदोन्मत्त इत्यर्थः. ॥ ७ ॥

अपिशब्दः संभावनायां, यः पापपरिक्षेपी, अपि संभाव्यते पापैः समितिगुप्तिस्खलनैः परिक्षिपति तिरस्करोतीत्येवंशीलः पापपरिक्षेपी, समितिगुप्तिविराधकंप्रति तिरस्करोति. कोऽर्थः? कदाचित् कश्चित् समितिगुप्तिषु अज्ञानितया स्खलति, तदा तंप्रति धिक्करोति, ठिङ्ग दृष्टान्यं निंदतीत्यर्थः. तथा मित्रेषु अपि कुप्यति, मित्रेभ्योऽपि शिक्षादातृभ्यः संघेभ्यः क्रुध्यति, स्वयं क्रोधं करोति, तान् वा क्रोधयति. पुनः सुतरामतिशयेन प्रियस्य मित्रस्य हित-

वांछकस्य गुर्वादेरपि रहसि एकांते पापकं पापमेव पापकं अवर्णवादं भाषते, कोऽर्थः? अग्रतः प्रियं वक्ति, पृष्टतः दोषं वक्तीत्यर्थः. ॥ ८ ॥ पुनः प्रकीर्णवादी, प्रकीर्णं असंबद्धं वदति इति प्रकीर्णवादी, अथवा प्रतिज्ञया च इदं इत्थमेव इत्यादिनिश्चयभाषणशीलः. पुनर्द्रुहिलो द्रोग्धा द्रोहकरणशील इत्यर्थः. पुनः स्तब्धोऽहंकारी, अहं तपस्वी इत्यादिजल्पकः. पुनर्लुब्धो रसयुक्ताहारादौ लोभी. पुनरनिग्रहोऽवशीकृतेंद्रियः. पुनरसंविभागी, आनीताहारं अन्येभ्यः साधुभ्यः प्रार्थयतीत्येवंशीलः संविभागी, न संविभागी असंविभागी, आहारेण स्वयमेवोदरं बिभर्तीत्यर्थः, अन्यस्मै न ददाति. 'अवियत्ते इति' अप्रीतिकरः, दर्शनेन वचनेन अप्रीतिमुत्पादयति, एतैर्लक्षणैरविनीत उच्यते. अथ चतुर्दशस्थानानां नामानि—क्रोधः १, क्रोधस्थिरीकरणं २, मित्रत्वस्य वमनं त्यजनं ३, विद्यामदः ४, परछिद्रान्वेषणं ५, मित्राय क्रोधस्योत्पादनं ६, प्रियमित्रस्यैकांते दुष्टभाषणं, मुखे मिष्टभाषणं ७, अविचार्यभाषणं ८, द्रोहकारित्वं ९, अहंकारित्वं १०, लोभित्वं ११, अजितेंद्रियत्वं १२, असंविभागित्वं १३, अप्रीतिकरत्वं १४, चतुर्दश स्थानानि चतुर्दश हेतूनि कारणानि अविनीतत्वोत्पादकानि ज्ञेयानि.

॥ मूलम् ॥—अह पनरसहिं गाणेहिं । सुविणीइत्ति वुच्चई ॥ नीयावत्ती अचवले । अमाई अकुतूहले ॥ १० ॥ व्याख्या—अथ पंचदशभिः स्थानैः सुविनीत इत्युच्यते. तानि पंचदश स्थानानि इमानि य एतैः पंचदशभिर्लक्षणैर्युक्तो भवति स विनीत इत्यर्थः. प्रथमं यो नीचावर्ती, नीचं अनुच्चं, गुरोः शय्यासनात् अनुच्चं, तत्र वर्तितुं स्थातुं शीलं यस्य स नीचावर्ती, गुरोः शय्यातः, गुरोरासनाद्वा नीचे शय्यासने शेते तिष्ठति वा इत्यर्थः, पुनर्योऽचपलः, न चपलोऽचपलः, अचपलत्वं चतुर्धा भवति, गत्या अचपलः १, स्थित्या अचपलः २, भाषया अचपलः ३, भावेन अचपलः ४. गत्या अचपलः शीघ्रचारी न भवति १, स्थित्या अचपलस्तिष्ठन्नपि शरीरहस्तपादादिकं अचालयन् स्थिरस्तिष्ठति २, भाषया अचपलोऽसत्यादिभाषी न स्यात् ३, भावेन अचपलः सूत्रे अर्थे अनागते असमाप्ते सत्येव अग्रेतनं न गृह्णाति ४, इति अचपलस्यार्थः २. पुनर्यः अमायी, मायास्यास्तीति मायी, शुभमिष्टान्नाहारादौ आचार्यादीनामवंचकः ३. पुनर्योऽकुतूहलः, न विद्यते कुतूहलं यस्य स अकुतूहलः, कुहकइंद्रजालभुगलविद्यानाटकादीनां न विलोकक इत्यर्थः ४. ॥ १० ॥

॥ मूलम् ॥—अप्पं चाहिक्खिवई । पबंधं च न कुवई ॥ मित्तिज्जमाणो नयइ। सुयं ल-
ध्धुं न मज्जइ ॥ ११ ॥ व्याख्या–पुनर्योऽल्पं अधिक्षिपति, अल्पशब्दोऽत्र अनावार्थः, कमपि
न अधिक्षिपति, किमपि कठिनैर्वचनैर्न निर्नर्त्सयतीत्यर्थः ५. च पुनः प्रबंधं न करोति, प्र-
चुरकालं क्रोधं न रक्षति, दीर्घरोषी न स्यादित्यर्थः ६. मित्रीयमाणं नजते मित्रत्वकर्तारं से-
वते, कोऽर्थः? यः कश्चित् स्वस्मै विद्यादानाद्युपकारं कुर्यात्तस्मै स्वयमपि प्रत्युपकारं करोति,
कृतघ्नो न स्यादित्यर्थः ७. पुनः श्रुतं लब्ध्वा न माद्यति, मदं न करोति ८. इत्यष्टमस्थानं. ११.

॥ मूलम् ॥—न य पावपरिक्खेवी । न य मित्तेसु कुप्पई ॥ अप्पियस्सावि मित्तस्स ।
रहे कल्लाण नासई ॥ १२ ॥ व्याख्या–च पुनः पापपरिक्षेपी न नवति, पापेन परिक्षिपति
तिरस्करोतीत्येवंशीलः पापपरिक्षेपी, समितिगुप्त्यादिषु स्वयं स्खलनं कृत्वा आचार्यादिनिः
शिक्ष्यमाणः सन् आचार्यादीनामेव मर्मोद्घाटको न नवति ए. न च मित्रेन्यः कुप्यति, अ-
पराधे सत्यपि मित्रोपरि क्रोधं न करोति १०. पुनर्यो मित्रस्य, मम मित्रमित्यंगीकृतस्य तस्य
अप्रियस्य च, अपराधे सत्यपि पूर्वकृतं सुकृतमनुस्मरन् रहसि अपि कल्याणमेव नव्यमेव

भाषते, न च तस्य दूषणं वदतीत्यर्थः ११. ॥ १२ ॥

॥ मूलम् ॥—कलहडमरं वज्जेइ । बुद्धे य अभिजाइगे ॥ हिरिमं पडिसंलीणे । सुविणीइत्ति वुच्चइ ॥ १३ ॥ व्याख्या—पुनर्यः कलहडमरं वर्जयति, तत्र कलहं वाक्ययुद्धं त्यजति, डमरं चपेटामुष्टिलत्तादिभिर्युध्धं, तयोरुभयोर्वर्जको यो भवति १२. पुनर्बुद्धिमान् बुद्धोऽवसरज्ञो भवति, पुनर्योऽभिजातिगो भवति, अभिजातिं कुलीनतां गच्छति प्राप्नोतीति अभिजातिगः, गुरुकुलवाससेवक इत्यर्थः. १३. पुनर्यो ह्रीमान्, ह्री विद्यते यस्य स ह्रीमान्, कलुषाध्यवसाये अकार्यकरणे त्रपायुक्त इत्यर्थः. १४. प्रतिसंलीनः, गुरुसकाशेऽन्यत्र वा यतस्ततो न चेष्टते, चेष्टां न करोति स प्रतिसंलीन उच्यते १५. य एतादृशो भवति स विनीत उच्यते. अथ पूर्वोक्तपंचदशस्थानानां सुविनीतत्वकारणानां नामान्याह—गुरोरासनाद् द्रव्यभावतो नीचासनोपसेवनं १, अचपलत्वं २, अमायित्वं ३, अकुतूहलत्वं ४, कस्यापि अनिर्भर्त्सनं ५, अदीर्घरोषत्वं ६, मित्रस्योपकारकरणं ७, विद्यामदस्य अकरणं ८, आचार्यादीनां मर्मस्यानुद्घाटनं ९, मित्राय क्रोधस्य अनुत्पादनं १०, अपराधे सत्यपि मिलस्य अभि-

त्रस्य वा परपृष्टे दूषणस्य अन्नाषणं ११, कलहडमरवर्जनं १२, गुरुकुलवाससेवनं १३, लज्जावत्त्वं १४, प्रतिसंलीनत्वं १५, एतानि पंचदश स्थानानि सुविनीतस्य ज्ञेयानि. ॥ १३ ॥ अथ सुविनीतः कीदृक् स्यादित्याह—

॥ मूलम् ॥—वसे गुरुकुले निच्चं । जोगवं उवहाणवं ॥ पियंकरे पियंवाई । से सिक्खं लध्धुमरिहई ॥ १४ ॥ व्याख्या—स मुनिः शिक्षां लब्धुमर्हति, शिक्षायै योग्यो नवति. स इति कः? यो गुरुकुले नित्यं वसेत्, गुरोः पूज्यस्य विद्यादीक्षादायकस्य वा, कुले गछे संघाटके वा नित्यं यावज्जीवं तिष्ठेत्, पुनर्यो मुनिर्योगवान्, योगो धर्मव्यापारः, स विद्यते यस्य स योगवान्, अथवा योगोऽष्टांगलक्षणस्तद्वानित्यर्थः. पुनर्यः साधुरुपधानवान्, उपधानमंगोपांगादीनां सिद्धांतानां पठनाराधनार्थमाचाम्लोपवासनिर्विकृत्यादिलक्षणं तपोविशेषः, स विद्यते यस्य स उपधानवान्, सिद्धांताराधनतपोयुक्त इत्यर्थः. पुनर्यः साधुः प्रियंकरः, आचार्यादीनां हितकारकः, पुनर्यः प्रियवादी, प्रियो वादोऽस्यास्तीति प्रियवादी प्रियभाषी, एतैर्लक्षणैर्युक्तो मुनिः शिक्षां प्राप्तुं योग्यो नवति. ॥ १४ ॥ अथ बहुश्रुतप्रतिपत्तिरूपमाचारं

स्तवद्वारेणाह—

॥ मूलम् ॥—जहा–संखंमि पयं निहितं । दुहाओवि विरायई ॥ एवं बहुस्सुए भिक्खू । धम्मो कित्ती तहा सुयं ॥ १५ ॥ व्याख्या—यथा शंखे निहितं पयो दुग्धं द्विधापि विराजते, उभयप्रकारेण शोभते, पयो धवलं, अथ च पुनः शंखेऽपि धवलेऽत्यंतधवलत्वेन वर्णो विराजते, एवममुना प्रकारेण शंखमध्यदुग्धदृष्टांतेन बहुश्रुते भिक्षौ धर्मो यतिधर्मस्तथा कीर्तिः श्रुतं च, एतत्पदार्थत्रयं स्वत एव भासते, बहु प्रचुरं श्रुतं श्रुतज्ञानं यस्य स बहुश्रुतः, तथा एवं गुरुकुलवासिनि साधौ बहुश्रुते आश्रयविशेषादत्यंतं शोभते. बहुश्रुते स्थितो धर्मः कीर्तिर्यशश्च मालिन्यं न प्राप्नोति. अत्र कीर्तिर्गुणश्लाघा, यशः सर्वत्र प्रसिद्धत्वं, इत्यनयोः कीर्तियशसोर्लक्षणं ज्ञेयं. ॥ १५ ॥

॥ मूलम् ॥—जहा से कंबोयाणं । आइन्नो कंथये सिया ॥ आसे जवेण पवरे । एवं हवइ बहुस्सुए ॥ १६ ॥ व्याख्या—बहुश्रुतः साधुरेवं भवति, एवं विराजते. एवमिति कथं? यथा कंबोजानां कांबोजदेशोद्भवानामश्वानां मध्ये य आकीर्णः शीलादिगुणैर्व्याप्तो विशुद्ध-

मातृपितृयोनिजत्वेन सम्यगाचारः, स्वामिभक्तादिशालिहोत्रशास्त्रोक्तगुणप्रयुक्तः. कीदृश आकीर्णः? कंथकः, लघुपाषाणभृतकुतपनिपतनसंजातशब्दान्न त्रस्यति, अथवा शस्त्रादीनां प्रहाराद्रणे निर्भीकः कंथक उच्यते. पुनः कीदृशः सः? जवेन वेगेन सम्यग्गत्या प्रवरः प्रकर्षेण वरः श्रेष्ठः. यथा हि सर्वेषु कांबोजदेशोद्भवेषु अश्वेषु आकीर्णः कंथकोऽश्वो गमनेन अत्यंतं प्रधानो भवेत्, राजादीनां वल्लभो भवेत्, तथा बहुश्रुतोऽपि सर्वेषां ज्ञानक्रियावतां मुनीनां मध्ये परवादिनां वादैरत्रस्तः सम्यगाचारविहारेण विराजमानः स्यात्, सर्वेषां वल्लभो भवेदित्यर्थः. ॥ १६ ॥

॥ मूलम् ॥—जहाइन्नसमारूढे । सूरे दढपरक्कमे ॥ उभओ नंदिघोसेणं । एवं हवइ बहुस्सुए ॥ १७ ॥ व्याख्या—पुनर्यथा शूर आइन्नसमारूढः, आकीर्णो जातिविशुद्धघोटकस्तत्र समारूढ आकीर्णसमारूढः, दृढपराक्रमः स्थिरपराक्रमः स्थिरोत्साहः, केनाप्यन्यसुभटेन न अभिभूयते इत्यध्याहारः, न च तंप्रत्याश्रितोऽपि भृत्यादिवर्गः केनाप्यभिभूयते. कथंभूतः स शूरः? उभयतो वामदक्षिणतः, अथवा पृष्ठतोऽग्रतो वा नंदीघोषेणोपलक्षितः, नंदी द्वा-

दशतूर्याणि, तेषां द्वादशतूर्याणां घोषो नांदीघोषस्तेनोपलक्षितः. अथवा त्वं चिरं जीया इत्यादिबंदिजनोच्चारिताशीर्वचनं, तस्य घोषः शब्दस्तेनोपलक्षितः. यथैतादृशः शूरः सर्वत्र विजयी स्यात्, एवं बहुश्रुतोऽपि साधुर्जिनप्रवचनाश्वारूढः, दृढपराक्रमो दृप्यत्परवादिदर्शनादत्रस्तः, परवादिजये समर्थः, उन्नयतो दिनरजन्योः स्वाध्यायरूपेण नांदीघोषेणोपलक्षितः, अथवा उन्नयतः पार्श्वद्वयोः शिष्याध्ययनरूपेण नांदीघोषेणोपलक्षितः, अथवा प्रवचनोद्दीपकत्वेन स्वतीर्थ्यैश्चिरं जीवत्वसावित्याद्याशीर्वचनरूपेण नांदीघोषेणोपलक्षितः, परतीर्थ्यैः परानवितुमशक्यो भवेत्, तदाश्रितोऽपि संघः केनापि पराभवितुं न शक्यते. ॥ १७ ॥

॥ मूलम् ॥—जहा करेणुपरिकिन्ने । कुंजरे सट्ठिहायणे ॥ बलवंते अप्पडिहए । एवं हवइ बहुस्सुए ॥ १८ ॥ व्याख्या—यथा षष्टिहायनः षष्टिवार्षिकः कुंजरो बलवानप्रतिहतः स्यात्, प्रतिद्वंद्विगजैः प्रतिहंतुं शक्यो न स्यात्, तथा बहुश्रुतोऽपि. षष्टिवर्षाणि यावद्गजो वर्धमानबलः स्यात्, कथंभूतो गजः? करेणुभिर्हस्तिनीभिः परिकीर्णः परिवृतः, षष्टिहायनतया कुंजरः स्थिरमतिश्च स्यात्. एवं बहुश्रुतोऽपि उत्पातिक्यादिचतसृभिर्बुद्धिभिर्विद्याभिर्वा

सहितो वर्धमानशास्त्रार्थबलः केनापि प्रतिवादिना जेतुं न शक्यते. ॥ १८ ॥

॥ मूलम् ॥—जहा से तिरकासिंगे । जायखंधे विरायइ ॥ वसहे जूहाहिवई । एवं हवइ बहुस्सुए ॥ १९ ॥ व्याख्या—यथा स इति वक्ष्यमाणो वृषभो यूथस्य गोवर्गस्य अधिपो विराजते, एवं बहुश्रुतोऽपि विशेषेण राजते. कथंभूतो वृषभः? तीक्ष्णशृंगः, पुनः कथंभूतः? जातस्कंध उत्पन्नधूर्धरणभागः, एतादृशो बलीवर्द इव बहुश्रुतोऽपि शोभते. कथंभूतो बहुश्रुतः? परपक्षभेदकत्वेन तीक्ष्णे स्वमतपरमतज्ञानरूपे शास्त्रे एव शृंगे यस्य स तीक्ष्णशृंगः, पुनः कथंभृतो बहुश्रुतः? जात उत्पन्नो गणस्य कार्यरूपधुरंप्रति धौरेयिकत्वेन पृष्टः स्कंधो यस्य स जातस्कंधः. पुनः कीदृशो बहुश्रुतः? यूथाधिपतिः, यूथस्य चतुर्विधसंघस्य अधिपतिर्यूथाधिपतिः. एवं बहुश्रुतोऽपि यूथाधिपवृषभवत् आचार्यादिपदवीं प्राप्तः सन् विराजते.

॥ मूलम् ॥—जहा से तिरकदाढे । उदग्गे डुप्पहंसए ॥ सीहे मियाण पवरे । एवं हवइ बहुस्सुए ॥ २० ॥ व्याख्या—यथा सिंहो मृगाणामरण्यजीवानां मध्ये प्रवरः प्रधानः स्यात्, एवं बहुश्रुतोऽपि सिंह इव अन्यतीर्थीयमृगाणां मध्ये प्रकर्षेण श्रेष्ठः स्यात्. कथंभूतः

सिंहः? तीक्ष्णदंष्ट्रः. पुनः कीदृशः सिंहः? उदग्र उत्कटः, पुनः कथंभूतः? दुष्प्रहंसको दुरभिभवः, अन्यैर्जीवैर्दुर्धृष्यो दुःसह इत्यर्थः. बहुश्रुतोऽपि सिंह इव, कथंभूतो बहुश्रुतः? तीक्ष्णदंष्ट्रः, तीक्ष्णाः सप्तनयविचाररूपा दंष्ट्रा यस्य स तीक्ष्णदंष्ट्रः. अत एव उत्कटो दुर्जयः, पुनः कथंभूतो बहुश्रुतः? दुःप्रहंस्यकः, अन्यतीर्थ्यैर्दुर्धृष्यः, क्षिपितुमशक्य इत्यर्थः. ॥ २० ॥

॥ मूलम् ॥—जहा से वासुदेवे । संखचक्कगयाधरे ॥ अप्पडिहयबले जोहे । एवं हवइ बहुस्सुए ॥ २१ ॥ व्याख्या—यथा स प्रसिद्धो वासुदेवोऽप्रतिहतबलः स्यात्, अप्रतिहतं केनाप्यनिवारितं बलं यस्य सोऽप्रतिहतबलः, एवं बहुश्रुतोऽपि केनापि परमतिना अनिवारितबलः स्यात्. कीदृशो वासुदेवः? शंखचक्रगदाधरः. वासुदेवस्य हि रत्नसप्तकं स्यात्, यतः—चक्कं धणुहं खग्गो । मणी गया होइ तह य वणमाला ॥ संखो सत्त इमाइं । रयणाइं वासुदेवस्स ॥ १ ॥ अत्र त्रयाणामेव ग्रहणं बहुश्रुतेन साम्यार्थं, सप्तानां मध्ये त्रयाणामेव प्राधान्यमप्यस्ति. पुनः कीदृशो वासुदेवः? योधः, युध्यति शत्रून्प्रति संहरतीति योधः, यदुक्तं—युद्धे सूरा वासुदेवा । खमासूरा अरिहंता ॥ तपसूरा अणगारा । जोगसूरा चक्कव-

ट्टी य ॥१॥ वासुदेवो हि स्वशरीरेण युद्धं कृत्वा शत्रून् जयतीत्यर्थः. एवं बहुश्रुतोऽपि वासुदेव-
वत्. कीदृशो बहुश्रुतः? शंखचक्रगदातुल्यानि रत्नत्रयाणि ज्ञानदर्शनचारित्ररूपाणि धरतीति
शंखचक्रगदाधरः. पुनः कीदृशो बहुश्रुतः? योधोंतरंगशत्रुघातकः. अत्र बहुश्रुतस्य वासुदे-
वोपमानं. ॥ २१ ॥

॥ मूलम् ॥—जहा से चाउरंते । चक्कवट्टी महड्ढिया ॥ चउद्दसरयणाहिवई । एवं ह-
वइ बहुस्सुए ॥ २२ ॥ व्याख्या—यथा स इति प्रसिद्धश्चक्रवर्ती विराजते इत्यध्याहारः, त-
था बहुश्रुतोऽपि विराजते. कीदृशश्चक्रवर्ती? चातुरंतः, चतुर्भिर्हयगजरथपदातिभिः सेनांगै-
रंतोऽरीणां विनाशो यस्य स चतुरंतः, चतुरंत एव चातुरंतः, आसमुद्रं आहिमाचलं विवि-
धविद्याधरवृंदगीतकीर्तितया एकछत्रषट्खंडराज्यपालकश्चातुरंतः. पुनः कीदृशश्चक्रवर्ती? म-
हर्द्धिकः, महती ऋद्धिर्यस्य स महर्द्धिकः, चतुःषष्टिसहस्रांतःपुरनारीणां शय्यासु वैक्रियशक्तिं
विधाय रममाणः, वैक्रियादिऋद्धिसहित इत्यर्थः, दिव्यानुकारिलक्ष्मीयुक्तो वा. पुनः कीदृश-
श्चक्रवर्ती? चतुर्दशरत्नाधिपतिः, चतुर्दशरत्नान्यमूनि—सेनापति १, गृहपति २, पुरोहित ३,

गज ४, हय ५, सूत्रधार ६, स्त्री ७, चक्र ८, छत्र ९, चर्म १०, मणि ११, काकिनी १२, ख-
ड्ग १३, दंड १४. एतेषां रत्नानां स्वामी. एवं बहुश्रुतोऽपि. कीदृशो बहुश्रुतः? चतुर्निदानशी-
लतपोभावलक्षणैर्धर्मैरंतश्चतसृणां गतीनां यस्य स चतुरंतः, चतुरंत एव चातुरंतः. चतुर्दश-
रत्नाधिपतिश्चतुर्दशपूर्वरूपाणि रत्नानि, तेषामधिप इत्यर्थः. पुनः कीदृशो बहुश्रुतः? महर्द्धि-
कः, महत्य ऋद्धय आमर्षौषधिविप्रौषधिखेलौषध्यादयो यस्य स महर्द्धिको लब्धिऋद्धिसहित
इत्यर्थः. अथवा महती ऋद्धिर्ज्ञानसंपत्तिर्यस्य स महर्द्धिकः. ॥ २२ ॥

॥ मूलम् ॥—जहा से सहस्सक्खे । वज्जपाणी पुरंदरे ॥ सक्के देवाहिवई । एवं हवइ
बहुस्सुए ॥ २३ ॥ व्याख्या—यथा स इति प्रसिद्धः शक्र इंद्रो विराजते, तथा बहुश्रुतोऽपि
विराजते. कीदृशः शक्रः? सहस्राक्षः सहस्रमक्षीणि यस्य स सहस्राक्षः सहस्रनेत्रः. पुनः
कीदृशः? वज्रपाणिर्वज्रशस्त्रहस्तः. पुनः कीदृशः? पुरंदरः, पुराणि दैत्यनगराणि दारयति वि-
ध्वंसयतीति पुरंदरः, दैत्यनगरविध्वंसकः. पुनः कीदृशः? देवाधिपतिः, देवेषु अधिपतिर्देवा-
धिपतिः, देवेषु अधिककांतिधारी. अथ कीदृशो बहुश्रुतशक्रः? सहस्रमक्षीणि श्रुतज्ञानानि

यस्य स सहस्राक्षः, सहस्रसंख्यैर्नेत्रैरिव श्रुतज्ञानभेदैः पश्यतीत्यर्थः. पुनः कीदृशो बहुश्रुत-
शक्रः? वज्रपाणिः, वज्रं वज्राकारं पाणौ यस्य स वज्रपाणिः, विद्यावतः पूज्यस्य हस्तमध्ये
वज्रलक्षणस्य संभवात्. पुनः कथंभूतो बहुश्रुतशक्रः? देवताधिपतिः, देवेषु सर्वसाधुषु अ-
धिपतिरधिकः, सर्वसाधूनधिकं यथास्यात्तथा पाति रक्षतीति देवाधिपतिः. 'रिसी हि देवा
य सम्मं विविता ' इत्युक्तेः. देवा अधिकं पांति रक्षंति सेवां कुर्वंत्युपद्रवेभ्यो रक्षंति हरिके-
शबलसाधुवत् वैयावृत्यं कुर्वंतीति देवाधिपतिः, देवैरपि पूज्यते इत्यर्थः. ॥ २३ ॥

॥ मूलम् ॥—जहा से तिमिरविद्धंसे । उत्तिठंते दिवायरे ॥ जलंते इव तेएणं । एवं
हवइ बहुस्सुए ॥ २४ ॥ व्याख्या—यथा स इति प्रसिद्ध उत्तिष्टन् उद्गच्छन् दिवाकरः सूर्य-
स्तेजसा ज्वलन् ज्वालाभिरुत्सर्पन् इव विराजते, तथा बहुश्रुतोऽपि राजते. कथंभूतः सूर्यः?
तिमिरमंधकारं विध्वंसते इत्येवं शीलस्तिमिरविध्वंसी, अथवा तिमिरस्य विध्वंसो यस्मात् स
तिमिरविध्वंसः. अथ बहुश्रुत एव दिवाकरः कीदृग्स्यात्? कथंभूतो बहुश्रुतसूर्यः? तिमिरं
मिथ्यात्वांधकारं विध्वंसयतीति तिमिरविध्वंसः. किं कुर्वन्? उत्तिष्टन् क्रियानुष्ठानादौ अप्रमा-

दीनवन्. पुनः कीदृशो वहुश्रुतदिवाकरः? किं कुर्वन्निव तेजसा द्वादशविधतपस्तेजसा माहा-
त्म्येन वा ज्वलन् देदीप्यमानः, परवादिभिर्द्रष्टुमप्यशक्य इत्यर्थः. ॥ २४ ॥

॥ मूलम् ॥—जहा से उडुवई चंदे । नखत्तपरिवारिए ॥ पडिपुन्ने पुणमासीए । एवं
हवइ वहुस्सुए ॥ २५ ॥ व्याख्या—यथा पूर्णमास्यां राकायां उडुपतिश्चंद्रो भवति, जनाह्ला-
दको भवति, चंदति आह्लादयतीति चंद्रः, अन्वर्थनामा भवति. तथा वहुश्रुतोऽपि पूर्णमस्यां
सम्यक्त्वप्राप्तौ प्रतिपूर्णः, उडुपतिरिव चंद्रो भवति, भव्यजनाह्लादको भवति. कीदृश उडु-
पतिः? नक्षत्रग्रहतारकादिभिः परिवृतः, परिवारो जातोऽस्येति परिवारित इति वा. पुनः
कीदृश उडुपतिः? प्रतिपूर्णः षोडशकलाभिर्युक्तः पूर्णो मासः संसारो यस्याः सा पूर्णमासी.
सम्यक्त्वलब्धिरूपायां पूर्णमास्यां वहुश्रुतरूप उडुपतिर्भव्यजनाह्लादको भवतीति भावः. पुनः
कीदृशो वहुश्रुतोडुपतिः? साधुभिर्नक्षत्रैरिव परिवारितः सहितः. पुनः कीदृशो वहुश्रुतोडुप-
तिः? प्रतिपूर्णः सर्वधर्मकलाभिः संपूर्ण इत्यर्थः. ॥ २५ ॥

॥ मूलम् ॥—जहा से सामाइयाणं । कुट्टागारे सुरक्खिए ॥ नाणधम्मपडिपुण्णे । एवं

हवइ बहुस्सुए ॥ २६ ॥ व्याख्या—यथा स इति प्रसिद्धः सामाजिकानां महागृहस्थानां कोष्टागारो विराजते, तथा बहुश्रुतोऽपि विराजते. समाजो जनसमूहस्तमर्हंतीति सामाजिकाः, तेषां सामाजिकानां कौटुंबिकानां. कथंभूतः कोष्टागारः? सुरक्षितः, सुतरामतिशयेन चौरमूषकादिभ्य उपद्रवेभ्यो रक्षितः सुरक्षितः. पुनः कीदृशः कोष्टागारः? नानाधान्यप्रतिपूर्णः, चतुर्विंशतिधान्यैः प्रतिपूर्णो भृतः. अथ बहुश्रुतः कीदृशः? सुरक्षितः, सुतरामतिशयेन गच्छसंघाटस्थमुनिभिर्यत्नेन रक्षितः. पुनर्नानाप्रकारैरंगोपांगादिरूपैर्धान्यैः प्रतिपूर्ण इत्यर्थः. ॥ २६ ॥

॥ मूलम् ॥—जहा से दुमाण पवरा। जंबूनाम सुदंसणा ॥ अणाढियस्स देवस्स। एवं भवइ बहुस्सुए ॥ २७ ॥ व्याख्या—यथा द्रुमाणां मध्ये जंबूनामा सुदर्शना इत्यपरनामा द्रुमो वृक्षः प्रवरः प्रधानः शोभते, तथा बहुश्रुतोऽपि सर्वमुनीनां मध्ये प्रधानो विराजते. स च जंबूसुदर्शनानामा वृक्षोऽनाढिकस्य जंबूद्वीपाधिष्टातृदेवस्य वर्तते. तस्य हि जंबूद्वीपाधिपाश्रितत्वेन सर्ववृक्षेभ्यः प्रधानत्वं ज्ञेयमित्यर्थः. बहुश्रुतोऽपि मिष्टफलसदृशसिद्धांतार्थफलप्रदः,

देवादिभिरभिगम्यः. ॥ २७ ॥

॥ मूलम् ॥—जहा सा नईण पवरा । सलिला सागरंगमा ॥ सीया नीलवंतप्पवाहा । एवं हवइ बहुस्सुए ॥ २८ ॥ व्याख्या—यथा सा इति प्रसिद्धा नदीनां मध्ये सीतानाम्नी नदी प्रवरा प्रधाना शोभते, तथा बहुश्रुतोऽपि शोभते. कथंभूता सीता नदी? सलिला. सलिलं पानीयमस्या अस्तीति सलिला, नित्यनीरा. पुनः कथंभूता सीता? सागरंगमा, सागरं गच्छतीति सागरंगमा. पुनः कीदृशा सीता? नीलवंतप्पवाहा, नीलवंतपर्वतात् प्रवाहो यस्याः सा नीलवंतप्रवाहा, नीलवत्पर्वतादुत्तीर्णेत्यर्थः. बहुश्रुतोऽपि साधूनां मध्ये प्रधानः, निर्मलजलतुल्यसिद्धांतसहितः. पुनः सागरमिव मुक्तिस्थानंगामी. पुनर्बहुश्रुतो नीलवत्पर्वतसदृशोन्नतकुलात्प्रसूतः, उत्तमकुलप्रसूतो हि सद्विद्याविनयौदार्यगांभीर्यादिगुणयुक्तः स्यात्. ॥ २८ ॥

॥ मूलम् ॥—जहा से नगाण पवरे । सुमहं मंदरे गिरी ॥ नाणोसहिपज्जलिए । एवं हवइ बहुस्सुए ॥ २९ ॥ व्याख्या—यथा स इति प्रसिद्धो नगानां पर्वतानां मध्ये सुतरामतिशयेन महानुच्चैस्तरो मंदरो मेरुगिरिर्मेरुपर्वतः शोभते, तथा बहुश्रुतोऽपि शोभते. कथंभू-

तो मेरुः? नानौषधीप्रज्ज्वलितः, नानाप्रकाराभिरौषधीभिः शल्यविशल्यासंजीवनीसंरोहिणी-चित्रावल्लीसुधावल्लीविषापहारिणीशस्त्रनिवारिणीभूतनागदमन्यादिभिर्मूलीभिः प्रज्ज्वलितो जाज्वल्यमानः. एवं बहुश्रुतः सर्वसाधूनां प्रवरो गुणैरुच्चैस्तरः, श्रुतस्य माहात्म्येनात्यंतं स्थिरः, परवादिवादवात्या अचलः, अनेकलब्ध्यतिशयसिद्धिरूपाभिरौषधीभिर्मिथ्यात्वांधकारेऽपि वज्रस्वामिमानतुंगकुमुदचंद्रादिवत् जैनशासनप्रभावनारूपप्रकाशकारकः. ॥ २९ ॥

॥ मूलम् ॥—जहा से सयंभुरमणे । उदही अक्खओदए ॥ नाणारयणपडिपुन्ने । एवं हवइ बहुस्सुए ॥ ३० ॥ व्याख्या—यथा स इति प्रसिद्धः स्वयंभूरमणनामा चरमोदधिर्विराजते, तथा बहुश्रुतोऽपि विराजते. कथंभूतः स्वयंभूरमणोदधिः? अक्षयं शाश्वतमविनाशि उदकं जलं यस्य सोऽक्षयोदकः. पुनः कथंभूतः स्वयंभूरमणसमुद्रः? नानारत्नप्रतिपूर्णः, बहुप्रकारैरसंख्यैर्माणिक्यैर्भृतः. तथा बहुश्रुतोऽपि स्वयंभूरमण इव. कथंभूतो बहुश्रुतः? अक्षयज्ञानोदकोऽक्षयज्ञानजलः. पुनर्बहुश्रुतः स्वयंभूरमणसमुद्रवन्नानाप्रकारातिशयरूपरत्नैः संपूर्णः.

॥ मूलम् ॥—समुद्दगंभीरसमा दुरासया । अचक्किया केणइ दुप्पहंसया ॥ सुयस्स पु-

णा विउलस्स ताइणो । खवित्तु कम्मं गइमुत्तमं गया ॥ ३१ ॥ व्याख्या—एतादृशाः श्रुतस्य पूर्णाः बहुश्रुता उत्तमां गतिं गताः, प्रधानं स्थानं मुक्तिं प्राप्ताः. किं कृत्वा? कर्माणि क्षपयित्वा श्रुतस्य पूर्णा इत्यत्र तृतीयास्थाने षष्ठी, श्रुतेन श्रुतज्ञानेन पूर्णाः. कीदृशस्य श्रुतस्य? विपुलस्य विस्तीर्णस्य, अनेकहेतुयुक्तिदृष्टांतउत्सर्गापवादनयाद्यनेकरहस्यार्थयुक्तस्य. कीदृशा बहुश्रुताः? समुद्रगंभीरसमाः. समुद्रस्य गांभीर्येण तुल्याः समुद्रगंभीरसमाः. पुनः कीदृशाः? दुराश्रयाः, केनापि वादिना कपटं कृत्वा न आश्रयणीयाः, केनापि वंचितुमशक्या इत्यर्थः. पुनः कथंभूताः? अचकिता अत्रासिताः, परीषहैस्त्रासमप्रापिताः. पुनः कीदृशाः? दुःप्रहंस्याः परवादिभिः पराभवितुमशक्याः. एतादृशाः श्रुतज्ञानधरा मोक्षं गता गच्छंति गमिष्यंति च. ॥३१॥

॥ मूलम् ॥—तम्हा सुअमहिट्ठिज्जा । उत्तमठ्ठं गवेसए ॥ जेणप्पाणं परं चेव । सिद्धिं संपाउणिज्जासि त्ति बेमि ॥ ३२ ॥ व्याख्या—उत्तमार्थगवेषको मोक्षार्थी पुमान्, तस्मात् बहुश्रुतस्य मोक्षप्राप्तियोग्यत्वात् श्रुतं सिद्धांतं अधितिष्ठेत्, उत्तमश्चासावर्थश्च उत्तमार्थो मोक्षार्थस्तं गवेषते इति उत्तमार्थगवेषकः, येन श्रुतेन आत्मानं च पुनः परमपि सिद्धिं प्रापये-

त्, मोक्षं गमयेत्. कोऽर्थः? बहुश्रुतः स्वयमपि मोक्षं प्राप्नोति, अन्यमपि स्वं सेवकं मोक्षं प्रापयतीत्यर्थः. इत्यहं ब्रवीमि. इति सुधर्मास्वामी जंबूस्वामिनं प्रत्याह ॥ ३२ ॥ इति बहुश्रुतपूजाख्यमेकादशमध्ययनं संपूर्णं. ॥ ११ ॥

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यश्रीलक्ष्मीवल्लभगणिविरचितायां बहुश्रुतपूजाख्यस्याध्ययनस्यार्थः संपूर्णः ॥ श्रीरस्तु ॥



## ॥ अथ द्वादशमध्ययनं प्रारभ्यते ॥

एकादशेऽध्ययने बहुश्रुतपूजा प्रोक्ता, अथ द्वादशे बहुश्रुतेनापि तपो विधेय इत्येकादशद्वादशयोः संबंधः. अतोऽत्राध्ययने तपोमाहात्म्यमाह. हरिकेशबलसाधुस्तपस्वी बभूव, तत्संबंधो यथा—मथुरानगर्यां शंखो नाम राजा विषयसुखविरक्तः स्थविराणामंतिके निष्क्रां-

तः, कालक्रमेण गीतार्थो जातः, पृथ्वीमंडले परिभ्रमन् हस्तिनागपुरे प्राप्तः, तत्र भिक्षानिमित्तं प्रविष्टः. तत्रैको मार्गोऽतीवोष्णोऽस्ति, उष्णकाले केनापि गंतुं न शक्यते, ततस्तन्मार्गस्य हुतवह इति नाम संजातं. तेन मुनिनासन्नगवाक्षस्थितः सोमदेवाभिधानः पुरोहितः पृष्टः. किमेतेन मार्गेण व्रजामीति. पुरोहितेन चिंतितं यद्यसौ हुतवहमार्गे गच्छति, तदा दह्यमानममुं पश्यतो मम कौतुकमनोरथः पूर्णो भवतीति. अतस्तेन स एव मार्गो निर्दिष्टः, ईर्यापयुक्तो मुनिस्तेनैव मार्गेण गंतुं प्रवृत्तः. लब्धिपात्रस्य तस्य पादप्रभावतस्तादृशोऽपि मार्गः शांतो बभूव. तस्मिन्मार्गे शनैः शनैश्चलंतं मुनिं वीक्ष्य स पुरोहितः स्वावासगवाक्षादुत्तीर्य स्वपादाभ्यां तं मार्गं स्पृष्टवान्, हिमवच्छीतलो मार्गः. तेन ज्ञातं मुनिपादमाहात्म्यं, एवं च चिंतितं हा मया पापकर्मणा पुण्यात्मनोऽस्य कीदृशो मार्गः प्रकाशितः! परमस्य पादस्पर्शादेव मार्गेतापोपशांतिर्जाता. ततो यद्यहमस्य शिष्योऽभूवं तदा ममैतस्य प्रायश्चित्तं भवतीति चिंतयित्वा तस्य मुनेः पुरः स्वपापं प्रकाशितं, पादौ च प्रणतौ, मुनिनापि तस्य सम्यग्धर्मः प्रकाशितः, जातसंवेगेन तेन सोमदेवेन तस्य मुनेरंतिके दीक्षा गृहीता, चारित्रं विशेषात्



१२

= बलायो =

= आमहत्याकोऽग्नि टाप्रभाववालाद्वले

= मेरु औ =

पालयति, परमहं ब्राह्मणत्वादुत्तमजातिरिति मदं कुरुते, परं नैवं नावयति—गुणैरुत्तमतां याति । न तु जातिप्रनावतः ॥ क्षीरोदधिसमुत्पन्नः । कालकूटः किमुत्तमः ॥ १ ॥ किंच—कौशेयं कृमिजं सुवर्णमुपलाद् दुर्वापि गोरोमतः । पंकात्तामरसं शशांकमुदधेरिंदीवरं गोमयात् ॥ काष्टादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना । जाता लोकमहार्घतां निजगुणैः प्राप्ताश्च किं जन्मना ॥ २ ॥ एवं परमार्थमनावयन् स जातिमदस्तब्धः सोमदेवः कियत्कालं संयममाराध्य कालक्रमेण मृतो देवो जातः, तत्र चिरकालं वांछितसुखानि नुक्तवान्. ततश्च्युतो गंगातीरे हरिकेशाधिपस्य बलकोष्टाभिधानस्य चंमालस्य भार्याया गौर्याः कुक्षौ समुत्पन्नः. सा च स्वप्ने फलितमाम्रवृक्षं ददर्श, स्वप्नपाठकानां च कथितवती. तैरुक्तं तव प्रधानपुरुषो नविष्यतीति. कालमासे दारको जातः, जातिमदकरणेनास्य चंमालकुलोत्पत्तिर्जाता. स बालः सौनाग्यरूपरहितो बांधवानामपि हसनीयः, तस्य बल इति नाम प्रतिष्टितं. स च वर्धमानः प्रकामं क्लेशकारित्वेन सर्वेषामुद्वेगकारी जातः.

अन्यदा वसंतोत्सवे प्राप्ते चांमालकुटुंबानि विविधखाद्यपानकरणाय पुराद् बहिर्मिलि-

=बिचार नहि=
१२
=मोटापणाने=
सजातीका =
कीयोजाणसे रुप[redacted]पाम्यो=
=हांसीकरवाजोग्य=

॥३०६॥

तानि संति, स वलनामा वालकः परवालैः समं क्लेशं कुर्वन् ज्ञातिवृद्धैर्निर्यूढः. दूरस्थः स विलासक्रीडापराणि परवालानि पश्यति, परं मध्ये समायातुं न शक्नोति. तस्मिन्नवसरे तत्र सर्पो निर्गतः, सविष इति कृत्वा चांडालैर्मारितः. पुनस्तत्र प्रदंवमलशिकं निर्गतं, निर्विषमिति कृत्वा तैर्न विनाशितं. तादृशमरणं दृष्ट्वा तेन वलवालेन चिंतितं, निजेनैव दोषेण प्राणिनः पराभवं सर्वत्र प्राप्नुवंति. यद्यहं सर्पसदृशः सविषस्तदा पराभवपदं प्राप्तः, यद्यलसिकवन्निरपराधोऽभविष्यं. तदा न मे कश्चित्पराभवोऽभविष्यदिति सम्यग्भावयतस्तस्य जातिस्मरणमुत्पन्नं, विमानवाससुखं स्मृतिमार्गमागतं, जातिमदविपाकोऽपि ज्ञातः, संवेगमागतेन दीक्षा गृहीता. स हरिकेशीवलः शुद्धक्रियां पालयन् षष्टाष्टमदशमद्वादशमासार्धमासादितपस्तपन् क्रमेण विहारं कुर्वन् वाराणसीं नगरीं प्राप्तः. तत्र तिंडुकवने मंडिकयक्षप्रासादे स्थितो मासक्षपणादितपः करोति. तद्गुणावर्जितश्च यक्षस्तं महर्षिं निरंतरं सेवते. अन्यदा तत्र वने एकोऽपरो यक्षः प्राघूर्णकः समागतः, तेन मंडिकयक्षस्य पृष्टं कथं त्वं मद्वने सांप्रतं नायासि? तेनोक्तमहमिहस्थितमिमं मुनिं सेवे. एतद्गुणावर्जितश्चान्यत्र गंतुं नोत्सहे. सोऽ-

प्यागंतुको यक्षस्तद्गुणावर्जितो बभूव. आगंतुकयक्षेण मंडिकयक्षस्योक्तं एतादृशा मुनयो मद्वनेऽपि संति, तत्र गत्वा अद्य तान् सेवामहे, इत्युक्त्वा द्वावपि तौ तत्र गतौ. विकथादिप्रमादपरास्ते तत्र ताभ्यां दृष्टाः, तेभ्यो विरक्तौ तौ यक्षौ पश्चात्तत्रागत्य हरिकेशीबलं महामुनिं प्रणमतः, प्रत्यहं सेवतेस्म. अन्यदा तत्र यक्षायतने वाराणसीपतिकौशलिकराजपुत्री भद्रानाम्नी नानाविधपरिजनानुगता पूजासामग्रीं कृत्वा गृहीत्वा समायाता. यक्षप्रतिमां पूजयित्वा प्रदक्षिणां कुर्वंती मलक्लिन्नवस्त्रगात्रं दुस्सहतपः करणकृशं कुरूपं तं महामुनिं दृष्ट्वा थूत्कृतं निससर्ज. यक्षेण चिंतितं इयं महामुनिं तिरस्कुरुते, अतो मया शिक्षणीयेति. अधिष्ठिता तेन यक्षेण, असमंजसं प्रलपंती दासीभिरुत्पाट्य राजगृहं नीता, राज्ञा मांत्रिका वैद्याश्चाकारिताः, तैश्चिकित्सायां कृतायामपि न तस्याः कश्चिद्विशेषो जातः. अथ तस्या मुखे संक्रांतो यक्षः स्पष्टमेवमाह—अनया मदायतनस्थितो महानुभावः संयमी निंदितः, यदीयं तस्य संयमिनः पाणिग्रहणं कुरुते, तदा मयास्या वपुर्मुच्यते, नान्यथेति. चिंतितं राज्ञा ऋषिपत्नी भूत्वापीयं जीवत्विति प्रतिपन्नं यक्षवचनं राज्ञा. सा स्वस्थशरीरा जाता, सर्वालं-

कारवृपिता गृहीतविवाहोपकरणा महाविभूत्या यक्षायतने गता, तस्य महर्षेः पादौ प्रणम्य एवं विज्ञप्तिं चकार. हे महर्षे त्वं मत्करं करेण गृहाण? मुनिना भणितं भद्रे! वृद्धजनानिंदितयानया संकथयालं. अपि च ये साधव एकस्यां वसतौ स्त्रीभिः समं वासमपि नेच्छंति, ते न सांप्रतं करं करेण कथं गृह्णंति? सिद्धिवधूबद्धरागाः साधवः कथमशुचिपूर्णासु युवतीषु रज्यंते? अथ तेन यक्षेण तस्य महर्षेः शरीरं प्रच्छाद्य तत्सदृशं भिन्नरूपं विकुर्व्य करं करेण जगृहे. एकरात्रिं यावद्भुक्ता, प्रभाते यक्षो दूरीभूतः, स्वाभाविकरूपो यतिस्तामाह, भद्रे! अहं संयमी नैव स्त्रीस्पर्शं त्रिधा शुद्ध्या करोमि, न मया त्वत्करः करेण गृहीतः, किंतु मद्भक्तेन यक्षेणैव त्वं विडंबिता, स च सांप्रतं दूरे गतः, मत्तस्त्वं दूरे भव? महर्षिणेत्युक्ता सा प्रभाते सर्वं स्वप्नमिव मन्यमाना भृशं विखिन्ना राज्ञो गृहे गता, सर्वं तत्स्वरूपं राज्ञ आचख्यौ. तदानीं राज्ञः पुर उपविष्टेन रुद्रदेवपुरोहितेनोक्तं, राजन्नियं ऋषिपत्नी, तेन मुक्ता ब्राह्मणाय दीयते, ततो राज्ञा सा तस्यैव दत्ता. पुरोहितोऽपि तया सह विषयसुखमनुभवन् कियंतं कालं निनाय. अन्यदा तस्या यज्ञपत्नीत्वकरणार्थं यज्ञस्तेन कर्तुमारब्धः, तत्र यज्ञ-

॥३०७॥

मंरूपे देशांतरेभ्योऽनेकभट्टाः समायाताः, तदर्थं भोजनसामग्री तत्र प्रगुणीकृता. अस्मिन्नवसरे तत्र स महर्षिर्मासोपवासपारणके गोचर्यां भ्रमन् यज्ञमंरूपे समायातः, इत्यादि कथानकं हरिकेशीबलस्योक्तं, शेषकथानकं सूत्रादेवावसेयं.

॥ मूलम् ॥—सोवागकुलसंभूओ । गुणत्तयधरो मुणी ॥ हरिएसबलो नाम । आसी भिक्खू जिइंदिए ॥ १ ॥ व्याख्या—स हरिकेशबलो नाम प्रसिद्धो भिक्षुरासीत्. कीदृशः स साधुः? जितेंद्रियः, जितानि इंद्रियाणि येन स जितेंद्रियो विषयजेता. पुनः कीदृशः? श्वपाककुलसंभूतः, श्वपाकश्चांडालस्तस्य कुले संभूतः, पुनः कीदृशः? मुनिर्मन्यते जिनाज्ञामिति मुनिर्जिनाज्ञापालक इत्यर्थः. पुनः कीदृशः? गुणत्रयधरः, गुणत्रयं ज्ञानदर्शनचारित्राख्यं धरतीति गुणत्रयधरः. ॥ १ ॥

॥ मूलम् ॥—इरिएसणभासाए । उच्चारसमिईसु य ॥ जओ आयाणनिक्खेवे । संजओ सुसमाहिओ ॥ २ ॥ व्याख्या—पुनः कथंभूतो हरिकेशीबलो मुनिः? ईर्यैषणाभाषोच्चारसमितिषु जओ इति यतो यत्नवान्. ईर्या च एषणा च भाषा च उच्चारश्च ईर्यैषणाभाषोच्चारास्ते-

षां समितयः सम्यग्व्यवहारा ईर्येषणाज्ञापोच्चारसमितयस्तासु ईरणं ईर्या गमनागमनं, तस्य समितौ गमनागमनव्यवहारे यत्नवान्. एषणमेषणा आहारग्रहणं, तत्र समितिरेषणासमितिस्तत्र यत्नवान्. एवं भाषासमितौ भाषाव्यवहारे यत्नवान्. 'भासाए' इत्यत्र एकार आर्षत्वात् तिष्ठति. उच्चारसमितौ मूत्रपुरीषादिपरिष्ठापनविधौ यत्नवान्. पुनः कीदृशो हरिकेशीबलः साधुः? आदाननिक्षेपे वस्त्रपात्राद्युपकरणग्रहणमोचने सं सम्यक् प्रकारेण यतः संयतः संयमी. पुनः कीदृशः? सुतरामतिशयेन समाधितः समाधिसहितः, चित्तस्थैर्यसहित इत्यर्थः. पंचसमितियुक्तः स साधुरस्तीत्यर्थः. ॥ २ ॥—

॥ मूलम् ॥—मणगुत्तो वयगुत्तो । कायगुत्तो जिइंदिओ ॥ भिक्खट्ठा बंभइज्जंमि । जन्नवाममुवट्ठिओ ॥ ३ ॥ व्याख्या—पुनः कीदृशः? मनोगुप्त्या गुप्तो मनोगुप्तः, पुनर्वचनगुप्त्या गुप्तो वचोगुप्तः, पुनः कायगुप्त्या गुप्तः कायगुप्तः, इत्यत्र सर्वत्र मध्यपदलोपी समासः. पुनर्जितेंद्रियः, एतादृशो हरिकेशबलः साधुर्भिक्षार्थं ब्राह्मणानां इज्या ब्राह्मणेज्या, तस्यां ब्राह्मणेज्यायां ब्राह्मणयज्ञपाटके उपस्थितः, यत्र ब्राह्मणा यज्ञं कुर्वंति तत्र यज्ञपाटकांतिके प्राप्तः. ॥

मंरूपे देशांतरेभ्योऽनेकभट्टाः समायाताः, तदर्थं भोजनसामग्री तत्र प्रगुणीकृता. अस्मिन्नवसरे तत्र स महर्षिर्मासोपवासपारणके गोचर्यां भ्रमन् यज्ञमंरूपे समायातः, इत्यादि कथानकं हरिकेशीबलस्योक्तं, शेषकथानकं सूत्रादेवावसेयं.

॥ मूलम् ॥—सोवागकुलसंभूर्ज । गुणत्तयधरो मुणी ॥ हरिएसबलो नाम । आसी भिक्खू जिइंदिए ॥ १ ॥ व्याख्या—स हरिकेशबलो नाम प्रसिद्धो भिक्षुरासीत्. कीदृशः स साधुः? जितेंद्रियः, जितानि इंद्रियाणि येन स जितेंद्रियो विषयजेता. पुनः कीदृशः? श्वपाककुलसंभूतः, श्वपाकश्चांडालस्तस्य कुले संभूतः, पुनः कीदृशः? मुनिर्मन्यते जिनाज्ञामिति मुनिर्जिनाज्ञापालक इत्यर्थः. पुनः कीदृशः? गुणत्रयधरः, गुणत्रयं ज्ञानदर्शनचारित्राख्यं धरतीति गुणत्रयधरः. ॥ १ ॥

॥ मूलम् ॥—इरिएसणभासाए । उच्चारसमिईसु य ॥ जर्ज आयाणनिक्खेवे । संजर्ज सुसमाहिर्ज ॥ २ ॥ व्याख्या—पुनः कथंभूतो हरिकेशीबलो मुनिः? ईर्यैषणाभाषोच्चारसमितिषु जर्ज इति यतो यत्नवान्. ईर्या च एषणा च भाषा च उच्चारश्च ईर्यैषणाभाषोच्चारास्ते-

सायभूए । संकरदूसं परिहरिय कंठे ॥ ६ ॥ व्याख्या—कतरः कोऽयमागच्छति? अतिशयेन क इति कतरः, एकारः प्राकृतत्वात्, परमयं कीदृशः? दीप्तरूपो बीभत्सरूपो, दीप्तवचनं बीभत्सार्थवाचकं. पुनः कीदृशः? कालः कालवर्णः, पुनः कीदृग्? विकरालो विकृतांगोपांगधरः, लंबोष्टदंतुरत्वादिविकारयुक्तः, पुनः कीदृशः? पोक्कनाशः, पोक्का अग्रे स्थूलोन्नता, मध्ये निम्ना चिप्पट्टा नासा यस्य स पोक्कनासः, पुनः कीदृग्? अवमचेलः, अवमान्यसाराणि चेलानि वस्त्राणि यस्य सोऽवमचेलः, मलाविलत्वेन जीर्णत्वेन त्याज्यप्रायवस्त्रधारीत्यर्थः. पुनः कीदृशः? पांशुपिशाचभूतः, पांशुना रजसा पिशाचभूतः पांशुपिशाचभूतः, धूल्या व्यातावगुंठितशरीरत्वेन मलिनवस्त्रत्वेन भूततुल्य इत्यर्थः. एतादृशः कोऽयं शंकरदूष्यं कंठे परिधृत्य अत्रागच्छति? समीपे आगतं दृष्ट्वा एवमूचुरित्यर्थः. शंकर उत्करटकस्तत्रस्थं दूष्यं वस्त्रं शंकरदूष्यं. यद्यपि तस्य साधोर्वस्त्रमुत्करटकस्य नास्ति, तथापि तेषामत्यंतघृणोत्पादकत्वेन तैरुक्तं, कोऽयमुत्करटकस्य वस्त्रं कंठे परिधृत्य पिशाचसदृशो भ्रमन्नत्रागच्छति? स हि हरिकेशी साधुः कुत्रापि आत्मीयमुपकरणं न मुंचति, सर्वं वस्त्रोपध्युपकरणादिकं गृहीत्वैव भिक्षार्थं भ्रमतीति भावः.

॥ मूलम् ॥—तं पासिऊणमेज्जंतं । तवेण परिसोसियं ॥ पंतोवहिउवगरणं । उवहसंति अणारिया ॥४॥ व्याख्या—तं हरिकेशबलं साधुं एज्जंतं आयांतं पासिऊण दृष्ट्वा अनार्या दुष्टा ब्राह्मणा उपहसंति, उपहासं कुर्वंति. कीदृशं तं? तपसा परिशोषितं, तपसा दुर्बलीकृतं. पुनः कीदृशं तं? प्रांतोपध्युपकरणं जीर्णवस्त्रोपधिधारकं, प्रांतं जीर्णं मलिनत्वादिना असारं उपधिर्वर्षाकल्पादिः, स एव उपकरणं धर्मोपष्टंभहेतुरस्येति प्रांतोपध्युपकरणस्तं प्रांतोपध्युपकरणं.

॥ मूलम् ॥—जाईमयपडिथद्धा । हिंसगा अजिइंदिया ॥ अबंभचारिणो बाला । इमं वयणमब्बवी ॥ ५ ॥ व्याख्या—ते ब्राह्मणा विवेकविकला इदं वचनमब्रुवन्. कीदृशास्ते? जातिमदप्रतिस्तब्धाः, जातिमदेन ब्राह्मणयुक्तवत्वेन यो मदोऽहंकारस्तेन प्रतिस्तब्धा अनम्रा जातिमदप्रतिस्तब्धाः. पुनः कीदृशाः? हिंसका जीवहिंसाकरणशीलाः. पुनः कीदृशाः? अजितेंद्रिया विषयासक्ताः, पुनः कीदृशाः? अब्रह्मचारिणो मैथुनाभिलाषिणः अब्रह्मणि कामसेवायां चरंति रमंते इति अब्रह्मचारिणः कुशीला इत्यर्थः. ॥ ५ ॥ ते ब्राह्मणाः किमब्रुवन्नित्याह—

॥ मूलम् ॥—कयरे आगच्छइ दित्तरूवे । काले विकराले पोक्कनासे । ओमचेले पंसुपि-

वृक्षवासी यक्ष इमानि वक्ष्यमाणानि वचनान्युदाहार्षीदवोचदित्यर्थः. किं कृत्वा? निजकं शरीरं प्रछाद्य, स्वशरीरं प्रछन्नं विधाय, साधुशरीरे प्रवेशं कृत्वा, कथंभूतः स यक्षः? तस्य मुनेरनुकंपकः, अनुरूपं कंपते चेष्टते इत्यनुकंपकः, साधोः सेवक इत्यर्थः. तिंदुकवनमध्ये एको महान् तिंदुकवृक्षोऽस्ति, तस्य वृक्षस्याधस्तस्य चैत्यमस्ति, तत्र साधुः कायोत्सर्गेण तिष्टति, तस्य साधोर्धर्मानुष्टानं दृष्ट्वा गुणरागी सेवकः संजातोऽस्तीति भावः. स यक्ष इत्यवादीत्. ॥८॥

॥ मूलम् ॥—समणो अहं संजय बंभयारी । विरओ अहं धणपयणपरिग्गहाओ ॥ परपवत्तस्स उ भिक्खकाले । अन्नस्स अट्ठा इहमागओमि ॥ ए ॥ व्याख्या—स यक्षः किमवोचत्? तदाह—भो ब्राह्मणाः! भवद्भिरुक्तं कोऽसि रे त्वं? तस्योत्तरं—अहं श्रमणोऽस्मि, श्राम्यति तपसि श्रमं करोतीति श्रमणस्तपस्वी. पुनरहं संयतः सावद्यव्यापारेभ्यो निवर्तितः. पुनरहं ब्रह्मचारी, ब्रह्मणि भोगत्यागे चरति रमते इत्येवंशीलो ब्रह्मचारी. पुनरहं धनपचनपरिग्रहाद्विरतः, तत्र धनं गोमहिष्यश्वादिचतुःपदरूपं, पचनमाहारादिपाकः, परिग्रहो गणिमधरिममेय्यपरिछेद्यादिद्रव्यरूपः. कया आशया इहागतोऽसि? अस्योत्तरं—भो ब्राह्म-

॥ मूलम् ॥—कयरे तुमं इय अदंसणिज्जो । का एव आसा इहमागदोसि ॥ ओमचेलगा पंसुपिशायभूया । गच्छ खलाहि किमिहं ठिओसि ॥ ७॥ व्याख्या—पुनस्ते किमूचुरित्याह—रे इति नीचामंत्रणे, अवमचेलकः सटितपटितवस्त्रधारी धूलीधूसरभूतकल्पस्त्वं कोऽसि? कया आशया इह यज्ञपाटके आगतोऽसि? 'का एव आसा' इति प्राकृतत्वात्, मकारोऽपि लाक्षणिकः. कीदृशस्त्वं? 'इय अदंसणिज्जे' अनेन मलिनवस्त्रादिधारणेन अदर्शनीयः, द्रष्टुमयोग्यः, त्वद्दर्शनादेवास्माकं धर्मो विलीयते. अत्र गाथायां 'ओमचेलगा पंसुपिशायभूया' इति पुनरुक्तिरत्यंतनिर्भर्त्सनार्था. रे भूतप्राय! गच्छ इतो यज्ञस्थानाद् व्रज? 'खलाहित्ति' देशीयभाषया अपसर दूरं दृष्टिमार्गात्, किमिह स्थितोऽसि? त्वया सर्वथात्र न स्थातव्यमित्यर्थः. तैर्ब्राह्मणैरित्युक्ते सति स साधुस्तु किमपि न अवादीत्, तदा तद्भक्तस्य यक्षस्य कृत्यमाह—

॥ मूलम् ॥—जक्खो तहिं तिंदुयरुक्खवासी । अणुकंपओ तस्स महामुणिस्स ॥ पच्छायइत्ता नियगं सरीरं । इमाई वयणाइमुदाहरित्था ॥ ८ ॥ व्याख्या—तस्मिन् काले तिंदुक-



१२
=तुच्छ=
=नाशहीनाः
=शांतपणे

यमपि शेषावशेषमाहारं प्राप्नोतु, इति विचार्य मह्यं शुद्धमाहारं दीयतामिति यक्षेणोक्ते सति ते ब्राह्मणाः किं प्राहुरित्याह—॥ १० ॥

॥ मूलम् ॥—उवक्खडं जोयणमाहणाणं । अत्तट्ठियं सिद्धमिहेगपक्खं ॥ न उ वयं एरिसमन्नपाणं । दाहामु तुज्झं किमिहं ठिओसि ॥ ११ ॥ व्याख्या—रे भिक्षो! इहास्मिन् यज्ञपाटके भोजनं यदुपस्कृतं घृतहिंग्वाधान्यकमिरचलवणजीरकादिभिः कृतोपस्कारं शाकादि, पुनरिह सिद्धं चतुर्विधाहारं राद्धं वर्तते. एकः पक्षो ब्राह्मणो यस्य तत् एकपक्षं, एतदाहारं शूद्रेभ्यो न देयमस्ति, ब्राह्मणानां वर्तते, पुनरिदमाहारमात्मार्थिकं, आत्मार्थे भवमात्मार्थिकं, ब्राह्मणैरप्यात्मनैव भोज्यं, न त्वन्यस्मै कस्मैचिद्देयमित्यर्थः. तु इति तेन हेतुना वयमेतादृशं ब्राह्मणभोज्यमन्नपानं तुभ्यं न दास्यामः. इह त्वं किं स्थितोऽसि? अस्माकं धर्मशास्त्र उक्तमस्ति—न शूद्राय मतिं दद्या—न्नोच्छिष्टं न हविःकृतं ॥ न चास्योपदिशेद्धर्मं । न चास्य व्रतमादिशेत् ॥ १ ॥ ११ ॥ तदा यक्षः पुनरवादीत्—

॥ मूलम् ॥—थलेसु बीयाइं ववंति कासया । तहेव निन्नेसु य आससाए ॥ एयाइ स-

णाः! भिक्षाकाले भिक्षावसरेऽन्नस्यार्थायात्रागतोऽस्मि. कीदृशस्यान्नस्य? परप्रवृत्तस्य, परस्मै परार्थं प्रवृत्तं पक्कं परप्रवृत्तं, गृहस्थेनात्मार्थं राद्धं. ॥ ९ ॥

॥ मूलम् ॥—वियरिज्जइ खज्जइ भुज्जइ य । अन्नं पभूयं भवयाणमेयं ॥ जाणाहि मे जायण-जीविणुत्ति । सेसावसेसं लहउ तवस्सी ॥१०॥ व्याख्या—अत्र 'भवयाणं' इति भवतां एतत् समीप-तरवर्ति अन्नं प्रभूतं, अद्यते इत्यन्नं भक्ष्यं प्रभूतं प्रचुरं विद्यते. तदेव प्रचुरत्वं दर्श्यते, 'वियरिज्जइ' इति वितीर्यते दीनहीनानाथेभ्यः सर्वेभ्यो वितीर्यते विशेषेण दीयते, पुनः खाद्यते खज्जक-घृतपूरादिकं सशब्दं भक्ष्यते, पुनर्भुज्यते तंदुलमुद्गदाल्यादि सघृतमाकंठं अभ्यवह्रियते. इ-त्यनेन अत्र कस्यचित्कस्यापि भक्ष्यवस्तुनो न्यूनता न दृश्यते. यूयं मे इति मां याचनजीविनं जानीत? याचनेन भिक्षया जीविनं जीवितव्यं अस्येति याचनजीवी, तं, इति अस्मात्कार-णात् तपस्वी महालक्षणो मुनिरपि, अत्र शेषावशेषं शेषादपि शेषं शेषावशेषमुद्धरितं प्रांतप्रा-यमाहारं लभतां प्राप्नोतु, इत्यपि यूयं जानीत. कोऽर्थः? स मुनिरवादीत्, अत्र अन्नं यत्र तत्र परिष्ठाप्यते, भवद्भिरेतादृशी बुद्धिः करणीया, अयं तपस्वी आहारार्थमागतोऽस्ति, अ-

तानि क्षेत्राण्यस्मान्निर्विदितानि वर्तंते इति अध्याहारः. जहिमित्यत्र क्षेत्रेषु प्रकीर्णान्युप्तानि बीजानि प्रदत्तानि दानानि पूर्णानि विरुहंति विशेषेणोद्गच्छंति, फलदानि भवंति, विभक्तिलिंगव्यत्ययस्तु प्राकृतत्वात्. ये ब्राह्मणा जातिविद्योपपेतास्ते तु ब्राह्मणाः सुतरामतिशयेन पेशलानि मनोहराणि क्षेत्राणि ज्ञेयानि. तत्र जातिर्ब्राह्मणत्वं, विद्या वेदाध्ययनं, जातिश्च विद्या च जातिविद्ये; ताभ्यामुपपेताः सहिता जातिविद्योपपेताः. 'उपअपइताः' इत्यत्र शकंध्वादिषु पररूपमित्यनेनोपशब्दस्याकारलोपे पश्चाद्गुणेन सिद्धिः, यदुक्तं—समसश्रोत्रियदानं । द्विगुणं ब्राह्मण ब्रुवे ॥ सहस्रगुणमाचार्ये । अनंतं वेदपारगे ॥ १ ॥ इत्युक्तत्वाद्वेदपारगा ब्राह्मणाः पुण्यक्षेत्राणि. ॥ १३ ॥ अथ यक्षः प्राह—

॥ मूलम् ॥—कोहो य माणो य वहो य जेसिं । मोसं अदत्तं च परिग्गहं च ॥ ते माहणा जाइविज्जाविहीणा । ताइं तु खित्ताइं सुपावयाइं ॥ १४ ॥ व्याख्या—भो ब्राह्मणा येषां भवतां मध्ये क्रोधो वर्तते, च पुनर्मानमायालोभाश्च वर्तंते, चकारान्मानादीनां ग्रहणं, च पुनर्वधो जीवहिंसा वर्तते, मृषावादश्चास्ति, अदत्तमदत्तादानमप्यस्ति, च शब्दान्मैथुनं का-

ध्ययनम्

ऌाइ दलाहि मज्झं । आराहए पुन्नमिणं खु खेत्तं ॥ १२ ॥ व्याख्या—एतया अनया उपमया श्रद्धया भावनया मह्यं ददध्वं? खु इति निश्चयेन इदं मह्यदाणं पुण्यं शुन्नं क्षेत्रमाराधयत? एतया इति कया उपमया? तामुपमामाह—कर्षकाः क्षेत्रीकारका नरा आशंसया विचारणया काले वर्षाकाले स्थलेषु उच्चप्रदेशेषु, तथैव निम्नेषु निम्नभूमिप्रदेशेषु बीजानि वपंति. कोऽर्थः? वर्षाकाले क्षेत्रीकारका बीजं वपंत एवं चिंतयंति, यदि प्रचुरा वर्षा भविष्यंति, तदा स्थलेषु फलावाप्तिर्भविष्यति, यदि चाल्पा वर्षा भविष्यंति, तदा निम्नप्रदेशेषु फलावाप्तिर्भविष्यति. उभयत्रोच्चनीचप्रदेशेषु बीजं वपंति, न पुनरेकत्रैव बीजं वपंति. यदि यूयं ब्राह्मणा निम्नभूमिसदृशास्तदाहं स्थलभूमिसदृशो गण्यः, मह्यमपि दातव्यं, न केवलं यूयमेव क्षेत्रप्रायाः, किंत्वहमपि पुण्यक्षेत्रमस्मीति भावः. ॥ १२ ॥ इति श्रुत्वा ते ब्राह्मणास्तं प्रत्यूचुस्तदाह—

॥ मूलम् ॥—खित्ताणि अम्हंवि इयाणि लोए । जहिं पकिन्नावि रुहंति पुन्ना ॥ जे माहणा जाइविज्जोववेया । ताइं सुखित्ताइ सुपेसलाइ ॥ १३ ॥ व्याख्या—अरे पाखंरूपाश!

ह्मणाः! यूयं गिरां वेदवाणीनां जारहरा जारोद्वाहकाः, यतो यूयं वेदानधीत्य वेदानामर्थं न जानीथ. तथाहि—आत्मा रे ज्ञातव्यो मंतव्यो निदिध्यासितव्यः, पुनरयं समो मशके नागे च, न हिंस्यात् सर्वभूतानीत्यादिवेदवाक्यान्यधीतानि. अथ पुनर्भवद्भिर्जीवहिंसास्वेव प्रवर्त्यते, तस्मादत्र यागः पृथक् एव उच्यते, यत्र चात्मनामग्नौ दाहः, स चात्र वेदे याग एव न स्यात्, यदि च स एव आत्मा एव भवद्भिर्न ज्ञातस्तदा किमर्थं यागं कुर्वीध्वं? प्रथमं यागोऽपि न भवद्भिर्ज्ञायते. कानि तर्हि क्षेत्राणीत्याह—हे ब्राह्मणाः! मुनीन् सुपेशलान्यत्यंतं सुंदराणि क्षेत्राणि जानीथ. ये मुनय उच्चावचगृहाण्युत्तमाधमानि कुलानि भिक्षार्थं चरंति, अथवा 'उच्चावयाइं' उच्चानि महांति व्रतान्युच्चव्रतानि येषां तान्युच्चव्रतानि, अकारः प्राकृतत्वात्, महाव्रतधराणि तानि क्षेत्राणि भव्यानि ज्ञेयानीत्यर्थः. ॥१५॥ तदा छात्राः किं प्राहुः—

॥ मूलम् ॥—अज्झावयाणं पडिकूलभासी । पभाससे किंनु सगासि अम्हं ॥ अवि एयं विणस्सउ अन्नपाणं । नयणं ददामो य तुमं नियंठा ॥ १६ ॥ व्याख्या—किंत्विति शब्दौ निंदाक्षेपवाचकौ, अरे नियंठा! अरे दरिद्र! त्वमुपाध्यायानां प्रतिकूलभाषी सन्, अस-

मासक्तिरस्ति, न पुनः परिग्रहो वर्तते, यूयं के ब्राह्मणाः? जातिविद्याविहीनाः, क्रियाकर्मविशेषेण चातुर्वर्ण्यं व्यवस्थितमिति वचनात्, ब्राह्मणत्वजातिमान् ब्राह्मणः, ब्राह्मणब्राह्मणीभ्यामुत्पन्नो ब्राह्मणो नोच्यते, किंतु ब्राह्मणत्वेन ब्राह्मणक्रियानिष्टत्वेन ब्राह्मणस्थितेन जातिधर्मेण विशिष्टो ब्राह्मण उच्यते, तस्माद्युष्मासु ब्रह्मक्रियानिष्टत्वब्राह्मणत्वस्याभावान्न जातिरस्ति, ब्राह्मणा ब्रह्मचर्येणेति लक्षणोक्तित्वात्. न पुनर्यूयं विद्यायुक्ताः, विद्यायास्तु विरतिरूपफलाभावात्. विद्यावानपि विरतिमान् सन् यावदाश्रवान् संवरद्वारेण न रुणद्धि तावत्स विद्यावान्नोच्यते, विद्या अपि परमार्थतस्ता एवोच्यंते, यासु पंचाश्रवपरिहार उक्तः, तस्मान्न भवंतो विद्यावंतः, भवत्सु भवदुक्तमेव जातिविद्योपपेतत्वं ब्राह्मणलक्षणं सर्वथा नास्त्येव, तस्मात्तानि सुपापकान्येव क्षेत्राणि भवंतः, न पुण्यक्षेत्राणि यूयं. ॥ १४ ॥ अथ कदाचित्ते एवं वदेयुः, वयं वेदविदो वर्तामहे इत्याह—

॥ मूलम् ॥—तुब्भेत्थ भो भारहरा गिराणं । अट्ठं न याणाह अहिज्जवेए ॥ उच्चावयाइं मुणिणो चरंति । ताइं तु खित्ताइं सुपेसलाइं ॥ १५ ॥ व्याख्या—भो इत्यामंत्रणे, भो ब्रा-

तु दंडेण फलेण हंता । कंठंमि घित्तूण खलिज्ज तो णं ॥ १७ ॥ व्याख्या—केचिदत्रास्मिन् यज्ञपाटके छात्राः क्षत्रिया उपज्योतिषः, अग्नेरुप समीपेऽग्निसमीपवर्तिनः पाकस्थानस्थाः, वा-ऽथवाध्यापका वेदपाठकाः संतीत्यध्याहारः, कथंभूताः पाठकाः? खंडिकैश्छात्रैः सहिताः, ये एनं मुनिं दंडेन वंशयष्ट्या फलेन बिल्वादिना हत्वा, कंठं गृहीत्वा गलहस्तं दत्वा स्खलयेयुः, इतो यज्ञपाटकान्निष्कासयेयुः, तो इत्युक्तं तत्प्राकृतत्वात्, ये इति वक्तव्यं, प्राकृतत्वाद्वचनव्यत्ययः. ॥ १७ ॥

॥ मूलम् ॥—अज्झावयाणं वयणं सुणित्ता । उद्धाइया तत्थ बहुकुमारा ॥ दंडेहिं वित्तेहिं कसेहिं चेव । समागया तं इसिं तालयंति ॥ १९ ॥ व्याख्या—तत्र तस्मिन् यज्ञपाटके बहवः कुमारास्तरुणाश्छात्रा दंडैर्वंशयष्टिभिर्वेत्रैर्जलवंशैः कसैश्चर्मदवरकैस्तमृषिं तालयंति; कीदृशास्ते कुमाराः? समागताः संमील्यैकीभूयागता अहो क्रीडनकं समागतमिति वदंतो यष्ट्यादि सर्वं गृहीत्वा समागता इत्यर्थः. तं मुनिं तालयंति, किं कृत्वा? उपाध्यायानां वचनं श्रुत्वा.

॥ मूलम् ॥—रन्नो तहिं कोसलियस्स धूया । भद्दत्ति नामेण अणिंदियंगी ॥ तं पासि-

॥ ४०३ ॥

त्पाठकानां सन्मुखवादी सन्नस्माकं सकाशेऽस्माकं प्रत्यक्षं प्रभाषसे, प्रकर्षेण यथा तथा भाषसेऽसंबद्धं वचनं ब्रूषे, तस्माद्दूरे एतदन्नपानं विनश्यतु, एतदाहारं सटतु परंत्वप्येतदाहारं तुभ्यमुपाध्यायप्रतिकूलवादिने न दद्मः. ॥ १६ ॥ तदा यक्ष आह—

॥ मूलम् ॥—समिईहिं मज्झं सुसमाहियस्स । गुत्तीहिं गुत्तस्स जिइंदियस्स ॥ जइ मे न दाहित्थ अहेसणिज्जं । किमज्ज जन्नाण लहित्थ लाभं ॥ १७ ॥ व्याख्या—यदि मे ममेहास्मिन् यज्ञपाटके शुद्धमेषणीयमाहारमस्मिन्नवसरे न दास्यथ, तदा यज्ञानां लाभं पुण्यप्राप्तिरूपं फलं किं लप्स्यथ? अपि तु न किमपीत्यर्थः. पात्रदानं विना किमपि न फलमित्यर्थः. कथंभूतस्य मम? तिसृभिर्गुप्तिभिर्गुप्तस्य, पुनः कीदृशस्य मम? पंचभिः समितिभिः सु अत्यंतं समाहितस्य युक्तस्य, पुनः कीदृशस्य मम? जितेंद्रियस्य, जितानींद्रियाणि येन स जितेंद्रियस्तस्य, अत्र चतुर्थीस्थाने षष्ठी, एतादृशाय पात्राय मह्यं येन यूयं प्रासुकमाहारं न दास्यथ तदा भवतां सर्वमपि वृथा, फलस्याभावात्. ॥ १७ ॥ अथोपाध्याय आह—

॥ मूलम् ॥—के इत्थ खत्ता उवजोइया वा । अज्झावया वा सह खंडिएहिं ॥ एवं

॥ २१ ॥ पुनः सा किमाह—

॥ मूलम् ॥—एसो हु सो उग्गतवो महप्पा । जिइंदियो संजयबंभचारी ॥ जो मे तया नेच्छइ दिज्जमाणिं । पिउणा सयं कोसलिएण रन्ना ॥ २२ ॥ व्याख्या—हु इति निश्चयेनोपलक्षितो संयेपः, स उग्रतपा महात्मा वर्तते, उग्रं तपो यस्य स उग्रतपाः, महान् प्रशस्य आत्मा यस्य स महात्मा महापुरुषः, स इति कः? यस्तपस्वी कौशलिकेन पित्रा मम जनकेन राज्ञा स्वयमात्मना तदा दीयमानां मां नैछत्, न वांछतिस्म. कीदृश एषः? जितेंद्रियः, पुनः कीदृशः? संयतः सप्तदशविधसंयमधारी, पुनः कीदृशः? ब्रह्मचारी, ब्रह्मचर्यवान्.

॥ मूलम् ॥—महायसो एस महाणुभावो । घोरव्वओ घोरपरक्कमो य ॥ मा एयं हीलह अहीलणिज्जं । मा भे सव्वाण दहिज्ज एस ॥ २३ ॥ व्याख्या—पुनरेष साधुर्महायशो वर्तते, पुनर्महानुभागोऽचिंत्यातिशयः, पुनरेष घोरव्रतो दुर्धरमहाव्रतधारी, पुनर्घोरपराक्रमो रौद्रमनोबलः, क्रोधादिचतुःकषायाणां जये रौद्रसामर्थ्यस्तस्मादेनं तपस्विनं मा हीलयथ? कथंभूतमेनं? 'अहीलणीयं' अवगणनायायोग्यं स्तवनार्हमित्यर्थः, एष भे इति भवतो युष्मान्

या संजय हस्समाणं । कुद्धे कुमारे परिनिव्ववेइ ॥ २० ॥ व्याख्या—तत्र कौशलिकस्य राज्ञः 'भद्रा' इति सुता भद्रा वर्तते, सा भद्रा तं साधुं तैर्ब्राह्मणकुमारैर्हस्यमानं दृष्ट्वा क्रुद्धान् मारणोद्यतान् कुमारान् ब्राह्मणबालान् परिनिर्वापयति, वचनैरुपशमयतीत्यर्थः. कीदृशं तं साधुं? संयतं संयमावस्थायां स्थितं, कीदृशी सा भद्रा? अनिंदितांगी, अनिंदितमंगं यस्याः साऽनिंदितांगी शोभनशरीरा. ॥ २० ॥

॥ मूलम् ॥—देवाभिओगेण निओइएणं । दिन्ना पुरन्ना मनसा न झाया ॥ नरिंददेविंदभिवंदिएणं । जेणाहि वंता इसिणा स एसो ॥ २१ ॥ व्याख्या—सा भद्रा किमवादीत्तदाह—भो ब्राह्मणाः! एष स ऋषिर्वर्तते, येनर्षिणाहं वांताहं त्यक्तास्मि, कथंभूतेनर्षिणा? नरेन्द्रदेवेन्द्राभिवंदितेन, कीदृश्यहं? राज्ञा दत्तास्मै अर्पिता, अनेनर्षिणाहं राज्ञा दीयमानापि मनसापि न ध्याता, नाभिलषिता, कीदृशेन राज्ञा? देवाभियोगेन नियोजितेन, देवस्य यक्षस्याभियोगो बलात्कारो देवाभियोगस्तेन यक्षदेवहठेन नियोजितेन प्रेरितेनेत्यर्थः. एतादृशोऽयं त्यागी मुनिरस्ति, तस्माद्भवद्भिर्न कदर्थ्यः, इति भद्रा राजकन्या ब्राह्मणानवादीत्.

करेला= =प्रेरणाकरेला=

॥ २१ ॥ पुनः सा किमाह—

॥ मूलम् ॥—एसो हु सो उग्गतवो महप्पा । जिइंदियो संजयबंभचारी ॥ जो मे तया नेच्छइ दिज्जमाणिं । पिउणा सयं कोसलिएण रन्ना ॥ २२ ॥ व्याख्या—हु इति निश्चयेनोपलक्षितो मयैषः, स उग्रतपा महात्मा वर्तते, उग्रं तपो यस्य स उग्रतपाः, महान् प्रशस्य आत्मा यस्य स महात्मा महापुरुषः, स इति कः? यस्तपस्वी कौशलिकेन पित्रा मम जनकेन राज्ञा स्वयमात्मना तदा दीयमानां मां नैच्छत्, न वांछतिस्म. कीदृश एषः? जितेंद्रियः, पुनः कीदृशः? संयतः सप्तदशविधसंयमधारी, पुनः कीदृशः? ब्रह्मचारी, ब्रह्मचर्यवान्.

॥ मूलम् ॥—महायसो एस महाणुभावो । घोरव्वओ घोरपरक्कमो य ॥ मा एयं हीलह अहीलणिज्जं । मा भे सव्वाण दहिज्ज एस ॥ २३ ॥ व्याख्या—पुनरेष साधुर्महायशो वर्तते, पुनर्महानुभागोऽचिंत्यातिशयः, पुनरेष घोरव्रतो दुर्धरमहाव्रतधारी, पुनर्घोरपराक्रमो रौद्रमनोबलः, क्रोधादिचतुःकषायाणां जये रौद्रसामर्थ्यस्तस्मादेनं तपस्विनं मा हीलयथ? कथंभूतमेनं? 'अहीलणीयं' अवगणनायायोग्यं स्तवनार्हमित्यर्थः, एष भे इति भवतो युष्मान्

सर्वान्नानिर्धाक्षीन् भस्मसात्कुर्वीत, इति यदा नृपपुत्र्योक्तं, तदा यक्षः किमकार्षीदित्याह—

॥ मूलम् ॥—एयाइं तीसे वयणाइ सुच्चा । पत्तीइ भद्दाइ सुभासियाइं ॥ इसिस्स वेयावडियट्ठयाए । जक्खा कुमारे विणिवारयंति ॥ २४ ॥ व्याख्या—यक्षाः परिवारसहिता ऋषेर्वैयावृत्त्यर्थं कुमारान् ब्राह्मणबालकान् विशेषेण निवारयंति, किं कृत्वा? तस्याः सोमदेवस्य यज्ञाधिपस्य पुरोहितस्य पत्न्या भद्राया वचनानि श्रुत्वा, कीदृशानि वचनानि? सुभाषितानि सुष्टु भाषितानि, ब्राह्मणेभ्यः शिक्षारूपाणि प्रकाशितानि. ॥ २४ ॥

॥ मूलम् ॥—ते घोररूवा ठिअंतरिक्खे । अथुग्गा तहिं तं जलतालयंति ॥ ते भिन्नदेहे रुहिरं वमंते । पासित्तु भद्दा इणमाहु भुज्जो ॥ २५ ॥ व्याख्या—ते यक्षास्तदा तस्मिन् काले तान् जनांस्तान् ब्राह्मणांस्ताडयंति चपेटादिभिर्घ्नंति, कीदृशास्ते यक्षाः? घोररूपाः, पुनः कीदृशास्ते? अंतरिक्षे आकाशे स्थिताः, पुनः कीदृशास्ते? अत्युग्रा अत्युग्रपरिणामयुक्ताः. उत्प्रेक्ष्यंतेऽसुरा इवेत्यर्थः. ते हि यस्मिन् यज्ञपाटके ते इति तान् भग्नदेहान् दृष्ट्वा भद्रा भूयः पुनरपि वचनं प्राहुरित्याह ब्रूते, प्राकृतत्वाद्वचनव्यत्ययः. तान् किं कुर्वतः? रुधिरं

वमंत इति. ॥ २५ ॥

॥ मूलम् ॥—गिरिं नहेहिं खणह । अयं दंतेहिं खायह ॥ जायवेयं पाएहिं हणह । जे भिक्खुं अवमन्नह ॥ २६ ॥ व्याख्या—अरे वराका इत्यध्याहारः, यूयं नखैः कररुजैर्गिरिं पर्वतं खनथ इव, इवशब्दस्य सर्वत्र ग्रहणं कर्तव्यं. पुनर्दंतैरयो लोहं खादथ भक्षयथ इव, पुनर्जातवेदसमग्निं पादैर्हथ इव, अग्निं चरणैः स्पर्शथ इव, ये यूयं भिक्षुं साधुमवमन्यथ, अस्य भिक्षोरपमानं कुरुथ. गिरिलोहाग्नीनामुपमानमनर्थफलहेतुत्वादुक्तं. ॥ २६ ॥

॥ मूलम् ॥—आसीविसो उग्गतवो महेसी । घोरव्वओ घोरपरक्कमो य ॥ अगणिंव पक्खंदपयंगसेणा । जे भिक्खुअं भत्तकाले वहेह ॥ २७ ॥ व्याख्या—भो मूर्खा इति अध्याहारः, एपस्तपस्वी आशीविपः शापदाने समर्थः, आशीविषः सर्प उच्यते, यथा सर्पः पादादिना अवमन्यमानो मारणाय स्यात्, तथा अयमपि शापविपेण मारयति, पुनरयमुग्रतपा महर्षिः, पुनरसौ घोरव्रतः, पुनर्घोरपराक्रमः, ये पुनर्यूयं भक्तकाले भोजनकाले भिक्षुकं पूर्वोक्तलक्षणं मुनिं दध्यथ, यष्ट्यादिभिस्ताडयथ. ते यूयं पतंगसेनाः शलभसमूहा अग्निं प्र-



=भिक्षुकेनानही नवला

सर्वान्नानिर्धाक्षीन्न भस्मसात्कुर्वीत, इति यदा नृपपुत्र्योक्तं, तदा यक्षः किमकार्षीदित्याह—

॥ मूलम् ॥—एयाइं तीसे वयणाइ सुच्चा । पत्तीइ भद्दाइ सुभासियाइं ॥ इसिस्स वेयावडियट्ठाए । जक्खा कुमारे विणिवारयंति ॥ २४ ॥ व्याख्या—यक्षाः परिवारसहिता ऋषेर्वैयावृत्त्यर्थं कुमारान् ब्राह्मणबालकान् विशेषेण निवारयंति, किं कृत्वा? तस्याः सोमदेवस्य यज्ञाधिपस्य पुरोहितस्य पत्न्या भद्राया वचनानि श्रुत्वा, कीदृशानि वचनानि? सुभाषितानि सुष्टु भाषितानि, ब्राह्मणेभ्यः शिक्षारूपाणि प्रकाशितानि. ॥ २४ ॥

॥ मूलम् ॥—ते घोररूवा ठिइयंतरिक्खे । असुरा तहिं तं जणतालयंति ॥ ते भिन्नदेहे रुहिरं वमंते । पासित्तु भद्दा इणमाहु भुज्जो ॥ २५ ॥ व्याख्या—ते यक्षास्तदा तस्मिन् काले तान् जनांस्तान् ब्राह्मणांस्ताडयंति चपेटादिभिर्घ्नंति, कीदृशास्ते यक्षाः? घोररूपाः, पुनः कीदृशास्ते? अंतरिक्षे आकाशे स्थिताः, पुनः कीदृशास्ते? अत्युग्रा अत्युग्रपरिणामयुक्ताः. उत्प्रेक्षंतेऽसुरा इवेत्यर्थः. ते हि यस्मिन् यज्ञपाटके ते इति तान् भिन्नदेहान् दृष्ट्वा भद्रा भूयः पुनरपि वचनं प्राहुरित्याह ब्रूते, प्राकृतत्वाद्वचनव्यत्ययः. तान् किं कुर्वतः? रुधिरं

वमंत इति. ॥ २५ ॥

॥ मूलम् ॥—गिरिं नहेहिं खणह । अयं दंतेहिं खायह ॥ जायवेयं पाएहिं हणह । जे भिक्खुं अवमन्नह ॥ २६ ॥ व्याख्या—अरे वराका इत्यध्याहारः, यूयं नखैः कररुजैर्गिरिं पर्वतं खनथ इव, इवशब्दस्य सर्वत्र ग्रहणं कर्तव्यं. पुनर्दंतैरयो लोहं खादथ भक्षयथ इव, पुनर्जातवेदसमग्निं पादैर्हथ इव, अग्निं चरणैः स्पर्शथ इव, ये यूयं भिक्षुं साधुमवमन्यथ, अस्य भिक्षोरपमानं कुरुथ. गिरिलोहाग्नीनामुपमानमनर्थफलहेतुत्वादुक्तं. ॥ २६ ॥

॥ मूलम् ॥—आसीविसो उग्गतवो महेसी । घोरव्वओ घोरपरक्कमो य ॥ अगणिंव पक्खंदपयंगसेणा । जे भिक्खुयं भत्तकाले वहेह ॥ २७ ॥ व्याख्या—भो मूर्खा इति अध्याहारः, अयं तपस्वी आशीविषः शापदाने समर्थः, आशीविषः सर्प उच्यते, यथा सर्पः पादादिना अवमन्यमानो मारणाय स्यात्, तथा अयमपि शापविषेण मारयति, पुनरयमुग्रतपा महर्षिः, पुनरसौ घोरव्रतः, पुनर्घोरपराक्रमः, ये पुनर्यूयं भक्तकाले भोजनकाले भिक्षुकं पूर्वोक्तलक्षणं मुनिं विध्यथ, यष्ट्यादिभिस्ताडयथ. ते यूयं पतंगसेनाः शलभसमूहा अग्निं प्र-

स्कंदथ इव. आक्रमथ इव. कोऽर्थः? यथा पतंगसेना अग्निं वधाय प्रविश्यमाना म्रियंते, तथा यूयं मरिष्यथ इत्यर्थः. ॥ २७ ॥

॥ मूलम् ॥—सीसेण एयं सरणं उवेह । समागया सव्वजणेण तुम्हे ॥ जइ इच्छह जीवियं वा धणं वा । लोगंपि एसो कुविउ डहिज्जा ॥ २८ ॥ व्याख्या—हो ब्राह्मणाः! तुम्हे इति यूयं सर्वजनेन सर्वकुटुंबेन समागताः संमिलिताः संत एनं तपस्विनं शीर्षेण मस्तकेन शरणं उपेत? शिरःप्रणामपूर्वं सर्वेऽप्यागत्यायमेवास्माकं शरणमित्युक्त्वा अभ्युपागच्छत? यदि यूयं जीवितं वाथवा धनमिच्छथ, यत एषः साधुस्तपस्वी कुपितः सन् लोकं समस्तं नगरादिकं दहेत्. ॥ २८ ॥ उसके बाद उपाध्यायने विद्यार्थियों को कैसे देखे फिर क्या किया सो कहते है=

॥ मूलम् ॥—अवहेडियपिट्ठिसउत्तमंगे । पसारिया बाहु अकम्मचिट्ठे ॥ निब्भेरियच्छे रुहिरं वमंते । उड्ढमुहे निग्गयजीहनित्ते ॥ २९ ॥ ते पासिआ खंडिअकट्ठभूए । विमणो विसिन्नो अह माहणो सो ॥ इसिं पसाएइ सभारियाउ । हीलं च निंदं च खमाह भंते ॥३०॥ व्याख्या—अथानंतरं स ब्राह्मण ऋषिं प्रसादयति, कीदृशः स ब्राह्मणः? सभार्यः पत्नीसहि-



=आवो= ीकारकरो= होतो= नीरखेएसीहम सक्तिहै= तकरेहै=

र्गतजिह्वानेत्रान्, जिह्वा च नेत्रं च जिह्वानेत्रे, निर्गते जिह्वानेत्रे येषां ते निर्गतजिह्वानेत्रास्तान्. ॥ २ए ॥ ३० ॥ अथ स ब्राह्मणो हरिकेशऋषिं कीदृशैर्वचनैः प्रसादयति? तानि वचनान्याह—

॥ मूलम् ॥—बालेहिं मूढेहिं अयाणएहिं । जं हीलिया तस्स खमाह नंते ॥ महप्पसाया इसिणो हवंति । न हु मुणी कोवपरा हवंति ॥ ३१ ॥ व्याख्या—जो पूज्याः! जो जदंताः! एजिर्बालैः शिशुजिर्मूढैः कषायमोहनीयवशगैर्मूर्खैर्हिताहितविवेकविकलैः जं इति यस्मात्कारणात् यूयमवहीलिता अवगणिताः, तस्स इति तस्य अवहीलनस्यापराधं क्षमध्वं? ऋषयो महाप्रसादा जवंति, अतीवनिर्मलचेतसो जवंति. न पुनर्मुनयः कोपपराः क्रोधपरायणा जवंति, मुनयः क्षमावंतो जवंति. ॥ ३१ ॥ तदा मुनिः किमवादीदित्याह—

॥ मूलम् ॥—पुव्विं च इण्हिं च अणागयं च । मणप्पओसो न मे अत्थि कोइ ॥ जक्का उ वेयावडियं करेंति । तम्हा हु एए निहया कुमारा ॥ ३२ ॥ व्याख्या—जो ब्राह्मणाः! मे मम पूर्वमतीतकाले च पुनरिण्हिं इदानीं वर्तमाने काले, च पुनरनागते आगा-

मिनि काले मनःप्रद्वेषो नास्ति, अतीतकाले नासीत्, इदानीं प्रद्वेषो नास्ति, अग्रेऽपि न भविष्यतीत्यर्थः. कोऽप्यल्पोऽपि नास्ति, हु पुनरर्थे, येन यक्षा वैयावृत्यं साधुतर्जकनिवारणां साधुभक्तिं कुर्वंति, तस्मात् हु इति निश्चयेन एते कुमारा यक्षैर्निहताः ॥३२॥ अथ सर्वे उपाध्यायादयस्तद्गुणाकृष्टचित्ता एवमाहुः—

॥ मूलम् ॥—अत्थं च धम्मं च वियाणमाणा । तुब्भे नवि कुप्पह भूइपन्ना ॥ तुब्भं तु पाए सरणं उवेमो । समागया सव्वजणेण अम्हे ॥ ३३ ॥ व्याख्या—हे स्वामिनः! यूयमपि निश्चयेन न कुप्यत, कोपं न कुरुत. कथंभूता यूयं? अर्थं सर्वशास्त्राणां तत्वं, च पुनर्धर्मं वस्तूनां स्वभावं, अथवा धर्मं दशविधं साध्वाचारं विजानानाः, अर्थधर्मज्ञा इत्यर्थः. पुनः कथंभूता यूयं? भूतिः सर्वजीवरक्षा, तत्र प्रज्ञा येषां ते भूतिप्रज्ञाः, तस्माद्वयं तुब्भं इति युष्माकं शरणमुपेम उपागताः स्मः. अम्हे शब्देन वयमिति ज्ञेयं, कीदृशा वयं? सर्वजनेन समागताः सर्वकुटुंबपरिवारेण समागता मिलिताः ॥ ३३ ॥

॥ मूलम् ॥—अच्चेमु ते महाभाग । न ते किंचि न अच्चिमो ॥ भुंजाहि सालिमं कूरं ।



१ २=जाण= =यक्षोकरकेहणया= =जाणनारा=

नाणावंजणसंजुयं ॥ ३४ ॥ व्याख्या—हे महाभाग! ते तव सर्वमप्यर्चयामः, ते तव सर्वमपि श्लाघयामः, न ते तव किमपि चरणधूल्यादिकमपि यद्वयं नार्चयामः, के वयं ये त्वां नार्चयामः, त्वं तु देवानां पूजार्हः, वयं तव कां पूजां कुर्मः? एतादृशी का पूजास्ति? या तव योग्या, परंतु वयं दासभावं कुर्म इत्यर्थः. 'सालिमं' इति शालिमयं सम्यग्जातिशुद्धं शालिनिष्पन्नं कूरं तंदुलभोज्यं भुंजाहि भुंक्ष्व? कथंभूतं कूरं? नानाव्यंजनसंयुतं, बहुविधैर्व्यंजनैर्दध्यादिभिः सहितं ॥ ३५ ॥

॥ मूलम् ॥—इमं च मे अत्थि पभूयमन्नं । तं भुंजसू अम्ह अणुग्गहट्ठा ॥ बाढं ति पडिच्छइ भत्तपाणं । मासस्स पारणए महप्पा ॥ ३५ ॥ व्याख्या—हे स्वामिन्! मे मम इदं प्रत्यक्षं खंडखंडकादिकं अन्नं प्रभूतं वर्तते, प्रचुरं वर्तते. पूर्वमपि शालिमयं कूरग्रहणं कृतं, अत्र च पुनरन्नग्रहणं तत्सर्वान्नप्राधान्यख्यापनार्थं, तद्भोज्यं भुंक्ष्वास्माकमनुग्रहार्थं लाभार्थं, इति ब्राह्मणैः प्रोक्ते सति मुनिः प्राह—बाढं इत्युक्त्वा, तथास्तु, बाढंशब्दोंगीकारे, एवमेव करोमि, गृहीष्यामीत्युक्त्वा साधुर्मासस्य पारणके भक्तपानमाहारपानीयं प्रतीच्छत्यंगीकरोति.

कथंभूतः स मुनिः? महात्मा, महान् निर्मलो निःकषाय आत्मा यस्य स महात्मा महापुरुषः.

॥ मूलम् ॥—तहिं य गंधोदयपुप्फवासं । दिव्वा तहिं वसुहारा य वुट्ठा ॥ पहया उ दुंदुहिउ सुरेहिं । आगासे अहो दाणं च घुट्ठं ॥ ३६ ॥ व्याख्या—तहिं तस्मिन् यज्ञपाटके मुनिना आहारे गृहीते सति गंधोदकपुष्पवर्षमभूदिति शेषः, सुगंधपानीयकुसुमवर्षा आसन् इत्यर्थः. च पुनस्तस्मिन् स्थाने दिव्या प्रधाना देवैः कृता वसुधारा वृष्टा, स्वर्णदीनाराणां वृष्टिरभूत्. वसु द्रव्यं तस्य धारा सततपातजनिता वसुधारा, सा वृष्टा देवैः पातिता इत्यर्थः. तु पुनराकासे सुरैर्दुंदुभयः प्रहताः, देवैराकाशे वादित्राणि वादितानि, च पुनराकाशे अहोदानमहोदानमिति घुष्टं देवैः शब्दितं. ॥ ३६ ॥ तदा च द्विजा विस्मिताः किमाहुस्तदाह—

॥ मूलम् ॥—सक्खं खु दीसइ तवे विसेसो । न दीसइ जाइविसेसो कोइ ॥ सेवागपुत्तं हरिएससाहुं । जस्सेरिसा इड्ढिमहाणुभागा ॥ ३७ ॥ व्याख्या—खु इति निश्चयेन तपोविशेषः साक्षाद् दृश्यते, जातिविशेषः कोऽपि न दृश्यते, तपोमाहात्म्यं दृश्यते, जातिमाहात्म्यं किमपि न दृश्यते. श्वपाकपुत्रं चांडालपुत्रं तं हरिकेशसाधुं पश्यत इति शेषः. तमिति

कं? यस्य हरिकेशस्य साधोरेतादृशी सर्वजनप्रसिद्धा ऋद्धिर्वर्तते, देवसाहाय्यरूपा संपद्वर्तते, कीदृशी ऋद्धिः? महानुभागा महाननुभागोऽतिशयो यस्याः सा महानुभागा, महामाहात्म्यसहिता इत्यर्थः. ॥३७॥ अथ मुनिस्तान् ब्राह्मणानुपशांतमिथ्यात्वान् दृष्ट्वा धर्मोपदेशमाह.

॥ मूलम् ॥—किं माहणा जोइसमारभंता । उदएण सोहिं बहियां विमग्गह ॥ जं मग्गहा बाहिरियं विसोहिं । न तं सुदिठ्ठं कुसला वयंति ॥ ३८ ॥ व्याख्या—किमितिशब्दोऽधिक्षेपे, भो ब्राह्मणा यूयं शृणुत? ज्योतिरग्निं समारभंतः, अग्नीनां समारंभं कुर्वतः किं ब्राह्मणा भवंति? अपि तु न भवंतिः भो ब्राह्मणाः! उदकेन शोधिं कुर्वतो बाह्यां शुद्धिं विमार्गयथ जानीथ. यागं कुर्वतः स्नानं कुर्वतश्च ब्राह्मणा न भवंतीत्यर्थः. यां यागस्नानादिकां बाह्यां विशुद्धिं विमार्गयथ विचारयथ, तां बाह्यां विशुद्धिं कुशला ज्ञाततत्त्वाः सुदृष्टं सम्यग्दृष्टं न वदंति, यत् यज्ञादावग्नीनां तेजस्कायस्थजीवानां विराधना, अथ च स्नानादौ अप्कायस्थजीवानां विराधना विशुद्ध्यर्थं विधीयते तत्तत्त्वज्ञैर्न सम्यग्दृष्टं, सम्यग् न कथितमित्यर्थः. यदुक्तं—स्नानं मनोमलत्यागो । यागश्चेंद्रियरोधनं ॥ अभेददर्शनं ज्ञानं । ध्यानं निर्विषयं

अध्ययनम्

=आरनकरता=

=स्नारोजायेतुंकहे तानहो=

॥४१४॥

मनः ॥ १ ॥ इति. ॥ ३८ ॥

॥ मूलम् ॥—कुसं च जूवं तणकट्ठमग्गिं । सायं च पायं उदयं फुसंता ॥ पाणाइं भूयाइं विहेडयंता । भुज्जोवि मंदा पकरेह पावं ॥ ३९ ॥ व्याख्या—भो ब्राह्मणाः! मंदा यूयं भूयोऽपि पुनरपि शुद्धिकरणप्रस्तावेऽपि पापं प्रकुरुथ. पूर्वमपि संसारकार्यकरणप्रस्तावे आरंभं कृत्वा प्राणान् भूतानि विनाश्य पातकमुपार्जितं, पुनर्धर्मकरणप्रस्तावे तदेव क्रियते इत्यर्थः. किं कुर्वंतः? कुशं दर्भं, यूपं यज्ञस्तंभं, तृणं वीरणादिनमादिकं, काष्टं शमीवृक्षस्येंधनं, अग्निं च, एतत्सर्वं प्रतिगृह्णतः, एतत्सायं संध्याकाले, च पुनः प्रातः प्रभाते उदकं पानीयं स्पृशंत आचमनं कुर्वंतः, अत एव प्राणान् द्वींद्रियत्रींद्रियचतुरिन्द्रियान् भूतान्, असून् पृथिव्यादीनपि तदाधारभूतान् विहेठयंतो विशेषेण हिंसंत इत्यर्थः. एतेषामेव प्राणभूतसत्वानां विराधनेन हिंसा भवति. पुनरेतेषामेव शुद्धिकरणकालेऽपि विराधना विधीयते, कुतोऽस्माकं शुद्धिर्भविता? इति न जानंति, अत एव मंदा मूर्खाः, यत उक्तं—दृष्टिपूर्वं चरेन्मार्गं । वस्त्रपूतं पिवेज्जलं ॥ ज्ञानपूतं सृजेद्धर्मं । सत्यपूतं वदेद्वचः ॥ १ ॥ ३९ ॥ अथ प्रत्यु-

त्पन्नशंकास्ते ब्राह्मणा धर्मं पप्रच्छुः—

॥ मूलम् ॥—कहं चरे भिक्खु वयं जयामो । पावाइं कम्माइं पणुल्लयामो ॥ अक्खाहि-
णो संजयजक्खपूइया । कहं सुजुट्ठं कुसला वयंति ॥ ४० ॥ व्याख्या—हे भिक्षो ! वयं कथं
चरेमहि ? कस्यां क्रियायां प्रवर्तेमहि ? हे भिक्षो ! पुनर्वयं कथं यजामो यागं कुर्मः ? पुन-
र्वयं पापानि पापहेतूनि कर्माणि कथं पणुल्लवामः प्रणुदामः प्रकर्षेण स्फेटयामः ? हे यक्षपू-
जित ! हे संयत ! जितेंद्रिय ! कुशला धर्ममर्मज्ञा विद्वांसः कथं केन प्रकारेण सुजुट्ठं इति
सुष्टु शोभनं इष्टं स्विष्टं शोभनयजनं वदंति ? तत् शोभनयज्ञं नोऽस्मान् आख्याहि? कथय ?
इत्यर्थः. ॥ ४० ॥ अथ मुनिराह—

॥ मूलम् ॥— छज्जीवकाये असमारभंता । मोसं अदत्तं च असेवमाणा ॥ परिग्गहं
इत्थिओ माणमायं । एयं परिन्नाय चरंति दंता ॥ ४१ ॥ व्याख्या—पूर्वं ब्राह्मणैरयं प्रश्नो वि-
हितः, कथं वयं प्रवर्तेमहि ? तस्योत्तरं—भो ब्राह्मणाः ! दांता जितेंद्रिया एतत्पूर्वोक्तं पाप-
हेतुकं परिज्ञाय चरंति प्रवर्तंते. साधवो ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया आरंभाद्रि-

=दुष्करा=
=श्रो=

वर्तंते इति भावः. दांताः किं कुर्वाणाः? षट्जीवकायान् असमारंभमाणा अनुपमर्दयंतः, पुनर्मृषावादं च पुनरदत्तं असेवमानाः, पुनः परिग्रहं उपकरणमूर्छां, सचित्ताचित्तद्रव्यग्रहणरक्षणात्मकं, पुनः स्त्रीं, तु पुनर्मानमभिमानं, पुनर्मायां परवंचनात्मिकां असेवमानाः, मानमाययोः सहकारित्वेन क्रोधलोभयोरपि त्यागो ज्ञेयः. एतान् सर्वान् पापहेतून् ज्ञात्वा, पुनरत्यक्त्वा साधवो यतनया चरंति, अतो भवद्भिरपि एवं चरितव्यमित्यर्थः ॥ ४१ ॥ अथ द्वितीयप्रश्नस्य कथं यजाम इत्यस्य उत्तरमाह—

॥ मूलम् ॥—सुसंवुडा पंचहिं संवरेहिं । इह जीवियं अणवकंखमाणा ॥ वोसट्टकाया सुइचत्तदेहा । महाजयं जयई जन्नसिठं ॥ ४२ ॥ व्याख्या—भो ब्राह्मणाः! पंचभिः संवरैर्हिंसामृषाऽदत्तमैथुनपरिग्रहविरमणैः सुसंवृताः सुतरामतिशयेन संवृता आच्छादिताश्रवा निरुद्धपापागमनद्वाराः सुसंवृताः संयमिनः जन्नसिठं यज्ञश्रेष्टं यजंति कुर्वंतीत्यर्थः. यज्ञेषु श्रेष्टो यज्ञश्रेष्टस्तं, अथवा श्रेष्टो यज्ञः श्रेष्टयज्ञस्तं, प्राकृतत्वात् यज्ञश्रेष्टमिति ज्ञेयं. कीदृशं श्रेष्टयज्ञं? महाजयं महान् जयः कर्मारीणां विनाशो यस्मिन् स महाजयस्तं. कीदृशाः सुसंवृताः?

इहास्मिन् मनुष्यजन्मनि जीवितं, प्रस्तावादसंयमजीवितव्यं अनवकांक्षमाणाः, असंयमम-नीप्संत इत्यर्थः. पुनः कीदृशाः सुसंवृताः ? व्युत्सृष्टदेहाः, विशेषेण परीषहोपसर्गसहने उत्सृष्टः कल्पितः कायो यैस्ते व्युत्सृष्टदेहाः, पुनः कीदृशाः ? शुचयो निर्मलव्रताः, पुनः कीदृशाः ? त्यक्तदेहाः, त्यक्तो निर्ममत्वेन परिचर्याभावेन अवगणितो देहो यैस्ते त्यक्तदेहाः, एतादृशाः साधवः स्विष्टं यज्ञं कुर्वंति, एष एव कर्मप्रस्फेटनोपाय इत्युक्तं. ततो भवंतोऽप्येवं यजतामिति भावः. ॥ ४२ ॥ यजमानस्य कान्युपकरणानीति पुनर्ब्राह्मणाः पृछंतिस्म—

॥ मूलम् ॥—के ते जोई के च ते जोइठाणं । का ते सुया किं च ते कारिसंगं ॥ एहा य ते कयरा संति भिक्खू । कयरेण होमेण हुणासि जोइ ॥ ४३ ॥ व्याख्या—हे मुने! ते तव किं ज्योतिः? कोऽग्निः? च पुनस्ते तव किं ज्योतिःस्थानमग्निस्थानं? अग्निकुंडं किमस्ति? ते तव काः पुनः शुचो घृतादिप्रक्षेपका दर्व्यः? च पुनस्ते तव करीषांगं अग्न्युद्दीपनकारणं किमस्ति? विध्याप्यमानोऽग्निर्येनोद्दीप्यते संधुक्ष्यते तत्करीषांगं तव किं विद्यते? च पुनरेधाः कतराः काः समिधः? याभिरग्निः प्रज्वाल्यते ताः काः संति? च पुनः शांतिर्दुरितोपशमहे-

=शरीरकीसार संभाल नहीकर वाची=
=जगाकरवाने क्याक्या उपकरणो जोहीये=
=ब्राणां = अ सलगाय=
॥ ४१८ ॥
=देदीपमान हो

तुरध्ययनपद्धतिस्तव कतरा कास्ति? हे भिक्षो! त्वं कतरेणेति केन होमेन हवनविधिना ज्योतिरग्निं जुहोषि? अग्निं प्रीणयसि? षड्जीवनिकायविराधनांविना हि यज्ञो न स्यात्. हे भिक्षो! भवता षड्जीवनिकायविराधना तु पूर्वं निषिद्धा. एवं ते ब्राह्मणा मुनये यज्ञं यज्ञोपकरणसामग्रीं पप्रच्छुः. ॥ ४३ ॥ अथ मुनिर्योग्यं यज्ञमाह—

॥ मूलम् ॥—तवो जोई जीवो जोइठाणं । जोगो सुया सरीरं कारिसंगं ॥ कम्मं एहा संजमजोगसंती । होमं हुणामि इसिणं पसत्थं ॥ ४४ ॥ व्याख्या—भो ब्राह्मणाः! अस्माकं तपो ज्योतिः, तप एवाग्निरस्ति, कर्मेंधनदाहकत्वात्. द्वादशविधं हि तपः सकलकर्मकाष्टानि प्रज्वालयति, जीवो ज्योतिःस्थानं; जीवोऽग्निकुंडं, तपस आधारत्वात्. मनोवाक्काययोगास्ते शुचो दर्व्यो ज्ञेयाः. मनोवाक्काययोगैः शुभव्यापारा घृतस्थानीयास्तपोऽग्निप्रज्वलनहेतवो वर्तंते. शरीरं करीषांगं, तेनैव शरीरेण तपोऽग्निर्दीप्यते, शरीरसाहाय्येन तपः स्यादित्यर्थः, शरीरमाद्यं खलु धर्मसाधनमित्युक्तेः. कर्माण्येधा इंधनानि कर्मेंधनानि तपोऽग्निः प्रज्वालयति, महादुष्टकर्मकारिणोऽपि तपसा निर्मलाः संजाताः. संयमयोगः शांतिः, संयमस्य सप्तदशवि-

=देदीप्यमान
करवानाकार
तहै—
=बीबिहै

धस्य योगः संबंधः स शांतिः, सर्वजीवानामुपद्रवनिवारकत्वात्. अनेन होमेनाहं तपोऽग्निं जुहोमि. कथंभूतेन होमेन? ऋषीणां प्रशस्तेन, मुनीनां योग्येन, साधवो ह्येतादृशं यज्ञं कुर्वंति; न अपरे एतादृशं यज्ञं कर्तुं समर्था भवंति. ॥ ४४ ॥ यज्ञस्वरूपं तु साधुनोक्तं, अथ ब्राह्मणाः स्नानस्वरूपं पृछंति—

॥ मूलम् ॥—के ते हरए के य ते संतितित्थे । कहिंसि ह्णाउ य रयं जहासि ॥ आयरकणे संजय जक्खपूइया । इछामु नाउं भवउ सगासे ॥ ४५ ॥ व्याख्या—हे ऋषे यक्षपूजित! त्वं नोऽस्मान् आचक्ष्व ब्रूहि? वयं भवतः सकाशाद् ज्ञातुमिछामः, हे मुने! ते तव को ह्रदः? कः स्नानकरणयोग्यजलाधारः? किं पुनस्तव शांतितीर्थं? शांत्यै पापशांतिनिमित्ततीर्थं शांतितीर्थं पुण्यक्षेत्रं, यस्मिन् तीर्थे दानादिबीजमुप्तं पातकशमनं पुण्योपार्जकं च स्यात्, कुरुक्षेत्रादिसदृशं किं तीर्थं वर्तते? पुनर्हे मुने! त्वं कस्मिन् स्थाने स्नातः सन् रजः कर्ममलं जहासि त्यजसि? त्वं निर्मलो भवसि? एतत्सर्वेषां प्रश्नानामुत्तरं वदेत्यर्थः. ॥ ४५ ॥ इति पृष्टे मुनिराह—

॥ मूलम् ॥—धम्मे हरए बंभे संतितित्थे । अणाविले अत्तपसन्नलेसे ॥ जहिंसि एहाओ विमलो विसुद्धो । सुसीयभूओ पजहामि दोसं ॥ ४६ ॥ व्याख्या—भो ब्राह्मणाः! धर्मो हिंसाविरमणो दयाविनयमूलो ह्रदो वर्तते, कर्ममलापहारकत्वात्. ब्रह्मचर्यं मैथुनत्यागः शांतितीर्थं, तस्य तीर्थस्य सेवनात् सर्वपापमूलं रागद्वेषौ निवारितावेव, यदुक्तं—ब्रह्मचर्येण सत्येन । तपसा संयमेन च ॥ मातंगर्षिर्गतः शुद्धिं । न शुद्धिस्तीर्थयात्रया ॥ १ ॥ कीदृशे ब्रह्मचर्यतीर्थे? अनाविले निर्मले, पुनः कीदृशे ब्रह्मचर्यतीर्थे? आत्मप्रसन्नलेश्ये, आत्मनः प्रसन्ना निर्मलत्वकारणं लेश्या यस्मिन् स आत्मप्रसन्नलेश्यस्तस्मिन्, आत्मनिर्मलत्वकारणं तेजःपद्मशुक्लादिलेश्यात्रयं, तेन सहिते इत्यर्थः. यत्र यस्मिन् ब्रह्मचर्यतीर्थे स्नातोऽहं विमलो भावमलरहितो विशुद्धो गतकलंकः सुशीतीभूतो रागद्वेषादिरहितः सन् दोषं कर्म ज्ञानावरणीयादिकमष्टप्रकारकं प्रकर्षेण जहामि त्यजामि. ॥ ४६ ॥

॥ मूलम् ॥—एयं सिणाणं कुसलेहि दिट्ठं । महासिणाणं इसिणं पसत्थं ॥ जहिं सिएहाया विमला विसुद्धा । महारिसी उत्तमं ठाणं पत्तेत्तिबेमि ॥ ४७ ॥ व्याख्या—पूर्वमुक्तं

१२

=दूर होवे=

=नाहेलो=

=त्याग करूं=

॥४२१॥

कर्मरजोविनाशकं स्नानं, तस्योत्तरमाह—जो ब्राह्मणाः कुशलैस्तत्त्वज्ञैः केवलिभिरेतत् स्नानं दृष्टं, परेऽन्यश्च प्रोक्तं, कथंभूतमेतत्स्नानं? महास्नानं सर्वेषु स्नानेषूत्तमं, पुनः कीदृशं तत्स्नानं? ऋषीणां प्रशस्तं, मुनीनां योग्यं, येन स्नानेन स्नाताः कृतशौचा विमलाः कर्ममलरहिताः, अत एव विशुद्धा निष्कलंका महर्षयो मुनीश्वरा उत्तमं प्रधानं स्थानमर्थान्मोक्षस्थानं प्राप्ता इति अहं ब्रवीमि, जंबूस्वामिनंप्रति श्रीसुधर्मास्वामी प्राह. ॥ ४७ ॥ इति हरिकेशीयमध्ययनं द्वादशं संपूर्णं. ॥ १२ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां हरिकेशीयाध्ययनस्यार्थः संपूर्णः ।१२।



॥ अथ त्रयोदशमध्ययनं प्रारभ्यते ॥

तपः कुर्वता पुरुषेण निदानं न कार्यमित्याह, इति द्वादशत्रयोदशयोः संबंधः, चित्रसंभूतसाध्वोः संबंधमाह—साकेतनगरे चंद्रावतंसकस्य राज्ञः पुत्रो मुनिचंद्रनामा बभूव, स च निवृत्तकामभोगतृष्णः सागरचंद्रस्य मुनेः समीपे प्रव्रजितः, गुरुभिः समं विहरन्नन्यदा एक-

ण्डालस्य पुत्रत्वेन समुत्पन्नौ, क्रमेण जातयोस्तयोः चित्रश्च संभूतश्चेति नामनी कृते. तौ चित्रसंभूतौ मिथः प्रीतिपरौ जातौ. इतश्च तस्मिन्नवसरे वाराणस्यां नगर्यां शंखनामा राजा, तस्य नमुचिनामा मंत्री, अन्यदा तस्य किंचित् दूषणं जातं, कुपितेन राज्ञा स वधार्थं भूतदिन्नचांडालस्य दत्तः, भूतदिन्नचांडालेन तस्यैवमुक्तं, भो मंत्रिन्! त्वामहं रक्षामि, यदि मद्गृहांतर्भूमिगृहस्थितो मत्पुत्रौ पाठयसि, जीवितार्थिना तेन तत्प्रतिपन्नं, भूमिगृहस्थः स चित्रसंभूतौ पाठयति, चित्रसंभूतमाता तु मंत्रिपरिचर्यां कुरुते, मंत्री तु तस्यामेव व्यासक्तोऽभूत्, निजपत्नीव्यभिचारिचरितं चांडालेन ज्ञातं, नमुचिमारणोपायस्तेन चिंतितः, पितुरध्यवसायस्ताभ्यां ज्ञातः, उपकारप्रीतिरताभ्यां स नमुचिर्नाशितः, ततो नष्टः स क्रमेण हस्तिनागपुरे सनत्कुमारचक्रिणो मंत्री जातः. इतश्च ताभ्यां मातंगदारकाभ्यां चित्रसंभूताभ्यां रूपयौवनलावण्यनृत्यगीतकलाभिर्वाराणसीनगरीजनः प्रकामं चमत्कारं प्रापितः, अन्यदा तत्र मदनमहोत्सवो जातः, सर्वेषु लोकेषु गीतनृत्यवादित्रादिविनोदप्रवृत्तेषु सत्सु तौ मातंगदारकौ वाराणसीनगर्यंतः समागत्य सर्वाः स्वकलाः दर्शयितुं प्रवृत्तौ, तयोर्विशेषकला-



=स्नानभोजनवि
रेनीचक्रिकरती

= नजे=

चमत्कृता लोकास्तरुणीप्रमुखास्तत्समीपे गताः, एकाकारो जातः, अस्पृश्यत्वादिकं न जानंति सर्वेऽपि लोकास्तन्मयतां गताः. ततश्चतुर्वेदविद्भिर्ब्राह्मणैर्नगरस्वामिन एवं विज्ञप्तं, राजन्नेताभ्यां चित्रसंभूताभ्यां चांडालाभ्यां सर्वोऽपि नगरीलोक एकाकारं प्रापितः, राज्ञा तयोर्नगरीप्रवेशो वारितः, कियत्कालानंतरं पुनस्तत्र कौमुदीमहोत्सवो जातः, तदानीं कौतुकोत्तालौ तौ राजशासनं विस्मार्य नगरीमध्ये प्रविष्टौ, तत्र स्वच्छवस्त्रेण मुखमाछाद्य प्रेक्षणानि प्रेक्षमाणयोस्तयो रसप्रकर्षोद्भवेन मुखाद्गीतं निर्गतं, सर्वे लोका वदंति, केन किन्नराणुकारेणेदं कर्णसुखमुत्पादितमिति वस्त्रं पराकृत्य लोकैस्तयोर्मुखमीक्षितं, उपलक्षितौ तौ मातंगदारकौ. राज्ञोऽनुशासनभंजकत्वेन जनैर्यष्टिमुष्ट्यादिभिर्हन्यमानौ तौ नगर्या बहिर्निष्कासितौ प्राप्तौ बहिःस्थाने, भृशं खिन्नावेवं चिंतयतः, धिगस्त्वस्माकं रूपयौवनसौभाग्यलावण्यसर्वकलाकौशल्यादिगुणकलापस्य, यतोऽस्माकं मातंगजत्वेन सर्वं दूषितं, लोकपराभवस्थानं वयं प्राप्ताः, एवं गुरुवैराग्यमागतौ तौ स्वबांधवादीनामनापृच्छ्यैव दक्षिणदिगभिमुखौ चलितौ. दूरं गताभ्यां ताभ्यामेको गिरिवरो दृष्टः, तत्र भृगुपातकरणार्थमधिरूढौ, तत्र तौ शि-

लातलोपविष्टं तपःशोषितांगं शुभध्यानोपगतमातापनां गृह्णंतमेकं श्रमणं ददृशतुः. हर्षितौ तौ तत्समीपे जग्मतुः, भक्तिबहुमानपूर्वं ताभ्यां स वंदितः, साधुना धर्मलाभकथनपूर्वकं तयोः स्वागतं पृष्टं, ताभ्यां पूर्ववृत्तांतकथनपूर्वकं स्वाभिप्रायः साधोः कथितः, साधुना कथितं न युक्तमनेकशास्त्रावदातबुद्धीनां भवादृशानां गिरिपतनमरणं. सर्वदुःखक्षयकारणं श्रीवीतरागधर्मं गृह्णंतु, इति पंचमहाव्रतरूपः श्रीवीतरागधर्मस्तयोः कथितः, ततस्ताभ्यां तस्य मुनेः समीपे दीक्षा गृहीता, कालक्रमेण तौ गीतार्थौ जातौ, ततः स्वगुर्वाज्ञया षष्ठाष्टमदशमद्वादशार्धमासमासक्षपणादितपोभिरात्मानं भावयंतौ ग्रामानुग्रामं विहरंतौ कालांतरेण हस्तिनागपुरं प्राप्तौ, बहिरुद्याने च स्थितौ.

अन्यदा मासक्षपणपारणके संभूतसाधुर्नगरमध्ये भिक्षार्थं प्रविष्टः, गृहानुगृहं भ्रमन् राजमार्गानुगतो गवाक्षस्थेन नमुचिमंत्रिणा दृष्टः, प्रत्यभिज्ञातश्च. चिंतितं च स एष मातंगदारको मदध्यापितो मच्चरित्रमशेषमपि जानन्नस्ति, कदाचिच्च लोकाग्रे वक्ष्यते, तदा मन्महत्वभ्रंशो भविष्यतीति मत्वा दूतैः स मुनिर्यष्टिमुष्ट्यादिभिर्मारयित्वा नमुचिना नगरा-



=जाएनेकीबुधीवा कुमारेजीवाको=

=सेनालकरके जाणा=

इति निष्कासयितुमारब्धः, निरपराधस्य हन्यमानस्य तस्य कोपकरालितस्य मुखान्निर्गतः प्रथमं धूमस्तोमः, तेन सर्वमपि नगरमंधकारितं, भयकुतूहलाक्रांता नागरास्तत्रायाताः, क्रोधाध्मातं तं मुनिं दृष्ट्वा सर्वेऽपि प्रसादयितुं प्रवृत्ताः. सनत्कुमारचक्रवर्त्यपि तत्रायातः, तं प्रसादयितुं प्रवृत्त एवं बभाण, भगवन्! यदस्माद्दृशैरज्ञानैरपराद्धं तद्भवद्भिः क्षमणीयं, संहरतु तपस्तेजःप्रभावं. कुर्वंतु ममोपरि प्रसादं सर्वनागरिकजीवितप्रदानेन, पुनरेवंविधमपराधं न करिष्यामः, इत्यादि चक्रिणाप्युक्तोऽसौ यावन्न प्रशाम्यति, तावदुद्यानस्थश्चित्रसाधुर्जनापवादात्तं कुपितं ज्ञात्वा तस्य समीपमागत एवमुवाच. भो संभूतसाधो! उपशामय कोपानलं. उपशमप्रधानाः श्रमणा भवंति, अपराधेऽपि न कोपस्यावकाशं ददति, क्रोधः सर्वधर्मानुष्ठाननिष्फलीकारकोऽस्ति, यत उक्तं—मासुववासु करेइ । भिक्ख वणवासु निसेवे ॥ पढइ नाणु सुझाणु । निच्च अप्पाणं भावइ ॥ १ ॥ धारइ दुद्धरबंभचेरं । भिक्खासणं भुंजइ ॥ जासु रोस तासु सयलु । धम्म निप्फलु संपज्जइ ॥ २ ॥ इत्यादिकैश्चित्रसाधूपदेशैः संभूतस्योपशांतः क्रोधः, तेजोलेश्या संहृता, ततस्तौ द्वावपि तत्प्रदेशान्निवृत्तौ, गतौ तदुद्यानं, चिंतितं

चैताभ्यामावाभ्यां संलेखना कृता, सांप्रतमावयोर्युक्तमनशनं कर्तुं, इति विचार्य ताभ्यामनशनं विहितं, सनत्कुमारचक्रिणा नमुचिमंत्रिणो वृत्तांतो ज्ञातः, दूतैः सह रज्जुबद्धः कृतः, प्रापितश्च तदुद्याने तयोः समीपे, ताभ्यां स मोचितः, सनत्कुमारोऽपि तयोर्वंदनार्थं सांतःपुरपरिवारस्तत्रायातः, सर्वलोकसहितश्चक्री तयोः पादयुग्मे प्रणतः, चक्रिणः स्त्रीरत्नं सुनंदापि औत्सुक्यात्तयोः पादे प्रणता, तस्या अलकस्पर्शानुभवेन संभूतयतिना निदानं कर्तुमारब्धं, तदानीं चित्रमुनिनैवं चिंतितमहो दुर्जयत्वं मोहस्य! अहो दुर्दांततेंद्रियाणां, येन समाचरितविकृष्टतपोनिकरोऽपि विदितजिनवचनोऽप्ययं युवतीवालाग्रस्पर्शेनेत्थमध्यवस्यति. ततः प्रतिबोधितुकामेन चित्रमुनिना तस्य संभूतमुनेरेवं भणितं, भ्रातरेतदध्यवसायान्निवृत्तिं कुरु? एते हि भोगा असाराः, परिणामदारुणाः, संसारपरिभ्रमणहेतवः संति. एतेषु मा निदानं कुरु? निदानात्तव घोरानुष्टानं नैव तादृक् फलदं भविष्यति. एवं चित्रमुनिना प्रतिबोधितोऽपि संभूतो न निदानं तत्याज. यद्यस्य तपसः फलमस्ति. तदाहं भवांतरे चक्रवर्ती भूयासमिति निकाचितं निदानं चकार. ततो मृत्वा सौधर्मदेवलोके तौ द्वावपि देवौ जातौ. तत-

श्च्युतश्चित्रजीवः पुरमतालनगरे इभ्यपुत्रो जातः, संभूतजीवस्ततश्च्युतः कांपिल्यपुरे ब्रह्मनाम्ना राजा, तस्य चुलनीनाम्नी भार्या, तस्याः कुक्षौ चतुर्दशस्वप्नसूचित उत्पन्नः, क्रमेण जातस्य तस्य ब्रह्मदत्त इति नाम कृतं, देहोपचयेन कलाकलापेन च वृद्धिं गतः, तस्य ब्रह्मराज्ञ उत्तमवंशसंभूताश्चत्वारः सुहृदः संति, तद्यथा—काशीविषयाधिपः कटकः, गजपुराधिपः कणेरदत्तः, कौशलदेशाधिपतिर्दीर्घः, चंपाधिपतिः पुष्पचूलश्चेति. तेऽत्यंतस्नेहेन परस्परविरहमनिच्छंतः समुदिताश्चैव एकमेकं वर्षं परिपाट्या विविधक्रीडाविलासैरेकस्मिन् राज्ये तिष्ठंति. अन्यदा ते चत्वारोऽपि समुदिताश्चैव ब्रह्मराज्ये स्थिताः संति. तस्मिन्नवसरे ब्रह्मराज्ञो मंत्रतंत्रौषधाद्यसाध्यः शिरोरोग उत्पन्नः, ततस्तेन कटकादिचतुर्णां मित्राणामुत्संगे ब्रह्मदत्तो मुक्तः, उक्तं च यथैष मद्राज्यं सुखेन पालयति तथा युष्माभिः कर्तव्यमिति राज्यचिंतां कारयित्वा ब्रह्मराजा कालं गतः. मित्रैस्तस्य प्रेतकर्म कृतं, मिथश्चैवं भणितं, एष कुमारो यावद्राज्यधुरार्हो भवति तावदस्माभिरेतद्राज्यं रक्षणीयमिति विचार्य सर्वसंमतं दीर्घराजानं तत्र स्थापयित्वा कटककणेरदत्तपुष्पचूलाः स्वस्वराज्ये जग्मुः. स दीर्घराजा सकलसामग्रीकं

तद्राज्यं पालयति, जांमागारं विलोकयति, प्रविशत्यंतःपुरं, चुलिन्या समं मंत्रयति. तत इंद्रियाणां दुर्निवारत्वेन ब्रह्मराज्ञो मैत्रीमवगणय्य, वचनीयतामवमन्य चुलन्या समं संलग्नः. एवं प्रवर्धमानविषयसुखरसयोस्तयोर्गछंति दिनानि. ततो ब्रह्मराजमंत्रिणा धनुर्नाम्ना तयोस्तत्स्वरूपं ज्ञातं, चिंतितं च य एवंविधमकार्यमाचरति. स किं कुमारब्रह्मदत्तस्य हिताय जविष्यति? एवं चिंतयित्वा तेन धणुर्नाम्ना मंत्रिणा स्वपुत्रस्य वरधनुनाम्नः कुमारस्यैवं जणितं, पुत्र! ब्रह्मदत्तस्य माता व्यजिचारिणी जातास्ति, दीघराज्ञा जुज्यमानास्ति, अयं समाचार एकांते त्वया ब्रह्मदत्तकुमारस्य निवेदनीयः, तेन च तथा कृतं.

ब्रह्मदत्तकुमारोऽपि मातुर्डुश्चरितमसहमानस्तयोर्ज्ञापनार्थं काककोकिलामिथुनं शूलाप्रोतं कृत्वा चुलनीमातृदीर्घनृपयोर्दर्शितं, एवं प्रोक्तं च, य ईदृशमनाचारं करिष्यति, तस्याहं निग्रहं करिष्यामीत्युक्त्वा कुमारो बहिर्गतः. एवं द्वित्रिर्दृष्टांतैर्दिनत्रयं यावदेवं चकार उवाच च. ततो दीर्घनृपेण शंकितेन चुलन्या एवमुक्तं, कुमारेणावयोः स्वरूपं ज्ञातं, अहं काकस्त्वं कोकिलेति दृष्टांतः कुमारेण ज्ञापितः. तयोक्तं बालोऽयं यत्तदुल्लपति, नात्रार्थे का-

चिंता कार्या. ततो दीर्घपृष्ठेनोक्तं, त्वं पुत्रवात्सल्येन न किमपि स्वहितं वेत्सि, अयमव-श्यमावयोरतिविघ्नकरः, तदवश्यमयं मारणीयः, मयि स्वाधीने तवान्ये पुत्रा बहवो भविष्यं-ति. एतादृशं दीर्घनृपवचस्तयांगीकृतं. यत उक्तं—महिला आलकुलहरं । महिला लोयंमि दुच्चरियखित्तं ॥ महिला दुग्गइदारं । महिला जोणी अणत्थाणं ॥ १ ॥ मारेइ य भत्तारं । हणे सुअं तह पणासए अत्थं ॥ नियगेहंपि पीलावे । णारी रागाउरा पावा ॥२॥ चुलन्या भणितं, कथमेष मारणीयः? कथं च लोकापवादो न भवति? दीर्घनृपेणोक्तं सांप्रतमस्य विवाहः क्रियते, पश्चात्सर्वमावयोश्चिंतितं भविष्यति, ततस्ताभ्यां ब्रह्मदत्तस्य मित्रस्य कस्य-चिद्राज्ञः कन्यायाः पाणिग्रहणं कारितं, तयोः शयनार्थमनेकस्तंभशतसन्निविष्टं गूढनिर्गम-द्वारं जतुगृहं कारितं. इतश्च धनुर्मंत्रिणा दीर्घनृपायैवं विज्ञप्तं, एष मम पुत्रो वरधनुरेतद्रा-ज्यकार्यकरणसमर्थो वर्तते, अहं पुनः परलोकहितं करोमि: दीर्घनृपेणोक्तमिह स्थित एव त्वं दानादिधर्मं कुरु? तस्यैतद्वचः प्रतिपद्य धनुर्मंत्रिणा गंगातीरे महती प्रपा कारिता, तत्र पथिकपरिव्राजकादीनां स यथेष्टदानं दातुं प्रवृत्तः. दानोपचारावर्जितैः परिव्राजकादिभिर्द्वि-

गव्यूतप्रमाणा सुरंगा जतुगृहंयावत्खानिता. जतुगृहांतः सुरंगाद्वारि शिला दत्ता, इतश्च चुलन्या महताडंबरेण वधूसहितः कुमारस्तत्र प्रवेशितः, ततः समग्रः परिवारो विसर्जितः, वरधनुः कुमारपार्श्वे स्थितः. एवं स्वपित्रा गदितवृत्तांतानुसारेण स सावधानो जाग्रन्नेव सुप्तः. ब्रह्मदत्तकुमारस्त्वेकशय्यायां तया वध्वा सह सुप्तः, गतं रात्रिप्रहरयुग्मं, तदा तत्र चुलन्या स्वहस्तेन अग्निकंदुको न्यस्तः. तेन तद्गृहं समंताद्दह्यमानं दृष्ट्वा विनिद्रो ब्रह्मदत्तः स्वमित्रं वरधनुं पप्रछ, किमेतदिति. वरधनुना सर्वं चुलनीस्वरूपं कथितं. पुनः कथितमियं च कन्या राजपुत्री न, किंतु काप्यन्या, तस्मादस्यां मोहो मनागपि न कार्यः. त्वमस्यां शिलायां पादप्रहारं कुरु? येनावां निर्गछावः. वरधनूक्तं सर्वं ब्रह्मदत्तेन कृतं. ततो द्वावपि निर्गत्य सुरंगाद्बहिर्देशे समायातौ. तत्र च धनुर्मन्त्रिणा पूर्वमेव द्वौ तुरंगमौ पुरुषौ च मुक्तौ स्तः, ताभ्यां पुरुषाभ्यां तयोः संकेतः कथितः, तुरंगाधिरूढौ तौ द्वावपि कुमारौ ततश्चलितौ. एकेन दिवसेन पंचाशद्योजनमात्रं मार्गं गतौ. दीर्घमार्गखेदेन तुरंगमौ व्यापन्नौ. ततः पादचारेण गछंतौ तौ कौष्टाभिधानग्रामं गतौ, कुमारेण वरधनुर्भणितः, मां क्षुधा बाधते. वरधनुः कु-

मारं बहिरेवोपवेश्य स्वयं ग्राममध्ये प्रविष्टः, नापितं गृहीत्वा तत्रायातः, कुमारस्य मस्तकं मुंडापितं, परिधापितानि कषायवस्त्राणि, चतुरंगुलप्रमाणपट्टबंधः कुमारस्य श्रीवत्सालंकृते हृदि बद्धः वरधनुनापि वेषपरावर्तनः कृतः, तादृशवेषधरौ द्वावपि ग्राममध्ये प्रविष्टौ, तावता एको द्विजः स्वमंदिरान्निर्गत्याभिमुखमागत्य कुमारौ प्रत्येवमाह, आगच्छतामस्मद्गृहे, भुंजतां च. तेनेत्युक्ते तौ द्वावपि तद्गृहे गतौ. ब्राह्मणेन राजरूपप्रतिपत्तिपूर्वकं तौ भोजितौ. भोजनांते चैका प्रवरमहिला बंधुमतीं नाम्नीं कन्यामुद्दिश्य ब्रह्मदत्तकुमारमस्तकेऽक्षतान् प्रक्षिपति, भणति चैषोऽस्याः कन्याया वरोऽस्त्विति. वरधनुना भणितं, किमेतस्य मूर्खस्य बटुकस्य कृते एतावानायासः क्रियते? ततो गृहस्वामिना भणितं श्रूयतामस्मदायासवृत्तांतः—पूर्वं सुवृत्तनैमित्तिकेनाख्यातं यथास्या बालिकायाः पट्टाच्छादितवक्षःस्थलः समित्रो भवद्गृहे भोजनकारी वरो भविष्यति, सोऽस्या योग्यो वर इति. तस्मिन्नेव दिने तस्याः कन्यायाः कुमारेण पाणिग्रहणं कारितं. मुदितो गृहस्वामी, कुमारस्त्वेकरात्रौ तत्र स्थितः. द्वितीयदिने वरधनुना कुमारस्योक्तमावाभ्यां दूरे गंतव्यं, दीर्घराजासन्नत्वेनात्र स्थातुमावयोरयुक्तमिति तौ

द्वावपि बंधुमत्याः स्वरूपं कथयित्वा निर्गतौ. गच्छंतौ तावेकदा कस्मिंश्चिद्दूरग्रामे गतौ, तृषाक्रांतं कुमारं बहिरुपवेश्य वरधनुः सलिलमानेतुं ग्राममध्ये प्रविष्टः. त्वरितमेव पश्चादागत्यैवं कुमारस्योक्तवान्. अत्र ईदृशो जनापवादो मया श्रुतः, यद्दीर्घनृपेण ब्रह्मदत्तमार्गः सर्वत्र सैन्यैर्बंधितोऽस्ति. ततः कुमार! आवामितो नश्यावः. नष्टौ ततो द्वावपि उन्मार्गेण व्रजंतौ महाटवीं प्राप्तौ. तत्र कुमारं वटाध उपवेश्य वरधनुर्जलमानेतुमितस्ततो बभ्राम. दिनावसाने वरधनुर्दीर्घपृष्टनृपभटैर्दृष्टः, प्रकामं यष्टिमुष्ट्यादिभिर्हन्यमानः कुमारं दर्शयेति प्रोच्यमानः कुमारासन्नप्रदेशे प्रापितः. तावता वरधनुना कुमारस्य केनाप्यलक्षिता संज्ञा कृता, भटैरदृष्ट एव ब्रह्मदत्तो नष्टः, पतितश्चैकां दुर्गां महाटवीं, क्षुधातृषाश्रमार्त्तः कुमारस्तृतीये दिने तामटवीमतिक्रांतस्तापसमेकं ददर्श. दृष्टे च तस्मिन् कुमारस्य जीविताशा जाता. कुमारेण स तापसः पृष्टः, भगवन्! क भवदाश्रमः? तेनासन्न एवास्मदाश्रम इत्युक्त्वा कुलसमीपं नीतः, कुमारेण प्रणतः कुलपतिः, कुलपतिना भणितं, वत्स! कुत इह भवदागमनं? कुमारेण सकलोऽपि स्ववृत्तांतः कथितः. कुलपतिनोक्तं अहं भवज्जनकस्य लघुभ्राता, ततस्त्वं निजं चै-

॥४३४॥

वासं प्राप्तोऽसि, सुखेनात्र तिष्ट? इत्यभिप्रायं तापसस्य ज्ञात्वा कुमारस्तत्रैव सुखं तिष्टन्नस्ति. अन्यदा तत्र वर्षाकालः समायातः. तदानीं निश्चिंतेन कुमारेण तत्र तापसांतिके सकला धनुर्वेदादिकाः कला अभ्यस्ताः. अन्यदा शरत्काले फलमूलकंदादिनिमित्तं तापसेषु गच्छत्सु ब्रह्मदत्तकुमारोऽपि तैः समं वने गतः. वनश्रियं पश्यता तेन एक महाहस्ती दृष्टः, कुमारस्तदभिमुखं चलितः, कुमारं दृष्ट्वा हस्तिना गलगार्जिरवः कृतः, कुमारेण तस्य पुरो निजमुत्तरीयं वस्त्रं निक्षिप्तं, करिणापि तत्क्षणात् शुंडादंडेन गृहीतं, क्षिप्तं च गगनतले, यावत्स क्रोधांधो जातस्तावत् कुमारेण छलं कृत्वा तद्वस्त्रं स्वकराभ्यां गृहीतं, ततस्तेन नानाविधक्रीडया परिश्रमं नीत्वा करी मुक्तः, स पश्चाद्गंतुं प्रवृत्तः, तत्पृष्टौ कुमारोऽपि चलितः. इतश्चाग्रे गच्छन् कुमारः पूर्वापरदिग्विभागे परिभ्रमन् गिरिनदीतटसन्निविष्टं जीर्णभवनभित्तिमात्रोपलक्षितं जीर्णं नगरमेकं ददर्श. तन्मध्ये प्रविष्टश्चतुर्दिक्षु दृष्टिं क्षिपन् पार्श्वपरिमुक्तखेटकखड्गं विकटवंशकुडंगं ददर्श. कुमारेण तत्खड्गं तथैव कौतुकाद्वाहितं. एकप्रहारेण निपतितं वंशकुडंगं, वंशांतरालस्थितं च निपतितं रुंडमेकं, स्फुरदोष्टं मनोहराकारं शिरःकमलं दृष्ट्वा सं-

भ्रांतेन कुमारेणैवं चिंतितं, हा धिगस्तु मे व्यवसितस्य, धिग्मे बाहुबलस्येति कुमारः स्वं निनिंद. पश्चात्तापाक्रांतेन तेन कुमारेण दृष्टं धूमपानलालसं कबंधं समधिकमधृतिस्तस्य पुनर्जाता.

इतस्ततः पश्यता कुमारेण पुनः प्रवरमुद्यानं दृष्टं, तत्र भ्रमन्नशोकतरुपरिक्षिप्तमेकं सप्तभूमिकमावासं कुमारो दृष्टवान्. तन्मध्ये प्रविष्टः कुमारः क्रमेण सप्तभूमिकामारूढः, तत्र विकसितकमलदलाक्षीं प्रवरां महिलां पश्यतिस्म. कुमारेण सा पृष्टा कासि त्वमिति. ततः सा स्वसद्भावं कथयितुं प्रवृत्ता, महाभाग! मम व्यतिकरो महान् वर्तते, ततस्त्वमेव प्रथमं स्ववृत्तांतं वद? कस्त्वं? कुतः समायातः? एवं तया पृष्टे कुमार आख्यत् पंचालाधिपतिब्रह्मराजपुत्रो ब्रह्मदत्तोऽस्मीति. कुमारोक्तिश्रवणानंतरं हर्षोत्फुल्लनयना सा अभ्युत्थाय तस्यैव चरणे निपत्य रोदितुं प्रवृत्ता. ततः सकारुण्यहृदयेन कुमारेण सा पुनरेवं भणिता, मुखमुन्नतं कुरु? मा रुदेति चाश्वासिता सा. ततः कुमारेण त्वं स्ववृत्तांतं वदेत्युक्ता साचख्यौ, कुमार! अहं तव मातुलस्य पुष्पचूलस्य राज्ञः पुत्री, तवैव पित्रा दत्ता, विवाहदिवसं प्रतीक्ष्यमाणा निजगृहोद्यानदीर्घिकापुलिने क्रीडंती दुष्टविद्याधरेणात्रानीता. यावदहं स्वजनविरहाग्निसंत-

सा इह तिष्ठामि, तावत्त्वमतर्कितवृष्टिसमोऽत्रायातः, अथ मम जीविताशा संजाता, यत्त्वं मया दृष्टः. कुमारेणोक्तं स मम शत्रुः क्वास्ति? येन तद्बलं पश्यामि. तया भणितं स्वामिन्! ममानेन शंकरीनाम्नी विद्या दत्ता, कथितं चेयं विद्या पठितमात्रा तव दासदासीसखीपरिवाररूपा भूत्वा आदेशं करिष्यति, तवांतिकमागतं प्रत्यनीकं निवारयिष्यति. दूरस्थस्यापि मम चेष्टितं पृष्टा सती इयं तव कथयिष्यति. साद्य मया प्राप्ता, स्मृता सती मम तच्चेष्टितं प्राह. यथा स उन्मत्तनामा विद्याधरः पूर्णपुण्यायास्तव बलात्स्पर्शं तेजश्च सोढुमशक्तस्त्वामद्य मुक्त्वा निजभगिनीं ज्ञापनाय ज्ञापिकीं विद्यां प्रेषयित्वा च स्वयं विद्यां साधयितुं वंशकुडंगे गतोऽस्ति. ततो निर्गतमात्रस्त्वां परिणेष्यतीति समाद्य तया विद्यया कथितं. एतत्तस्या वचः श्रुत्वा ब्रह्मदत्तेनोक्तं वंशकुडंगस्थस्य तस्य विद्याधरस्य मया सांप्रतमेव शिरश्छिन्नं. तयोक्तमार्यपुत्र! शोभनं कृतं, यत्स दुरात्मा निहतः. ततः सा कुमारेण गंधर्वविवाहेन परिणीता; तया सह विलसन् कुमारः कियत्कालं तत्र स्थितः. अन्यदा कुमारेण तत्र दिव्यवलयानां शब्दः श्रुतः. कुमारेणोक्तं कोऽयं शब्दः श्रूयते? तयोक्तं कुमार! एषा तव वैरि-

गिनी खंगशाखानाम्नी विद्याधरकुमारीपरिवृता स्वभ्रातृनिमित्तं विवाहोपकरणानि गृहीत्वा समायाता, त्वमितस्त्वरितमपक्रम? यावदेतासामहमभिप्रायं वेद्मि. यद्येतासां तवोपरि रागो भविष्यति, तदाहं प्रासादोपरि स्थिता रक्तां पताकां चालयिष्यामि, अन्यथा तु श्वेतामिति. कुमारस्तद्गृहाद्बहिर्गत्वा दूरे स्थित ऊर्ध्वं विलोकते, तावच्चालितां धवलपताकां दृष्ट्वा शनैः शनैस्तत्प्रदेशादपक्रांतः कुमारः प्राप्तो गिरिनिकुंजमध्ये. तत्र भ्रमता कुमारेणैकं सरोवरं दृष्टं, तत्र स्नानं कृत्वा सरःपश्चिमतीरे उत्तीर्णेन कुमारेण दृष्टैका वरकन्या, चिंतितं चाहो मे पुण्यपरिणतिः! येनैषा कन्या मे दृग्गोचरमागता. तयाप्यसौ कुमारः स्नेहनिर्भरं विलोकितः, कुमारं विलोकयंती साग्रे प्रस्थिता. स्तोकया वेलया तया कन्यया एका दासी प्रेषिता, तया कुमाराय वस्त्रयुगलं पुष्पतांबूलादिकं च दत्तं, उक्तं च, या युष्माभिः सरस्तीरे कन्या दृष्टा, तया सर्वमिदं प्रेषितं, लावण्यलतिकानाम्न्यहं तस्या दासी अस्मि. तया च ममेदमादिष्टं, यदेनं महानुभावं कुमारं मम तातमहामंत्रिणो मंदिरे शरीरस्थितं कारय? ततस्तत्र कुमार! यूयमागच्छत? ततः कुमारस्तया सह तदैवामात्यमंदिरे गतः. तत्र दास्या

मंत्रिण एवमुक्तं, मंत्रिन्! त्वत्स्वामिपुत्र्यर्थं प्रेषितोऽस्ति, प्रकाममस्यादरः कर्तव्यः, मंत्रिणा तथैव कृतं. द्वितीयदिने कुमारो मंत्रिणा राज्ञः सभायां नीतः, अभ्युत्थितेन राज्ञा कुमारस्य धुरि आसनं दत्तं, पृष्टश्च वृत्तांतः, कुमारेण सर्वोऽपि कथितः.

अथ विविधभंग्या भोजितस्य कुमारस्य एवमुक्तं राज्ञा. कुमार! तव भक्तिरस्मादृशैः कापि कर्तुं न पार्यते, परमियमेवास्माकं भक्तिः, यदियं कन्या तव प्राभृतीकृता, सुमुहूर्ते तयोर्विवाहो जातः, कुमारस्तया समं विलासं कुर्वन् सुखेन तत्र तिष्ठति. अन्यदा कुमारेण तस्याः प्रियायाः पृष्टं, किमर्थमेकाकिने मह्यं त्वं नृपेण दत्ता? सोवाच आर्यपुत्र! एष मदीयः पिता बलवत्तरवैरिसंतापित इमां विषमपल्लिं समाश्रितः. अत्र तातपत्न्याः श्रीमत्याश्चतुर्णां पुत्राणामुपर्यहं पुत्री जाता, अहमतीव पितुर्वल्लभा, यौवनस्था अन्यदा पित्रा उक्ता, पुत्रि! मम सर्वेऽपि राजानो विरुद्धाः संति, तेन त्वमिह स्थितैव योग्यं वरं गवेषय? ततोऽहं ग्रामाद्बहिस्तस्य सरसस्तीरे समायातान् पथिकान् विलोकयंती स्थिता. तदानीं त्वं तत्रायातो मया भाग्यात प्राप्तश्चेति परमार्थः. ततस्तया श्रीकांतया समं विषयसुखमनुभवतस्तस्य

सुखेन वासरा यांति. अन्यदा स पल्लीपतिस्तेन कुमारेण समं निजसैन्यवेष्टितः स्वविरोधिनृपदेशभंगाय चलितः. मार्गे गछतस्तस्य कचित्सरस्तीरे वरधनुर्मिलितः. कुमारेणोपलक्षितः. कुमारं दृष्ट्वा स रोदितुं प्रवृत्तः, कुमारेण बहुप्रकारं वारितः स्थितः. कुमारेण पृष्टं मत्तो दूरीभूतेन त्वया किमनुभूतं? वरधनुः प्राह कुमार! तदानीं त्वां वटाध उपवेश्याहं जलार्थं गतः, सर एकं च दृष्टवान्. ततो जलं गृहीत्वा तवांतिके यावदहमागंतुं प्रवृत्तस्तावत्सन्नद्धबद्धकवचैर्दीर्घनृपभटैः सहसा मिलितैरहमुपलक्षितस्ताडितश्च, उक्तं च क ब्रह्मदत्त इति. मयोक्तमहं न जानामि. ततो दृढतरं ताडितोऽहमवदं ब्रह्मदत्तो व्याघ्रेण भक्षितः. तैरुक्तं तं देशं दर्शय? तैर्मार्यमाणोऽहं तवांतिकदेशमागत्य तदानीं तां संज्ञामकार्षं. त्वयि ततो नष्टेऽहं पुनस्तैर्भृशं ताड्यमानः स्वमुखे परिव्राजकदत्तां गुटिकां क्षिप्तवान्. तत्प्रभावादहं निश्चेष्टो जातः. ततस्ते मृतोऽयमिति ज्ञात्वा सर्वेऽपि भटा गताः. तेषां गमनानंतरं चिरकालेन मया गुटिका मुखान्निष्कासिता. ततः सचेतनोऽहं त्वां गवेषयितुं प्रवृत्तः, न मया दृष्टस्त्वं, ततोऽहमेकं ग्रामं गतः, तत्र दृष्ट एकः परिव्राजकः, तेनोक्तमहं तव तातस्य मित्रं सुभगनामा, तव

पिता धनुर्नष्टः, माता तु दीर्घेण गृहीता, मातंगपाटके च क्षिप्तास्तीति श्रुत्वाहमतीव दुःखितः कांपिल्यपुरे गतः, कापालिकवेषं कृत्वा मातंगमहत्तरं च वंचयित्वा मातंगपाटकान्मातरं निष्कासितवान्. एकस्मिन् ग्रामे पितृमित्रस्य देवशर्मब्राह्मणस्य गृहे मातरं मुक्त्वा त्वामन्वेषयन्नहमित्रायातः. इत्थं यावत्तौ वरधनुब्रह्मदत्तौ वार्तां कुरुतस्तावदेकः पुरुषस्तत्रागत्यैवमुवाच, यथा महाभाग! भवता कंचिदितस्ततो न पर्यटितव्यं, त्वदन्वेषणार्थं दीर्घनियुक्ता नरा इहागताः संतीति श्रुत्वा तौ द्वावपि ततो वनान्नष्टौ, भ्रमंतौ च कोशांब्यां गतौ. तत्र बहिरुद्याने द्वयोः श्रेष्ठिसुतयोः सागरदत्तबुद्धिलनाम्नोः कुर्कुटयुगलं लक्षपणकरणपूर्वकं योद्धुं प्रवृत्तं दृष्टुं कौतुकेन तौ तत्रैव स्थितौ. बुद्धिलकुर्कुटेन सागरदत्तकुर्कुटः प्रहारेण जर्जरीकृतो भग्नः, सागरदत्तेन प्रेर्यमाणोऽपि स्वकुर्कुटो बुद्धिलकुर्कुटेन समं पुनर्योद्धुं नाभिलषति. हारितं लक्षं सागरदत्तेन. अत्रांतरे वरधनुनोक्तं भो सागरदत्त! एष सुजातिरपि कुर्कुटः कथं भग्नः? ममात्रार्थे विस्मयोऽस्ति. यदि कोऽपि कोपं न करोति तदा बुद्धिलकुर्कुटमहं पश्यामि. सागरदत्तो भणति भो महाराज! विलोकय? नास्त्यत्र मम कोऽपि द्रव्यलोभः, किंत्वभिमा-

नसिद्धिमात्रप्रयोजनमस्तीति. ततो वरधनुना विलोकितः स कुर्कुटः, तच्चरणनिबद्धः सूचीकलापो दृष्टः, बुद्धिलोऽपि वरधनुंप्रति शनैरेवमाह यदि त्वं सूचीकलापं न वक्षसि, तदाहं तव लक्षार्धं दास्यामि. ततो वरधनुनोक्तं विलोकितो यत्कुर्कुटो नात्र किंचिद् दृश्यते, एवमुक्त्वापि यथा बुद्धिलो न जानाति तथा सूचीकलापमाकृष्य सागरदत्तस्य तद्व्यतिकरः कथितः. सागरदत्तेन पुनः स्वकुर्कुटः प्रेरितो बुद्धिलकुर्कुटेन समं युद्धं प्रवृत्ते, सागरदत्तकुर्कुटेन जितो बुद्धिलकुर्कुटः, हारितं बुद्धिलेन लक्षं. तुष्टः सागरदत्त एवमाह आर्यपुत्र! गृहे गम्यते, इत्युक्त्वा द्वावपि कुमारौ रथे निवेश्य सागरदत्तः स्वगृहे गतः, सागरदत्तस्तौ परमप्रीत्या पश्यति, सागरदत्तस्नेहनियंत्रितौ तावतीवाग्रहात्तद्गृह एव तस्थतुः.

कियद्दिनानंतरमेको दासस्तत्रायातः, तेनैकांते वरधनुराकारितः, उक्तं च वरधनुकुमाराय, तव तदानीं सूचीव्यतिकरद्रव्यं स्वमुखोक्तं, बुद्धिलेन तद्द्रव्यार्पणायायं हारः प्रेषितोऽस्ति, इत्युक्त्वा हारकरंडिका तेन वरधनवे दत्ता, दासः स्वगृहे गतः, वरधनुरपि हारकरंडिकां गृहीत्वा ब्रह्मदत्तांतिके गतः, स्वरूपं कथयित्वा हारकरंडिकातो हारं निष्कास्य दर्शित-

वान्, द्वारं पश्यता ब्रह्मदत्तेन हारैकदेशस्थो ब्रह्मदत्तनामांकितो लेखो दृष्टः, पृष्टं च मित्र! कस्यैष लेखः? वरधनुर्भणति को जानाति? ब्रह्मदत्तनामकाः पुरुषा बहवः संति. ततो दूरे गत्वा वरधनुनोत्कीर्णो लेखः, तन्मध्ये इयं गाथा दृष्टा—पत्थिज्जइ जइ विजए। जणेण सं-जोगजणियजत्तेणं ॥ तहवि तुमं चिय धणिअं। रयणवई मुणे माणेउं ॥ १ ॥ सूक्ष्मबुद्ध्या ध्यायता वरधनुनास्या गाथाया अर्थोऽवगतः. द्वितीयदिने एका परिव्राजिका तत्रायाता, सा कुमारशिरसि कुसुमाक्षतानि प्रक्षिप्य कुमार! त्वं शतसहस्रायुर्भवेत्याशिषं ददौ, ततः सा वरधनुमेकांते नयति, तेन समं किंचिन्मंत्रयित्वा सा प्रतिगता. कुमारेण वरधनुर्जल्पि-तः, अनया किमुक्तं? वरधनुर्भणति अनयैवमुक्तं यत्तव बुद्धिलेन करंडे हारः प्रेषितोऽस्ति, तेन समं च यो लेखः समागतोऽस्ति, तत्प्रतिलेखं समर्पय? मयोक्तमेष लेखो ब्रह्मदत्तराज-नामांकितो वर्तते, ततस्त्वमेव वद? कोऽसौ ब्रह्मदत्तः? तयोक्तं श्रूयतां, परं कस्यापि त्वया न वक्तव्यं. इह नगर्यां श्रेष्ठिपुत्री रत्नवतीनाम्नी कन्यकास्ति, सा बालत्वादारभ्यातीव म-म स्नेहानुरक्ता यौवनमनुप्राप्ता. अन्यदिने सा किंचिद्ध्यायंती मया दृष्टा, पृष्टा च पुत्रि!

त्वं किं ध्यायसीति. सा किमपि नैव बभाण. परिजनेनोक्तमियं बहून् प्रहरान् यावदीदृश्येव किंचिदार्त्तध्यानं कुर्वती दृश्यते, परमस्या हार्दं न ज्ञायते. ततः पुनरपि तस्याः पृष्टं, परं सा किंचिन्नोवाच. तत्सख्या प्रियंगुल्या उक्तं, हे भगवति! तव पुरः सा लज्जया किंचिद्वक्तुं न शक्नोति, अहं तावत्कथयामि, इयं गतदिने क्रीडार्थमुद्याने गता. तत्रानया स्वभ्रातुर्बुद्धिलश्रेष्ठिनः कुर्कुटयुद्धं कारयतः समीपे एको वरकुमारो दृष्टः, तं दृष्ट्वैषा एतादृशी जाता. कुमारीसख्याः प्रियंगुलतिकाया एतद्वचः श्रुत्वा मयोक्तं पुत्रि! कथय सद्भावं, पुनः पुनरेवं मयोक्ता सा कथमपि सद्भावमुक्त्वा प्राह भगवति! त्वं मम जननीसमानासि, न किंचित्तवाकथनीयं. अनया प्रियंगुलतिकया कथितो यो ब्रह्मदत्तः कुमारः, स मे पतिर्भविष्यति तदा वरं, अन्यथाहं मरिष्यामि. सा मया भणिता वत्से! धीरा भव? अहं तथा करिष्ये, यथा तव समीहितं भविष्यति. ततः सा किंचित् स्वस्था जाता. कल्यदिने पुनरेवं मया तस्या विशेषाश्वासनाकरणार्थं कल्पितमेवोक्तं, वत्से स ब्रह्मदत्तकुमारो मया दृष्टः. तयापि समुद्भवसितरोमकूपया भणितं, भगवति! तव प्रसादेन सर्वं भव्यं भविष्यति, किंतु तस्य विश्वास-

निमित्तं बुद्धिलव्यपदेशेन इमं हाररत्नं करंडके प्रक्षिप्य ब्रह्मदत्तराजनामांकितलेखसहितं कृत्वा कस्यचिद्धस्ते प्रेषय? ततो मया कल्ये तथा विहितं, एष लेखव्यतिकरः सर्वोऽपि मया तत्र कथितः, सांप्रतं प्रतिलेखं देहि? ततो मयापि तस्याः प्रतिलेखो दत्तः, तन्मध्ये चेदृशी गाथा लिखितास्ति—गुरुगुणवरधणुकलिउ । तं माणिउं मुणइ बंभदत्तोवि ॥ रयणवई रयणमई । चंदोवि य चंदमा जोगो ॥ १ ॥ इदं वरधनूक्तमाकर्ण्य अदृष्टायामपि रत्नवत्यां परमप्रेमवान् कुमारो जातः. तद्दर्शनसंगमोपायमन्वेषमाणस्य कुमारस्य गतानि कतिचिद्दिनानि.

अन्यदिने समागतो नगरबाह्याद्वरधनुरेवं वक्तुं प्रवृत्तः, यथा एतन्नगरस्वामिनो दीर्घनृपेण स्वकिंकरा आवयोर्गवेषणाय प्रेषिताः संति. नगरस्वामिना चावयोर्ग्रहणोपायः कारितोऽस्ति, एतादृशी लोकवार्ता बहिः श्रुता. सागरदत्तेन एतद्व्यतिकरं श्रुत्वा तौ द्वावपि भूमिगृहे गोपितौ. रात्रिः पतिता, कुमारेण सागरदत्तस्य भणितं तथा कुरु? यथावामपक्रमावः. एतदाकर्ण्य सागरदत्तस्ताभ्यां द्वाभ्यां सह नगराद्बहिर्निर्गतः. स्तोकां भूमिं गत्वाऽनिच्छंतमपि सागरदत्तं बलान्निवर्त्य कुमारवरधनू द्वावपि गंतु प्रवृत्तौ. पथि गच्छद्भ्यां ताभ्यां यक्षाय-

तनोद्यानपादपांतरालस्थिता प्रहरणसमन्वितरथवरसमीपस्था एका प्रवरमहिला दृष्टा, ततस्तया समुत्थाय सादरं तौ भणितौ, किमियत्यां वेलायां भवंतौ समायातौ ? इति तस्या वचः श्रुत्वा कुमारः प्राह, भद्रे ! कौ आवां ? तयोक्तं त्वं स्वामी ब्रह्मदत्तोऽयं च वरधनुः कुमार इति. कुमार उवाच कथमेतदवगतं त्वया ? सा उवाच श्रूयतां ? इहैव नगर्यां धनप्रवरो नाम श्रेष्ठी वर्तते, तस्य धनसंचया भार्या वर्तते, तया अष्टपुत्राणामुपर्येका पुत्री प्रसूता, सा चाहमेव. मम च कोऽपि पुरुषो न रोचति, ततो मातुरनुज्ञयाहं यक्षमाराधितुं प्रवृत्ता. तुष्टेन यक्षेणैवमुक्तं, वत्से ! तव भर्ता भविष्यच्चक्रवर्ती ब्रह्मदत्तो भविष्यति. स वरधनुमित्रसहितो ब्रह्मदत्तकुमार उपलक्ष्यः. ततः परं मया हारलेखप्रेषणादिकं यत्कृतं, तत्सर्वं तव सुप्रतीतमेवास्तीति कुमारीवाक्यमाकर्ण्य सानुरागः कुमारस्तया सह रथमारूढः. सा कुमारेण पृष्टा, इतः क्व गंतव्यं ? रत्नवत्या भणितं, अस्ति मगधपुरे मम पितुः कनिष्ठभ्राता धनसार्थवाहनामा श्रेष्ठी, स ज्ञातव्यतिकरो युवयोर्मम च समागमनं सुंदरं ज्ञास्यति, ततस्तत्र गमनं क्रियते, पश्चाद्यथा युवयोरिच्छा तथा कार्यमिति रत्नवतीवचसा कुमारो मगधपुराभिमुखं गं-

तुं प्रवृत्तः, वरधनुस्तदा सारथिर्बभूव. ग्रामानुग्रामं गच्छंतौ तौ कौशांबीदेशान्निर्गतौ. अन्यदा गतौ गिरिगुह्वाटव्यां. तत्र कंटकसुकंटकाभिधानौ द्वौ चौरसेनापती तं प्रवरं रथं, विभूषितं स्त्रीरत्नं च प्रेक्ष्य, तद्रक्षकं च कुमारद्वयमेव प्रेक्ष्य सन्नद्धौ सपरिवारौ प्रहंतुमायातौ. अत्रावसरे कुमारेण तथा प्रहरणशक्तिर्दर्शिता, यथा सर्वेऽपि चौरसुभटाः कुमारप्रहाराज्जर्जराः सर्वासु दिक्षु गताः. कुमारस्ततो रथारूढश्चलितः, वरधनुनोक्तं कुमार! यूयं दृढश्रांताः, ततो मुहूर्तमात्रमत्रैव रथे निद्रासुखमनुभवत? ततो रत्नवत्या सह कुमारः प्रसुप्तः, गिरिनदी एका मार्गे समायाता. तावत्तुरंगमाः श्रमखिन्ना नाग्रे चलंति, ततः कथंचित्प्रतिबुद्धः कुमारः श्रमखिन्नांस्तुरंगमान् पश्यन् रथाग्रे च वरधनुमपश्यन् जलनिमित्तं वरधनुर्गतो भविष्यतीति चिंतितवान्. इतस्ततः पश्यन् कुमारो रथाग्रभागं रुधिरावलिप्तं ददर्श. ततो व्यापादितो वरधनुरिति ज्ञात्वा हाहा! हतो मे सुहृदिति शोकार्त्तः कुमारो रथोत्संगात्पपात, मूर्छां च प्राप्तवान्. पुनरपि लब्धचैतन्यः स एवं विललाप, हा भ्रातः! हा वरधनुमित्र! त्वं क गतोऽसीति विलपन् कुमारः कथमपि रत्नवत्या रक्षितः. कुमारो रत्नवतींप्रत्येवमाह सुंदरि! न ज्ञा-

गछता राज्ञाऽशोकपादपस्याध उपविष्टं चारणमुनियुगलं दृष्टं प्रणतं च. तत्रोपविष्टस्य राज्ञः पुरस्तादृगुरुणैवं धर्मदेशना कर्तुमारब्धा—असारः संसारः, शरीरं भंगुरं, शरदभ्रोपमं जीवितं, तडिद्विलसितानुकारि यौवनं, किंपाकफलोपमा भोगाः, संध्यारागसमं विषयसुखं, कुशाग्रजलबिंदुचंचला लक्ष्मीः, सुलभं दुःखं, दुर्लभं सुखं, अनिवारितप्रसरो मृत्युः, तस्मादेवं स्थिते सति भो भव्याः! मोहप्रसरं छिंदंतु, जिनेंद्रधर्मे मनो नयंतु. एवं चारणश्रमणदेशनां श्रुत्वा सुरादयो यथाऽगतास्तथा गताः. तदा लब्धावसरेणाग्निशिखिना भणितं, यथैतासां बालिकानां को भर्ता भविष्यति? चारणश्रमणाभ्यामुक्तमेते द्वे कन्ये भ्रातृवधकारिणो नार्यौ भविष्यतः. तयोरेतद्वचः श्रुत्वा राजा श्याममुखो जातः.

अस्मिन्नवसरे आवाभ्यामुक्तं, तात! सांप्रतमेव साधुभ्यामुक्तं संसारस्वरूपं, तत आवयोरलमेवंविधावसानेन विषयसुखेन, आवयोरेतद्वचस्तातेन प्रतिपन्नं, आवाभ्यां च भ्रातृस्नेहेन स्वदेहसुखकारणानि त्यक्तानि. भ्रातुरेव स्नानभोजनादिचिंतां कुर्वंत्यावावां तिष्ठावः. अन्यदास्मद्भ्रात्रा पृथिवीं भ्रमता दृष्टा कुमार! भवन्मातुलपुत्री पुष्पवती कन्यका. तद्रूपाक्षिप्त-

भिल्लस्तां हृत्वा आगतः, परं तद्दृष्टिं सोढुमक्षमः, स विद्यां साधयितुं गतः. अतःपरं वृत्तांतो युष्माकं ज्ञानगोचरोऽस्ति. तस्मिन् काले जनदंतिकादागत्य पुष्पवत्या आवयोर्भ्रातृवधवृत्तांतः कथितः. ततः शोकभरेण आवां रोदितुं प्रवृत्ते, मधुरवचनैश्च पुष्पवत्या रक्षिते. तदा आवां शंकरीविद्या एवं वक्तुं प्रवृत्ता, असौ भ्रातृवधकारी ब्रह्मदत्तश्चक्रवर्ती भविष्यति, युवां मुनिवचनं किं न स्मरथः? एतद्वचनमाकर्ण्य आवाभ्यां जातानुरागाभ्यां मानितं, परं पुष्पवत्या बालिकया स्नेहरससंभ्रांतया रक्तपताकां विहाय श्वेतपताका चालिता. तद्दर्शनानंतरं त्वमन्यत्र कुत्रापि गतः, नानाविधग्रामाकरनगरादिषु भ्रमंतीभ्यामावाभ्यां त्वं क्वचिन्न दृष्टः, ततो खिन्ने आवामिहागते. सांप्रतमतर्कितहिरण्यसमं तव दर्शनं जातं. ततो हे महाभाग! पुष्पवतीव्यतिकरं स्मृत्वा कुरु अस्मत्समीहितं. एवं श्रुत्वा कुमारेण सहर्षं मानितं. गंधर्वविवाहेन तयोः पाणिग्रहणं कृतं. एकरात्रौ ताभ्यां सममुषित्वा प्रभाते कुमारस्तयोरेवमुवाच. युवां पुष्पवत्या समीपं गच्छतं, तया समं च तावत्स्थातव्यं, यावन्मम राज्यलाभो भवति. एवं श्रुत्वा ते गते. तावत्कुमारो न तद्धवलगृहं, न तं परिजनं च पश्यति, चिंतित-

यंते वरधनुर्मृतो जीवन् वास्तीति. ततोऽहं तदन्वेषणार्थं पश्चाद्व्रजामि. तया भणितमार्य- पुत्र! अवसरो नास्ति पश्चाद्वलनस्य, येनाहमेकाकिनी, चौरश्वापदादिभीमं चारण्यमिदं, अत्र च निकटवर्ती सीमावकाशोऽस्ति, येन परिम्लानाः कुशकंटका दृश्यंते. एतद्वलवतीव- चः प्रतिपद्य रत्नवत्या सह कुमारः पथि गंतुं प्रवृत्तः, मगधदेशसंधिसंस्थितमेकं ग्रामं च प्रा- प्तः. तत्र प्रविशन् कुमारः सभामध्यस्थितेन ग्रामाधिपतिना दृष्टः. दर्शनानंतरमेव एष न सा- मान्यः पुरुष इति ज्ञात्वा सोपचारः प्रतिपत्त्या पूजितो नीतश्च स्वगृहं, दत्तस्तत्र सुखावासः, तत्र सुखं तिष्ठन् स एकदा ग्रामाधिपतिना भणितः, कुमार! त्वं विखिन्न इव किं लक्ष्यसे? कुमारेणोक्तं मम भ्राता चौरेण सह भंडनं कुर्वन् न जाने कामप्यवस्थां प्राप्तः, ततो मया तदन्वेषणार्थं तत्र गंतव्यं. ग्रामाधिपेनोक्तमलं खेदेन, यद्यस्यामटव्यां स भविष्यति तदावश्य- मिह प्राप्स्यामः, इति भणित्वा तेन प्रेषिता निजपुरुषा अटव्यां गत्वा समायाताः कथयंति, यदस्माभिः सर्वत्र स पुरुषो गवेषितः, परं क्वचिन्न दृष्टः, किंतु प्रहारापतितो बाण एवैष दृ- ष्टः. ततः कुमारो वरधणुर्मृत इति चिरकालं शोकं चकार. एकदा रात्रौ तस्मिन् ग्रामे चौर-

धाटिः पतिता, सा च बाणैः कुमारेण जर्जरीकृता नष्टा. अथ हर्षितो ग्रामाधिपतिर्ग्रामश्च. अथ ग्रामाधिपतिमापृच्छ्य ततश्चलितः कुमारः क्रमेण राजगृहं प्राप्तः, तत्र नगराद्बहिः परिव्राजकाश्रमे रत्नवतीं मुक्त्वा स्वयं नगराभ्यंतरे गतः. तत्रैकस्मिन् प्रदेशे तेन धवलगृहं दृष्टं; तदंतः प्रविष्टेन कुमारेण द्वे कन्ये दृष्टे, ताभ्यां कुमारं दृष्ट्वा प्रकटितानुरागाभ्यां भणितं, कुमार! युष्मादृशामपि पुरुषाणां रक्तजनमुत्सृज्य भ्रमितुं किं युक्तं? कुमारेणोक्तं स जनः कः? येनैवं यूयं भणथ. ताभ्यामुक्तं प्रसादं कृत्वासने निविशंतु भवंतः. तत उपविष्ट आसने कुमारः. ताभ्यां कुमारस्य मज्जनस्नानाद्युपचारं कृत्वोक्तं, कुमार! श्रूयतामस्मद्वृत्तांतः—

इहैव भरतक्षेत्रे वैताढ्यगिरिदक्षिणश्रेणिमंडने शिवमंदरे नगरे ज्वलनशिखो राजा, तस्य विद्युच्छिखानाम्नी देवी, तस्या आवां द्वे पुत्र्यौ, अस्मज्ज्ञाता उन्मत्तो नाम वर्तते. अन्यदास्मत्पिताग्निशिखाभिधानेन मित्रेण समं यावद्गोष्ठ्यां प्रविष्टस्तिष्ठति, तस्मिन्नवसरेऽष्टापदपर्वताभिमुखं व्रजंतं सुरासुरसमूहं पश्यति. राजापि पुत्रीसहितस्तत्र गंतुं प्रवृत्तः, अष्टापदे प्राप्तो जिनप्रतिमाश्च वंदिताः, कर्पूरागुरुधूपाद्युपचारो महान् कृतः. प्रदक्षिणात्रयं गृहीत्वा नि-

गच्छता राज्ञाऽशोकपादपस्याध उपविष्टं चारणमुनियुगलं दृष्टं प्रणतं च. तत्रोपविष्टस्य राज्ञः पुरस्ताद्गुरुणैवं धर्मदेशना कर्तुमारब्धा—असारः संसारः, शरीरं भंगुरं, शरदभ्रोपमं जीवितं, तडिद्विलसितानुकारि यौवनं, किंपाकफलोपमा भोगाः, संध्यारागसमं विषयसुखं, कुशाग्रजलबिंदुचंचला लक्ष्मीः, सुलभं दुःखं, दुर्लभं सुखं, अनिवारितप्रसरो मृत्युः, तस्मादेवं स्थिते सति भो भव्याः! मोहप्रसरं छिंदंतु. जिनेंद्रधर्मे मनो नयंतु. एवं चारणश्रमणदेशनां श्रुत्वा सुरादयो यथाऽऽगतास्तथा गताः. तदा लब्धावसरेणाग्निशिखिना भणितं, यद्येतासां बालिकानां को भर्ता भविष्यति? चारणश्रमणाभ्यामुक्तमेते द्वे कन्ये भ्रातृवधकारिणो नार्यौ भविष्यतः. तयोरेतद्वचः श्रुत्वा राजा श्याममुखो जातः.

अस्मिन्नवसरे आवाभ्यामुक्तं, तात! सांप्रतमेव साधुभ्यामुक्तं संसारस्वरूपं, तत आवयोरलमेवंविधावसानेन विषयसुखेन, आवयोरेतद्वचस्तातेन प्रतिपन्नं, आवाभ्यां च भ्रातृस्नेहेन स्वदेहसुखकारणानि त्यक्तानि. भ्रातुरेव स्नानभोजनादिचिंतां कुर्वत्यावावां तिष्ठावः. अन्यदास्मद्भ्रात्रा पृथिवीं भ्रमता दृष्टा कुमार! भवन्मातुलपुत्री पुष्पवती कन्यका. तद्रूपाक्षित-

चित्तस्तां हृत्वा आगतः, परं तद्दृष्टिं सोढुमक्षमः, स विद्यां साधयितुं गतः. अतःपरं वृत्तांतो युष्माकं ज्ञानगोचरोऽस्ति. तस्मिन् काले जनदंतिकादागत्य पुष्पवत्या आवयोर्भ्रातृवधवृत्तांतः कथितः. ततः शोकभरेण आवां रोदितुं प्रवृत्ते, मधुरवचनैश्च पुष्पवत्या रक्षिते. तदा आवां शंकरीविद्या एवं वक्तुं प्रवृत्ता, असौ भ्रातृवधकारी ब्रह्मदत्तश्चक्रवर्ती भविष्यति. युवां मुनिवचनं किं न स्मरथः? एतद्वचनमाकर्ण्य आवाभ्यां जातानुरागाभ्यां मानितं, परं पुष्पवत्या बालिकया स्नेहरससंभ्रांतया रक्तपताकां विहाय श्वेतपताका चालिता. तद्दर्शनानंतरं त्वमन्यत्र कुत्रापि गतः, नानाविधग्रामाकरनगरादिषु भ्रमंतीभ्यामावाभ्यां त्वं कचिन्न दृष्टः, ततो विखिन्ने आवामिहागते. सांप्रतमतर्कितहिरण्यसमं तव दर्शनं जातं. ततो हे महाभाग! पुष्पवतीव्यतिकरं स्मृत्वा कुरु अस्मत्समीहितं. एवं श्रुत्वा कुमारेण सहर्षं मानितं. गंधर्वविवाहेन तयोः पाणिग्रहणं कृतं. एकरात्रौ ताभ्यां समभुषित्वा प्रभाते कुमारस्तयोरेवमुवाच, युवां पुष्पवत्या समीपं गच्छतं, तया समं च तावत्स्थातव्यं, यावन्मम राज्यलाभो भवति. एवं श्रुत्वा ते गते. तावत्कुमारो न तद्धवलगृहं, न तं परिजनं च पश्यति, चिंतित-

वांश्च एषा विद्याधरीमायेति चिंतयन् रत्नवतीगवेषणानिमित्तं स तापसाश्रमाभिमुखं गतः. न च तत्र तेन रत्नवती दृष्टा, न चान्यः कोऽपि पुरुषो दृष्टः. ततः कं पृच्छामीति विचार्य स इतस्ततः पश्यति, तावदेको भद्राकृतिः पुरुषस्तत्रायातः, कुमारेण स पृष्टः, भो महाभाग! एवंविधरूपनेपथ्या एका स्त्री मयात्र मुक्ता, कल्येऽद्य वा त्वया सा दृष्टा? तेन भणितं पुत्र! त्वं किं तस्या रत्नवत्या भर्ता? कुमारो भणति एवं. तेन भणितं कल्ये सा मया रुदंती दृष्टा, अपराह्णकाले च तस्याः समीपे गतः, पृष्टा च सा मया पुत्रि! कासि त्वं? कुतः समागता? किं ते शोककारणं? क्व वा त्वया गंतव्यं? तया किंचित्कथिते सा मया प्रत्यभिज्ञाता, मम त्वं दौहित्री भवसीत्युदित्वा मया तस्य लघु पितुः समीपे गत्वा शिष्टा. तेनाप्युपलक्ष्य सा विशेषादरेण स्वमंदिरे प्रवेशिता. सर्वत्र त्वं गवेषितः परं न क्वचिद् दृष्टः, सांप्रतं सुंदरं जातं यत्त्वं लब्धः. एवमुक्त्वा नीतः कुमारस्तद्गृहे, उपचारः कृतः, तत्र महोत्सवेन रत्नवतीपाणिग्रहणं कुमारः कृतवान्, तया सह विषयसुखमनुभवंश्च कियत्कालं तस्थौ. अन्यदा वरधनुवर्षदिवसोऽद्येत्युक्त्वा तद्गृहे कुमारेण ब्राह्मणादयो भोजिताः. अस्मिन्नवसरे वरधनुः कृत-

सर्वलोको नगराद्बहिः क्रीडितुमायातः, वरधनुकुमारावपि कौतुकेन नगराद्बहिर्गतौ. निर्भर-
क्रीडारसनिमग्ने लोकेऽतर्कित एव पातितमिंठो निरंकुशो राज्ञो हस्ती तत्रायातः, समुच्छलि-
तकोलाहलो भग्नक्रीडारसो नष्टः समंतान्नारीनिकरः. एका च बालिका समुन्नतपयोधरा न-
श्यंती तस्य हस्तिनो दृष्टौ पतिता, सा शरणं मार्गयंती इतस्ततः पश्यति, तस्याः परिजनाः
पूत्कुर्वन्ति. भयभ्रांतायास्तस्याः पुरो भूत्वा कुमारेण स करी हक्कितः, एषा च मोचिता.
सोऽपि करी तां मुक्त्वा रोषवशविस्तारितलोचनः प्रसारितशुण्डादण्डः शीघ्रं कुमाराभिमुखं
धावितः, कुमारेणाप्युत्तरीयवस्त्रं गजाभिमुखं प्रक्षिप्तं. गजेन तद्वस्त्रं शुंडया गृहीत्वा गगने
प्रक्षिप्तं, गगनाच्च पुनर्भूमौ निपतितं, तद्ग्रहणाय यावत्करी पुनर्भूम्यभिमुखं परिणमति,
तावदुत्प्लुत्य कुमारस्तत्स्कंधमारूढः, स्वकरतलाभ्यां तत्कुंभस्थलमास्फालितवान्. मधुरवच-
नैश्च संतोषितः सन् करी स्ववशं नीतः. समुच्छलितः साधुकारः, जयति कुमार इति पठितं
वंदिजनैः, कुमारेण स करी आलानस्तंभसमीपं नीतो बद्धश्च. नरपतिस्तमनन्यसदृशं दृष्ट्वा
परमं विस्मयं प्राप्तः स्वमंत्रिणं पप्रच्छ, क एषः? ततः कुमारस्वरूपाभिज्ञेन मंत्रिणोक्तं, एष ब्र-

ल्लराज्ञः पुत्रो ब्रह्मदत्तकुमार इति. ततस्तुष्टेन राज्ञा नीतः कुमारः स्वभुवनं, सत्कृतश्च स्नानमज्जनभोजनादिभिः, ततः कुमारस्याष्टौ स्वपुत्र्यो दत्ताः, महोत्सवपूर्वकं तासां पाणिग्रहणं कुमारेण कृतं. तत्र कियद्दिनानि वरधनुकुमारौ सुखेन स्थितौ. अन्यदा एका स्त्री कुमारसमीपमागत्य भणितुं प्रवृत्ता, यथा कुमार! अस्ति किंचिद्वक्तव्यं तव, कुमारेणोक्तं वद? सोवाच अस्यामेव नगर्यां वैश्रमणो नाम सार्थवाहः, तस्य पुत्री श्रीमत्यस्ति, सा मया बालभावादारभ्य पालिता, या त्वया तदानीं हस्तिसंभ्रमाद्रक्षिता. हस्तिसंभ्रमोद्धरिता सा तदानीं जीवितदायकं त्वां स्नेहेन विलोकयंती त्वदेकचित्ता त्वद्रूपलावण्यकलाकौशलमोहिता त्वामेव स्मरंती परिजनेन कथमपि स्वमंदिरं नीता, तत्रापि सा न मज्जनभोजनादिदेहस्थितिं करोति. तदानीं मया तस्या उक्तं, कथं त्वमकांडे ईदृशी जाता? यावन्ममापि प्रतिवचनं न ददासि? हसित्वा सा एवमुवाच, हे अंब! भवत्याः किमकथनीयं? परं लज्जया किंचिद्वक्तुं न शक्नोमि. पुनर्मया साग्रहं पृष्टा सोवाच, येनाहं हस्तिसंभ्रमाद्रक्षिता, तेन समं यदि मम पाणिग्रहणं न स्यात्, तदा मेऽवश्यं मरणं, एवमुक्त्वा तयाहं तव समीपे प्रेषिता, अंगीकु-

ब्रराज्ञः पुत्रो ब्रह्मदत्तकुमार इति. ततस्तुष्टेन राज्ञा नीतः कुमारः स्वभुवनं, सत्कृतश्च स्नानमज्जनभोजनादिभिः, ततः कुमारस्याष्टौ स्वपुत्र्यो दत्ताः, महोत्सवपूर्वकं तासां पाणिग्रहणं कुमारेण कृतं. तत्र कियद्दिनानि वरधनुकुमारौ सुखेन स्थितौ. अन्यदा एका स्त्री कुमारसमीपमागत्य भणितुं प्रवृत्ता, यथा कुमार! अस्ति किंचिद्वक्तव्यं तव, कुमारेणोक्तं वद? सोवाच अस्यामेव नगर्यां वैश्रमणो नाम सार्थवाहः, तस्य पुत्री श्रीमत्यस्ति, सा मया बालभावादारभ्य पालिता, या त्वया तदानीं हस्तिसंभ्रमाद्रक्षिता. हस्तिसंभ्रमोद्धरिता सा तदानीं जीवितदायकं त्वां स्नेहेन विलोकयंती त्वदेकचित्ता त्वद्रूपलावण्यकलाकौशलमोहिता त्वामेव स्मरंती परिजनेन कथमपि स्वमंदिरं नीता, तत्रापि सा न मज्जनभोजनादिदेहस्थितिं करोति. तदानीं मया तस्या उक्तं, कथं त्वमकांडे ईदृशी जाता? यावन्ममापि प्रतिवचनं न ददासि? हसित्वा सा एवमुवाच, हे अंब! भवत्याः किमकथनीयं? परं लज्जया किंचिद्वक्तुं न शक्नोमि. पुनर्मया साग्रहं पृष्टा सोवाच, येनाहं हस्तिसंभ्रमाद्रक्षिता, तेन समं यदि मम पाणिग्रहणं न स्यात्, तदा मेऽवश्यं मरणं, एवमुक्त्वा तयाहं तव समीपे प्रेषिता, अंगीकु-

रु तां बालिकां. कुमारेण तद्वचोंगीकृतं. प्रशस्तदिवसे तस्याः पाणिग्रहणं कुमारेण कृतं. व-
रधनुना तु सुबुद्धिनामामात्यपुत्र्या नंदननाम्न्याः पाणिग्रहणं कृतं. एवं च द्वयोरपि विषय-
सुखमनुभवतोस्तयोर्गताः कियंतो वासराः, तयोः सर्वत्र प्रसिद्धिर्जाता.

तावन्यदा गतौ वाराणस्यां, ब्रह्मदत्तं बहिः स्थापयित्वा वरधनुर्नगरस्वामिकटकसमीपं
गतः, एष हर्षितः सबलवाहनः संमुखो निर्गतः, कुमारं च हस्तिस्कंधे समारोप्य नगरीप्रवे-
शोत्सवो महान् कृतः. स्वभवने नीतस्य कुमारस्य स्नानमज्जनभोजनादिसामर्थ्यं कृत्वा, प्रका-
मं सत्कारं कृत्वा च स्वपुत्री कनकवती अनेकहयगजरथद्रव्यकोशसहिता दत्ता, प्रशस्तवि-
वाहो जातः, तया समं विषयसुखमनुभवतस्तस्य सुखेन कालो याति. ततो दूतसंप्रेषणेना-
कारिताः सबलवाहनाः पुष्पचूलराजधनुमंत्रिकणेरदत्तभवदत्तादयोऽनेके राजमंत्रिणः समाया-
ताः. तैः सर्वैः कुमारो राज्येऽभिषिक्तः, वरधनुस्तु सेनापतिः कृतः. ब्रह्मदत्तः सर्वसैन्यसहि-
तो दीर्घनृपोपरि चलितः, अनवच्छिन्नप्रयाणैश्च कांपिल्यपुरे प्राप्तः. दीर्घनृपेणापि कटकादी-
नां दूतः प्रेषितः, परं तैस्तु निर्भर्त्सितः स दूतः स्वस्वामिसमीपे गतः. ब्रह्मदत्तसैन्येन कांपि-

ह्यपुरं समंताद्वेष्टितं. ततो दीर्घनृपेणैवं चिंतितं, कियत्कालमस्माभिर्बिलप्रविष्टैरिव स्थेयं ? साहसमवलंब्य नगरात्स्वसैन्यपरिवृतो दीर्घनृपो निर्गत्य संमुखमायातः. ब्रह्मदत्तदीर्घनृपसे-न्ययोर्घोरः संग्रामः प्रवृत्तः. क्रमाद् ब्रह्मदत्तसैन्येन दीर्घनृपसैन्यं भग्नं. अथ दीर्घनृपः स्वयमु-त्थितः. ब्रह्मदत्तोऽपि तमायातं वीक्ष्य प्रदीप्तकोपानलस्तदभिमुखं चलितः, तयोर्द्वयोर्युद्धं लग्नं. अनेकैरायुधैर्निक्षिप्तैर्न तयोः संग्रामरसः संपूर्णो बभूव. ब्रह्मदत्तेन ततश्चक्रं मुक्तं. चक्रेण दीर्घ-नृपमस्तकं छिन्नं. ततो जयत्येष चक्रवर्तीत्युच्छलितः कलकलः, सिद्धगंधर्वदेवैर्मुक्ता पुष्पवृष्टिः, उक्तं च उत्पन्नोऽयं द्वादशश्चक्री. ततो जनपदलोकैः स्तूयमानो नारीवृंदकृतमंगलः कुमारः स्वमंदिरे प्रविष्टः, कृतश्च सकलसामंतैर्ब्रह्मदत्तस्य चक्रवर्त्यभिषेकः. चक्रवर्तित्वं पालयन् ब्रह्म-दत्तः सुखेन कालं निर्गमयति. अन्यदा चक्रवर्तिनः पुरो नटेन नाट्यं कर्तुमारब्धं, स्वदास्या अपूर्वं कुसुमदामगंडं हस्ते ढौकितं. तच्च प्रेक्षतो गीतविनोदं शृण्वतश्चक्रवर्तिन एवं विमर्शो जातः. एवंविधो नाट्यविधिर्मया क्वचिद् दृष्टः, क्वचिच्चैतादृशं पुष्पदामगंडमपि घ्रातं. एवं चिं-तयतस्तस्य जातिस्मरणमुत्पन्नं. दृष्टाः पूर्वभवाः, तत्र सौधर्मे पद्मगुल्मविमानेऽनुभूतं नाट्यद-

र्शनदिव्यपुष्पाघ्राणादिकं तस्य स्मृतिपथमाययौ. देवसुखस्मरणेन मूर्छां गतः पतितो भूमौ चक्री. पार्श्ववर्तिभिर्वातोत्क्षेपादिना स्वस्थीकृतः. ततश्चक्रवर्तिना पूर्वभवभ्रातृशुद्ध्यर्थं श्लोकार्धमिदं रचितं, यथा—आस्व दासौ मृगौ हंसौ । मातंगावमरौ तथा ॥ इदं श्लोकार्धं कृत्वा चक्रिणा वरधनुसेनापतेरुक्तं, इदं श्लोकार्धं सर्वत्र निर्घोषय? एतत्पश्चिमार्धं यः पूरयति तस्य राजा राज्यार्धं ददाति. इदं श्लोकार्धं सर्वलोकैः शिक्षितं, ते यत्र तत्र निर्घोषयंति. अत्रावसरे स पूर्वभवसंबंधी भ्राता चित्रजीवः पुरिमतालनगरे इभ्यपुत्रो भूत्वा संजातजातिस्मरणो गृहीतव्रतस्तत्र नगरे मनोरमाभिधाने आरामे समवसृतः. तत्र प्रासुके भूभागे पात्रोपकरणानि निक्षिप्य धर्मध्यानोपगतः कायोत्सर्गेण स्थितः. अत्रांतरे आरघट्टिकेन पठ्यमानं तत् श्लोकार्धं मुनिना श्रुतं. ज्ञानोपयोगेन स्वभ्रातृस्वरूपं सर्वमवगम्य मुनिनोत्तरचरणद्वयं पूरितं—एषा नौ षष्टिका जाति-रन्योन्याभ्यां वियुक्तयोः ॥ १ ॥ ततोऽसावारघट्टिकस्तत् श्लोकार्धं लिखित्वा प्रफुल्लास्यपंकजो गतो राजकुलं, पठितश्चक्रिणः पुरः संपूर्णः श्लोकः. ततः पूर्वभवभ्रातृस्नेहातिरेकेण चक्री मूर्छां गतः, क्षुभिता सभा, रोषवशंगतेन सेवकवर्गेण

आरचट्टिकश्चपेटाजिर्हंतुमारब्धः, हन्यमानेन तेनोचे, इदं पदरूयं मया न पूरितं, किंतु वनस्थितेन मुनिनेति विलपन्नसौ मोचितः. गतमूर्छेन चक्रिणा पूर्वजवभ्रातृमुनिं समागतं श्रुत्वा तद्भक्तिस्नेहाकृष्टचित्तो ब्रह्मदत्तचक्री सपरिकरो निर्ययौ. उद्याने तं मुनिं ददर्श, वंदित्वा चाग्रे उपविष्टः, मुनिना प्रारब्धा धर्मदेशना, दर्शिता जवनिर्गुणता, वर्णिताः कर्मबंधहेतवः, श्लाघितो मोक्षमार्गः, ख्यापितः शिवसौख्यातिशयः, इमां देशनां श्रुत्वा पर्षत्संविग्ना जाता. ब्रह्मदत्तस्त्वजावित एवमाह, जगवन्! यथा स्वसंगसुखेन वयमाह्लादितास्तथा राज्यस्वीकारेण सांप्रतमस्मानाह्लादयंतु, पश्चादावां तपः स्वयमेव करिष्यावः, एतदेव वा तपसः फलं. मुनिराह युक्तमेवेदं वचो जवतामुपकारोद्यतानां, परमियं मानुष्यता दुर्लजा, सततं पतनशीलमायुः, श्रीश्च चंचला, अनवस्थिता धर्मबुद्धिः, विषया विपाककटवः, विषयासक्तानां च ध्रुवो नरकपातः, दुर्लजं पुनर्मोक्षबीजं विरतिरत्नं, तत्त्यागान्नरकपातहेतुः कतिपयदिनजावि राज्याश्रयणं न विदुषां चित्तमाह्लादयति.

ततः परित्यज्य कदाशयं प्राग्जवानुभूतदुःखानि स्मर ? पिब जिनवचनामृतरसं ? संचर



=अंगिकारकर

तदुक्तमार्गेण ? सफलीकुरु मनुष्यजन्मेति. स प्राह भगवन्नुपनतत्यागेनाऽदृष्टसुखवांछाऽज्ञानतालक्षणं, तन्मैवमादिश ? कुरु मत्समीहितं ? मुनिराह संसारसुखं भुक्तं परभवे महते दुःखाय भावीति तत्त्यागः कार्यते. एवं मुनिना वारंवारमुक्तोऽपि यदा चक्रवर्ती न प्रतिबुध्यते, तदा मुनिना चिंतितं, आः ज्ञातं, पूर्वभवे सनत्कुमारचक्रिस्त्रीरत्नकेशसंस्पर्शनजाताभिलाषातिरेकेण संभूतभवेऽमुना मया निवार्यमाणेनापि चक्रवर्तिपदवीप्राप्तिनिदानं कृतं, तस्येदृशं फलं. अतः कारणादसौ दुष्टाध्यवसायो जिनवचनानामसाध्य इत्युपेक्षितं. मुनिस्ततो विजहार, क्रमेण च मोक्षं गतः. चक्रिणोऽपि प्रकामं सुखमनुभवतः कियान् कालोऽतीतः. अन्यदैकेन पूर्वपरिचितेन द्विजातिनोक्तोऽसौ, भो राजाधिराज ! ममेदृशी वांछा समुत्पन्नास्ति यच्चक्रिभोजनं भुंजे. चक्रिणोक्तं भो द्विज ! मामकं भोजनं भोक्तुं त्वमक्षमः, यतो मां विहाय मद्भोजनमन्यस्य न परिणमति. ततो ब्राह्मणेनोक्तं धिगस्तु ते राज्यलक्ष्मीमाहात्म्यं, यदन्नमात्रदानेऽप्यालोचयसि. ततश्चक्रिणा तस्य भोजनमंगीकृतं. स्वगृहे निमंत्र्य भोजनदानेन भोजितश्चासौ भार्यापुत्रस्नुषादुहितृपौत्रादिकुटुंबान्वितः. भोजनं कृत्वा स स्वगृहे गतः. रा-

त्यावर्त्यंतजातोन्मादप्रसरोऽनपेक्षितमातृस्नुषाभगिनीव्यतिकरो महामदनवेदनानष्टचित्तः प्रवृ-
त्तोऽकार्यमाचरितुं द्विजः. द्वितीये दिने मदनोन्मादोपशांतः परिजनस्य निजमास्यं दर्शयितु-
मपारयन् निर्गतो नगरात्स द्विज एवं चिंतयामास. अनिमित्तवैरिणा चक्रिणाहं विडंबितः.
अमर्षं वहता तेन द्विजेन वने भ्रमता एकोऽजापालको दृष्टः, स कर्करिकाभिरश्वत्थपत्राणि
काणीकुर्वन् लक्ष्यवेधी वर्तते. द्विजेन चिंतितं मद्विवक्षितकार्यकरोऽयमिति कृत्वोपचरितस्ते-
न दानसन्मानादिभिः, कथितस्तेन स्वाभिप्रायोऽस्य रहसि. तेनापि प्रतिपन्नः. अन्यदा गृ-
हान्निर्गच्छतो ब्रह्मदत्तस्य कुड्यंतरिततनुनानेन अमोघवेधिना निक्षिप्तगोलिकया समकालमु-
त्पाटिते लोचने. राज्ञा तद्वृत्तांतमवगम्य उत्पन्नकोपेनासौ सपुत्रबांधवो घातितः. ततश्चक्रि-
णान्येऽपि द्विजा घातिताः. अशांतकोपेन च चक्रिणा मंत्रिण एवमुक्तं, यथा ब्राह्मणानाम-
क्षीणि कर्षयित्वा स्थाले निक्षिप्य स्थालं मम पुरो निधेहि ? यतोऽहं तानि स्वहस्तेन मर्द-
यित्वा वैरवालनसुखमनुभवामि. मंत्रिणा तस्य चक्रिणः क्लिष्टकर्मोदयवशतामवगम्य शाखो-
टतरुफलानि स्थाले निक्षिप्य अर्पितानि. सोऽपि रौद्राध्यवसायस्तानि फलान्यक्षिबुद्ध्या म-

र्दयित्वा सुखमनुभवति. एवं स प्रत्यहं करोति. ततः सप्तशतानि षोडशोत्तराणि वर्षाणि आयुरनुपाल्य प्रवर्धमानरौद्राध्यवसायः सप्तमनरकपृथिव्यां त्रयस्त्रिंशत्सागरोपमायुर्नारको बभूव. सांप्रतं सूत्रमनुष्टीयते—

॥ मूलम् ॥—जाईपराजिओ खलु । कासि नियाणं तु हत्थिणपुरंमि ॥ चुलनीइ बंभदत्तो । उप्पन्नो पउमगुम्माओ ॥ १ ॥ व्याख्या—खलु इति निश्चये अलंकारे वा, जात्या चांडालाख्यया पराजितः पराभूतः सर्वतो निर्धाटितो गृहीतदीक्षः संभूतश्चित्रस्य लघुभ्राता हस्तिनागपुरे चक्रवर्तिस्त्रीरत्नवंदनात् केशपाशसंस्पर्शात् चक्रवर्तिपदप्रार्थनारूपनिदानमकार्षीत्. ततः स संभूतसाधुः पद्मगुल्मविमाने नलिनगुल्मविमाने उत्पन्नः. ततश्च नलिनगुल्मविमानात् संभूतजीवो ब्रह्मराज्ञो भार्या चुलनी, तयोः पुत्रत्वेन ब्रह्मदत्त इति नाम्ना उत्पन्नः. इति.

॥ मूलम् ॥—कंपिल्ले संभूओ । चित्तो पुण जाओ पुरिमतालंमि ॥ सिट्ठिकुलंमि विसाले । धम्मं सोऊण पव्वइओ ॥ २ ॥ व्याख्या—कांपिल्ये नगरे ब्रह्मराजा, तद्भार्या चुलनी, तयोः पुत्रः संभूतजीवो ब्रह्मदत्तः संजातः. चित्रश्चित्रजीवः पुनः पुरिमतालनगरे विशाले विस्तीर्णे

गएकस्मिन् श्रेष्ठिनः कुले श्रेष्ठिपुत्रः संजातः. स च चित्रजीवस्तत्र श्रेष्ठिपुत्रत्वेन समुत्पद्य अनुक्रमेण तारुण्ये धर्मं श्रुत्वा प्रव्रजितः प्रव्रज्यामग्रहीत्. ॥ २ ॥

॥ मूलम् ॥—कंपिल्लंमि य नयरे। समागया दोवि चित्तसंभूया ॥ सुहदुक्खफलविवागं। कहंति ते इक्कमिक्कस्स ॥ ३ ॥ व्याख्या—अथ स चित्रजीवो गृहीतदीक्षः समुत्पन्नजातिस्मृत्यादिज्ञानो विहरन् कांपिल्ये नगरे समागतः. तत्रैव कांपिल्ये ब्रह्मदत्तोऽपि लब्धचक्रवर्तिपदस्तिष्ठति. एकदा स देवोपनीतमंदारकल्पवृक्षाणां मालासाधर्म्यं दृष्ट्वा समुत्पन्नजातिस्मृतिरभूत्. तदा च ब्रह्मदत्तेन—आस्व दासौ मृगौ हंसौ। मातंगावमरौ तथा ॥ इति श्लोकार्धं स्वबंधुसंबंधगर्भितं कृत्वा नगरे उद्घोषणा कारिता, यः कश्चिदप्येतनं श्लोकार्धं पूरयति, तस्मै वांछितं ददामि, राज्यार्धं ददामि. अस्मिन्नेवावसरे भ्रातृबोधनार्थं समागतेन चित्रजीवसाधुना—इमा नौ षष्ठिका जाति—रन्योन्याभ्यां वियुक्तयोः ॥ १ ॥ इति श्लोकोत्तरार्धं पूरितं. तद्वनमध्ये अरघट्टग्रामकेण आरासिकेण साधुमुखेन श्रुत्वा राज्ञोऽग्रे उक्तं. राजापि श्रुत्वा मूर्छां प्राप. ततो राज्ञा पृष्टेन कुट्टितेन च तेनोक्तं मया श्लोकार्धं पूरितं नास्ति.

किंत्वारामे कायोत्सर्गस्थितेन एकेन साधुना पूरितं. ब्रह्मदत्तचक्रधरेण श्लोकपूरणात् ज्ञातोऽयं साधुर्मम भ्राता. ततो राजा मुनिसमीपे गतः, अत एव सूत्रकारेणोक्तं, कांपिल्ये नगरे द्वावपि चित्रसंभूतौ चित्रसंभूतजीवौ चक्रवर्तिमुनीश्वरौ समागतौ, एकत्र मिलितौ तौ च सुखदुःखफलविपाकं सुकृतदुःकृतकर्मानुभावरूपं एकैकस्य परस्परं कथयतःस्म इत्यध्याहार्यं. ।३।

॥ मूलम् ॥—चक्कवट्टी महड्ढिओ । बंभदत्तो महायसो ॥ भायरं बहुमाणेणं । इमं वयणमब्बवी ॥ ४ ॥ व्याख्या—ब्रह्मदत्तचक्रवर्ती भ्रातरं बहुमानेन मनसो रागेण इदं वचनमब्रवीत्. कथंभूतः चक्रवर्ती? महार्द्धिकः संप्राप्तषट्खंडराज्यः, पुनः कथंभूतो ब्रह्मदत्तः? महायशाः, महद् यशो यस्य स महायशा भुवनत्रयप्रसिद्धः ॥ ४ ॥

॥ मूलम् ॥—आसि मो भायरा दोवि । अन्नमन्नवसाणुगा ॥ अन्नमन्नमणुरत्ता । अन्नमन्नहिएसिणो ॥ ५ ॥ व्याख्या—मो इति आवां द्वावपि भ्रातृभ्रातरौ आसि आस्व, पूर्वजन्मन्यावामुभौ भ्रातरावभवावेत्यर्थः. कथंभूतौ द्वौ? अन्योन्यवशानुगौ, अन्योन्यं परस्परं वशमनुगच्छत इत्यन्योन्यवशानुगावन्योन्यवशवर्तिनावित्यर्थः. पुनः कथंभूतौ? अन्योन्यमनुरक्तौ


=भ्रातिवाला=

परस्परं स्नेहवंतौ. पुनः कीदृशौ? अन्योन्यं हितैषिणौ परस्परं हितवांछकौ, एतादृशावत्रावेत्यर्थः. अत्र मुहुर्मुहुरन्योन्यग्रहणं चित्ततुल्यतात्यादरख्यापनार्थं. ॥ ५ ॥

॥ मूलम् ॥—दासा दसन्ने आसी । मिया कालिंजरे नगे ॥ हंसा मयंगतीराए । चंमाला कासभूमिए ॥ ६ ॥ व्याख्या—क च अभूतां तत्स्थानमाह—आवां दशार्णदेशे दासौ आस्व, कालंजरनाम्नि नगे पर्वते मृगौ आस्व, पुनर्मृतगंगानदीतटे हंसौ आवां आस्व. काशीभूम्यां वाराणस्यां चांमालावभूवाव. ॥ ६ ॥

॥ मूलम् ॥—देवा य देवलोगंमि । आसि अम्हे महड्डिया ॥ इमा णो छट्ठिया जाई । अन्नमन्नेण जा विणा ॥ ७ ॥ व्याख्या—पुनस्ततश्चांमालजन्मनः परं नो भ्रातः 'अम्हे' आवां देवलोके सौधर्मदेवलोके महर्द्धिकौ देवावभूव. हे भ्रातः णो इत्यावयोरन्योन्ययावनिका परस्परसाहित्यरहिता परस्परवियोगसहिता षष्ठिका जातिरियं प्रत्यक्षा जाता. ॥ ७ ॥

इति श्रुत्वा मुनिराह—

॥ मूलम् ॥—कम्मा नियाण पगमा । तुमे राय विचिंतिया ॥ तेसिं फलविवागेण । वि-

प्पउंगमुवागया ॥ ८ ॥ व्याख्या—हे राजन्! त्वया कर्माणि विचिंतितानि, आर्त्तध्यानरूपाणि ध्यानानि ध्यातानि, आर्त्तध्यानहेतुभूतानि कर्माणि विचिंतितानीत्यर्थः. कीदृशानि कर्माणि? निदानप्रकृतानि निदानेनोपार्जितानि, निदानेन भोगप्रार्थनावशेन प्रकृतानि निदानप्रकृतानि प्रकर्षेण बद्धानि, तेषां कर्मणां फलविपाकेन फलोदयेन आवां विप्रयोगमुपागतौ वियोगं प्राप्तौ. ॥ ८ ॥ अथ चक्री प्रश्नं करोति—

॥ मूलम् ॥—सच्चसोअप्पगडा । कम्मा मए पुरा कडा ॥ ते अज्ज परिभुंजामो । किं नु चित्तेवि से तहा ॥ ९ ॥ व्याख्या—हे साधो! हे भ्रातर्मया पुरा पूर्वजन्मनि कर्माणि कृतानि. कथंभूतानि कर्माणि? सत्यशौचप्रकटानि, सत्यं मिथ्याराहित्यं, शौचमात्मशुद्धिकारकं धर्ममयमनुष्ठानं. सत्यं च शौचं च सत्यशौचे, ताभ्यां प्रकटानि प्रसिद्धानि, एतादृशानि मया सुकर्माणि कृतानि. तानि शुभकर्माणि अद्यास्मिन् जन्मनि परि समंतात् भुंजे, स्त्रीरत्नभोगद्वारेण तेषां फलं विषयसुखान्यनुभवामि. हे चित्र! यथाहं राज्यसुखं भुंजे, तथा किं चित्रोऽपि भवानपि नु भुंक्ते? नु इति वितर्के. कोऽर्थः? चक्री वदति यथाहमिदानीं

प्रर्वोपार्जितानां सुकृतानां फलानि भुंजे. तथा किं चित्र नवान् परिभुंक्ते? अपि तु नवान् न परिनुंक्ते एव. नवतस्तु भिक्षुकत्वात् तानि सुकृतानि निष्फलानि जातानीत्याशयः. ॥ ए ॥ अथ मुनिराह—

॥ मूलम् ॥—सव्वं चिन्नं सफलं नराणं । कडाण कम्माण न मुक्ख अत्थि ॥ अत्थेहिं कामेहिं उ उत्तमेहिं । आया ममं पुन्नफलोववेए ॥ १० ॥ व्याख्या—हे राजन्! नराणां सुचीर्ण सम्यक्प्रकारेण कृतं संयमतपःप्रमुखं सर्वं सफलमेव वर्तते, नराणामित्युपलक्षणत्वात् सर्वेषामपि सफलं नवति. यतः कृतेभ्यः कर्मभ्यो मोक्षो नास्ति, जीवैः कृतानि कर्माण्यवश्यं नुज्यंते, प्राकृतत्वात् पंचमीस्थाने षष्ठी. कृतानां कर्मणां मोक्षो नास्ति, यदुक्तं—कृतकर्मक्षयो नास्ति । कल्पकोटिशतैरपि ॥ अवश्यमेव नोक्तव्यं । कृतं कर्म शुनाशुनं ॥ १ ॥ तस्मान्ममाप्यात्मा अर्थैर्द्रव्यैः पुनः कामैर्विषयसुखैः पुण्यफलैरुपेतो वर्तते. कीदृशैरर्थैः कामैः? उत्तमैर्मनोहरैः. अथवा कीदृशैः कामैः? अर्थ्यैः प्रार्थनीयैः, अर्थ्यंते प्रार्थ्यंते जनैरित्यर्थ्याः, तैरर्थ्यैरित्यनेन चित्रजीवेन साधुनोक्तं मयापि सर्वेंद्रियाणां सुखानि द्रव्याणि च पुण्यफलानि



=सहित हैं=

प्राप्तानीति. इति त्वया न ज्ञातव्यं यदनेन किमपि सुकृतफलं न लब्धमस्तीति भावः ॥१०॥ तदेव सूत्रकारो गाथया आह—

॥ मूलम् ॥—जाणाहि संभूय महाणुभागं । महड्डियं पुण्णफलोववेयं ॥ चित्तंपि जाणाहि तहेव रायं । इड्ढी जुई तस्सवि य प्पभूया ॥ ११ ॥ व्याख्या—पूर्वनाम्ना ऋषिर्वदति—हे संभूतमहाराज ! यथा त्वमात्मानं महानुभागं तथा महर्द्धिकं तथा पुण्यफलोपपेतं जानासि, तथा चित्रमपि मामपि तादृशमेव जानीहि ? महान् अनुभागो यस्य स महानुभागस्तं महानुभागं बृहन्माहात्म्यं. तथा महती ऋद्धिर्यस्य स महर्द्धिः, महर्द्धिरेव महर्द्धिकस्तं महर्द्धिकं विशाललक्ष्मीकं, पुण्यफलेन उपपेतस्तं एतादृशं. ऋद्धिर्द्विपदचतुष्पदधनधान्यादिसंपत्तिः, द्युतिर्दीप्तिस्तस्य चित्रस्यापि, अर्थान्ममापि प्रचुरा वर्तते इति जानीहि ? चशब्दोऽत्र यस्मादर्थे. इह वृद्धसंप्रदायः—यथा निदानसहितः संभूतसाधुश्चक्रवर्त्यभूत्, तथा चित्रसाधुर्निदानरहित एकस्य श्रेष्ठिमहर्द्धिकस्य कुले पुत्रत्वेनोत्पन्नः, तत्र चक्रवर्तिवत्तस्य ऋद्धिरासीत्, प्रतिदिनं सुवर्णदीनाराणां कोटिं याचकेभ्यो ददान आसीत्. निरंतरं च षड्ऋतुसुखदा-

यकेषु मनोहरोच्चैस्तरप्रासादेषु भोगान् भुंजानोऽनेकगजतुरगरथयानादिकऋद्धिमान् सुरूपकामिनीनां परिकरेण परिवृतो द्वात्रिंशद्विधं नाटकं पश्यन् सदा सुखनिमग्नो बहुधा भोगरसयुक्तो बभूवेति कथानकं ज्ञेयं. ॥ ११ ॥

॥ मूलम् ॥—महत्थरूवा वयणप्पभूआ । गाहाणुगीया नरसंघमज्झे ॥ जं भिक्खुणो सीलगुणोववेया । इहं जयंते समणोम्हि जाओ ॥ १२ ॥ व्याख्या—अथ चेदेतादृशी ऋद्धिस्तव आसीत्, तर्हि कथं त्यक्ता? हे भ्रातः सा गाथा साधुभिर्नरसंघमध्ये. नराणां मनुष्याणां संघो नरसंघस्तस्य मध्ये मनुष्यसभामध्येऽनुगीता उक्ता, मया श्रुतेति शेषः. गीयते इति गाथा धर्माभिधायिनी सूत्रपद्धतिर्मया स्थविरमुखात्कर्णगोचरीकृता. कथंभूता गाथा? महार्थरूपा, महान् द्रव्यपर्यायभेदसहितो निश्चयव्यवहारसहितश्च अर्थो यस्य तन्महार्थं. तादृशं रूपं यस्याः सा महार्थरूपा. पुनः कीदृशा गाथा? वयणप्पभूआ, वचनैर्नयभेदैः प्रभूता वचनप्रभूता, अल्पाक्षरा बह्वर्थेत्यर्थः. सा इति का गाथा? यां गाथां श्रुत्वा इत्यध्याहारः, यां धर्माभिधायिनीं सूत्रपद्धतिं श्रुत्वा, भिक्षवः साधवः शीलगुणोपपेताः संत इह

ब्रह्म ५. एते पंच प्रासादा यत्र चक्रिणो रोचंते तत्रैव वार्धकिरत्नेन चक्रिसूत्रधारेण विधीयंते इति वृद्धा आहुः. तस्मादत्रेदं गृहमिति पृथगुक्तमस्ति. पांचालानां गुणग्रहणं तु अत्युदीर्णत्वात्. अन्यथा भरतक्षेत्रस्य सारं तद्गृहेऽस्त्येव. ॥ १३ ॥

॥ मूलम् ॥—नट्टेहिं गीएहिं य वाइएहिं । नारीजणाइं परिवारयंते ॥ भुंजाइ भोगाइ इमाइ भिक्खु । मम रोयई पव्वज्जा हु दुक्खं ॥ १४ ॥ व्याख्या—भो चित्र! हे भिक्षो! हे साधो! ममैतद्रोचते, एतद् हृदये प्रतिभाति. हु इति निश्चयेन प्रव्रज्या दुःखं वर्तते इति शेषः. दीक्षायां सुखं किमपि नास्ति. तस्मात् हे साधो! त्वमिमान् प्रत्यक्षं दृश्यमानान् भोगान् भुंक्ष्व? कथंभूतः सन्? नाटकैर्द्वात्रिंशद्विधैः, गीतैर्गांधर्वशास्त्रोक्तैः, वादित्रैर्भरतशास्त्रोक्तैर्मृदंगादिभिस्तथा नारीजनैः परिवृतः सन् विषयसुखान्यनुभव? अत्र नारीजनानामेव ग्रहणं कृतं, अन्येषां गजाश्ववस्त्रासनद्रव्यादीनां ग्रहणं न कृतं, तत्तु तस्य स्त्रीलोलुपत्वात्, सर्वविषयेषु स्त्रीणामेव प्राधान्यात्. ॥ १४ ॥

॥ मूलम् ॥—तं पुव्वनेहेण कयाणुरायं । नराहिवं कामगुणेसु गिद्धं ॥ धम्मस्सिओ त-

स्स हियाणुपेही । चित्तो इमं वयणमुदाहरित्था ॥ १५ ॥ व्याख्या—यदा तु ब्रह्मदत्तेन संभूतजीवेन चित्रजीवं साधुं प्रत्युक्तं, तदा चित्रजीवः साधुश्चित्र इदं वचनं तं ब्रह्मदत्तनराधिपं चक्रिणंप्रति उदाजहार अवादीत्. कथंभूतं तं ब्रह्मदत्तं? पूर्वस्नेहेन कृतानुरागं, पूर्वभवबांधवप्रेम्णा विहितप्रीतिभावं. पुनः कथंभूतं नराधिपं? कामगुणेषु विषयसुखेषु लोलुपं. कीदृशश्चित्रजीवसाधुः? धर्माश्रितो धर्ममाश्रितः. पुनः कीदृशश्चित्रः? तस्य ब्रह्मदत्तस्य हितानुप्रेक्षी हितवांछकः, हितमनुप्रेक्षते इत्येवंशीलो हितानुप्रेक्षी. ॥१५॥ किमुदाजहारेत्याह—

॥ मूलम् ॥—सव्वं विलवियं गीयं । सव्वं नट्टं विडंबियं ॥ सव्वे आभरणा भारा । सव्वे कामा दुहावहा ॥ १६ ॥ व्याख्या—हे राजन्! गीतं सर्वं विलपितं विलापतुल्यं, सर्वं नाट्यं नाटकं विडंबितं, भूतावेष्टितपीतमद्यादिजनांगविक्षेपतुल्यं. सर्वाण्याभरणानि भारतुल्यानि. सर्वे कामा दुःखावहा दुःखदायकाः, गजपतंगभृंगमीनकुरंगादीनामिव बंधनमरणादिकष्टदा इत्यर्थः. ॥ १६ ॥

॥ मूलम् ॥—बालाभिरामेसु दुहावहेसु । न तं सुहं कामगुणेसु रायं ॥ विरत्तकामाण



= क्याकहा सोकेते

= बालकासेलन नहे

13

तवोहणाणं । जं भिक्खुणं सीलगुणे रयाणं ॥ १७ ॥ व्याख्या—हे राजन्! विरक्तकामानां विरक्ता कामेभ्य इति विरक्तकामास्तेषां निर्विषयिणां भिक्षूणां साधूनां यत्सुखं वर्तते, तत्सुखं कामगुणेषु शब्दादिषु इंद्रियसुखेषु कामिनां पुरुषाणां नास्ति. कीदृशेषु कामगुणेषु? बालाभिरामेषु बालानां निर्विवेकाणामभिरामा बालाभिरामास्तेषु, मूर्खा हि विषयेषु रज्यंते. पुनः कीदृशेषु कामगुणेषु? दुःखावहेषु दुःखदायकेषु. कीदृशानां भिक्षूणां? तपोधनानां, तप एव धनं येषां ते तपोधनास्तेषां. पुनः कीदृशानां? शीलगुणे रतानां, शीलस्य गुणा गुणकारिणो नवविधगुप्तयस्तेषु रता आसक्तास्तेषां. ॥ १७ ॥

॥ मूलम् ॥—नरिंद जाई अहमा नराणं । सोवागजाई दुहर्ठ गयाणं ॥ जहिं वयं सव्वजणस्स वेसा । वसीय सोवागनिवेसणेसु ॥ १८ ॥ व्याख्या—हे नरेंद्र! नराणां मनुष्याणां मध्ये अधमा निंद्या जातिः श्वपाकस्य चांडालस्य जातिर्वर्तते, सा जातिर्द्वयोरपि आवयोर्गता प्राप्ता, एं इति वाक्यालंकारे, यस्यां जातौ आवां सर्वजनस्य द्वेष्यौ अभूव. श्वपाकनिवेसनेषु चांडालगृहेषु वसीय आवामवसाव. ॥ १८ ॥

॥ मूलम् ॥—तीसेउ जाईइ उपावियाए । वुड्ढामु सोवागनिवेसणेसु ॥ सव्वस्स लोगस्स दुगंछणिज्जा । इहं तु कम्माइं पुरे कडाइं ॥ १९ ॥ व्याख्या—तस्यां च जातौ तु पापिकायां पापिष्ठायां श्वपाकनिवेशनेषु चांडालगृहेषु वुड्ढामु इति उषितौ निवासमकार्ष्व. कीदृशौ आवां? सर्वस्य लोकस्य जुगुप्सनीयौ हीलनीयौ. इह तु अस्मिन् जन्मनि पुराकृतानि कर्माणि प्रकटीभूतानीत्यर्थः. प्राचीनजन्मनि सम्यगनुष्ठानरूपाणि कृतानि, तेषां फलानि जातिकुलबलैश्वर्यरूपाणि इह प्रकटितानि. तस्माद्धर्मकरणे प्रमादो न विधेय इत्यभिप्रायः. ॥१९॥

॥ मूलम् ॥—सोदाणिसिं राय महाणुभागो । महड्ढिउ पुण्णफलोववेउ ॥ चइत्तु भोगाइ असासयाइं । आदाणहेउं अभिनिक्खमाहिं ॥ २० ॥ व्याख्या—हे राजन्! यस्त्वं संभूतः पुरा आसीः, सोदाणिसिं स त्वमिदानीं राजा चक्रधरो महानुभागो माहात्म्यसहितो जातोऽसि. कीदृशो राजा? महर्द्धिको विशाललक्ष्मीकः, पुनः कीदृक्? पुण्यफलोपपेतः पुण्यफलसहितः. तस्मादादानहेतोः आदानस्य चारित्रधर्मस्य हेतोः, आदीयते सविवेकैरित्यादानं चारित्रधर्मस्तस्य हेतोः अभिनिक्खमाहि अभिनिःक्रम? अभि समंतान्निःक्रम? गृहपाशात्त्वं

निस्सर? साधुर्नवेत्यर्थः. किं कृत्वा? अशाश्वतान् अनित्यान् भोगान् त्यक्त्वा. पुराकृतस्य
धर्मस्य फलं चेत्त्वयेदानीं भुज्यते, तदेदानीमपि धर्ममंगीकुरु? यतोऽग्रे शाश्वतसुखभाक् स्या
इति भावः. ॥ २० ॥ धर्मस्य अकरणे दोषमाह—

॥ मूलम् ॥—इह जीविए राय असासयंमि । धणियं तु पुन्नाइं अकुव्वमाणो ॥ से सो-
अइ मच्चु मुहोवणीए । धम्मं अकाऊण परम्मि लोए ॥ २१ ॥ व्याख्या—हे राजन्! इ-
स्मिन् मनुष्यजीविते मनुष्यायुषि पुण्यान्यकुर्वाणो मनुष्यः सुकृतानि न करोति, स दुःक-
र्मनिर्मृत्युमुखमुपनीतः सन् धर्ममकृत्वा परस्मिन् लोके गतः शोचते पश्चात्तापं कुरुते. मरण-
समये एवं जानाति हा मया मनुष्यजन्म प्राप्य धर्मो न कृतः. इति चिंतां करोति. कथंभू-
ते जीविते? धणियं तु अत्यंतमशाश्वते. ॥ २१ ॥ मृत्युनां मुखमांसाम्हुवा थका कोइ रा खवावा को नही=

॥ मूलम् ॥—जहेह सीहो य मियं गिहाय । मच्चू नरं नेइ हु अंतकाले ॥ न तस्स
माया व पिया व भाया । कालंमि तम्मिंसहरा भवंति ॥ २२ ॥ व्याख्या—यथेह संसारे
सिंहो मृगं गृहीत्वा स्ववशं नयति, अत्र चशब्दः पदपूरणे, एवमनेनैव प्रकारेण, अनेनैव


सोहीनतावेहै=

दृष्टांतेन मृत्युर्मरणं, हु इति निश्चयेनांतकाले नरं मनुष्यं गृहीत्वा स्ववशं नयति. तस्मिन् मनुष्यस्य मरणकाले माता, च पुनः पिता, च पुनर्भ्राता, एते सर्वे अंशधरा न भवंति, अंशं स्वजीवितव्यभागं धारयंति, मृत्युना नीयमानं नरं रक्षंतीत्यंशधराः, स्वजीवितव्यदायका न भवंतीत्यर्थः. ॥ २२ ॥ पुनर्दुःखादपि न त्रायंते इत्याह—

॥ मूलम् ॥—न तस्स दुक्खं विभजंति नाइओ । न मित्तवग्गा न सुया न बंधवा ॥ इक्को सयं पच्चणुहोइ दुक्खं । कत्तारमेवं अणुजाइ कम्मं ॥ २३ ॥ व्याख्या—पुनः हे राजन्! तस्य मनुष्यस्य अर्थात् दुःखार्त्तस्य नरस्य दुःखं शारीरिकं मानसिकं दुःखं ज्ञातयः स्वजना न विभजंति, दुःखस्य विभागिनो न भवंति. पुनर्मित्रवर्गा मित्रसमूहाः, पुनः सुता अंगजाः, पुनर्बांधवा भ्रातरोऽपि न दुःखं विभजंति. तदा किं भवतीत्याह—एकोऽयं जीवोऽसहायी स्वयमेव दुःखं प्रत्यनुभवति, एकाकी स्वयमेव दुःखं असातावेदनीयं भुंक्ते. कथं स्वजनादिवर्गे सति एको दुःखं भुंक्ते? तत्राह—कर्म शुभाशुभरूपं कर्तारमेव अनुयाति अनुगच्छति. यः कर्मणां कर्ता स एव कर्मणां भोक्ता स्यादिति भावः. यदुक्तं—यथा धेनुसहस्रेषु । वत्सो विं-

दति मातरं ॥ तथा पुरा कृतं कर्म । कर्तारमनुगछति ॥ १ ॥ २३ ॥

॥ मूलम् ॥—चिच्चा दुपयं च चउप्पयं च । खित्तं गिहं धणं धन्नं च सव्वं ॥ सकम्मप्पबीउ अवसोपयाइ । परं भवं सुंदर पावगं वा ॥ २४ ॥ व्याख्या—अशरणभावनामुक्त्वा एकत्वभावनां वदति—अयं स्वकर्मात्मद्वितीयो जीवः, स्वस्य कर्म स्वकर्म, स्वकर्म एवात्मनो द्वितीयं यस्य स स्वकर्मात्मद्वितीयः, स्वकर्मसहितोऽयं जीवः सुंदरं देवलोकादिस्थानं वाऽथवा पापकं नरकादिस्थानं, एवंविधं परं भवमन्यलोकं अवशः सन् प्रयाति. किं कृत्वा ? द्विपदं भार्यादि, च पुनश्चतुःपदं गजाश्वादि, क्षेत्रं इक्षुक्षेत्रादि, गृहं सप्तभौमिकादि, धनं दीनारादि रजतस्वर्णादि, धान्यं तंदुलगोधूमादि, चशब्दाद्वस्त्राभरणसाररत्नादि, एतत्सर्वं त्यक्त्वा हित्वा जीवः परभवे व्रजतीत्यर्थः. ॥ २४ ॥ अथ मरणादनंतरं पश्चात्तस्य पुत्रकलत्रादयः किं कुर्वंतीत्याह—

॥ मूलम् ॥—तं इक्कं तुच्छसरीरगं से । चिईगयं दहिय उ पावगेणं । भज्जा य पुत्तोवि य नायउ य । दायारमन्नं मणुसंकमंति ॥ २५ ॥ व्याख्या—से इति तस्य मृतस्य पुरुषस्य

तत् एककं जीवरहितं, अस एव तुछं असारं शरीरं, किं? चितीगतं श्मसानाग्निप्रासं पाव-
के दग्ध्वा भस्मसात् कृत्वा, पश्चात्तस्य भार्या, च पुनः पुत्रोऽपि, च पुनर्ज्ञातयः स्वजनाः, ए-
ते सर्वेऽपि अन्यं दातारं अनुसंक्रमंति. कोऽर्थः? यदा कश्चित्पुरुषो भ्रियते, तदा तच्छरीरं प्र-
ज्वाल्य तस्य स्त्रीपुत्रबांधवा अन्यं स्वनिर्वाहकर्तारं धनादिदायकं सेवंते, सर्वेऽपि स्वार्थसाध-
नपरायणा भवंति. ॥ २५ ॥

॥ मूलम् ॥—उवणिज्जइ जीवियमप्पमायं । वन्नं जरा हरइ नरस्स राया ॥ पंचालराया
वयणं सुणाहि । माकासि कम्माइं महालयाइं ॥ २६ ॥ व्याख्या—हे राजन्! नरस्य प्रा-
णिनो जीवितमायुःप्रमाणमप्रमादं यथा स्यात्तथा कर्मनिर्भृत्यवे उपनीयते. पुनर्जीविते सत्य-
पि नरस्य वर्णं शरीरसौंदर्यं जरा हरति, वृद्धावस्था रूपं विनाशयति. तस्माद्धे पंचालराज! हे
पंचालदेशाधिप! वचनं मम वाक्यं श्रृणु? महालयानि महांति मांसभक्षणादीनि कर्माणि
त्वं मा कार्षीः. ॥ २६ ॥ अथ नृपतिराह—

॥ मूलम् ॥—अहंपि जाणामि जहेह साहू । जं मे तुमं साहसि वक्कमेयं ॥ भोगा इ-

=मृत्युके नजीक

=मोटा=

मे संगकरा भवंति । जे दुज्जया अज्जो अम्हारिसेहिं ॥ २७ ॥ व्याख्या—हे साधो! इह जगति यथा वर्तते तथाहमपि जानामि, यत्त्वं मे मम एतद्वाक्यं साधयसि शिक्षयसि, शिक्षारूपेण साधु कथयसि, परं किं करोमि? इमे प्रत्यक्षं भुज्यमाना भोगाः संगकरा भवंति प्रतिबंधकरा भवंति. कीदृशा इमे भोगाः? हे आर्य ये भोगा अस्मादृशैर्गुरुकर्मभिर्दुर्जया दुस्त्याज्याः. ॥ २७ ॥

॥ मूलम् ॥—हत्थिणापुरंमि चित्त । दट्ठूणं नरवइं महड्ढियं ॥ कामभोगेसु गिद्धेणं । नियाणमसुहं कडं ॥ २८ ॥ व्याख्या–हस्तिनागपुरे भो चित्त! मया निदानं कृतं. कीदृशं निदानं? अशुभं भोगाभिलाषत्वादशुभं. किं कृत्वा? नरपतिं सनत्कुमारचक्रिणं दृष्ट्वा. कीदृशं चक्रिणं? महर्द्धिकं. कीदृशेन मया? कामभोगेषु गृद्धेन, इंद्रियसुखलोलुपेन. ॥ २८ ॥

॥ मूलम् ॥—तस्स मे अप्पडिक्कंतस्स । इमं एयारिसं फलं ॥ जाणमाणोवि जं धम्मं । कामभोगेसु मुच्छिओ ॥ २९ ॥ व्याख्या–तस्य निदानस्य प्राग्भवकृतभोगाभिलाषस्य इमं प्रत्यक्षं भुज्यमानं एतादृशं वक्ष्यमाणं फलं जातं. कथंभूतस्य तस्य निदानस्य? अप्रतिक्रांत-

स्य अनालोचितस्य. यस्मिन्नवसरे हस्तिनागपुरे आवां अनशनं कृत्वा प्रसुप्तौ, तदा चक्रधरस्यस्त्रीरत्नस्य केशपाशो मम चरणे लग्नः, तदा मया निदानं कृतं, तदा त्वयाहं निवारितः, भो भ्रातस्त्वं निदानं माकार्षीः, चेन्निदानं कृतं स्यात्तदा मिथ्यादुष्कृतं दातव्यं त्वया इत्युक्तेऽप्यहं निदानान्न निवृत्त इत्यर्थः. जं इति यस्मात्कारणात् अहं जिनोक्तं धर्मं जानन् अपि कामभोगेषु सुतरामतिशयेन मूर्छितोऽस्मि, इंद्रियसुखेषु लुब्धोऽस्मि. नोचेद् ज्ञानस्य एतदेव फलं, ज्ञानी विषयेभ्यो विरक्तः स्यात्, अहं ज्ञाने सत्यपि विषयेषुरभासि, तन्निदानस्यैव फलमित्यर्थः.

॥ मूलम् ॥—नागो जहा पंकजलावसन्नो । दट्ठुं थलं नाभिसमेइ तीरं ॥ एवं वयं कामगुणेसु गिद्धा । न भिक्खुणो मग्गमणुव्वयामो ॥ ३० ॥ व्याख्या—हे साधो ! यथा नागो हस्ती पंकजलावसक्तः, अल्पजले बहुपंके अवसन्नोऽत्यंतं निमग्नस्तीरं दृष्ट्वापि न समेति, तीरस्य तटस्य अभिमुखं गतोऽपि तटं न प्राप्नोति, तीरं तु दूरतः, परं तु स्थलमपि दृष्ट्वा न उच्चभूमिं प्राप्नोति. एवममुना प्रकारेण अनेन दृष्टांतेन वयमित्यस्मादृशाः कामगुणेषु शब्दरूपरसगंधस्पर्शादिषु गृद्धाः लोभिनो भिक्षोर्मार्गं साधुमार्गं साध्वाचारं नानुव्रजामो न प्राप्नुमः,

तम्मात्किं कुर्मः ? वैयं विषयिणो जानंतोऽप्यजानंत इव जाता इत्यर्थः. ॥ ३० ॥

॥ मूलम् ॥—अच्चेइ कालो तुरियंति राईओ । नयावि भोगा पुरिसाण निच्चा ॥ उविच्च भोगा पुरिसं चयंति । दुमं जहा खीणफलंव पक्खी ॥ ३१ ॥ व्याख्या—अथ मुनिः संसारस्य अनित्यत्वेन उपदेशं ददाति. हे राजन्! कालोऽत्येति अतिशयेन गच्छति. कालस्य किं याति ? आयुर्यातीत्यर्थः. रात्रयस्त्वरयंति उत्तालतया व्रजंति. हे राजन्! पुरुषाणां भोगा अपि अनित्याः, भोगाः पुरुषमुपेत्य स्वेच्छया आगत्य पुरुषं त्यजंति, पुरुषा यद्यपि भोगांस्त्यक्तुं नेच्छंति, तथापि भोगाः स्वयमेव पुरुषांस्त्यजंतीत्यर्थः. के किं यथा ? पक्षिणः क्षीणफलं वृक्षं यथा त्यजंति. ॥ ३१ ॥

॥ सूत्रम् ॥—जइ तंसि भोगे चइउं असत्तो । अज्जाइ कम्माइ करेहि राय ॥ धम्मे ठिओ सव्वपयाणुकंपी । तो होहिसि देवो इओ विउव्वी ॥ ३२ ॥ व्याख्या—हे राजन्! यदि त्वं भोगांस्त्यक्तुमशक्तोऽसि, असमर्थोऽसि, तदा हे राजन्! आर्याणि शिष्टजनयोग्यानि कर्माणि कुरु? पुनर्धर्मस्थितः सर्वप्रजानुकंपी भवेति शेषः. सर्वप्रजापालको भव? सर्वाश्च ताः

प्रजाश्च सर्वप्रजाः, तास्वनुकंपते इत्येवंशीलः सर्वप्रजानुकंपी. हे राजन्! आर्यकर्मकरणात् त्वं वैक्रिय शक्तिमान् देवो निर्जर इतो जवादग्रे जविष्यसि. ॥ ३२ ॥

॥ मूलम् ॥—न तुझ जोगे चइऊण बुद्धी । गिद्धोसि आरंजपरिग्गहेसु ॥ मोहं कओ इत्ति विलप्पलावो । गच्छामि रायं आमंतिओसि ॥ ३३ ॥ व्याख्या—हे राजन्नहं गच्छाम्यहं व्रजामि, मया त्वमामंत्रितोऽसि, मया त्वं पृष्टोऽसि, धातूनामनेकार्थत्वात्. हे राजन्! तुझ इति तव जोगांस्त्यक्तुं बुद्धिर्नास्ति, अनार्यकार्याणां जोगा एव कारणानि संति. अतो जोगाननार्यकार्याण्यपि त्यक्तुं मतिर्नास्ति. पुनरारंजपरिग्रहेषु त्वं गृद्धोऽसि लुब्धोऽसि, आरंजपरिग्रहान्न त्यजसीत्यर्थः. एतावान् विप्रलापो विविधवचनोपन्यासो मोघः कृतो निरर्थकः कृतः, जलविलोडनवद्व्यर्थो जातः. तस्मात्कारणादथाहं त्वत्तः सकाशादन्यत्र व्रजामि. तवास्तीत्युक्त्वा मुनिर्गतः. ॥ ३३ ॥ अथ मुनौ गते सति ब्रह्मदत्तस्य किमनूत्तदाह—

॥ मूलम् ॥—पंचालरायावि य बंजदत्तो । साहुस्स तस्सा वयणं अकाउं ॥ अणुत्तरे जुंजिय कामजोए । अणुत्तरे सो नरए पविठ्ठो ॥ ३४ ॥ व्याख्या—पंचालदेशानां राजा पां-

चालराजो ब्रह्मदत्तश्चक्रवर्तिरप्यनुत्तरे सकलनरकावासेभ्य उत्कृष्टे अप्रतिष्ठाननाम्नि प्रविष्ट-स्तत्रोत्पन्न इत्यर्थः. किं कृत्वा? अनुत्तरान् सर्वोत्कृष्टान् कामभोगान् भुंक्त्वा. पुनः किं कृत्वा? तस्य चित्रजीवसाधोर्वचनमुपदेशवाक्यमकृत्वा. निदानकारकस्य नरकगतिरेव. तस्य गुरुकर्म-त्वान्न साधोरुपदेशावकाशो जात इत्यर्थः. ॥ ३४ ॥

॥ मूलम् ॥—चित्तोवि कामेहिं विरत्तकामो। उदग्गचारित्ततवो महेसी ॥ अणुत्तरं सं-जम पालइत्ता। अणुत्तरं सिद्धिगइं गउत्ति बेमि ॥ ३५ ॥ व्याख्या—चित्रोऽपि पूर्वभवचित्रजीवसाधुरपि महर्षिर्महामुनिरनुत्तरं सर्वोपरिवर्तिसिद्धिस्थानं गतः. किं कृत्वा? अनुत्तरं जिनाज्ञाविशुद्धं सप्तदशविधं संयमं पालयित्वा. कथंभूतः स साधुः? कामेभ्यो विरक्तकामः, भोगेभ्यो विरक्ताभिलापः. पुनः कीदृशः सः? उदग्रचारित्रतपाः, उदग्रं प्रधानं साध्वाचारे सर्वविरतिलक्षणं दशविधरूपं चारित्रं, तपो द्वादशविधं यस्य स उदग्रचारित्रतपाः. एतादृशः सन् भोग्यं प्राप्तश्चित्रजीवमुनिरिति सुधर्मास्वामी जंबूस्वामिनं ब्रवीति. हे जंबू! अहं तवाग्रे इति ब्रवीमि. ॥ ३५ ॥ इति चित्रसंभूतीयं त्रयोदशमध्ययनं संपूर्णं. ॥ १३ ॥ इति श्रीमदुत्त-

राध्ययनसूत्रार्थदीपिकायां उपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां चित्रसंभूतीयमध्ययनं संपूर्णं. ॥ १३ ॥

---

॥ अथ चतुर्दशमध्ययनं प्रारभ्यते ॥

त्रयोदशेऽध्ययने हि निदानस्य दोष उक्तः, चतुर्दशेऽध्ययने हि निर्निदानस्य गुणमाह —अत्र मुख्यतस्तु निदानराहित्यमेव मुक्तेः कारणमित्युच्यते. तत्र संप्रदायः—यौ तौ गोपदारकौ चित्रसंभूतपूर्वभवमित्रौ साधुसेवाकरौ देवलोकं गतौ, ततश्च्युत्वा क्षितिप्रतिष्ठिते नगरे इभ्यकुले द्वावपि भ्रातरौ जातौ. तत्र तयोश्चत्वारः सुहृदो जाताः. तत्र भोगान् भुक्त्वा, स्थविराणामंतिके च धर्मं श्रुत्वा सर्वेऽपि प्रव्रजिताः. सुचिरकालं संयममनुपाल्य भक्तं प्रत्याख्यातं. कालं कृत्वा सौधर्मे कल्पे पद्मगुल्मविमाने षडपि सुहृदः पल्योपमायुष्का देवत्वेनोत्पन्नाः. तत्र ये ते गोपजीववर्जा देवाश्चत्वारस्ततश्च्युत्वा कुरुजनपदे इषुकारपुरे अवतीर्णास्तत्र प्रथम इषुकारराजा जातः. द्वितीयस्तस्यैव राज्ञः पट्टदेवी कमलावती जाता, तृतीयस्तस्यैव राज्ञो



=इस-अध्ययनमां नियाणरहितनां गुण बताते है=

भृगुनामा पुरोहितः संवृत्तः, चतुर्थस्तस्यैव पुरोहितस्य भार्या संवृत्ता. तस्या वासिष्टं नाम गोत्रं, यशा इति नाम जातं. स च भृगुपुरोहितः प्रकामं संतानलाभमभिलषति, अनेकदेवोपयाचनं कुरुते, नैमित्तिकान् प्रश्नयति. तौ द्वावपि पूर्वभवगोपदेवौ वर्धमानावधिना एवं ज्ञातवंतौ, यथा आवामेतस्य भृगुपुरोहितस्य पुत्रौ भविष्यावः. ततः श्रमणरूपं कृत्वा द्वावपि भृगुगृहे समायातौ, सभार्येण भृगुणा वंदितौ, सुखासनस्थौ धर्मं कथयतः. तयोरंतिके सभार्येण भृगुणा श्रावकव्रतानि गृहीतानि. पुरोहितेन कथितं भगवन्! अस्माकमपत्यं भविष्यति न वा? इति. साधुभ्यामुक्तं भवतां द्वौ दारकौ भविष्यतः, तौ च बालावस्थायामेव प्रव्रजिष्यतः, तयोर्व्रतद्भ्यां व्याघातो न कार्यः. तौ प्रव्रज्य घनं लोकं प्रतिबोधयिष्यतः. इति भणित्वा तौ देवौ स्वस्थानं गतौ. ततोऽचिरेण च्युत्वा पुरोहितभार्याया उदरेऽवतीर्णौ. ततोऽसौ पुरोहितः सभार्यो नगरान्निर्गत्य प्रत्यंतग्रामे स्थितः, तत्रैव सा ब्राह्मणी प्रसूता, दारकौ जातौ, लब्धसंज्ञौ तौ ताभ्यां मुनिमार्गविरक्तताकरणार्थमेवं शिक्षितौ, य एते मुंडितशिरस्काः साधवो दृश्यन्ते, ते बालकान्मारयित्वा तन्मांसं खादंति, तत एतेषां समीपे श्री·

मद्भिर्न कदापि स्थेयं. अन्यदा तस्माद् ग्रामादेतौ क्रीडंतौ बहिर्निर्गतौ, तत्र पथश्रांतान् साधूनागच्छतः पश्यतः. ततो भयभ्रांतौ तौ दारकावेकस्मिन् वटपादपे आरूढौ. साधवस्तु तस्यैव वटपादपस्याधः पूर्वगृहीताशनादिभोजनं कर्तुं प्रवृत्ताः. वटारूढौ तौ कुमारौ स्वाभाविकमन्नपानं पश्यतः. ततश्चिंतितुं प्रवृत्तौ, नैते बालमांसाशिनः, किंतु स्वाभाविकाहारकारिणः, क्वचिदेतादृशाः साधवोऽस्माभिर्दृष्टा इति चिंतयतोस्तयोर्जातिस्मरणमुत्पन्नं. ततः प्रतिबुद्धौ तौ साधून् वंदित्वा गतौ मातृपितृसमीपं. अध्ययनोक्तवाक्यैस्ताभ्यां मातापितरौ प्रतिबोधितौ. तद्धनलिप्सुं राजानं च राज्ञी प्रतिबोधितवती. एवं षडपि जीवा गृहीतप्रव्रज्याः केवलज्ञानमासाद्य मोक्षं गताः. अथ सूत्रं व्याख्यायते—

॥ मूलम् ॥—देवा भवित्ताण पुरे भवंमि । केई चुआ एगविमाणवासी ॥ पुरे पुराणे उसुयारनामे । खाए समिद्धे सुरलोअरम्मे ॥ १ ॥ स कम्मसेसेण पुरा कयाणं । कुलेसुदग्गेसु य ते पसूया ॥ निव्विन्नसंसारभया जहाय। जिणिंदमग्गं सरणं पवन्ना ॥ २ ॥ व्याख्या—गाथाद्वयेन संबंधः. केचिज्जीवाः, येषां केनापि नाम न ज्ञायते. यतो हि पूर्वं चतुर्णाम-

पि जीवानां नाम नोक्तं. यौ पुनर्द्वौ चित्रसंभूताभ्यामवशेषावभूतौ, ताविभ्यव्यवहारिणः सु-
तत्वेनोत्पन्नौ, तयोः पुनश्चत्वारो मित्रजीवाः, तेषामपि नाम केनापि न ज्ञायते. एवं षमपि
जीवाः पूर्वमनिर्दिष्टनामानोऽभूवन्. अहो! पश्यत धर्मस्य माहात्म्यं! जीवानां भव्यकर्मप-
रिपाकत्वं च! केचिज्जीवाः पूर्वस्मिन् भवे देवीभूय देवत्वं प्राप्य सौधर्मदेवलोके नलिनीगु-
ल्मविमाने एकत्र निवासं कृत्वा स्वकर्मशेषेण, स्वस्य कर्मणः पुण्यप्रकृतिलक्षणस्य शेषेण ते ष-
मपि जीवा इषुकारनाम्नि पुरे पुराणे पुरातने नगरे, पुनः ख्याते सर्वत्र प्रसिद्धे, पुनः समृद्धे
धनधान्यपूर्णे, पुनः सुरलोकवत् रम्ये, उदग्रे उत्कटे क्षत्रियादिके कुले प्रसूता उत्पन्नाः. क-
थंभूतेन स्वकर्मशेषेण? पुरातनेन पूर्वजन्मोपार्जितेन, ते जीवा इषुकारपुरे समुत्पद्य, तत्र सं-
सारभयात् निर्विद्य निर्वेदं प्राप्य. चतुर्गतिभ्रमणभयादुद्वेगमासाद्य, तदा जहाय इति भोगान्
त्यक्त्वा. जिनेंद्रमार्गं, जिनेंद्रेणोक्तो मार्गो जिनेंद्रमार्गस्तं ज्ञानदर्शनचारित्ररूपं मोक्षस्य मा-
र्गं शरणं जन्मजरामृत्युभयापहं प्रपन्नाः प्राप्ता इति गाथाद्वयार्थः. ॥ २ ॥

॥ मूलम् ॥—पुमत्तमागम्म कुमारदोवि । पुरोहिओ तस्स जसा य पत्ती ॥ विसालकि-

त्ती य तद्देसुयारो । रायत्थ देवी कमलावइ य ॥ ३ ॥ व्याख्या—तेषां षसामपि पृथक् भेदं दर्शयति सूत्रकारः—तेषां षसां मध्ये द्वौ जीवौ गोपौ तु पुंस्त्वमागम्य पुरुषवेदत्वं प्राप्य कुमारौ जातौ, भृगुब्राह्मणस्य पुत्रौ समुत्पन्नौ. अत्र कुमारत्वेन एवमुक्तौ, यौ हि अपरिणीतावेव दीक्षां जगृहतुः. तृतीयो जीवः पुरोहितो भृगुनामा ब्राह्मणश्चासीत्. तद्भार्या यशानाम्नी चतुर्थो जीवः. तथा विशाला विस्तीर्णा कीर्तिर्यस्य स विशालकीर्तिः, एतादृश इषुकारनामा राजा पंचमो जीवः. च पुनरिह राज्ञो भवे एव तस्यैव राज्ञो देवी राज्ञी कमलावती जातेति षष्टो जीवः. एते षडपि जीवाः स्वस्वायुःक्षये च्युत्वा केचिदग्रतः, केचित्पश्चात्पूर्वसंबंधेन एकत्र नगरे मिलिता इत्यर्थः. ॥ ३ ॥

॥ मूलम् ॥—जाईजरामच्चुभयाभिभूया । बहिविहाराभिनिविट्ठचित्ता ॥ संसारचक्कस्स विमोक्खणट्ठा । दट्ठूण ते कामगुणे विरत्ता ॥ ४ ॥ व्याख्या—तौ द्वौ कुमारौ कामगुणेभ्यः शब्दरूपरसगंधस्पर्शेभ्यो विरक्तौ जातौ. किं कृत्वा ? दट्ठूण इति दृष्ट्वा साधून् विलोक्य, अथवा शब्दादिविषयान् मोक्षप्राप्तिविघ्नभूतान् दृष्ट्वा, किमर्थं ? संसारचक्रस्य विमोक्षार्थं, सं-

सारस्य चातुर्गतिकस्य यच्चक्रं योनिकुलभेदात् समूहः, चक्रवद्भ्रमणं वा, तस्य विमोक्षणार्थं निवारणार्थं. कीदृशौ तौ कुमारौ? जातिजरामृत्युभयाभिभूतौ जन्मजरामरणभयेन पीडितौ. पुनः कीदृशौ तौ कुमारौ? वहिर्विहाराभिनिविष्टचित्तौ, वहिः संसाराद्विहारः स्थानं वहिर्विहारो मोक्षस्तस्मिन्नभिनिविष्टं बद्धादरं चित्तं ययोस्तौ वहिर्विहाराभिनिविष्टचित्तौ. ॥ ४ ॥

॥ मूलम् ॥—पियपुत्तगा दुन्निवि माहणस्स। सकम्मसीलस्स पुरोहियस्स ॥ सरित्तु पोराणिय तत्थ जाइं। तहा सुचिन्नं तवसंजमं च ॥ ५ ॥ व्याख्या—ब्राह्मणस्य भृगुनाम्नः पुरोहितस्य राज्ञः पूज्यस्य द्वौ प्रियपुत्रकौ लघुवल्लभपुत्रौ यावास्तां, ताभ्यां द्वाभ्यां पुरोहितस्य वल्लभपुत्राभ्यां तथा तेन प्रकारेण तपो द्वादशविधं, च पुनः संयमं सप्तदशविधं सुचीर्णं सुतरामतिशयेन निदानादिशल्यरहितेनाचरितं संचरितं. किं कृत्वा? तत्र तस्मिन् ग्रामे एव पुरातनीं जातिं स्मृत्वा. जातिस्मरणं प्राप्य, कीदृशस्य पुरोहितस्य? स्वकर्मशीलस्य, स्वकीयं ब्राह्मणस्य यजनादिकं पड्विधं कर्म स्वकर्म, तदेव शीलमाचारो यस्य स स्वकर्मशीलस्तस्य, राज्ञः शांतिपुष्ट्यादिकारस्य. ॥ ५ ॥

करनेवाले =

॥ मूलम् ॥—ते कामभोगेसु असज्जमाणा । माणुस्सएसु जे आवि दिवा ॥ मुक्खाभि-
कंखी अभिजायसड्ढा । तातं उवागम्म इमं उदाहु ॥ ६ ॥ व्याख्या—तौ द्वौ पुरोहितकु-
मारौ तातं स्वजनकमुपागम्य तातसमीपे आगत्य इदमग्रे वक्ष्यमाणं वचनमुदाजह्रतुः, वा-
क्यमूचतुरित्यर्थः. कीदृशौ तौ कुमारौ? मानुष्यकेषु कामभोगेषु असज्जमाणा इति असज्जौ
अनादरौ. अपि तु पुनर्ये दिव्याः कामभोगास्तेष्वप्यसज्जौ. एतावता मनुष्यदेवसंबंधिकाम-
सुखेषु त्यक्तोद्यमौ. पुनः कीदृशौ तौ? मोक्षाभिकांक्षिणौ सकलकर्मक्षयाभिलाषिणौ इत्यर्थः.
पुनः कीदृशौ तौ? अभिजातश्रद्धौ उत्पन्नतत्वरुची इत्यर्थः ॥ ६ ॥ किं ऊचतुरित्याह—

॥ मूलम् ॥—असासयं दट्ठु इमं विहारं । बहु अंतरायं न य दीहआउं ॥ तम्हा गि-
हंसि न रइं लभामो । आमंतयामो चरिस्सामु मोणं ॥ ७ ॥ व्याख्या—भो तात! आवां
गृहे रतिं सुखं न लभावहे. तस्मात्कारणात् आवां भवंतमामंत्रयावहे, त्वां पृच्छावहे, आवां
द्वावपि मौनं चरिष्यावः, मुनेर्भावो मौनं साधुधर्ममंगीकरिष्याव इत्यर्थः. आवां गृहे रतिं
न लभावहे. तत् किं कृत्वा? इमं विहारं, इमं मनुष्यत्वावस्थानमशाश्वतमनित्यं दृष्ट्वा इति.



=इच्छा नहीं कर
नेवाले=

कीदृशं विहारं? बहंतरायं, बहवोंतराया यस्मिन् स बहंतरायस्तं. च पुनस्तत्र विहारे मनुष्यत्वे दीर्घं पल्योपमसागरोपमादिकमायुर्नास्ति, मनुष्याणां हि स्वल्पमेवायुर्बहवोंतरायाः संति. तस्माद् गृहे आवयोः सर्वथा प्रीतिर्नास्तीत्यर्थः. ॥ ७ ॥

॥ मूलम् ॥—अह तायगो तत्थ मुणीण तेसिं । तवस्स वाघायकरं वयासी ॥ इमं वयं वेयविदो वयंति । जहा न होई असुयाण लोगो ॥ ८ ॥ व्याख्या—अथ पुत्राभ्यामेवमुक्ते सति तद्वाक्यानंतरं तातकस्तयोर्जनको भृगुपुरोहितस्तत्रावसरे तत्र ग्रामे वा तेसिमिति तयोस्तपोव्याघातकरमिदं वचनमवादीत्. कथंभूतयोस्तयोः? मुन्योर्भावश्रमणयोः, द्रव्यतस्तु ब्राह्मणपुत्रावगृहीतवेषौ, भावतस्तु धृतसंयमोद्यमौ तौ, तस्माद्भावमुन्योरित्यर्थः. किमवादीदित्याह—हे पुत्रौ! वेदविदो वेदज्ञा इदं वचनं वदंति, यथा येन प्रकारेणासुतानां जनानां लोको गतिर्नास्ति. न विद्यते सुतो येषां ते असुताः, तेषामसुतानामपुत्राणां. यतो हि पुत्रं विना पिंडप्रदानाद्यभावात्. क्षुधया म्रियमाणत्वेनार्त्तध्यानपरायणत्वेनाऽगतित्वं पितॄणां स्यात्. यदाह स्मृतिः—अपुत्रस्य गतिर्नास्ति । स्वर्गो नैव च नैव च ॥ तस्मात्पुत्रमुखं दृष्ट्वा ।

पश्चाद्धर्मं समाचरेत् ॥ १ ॥ ए ॥

॥ मूलम् ॥—अहिज्ज वेए परिविस्स विप्पे । पुत्ते परिठप्प गिहंसि जाया ॥ जोच्चाण जोगे सहइत्थियाहं । आरण्णया होह मुणी पसत्था ॥ ए ॥ व्याख्या—हे पुत्रौ! युवामारण्यकौ जूत्वा तदनंतरं प्रशस्तौ मुनी जूयास्तं. परं किं कृत्वा? पूर्वं वेदान् चतुरोऽधीत्य पठित्वा, पुनर्विप्रान् परिवेष्य ब्राह्मणान् जोजयित्वा, पुनः पुत्रान् परिष्ठाप्य कलासु निपुणान् कृत्वा, गृहजारयोग्यान् पुत्रान् गृहे जलाप्य, पुनः स्त्रीभिः सह जोगान् जुक्त्वा, इति जृगुपुरोहितेनोक्तं. ॥ ए ॥

॥ मूलम् ॥—सोयग्गिणा आयगुणेंधणेणं । मोहानिलपज्जलणाहिएण ॥ संतत्तजावं परितप्पमाणं । लालप्पमाणं बहुहा बहुं च ॥ १० ॥ पुरोहियं तं कमसो णुणंतं । निमंतियंतं च सुए धणेणं ॥ जहक्कमं कामगुणेसु चेव । कुमारगा ते पसमिक्ख वक्कं ॥ ११ ॥ युग्मं द्वाभ्यां गाथाभ्यां ॥ व्याख्या—तौ पुत्रौ जृगुपुरोहितं स्वजनकमाहतुः, तौ कुमारौ तं पुरोहितं स्वजनकं वाक्यमूचतुरित्यध्याहारः. किं कृत्वा? पसमिक्ख प्रकर्षेण अज्ञानाछादितमतिं स-

मीक्ष्य दृष्ट्वेति द्वितीयगाथया संबंधः. किं कुर्वंतं तं पुरोहितं? क्रमशोऽनुक्रमेणानुनयंतं, सान्त्वप्रायेण शनैः शनैस्तौ पुत्रौप्रति ज्ञापयंतं. पुनः किं कुर्वंतं? धनेन सुतौप्रति निमंत्रयंतं. च पुनर्यथाक्रमं कामगुणैर्भोगैर्निमंत्रयंतं, यथाक्रममिति यथावसरं, पूर्वमित्युक्तं, वेदानधीत्य, ब्राह्मणान् भोजयित्वा, भोगान् भुक्त्वा, इत्याद्यवसरं दर्शयंतमित्यर्थः. इति द्वितीयगाथार्थः. अथ पूर्वगाथाया अर्थः—' भोयग्गीति ' पुनः कीदृशं पुरोहितं? शोकाग्निना संतप्तभावं शोकवह्निना संतप्तभावं, शोकवह्निना प्रज्वलितचित्तं. अत एव परितप्यमानं समंतात्तस्यमा- भायमानं. पुनः कीदृशं पुरोहितं? बहुधा बहुप्रकारेण वेदादिवचोयुक्त्या बहु वारंवारं य- थास्यात्तथा लालप्यमानं, मोहवशाद्दीनहीनवचांस्यतिशयेन भाषमाणं. कीदृशेन शोकाग्नि- ना? आत्मगुणेंधनेन, आत्मन स्वस्य शोकाग्नेरेव सहचारित्वेन तद्गुणकारित्वात् शोकाग्ने- रेवोद्दीपकत्वाद्गुणा रागादय आत्मगुणास्ते एवेंधनमुद्दीपनं यस्य स आत्मगुणेंधनस्तेन. पुनः कीदृशेन? मोहानिलप्रज्वलनाधिकेन, मोहानिलादज्ञानपवनादधिकं प्रज्वलनमस्येति मोहा- निलाधिकप्रज्वलनस्तेनाज्ञानपवनाधिकजाज्वल्यमानेन, प्राकृतत्वादधिकशब्दस्य परनिपातः.

॥ १० ॥ ११ ॥ अथ तौ कुमारावुत्तरं वदतः—

॥ मूलम् ॥—वेया अहीया न हवंति ताणं । नुत्ता दिया निंति तमंतमेणं ॥ जाया य पुत्ता न हवंति ताणं । को नाम ते अणुमनिज्ज एयं ॥ १२ ॥ व्याख्या—पूर्वोक्तस्य वेदानधीत्य प्रव्रजितव्यमित्येतस्योत्तरं—नो तात! वेदा अधीतास्त्राणं शरणं न नवंति, वेदा मरणाद्वेदपाठिनं न त्रायंते. यदुक्तं वेदविद्भिरेव—शिल्पमध्ययनं नाम । वृत्तं ब्राह्मणलक्षणं ॥ वृत्तस्थं ब्राह्मणं प्राहु-र्नेतरान् वेदजीवकान् ॥ १ ॥ पुनर्नो तात! द्विजा ब्राह्मणा नुक्ता नोजिताः 'तमंतमे इति' तमस्तमसि नरकभूमिनागे रौद्रे रौरवकादिके नयंति प्रापयंति. णमिति वाक्यालंकारे. तमसोऽपि यत्तमस्तमस्तमस्तस्मिन् तमस्तमसि. ते हि ब्राह्मणा नोजिताः कुमार्गपशुवधाश्रवसेवनादौ प्रवर्तंते. अतस्तद्भोजनदानं नरकहेतुकं. च पुनः पुत्रा जाता उत्पन्नास्त्राणं शरणं न नवंति, नरकपातान्न रक्षंतीत्यर्थः. उक्तं च वेदानुगैरेव—यदि पुत्राद्भवेत् स्वर्गो । दानं धर्मो निरर्थकः ॥ धनधान्यव्ययं कृत्वा । रिक्तं कुर्यान्न मंदिरं ॥ १ ॥ बहुपुत्रा डुलीगोधा-स्ताम्रचूडा तथैव च ॥ तेषां च प्रथमं स्वर्गः । पश्चाल्लोको गमिष्यति ॥

॥ २ ॥ तदा नो तात! तव तद्वचनं को नाम पुरुषोऽनुमन्येत? सविवेकः पुमान् कः सम्यक् कृत्वा जानीते इत्यर्थः. इत्यनेन वेदाध्ययनं, ब्राह्मणानां भोजनं, पुत्राणां गृहे स्थापनमेतत्त्रयस्योत्तरं दत्वा भोगान् भुक्त्वा इत्यस्योत्तरं ददतः. ॥ १२ ॥

॥ मूलम् ॥—खणमत्तसुक्खा बहुकालदुक्खा । पगामदुक्खा अनिकामसुक्खा ॥ संसारमुक्खस्स विपक्खभूया । खाणी अणत्थाण उ कामभोगा ॥ १३ ॥ व्याख्या—हे तात! कामभोगा अनर्थानां खानिसदृशा वर्तते, अनर्थानामैहिकपारलौकिकदुःखानामुत्पत्तिस्थानसदृशा भवंतीत्यर्थः. तदेवाह—कीदृशाः कामभोगाः? क्षणमात्रसुखाः क्षणमात्रं सेवनकाले एव सुखयंतीति क्षणमात्रसुखाः. पुनः कीदृशाः? बहुकालदुःखाः, बहुकालं नरकादिषु दुःखं येभ्यस्ते बहुकालदुःखाः. पुनः कीदृशाः? प्रकामदुःखाः, प्रकाममत्यंतं दुःखं येभ्यस्ते प्रकामदुःखाः. पुनः कीदृशाः? अनिकामसुखाः, अप्रकृष्टसुखास्तुच्छसुखा इत्यर्थः. पुनः कीदृशाः? संसारस्य भवभ्रमणस्य मोक्षः संसारमोक्षस्तस्य विपक्षभूताः शत्रुभूताः, संसारभ्रमणवृद्धिकारिण इत्यर्थः. ॥ १३ ॥ कामभोग अनर्थनी खाण छे ऐसा कह्या तीणमेहीज विशेष स्पष्ट करे छे =खणमत्त

॥ मूलम् ॥—परिव्वयंते अनियत्तकामे । अहो अराउं परितप्पमाणो ॥ अस्सप्पमत्ते धनमेसमाणे । पपुत्ति मच्चुं पुरिसो जरं च ॥ १४ ॥ व्याख्या—एतादृशः पुरुषो मृत्युं प्राप्नोति, च पुनर्जरां प्राप्नोति. कीदृशः सन्? परिव्रजन्, परि समंताद्विषयसुखलाजार्थमितस्ततो भ्रमन्, पुनः कीदृशः? अनिवृत्तकामः, न निवृत्तः कामोऽभिलाषो यस्य सोऽनिवृत्तकामोऽनिवृत्तेच्छ इत्यर्थः. पुनः कीदृशः? अह इति अहनि, राउं इति रात्रौ परितप्यमानः, आर्षत्वादहो अ राउं इति स्थितिः. अहोरात्रेऽप्राप्तवस्तुप्राप्तिनिमित्तं चिंताग्निश्चिंतया दग्धः. पुनः कीदृशः? अन्यप्रमत्तः, अन्ये स्वजनमातापितृपुत्रकलत्रभ्रात्रादयस्तदर्थं प्रमत्तस्तत्कार्यकरणासक्तोऽन्यप्रमत्तः. पुनः कीदृशः? धनमेषयन्, विविधोपायैर्धनं वांछन्नित्यर्थः. एवमेव मूढः पुमान् म्रियते. स्वार्थं किमपि न करोति. पुनः स्थितौ पूर्णायामेकदा मृत्युर्वा जरा वा अवश्यं प्राप्नोत्येवेति भावः. ॥ १४ ॥

॥ मूलम् ॥—इमं च मे अत्थि इमं च नत्थि । इमं च मे किच्च इमं अकिच्चं ॥ तमेवमेवं लालप्पमाणं । हरा हरंतित्ति कहं पमाए ॥ १५ ॥ व्याख्या—पुनः पूर्वोक्तमेव हृदय-



=वोलरफ=
=वलतो=
=सोधणकरत

ति, हराः कालास्तं मनुष्यं हरंति, हरंति प्राणिनामायुरिति हराः, दिवसरजन्यादयः कालाः, तं किं कुर्वंतं? एवमेव लालप्यमानं, व्यक्तं वचनं वदंतं. एवमेवमिति किं? इदं च मे ममास्ति, इदं प्रत्यक्षं धान्यादिकं मम गृहे वर्तते, पुनरिदं च रजतस्वर्णाभरणादिकं च मे मम नास्ति. च पुनरिदं मम कृत्यं परकृतसुखं गृहादिकं करणीयं वर्तते, इदं च मे ममाकृत्यं वाणिज्यादिकमकरणीयं, अस्मिन् वाणिज्ये लाभो नास्ति, तस्मान्न कृत्यमकृत्यमित्यर्थः. इति हेतोर्भो तात! कथं प्रमादीत्? कथं प्रमादं कुर्यात्? प्रमादः कर्तुं कथमुचित इत्यर्थः.

॥ मूलम् ॥—धणं पभूयं सह इत्थीयाहिं। सयणा तहा कामगुणा पगामा ॥ तवं कए तप्पइ जस्स लोको। तं सव्वसाहीणमिहेव तुज्झं ॥ १६ ॥ व्याख्या—अथ पुनः पुरोहितस्तौ लोभयितुमाह—भो पुत्रौ! यस्य कृते यदर्थं लोको जनस्तपस्तप्यते, तत्सर्वमिहास्माकं गृहे तुज्झं इत्युवयोः स्वाधीनं वर्तते. तत् किं किमित्याह—धनं प्रभूतं प्रचुरं वर्तते, धनार्थं हि लोको बहुदुःखं भुंक्ते, तद्धनं प्रभूतं स्त्रीभिः सहितमस्ति, धनादेव स्त्रियः स्वाधीना एव स्युः. तथा स्वजना ज्ञातयोऽपि वर्तते, यस्य हि कुटुंबं प्रचुरं भवति स केनापि धर्षितुं न श-

क्यत इत्यर्थः. पुनः प्रकामा भूयांसः प्रचुराः कामगुणा रूपरसगंधस्पर्शादय इंद्रियविषया वर्तन्ते, तस्मात्किमर्थं तपस्तपनीयं? ॥ १६ ॥

॥ मूलम् ॥—धणेण किं धम्मधुराहिगारे । सयणेण वा कामगुणेहिं चेव ॥ समणा भविस्सामु गुणोहधारी । बहिं विहारा अभिगम्म भिरकं ॥ १७ ॥ व्याख्या—अथ पुत्रौ वदतः—भो तात! धर्मधुराधिकारे दशविधयतिधर्मधूर्वहनाधिकारे आवां श्रमणौ भविष्यावः. कीदृशौ श्रमणौ? गुणौघधारिणौ ज्ञानदर्शनचारित्ररूपगुणसमूहधारिणौ. किं कृत्वा? बहिर्विहारमधिगम्य, द्रव्यतो बहिर्ग्रामाकरनगरादिभ्य एकांतमाश्रित्य, भावतो बहिः क्वचिदप्रतिबद्धत्वमाश्रित्य. तस्मादावयोर्धनेन किं? अथवा स्वजनेन किं? च पुनः कामगुणैरिन्द्रियसुखैः किं? धनस्वजनविषया हि न परलोकसुखाय स्युरित्यर्थः. यदुक्तं वेदेऽपि—न प्रजया धनधान्येन त्यागेनैकेनामृतत्वमानंशुरित्यादि. ॥ १७ ॥ अथ भृगुस्तयोर्धर्मनिराकरणाय परलोकनिराकरणाय च आत्मनोऽभावमाह—

॥ मूलम् ॥—जहा य अग्गी अरणीउ असंतो । खीरे घयं तिल्लमहातिलेसु ॥ एमेव

जाया सरीरंमि सत्ता । संमुच्छई नासइ नावचिठे ॥ १८ ॥ व्याख्या—हे जाया! हे पुत्रौ! सत्वा जीवा एवमेव अमुना दृष्टांतेन शरीरे असंतः पूर्वमविद्यमाना एव संमूर्छंते उत्पद्यंते. पृथिव्यप्तेजोवाय्वाकाशानां समुदायसंयोगाच्चेतना उत्पद्यते. पुनः स जीवो नश्यति नावतिष्टते, शरीरनाशे तन्नाशः. शरीरे सति पंचभूतमेलापे सति स भवेत्, पंचभूतानां पृथग्भावे तस्यापि नाश एव. एवमिति केन प्रकारेण जीवाः पूर्वमविद्यमाना उत्पद्यंते? तद्दृष्टांतमाह—यथा एव, चशब्दोऽत्र एवार्थे, अग्निररणीउ अरणीतोऽग्निमथनकाष्टतः पूर्वमदृश्यमानोऽपि संयोगादुपरितनारणिकाष्टेन, अधो वंशार्कादिकाष्टसंयोगादग्निरुत्पद्यते, न त्वेकाकिनि अरणे काष्टे पूर्वमग्निर्दृष्टः. एवं क्षीरे घृतं, क्षीरमपि पूर्वमुष्णीकृत्य पश्चात्तन्मध्ये तक्रं स्तोकं प्रक्षिप्य चतुर्यामं स्त्यानीकृत्य पश्चान्मंथानेन विलोड्यते, तदा ततः पूर्वमसदेव घृतमुत्पद्यते. एवं महातिलेपूत्तमतिलेषु, यंत्रादिमथनसंयोगात्तिलेभ्यस्तैलं पूर्वमप्रत्यक्षमविद्यमानमप्युत्पद्यते. अरणिकाष्टादधः काष्टसंयोगाद्भावे चैतन्यरूपजीवाभाव इत्यर्थः. ॥ १८ ॥ अथैतस्योक्तस्योत्तरं तावाहतुः—

॥ मूलम् ॥—नो इंदियगिज्झु अमुत्तभावा । अमुत्तिभावावि य होइ निच्चो ॥ अज्झ-त्थहेऊ निययस्स बंधो । संसारहेउं च वयंति बंधं ॥ १७ ॥ व्याख्या—हे तात ! अयमात्मा अमूर्तिभावादिंद्रियग्राह्यो नो इति नास्ति, शब्दरूपरसगंधस्पर्शादीनामभावत्वममूर्तत्वं, तस्मादमूर्तत्वादिंद्रियग्राह्यो नास्ति. योऽमूर्तो भवति स इंद्रियग्राह्योऽपि न भवति, य इंद्रियग्राह्यो भवति सोऽमूर्तोऽपि न संभवति, यथा घटादिः. पुनरयं जीवोऽमूर्तभावादपि नित्यो भवति. यद् द्रव्यत्वे सत्यमूर्तं तन्नित्यं, यथा व्योम. अथ कदाचित् कश्चिद्वदयति चेदयममूर्त आत्मा तदा कथमस्य बंधः ? तत्रोत्तरं वदतः—अस्य जीवस्य शरीरे बंधो नियतो निश्चितोऽध्यात्महेतुर्वर्तते. कोऽर्थः ? आत्मन्यधीकृत्य भवतीत्यध्यात्मं मिथ्यात्वाविरतिकषाययोगादिकं, तदेव हेतुः कारणं यस्य सोऽध्यात्महेतुः. अस्य जीवस्य यः शरीरे बंधो भवति स मिथ्यात्वादिभिर्हेतुभिरेव स्यादिति. यथा अमूर्तस्याप्याकाशस्य घटादाविव घटोत्पादनकारणैर्घटे आकाशस्य बंधो जायते, तथात्मनः शरीरे बंध इत्यर्थः. च पुनर्बुधाः संसारस्य हेतुं भवभ्रमणस्य कारणं संबंधं वदंति. यावच्छरीरेण बद्धस्तावदयं जीवो भवभ्रमणं करोतीत्यर्थः.

यदुक्तं वेदांतेऽपि—कर्मवद्धो नवेज्जीवः । कर्ममुक्तो नवेच्छिवः ॥ इति. ॥ १९ ॥

॥ मूलम् ॥—जहा वयं धम्ममयाणमाणा । पावं पुरा कम्ममकासि मोहा ॥ ओरुब्भमाणा परिरक्खियंता । तं नेव भुज्जोवि समायरामो ॥ २० ॥ व्याख्या—हे तात! यथा पुरा पूर्वं मोहात्तत्वस्याऽज्ञानादावां पापं पापहेतुकं कर्माकार्ष्व. आवां किं कुर्वाणौ? धर्मं सम्यक्त्वादितत्वमजानानौ. पुनः कथंभूतौ? अवरुध्यमानौ गृहान्निःसरणमप्राप्यमाणौ. पुनरावां कथंभूतौ? परिरक्ष्यमाणौ साधुदर्शनान्निवार्यमाणौ. पुरा ईदृशावावामज्ञाततत्वौ पापकर्मपरायणावभूव. तत्पापं कर्म भूयः पुनर्नैव समाचरावो न कुर्व इत्यर्थः. ॥ २० ॥

॥ मूलम् ॥—अब्भाहयंमि लोगंमि । सव्वओ परिवारिए ॥ अमोहाहिं पडंतीहिं । गिहंसि न रइं लभे ॥ २१ ॥ व्याख्या—हे तात! अस्मिन् लोके जगत्यावां गृहे गृहवासे रतिं न लभावहे. कथंभूते लोके? अमोघाभिरवश्यं वेदिकाभिः शस्त्रधाराकाराभिः पतंतीभिरागच्छंतीभिः शस्त्रधाराभिः कदर्थिते. पुनः कथंभूते लोके? अभ्याहते आभिमुख्येन पीडिते. पुनः कथंभूते लोके? सर्वतः सर्वासु दिक्षु परिवारिते परिवेष्टिते, वागुरादौ पतितमृगवद्

दुःखितौ स्वः. ॥ २१ ॥ तदा पुरोहितोऽपृच्छत्—

॥ मूलम् ॥—केण अब्भाहओ लोओ । केण वा परिवारिओ ॥ का वा अमोहा वुत्ता । जाया चिंतापरो हुमे ॥ २२ ॥ व्याख्या—हे पुत्रौ! केन लोकोऽभ्याहतः? वाऽथवा केनायं लोकः परिवेष्टितः? वाऽथवा का अमोघा अवश्यं छेदिका शस्त्रधारोक्ता? हे पुत्रावहमिति चिंतापरो भवामि. ॥ २२ ॥ तदा पुत्रौ प्रत्येकं प्रश्नानामुत्तरं वदतः—

॥ मूलम् ॥—मच्चुणाब्भाहओ लोओ । जराए परिवारिओ ॥ अमोहा रयणी वुत्ता । एवं ताय वियाणह ॥ २३ ॥ व्याख्या—हे तात त्वमेवममुना प्रकारेण जगज्जानीहि? एवमिति कथं? तदाह—लोकोऽयं मृगरूपो मृत्युना व्याधेनाभ्याहतः पीडितः, स च मृत्युर्हि सर्वस्य जंतोः पृष्ठे धावति. जरया वृद्धत्वेन परिवेष्टितः. जीर्यते शरीरमनयेति जरा, पलितमात्रमिह जरा नोच्यते, बलवीर्यपराक्रमाणां हानिरेव जरा, तया सर्वं जगत् परिवेष्टितमस्ति. तयैव मृत्युर्जगज्जंतुं घातयति. अमोघाः शस्त्रधारा रात्रय उक्ताः, न केवलं रात्रय एव भवंति, किंतु दिनान्यपि भवंति, परमत्र रात्रिग्रहणं भयोत्पादनार्थं. स्त्रीलिंगशब्दस्य अमोघा

इत्यस्योपमार्थं ज्ञेयं. ॥ २३ ॥

॥ मूलम् ॥—जा जा वच्चइ रयणी । न सा पडिनियत्तई ॥ अहम्मं कुणमाणस्स । अफला जंति राईउ ॥ २३ ॥ व्याख्या—हे तात! या या रजन्यस्तत्संबंधा दिवसाश्च व्युत्क्रामंति व्रजंति. तास्ता रजन्यो न प्रतिनिवर्तंते, पुनर्व्याघुट्य नायांति. अधर्मं कुर्वतः पुरुषस्य रात्रयो दिवसाश्चाफला निरर्थका यांति, तस्माद्धर्माचरणेन सफला विधेया इत्यर्थः. ॥ २३ ॥

तदेव पुनरप्याहतुः—

॥ मूलम् ॥—जा जा वच्चइ रयणी । न सा पडिनियत्तई ॥ धम्मं तु कुणमाणस्स । सफला जंति राईउ ॥ २४ ॥ व्याख्या—पूर्वार्धस्यार्थस्तथैव, हे तात! धर्मं कुर्वाणस्य पुरुषस्य रात्रयो दिवसाश्च सफला यांति, धर्माचरणंविना निःफला इत्यर्थः. प्राकृतत्वाद्वचनस्य व्यत्ययः. नृजन्मनः फलं धर्माचरणं, धर्माचरणं हि व्रतंविना न स्यात्, अतश्चावां व्रतं गृहीत्वावः, नृजन्मनि रात्रिदिवसान् सफलान् करिष्याव इति भावः. ॥ २४ ॥ तद्वचनाल्लब्धबोधो भृगुपुरोहितः पुत्रौ प्रत्याह—

॥ मूलम् ॥—एगओ संवसित्ताणं । दुहओ सम्मत्तसंजुया ॥ पच्छा जाया गमिस्सामो । भिक्खमाणा कुले कुले ॥ २५ ॥ व्याख्या—हे पुत्रौ ! द्वयं च द्वयं च द्वये, आवां युवां च सर्वेऽपि सम्यक्त्वसंयुताः संत एकत एकत्र गृहवासे सम्यक् सुखेनोषित्वा गृहस्थाश्रमं संसेव्य पश्चाद्वृद्धावस्थायां गमिष्यामः, ग्रामनगरारण्यादिषु मासकल्पादिक्रमेण प्रव्रजिष्याम इत्यर्थः. किं कुर्वाणाः ? कुले कुले गृहे गृहे अज्ञाते उंछवृत्त्या गोचर्यया भिक्षमाणा भिक्षां गृह्णन्तो भिक्षवो भविष्याम इत्यर्थः. ॥ २५ ॥ तदा तौ पुत्रौ जनकंप्रत्याहतुः—

॥ मूलम् ॥—जस्सत्थि मच्चुणा सक्खं । जस्स वत्थि पलायणं ॥ जो जाणइ न मरिस्सामि । सो हु कंखे सुए सिया ॥ २६ ॥ व्याख्या—हे तात ! हु इति निश्चयेन स एव पुरुष इति कांक्षतीति प्रार्थयति. सुए इति श्व आगामिदिने प्रभाते इदं स्यात्, अद्य न जातं तर्हि किं ? कल्ये स्यादित्यर्थः. इति स चिंतयति. स इति कः ? यस्य पुरुषस्य मृत्युना सह कालेन सह सख्यं मित्रत्वमस्ति, य एवं जानाति मृत्युर्मम सखा वर्तते. चशब्दः पुनरर्थे, पुनर्यस्य पुरुषस्य मृत्योः पलायनमस्ति, यः पुरुष एवं जानाति मृत्युर्मे मम किं करिष्यति ?

यदा मृत्युरायास्यति तदाहं प्रपलाय्य कुत्रचिदन्यत्र यास्यामि, अहं मृत्युगोचरो न भवि- ष्यामि. पुनर्य एवं जानाति, अहं न मरिष्यामि, अहं चिरंजीव्यस्मि. ॥ २६ ॥

॥ मूलम् ॥—अज्जेव धम्मं पडिवज्जयामो । जहिं पवन्ना न पुणब्भवामो ॥ अणागयं नेव य अत्थि किंची । सद्धाखमं ने विणइत्तु रागं ॥ २७ ॥ व्याख्या—नो तात ! अद्यैव तं धर्मं वयं प्रतिपद्यामहे. आर्षत्वात्. किं कृत्वा ? रागं स्नेहं स्वजनादिषु प्रेम, विणइत्तु इति विनीय स्फोटयित्वा. कीदृशं धर्मं ? ने इति नोऽस्माकं श्रद्धाक्षमं श्रद्धया तत्त्वरुच्या क्षमो योग्यस्तं. यतो हि साधुधर्मे स्नेहः सर्वथा निवार्यः, तत्त्वरुचिश्च कार्या, तया हीनो हि साधुधर्मो निःफलः. यत्तदोर्नित्याभिसंबंधात्, तं कं धर्मं ? जहिं इति यस्मिन् धर्मे प्रपन्नाः संतो न पुनर्भवामः. पुनः संसारे नोत्पत्स्यामः. यद्भवता पुरोक्तं भोगान् भुक्त्वा पश्चात्प्रव्रजिष्यामः. तस्योत्तरं शृणु ? हे तात ! अनागतमप्राप्तवस्तुविषयादिसुखं किंचिन्न पैवास्य जीवस्यास्ति, सर्वेषां भावानामनंतशः प्राप्तत्वात्. ॥ २७ ॥ इति स्वपुत्रयोरुपदेशं श्रुत्वा भृगुः प्रतिबुद्धः सन् ब्राह्मणीं प्रत्याह—

॥ मूलम् ॥—पहीणपुत्तस्स हु नत्थि वासो। वासिट्ठि भिक्खायरियाइकालो ॥ साहाहिं रुक्खो लहए समाहिं। छिन्नाहिं साहाहिं तमेव खाणुं ॥ २७ ॥ व्याख्या—हे वाशिष्टि! वशिष्ठमुनिगोत्रोत्पन्ने ब्राह्मणि प्रिये! प्रहीणपुत्रस्य पुत्राभ्यां त्यक्तस्य हु इति निश्चयेन मम वासो गृहे वसनं नास्ति. ममेति पदमध्याहार्यं. हे प्रिये! भिक्षाचर्याया अयं कालोऽयमवसरोऽस्तीति शेषः. उक्तमर्थमर्थांतरन्यासेन दृढयति–वृक्षः शाखाभिरेव समाधिं स्वास्थ्यं शोभां वा लभते, छिन्नाभिः शाखाभिस्तमेव वृक्षं जनाः स्थाणुं कीलं वदंति. शाखाहीनस्य वृक्षस्य स्थाणुत्वं स्यात्, तथा ममापि पुत्राभ्यां वियुक्तस्य गृहे वासे स्थितस्य समाधिर्नास्तीत्यर्थः.

॥ मूलम् ॥—पंखाविहूणोव जहेव पक्खी। भिच्चविहीणुव्व रणे नरिंदो ॥ विवन्नसारो वणिउव्व पोए। पहीणपुत्तोमि तहा अहंपि ॥ २९ ॥ व्याख्या—वशब्दो दृष्टांतसमुच्चये, हे प्रिये! इहास्मिन् लोके पक्षाभ्यां विहीनः पक्षी यादृशः स्यात्, पक्षहीनो हि पक्षी आकाशमार्गोल्लंघनायाऽशक्तो येन तेनापि हिंस्रेण पराभूयते. पुना रणे संग्रामे भृत्यैः सेवकैर्विहीनो नरेंद्रो नृपतिरिव रिपुभिः पराभूयते. पुनर्वणिक् व्यापारीव, यथा पोते प्रवहणे भग्ने स-



१४

=तुंगेकहते।
=शाता नहीं है

तीत्यध्याहारः, विपन्नसारो विगतसर्वद्रव्यव्यांशो विषादं करोतीति शेषः, तथाहमपि प्रहीण-पुत्रः प्रव्रजितपुत्रो विषादवान् भवामीति शेषः. ॥ २९ ॥ इति पुरोहितप्ररूपितं वचनं श्रुत्वा वासिष्ठ्याह—

॥ मूलम् ॥—सुसंभिया कामगुणा इमे ते। सपंडिया अग्गरसप्पभूया ॥ भुंजाम ता कामगुणे पगामं । पच्छा गमिस्सामु पहाणमग्गं ॥ ३० ॥ व्याख्या—हे स्वामिंस्ते तवेमे प्रत्यक्षं दृश्यमानाः कामगुणाः पंचेंद्रियसुखदाः पदार्थाः सद्वस्त्रसरसमिष्टान्नपुष्पचंदननाटकगीततालवेणुवीणादयः सुसंभृताः संति, सम्यक् संस्कृताः सज्जीकृताः संति. पुनः कामगुणाः संपिंडिताः पुंजीकृताः संति, न तु यतस्ततः पतिताः संति, किंत्वेकत्र राशीकृता एव तिष्ठंति. पुनः कीदृशाः कामगुणाः ? अग्ग्ररसप्रभूताः, अग्ग्रः प्रधानो रसो येभ्यस्तेऽग्ग्ररसाः, श्रृंगाररसोत्पादका इत्यर्थः, यदुक्तं—रतिमाल्यालंकारैः । प्रियजनगंधर्वकामसेवाभिः ॥ उपवनगमनविहारैः । श्रृंगाररसः समुद्भवति ॥ १ ॥ इत्युक्तेः, अग्ग्ररसाश्च ते प्रभूताश्चाग्ग्ररसप्रभूताः प्रचुरा इत्यर्थः. अथवाग्ग्ररसेन श्रृंगाररसेन प्रचुरास्तान् कामगुणान् प्रकामं यथेच्छं भुंजीवहि, प-

श्रादृभुक्तभोगसुखौ भूत्वा वृद्धत्वे प्रधानमार्गं प्रव्रज्यारूपं मोक्षमार्गं गमिष्यावः. ॥ ३० ॥

॥ मूलम् ॥—भुत्ता रसा भोइ जहाति णे वर्ड । न जीवियट्ठा पजहामि भोए ॥ लाभं अलाभं च सुहं च दुक्खं । संविक्खमाणो चरिस्सामि मोणं ॥ ३१ ॥ व्याख्या—अथ भृगुब्राह्मणीं प्रत्याह—भो इति हे भवति! हे ब्राह्मणि! रसाः श्रृंगारादयो भोगाश्च भुक्ताः संतो न इति नोऽस्मान् जहति त्यजंति, वयो यौवनमपि त्यजति. हे ब्राह्मणि! भोगान् जीवितव्यार्थं न प्रजहामि, किंतु लाभं, च पुनरलाभं, च पुनः सुखं, च पुनर्दुःखं संविक्खमाणः समतयेक्षमाणः समभावेन पश्यन्नहं मौनं चरिष्यामि. मुनेः कर्म मौनं, मुनयो हि—लाभालाभे सुखे दुःखे । जीविते मरणे तथा ॥ शत्रौ मित्रे तृणे स्त्रैणे । साधवः समचेतसः ॥ १ ॥ अस्मिन् साधुधर्मे रसेषु भोगेषु जीवितव्येषु निःस्पृहत्वं तन्मुनित्वमंगीकरिष्यामि. ॥ ३१ ॥

॥ मूलम् ॥—मा हु तुमं सोयरियाण संभरे । जुन्नोव्व हंसो पडिसुत्तगामी ॥ भुंजाहि भोगाइं मए समाणं । दुक्खं खु भिक्खायरियाविहारो ॥ ३२ ॥ व्याख्या—अथ पुनर्ब्राह्मणी प्राह—हे पुरोहित! त्वं मया समं भोगान् भुंक्ष्व? हु इत्यलंकारे, णं इत्यपि. हे स्वामिंस्त्वं

पुनः सोदर्याणां सहोदराणां भ्रातॄणां स्वजनसंबंधिनां गृहे स्थितानां मा स्मार्षीः. कोऽर्थः? त्वं मुनिर्भूत्वा पश्चाद्दुःखितः सन् गृहस्थान् स्वबंधून् स्मरिष्यसि, तस्मान्मया सार्धं विषयसुखं भुंजानो गृहे तिष्ठेत्यर्थः. खु इति निश्चयेन भिक्षाचर्याविहारो दुःखं दुःखहेतुरेवास्ति. भिक्षाचरत्वमसहमानस्त्वं गृहवासं स्मरिष्यसीति भावः. त्वं क इव सोदरान् स्मरिष्यसि? जीर्णो हंस इव, वृद्धो हंसो यथा प्रतिश्रोतोगामी सन्मुखजलप्रवाहं तरंस्तत्र तरणाशक्तः पश्चादनुश्रोतोजलतरणं स्मरति. मनसि खिन्नः सन्निति जानाति मया किमर्थं सन्मुखजलप्रवाहतरणमारब्धं? जलवहनमार्गेण सह तरणमेव मम श्रेयस्तथा त्वमपि माभूरित्यर्थः. ॥ ३३ ॥

अथ भृगुपुरोहित आह—

॥ मूलम् ॥—जहा य भोई तणुयं भुअंगो । निम्मोयणिं हिच्च पलाइमुत्तो । एमेए जाया पयहंति भोए । तेहं कहं नाणुगमिस्समिक्को ॥ ३४ ॥ व्याख्या—भोइ इति हे भवति! हे ब्राह्मणि! भुजंगः सर्पस्तनुजां शरीरादुत्पन्नां निर्मोचनीं निर्मोकं कंचुकं हित्वा मुक्तः सन् प्रयाति, एवमेतौ जातौ पुत्रौ भोगान् प्रजहीतः. तौ भोगत्यागिनौ पुत्रौ प्रत्यहमेका-

की सन् कथं नानुगमिष्यामि? पुत्राभ्यां विहीनस्यैकाकिनो मम कीदृशो गृहवासः? धन्यौ तौ पुत्रौ यौ तरुणावेव कंचुकमिव विषयसुखं त्यक्त्वा भुजंगमवद्व्रजत इत्यर्थः. ॥ ३४ ॥

॥ मूलम् ॥—छिंदित्तु जालं अबलंव रोहिया। मच्छा जहा कामगुणे पहाय ॥ धोरेयसीला तवसा उयारा। धीरा हु भिक्खायरियं चरंति ॥ ३५ ॥ व्याख्या—हे ब्राह्मणि! धीरा धैर्यवंतो जना हु इति निश्चयेन भिक्षाचर्यां भिक्षावृत्तिं साधुधर्मं चरंति. कीदृशा धीराः? तपसा उदाराः, अथवा कीदृशीं भिक्षाचर्यां? तपसा उदारां, तपसा प्रधानां, प्राकृतत्वाद्विभक्तिलिंगव्यत्ययः. पुनः कीदृशा धीराः? धौरेयशीलाः, धौरेयाणां धुरंधराणामिव शीलमुद्धोढभारोद्वहनसामर्थ्यं येषां ते धौरेयशीलाः. किं कृत्वा धीरा भिक्षाचर्यां चरंति? कामगुणान् प्रहाय प्रकर्षेण हित्वा. के किं यथा? यथाशब्द इवार्थे, के किमिव? रोहिता मत्स्या रोहितजातीयमीना अबलं जीर्णं जालमिव, यथा बलिष्टमत्स्या जीर्णं जालं छित्वा निर्भयस्थाने चरंति, तथा धीराः कामगुणान् पाशसदृशांस्त्यक्त्वा भिक्षाचर्यामाद्रियंते, अहमपीत्थमेव चरिष्यामीति भावः. ॥ ३५ ॥ इति भृगुवचनं श्रुत्वा ब्राह्मण्याह—

॥ मूलम् ॥—तहेव कुंचा समईक्कमंता । तयाणि जालानि दलित्तु हंसा ॥ पलंति पुत्ता य पईय मज्झं । तेहिं काहिं नाणुगमिस्समेक्का ॥ ३६ ॥ व्याख्या—पुत्रौ द्वावपि. पतिर्भृगुः पुरोहितः. एते त्रयोऽपि मह्यमिति मां दलयित्वा मत्संबंधिस्नेहजालं भोगाभिष्वंगजालं छित्वा पलंति परियांति, परि समंताद्यांति संयमाध्वनि चरंतीत्यर्थः. एते के इव? क्रौंचाः क्रौंचपक्षिणः, हंसा हंसपक्षिणो वा, ते इव, यथा क्रौंचपक्षिणो हंसपक्षिणश्च तानि विस्तीर्णानि जालानि दलयित्वा भित्वा समतिक्रामंतो नानाप्रदेशानुल्लंघयंतो नभसि परियांति गगने परियांति, स्वेच्छया विचरंति, अत्र हि विषयसुखं जालोपमं, निरुपलेपत्वात्साधुवर्त्म नभःकल्पं, उत्तमजीवानां क्रौंचविहंगहंसविहंगोपमानं. यद्येते त्रयोऽपि मां त्यक्त्वा व्रजंति, तदाहमेकाकिनी तान् कथं नानुगमिष्यामि? अपि त्वनुगमिष्याम्येव. ॥ ३६ ॥

॥ मूलम् ॥—पुरोहियं तं ससुयं सदारं । सुच्चाभिनिक्खम्म पहाय भोए ॥ कुडुंबसारं विउलुत्तमं तं । रायं अभिक्खं समुवाय देवी ॥ ३७ ॥ व्याख्या—अथ यदा चतुर्णां प्रव्रज्यायां मनोऽभूत् तदा किं समभूदित्याह—राजानं तमिषुकारिणं देवी कमला अभीक्ष्णं वारंवारं

समुवाच, सम्यक् प्रकारेण शिक्षापूर्वकमुवाच. किं कृत्वा? पुरोहितं भृगुं ससुतं पुत्रसहितं, सदारं सपत्नीकं भोगान् प्रहाय प्रकर्षेण त्यक्त्वा, पुनर्विपुलं विस्तीर्णमुत्तमं तं कुटुंबसारं प्रहाय त्यक्त्वा, कुटुंबं स्वजनवर्गं, सारं धनधान्यादिकं, उभयमपि त्यक्त्वा, अभिनिःक्रम्य गृहान्निर्गत्य प्रव्रजितमिति श्रुत्वा. तस्य पुरोहितस्य धनादिकं गृह्णंतं राजानं राज्ञी प्राहेत्यर्थः.

॥ मूलम् ॥—वंतासी पुरिसो रायं । न सो होइ पसंसिओ ॥ माहणेण परिच्चत्तं । धणं आयाउमिच्छसि ॥ ३८ ॥ व्याख्या—राज्ञी किमुवाचेत्याह—हे राजन्! यो वांताशी स पुरुषः प्रशंसनीयो न भवेत् श्लाघ्यो न भवेत्. हे राजन्! ब्राह्मणेन परित्यक्तं धनं त्वमादातुमिच्छसि, ब्राह्मणेन त्यक्तं धनं वांताहारसदृशं गृहीत्वा त्वं श्लाघ्यो न भविष्यसीत्यर्थः. वांतं वदनादुद्गतमाहारमश्नातीत्येवंशीलो वांताशी वांताहारभोक्तेत्यर्थः. ॥ ३८ ॥

॥ मूलम् ॥—सव्वं जगं जइ तुम्हं । सव्वं वावि धणं भवे ॥ सव्वंपि ते अपज्जत्तं । नेव ताणाय तं तव ॥ ३९ ॥ व्याख्या—हे राजन्! यदि सर्वं जगत् समस्तोऽपि भूलोकस्तव भवेत्, तवायत्तः स्यात्, वा अथवा सर्वमपि धनं रजतस्वर्णरत्नादिकमपि तव भवेत्. तत्सर्वं

जगत्, पुनः सर्वमपि धनं ते तवाऽपर्याप्तं भवेत्, तदेच्छापूरणायाऽसमर्थं स्यात्, यत इच्छाया अनंतत्वात्, पुनस्तत्सर्वं जगत्, तत्सर्वं धनं च त्राणाय मरणभयाद्रक्षणाय तव न भवेत्, यदि जगद्धनं चेच्छापूरणाय, अथ च मरणाद्रक्षणायाऽसमर्थं, तदा किं ब्राह्मणपरित्यक्तधनग्रहणेनेत्यर्थः. ॥ ३९ ॥

॥ मूलम् ॥—मरिहिसि रायं जया तया वा । मणोरमे कामगुणे पहाय ॥ एक्को हु धम्मो नरदेवताणं । न विज्जई अन्नमिहेह किंचि ॥ ४० ॥ व्याख्या—हे राजन्! यदा तदा यस्मिंस्तस्मिन् काले मनोरमान् मनोहरान् कामगुणान् प्रहाय प्रकर्षेण त्यक्त्वा मरिष्यसि, म्रियमाणस्य पुरुषस्य धनादि सार्थे न भवति. हे नरदेव! हु इति निश्चयेनैको धर्म एव त्राणं शरणं विद्यते. इह जगति, इह मृत्यौ वा जीवस्यान्यत्किंचित् त्राणं न विद्यते. ॥ ४० ॥

॥ मूलम् ॥—नाहं रमे पक्खिणि पंजरे वा । संताणछिन्ना चरिस्सामि मोणं ॥ अकिंचणा उज्जुकडा निरामिसा । परिग्गहारंभनियत्तदोसा ॥ ४१ ॥ व्याख्या—अहमित्यध्याहारः. हे राजन्नहं न रमे, रतिं न प्राप्नोमि, वाशब्द इवार्थे, पक्षिणी पंजरे इव, यथा प-

द्विणी पंजरे रतिं न प्राप्नोति, अहं संतानछिन्ना सती मौनं मुनीनामाचारं चरिष्याम्यंगी-
करिष्यामि. छिन्नः संतानः स्नेहसंततिर्यया सा छिन्नसंताना. पुनः कथंभूता सत्यहं? आकिं-
चना सचित्ताचित्तद्विविधपरिग्रहरहिता. पुनरहं कथंभूता सती? ऋजु मायारहितं कृतं त-
पोधर्मं यया सा ऋजुकृता. पुनः कथंभूता सती? निरामिषा सती, निःक्रांता आमिषाद्विष-
यादिपदार्थादिति निरामिषा. विषयादयः पदार्था हि विषयिजीवानां गृद्धिहेतुत्वादामिषोपमा
एव. तस्मादहं निर्विषया सती. पुनः कथंभूता सत्यहं? परिग्रहारंभनिवृत्तदोषा, परिग्रहश्चा-
रंभश्च परिग्रहारंभौ, तौ निवृत्तौ दोषौ यस्याः सा परिग्रहारंभनिवृत्तदोषा. ॥ ४१ ॥

॥ मूलम् ॥—दवग्गिणा जहा रन्ने । डस्समाणेसु जंतुसु ॥ अन्ने सत्ता पमोयंति । रा-
गदोसवसंगया ॥ ४२ ॥ व्याख्या—अपरं च यथारण्ये दवाग्निना जीवेषु दह्यमानेषु सत्स्व-
न्येऽदग्धाः सत्वाः प्रमोदंते हर्षिता भवंति, मनस्येवं जानंत्येते ज्वलंतु, वयमदग्धास्तिष्टामः.
कथंभूतास्ते? रागद्वेषयोर्वशं गता रागद्वेषग्रस्ताः. ॥ ४२ ॥

॥ मूलम् ॥—एवमेव वयं मूढा । कामभोगेसु मुछिया ॥ डस्समाणं न बुज्झामो । रा-

गद्दोसग्गिणा जगं ॥ ४३ ॥ व्याख्या—एवममुनैव दृष्टांतेन वयं मूढा अविवेकिनः कामभोगेषु मूर्छिताः संतो रागद्वेषाग्निना जगद्दह्यमानं न बुध्यामहे, न जानीमहे वयमिति बहुवचनाद्बहवोऽस्मादृशा जीवा इति ज्ञापनार्थं. ॥ ४३ ॥

॥ मूलम् ॥—भोगे भुच्चा वमित्ता य । लहुभूय विहारिणो ॥ आमोयमाणा गच्छंति । दिया कामकमा इव ॥ ४४ ॥ व्याख्या—धन्यास्ते जीवा इत्यध्याहारः. ये जीवा भोगान् भुक्त्वा, पुनरुत्तरकाले वांत्वा त्यक्त्वा, अर्थात् साधवो भूत्वा, आमोदमानाः साध्वाचरणीयानुष्टानेन संतुष्टाः संतो गच्छंति विचरंति, वांछितं स्थानं व्रजंति, ते जीवाः, के इव? कामकमा द्विजा इव पक्षिण इव, कामं स्वेच्छया क्रमो विचरणं येषां ते कामक्रमाः स्वेच्छाचारिणः. यथा द्विजाः स्वेच्छया अप्रतिबद्धविहारत्वेन यत्र यत्र रोचंते तत्र तत्रामोदमाना भ्राम्यंति, एवमेतेऽप्यभिष्वंगाभावा यत्र यत्र संयमनिर्वाहस्तत्र तत्र यांतीत्याशयः. पुनः कथंभूतास्ते जीवाः? लघुभूतविहारिणः, लघुर्वायुस्तद्भूतास्तदुपमाः संतो विहरंतीत्येवंशीला लघुभूतविहारिणः. अथवा लघुश्चासौ भूतश्च लघुभूतो वायुस्तद्वद्विहरंतीत्येवंशीला लघुभूतवि-

हारिणः, वायुरिवाऽप्रतिबद्धविहारिणः. ॥ ४४ ॥

॥ मूलम् ॥—इमे य बद्धा फंदंति । मम हत्थज्जमागया ॥ वयं च सत्ता कामेसु । न- विस्सामो जहा इमे ॥ ४५ ॥ व्याख्या—हे आर्य! इमे च प्रत्यक्षाः शब्दरूपरसगंधस्पर्शादयः पदार्था बद्धा नियंत्रिताः सुदृढीकृता मम हस्ते पुनस्तव हस्ते आगता अपि फंदंति स्पंदंति, अस्थितिधर्मतया गत्वरा दृश्यन्ते, सुरक्षिता अपि यांतीत्यर्थः. एतादृशेषु च गत्वरेषु कामेष्वज्ञा वयं सक्ताः संजाता लिप्ता जाताः. तस्मादेतेषु गत्वरेषु कः स्नेहः? हे स्वामिन्नावां यथेमे पुरोहितादयश्चत्वारो जातास्तथा भविष्यामः. ॥ ४५ ॥

॥ मूलम् ॥—सामिसं कुललं दिस्स । बज्झमाणं निरामिसं ॥ आमिसं सव्वमुज्झित्ता । विहरामि निरामिसा ॥ ४६ ॥ व्याख्या—हे राजन्नहं सर्वमामिषमभिष्वंगहेतुं धनधान्यादिकं उज्झित्ता त्यक्त्वा निरामिषा त्यक्तसंगा सत्यप्रतिबद्धविहारतया विहरिष्यामि. किं कृत्वा? सामिषमामिषसहितं कुललं गृध्रमपरं पक्षिणं वा परैरित्यन्यैर्बध्यमानं पीड्यमानं दृष्ट्वा. सामिषः पक्षी ह्यामिषाहारिपक्षिभिः पीड्यते, अथवा सामिषं सस्पृहं भोजनाद्यर्थे लुब्धं कुललं

पक्षिणं पर्यैध्यमानं पीड्यमानं दृष्ट्वा. यतो हि पक्षिणो यदा गृह्यंते, तदा तान् भक्ष्यं दर्शयित्वा पाशादिना बध्यंते. आमिषाहारी शकुनिस्तु आमिषदर्शनेनैव लोभयित्वा मीनवद्बध्यते. सह आमिषेण आमिषरसास्वादलोभेन वर्तते इति सामिषस्तं सामिषं. ॥ ४६ ॥

॥ मूलम् ॥—गिद्धोवमेउ नच्चा णं । कामे संसारवद्दिणो ॥ उरगो सुवन्नपासेव । संकमाणो तणुं चरे ॥ ४७ ॥ व्याख्या—हे राजन्! त्वमपि विषयेभ्यः शंकमानः सन् तनुं स्वल्पं यतनया चरेरिति चरस्व? विषयेभ्यो भीतिः पदे पदे विधेयेत्यर्थः. किं कृत्वा? गृध्रोपमान् पूर्वोक्तमामिषकुललोपमान् विषयलोलुपान् जनान् ज्ञात्वा. तु पुनः कामान् संसारवर्द्धकान् ज्ञात्वा, विषयलोलुपाः कामैः पीडिताः संसारे भ्रमंतीति ज्ञात्वा. त्वं क इव शंकमानः सन्? सुवर्णपार्श्वे गरुडसमीपे उरग इव सर्प इव. यथा गरुडपार्श्वे सर्पः शनैः शनैः शंकमानः सन् चरति, यथा गरुडो न जानाति तथा अविश्वासी सन् स्वल्पं तनु यथास्यात्तथा चलति, तथा त्वमपि गरुडोपमानां विषयाणां विश्वासं मा कुर्याः. अत्र हि विषयाणां गरुडोपमानं संयमरूपजीवितापहारकत्वात्. नरस्य हि भोगलोलुपत्वादुरगोपमानं, यत उरगो

भोग्येवोच्यते, विषयास्तु दृश्यमानाः सुंदरा गरुडाकाराः, भोगिनां हि विषयेभ्य एव मृत्युः स्यात्, तस्माद्विषयेभ्यः शंकनीयमित्यर्थः. ॥ ४७ ॥

॥ मूलम् ॥—नागुव्व बंधणं छित्ता । अप्पणो वसहिं वए ॥ एयं पत्तं महारायं । उसुयारित्ति मे सुयं ॥ ४७ ॥ व्याख्या—हे राजन्! नाग इव हस्तीव बंधनं छित्वाऽऽत्मनो वसतिं स्वकीयस्थानं विंध्याटवीं यांति, तथा त्वमपि बलवत्त्वान्नागो विषयश्रृंखलां छित्वात्मनः स्थानं मुक्तिं व्रजेः, धीरपुरुषा गजतुल्याः, विषयाः श्रृंखलातुल्याः, मुक्तिर्विंध्याटवीवात्मगजस्य स्थानमुक्तं. हे इषुकारिमहाराज! मया साधुमुखादिति पथ्यं हितं श्रुतमस्ति, नाहं स्वबुद्ध्या ब्रवीमीत्यर्थः. ॥ ४७ ॥

॥ मूलम् ॥—चइत्ता विउलं रज्जं । कामभोगे य दुच्चए ॥ निव्विसया निरामिसा । निन्नेहा निप्परिग्गहा ॥ ४९ ॥ सम्मं धम्मं वियाणित्ता । चिच्चा कामगुणे चरे ॥ तवं पगिज्झहक्खायं । घोरंघोरपरक्कमा ॥ ५० ॥ एवं ते कमसो बुद्धा । सव्वे धम्मपरायणा ॥ जम्ममच्चुभउव्विग्गा । दुक्खस्संतगवेसिणो ॥ ५१ ॥ तिसृभिः कुलकं ॥ व्याख्या—एवममुना प्रकारेण

ते सर्वेऽपि क्रमशोऽनुक्रमेण षमपि जीवा बुद्धाः प्रतिबोधं प्राप्ताः, किं कृत्वा? विपुलं विस्तीर्णं राज्यं त्यक्त्वा. च पुनर्दुस्त्यजान् कामभोगांस्त्यक्त्वा. कथंभूतास्ते? सर्वे निर्विषया विषयाभिलापरहिताः, पुनः कथंभूताः? निरामिषाः स्वजनादिसंगरहिताः, पुनः कीदृशाः? निःपरिग्रहा बाह्याभ्यंतरपरिग्रहरहिताः. ॥ ४ए ॥ पुनस्ते जीवाः किं कृत्वा प्रतिबोधं प्राप्ताः? सम्मं सम्यक् प्रकारेण धर्मं साधुधर्मं विज्ञाय, पुनर्वरान् डुर्लभान् प्रधानान् कामगुणांस्त्यक्त्वा, कामस्य मदनस्य गुणकारित्वात्कामवृद्धिकरत्वाद्गुणाः कामगुणास्तान् कामगुणान् डुर्लभान् स्रक्चंदनवनितादीन् कामोद्दीपनौषधादींस्त्यक्त्वा. अत्र पुनः कामगुणग्रहणं तेषामतिशयख्यापनार्थं. पुनः किं कृत्वा? घोरमधीरपुरुषैर्दुरनुचरं यथाख्यातं तीर्थकरोद्दिष्टं द्वादशविधं तपः प्रगृह्य भावतोंगीकृत्य. पुनः कथंभृतास्ते सर्वे? घोरपराक्रमाः, घोरं पराक्रमं धर्मानुष्ठानविधिर्येषां ते घोरपराक्रमाः. पुनः कीदृशास्ते सर्वे? धर्मपरायणा धर्मध्याने तत्परा इत्यर्थः. पुनः कीदृशास्ते? जन्ममृत्युभयोद्विग्ना जन्ममरणभीतिभीताः. पुनस्ते सर्वे किं कर्तुमिच्छवः? डुःखस्यांतं मोक्षं गवेषिणो मोक्षाभिलाषिण इत्यर्थः. ॥ ५१ ॥

॥ मूलम् ॥—सासणो विगयमोहाणं । पुव्विं भावेण भाविया ॥ अचिरेणैव कालेणं । डुक्खस्संतमुवागया ॥ ५२ ॥ व्याख्या—पुनस्ते षडपि जीवा अचिरेणैव कालेन स्तोककालेन दुःखस्य संसारस्यांतमवसानमर्थान्मोक्षमुपागता मोक्षं प्राप्ताः. कीदृशास्ते? विगतमोहानां वीतरागाणां शासने तीर्थे पूर्वं पूर्वस्मिन् भवे भावनया सम्यक्क्रियाभ्यासरूपया द्वादशविधमनःपरिणतिरूपया भाविता रंजितात्मानः. ॥५२॥ अथ तेषां सर्वेषां षण्णामपि जीवानां नामान्याह—

॥ मूलम् ॥—राया य सह देवीए । माहणो य पुरोहिउ ॥ माहणी दारगा चेव । सव्वे ते परिनिव्वुडेत्तिबेमि ॥ ५३ ॥ व्याख्या—राजा इषुकारी, देव्या पट्टराज्ञ्या कमलया सह, ब्राह्मणो भृगुनामा पुरोहितो राज्ञः पूज्यः, पुनर्ब्राह्मणी पुरोहितस्य पत्नी यशा, च पुनर्दारकौ ब्राह्मणब्राह्मण्योः पुत्रौ, एते सर्वे परिनिर्वृता मोक्षं प्राप्ताः, इत्यहं ब्रवीमि. इति सुधर्मास्वामी जंबूस्वामिनं प्राह. इतीषुकारीयमध्ययनं चतुर्दशं संपूर्णं. ॥ १४ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायामिषुकारीयस्याध्ययनस्यार्थः संपूर्णः ॥ १४ ॥ श्रीरस्तु ॥

## ॥ अथ पंचदशमध्ययनं प्रारभ्यते ॥

चतुर्दशेऽध्ययने निर्निदानस्य गुणः प्रोक्तः, स च निर्निदानगुणो हि मुख्यवृत्त्या भिक्षोरेव भवति, अतो भिक्षोर्लक्षणमाह—

॥ मूलम् ॥—मोणं चरिस्सामि समिच्च धम्मं । सहिए उज्जुकडे नियाणछिन्ने ॥ संथवं जहिज्ज अकामकामो । अन्नायएसी परिव्वए जे स भिक्खू ॥ १ ॥ व्याख्या—य एतादृशः सन् परिव्रजेत्, अनियंतमप्रतिबद्धं यथास्यात्तथा विहरेद्विहारं कुर्यात् स भिक्षुरुच्यते. स इति कः? यः पूर्वं मनस्येवं जानाति, अहं मौनं, मुनीनां कर्म मौनं साधुधर्मं चरिष्यामि, श्रामण्यमंगीकरिष्यामि. किं कृत्वा? धर्मं दशविधं पंचमहाव्रतदीक्षां समेत्य प्राप्य, पुनर्यो दीक्षां गृहीत्वा संस्तवं पूर्वपश्चात्संस्तवं परिचयं कुटुंबस्नेहं जह्यात् त्यजेत्. परं कीदृशः सन्? सहिए इति सहितः स्थविरैर्बहुश्रुतैः साधुभिः सहितः, साधुर्ह्येकाकी न तिष्ठेत्. 'इक्कस्स

कडे धम्मो ' इत्युक्तत्वात्. अथवा कथंभूतः सन्? स्वहितः सन्, स्वस्य हितं यस्य स स्वहित आत्महिताभिलाषी. पुनः कीदृशः? उजुकडे ऋजु सरलं कृतं मायारहितं तपो येन स ऋजुकृतः, अशठानुष्ठानकारीत्यर्थः. पुनः कीदृशः? ' नियाणछिन्ने ' छिन्ननिदानो निदानशल्यरहित इत्यर्थः. पुनः कीदृशः? अकामकामो न विद्यते कामस्य कामोऽभिलाषो यस्य सोऽकामकामः कामाभिलाषरहितः. पुनः कीदृशः? ' अन्नाएसी ' अज्ञातैषी, यत्र कुले तस्य साधोस्तपोनियमादिगुणो न ज्ञातस्तत्रैषयते ग्रासादिकं गृहीतुं वांछते, इत्येवंशीलोऽज्ञातैषी. य एवंविधः स भिक्षुरित्युच्यते. अनेन सिंहतया निःक्रम्य सिंहतया विहरणं भिक्षुत्वनिबंधनं प्रोक्तं साधूनां. चतुर्भंगी यथा—सिंहत्ताए निक्कमंति सिंहत्ताए विहरंति. सियालत्ताए निक्कमंति सियालत्ताए विहरंति. सिंहत्ताए निक्कमंति, सियालत्ताए विहरंति. सियालत्ताए निक्कमंति, सिंहत्ताए विहरंति. एवं चतुर्भंगयुक्ता. तत्र सर्वोत्तमा सिंहतया निःक्रमणं, सिंहतया च पालनं, तच्च यथा स्यात्तथा. ॥ १ ॥ पुनराह—

॥ मूलम् ॥—रागोवरयं चरिज्ज लाढे । विरए वेयवियायरक्खिए ॥ पन्ने अभिभूय स-

वदंसी जे । कम्हिदि न मुछिए स भिक्खू ॥ २ ॥ व्याख्या—पुनः स भिक्षुरित्युच्यते. स इति कः? यो रागोपरतं यथा स्यात्तथा रागरहितं यथा स्यात्तथा चरेत्. पुनः कीदृशः सन्? विरतोऽसंयममार्गान्निवृत्तः. पुनः कीदृशः सन्? वेदविदात्मरक्षितः, वेद्यते ज्ञायतेऽर्थोऽनेनेति वेदः सिद्धांतस्तस्य वेदनं विद् ज्ञानं वेदवित् सिद्धांतज्ञानं, तेनात्मा रक्षितो दुर्गतिपतनाद्येन स वेदविदात्मरक्षितः. पुनः कीदृशः? प्रज्ञः प्राज्ञो हेयोपादेयबुद्धिमान्. पुनर्योऽभिभूय परीषहान् जित्वा सिद्धतील्यव्याहारः. पुनः कीदृशः? सर्वदर्शी, सर्वं प्राणिगणमात्मवत्पश्यतीति सर्वदर्शी. पुनर्यः कस्मिंश्चित्सचित्ताचित्तवस्तुनि न मूर्छितोऽलोलुप इत्यर्थः. ॥ २ ॥

॥ मूलम् ॥—अक्कोसवहं विदित्तु धीरे । मुणी चरे लाढे निच्चमायगुत्ते ॥ अविग्गमणे असंपहिट्ठे । जे कसिणं अहियासए स भिक्खु ॥ ३ ॥ व्याख्या—पुनः स भिक्षुरित्युच्यते. स इति कः? य आक्रोशश्च वधश्चानयोः समाहार आक्रोशवधं वाक्तर्जनताडनं विदित्वा स्वकर्मफलं ज्ञात्वा धीरस्तदाक्रोशवधादिसहनशीलो मुनिर्वाग्गुप्तियुक्तः सन् चरेत्, साधुवर्त्मनि विहरेत्. पुनः कीदृशः सन्? लाढः साध्वनुष्ठाने तत्परः. पुनः कीदृशः? नित्यमात्म-

गुप्तः, गुप्तोऽसंयमस्थानेभ्यो रक्षित आत्मा येन स गुप्तात्मा, प्राकृतत्वाद्विपर्ययः. पुनः कीदृशः? अव्यग्रमना अनाकुलचित्तः. पुनः कीदृशः? असंप्रहृष्ट आक्रोशादिषु न प्रहर्षवान्, कश्चित्कदाचित्कस्मैचिद्दुर्वचनैर्निर्भर्त्सयति तदा हर्षितो न भवतीत्यर्थः. पुनर्यः कृत्स्नं समस्तमाक्रोशवधमध्यास्ते सहते समवृत्तिर्भवति स साधुरित्यर्थः. ॥ ३ ॥

॥ मूलम् ॥—पंतं सयणासणं भइत्ता । सीउण्हंपि विविहं च दंसमसगं ॥ अव्वग्गमणे असंपहिठे । जे कसिणं अहियासए स भिक्खू ॥ ४ ॥ व्याख्या—पुनर्यः प्रांतमसारमप्रधानं शयनमासनं, उपलक्षणत्वाद्भोजनाच्छादनादिकं भजित्वा सेवयित्वा. पुनः शीतोष्णं, च पुनर्विविधं दंशमशकं रुधिरपानकरं जंतुगणं सकलं प्राप्य अव्यग्रमना भवेत् स्थिरचित्तो भवेत्. पुनर्यः सम्यक् शयनासनभोजनाच्छादनलाभात्, शीताद्युपद्रवरहितस्थानलाभात्, तथा दंशमशकादिरहितस्थानलाभादसंप्रहृष्टो भवति हर्षितो न भवति, सम्यग्सुखो भवति, एतादृशः सन्नेतत् सर्वमध्यास्ते स भिक्षुरित्युच्यते. ॥ ४ ॥

॥ मूलम् ॥—नो सक्कियमिच्छई न पूयं । नोवि य वंदणगं कओ पसंगं ॥ से संजए सु-

व्वए तवस्सी । सहिए आयगवेसए स भिक्खू ॥ ५ ॥ व्याख्या—स भिक्षुर्भवेत्. स इति कः? यः सत्कृतं सत्कारमात्मनः सन्मुखं जनानामागमनमभ्युत्थानादिकं, विहारं कुर्वतोऽनुगमनेन संप्रेषणं, इत्यादिकं नो इच्छति. पुनर्यः पूजां वस्त्रपात्राहारादिभिरर्चां नेच्छति. अपि च पुनर्वंदनकं द्वादशावर्त्तपूर्वकं नमनं, तदपि न वांछति. कुतश्चित्पुरुषात्प्रशंसामपि नो इच्छति. स संयतः, सम्यग् यतते साध्वनुष्ठाने यत्नं कुरुते इति संयतः. पुनः कीदृशः? सुव्रतः शोभनव्रतधारकः. पुनर्यः सहितः सर्वजीवेषु हितान्वेषी, अथवा ज्ञानदर्शनाभ्यां सहितः. पुनर्य आत्मानं कर्ममलापहारेण शुद्धं गवेषयतीत्यात्मगवेषकः. पुनर्यस्तपस्वी. ॥ ५ ॥

॥ मूलम् ॥—जे पुण जहाइ जीवियं । मोहं वा कसिणं निअच्छइ ॥ नरनारिं पजहे सया तवस्सी । न य कोऊहलं उवसेवई स भिक्खू ॥ ६ ॥ व्याख्या—यः पुनस्तं हेतुं जहाति. तं कं? येन हेतुना येन कृतेन जीवितं संयमजीवितव्यं जहाति. पुनर्येन कृत्वा मोहं वा मोहनीयकर्म कषायनोकषायरूपं कृत्स्नं संपूर्णं नियच्छति बध्नाति. तादृशं नरं नारीं स्त्रीं सदा सर्वदा प्रजह्यात्. कोऽर्थः? येन पुरुषस्त्र्यादिना कृत्वा संयमं याति, येन कृत्वा मोह-

कर्मोदयः स्यात्, तंप्रति यस्त्यजेत् स भिक्षुरित्यर्थः. पुनर्यस्तपस्वी तपोनिरतः, पुनर्यः कौतूहलं स्त्र्यादिविषयं, अथवा नाटकेंद्रजालादिकौतुकं न चोपसेवते, स भिक्षुरित्युच्यते. ॥६॥

॥ मूलम् ॥—छिन्नं सरं भोममंतरिक्खं । सुविणं लक्खणदंडवत्थुविज्जं ॥ अंगवियारं सरस्स विजयं । जो विज्जाहिं न जीवई स भिक्खू ॥ ७ ॥ व्याख्या—पुनः स भिक्षुरित्युच्यते. स कः? य इत्यादिभिर्विद्याभिर्न जीवत्याजीविकां न करोति. ताः का विद्याः? छिद्यते इति छिन्नं, वस्त्रादीनां मूषकादिना दशनं, अग्न्यादिप्रज्वलनं, कज्जलकर्दमादिना लिंपनं स्फटनमित्यादिशुभाशुभविचारसूचिका विद्या छिन्नमित्युच्यते. यदा हि वस्त्रे नूतने किंचिद्विकारे सति विचारः क्रियते, यदुक्तं रत्नमालायां—निवसंत्यमरा हि वस्त्रकोणे । मनुजाः पार्श्वदशांतमध्ययोश्च ॥ अपरेऽपि च रक्षसां त्रयोंशाः । शयने चासनपादुकासु चैवं ॥ १ ॥ कज्जलकर्दमगोमयलिप्ते । वाससि दग्धवति स्फटिते वा ॥ चिंत्यमिदं नवधा विहितेऽस्मि—न्निष्टमनिष्टफलं च सुधीभिः ॥ २ ॥ भोगप्राप्तिर्देवतांशे नरांशे । पुत्राप्तिः स्याद्राक्षसांशे च मृत्युः ॥ प्रांते सर्वांशेऽप्यनिष्टं फलं स्यात् । प्रोक्तं वस्त्रे नूतने साध्वसाधु ॥ ३ ॥

वस्त्रपरिभानशुभाशुभफलसूचकयंत्रं.

| | | |
|---|---|---|
| देवः | रक्षः | देवः |
| मनुजः | रक्षः | मनुजः |
| देवः | रक्षः | देवः |

इत्यादिविद्यया जीविकां न कुर्यात्स साधुः. पुनर्यः सर-
मिति स्वरविद्यां न प्रयुंक्ते, स्वरं हि—षड्जऋषभगांधार—म-
ध्यमः पंचमस्तथा ॥ धैवतो निषधः सप्त । तंत्रीकंठोद्भवाः स्व-
राः ॥ १ ॥ षड्जं रौति मयूरो । पंचमरागेण जल्पते परभृत् ॥
इत्यादिविद्या इत्यादिसंगीतशास्त्रं. पुनर्भौमं, भूमौ जवं जैसं भूकंपादि. ऋतुं विना वृक्षादि-
फलनमित्यादिलक्षणा विद्या. स्वप्नं स्वप्नगतं शुभाशुभलक्षणं स्वप्नविद्या. लक्षणं स्त्रीपुरुषाणां
सामुद्रिकशास्त्रोक्तं, तुरंगगजादीनां शालिहोत्रगजपरीक्षादिशास्त्रोक्तं. दंडं दंडविद्या, वंशदं-
डादिपर्वसंख्याफलकथनं. वास्तुविद्या प्रासादानां गृहाणां विचारकथनं वास्तुशास्त्रोक्तं. अं-
गविद्या शरीरस्पर्शनस्य नेत्रादीनां स्फुरणस्य वा विचारोंगविचारशास्त्रं. पुनः स्वरस्य विजयो
दुर्गाशृगालीवायसतित्तरादीनां स्वरस्य विजयस्तस्य स्वरस्य शुभाशुभनिरूपणाभ्यासः. य ए-

ताभिर्विद्याभिराजीविकां न करोति स भिक्षुरित्यर्थः.

॥ मूलम् ॥—मंतं मूलं विविहं विज्जाचिंतं । वमणविरेयणधूमनेत्तसिणाणं ॥ आउरे सरणं तिगिछियं च । तं परिन्नाय परिव्वए स भिक्खू ॥ ८ ॥ व्याख्या—पुनः स भिक्षुरित्युच्यते. स इति कः? य एतत् सर्वं परिज्ञाय, परि समंताद् ज्ञात्वा परिज्ञाय परिव्रजेत् साधुमार्गे चरेत्, 'जाणियव्वा नो समायरियव्वा' इत्युक्तेः. एतत् किं किं? मंत्रं ॐम् ह्रीम्प्रभृतिकं स्वाहांतं देवाराधनं. मूलं मूलिका राजहंसीशंखपुष्पीशरपुंखादिगुणसूचकं शास्त्रं. पुनर्विविधं नानाप्रकारं वैद्यचिंतं वैद्यकशास्त्रस्यौषधचिकित्सालक्षणस्य चिंतनं वर्जयेत्, विदलं शूली कुष्टी मांसं ज्वरी घृतमित्यादि. पुनर्वमनं वमनादिकरणोपायं, अथवा वमनफलं, ज्वरादौ वमनं श्रेष्टं, तथा विरेचनं विरेचगुणकथनं तदौषधप्रयोगचिंतनं. धूमो मनःशिलादिसंबंधी भूतत्रासनादिकः. नेत्रशब्देन नेत्रसंस्कारकं गुटीचूर्णादिकं. स्नानमपत्यार्थं मंत्रौषधीभिः संस्कृतजलैर्मूलादिस्नानं, अथवा रोगमुक्तस्नानं वा. पुनरातुरे इति-आतुरस्य रोगादिपीडितस्य हा मातरित्यादिस्मरणं, आत्मनश्चिकित्सितं रोगप्रतीकारचिंतनं परित्यजेत्. एतत्सर्वं

परिज्ञायात्मनः परस्य वोभयथा परिव्रजेत्, साधुमार्गं यायादित्यर्थः. ॥ ८ ॥

॥ मूलम् ॥—खत्तिगणउग्गरायपुत्ता । माहणभोइय विविहा य सिप्पिणो नो ॥ तेसिं चयइ सिलोगपूइयं । तं परिन्नाय परिव्वए स भिक्खू ॥ ए ॥ व्याख्या—भिक्षुरित्युच्यते. स इति कः ? यस्तेषां गाथोक्तानां श्लोकः कीर्तिर्यथा, एते भव्याः पूज्या इति, एते पूजायोग्याः, एतेषां पूजा कर्तव्या, एतेषां कीर्तिकरणे, एतेषां पूजाया उपदेशे च न कश्चिल्लाभः स्यात्, साधुनैतेषां कीर्तिपूजे न कर्तव्ये इत्यर्थः. एते के के ? ये क्षत्रिया राजानः, तथा गणा मल्लादीनां समूहाः, पुनरुग्राः कोट्टपालाः, राजपुत्रा राजकुमाराः, ब्राह्मणाः प्रसिद्धाः, भोगिना भोगवंशोद्भवाः, अथवा भोगिनो विषयभोक्तारः, च पुनर्विविधा नानाप्रकाराः शिल्पिनश्चित्रकारसूत्रधारस्वर्णकारलोहकारादयो ये वर्तंते, तान् परिज्ञायोभयथा ज्ञात्वा साधुः साधुमार्गे परिव्रजेत् ॥ ए ॥

॥ मूलम् ॥— गिहिणो जे परिव्वइएण दिठा । अप्पवईएण च संथुया हविज्जा ॥ तेसिं इह लोइयफलठा । जो संथवं न करेइ स भिक्खू ॥ १० ॥ व्याख्या—यस्तैर्गृहस्थैः सह इ-

हलोकफलार्थं संस्तवं परिचयं न करोति, प्राकृतत्वात् तेसिमिति तृतीयास्थाने षष्ठी. तैर्गृहस्थैः कैः? ये गृहस्थाः परिव्रजितेन गृहीतदीक्षेण दृष्टाः, चशब्दः पुनरर्थे. पुनरप्रव्रजितेनाऽगृहीतदीक्षेण गृहस्थाश्रमस्थितेन संस्तुताः कृतपरिचयाः, तैः सहालापसंलापमिहलोकस्वार्थाय न कुर्यात्, स साधुरित्यर्थः. ॥ १० ॥

॥ मूलम् ॥—जं किंचि आहारपाणगं । विविहं खाइमसाइमं परेसि लध्धुं ॥ जो तं तिविहेण नाणुकंपो । मणवयणकायसुसंवुडे न स भिक्खू ॥ ११ ॥ व्याख्या—स भिक्षुर्न भवति, स कः? यः परेसि इति परेभ्यो गृहस्थेभ्य आहारमन्नादिकं, पानकं दुग्धादिकं, पुनर्विविधं नानाप्रकारं खादिमं खर्जूरादिकं, स्वादिमं लवंगादिकं लब्ध्वा, तमिति तेनाशनपानखादिमस्वादिमादिना चतुर्विधेन, त्रिविधेन मनोवाक्काययोगेन नानुकंपते, ग्लानबालादीन्नोपकुरुते. कोऽर्थः? योऽशनपानखादिमस्वादिमाहारं लब्ध्वा बालवृद्धानां साधूनां तेनाहारेण संविभागं न करोति स साधुर्न भवतीत्यर्थः, 'असंविभागी न हु तस्स मोक्खं' इत्युक्तेः. पुनः साधुः कीदृग्भवति? मनोवाक्काययोगेन सुतरां संवृतः पिहिताश्रवद्वारः. ॥११॥

॥ मूलम् ॥—सयणासणपाणनोयणं । विविहं खाइमसाइमं परेसिं ॥ अदए पमिसेहि-
ए नियंते । जे तत्थ न पउस्सई स निक्खू ॥ १३ ॥ व्याख्या—पुनर्यः शयनासनपानभोज-
नं, पुनर्विविधं खादिमस्वादिमं, परेण गृहस्थेनादत्ते, अथवा गृहे साधौ प्रतिषिद्धे सति त-
स्मिन् गृहस्थे प्रद्वेषं न करोति, न प्रद्वेष्टि. कोऽर्थः? यदा कश्चित्साधुः कस्यचिद् गृहस्थस्य
गृहे गतस्तस्य च गृहस्थस्य गृहे प्रभूतं शयनं शय्या, चाशनं मोदकादिकं, पानं खर्जूरद्रा-
क्षादिपानीयं, शर्करादिजलं, प्रासुकं तंदुलप्रक्षालनजलं वा, भोजनं तंदुलदाल्यादि; पुनर्वि-
विधं नानाप्रकारं खादिमं खर्जूरनालिकेरगरिकादिकं, स्वादिमं लवंगैलाजातिफलतजादिकं
वर्तते, परं स गृहस्थः साधवे न प्रददाति, अथवा पुनर्निवारयति, यथा रे भिक्षो! अत्र
नागंतव्यमिति तद्वाक्यं श्रुत्वेति न जानाति, धिगेनं गृहस्थं दुष्टं, यः प्रभूते वस्तुनि सति
मह्यं न ददाति, अथ च मां निवारयतीति द्वेषं न विधत्ते, स साधुर्भिक्षुरित्युच्यते. ॥ १३ ॥
॥ मूलम् ॥—आयामगं चेव जवोदणं च । सीयं च सोवीरजवोदगं च ॥ नो हीलए
पिंडं नीरसं तु पंतं । कुलाइं परिव्वए स भिक्खू ॥ १४ ॥ व्याख्या—यः प्रांतानि कुलानि प-

रिव्रजेत्, प्रांतानि दुर्बलानि, चित्तवित्ताभ्यां दुर्बलानि, एतादृशानि कुलान्याहारार्थं परिव्रजेत्, सर्वदा धनिनामेव कुलेषु यो न याति, सर्वदा दानशौण्डानामेव कुलेषु न याति, ततो हि नियतपिंडसेवनात्साधोर्धर्महानिः स्यात्. तु पुनर्य आयामकं धान्यस्याऽवश्रावणं, च पुनर्यवोदनं यवभक्तं, पुनः शीतं चिरकालीनं, पुनः सौवीरं कांजिकं, पुनर्यवोदकं यवप्रक्षालनजलमित्यादिकं, पुनर्यन्नीरसं पिंडं सर्वथा रसवर्जितमेतादृशमाहारं पानीयं गृहस्थानां गृहाल्लब्धं यो न हीलयेन्न निंदेत्, कदन्नमिदं, कुत्सितं पानीयमेतदित्यादिवचनं न ब्रूते, स साधुर्भिक्षुरित्युच्यते. ॥ १४ ॥

॥ मूलम् ॥—सद्दा विविहा भवंति लोए । दिव्वा माणुस्सया तहा तिरिच्छा ॥ भीमा भयभेरवा उराला । जे सुच्चा न विहिज्जइ स भिक्खू ॥ १५ ॥ व्याख्या—य एतादृशान् शब्दान् श्रुत्वा न विहिज्जइ न व्यथते, धर्मध्यानान्न चलते स भिक्षुरुच्यते. एतादृशान् कीदृशान्? ये शब्दा लोके दिव्याः, दिवि भवा दिव्याः, देवैर्भयाय कृताः, पुनर्ये शब्दा मानुष्यका मनुष्यैः कृता मानुष्यकाः, तथा ये शब्दास्तिरश्चीनास्तैरश्चास्तिर्यग्भ्यो भवास्तिरश्ची-

ना भवंति, तान् श्रुत्वा न क्षोभं प्राप्नोति. कीदृशाः शब्दाः? भयभैरवाः, भयेन भैरवा भयभैरवाः, अत्यंतसाध्वसोत्पादकाः, पुनः कीदृशाः? उदारा महांतो भवंति. ॥ १५ ॥

॥ मूलम् ॥—वायं विविहं समिच्च लोए। सहिए खेयाणुगए य कोवियप्पा ॥ पन्ने अभिभूय सव्वदंसी। उवसंते अविहेडए स भिक्खू ॥ १६ ॥ व्याख्या—यः पुनर्लोके विविधं वादं समेत्य अविहेठको भवेत्, कस्यचिद्बाधको न भवेत्. कस्यचित्पक्षपातं न कुर्यात्. लोके हि बहूनि दर्शनानि संति, ते परस्परं वादं कुर्वंति, अन्योन्यं मतं दूषयंति, मुंडा जटाधारिभिः, नग्ना वस्त्रधारिभिः, गृहस्था वनवासिभिः, इत्यादिस्वस्वमताभिप्रायवचनरूपं वादं कृत्वा कस्यापि बाधां न कुर्यादित्यर्थः, कीदृशो यः? सहितो ज्ञानदर्शनचारित्रसहितः, पुनः कीदृशः? खेदानुगतः, खेदयति मंदीकरोति कर्माभिनेति खेदः संयमः, तेनानुगतः खेदानुगतः सप्तदशविधसंयमरतः. पुनः कीदृशः? कोविदात्मा, कोविदो लब्धशास्त्रपरमार्थ आत्मा यस्येति कोविदात्मा. पुनः कीदृशः? प्राज्ञः प्रकर्षेणान्येभ्य आधिक्येन जानातीति प्राज्ञः सारबुद्धिमान्. पुनः कीदृशः? अभिभूय सर्वदर्शी, अभिभूय परीषहान् जित्वा रागद्वेषौ निवार्य सर्वजंतुगणमात्मसदृशं प-

श्यतीत्येवंशीलः सर्वदर्शी. पुनः कीदृशः? उपशांतः कषायरहितः स्यात्, स भिक्षुरित्युच्यते.

॥ मूलम् ॥—असिप्पजीवी अगिहे अमित्ते । जिइंदिए सवउ विप्पमुक्के ॥ अणुक्कसाई लहु अप्पभक्खी । चिच्चा गिहं एग चरे स भिक्खुत्तिबेमि ॥ १६ ॥ व्याख्या—स भिक्षुर्भवेत्, स इति कः? यो गृहं द्रव्यभावभेदेन द्विविधं त्यक्त्वैक एकाकी रागद्वेषरहितोऽसहायो वा चरतीत्येकचरः स्यात्. कथंभूतः सः? अशिल्पजीवी शिल्पेन विज्ञानेन जीवते आजीविकां करोतीति शील्पजीवी, न शिल्पजीवी अशील्पजीवी, चित्रकरणादिविज्ञानेनाजीविकां न करोतीत्यर्थः. पुनः कीदृशः? अगृहो न विद्यते गृहं यस्य सोऽगृहः स्त्रीपरिचयरहितः, अथवा गृहस्थैः सह परिचयरहितः. पुनः कीदृशः? अमित्रः शत्रुमित्ररहितः. पुनः कीदृशः? जितेंद्रियः. पुनः कीदृशः? सर्वतो विप्रमुक्तो बाह्याभ्यंतरसंयोगाद्विप्रमुक्तः सर्वपरिग्रहरहितः. पुनः कीदृशः? अणुकषायो मंदकषायीत्यर्थः. पुनः कीदृशः? लघ्वल्पभक्षी, लघूनि निःसाराणि वल्लचणकनिःपावककुलत्थमाषादिप्रासुकाहाराणि, तानि स्तोकानि भक्षितुं शीलं यस्य स लघ्वल्पभक्षी नीरसस्तोकाहारकारीत्यर्थः. अथवा लघु प्रासुकं च तदल्पं च लघ्वल्पं

तदाहारं भक्षितुं शीलं यस्य स लब्धल्पभक्षी. अथवा लघुः क्षीणकर्मा स चासावल्पभक्षी च लघ्वल्पभक्षी, इत्यहं ब्रवीमीति सुधर्मास्वामी जंबूस्वामिनं प्राह. ॥ १६ ॥ इति भिक्षुलक्षणाध्ययनं पंचदशं संपूर्णं. ॥ १५ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां भिक्षुलक्षणाध्ययनं पंचदशं संपूर्णं. ॥१५॥

---

## ॥ अथ षोडशमध्ययनं प्रारभ्यते ॥

पंचदशेऽध्ययने हि भिक्षुगुणा उक्ताः, ते भिक्षुगुणा हि ब्रह्मचर्ययुक्तस्य साधोर्भवंति. अतः षोडशेऽध्ययने ब्रह्मचर्यस्य समाधिस्थानान्युच्यंते—

॥ मूलम् ॥—सुयं मे आउसंतेणं भगवया एवमक्खायं, इह खलु थेरेहिं भगवंतेहिं दस बंभचेरसमाहिठाणा पन्नत्ता, जे भिक्खू सुच्चा निसम्म संजमबहुले संवरबहुले समाहि-

१५-१६

बहुले गुत्तिं गुत्तिंदिए गुत्तबंनयारी सया अप्पमत्ते विहरिज्जा ॥ व्याख्या—श्रीसुधर्मास्वामी स्वशिष्यं जंबूस्वामिनं प्राह- हे आयुष्मन्! मे मया श्रुतं, तेणं इति तेन नगवता ज्ञानवता तीर्थकरेणाख्यातं, श्रीमहावीरेण स्वामिनोक्तं, आसन्नत्वात्तस्यैव ग्रहणं. पुनरिह श्रीजिनशासने स्थविरैर्गणधरैर्नगवद्भिर्माहात्म्यवद्भिस्तीर्थकरोक्तार्थधारणशक्तिमद्भिर्दश ब्रह्मचर्यसमाधिस्थानान्युक्तानि, ब्रह्मचर्यस्थैर्यस्य कारणान्युक्तानि. कोऽर्थः? ममैवैषा बुद्धिर्नास्ति. किंतु तीर्थकरैः पुनर्गणधरैर्गौतमादिनिः स्वापेक्षया वृद्धैरेवमुक्तं, तथैव मयोच्यते. यानि ब्रह्मचर्यसमाधिस्थानानि निक्षुः श्रुत्वा शब्दतः श्रवणे धृत्वा, निशम्यार्थतो मनस्यवधार्य संयमबहुलः सन्, बहुलः प्रधानप्रधानतरस्थानप्राप्त्योत्तमः संयमो यस्य स बहुलसंयमो वर्धमानपरिणामचारित्रः सन् विहरेत्. पुनर्यानि ब्रह्मचर्यसमाधिस्थानानि श्रुत्वा संवरबहुलः. संवर आश्रवनिरोधः, स बहुलो यस्य स संवरबहुलः, प्रधानाश्रवद्वारनिरोधः, पुनः समाधिबहुलो बहुलसमाधिः प्रधानचित्तस्वास्थ्ययुक्तः सन् विहरेत्. पुनर्यानि ब्रह्मचर्यसमाधिस्थानानि श्रुत्वा निक्षुर्गुप्तो मनोवाक्कायगुप्तियुक्तः सन्, अत एव गुप्तं नवगुप्तिसेवनाद् गुप्तं सुरक्षितं ब्र-

ह्मचर्यं चरितुं सेवितुं शीलं यस्य स गुप्तब्रह्मचारी स्थिरब्रह्मचर्यधारकः सन् सदा सर्वदाऽप्रमत्तोऽप्रमादी सन् विहारं कुर्यात्. यतो हि पूर्वं यः साधुर्ब्रह्मचर्यसमाधिस्थानानि शृणोति स साधुर्ब्रह्मचर्यपालने स्थिरो भवति. यदुक्तं—सुच्चा जाणइ कल्लाणं । सुच्चा जाणइ पावगं ॥ उभयंपि जाणइ सोच्चा । जं सेयं तं समायरे ॥ १ ॥ इति श्रुत्वा जंबूः प्राह—

॥ मूलम् ॥—कयरे खलु थेरेहिं भगवंतेहिं दस बंभचेरसमाहिठाणा पन्नत्ता ? जे भिक्खू सुच्चा निसम्म संयमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबंभयारी सया अप्पमत्ते विहरेज्जा.

व्याख्या—हे स्वामिन् ! यानि ब्रह्मचर्यस्थानानि भिक्षुः साधुः शब्दतः श्रुत्वा, अर्थतो हृद्यवधार्य संयमबहुलः संवरबहुलः समाधिबहुलो गुप्तो गुप्तेंद्रियो गुप्तब्रह्मचारी सदाऽप्रमादी विचरेत्, तानि खलु निश्चयेन कतराणि कानि ब्रह्मचर्यसमाधिस्थानानि तैः स्थविरैर्भगवद्भिर्दश ब्रह्मचर्यसमाधिस्थानानि प्रतिपादितानि ? यानि भिक्षुः श्रुत्वा निशम्य संयमबहुलः संवरबहुलो गुप्तो गुप्तेंद्रियो गुप्तब्रह्मचारी सदाऽप्रमत्तः सन् विहरेत्. इति जंबूस्वामिनः प्रश्नवा-

क्यं श्रुत्वा सुधर्मास्वामी प्राह—

॥ मूलम् ॥—इमे खलु ते थेरेहिं नगवंतेहिं दस बंनचेरसमाहिठाणा पन्नत्ता, जे निक्खू सुच्चा निसम्म संयमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबंनयारी सया अप्पमत्ते विहरिज्जा. व्याख्या—हे जंबू! इमानि प्रत्यक्षं वक्ष्यमाणानि खलु निश्चयेन तानि स्थविरैर्भगवद्भिर्दश ब्रह्मचर्यसमाधिस्थानानि प्रज्ञप्तानि, यानि दश ब्रह्मचर्यसमाधिस्थानानि शब्दतः श्रुत्वा, निशम्यार्थतो ह्यवधार्य निक्षुः साधुः संयमबहुलः समाधिबहुलो गुप्तो गुप्तेंद्रियो गुप्तब्रह्मचारी सर्वदाऽप्रमत्तोऽप्रतिबद्धविहारी सन् विचरेत्. तानि समाधिस्थानानि निरूपयति—

॥ मूलम् ॥—तं जहा—विवित्ताइं सयणासणाइं सेविज्जा से निग्गंथे, नो इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेवित्ता हवइ से निग्गंथे. व्याख्या—तद्यथा—तानि यथा संति तथा निरूपयामि, हे जंबू! स निग्रंथो नवेत्, स इति कः? यो विविक्तानि स्त्रीपशुपंडगादिनिर्विरहितानि शयनानि पट्टिकासंस्तारकादीनि, अर्थात् शयनादीनां स्थानानि सेवेत का-

येनानुभवेत्, अयमन्वयार्थः. यः स्त्रीपशुपंडकादिरहितस्थानानि सेवेत स निर्ग्रंथो भवेदि-त्यर्थः. अथ व्यतिरेकेणार्थमाह–यस्मिन् सति यद्भवेत् सोऽन्वयः, यस्मिन्नसति यन्न भवेत् स व्यतिरेकः. व्यतिरेकं दर्शयति—' नो इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेवित्ता हवइ, से निग्गंथे ' हे जंबू! स निग्रंथो नो भवेत्, स कः? यः स्त्रीपशुपंडकादिसंसक्तानां स्त्रीपशुपंडकादिसेवितानां शयनासनानां सेवितोपभोक्ता भवेत्. इति वचनं श्रुत्वा शिष्यः प्राह–

॥ मूलम् ॥—तं कहमिति चेत् आयरियाह—व्याख्या– हे स्वामिन्! तत्पूर्वोक्तं कथं? केनोत्पत्तिप्रकारेण? इति चेदेवं यदि मन्यसे इति शिष्येण पृष्टव्ये सत्याचार्य आह—

॥ मूलम् ॥—निग्गंथस्स खलु इत्थियपसुपंडगसंसत्ताइं सयणासणाइं सेवमाणस्स बंभयारिस्स भचेरे संका वा कंखा वा वितिकिछा वा समुप्पजिज्जा, भयं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताउ धम्माउ भंसेज्जा, तम्हा खलु नो इत्थिपसुपंडगसंसत्ताइं सयणासणाइं सेवित्ता हवइ से निग्गंथे ॥ व्याख्या—हे शिष्य! खलु निश्चयेन स्त्रीपशुपंडकादिभिः संसक्तानि शयनासनानि सेवमानस्य निग्रंथ-

नी, चित्रणी, हस्तिनी, शंखिनी, मुग्धा, मध्या, प्रौढादिरूपां कर्णाटलाटासिंहलदेशोद्भवानां नारीणां वर्णनरूपां कथांप्रति कथयिता न भवति स साधुर्भवतीत्यर्थः. स्त्रीणामग्रे कथां, अथवा स्त्रीणामेव वर्णनं करोति स साधुर्न स्यादिति भावः. इत्युक्ते शिष्यस्तत्कथमिति चेदेवं यदि मन्यसे, आचार्य आह—हे शिष्य! खलु निश्चयेन निग्रथस्य साधोः स्त्रीणां कथां कथमानस्य ब्रह्मचारिणोऽपि ब्रह्मचर्ये शंका, एनां सेवामि, न सेवामि वेत्यादिरूपा, अथवा आकांक्षा, अग्रेतनानां पदानां पूर्वपदे योऽर्थो ज्ञेयः. नवरं तम्हा इति तस्माच्छंकादिदोषप्रादुर्भावात्खलु निश्चयेन निग्रंथः स्त्रीणामेवाग्रे स्त्रीणामेव केवलां कथां न कथयेत्. ॥ २ ॥ इति द्वितीयं ब्रह्मचर्यसमाधिस्थानं. एषा द्वितीया वाटिका. ॥ २ ॥ अथ तृतीयामाह—

॥ मूलम् ॥—नो निग्गंथो इत्थीहिं सद्धिं संनिसिज्जा, गए विहरत्ता हवइ से निग्गंथे. तं कहमिति चेत् आयरिय आह—निग्गंथस्स खलु इत्थीहिं सद्धिं सन्निसिज्जागयस्स विहरमाणस्स बंभयारिस्स बंभचेरे संका वा० तम्हा खलु नो निग्गंथे इत्थीहिं सद्धिं सन्निसिज्जा, गए विहरेज्जा. ॥ ३ ॥ व्याख्या—स निग्रंथो भवेत्, यः स्त्रीभिः सार्धं निषद्या, नि-

पीढंत्यस्यामिति निषिद्या, पट्टिकापीठफलकचतुष्ककाद्यासनं, तां निषिद्यां गतः स्थितः सन् विहर्त्ता अवस्थाता न भवेत्. कोऽर्थः ? यः स्त्रीभिः सहैकस्मिन्नासने नोपविशेत् स निग्रंथो भवेत्. अत्रायं संप्रदायः—यत्रासने पुरा स्त्री उपविष्टा भवति, तत आसनात् स्त्रियामुत्थितायां सत्यां मुहूर्तादनंतरं तदासनं साधोरुपविशनयोग्यं भवति. 'तं कहमिति चेत् आयरिय आह' अनयोः पदयोरर्थः पूर्ववत्. 'निग्गंथस्स खलु इत्थीहिं०' निग्रंथस्य खलु स्त्रीभिः सार्धं निषिद्यां गतस्य प्राप्तस्य विहरमाणस्य तत्र स्थितस्य ब्रह्मचारिणो ब्रह्मचर्ये शंकादयो दोषा उत्पद्यंते. तस्मात्कारणात्खलु निश्चयेन निग्रंथः स्त्रीभिः सहैकत्रासने गतः प्राप्तः सन्नो विहरेन्नोपविशेत्. ॥ ३ ॥ इति तृतीयं ब्रह्मचर्यस्थानं, एषा तृतीया वाटिका. ॥ ३ ॥

॥ मूलम् ॥—नो निग्गंथे इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोइत्ता निज्झाइत्ता हवइ, से निग्गंथे. तं कहमिति चेत् आयरिय आह—निग्गंथस्स खलु इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोएमाणस्स निज्झायमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिकिछा वा समुप्पज्जिज्जा, भेयं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहका-

स्य ब्रह्मचर्यधारिणोऽपि साधोर्ब्रह्मचर्ये शंकोत्पद्यते. किमयमेतादृशो विरुद्धानां शयनासनानां सेवी ब्रह्मचारी भवेत् न वा? आत्मनस्तु स्त्र्यादिभिरत्यंततापहृतचित्ततया मिथ्यात्वोदयादेव स्त्रीसेवने मैथुने नवलक्षसूक्ष्मजीवानां वधो जिनैः प्रोक्तः, तत्सत्यं वा मिथ्या वेत्यादिरूपः संशय उत्पद्यते. पुनर्ब्रह्मचारिणः कांक्षा स्त्रीपशुपंडकादिभिर्मैथुनेछोत्पद्यते. पुनर्ब्रह्मचारिणः साधोर्ब्रह्मचर्ये विचिकित्सोत्पद्यते. मया ब्रह्मचर्यपालने एतावन्महत्कष्टं विधीयते, तस्य ब्रह्मचर्यकष्टस्य फलं भविष्यति न वा? तस्माद्दूरमेतेषां सेवनं, एतेषां सेवने सांप्रतं मम सुखं जायते, एतादृशी मतिः समुत्पद्यते. वाऽथवा भेदं चारित्रस्य विदारणं विनाशं लभेत, वाऽथवोन्मादं कामेन पारवश्यं प्राप्नुयात्. वाथवा तादृशस्त्र्यादिसहितानि स्थानानि सेवमानस्य साधोर्दीर्घकालिकं प्रचुरकालभावि स्त्र्यादिसेवनाभिलाषोत्कर्षेन आहारादावरुचिर्निद्राराहित्यादिदोषै रोगो दाघज्वरादिः, आतंकः शीघ्रघाती शूलादिः, रोगश्चातंकश्चानयोः समाहारो रोगातंकं शरीरे भवेत्. यतो हि कामाधिक्यात् कामिनां शरीरे दश कामभावा जायंते. यदुक्तं—प्रथमे जायते चिंता । द्वितीये दृष्टुमिछति ॥ तृतीये दीर्घनिःश्वासा—श्च-

तुर्थे ज्वरमादिशेत् ॥ १ ॥ पंचमे दह्यते गात्रं । षष्ठे भक्तं न रोचते ॥ सप्तमे च भवेत्कंप—मुन्मादश्चाष्टमे तथा ॥ २ ॥ नवमे प्राणसंदेहो । दशमे जीवितं त्यजेत् ॥ कामिनां मदनोद्रेगा—दश संजायते त्वमी ॥ ३ ॥ इति स्त्रीदर्शनाद्दश भावा उत्पद्यंते. अथ पुनः केवलिप्रज्ञसात्केवलिप्रणीताद्धर्मात् श्रुतचारित्ररूपाद्भ्रस्येद्भ्रष्टो भवेत्, तस्मादेतेषां दूषणानां प्रादुर्भावात् खलु निश्चयेन स्त्रीपशुपंडकसंसक्तानां शयनासनस्थानानां सेवितोपभोक्ता भिक्षुर्नो भवेत्, स निर्ग्रंथो नो भवेत्. इति प्रथमं ब्रह्मचर्यसमाधिस्थानं. एषा प्रथमा ब्रह्मचर्यतरोर्वाटिका.

॥ मूलम् ॥—नो निग्गंथे इत्थीणं कहं कहेत्ता हवइ से निग्गंथे तं कहमिति चेत् आयरिय आह. निग्गंथस्स खलु इत्थीणं कहं कहेमाणस्स बंभयारस्स बंभचेरे संका वा कंखा वा वितिकिछा वा समुप्पज्जिज्जा, भेयं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताउ धम्माउ भंसेज्जा. तम्हा खलु निग्गथे नो इत्थीणं कहं कहेज्जा ॥ २ ॥ व्याख्या—स निर्ग्रंथो भवति, स इति कः? यः स्त्रीणामर्थादेकाकिनीनां स्त्रीणामेव कथां वाक्यप्रबंधरूपां वार्तां, अथवा स्त्रीणां जातिकुलनेपथ्यविषयां, पद्मि-



२६

नी, चित्रणी, हस्तिनी, शंखिनी, मुग्धा, मध्या, प्रौढादिरूपां कर्णाटलाटासिंहलदेशोद्भवानां
नारीणां वर्णनरूपां कथांप्रति कथयिता न भवति स साधुर्भवतीत्यर्थः. स्त्रीणामग्रे कथां, अ-
थवा स्त्रीणामेव वर्णनं करोति स साधुर्न स्यादिति भावः. इत्युक्ते शिष्यस्तत्कथमिति चेदेवं य-
दि मन्यसे, आचार्य आह—हे शिष्य! खलु निश्चयेन निग्रंथस्य साधोः स्त्रीणां कथां कथ-
मानस्य ब्रह्मचारिणोऽपि ब्रह्मचर्ये शंका, एनां सेवामि, न सेवामि वेत्यादिरूपा, अथवा आ-
कांक्षा, अग्रेतनानां पदानां पूर्वपदे योऽर्थो ज्ञेयः. नवरं तम्हा इति तस्माच्छंकादिदोषप्रादु-
र्भावात्खलु निश्चयेन निग्रंथः स्त्रीणामेवाग्रे स्त्रीणामेव केवलां कथां न कथयेत्. ॥ २ ॥ इति
द्वितीयं ब्रह्मचर्यसमाधिस्थानं. एषा द्वितीया वाटिका. ॥ २ ॥ अथ तृतीयामाह—

॥ मूलम् ॥—नो निग्गंथो इत्थीहिं सद्धिं संनिसिज्जा, गए विहरत्ता हवइ से निग्गंथे.
तं कहमिति चेत आयरिय आह—निग्गंथस्स खलु इत्थीहिं सद्धिं सन्निसिज्जागयस्स वि-
हरमाणस्स बंभयारिस्स बंभचेरे संका वा० तम्हा खलु नो निग्गंथे इत्थीहिं सद्धिं सन्नि-
सिज्जा, गए विहरेज्जा. ॥ ३ ॥ व्याख्या—स निग्रंथो भवेत्, यः स्त्रीभिः सार्धं निषद्या, नि-

पीठंत्यस्यामिति निषिद्या, पट्टिकापीठफलकचतुष्ककाद्यासनं, तां निषिद्यां गतः स्थितः सन् विहर्त्ता अवस्थाता न भवेत्. कोऽर्थः? यः स्त्रीभिः सहैकस्मिन्नासने नोपविशेत् स निग्रंथो भवेत्. अत्रायं संप्रदायः—यत्रासने पुरा स्त्री उपविष्टा भवति, तत आसनात् स्त्रियामुत्थितायां सत्यां मुहूर्तादनंतरं तदासनं साधोरुपविशनयोग्यं भवति. 'तं कहमिति चेत् आयरिय आह' अनयोः पदयोरर्थः पूर्ववत्. 'निग्गंथस्स खलु इत्थीहिं०' निग्रंथस्य खलु स्त्रीभिः सार्धं निषिद्यां गतस्य प्राप्तस्य विहरमाणस्य तत्र स्थितस्य ब्रह्मचारिणो ब्रह्मचर्ये शंकादयो दोषा उत्पद्यंते. तस्मात्कारणात्खलु निश्चयेन निग्रंथः स्त्रीभिः सहैकत्रासने गतः प्राप्तः सन्नो विहरेन्नोपविशेत्. ॥ ३ ॥ इति तृतीयं ब्रह्मचर्यस्थानं, एषा तृतीया वाटिका. ॥ ३ ॥

॥ मूलम् ॥—नो निग्गंथे इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोइत्ता निज्झाइत्ता हवइ, से निग्गंथे. तं कहमिति चेत् आयरिय आह—निग्गंथस्स खलु इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोएमाणस्स निज्झायमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिकिछा वा समुप्पज्जिज्जा, भेयं वा लभेज्जा, उम्मायं वा पाउणिज्जा, दीहका-

क्षीयं वा रोगायंकं हविज्जा, केवलिपन्नत्ताउ धम्माउ जंसिज्जा, तम्हा खलु नो निग्गंथे इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोइज्जा निज्झाइज्जा. ॥ ४ ॥ व्याख्या—स निग्रंथो जवति, स इति कः? यः स्त्रीणां मनोहराणि, मनोहरंति दृष्टमात्राणि चित्तमाक्षिपंतीति मनोहराणि. पुनर्मनोरमाणि मनो रमंत्यनुचिंत्यमानान्याह्लादयंतीति मनोरमाणि, ईदृशानींद्रियाणि नयनवदनजघनवक्षःस्थलनाभिकक्षादीनिप्रत्यालोकयित्वा समंतात् दृष्ट्वा निध्याता, नितरां ध्याता निध्याता, दर्शनादनंतरमतिशयेन चिंतयिता यो न भवेत् स निग्रंथो जवति. इत्युक्ते शिष्यः पृछति, तत्कथमिति चेदाचार्य आह—हे शिष्य! निग्रंथस्य खलु निश्चयेन स्त्रीणां पूर्वोक्तानींद्रियाण्यासमंताद्विलोकयतः, अथवा ईषदपि लोकयतः पश्यतो नितरां ध्यायमानस्यात्यंतं चिंतयतः, स्त्रीणामिंद्रियेषु दृष्टिं लगयित्वा स्थितस्य ब्रह्मचारिणो ब्रह्मचर्ये शंकादयो दोषा उत्पद्यंते. तस्मात्खलु निश्चयेन निग्रंथः स्त्रीणां मनोहराणि मनोरमाणींद्रियाणि नालोकयिता न समंतात् दृष्टा, अथवा नेषदपि दृष्टा, न च तानींद्रियाणि निध्याता नितरां चिंतयिता जवेत्. स्त्रींद्रियाणां रागेण दृष्टा नितरां ध्याता साधुर्न जवेदित्यर्थः. ॥ ४ ॥ इदं

चतुर्थं ब्रह्मचर्यसमाधिस्थानं. ४. एषा चतुर्थी वाटिका. ४. अथ पंचमीं प्राह—

॥ मूलम् ॥— नो निग्गंथे इत्थीणं कुड्यंतरंसि वा, दूसंतरंसि वा, भित्तिंतरंसि वा, कूइयसद्दं वा रूइयसद्दं वा, गीयसद्दं वा, हसियसद्दं वा, थणियसद्दं वा, कंदियसद्दं वा, विलवियसद्दं वा, सुणित्ता हवइ, से निग्गंथे. तं कहमिति चेत् आयरिय आह- निग्गंथस्स खलु इत्थीणं कुड्डंतरंसि वा, दूसंतरंसि वा, भित्तिंतरंसि वा, कूइयसद्दं वा, रुइयसद्दं वा, गीयसद्दं वा, हसियसद्दं वा, थणियसद्दं वा, कंदियसद्दं वा, सुणमाणस्स बंभयारिस्स बंभचेरे संका वा, कंखा वा, वितिगिच्छा वा समुप्पज्जिज्जा. भेयं वा लभिज्जा, उम्मायं वा पाउणिज्जा. दीहकालियं वा रोगायंकं हविज्जा, केवलिपन्नत्ताओ धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे इत्थीणं कुड्डंतरंसि वा. दूसंतरंसि वा. भित्तिंतरंसि वा, कूइयसद्दं वा. रूइयसद्दं वा. गीयसद्दं वा, हसियसद्दं वा, थणियसद्दं वा, विलवियसद्दं वा, सुणमाणे विहरेज्जा ॥५॥

व्याख्या—स निर्ग्रंथो भवेत्, स इति कः? यः कुड्यांतरे. कुड्यं पाषाणरचितं, तेनांतरं व्यवधानं कुड्यांतरं. तस्मिन् कुड्यांतरे स्थित्वेत्यध्याहारः, दूष्यांतरे वा वस्त्ररचितभित्त्यंतरे प-

रिछदाया अंतरे स्थित्वा, भित्त्यंतरे मृत्तिकापक्वेष्टिकाणां भित्तिव्यवधाने स्थित्वा वा, इत्थीणमिति स्त्रीणां कूइयसद्दं संभोगसमये भोक्तुर्मनःप्रसत्तये कोकिलादिविहगशब्दानुरूपं कूजितशब्दं, पुनः स्त्रीणां रुदितशब्दं, भोगसमये प्रेमकलहजनितं रोदनशब्दं वा, अथवा पुनर्गीतशब्दं वा, पंचमरागादिहुंकाररूपं गीतशब्दं वा, अथवा पुनः स्त्रीणां हसितशब्दं कहकहादिकहास्योत्पादिकाट्टाट्टदंतनिःकासनोद्भवशब्दं, स्तनितशब्दं वा. भोगसमये दूरतरघनगर्जनानुकारिशब्दं वा, क्रंदितशब्दं वा, प्रोषितभर्तृकाणां विरहिणीनां भर्तृवियोगदुःखाज्जातं, वाथवा विलपितशब्दं भर्तृगुणान् स्मारंस्मारं प्रलापरूपं शब्दंश्रति यः श्रोता न भवति स निर्ग्रंथो भवति. इति श्रुत्वा शिष्यः पृछति. तत्कथं केन कारणेन? यदेवमुच्यते, इति श्रुत्वा आचार्य आह, हे शिष्य! खलु निश्चयेन कुड्यांतरादिषु पूर्वोक्तस्थाने स्थित्वा स्त्रीणां पूर्वोक्तान् कूजितादिशब्दान् शृण्वतो निर्ग्रंथस्य ब्रह्मचारिणोऽपि ब्रह्मचर्ये शंका वा कांक्षा वेत्यादयो दोषा उत्पद्यंते, तस्मात्कारणात् खलु निश्चयेन निर्ग्रंथः कुड्यांतरेषु स्थित्वा स्त्रीणां कूजितादिशब्दं नो शृण्वन् विचरेत्. स्त्रीणां हि कामोद्दीपकशब्दश्रोता साधुर्न भवेदिति

न्नावः. इति पंचमं ब्रह्मचर्यसमाधिस्थानं: एषा पंचमी वाटिका. ॥ ५ ॥ अथ षष्टीं प्राह—

॥ मूलम् ॥—नो निग्गंथे इत्थीणं पुवरयं पुवकीलिअं अणुसरित्ता हवइ, से निग्गंथे. तं कहमिति चेत् आयरियाह—निग्गंथस्स खलु इत्थीणं पुवरयं पुवकीलियं अणुसरेमाणस्स बंन्नयारिस्स जाव धम्माउ न्नंसिज्जा. तम्हा खलु नो निग्गंथे इत्थीणं पुवरयं पुवकीलियं सरिज्जा. ॥ ६ ॥ व्याख्या—स निर्ग्रंथो न्नवेत्, यः पूर्वं गृहस्थत्वे स्त्र्यादिन्निः सह रतं कामासनैर्मैथुनसेवनं, पुनस्तान्निरेव समं पूर्वक्रीमितं गृहस्थावस्थायां पुरो द्यूतादिक्रीमनं कृतं, तस्यानुस्मर्ता मुहुश्चिंतयिता नो न्नवेत्, स साधुर्न्नवेदित्युक्ते शिष्यः प्राह, तत्कथमिति चेत्तदाह—हे शिष्य! खलु निश्चयेन स्त्रीन्निः सह पूर्वकृतं रतं मैथुनं, पूर्वकृतं द्यूतादिक्रीमनमनुस्मरतो वारंवारं चिंतयतो निर्ग्रंथस्य साधोर्ब्रह्मचारिणो ब्रह्मचर्ये शंकादयो दोषा उत्पद्यंते. तस्मात् खलु निश्चयेन निग्रंथः स्त्रीन्निः सह पूर्वरतं पूर्वक्रीमितं प्रत्यनुस्मर्ता न न्नवेत्, स साधुर्न्नवेत्. ॥ ६ ॥ इति षष्टं ब्रह्मचर्यसमाधिस्थानं. ॥ इति षष्टी वाटिका. ६ । अथ सप्तमीं प्राह—

॥ मूलम् ॥—नो निग्गंथे पणीयं आहारं आहारित्ता हवइ, से निग्गंथे, तं कहमिति चे आयरियाह—निग्गंथस्स खलु पणीयपाणन्नोयणं आहारेमाणस्स बंन्नयारिस्स बंन्नचेरे संका वा० तम्हा खलु नो निग्गंथे पणीयं आहारेज्जा ॥ ७ ॥ व्याख्या—स निग्रंथो ज्ञवेत्, यः प्रणीतं गलद्घृतादिबिंदुकं, उपलक्षणत्वादन्यदपि सरसमत्यंतधातुवृद्धिकरं कामोद्दीपकमाहारंप्रत्याहर्त्ता न ज्ञवेत्. यः सरसाहारकृन्न ज्ञवेत् स निग्रंथः. तदा शिष्यः पृछति. तत्कथमिति चेत्तदा आचार्य आह, हे शिष्य! निग्रंथस्य साधोः खलु निश्चयेन प्रणीनं सरसमाहारं ज्ञुंजानस्य ब्रह्मचारिणो ब्रह्मचर्ये शंकादयो दोषा उत्पद्यंते. तस्मादित्यादिदोषप्रादुर्ज्ञावान्निग्रंथः प्रणीताहारकारी न ज्ञवेत्. ॥ ७ ॥ इति सप्तमं ब्रह्मचर्यसमाधिस्थानं. इति सप्तमी वाटिका. ७ अथाष्टमीं प्राह—

॥ मूलम् ॥—नो निग्गंथे अइमायाए पाणन्नोअणं, आहारेत्ता हवइ. से निग्गंथे, तं कहमिति चे आयरियाह—निग्गंथस्स खलु अइमायाए पाणन्नोयणं आहारेमाणस्स बंन्नयारिस्स बंभचेरे संका वा० तम्हा खलु नो निग्गंथे अइमायाए पाणन्नोयणं ज्ञुंजिज्जा. ॥८॥

व्याख्या—स निर्ग्रंथो भवेत्, योऽतिमात्राया द्वात्रिंशत्कवलाः पुरुषाणामाहारस्य मात्रा, तनोऽधिकाहारं पानकं द्राक्षाशर्करादेर्जलमाहर्त्ता न भवेत्. यतो ह्यागमे पुरुषस्य द्वात्रिंशत्कवलैराहारमात्रा, स्त्रियस्त्वष्टाविंशतिकवलैराहारमात्रा, नपुंसकस्य चतुर्विंशतिकवलैराहारमात्रोक्तास्ति. ब्रह्मचारिणो ह्यधिकाहारपानीयं न करणीयमिति श्रुत्वा शिष्यः पृच्छति. तत्कथमिति चेत्तदाचार्यः प्राह—निर्ग्रंथस्य खल्वतिमात्रमाहारपानीयमाहर्तुर्मात्राधिकमाहारकर्तुर्ब्रह्मचारिणो ब्रह्मचर्ये शंकादयो दोषा उत्पद्यंते. तस्माच्छंकादिदोषाणां प्रादुर्भावात् खलु निश्चयेन निर्ग्रंथोऽतिमात्रया पानीयं भोजनं वा भुञ्जेत्. ॥ ८ ॥ इत्यष्टमं ब्रह्मचर्यसमाधिस्थानं. इत्यष्टमी वाटिका. ॥ ८ ॥ अथ नवम्युच्यते—

॥ मूलम् ॥—नो निग्गंथे विभूसाणुवाई हवइ, से निग्गंथे, तं कहमिति चे आयरियाह—निग्गंथे खलु विभूसावत्तिए विभूसियसरीरे इत्थीजणस्स अहिलासणिज्जे हवइ, तओ णं तस्स इत्थीजणेणं अहिलसिज्जमाणस्स बंभयारिस्स बंभचेरे संका वा० तम्हा खलु नो निग्गंथे विभूसियवत्तिए भवेज्जा. ॥ ९ ॥ व्याख्या—स निर्ग्रंथो भवेत्, यो विभूषानुपा-

ती नो ज्ञवेत्. विज्ञूषां शरीरशोज्ञामनुवर्त्तयितुमनुपतितुं विधातुं शीलमस्येति विज्ञूषानुवर्ती, विज्ञूषानुपाती वा, शरीरशोज्ञाकरणोपकरणैः स्नानदंतधावनादिज्ञिः संस्कारकर्ता न भवेत्, स साधुर्ब्रह्मचारी. इति श्रुत्वा तदा शिष्यः प्राह—तत्कथमिति चेत्तदाचार्य आह—खलु निश्चयेन निग्रंथः साधुर्विज्ञूषानुवर्तिकः शरीरशोज्ञाकारी विज्ञूषितशरीरः स्नानाद्यलंकृततनुः पुमान् स्त्रीजनस्याज्ञिलषणीयः कामाय वांछनीयो ज्ञवेत्. ततो णं ततः पश्चात् स्त्रीजनेनाज्ञिलषणीयस्य ब्रह्मचारिणो ब्रह्मचर्ये शंकादयो दोषा उत्पद्यंते. तस्माछंकादिदोषाणां प्राडुर्ज्ञावात्खलु निश्चयेन निग्रंथो विज्ञूषानुवर्तिको न ज्ञवेत्. ॥ ए ॥ इति नवमं ब्रह्मचर्यसमाधिस्थानं. इति नवमी वाटिका. अथ दशमी कथ्यते—

॥ मूलम् ॥—नो निग्गंथे सद्दरूवरसगंधफासाणुवाई ज्ञवेज्जा, हवइ से निग्गंथे, तं कहमिति चे आयरियाह—निग्गंथस्स खलु सद्दरूवरसगंधफासाणुवाइयस्स बंज्ञयारिस्स बंज्ञचेरे संका० तम्हा खलु नो निग्गंथे सद्दरूवरसगंधफासाणुवाई ज्ञवेज्जा. ॥ १० ॥ व्याख्या—स निग्रंथो ज्ञवेत्, स इति कः? यः शब्दरूपसगंधस्पर्शानुपाती न ज्ञवेत्. शब्दश्च रूपं च

रसश्च गंधश्च स्पर्शश्च शब्दरूपरसगंधस्पर्शाः, तान् अनुपतत्यनुयातीति शब्दरूपरसगंधस्पर्शानुपाती, शब्दो मन्मनादिः, रूपं स्त्रीसंबंधिलावण्यं, रसो मधुरादिः, गंधश्चंदनागुरुकस्तूरिकादिः. स्पर्शः कोमलस्त्वक्सौख्यदः, एषां जोक्ता साधुर्न स्यात्, इत्युक्ते शिष्यः पृच्छति, तत्कथमिति चेदाचार्य आह–निग्रंथस्य खलु निश्चयेन शब्दरूपरसगंधस्पर्शानुपातिब्रह्मचारिणो ब्रह्मचर्ये शंकादयो दोषा उत्पद्यंते, तस्माछंकादिदोषाणां प्राडुर्जावात्खलु निश्चयेन निग्रंथः शब्दरूपरसगंधस्पर्शानुपाती विषयासेवी न जवेत्. ॥ १० ॥ एतद्दशमं ब्रह्मचर्यसमाधिस्थानं. १०. अथात्र सर्वेषां दशानां समाधिस्थानानां संग्रहश्लोकान् पद्यरूपानाह–तं जहा–

॥ मूलम् ॥—जं विवित्तमणाइन्नं । रहियं थीजणेण य ॥ बंजचेरस्स रक्खठा । आलयं तु निसेवए ॥ १ ॥ व्याख्या—साधुर्ब्रह्मचारी तमालयं तमुपाश्रयं निषेवते. तु पदपूरणे, तं कं ? य आलयो विविक्त एकांतभूतः, तत्रत्यवास्तव्यस्त्रीजनेन, चशब्दान्नपुंसकैरपि रहितः, पंडकशब्देन नपुंसक उच्यते. कालाकालविज्ञागागतसाध्वीजनं श्राद्धीजनं चाश्रित्य विविक्तत्वं ज्ञेयं. यदुक्तं—अट्ठमीपक्खिए मोत्तुं । वायणाकालमेव य ॥ सेसकालंमि इंतीउ । नेया

ज अकालचारीउ ॥१॥ तस्माद्य आलयः स्त्र्यादिभिरसेवितस्तमालयं ब्रह्मचारी साधुश्च नि-
षेवत इत्यर्थः. पुनर्यश्चालयोऽनाकीर्णो गृहस्थानां गृहाद् दूरवर्ती. किमर्थं? ब्रह्मचर्यस्य रक्षार्थं,
यो हि स्वब्रह्मचर्यं रक्षितुमिच्छति स एतादृशमुपाश्रयं निषेवते. अत्र लिंगव्यत्ययः प्राकृतत्वात्.

॥ मूलम् ॥—मणपल्हायजणणिं । कामरागविवड्ढणिं । बंभचेररउ भिक्खू । थीकहं तु
विवज्जए ॥ २ ॥ व्याख्या—अथ द्वितीयं—ब्रह्मचर्यरतो भिक्षुः स्त्रीकथां विवर्जयेत्, स्त्रीणां
कथा स्त्रीकथा, तां त्यजेत्. कीदृशीं कथां? मनःप्रल्हादजननीमंतःकरणस्य हर्षोत्पादिकां, पु-
नः कीदृशीं? कामरागविवर्धनीं विषयरागस्यातिशयेन वृद्धिकर्त्री. ॥ २ ॥

॥ मूलम् ॥—समं च संथवं थीहिं । संकहं च अभिक्खणं ॥ बंभचेररउ भिक्खू । नि-
च्चसो परिवज्जए ॥ ३ ॥ व्याख्या—ब्रह्मचर्यरतो भिक्षुर्नित्यशो निरंतरं सर्वदा स्त्रीभिः समं
संस्तवमर्थादेकासने ि त्वा परिचयं, च पुनरभीक्ष्णं वारंवारं संकथां स्त्रीजातिभिः सह
स्थित्वा वह्वीं वार्तां परिवर्जयेत्, सर्वथा त्यजेत्. ॥ ३ ॥

॥ मूलम् ॥—अंगपच्चंगसंठाणं । चारुल्लवियपेहियं ॥ बंभचेररउ थीणं । चक्खूगिज्झं

विवज्जए ॥ ४ ॥ व्याख्या—ब्रह्मचर्यरतो साधुः स्त्रीणामंगप्रत्यंगसंस्थानं चक्षुर्ग्राह्यं विवर्जयेत्. अंगं मुखं, प्रत्यंगं स्तनजघननाभिकक्षादिकं. संस्थानकं कटीविषये हस्तं दत्वोर्ध्वस्थायित्वं. पुनः स्त्रीणां चारूल्लपितप्रेक्षितं चक्षुर्ग्राह्यं विशेषेण वर्जयेत्. चारु मनोहरं यदुल्लपितं मन्मनादिजल्पितं, प्रकृष्टमीक्षितं वक्रावलोकनमेतत्सर्वं परित्यजेत्. कोऽर्थः ? ब्रह्मचारी हि स्त्रीणामंगप्रत्यंगं संस्थानं चारुभणितं कटाक्षैरवलोकनमेतत्सर्वं दृष्टिविषयमागतमपि, ततः स्वकीयं चक्षुरिंद्रियं बलान्निवारयेदित्यर्थः. ॥ ४ ॥

॥ मूलम् ॥—कूइयं रुइयं गीयं । हसियं थणियकंदियं ॥ बंभचेररओ थीणं । सोयगिज्झं विवज्जए ॥ ५ ॥ व्याख्या—ब्रह्मचर्यरतः स्त्रीणां कूजितं, रुदितं, गीतं. हसितं, स्तनितं. क्रंदितं श्रोत्रग्राह्यं कर्णाभ्यां गृहीतुं योग्यं विशेषेण वर्जयेत्, न शृणुयादित्यर्थः. ॥ ५ ॥

॥ मूलम् ॥—हासं कीड्डयं दप्पं । सहसा वित्तासियाणि य ॥ ( सहभुत्तासियाणि य— इति वा पाठः ) बंभचेररओ थीणं । नाणुचिंते कयाइवि ॥ ६ ॥ व्याख्या—ब्रह्मचर्यरतो ब्रह्मचारी स्त्रीणां हास्यं, पुनः क्रीडां, तथा रतं मैथुनप्रीतिं, दर्पं स्त्रीणां मानमर्दनाडुत्पन्नं ग-

र्वं, पुनः सहसा अपत्रासितानि सहसात्कारेणागत्य पश्चात्पराङ्मुखस्थितानां स्त्रीणां नेत्रे हस्ताभ्यां निरुंध्य भयोत्पादनहास्योत्पादनानि सहसावित्रासितान्युच्यंते. एतानि पूर्वानुभूतानि कदापि नानुचिंतयेन्न स्मरेत्. अथ च सहभुक्तासनानि नानुचिंतयेत्. सह इति स्त्रिया सार्धं भुक्तं, एकासने उपविशनपूर्वं भोजनानि कृतान्यपि न स्मरेत्. सहासनभुक्तानीति वक्तव्ये सहभुक्तासनानीति प्राकृतत्वात्. ॥ ६ ॥

॥ मूलम् ॥—पणियं भत्तपाणं तु । खिप्पं मयविवड्ढणं ॥ बंभचेररओ भिक्खू । निच्चसो परिवज्जए ॥ ७ ॥ व्याख्या-- ब्रह्मचर्यरतो भिक्षुः प्रणीतं क्षरद्घृतादिरसं भक्तमाहारं, तथा पानं द्राक्षाखर्जूरशर्करादिमिश्रितं पानीयं नित्यशः परिवर्जयेत्, सर्वदा परित्यजेत्, सदा सेवनाद्बाधं स्यात्. तथा ब्रह्मरतो भिक्षुर्यदाहारं पानीयं च क्षिप्रं शीघ्रं मदविवर्धनं कामोद्दीपकं भवति, तदपि नित्यं परिवर्जयेत्. ॥ ७ ॥

॥ मूलम् ॥—धम्मलद्धं मियं काले । जत्तत्थं पणिहाणवं ॥ नाइमत्तं तु भुंजिज्जा । बंभचेररओ सया ॥ ८ ॥ व्याख्या—ब्रह्मचर्यरतः साधुर्ब्रह्मचारी सदाऽतिमात्रं मात्रातिरिक्तम-

तिमात्रं मात्राधिकमाहारं नैव भुंजीत. परं कीदृशमाहारं? धर्मेण लब्धं, न तु विप्रतार्य गृहीतं. तदाहारं कदाचित्सरसमपि लब्धं तदा सदैव न भुंजीत. कीदृशो ब्रह्मचारी साधुः? प्रणिधानवान्, प्रणिधानं चित्तस्य स्थैर्यं, तद्विद्यते यस्य स प्रणिधानवान्, चित्तस्वास्थ्ययुक्त इत्यर्थः. ॥ ए ॥

॥ मूलम् ॥—विभूसं परिवज्जिज्जा । सरीरपरिमंमणं ॥ बंभचेररर्ज भिक्खू । सिंगारत्थं न धारए ॥ १० ॥ व्याख्या—ब्रह्मचर्यरतो भिक्षुः शरीरस्य परि समंतान्मंमनं नखकेशादीनां संस्कारणं शृंगारार्थं परिवर्जयेत्. पुनर्ब्रह्मचर्यधारी विभूषां सम्यग् वस्त्रादिविहितशरीरशोभां परिवर्जयेत्. ॥ १० ॥

॥ मूलम् ॥—सद्दे रूवे य गंधे य । रसे फासे तहेव य ॥ पंचविहे कामगुणे । निच्चसो परिवज्जए ॥ ११ ॥ व्याख्या—ब्रह्मचारी नित्यशः सर्वदा शब्दं कर्णसुखदं, रूपं नेत्रप्रीतिकरं, पुनर्गंधं नासासुखदं, तथा रसं मधुरादिकं, तथैव स्पर्शं त्वक्प्रीतिकरं, एवं पंचविधकामगुणान् परिवर्जयेत् ॥ ११ ॥ अथ यत्पूर्वमुक्तं शंकाकांक्षादिदूषणं स्यात्, तत्सर्वं पृथक्

दृष्टांतेन दृढयति—

॥ मूलम् ॥—आलओ थीजणाइन्नो । थीकहा य मणोरमा ॥ संथवो चेव नारीणां । तासिं इंदियदंसणं ॥ १२ ॥ कूइयं रुइयं गीयं । हसियं भुत्तासिणाणि य ॥ पणीयं भत्तपाणं च । अइमायं पाणभोयणं ॥ १३ ॥ गत्तभूसणमिट्ठं च । कामभोगा य दुज्जया ॥ नरस्सत्तगवेसस्स । विसं तालउडं जहा ॥ १४ ॥ व्याख्या—तिसृभिर्गाथाभिः पूर्वाण्येव ब्रह्मचर्यसमाधिभंगकारणान्याह—आत्मगवेषकस्य नरस्य स्त्रीजनस्य चैतत्सर्वं ब्रह्मचर्यघातकरं त्याज्यमित्यर्थः. आत्मानं ब्रह्मचर्यजीवितं गवेषयतीत्यात्मगवेषकस्तस्य वल्लभब्रह्मचर्यस्य, किमिव? तालपुटं विषमिव, यथा शब्द इवार्थे, यथा तालपुटं विषं तालुकस्पर्शनमात्रादेव त्वरितं जीवितं हंति. तथैतदपि त्वरितं ब्रह्मचर्यजीवितमपहरतीत्यर्थः, तत् किं किमित्याह—स्त्रीजनाकीर्ण आलयो गृहमुपाश्रयः १, पुनर्मनोरमा मनोहरा स्त्रीकथा २, च पुनर्नारीणां संस्तवः, स्त्रीभिः सहैकासने उपविशनं परिचयकरणं ३, पुनस्तासां स्त्रीणां रागेणेंद्रियाणां नयनवदनस्तनादीनां दर्शनं ४. पुनः स्त्रीणां कूजितं, तथा रुदितं, पुनर्गीतं, तथा हसितं, पुनः स्त्रीभिः

मत्त भुक्तान्ननानि, पुनस्तथा प्रणीतरसभक्तपानसेवनं. पुनरतिमात्रपानभोजनं. पुनर्गात्रभूषणार्थं शोभाकरणं, पुनर्दुर्जयाः कामभोगाः, अधीरपुरुषैस्त्यक्तुमशक्याः. एतत्सर्व ब्रह्मचर्यधारिणा परिहरणीयं. ॥ ११ ॥ १२ ॥ १३ ॥

॥ मूलम् ॥—दुज्जये कामभोगे य । निच्चसो परिवज्जए ॥ संकाठाणाणि सव्वाणि । वज्जिज्जा पणिहाणवं ॥ १४ ॥ व्याख्या—प्रणिधानवानेकाग्रचित्तः सर्वाणि दशापि शंकास्थानानि यानि पूर्वोक्तानि तानि वर्जयेत्. पुनर्दुर्जयान् भोगान् परिवर्जयेत्. पुनः कामभोगग्रहणमत्यन्तनिवारणोपदेशार्थं. ॥ १४ ॥

॥ मूलम् ॥—धम्मारामे चरे भिक्खू । धिइमं धम्मसारही ॥ धम्मारामे रए दंते । बंभचेरसमाहिए ॥ १५ ॥ व्याख्या—ब्रह्मचर्यसमाधिमान् भिक्षुः साधुर्धर्मारामे चरेत्. धर्म आराम इव दुःखसंतापतप्तानां सौख्यहेतुत्वात् धर्मारामस्तस्मिन् धर्मारामे तिष्ठेत्, शीलं धर्मः स एवारामस्तत्र विचरेदित्यर्थः. कीदृशो भिक्षुः ? धृतिमान् धैर्ययुक्तः. पुनः कीदृशः ? धर्मसारथिर्धर्ममार्गप्रवर्तयिता. पुनः कीदृशः ? धर्मारामरतः, धर्मे आ समंताद्रमंते इति ध-

र्मारामाः साधवस्तेषु रतः, साधुभिः सह युक्तः, न त्वेकाकी तिष्ठति. पुनः कीदृशः? दांत इंद्रियाणां जेता कषायजेता च. ॥ १५ ॥

॥ मूलम् ॥—देवदाणवगंधव्वा । जक्खरक्खसकिन्नरा ॥ बंभयारिं नमंसंति । दुक्करं जे करिंति तं ॥ १६ ॥ व्याख्या—अथ ब्रह्मचर्यधरणात्फलमाह—देवा विमानवासिनो ज्योतिष्काश्च. दानवा भवनपतयो, गंधर्वा देवगायनाः, यक्षा वृक्षवासिनः सुराः, राक्षसा मांसास्वादतत्पराः, किन्नरा व्यंतरजातयः, एते सर्वेऽपि तं ब्रह्मचारिणं नमस्कुर्वंति. तं कं? यो ब्रह्मचारी पुरुषः स्त्रीजनो वा दुष्करं कर्तुमशक्यं धर्मं करोतीति शीलधर्मं पालयति. ॥ १६ ॥

॥ मूलम् ॥—एस धम्मे धुवे णिच्चे । सासए जिणदेसिए ॥ सिद्धा सिज्झंति चाणेणं । सिज्झिस्संति तहाऽवरेत्तिबेमि ॥ १७ ॥ व्याख्या—एष धर्मोऽस्मिन्नध्ययने उक्तो ब्रह्मचर्यलक्षणो ध्रुवोऽस्ति, परतीर्थिभिरनिषेध्योऽस्ति. तस्मात्प्रमाणप्रतिष्ठितः. पुनर्नित्यस्त्रिकालेऽप्यविनश्वरः, अत एव शाश्वतस्त्रिकाले फलदायकत्वात्. पुनर्जिनैस्तीर्थकरैर्देशितः प्रकाशितः, इति विशेषणैरस्य शीलधर्मस्य प्रामाण्यं प्रकाशितं. अनेन शीलधर्मेण बहवो जीवाः सिद्धा अती-

तकाले सिद्धिं प्राप्ताः. च पुनरनेन धर्मेण कृत्वेदानीं सिद्ध्यंति. तथा तेन प्रकारेण शीलधर्मेण सेत्स्यंति, अपरेऽनागताद्धायां सिद्धिं प्राप्स्यंति. अत्राध्ययने मुहुर्मुहुर्ब्रह्मचर्यसमाधिस्थानानि प्रकाशितानि, मुहुर्मुहुर्दूषणान्युक्तानि, तदत्र शीलेऽत्यंतपालनादरप्रकाशनाय, न तु पुनरुक्तिदोषो ज्ञेयः. इत्यहं ब्रवीमीति सुधर्मास्वामी जंबूस्वामिनं प्राह. ॥ १७ ॥ इति ब्रह्मचर्यसमाधिस्थानानामध्ययनं षोडशं संपूर्णं. ॥ १६ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां ब्रह्मचर्यसमाधिस्थानं षोडशं संपूर्णं. ॥ श्रीरस्तु ॥

---

## ॥ अथ सप्तदशमध्ययनं प्रारभ्यते ॥

षोडशेऽध्ययने ब्रह्मचर्यगुप्तयः प्रकाशिताः, ता गुप्तयस्तु पापस्थानवर्जनादेव भवंति, तस्मात्पापस्थानसेवनात्पापश्रमणो भवति, ततः पापश्रमणज्ञानार्थं सप्तदशमध्ययनं प्रकाश्यते,

इति षोडशसप्तदशयोः संबंधः. ॥

॥ मूलम् ॥—जे केइ पव्वइए नियंठे । धम्मं सुणित्ता विणओववन्ने ॥ सुदुल्लहं लहिउं
बोहिलाभं । विहरेज्ज पच्छा य जहासुहं तु ॥ १ ॥ व्याख्या—यः कश्चित्प्रव्रजितो गृहीतदी-
क्षो निर्ग्रंथः साधुः पूर्वं धर्मं श्रुतचारित्ररूपधर्मं श्रुत्वा, विनयं ज्ञानदर्शनसेवनरूपमुपपन्नः
प्राप्तः सन्, पुनर्यः साधुः सुतरामतिशयेन दुर्लभं सुदुर्लभं बोधिलाभं श्रीतीर्थंकरस्य धर्म
सम्यक्त्वं लब्ध्वा, पश्चाद्यथासुखं यथेच्छं निद्राविकथाप्रमादवत्त्वेन विचरेत्, सिंहत्वेन धर्मम-
गीकृत्य पश्चाच्छृगालवृत्त्यैव विचरेत् स च प्रमादी. ॥ १ ॥ गुरुणा हे शिष्य! त्वमधीष्वेत्युक्तः
सन् किं वक्ति? तदाह—

॥ मूलम् ॥—सिज्जा दढा पाउरणं मि अत्थि । उप्पज्जइ भुत्तु तहेव पाउं ॥ जाणामि
जं वट्टइ आउसुत्ति । किं नाम काहामि सुएण भंते ॥ २ ॥ व्याख्या—हे गुरो! शय्योपा-
श्रयो वसतिर्दृढा, वर्षाशीतातपपीडानिवृत्तिकरास्ति, प्रावरणं वस्त्रं शीताद्युपद्रवहरं शरीरा-
च्छादकं मे ममास्ति वर्तते. हे गुरो! पुनर्भोक्तं भोजनं, तथैव पातुं पानं योग्यमुपपद्यते मि-

लति. हे आयुष्मन्! हे जगवन्! यद्वर्तमानं जीवादिवस्तु वर्तते तदप्यहं जानामि, इति हेतोर्हे जगवन्! श्रुतेन सिद्धांताध्ययनेन किं करिष्यामि? अत्र हे जगवन्नित्यामंत्रणं कोपे वर्तते. कोऽर्थः? ये जगवंतोऽधीयंते, तेषामपि नातींद्रियज्ञानं, तत्किं गलतालुशोषेणेत्यध्यवसितोऽयं जवति. स पापश्रमण उच्यते, इतीहापि संबध्यते सिंहावलोकनन्यायेन. ॥ २ ॥

॥ मूलम् ॥—जे केइ पवइए । निद्दासीले पगामसो ॥ भुच्चा पिच्चा सुवइ । पावसमणि त्ति वुच्चइ ॥ ३ ॥ व्याख्या—स पापश्रमण इत्युच्यते, पापश्चासौ श्रमणश्च पापश्रमणः पापिष्टसाधुरित्यर्थः. स इति कः? यः कश्चित्प्रव्रजितो गृहीतदीक्षः सन् पश्चान्निकामशोऽत्यंतं जुक्त्वा दधिकरंबादिकं जुक्त्वा, पीत्वा दुग्धतक्रादिकमाचम्य निद्राशीलो जूत्वा सुखं प्रतिक्रमणादिक्रियानुष्ठानमकृत्वैव स्वपिति, स सम्यक् साधुर्न जवेदित्यर्थः ॥ ३ ॥

॥ मूलम् ॥—आयरियउवज्झाएहिं । सुयं विणयं च गाहए ॥ ते चेव खिंसई बाले । पावसमणि त्ति वुच्चइ ॥ ४ ॥ व्याख्या—स पापश्रमण इत्युच्यते, स इति कः? यस्तानेवाचार्यान् गणवृद्धान्, उपाध्यायान् पाठकान् खिंसई इति निंदते, किं जानंत्येतेऽज्ञाः? अहं या-

दृशमाचारं सूत्राणामर्थं जानामि, एतादृशमेते आचार्या उपाध्याया न जानंतीत्युक्त्वा निंदति, तान् कान्? यैराचार्यैरुपाध्यायैश्च श्रुतं शास्त्रं, विनयं च ग्राहितः, शिक्षितश्च तान्प्रति निंदति, इति न जानाति यदेतैरेवाहं शिक्षितः. एतादृशः कृतघ्नः पापश्रमणः श्रमणाभासः श्रमणलक्षणैर्हीनः श्रमणत्वं मन्यमानः पापश्रमण उच्यते. कीदृशः सः? बालोऽज्ञानी निर्विवेकीत्यर्थः. ॥ ४ ॥

॥ मूलम् ॥—आयरिय उवज्झायाणं । सम्मं नो पडितप्पइ ॥ अपडिपूयए थद्धे । पावसमणित्ति वुच्चइ ॥ ५ ॥ व्याख्या—ज्ञानविषयं पापश्रमणत्वमुक्त्वा दर्शनविषयमाह—य आचार्याणां पुनरुपाध्यायानां सम्यक्प्रकारेण वैपरीत्यराहित्येन न परितृप्यति प्रीतिं न विदधाति, पुनर्योऽर्हदादीनां यथायोग्यपूजायाः पराङ्मुखो भवति, अप्रतिपूजको भवति, अथवोपकारकर्तुरप्युपकारं विस्मार्य विस्मार्य तस्य प्रत्युपकारं किमपि न करोति, सोऽप्रतिपूजक उच्यते. पुनः स्तब्धोऽहंकारी, मनस्येवं जानाति यदहं महापुरुषोऽस्मि, एतादृशो मुनिर्यः स्यात् स पापश्रमण उच्यते. ॥ ५ ॥

॥ मूलम् ॥—संमद्दमाणो पाणाणि । वीयाणि हरियाणि य ॥ असंजए संजयमन्नमाणो । पावसमणित्ति वुच्चई ॥ ६ ॥ व्याख्या—यः प्राणान् द्वित्रिचतुरिंद्रियान् संमर्दमानोऽतिशयेन पीडयन्, च पुनर्बीजानि शालिगोधूमादिसचित्तधान्यानि संमर्दयति, च पुनर्हरितानि दूर्वादीनि फलपुष्पादीनि संमर्दयति, पुनर्योऽसंयतः सन्नात्मानं संयतं मन्यमानः, स पापश्रमण उच्यते. ॥ ६ ॥

॥ मूलम् ॥—संथारं फलगं पीढं । निसज्ज पायकंबलं ॥ अप्पमज्जियमारुहइ । पावसमणित्ति वुच्चइ ॥ ७ ॥ व्याख्या—पुनयः संस्तारं कंबलादिकं, फलकं पट्टिकादिकं, पीठं सिंहासनादिकं, निषीद्यते उपविश्यते इति निषद्या, तां निषद्यां स्वाध्यायातापनादिक्रियायोग्यां भूमिं, पादकंबलं पादपुंछनमित्याद्युपकरणमप्रमृज्य रजोहरणादिना प्रमार्जनमकृत्वा जीवयतनामकृत्वाऽऽरोहते स पापश्रमण उच्यते. ॥ ७ ॥

॥ मूलम् ॥—दवद्दवस्स चरई । पमत्ते य अभिक्खणं ॥ उल्लंघणे य चंडे य । पावसमणित्ति वुच्चइ ॥ ८ ॥ व्याख्या—पुनर्य आहाराद्यर्थं यदा व्रजति, तदा दवदव इति धातोः पृ-

थिवीं कुट्टयन् शीघ्रं शीघ्रं व्रजति, ईर्यासमितिं न साधयति, पुनरत्नीक्ष्णं वारंवारं प्रमत्तः प्र-
मादी सर्वाभिः समितिभिर्हीनः स्यात्, अप्रमत्तो न भवति. पुनर्य उल्लंघनः, उल्लंघयत्यज्ञा-
निनामथवा बालानां हास्याद्यविनयकर्तॄणां भापयन् स्वकीयमाचारमतिक्रामयतीत्युल्लंघनः.
पुनर्यश्चंरुः क्रोधाध्मातचित्तः स्यात्, स पापश्रमण उच्यते. ॥ ७ ॥

॥ मूलम् ॥—पमिलेहेइ पमत्ते । अवउज्झइ पायकंबलं ॥ पमिलेहा अणाउत्ते । पाव-
समणित्ति वुच्चई ॥ ए ॥ व्याख्या—पुनः पापश्रमणः स उच्यते, स इति कः? यो वस्त्रपा-
त्रादिकं निजोपकरणं प्रमत्तः सन् प्रतिलेखयति, मनोविना प्रतिलेखयतीत्यर्थः. पुनर्यः पाद-
कंबलं पादपुंछनमथवा पात्रकंबलमपोज्झति, यत्र तत्राऽप्रमार्जितेऽप्रतिलेखिते स्थले निक्षिप-
ति. अत्र पात्रकंबलग्रहणेन सर्वोपधिग्रहणं कर्तव्यं. पुनर्यः प्रतिलेखनायां स्वकीयसर्वोपधिप्र-
तिलेखनायामनायुक्त आलस्यभाक् प्रत्युपेक्षानुपयुक्त इत्यर्थः. एतादृशः पापश्रमणो भवेत्.॥ए॥

॥ मूलम् ॥—पमिलेहेइ पमत्ते । से किंचि हु निसामि वा ॥ गुरुं परिभवई निच्चं । पाव-
समणित्ति वुच्चई ॥ १० ॥ व्याख्या—स पापश्रमण इत्युच्यते. सः कः? यः साधुर्यत्किंचिद्-

स्तूपष्यादिकं प्रतिलेखयति, तदा किंचिन्निशम्य प्रतिलेखयति. कोऽर्थः? यदा प्रतिलेखनाव-सरे कश्चिद्वार्तां करोति तदा तद्वार्ताश्रवणव्यग्रचित्तः सन् प्रतिलेखयतीत्यर्थः. पुनर्यो गुरून्नित्यं परिभवति संतापयति स पापश्रमणो भवति. ॥ १० ॥

॥ मूलम् ॥—बहुमाई पमुहरी । थद्धे लुद्धे अणिग्गहे ॥ असंविभागी अचियत्ते । पावसमणित्ति वुच्चई ॥ ११ ॥ व्याख्या—पुनर्यो बहुमायी प्रचुरमायायुक्तो भवति, पुनर्यः प्रमुखरः प्रकर्षेण वाचालो भवति, पुनर्यः स्तब्धोऽहंकारी, पुनर्यो लुब्धो लोभी, पुनर्योऽनिग्रहः. न विद्यते निग्रहो यस्य सोऽनिग्रहोऽवशीकृतेंद्रियः, पुनर्योऽसंविभागी गुरुग्लानादीनामुचिताहारादिना न प्रतिसंविभजति. पुनर्योऽचियत्त इति गुर्वादिष्वप्रीतिकर्ता स पापश्रमण इत्युच्यते. ॥ ११ ॥

॥ मूलम् ॥—विवायं च उदीरेय । अहम्मे अत्तपन्नहा ॥ वुग्गहे कलहे रत्ते । पावसमणित्ति वुच्चइ ॥ १२ ॥ व्याख्या—यः पुनरेतादृशो भवति स पापश्रमण इत्युच्यते. सः कः? यो विवादं कलहमुदीरयति, उपशांतमपि पुनरुज्ज्वालयति, पुनर्योऽधर्मोऽसदाचाररतः, पु-

नर्थ आप्तप्रज्ञहा, आप्तां सद्बोधरूपतया हितां प्रज्ञां हंतीत्याप्तप्रज्ञहा तत्वबुद्धिहंता, पुनर्यो व्युद्ग्रहो भवति, विशेषेणोद्ग्रहो दंडादिप्रहारजनितयुद्धं व्युद्ग्रहस्तस्मिन् रतः, तथा पुनः कलहे वाग्युद्धे रतः. ॥ १२ ॥

॥ मूलम् ॥—अथिरासन कुक्कुईए। जत्थ तत्थ निसीयई ॥ आसणंमि अणाउत्ते। पावसमणित्ति वुच्चइ ॥ १३ ॥ व्याख्या—पुनर्योऽस्थिरासनो भवति, अस्थिरमासनं यस्य सोऽस्थिरासनः, आसने स्थिरं न तिष्टतीत्यर्थः. पुनर्यः कौकुच्यिकः, कौकुच्यं भंडचेष्टादिहास्यमुखविकारादिकं तत्करोतीति कौकुच्यिको भंडचेष्टाकारी. पुनर्यो यत्र तत्र निषीदति, सचित्तपृथिव्यामप्रासुकभूमौ तिष्टति. पुनरासनेऽनायुक्त आसनेऽसावधानः, स पापश्रमण उच्यते.

॥ मूलम् ॥—ससरक्खपाए सुयई। सिज्जं न पडिलेहई ॥ संथारए अणाउत्ते। पावसमणित्ति वुच्चइ ॥ १४ ॥ व्याख्या— पुनः स पापश्रमण उच्यते, सः कः? यः सरजस्कपादः स्वपिति, संस्तारके रजोऽवगुंठितचरणोऽप्रमृज्यैव शेते, पुनर्यः शय्यां न प्रतिलेखयति, शय्यां वसतिमुपाश्रय न सम्यक् प्रतिलेखयति, न प्रमार्जयति. पुनर्यः संस्तारकेऽनायुक्तः, य-

दा संस्तारके शेते तदा पौरुषीमजणित्वाऽविधिनाऽसावधानत्वेन शेते, स पापश्रमण उच्यते.

॥ मूलम् ॥—दुद्धदहीविगईउं । आहारे य अजिक्खणं ॥ अरए अ तवोकम्मे । पावसमणित्ति वुच्चइ ॥ १५ ॥ व्याख्या–यो दुग्धदधिनी विकृती अजीक्ष्णं वारंवारमाहारयति, पुनर्यस्तपःकर्मण्यरतस्तपःकर्मण्यरतिं धत्ते, स पापश्रमण इत्युच्यते. ॥ १५ ॥

॥ मूलम् ॥—अत्थंतंमि य सूरंमि । आहारेय अजिक्खणं ॥ चोईउं पडिचोएई । पावसमणित्ति वुच्चइ ॥ १६ ॥ व्याख्या—पुनर्यः सूर्येऽस्तमिते सति अजीक्ष्णं प्रतिदिनमाहारयति, आहारं करोति, पुनर्यश्चोदितः प्रेरितः सन् प्रतिचोदयति, केनचिज्ज्ञीतार्थेन शिक्षितः सन् तं पुनः प्रतिशिक्षयति स पापश्रमण उच्यते. ॥ १६ ॥

॥ मूलम् ॥—आयरियपरिच्चाई । परपासंमसेवई ॥ गाणंगणिय दुप्भूए । पावसमणित्ति वुच्चई ॥ १७ ॥ व्याख्या—पुनर्य आचार्यपरित्यागी, आचार्यान् परित्यजतीत्याचार्यपरित्यागी. आचार्या हि सरसाहारमपरेज्यो ग्लानादिज्यो ददति, अस्मज्यं च वदति तपः कुर्वेवित्यादि गुरूणां दूषणं दत्वा पृथग्जवति. पुनर्यः परपाखंमान् सेवते इति परपाखंमसेव-

कः, परेषु पाखंडेषु मृदुशय्यादिसुखं दृष्ट्वा तान् सेवते. पुनर्यो गाणंगणिको भवति, गणाङ्गणं षण्मासाभ्यंतर एव संक्रामतीति गाणंगणिकः, अत एव दुर्भूतो दुराचारतया निंदनीय इत्यर्थः, स पापश्रमण उच्यते. ॥ १७ ॥

॥ मूलम् ॥—सयं गेहं परिच्चज्ज । परगेहंसि वावडे ॥ निमित्तेण य ववहरई । पावसमणित्ति वुच्चइ ॥ १८ ॥ व्याख्या–यः पुनः स्वयं स्वकीयं गृहं दीक्षां गृहीत्वा पूर्वमेकं त्यक्त्वा परस्यान्यस्य गृहस्थस्य गृहे परगृहे व्याप्रियते, आहारार्थी सन् तत्कार्याणि कुरुते. पुनर्यो निमित्तेन शुभाशुभकथनेन व्यवहरति द्रव्यमर्जयति, अथवा गृहस्थादिनिमित्तं व्यवहरति, क्रयविक्रयादिकं कुरुते, स पापश्रमण इत्युच्यते. ॥ १८ ॥

॥ मूलम् ॥—सन्नाइपिंडं जेमेई । निच्छइ सामुदाणियं ॥ गिहिनिसिज्जं च वाहेइ । पावसमणित्ति वुच्चई ॥ १९ ॥ व्याख्या—यः पुनः स्वज्ञातिपिंडं स्वकीयबंधुभिर्दत्तमाहारं भुंक्ते, रागपिंडं भुंक्ते इत्यर्थः. पुनर्यः सामुदायिकं, समुदाये भवं सामुदायिकं, गृहाद्गृहाद्गृहीतं भैक्ष्यं नेच्छति न वांछति. पुनर्यो गृहिनिषद्यां, गृहिणो निषद्या गृहिनिषद्या, गृहस्थस्य गृहे

गत्वा पल्यंकादिकं नाह्यत्यारोहयति, मंचमंचिकापीठिकादिषु तिष्ठतीत्यर्थः, स पापश्रमण उच्यत इति. ॥ १९ ॥

॥ मूलम् ॥—एयारिसे पंचकुसीलसंवुडे । रूवंधरे मुणिपवराण हिट्ठिमे ॥ अयंसि लोए विसमेव गरहिए । न से इहं नेव परंमि लोए ॥ २० ॥ व्याख्या—एतादृशो रूपधरो मुनिवेषधारी, स इहास्मिन् लोके न, तथा परंसि परस्मिन् लोकेऽपि न. स गृहस्थोऽपि न भवति, साधुरपि न भवति, उभयतोऽपि भ्रष्ट इत्यर्थः. स कीदृशः? पंचकुशीलसंवृतः, पंच च ते कुशीलाश्च पंचकुशीलास्तद्वदसंवृतोऽजितेंद्रियः, अत्र प्राकृतत्वादकारलोपः. अथवा पंचकुशीलैः संवृतः सहितः, यादृशा जिनमते पंच कुशीलास्तन्मध्यवर्तीत्यर्थः. यदुक्तं—उसन्नो पासत्थो । होइ कुसीलो तहेव संसत्तो ॥ अहछंदोवि य एए । अवंदणिज्जा जिणमयंमि ॥ ॥ १ ॥ पापश्रमणोऽप्यवंदनीय एव. पुनः कीदृशः? मुनिप्रवराणां प्रधानमुनीनां मध्येऽधः स्थितः स पापश्रमण एतस्मिन् लोके विषमिव गर्हितो विषमिव निंद्यो विषमिव त्याज्य इत्यर्थः.

॥ मूलम् ॥—जे वज्जए एए सया उ दोसे । से सुव्वए होइ मुणीण मज्झे ॥ अयंसि

लोए अमियंव पूइए। आराहए लोगमिणं तहा परंत्तिबेमि ॥ २१ ॥ व्याख्या—य एए इत्येतान् दोषान् सर्वदा वर्जयेत्, स सुव्रतः, सुष्टु व्रतानि यस्य स सुव्रतो महोज्ज्वलव्रतधारी, सर्वमुनीनां मध्ये एतस्मिन् लोकेऽमृतमिव पूजितो नवेत्, सर्वमुनीनामादरणीयः स्यात्, पुनः सुव्रतः साधुरस्मिन् लोके, तथा परत्र परनवेऽप्याराधकः स्यादित्यहं ब्रवीमि. ॥ २१ ॥ इति पापश्रमणीयमध्ययनं सप्तदशं ॥ १७ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लनगणिविरचितायां पापश्रमणीयाख्यं सप्तदशमध्ययनं संपूर्णः ॥ श्रीरस्तु ॥

---

## ॥ अथाष्टादशमध्ययनं प्रारज्यते ॥

सप्तदशेऽध्ययने पापस्थानकनिवारणमुक्तं, तत्पापस्थाननिवारणं संयमवतो नवति, स च संयमो हि नोगजयात् ऋद्धेस्त्यागाच्च नवति, स च नोगत्यागः संयतराजर्षिदृष्टांतेनाष्टाद-

शाध्ययनेन द्रढयति, इति सप्तदशाष्टादशयोः संबंधः.

॥ मूलम् ॥—कंपिल्ले नयरे राया । उदिण्णबलवाहणे ॥ नामेण संजए नाम । मिगव्वं उवनिग्गए ॥ १ ॥ व्याख्या—कांपिल्ये नगरे राजाभूत्. कीदृशः स राजा? नाम्ना संयत इति नाम प्रसिद्धः, पुनः कीदृशः? उदीर्णबलवाहनः, उदीर्णमुदयं प्राप्तं बलं येषां तान्युदीर्णबलानि, उदीर्णबलानि वाहनानि यस्य स उदीर्णबलवाहनः. अथवा बलं चतुरंगं गजाश्वरथसुभटरूपं, वाहनं शिबिकावेसरप्रमुखं, बलं च वाहनं च बलवाहने, उदीर्णे उदयं प्राप्ते बलवाहने यस्य स उदीर्णबलवाहनः. स संयतो राजा मृगव्यामुपनिर्गतो नगरादाखेटके गतः, मृगव्या आखेटक उच्यते. ॥ १ ॥

॥ मूलम् ॥—हयाणीए गयाणीए । रहाणीए तहेव य ॥ पायत्ताणीए महया । सव्वउ परिवारिए ॥ २ ॥ व्याख्या—पुनः कीदृशः संयतो नृपः? हयानामनीकं तेन हयानीकेन घोटककटकेन, तथा पुनर्गजानीकेन कुंजरकटकेन, तथैव रथानीकेन, पुनर्महता प्रचुरेण पादात्यनीकेन सर्वतः परिवारितः सर्वपरिवारसहितः ॥ २ ॥ युग्मं ॥

॥ मूलम् ॥—मिए छुन्चित्ता हयगओ । कंपिल्लुज्जाणकेसरे ॥ जीए संते मिए तत्थ । वहेइ रसमुछिए ॥ ३ ॥ व्याख्या—स संयतो नृपो हये गतोऽश्वारूढस्तत्र कांपिल्योद्याने केसरनाम्नि पूर्वं मृगान् क्षिप्त्वा प्रेरयित्वा अश्वेन त्रासयित्वा तान् मृगान् वध्यति. कीदृशः संयतः? रसमूर्छितः, रसस्तेषामास्वादानुभवस्तत्र लोलुपः, कीदृशान् मृगान्? भीतान्, पुनः कीदृशान्? ग्लानिं प्राप्तान्. ॥ ३ ॥

॥ मूलम् ॥—अह केसरंमि उज्जाणे । अणगारे तवोधणे ॥ सज्झाणज्झाणसंजुत्ते । धम्मज्झाणं झियायई ॥ ४ ॥ व्याख्या—अथ मृगाणां त्रासमारणोत्पादनानंतरं, केसरे उद्याने ऽनगारो धर्मध्यानमाज्ञाविचयादिकं ध्यायति, धर्मध्यानं चिंतयति. कथंभूतोऽनगारः? तपोधनस्तप एव धनं यस्य स तपोधनः, पुनः कीदृशः? स्वाध्यायध्यानसंयुक्तः ॥ ४ ॥

॥ मूलम् ॥—अप्फोवमंडवंमि । झायइ खवियासवे ॥ तस्सागए मिए पासं । वहेइ से नराहिवे ॥ ५ ॥ व्याख्या—' अप्फोवमंडवंमि ' इति वृक्षाद्याकीर्णोऽफोवः, स चासौ मंडपश्चाफोवमंडपस्तस्मिन्नफोवमंडपे, नागवल्लीद्राक्षादिभिर्वेष्टिते स्थाने इत्यर्थः. तस्मि-

केन जीवहननशीलेन. ॥ ७ ॥

॥ मूलम् ॥—आसं विसज्जइत्ता णं । अणगारस्स सो निवो ॥ विणएणं वंदए पाए । भगवं इत्थ मे खमे ॥ ८ ॥ व्याख्या—स नृपोऽनगारस्य विनयेन पादौ वंदते. किं कृत्वा? अश्वं विसृज्य, णमिति वाक्यालंकारे, घोटकं त्यक्त्वा. पुनः स नृप इति वक्ति, हे भगवन्! इत्थ इत्यत्र मृगवधे मेऽपराधं क्षमस्व? अपराधमिति पदमध्याहार्यं. ॥ ८ ॥

॥ मूलम् ॥—अह मोणेण सो भयवं । अणगारे झाणमस्सिए ॥ रायाणं न पडिमंतेइ । तओ राया भयद्दुओ ॥ ९ ॥ व्याख्या—अथ राज्ञा मुनेश्चरणवंदना कृता, ततोऽनंतरं स भगवान् ज्ञानातिशययुक्तोऽनगारः साधुर्मौनेन ध्यानमाश्रितः सन्, पिंडस्थपदस्थरूपस्थरूपातीतादिकं ध्यायन्, अथवा धर्मध्यानमाश्रितः सन् राजानं संयतनृपंप्रति न निमंत्रयति न जल्पयति. ततस्तस्मात्कारणान्मुनेरभाषणाद्राजा भयद्रुतो भयभ्रांतोऽभूत्, इति वक्ति च. ९.

॥ मूलम् ॥—संजाओ अहमस्सीति । भयवं वाहराहि मे ॥ कुद्धे तेएण अणगारे । डहिज्ज नरकोडिए ॥ १० ॥ व्याख्या—किं वक्ति? तदाह—राजा मनस्येवं जानातिस्म, अ-

यं साधुर्मा नीचं ज्ञात्वा किंचिद्विरूपं त्वरितं मा कुर्यात्, तस्मात् स्वकीयं नृपत्वं स्वनामस-हितमवादीदिति भावः. हे भगवन्नहं संयतो राजास्मि, इति हेतोर्हे भगवन्! मे व्याहर? मां जल्पय? हे स्वामिन्! भवादृशः साधुः क्रुद्धः सन् तेजसा तेजोलेश्यादिना नरकोटिं द-हेत्, तस्मात् स्वामिना क्रोधो न विधेयः. ॥ १० ॥

॥ मूलम् ॥—अभयमत्थि वा तुज्कं । अभयदाया भवाहि य ॥ अणिच्चे जीवलोगंमि । किं हिंसाए पसज्जसि ॥ ११ ॥ व्याख्या—तदा मुनिराह—हे पार्थिव! तुभ्यमभयं भयं मा भवतु. त्वमप्यभयदाता भवाहीति भव? च इति पादपूरणे. जीवानामभयदानं देहि? जीवानां हिंसां मा कुर्वित्यर्थः. हे राजन्ननित्ये जीवलोके संसारे किमिति किमर्थं हिंसायां प्रसज्यसि? प्रकर्षेण सक्तो भवसि? जीवलोकस्यानित्यत्वे त्वमप्यनित्योऽसि. किमर्थं प्राणिव-धं करोपीत्यर्थः. ॥ ११ ॥

॥ मूलम् ॥—जया सव्वं परिच्चज्ज । गंतव्वमवसस्स ते ॥ अणिच्चे जीवलोगंमि । किं र-ज्जंमि पसज्जसि ॥ १२ ॥ व्याख्या—हे राजन्! यदा सर्वमंतःपुरादिकं कोष्टागारभांडागारा-

यं साधुर्मां नीचं ज्ञात्वा किंचिद्विरूपं त्वरितं मा कुर्यात्, तस्मात् स्वकीय नृपत्वं स्वनामसहितमवादीदिति भावः. हे भगवन्नहं संयतो राजास्मि, इति हेतोर्हे भगवन्! मे व्याहर? मां जल्पय? हे स्वामिन्! भवादृशः साधुः क्रुद्धः सन् तेजसा तेजोलेश्यादिना नरकोटिं दहेत्, तस्मात् स्वामिना क्रोधो न विधेयः. ॥ १० ॥

॥ मूलम् ॥—अभयमत्थि वा तुज्झं । अभयदाया भवाहि य ॥ अणिच्चे जीवलोगंमि । किं हिंसाए पसज्जसि ॥ ११ ॥ व्याख्या—तदा मुनिराह—हे पार्थिव! तुभ्यमभयं भयं मा भवतु. त्वमप्यभयदाता भवाहीति भव? च इति पादपूरणे. जीवानामभयदानं देहि? जीवानां हिंसां मा कुर्वित्यर्थः. हे राजन्ननित्ये जीवलोके संसारे किमिति किमर्थं हिंसायां प्रसज्यसि? प्रकर्षेण सक्तो भवसि? जीवलोकस्यानित्यत्वे त्वमप्यनित्योऽसि. किमर्थं प्राणिवधं करोषीत्यर्थः. ॥ ११ ॥

॥ मूलम् ॥—जया सव्वं परिच्चज्ज । गंतव्वमवसस्स ते ॥ अणिच्चे जीवलोगंमि । किं रज्जंमि पसज्जसि ॥ १२ ॥ व्याख्या—हे राजन्! यदा सर्वमंतःपुरादिकं कोष्टागारभांडागारा-

दिकं परित्यज्य ते तव परलोके गंतव्यं वर्तते, कथंभूतस्य ते? अवशस्य परवशस्य. मरणसमये जीवो जानाति न म्रियते, परं किं करोति? जीवः परवशः सन् स्वेच्छां विनैव म्रियते. यदुक्तं—सव्वे जीवावि इच्छंति । जीविउं न मरिज्जउं ॥ तेन हे नृप! तव सर्वं परित्यज्य मर्तव्यमस्ति, तदाऽनित्ये जीवलोकेऽनित्ये संसारे किं राज्ये प्रसज्जसि? प्रसंगं करोषि? गृद्धो भवसि? इति. ॥ १२ ॥

॥ मूलम् ॥—जीवियं चेव रूवं च । विज्जुसंपायचंचलं ॥ जत्थ तं मुज्झसि रायं । पिच्चत्थं नावबुज्झसि ॥ १३ ॥ व्याख्या—हे राजन्! जीवितमायुः, च पुना रूपं शरीरस्य सौंदर्यं विद्युत्संपातचंचलं वर्तते. विद्युतः संपातश्चलनं तद्वच्चंचलं वर्तते. हे राजन्! यत्र यस्मिन्नायुषि रूपे च त्वं मुह्यसे मोहं प्राप्नोषि, प्रेत्यार्थं परलोकार्थं च नावबुध्यसे न जानासि. ॥

॥ मूलम् ॥—दाराणि य सुया चेव । मित्ता य तह बंधवा ॥ जीवंतमणुजीवंति । मयं नाणुव्वयंति य ॥ १४ ॥ व्याख्या—हे राजन्! दाराः स्त्रियः, च पुनः सुता आत्मजाः, पुनर्मित्राणि, तथा बांधवा ज्ञातयो भ्रातृप्रमुखाः, एते सर्वेऽपि जीवंतं मनुष्यमनुजीवंति, जी-

वतो धनवतः पुरुपस्य पृष्टे उदरपूर्तिं कुर्वंति, तस्य द्रव्यं भुंजतीत्यर्थः. परं तं पुरुपं मृतं नानुव्रजंति, मृतस्य तस्य पुरुपस्य पृष्टे केऽपि न व्रजंतीत्यर्थः. तदाऽन्यद्गृहादिकं किं पुनः सह यास्यतीति? अतः कृतघ्नेष्वादरो न विधेयः, तस्मात्परिकरे को रागः कर्तव्यः? ॥ १४ ॥

॥ मूलम् ॥—नीहरंति मयं पुत्ता । पियरं परमदुक्खिया ॥ पियरोवि तहा पुत्तो । वंधू राया तवं चरे ॥ १५ ॥ व्याख्या—हे राजन्! पुत्रामृतं पितरं नीहरंति गृहान्निष्कासयंति. कीदृशाः पुत्राः? परमदुःखिता अत्यंतं शोकार्दिताः. पितरोऽपि जनका अपि तथा तेन प्रकारेण पुत्रान् मृतान्निष्कासयंति. एवं वांधवा वांधवान् मृतान्निष्कासयंति. तस्मादेवं ज्ञात्वा हे राजंस्तपश्चरेत्तपः कुर्वित्यर्थः. ॥ १५ ॥

॥ मूलम् ॥—तओ तेणज्जिए दव्वे । दारे य परिरक्खिए ॥ कीलंतन्ने नरा रायं । हट्टतुट्ठमलंकिया ॥ १६ ॥ व्याख्या—ततो निःसरणानंतरं तेनैव पित्राद्यर्जितधनेन, च पुनर्दारेषु स्त्रीषु हे राजन्! अन्ये नराः क्रीडंति, स्वामिनि मृते सति तस्य धने तस्य स्त्रीषु चापरे मनुष्या हृष्टतुष्टं यथा स्यात्तथा हर्पिताः संतुष्टाः संतोऽलंकृता अलंकारयुक्ताः संतश्च क्रीडां

कुर्वंति. कथंभूते धने? परिरक्षिते, समस्तप्रकारेण चौराग्निप्रमुखेभ्यो रक्षिते. यावत्स जीवति तावद्धनस्य स्त्रीणां च रक्षां कुरुते, मृते सत्यन्ये भुंजंति, धनस्त्रीप्रमुखाः पदार्थास्तत्रैव तिष्ठंति, न च सार्थे समायांति. कोऽर्थः? वराको जनो दुःखेन द्रव्यमुत्पाद्य यत्नेन रक्षति, दारानपि जीवितव्यमिव रक्षति, अलंकारैर्नवैः रंजयति, तस्मिन् मृते सति तेनैव वित्तेन तैरेव दारैश्च, अन्ये हृष्टाः शरीरे पुलकादिमंतः, तुष्टा आंतरप्रीतिभाजोऽलंकृता विभूषिताः संतो रमंते, यत ईदृशी भवस्थितिरस्ति. ततो हे राजंस्तपश्चरेत्तपः कुर्यादिति संबंधः. ॥ १६ ॥

॥ मूलम् ॥—तेणावि जं कयं कम्मं । सुहं वा जइ वा दुहं ॥ कम्मुणा तेण संजुत्तो । गच्छइ उ परं भवं ॥ १७ ॥ व्याख्या—तेनापि मरणोन्मुखेन जीवेन यच्छुभं कर्म, अथवाऽशुभं कर्म कृतं भवेत्. सुखं दुःखं वोपार्जितं स्यात्, तेन शुभाशुभलक्षणेन कर्मणा संयुक्तः सन् स जीवः परभवं गच्छति, एतावता जीवस्य सार्थेऽन्यत्किमपि नायाति, स्वोपार्जितं शुभाशुभं कर्म सार्थे समागच्छति. ॥ १७ ॥

॥ मूलम् ॥—सोऊण तस्स सो धम्मं । अणगारस्स अंतिए ॥ महया संवेयनिव्वेयं ।

समावन्नो नराहिवो ॥ १८ ॥ व्याख्या—स संयतो राजा ' महया ' इति महत्संवेगो निर्वेदं समापन्नः, संवेगश्च निर्वेदश्च संवेगनिर्वेदं, संवेगो मोक्षाभिलाषः, निर्वेदः संसारादुद्विग्नता, स राजा उभयं प्राप्त इत्यर्थः. किं कृत्वा? तस्यानगारस्य साधोरंतिके समीपे धर्मं श्रुत्वा. ॥

॥ मूलम् ॥—संजओ चइउं रज्जं । निक्खंतो जिणसासणे ॥ गद्दभालिस्स भगवओ । अणगारस्स अंतिए ॥ १९ ॥ व्याख्या—संयतो राजा गर्दभालिनाम्नोऽनगारस्यांतिके समीपे जिनशासने वीतरागधर्मे निःक्रांतः समागतः, संसाराद् गृहाच्च निःसृतः, जैनीं दीक्षामाश्रितः. किं कृत्वा? राज्यं त्यक्त्वा. ॥ १९ ॥

॥ मूलम् ॥—चिच्चा रज्जं पव्वईओ । खत्तिओ परिभासई ॥ जहा ते दीसई रूवं । पसन्नं ते तहा मणो ॥ २० ॥ व्याख्या—अत्र वृद्धसंप्रदायोऽयमस्ति—स संयतराजर्षिर्गर्दभालिनामाचार्यस्य शिष्यो जातः, पश्चाद्गीतार्थो जातः, समस्तसाध्वाचारविचारदक्षो गुरोरादेशेनैकाकी विहरन्नेकस्मिन् ग्रामे एकदा समागतोऽस्ति. तत्र ग्रामे क्षत्रियराजर्षिर्मिलितः, स क्षत्रियसाधुः संयतमुनिं प्रतिभाषते वदति. परं स क्षत्रियमुनिः कीदृशोऽस्ति? स हि पूर्वजन्म-

नि वैमानिक आसीत्, ततश्च्युत्वैकस्मिन् क्षत्रियकुले समुत्पन्नः, तत्र कुतश्चित्तथाविधनिमित्तदर्शनादुत्पन्नजातिस्मृतिस्ततः समुत्पन्नवैराग्यो राज्यं त्यक्त्वा प्रव्रजितः स क्षत्रियो राजर्षिरनिर्दिष्टनामा क्षत्रियजातिविशिष्टत्वात् क्षत्रियमुनिर्जातिस्मृतिज्ञानवान्, स संयतं मुनिं दृष्ट्वा परिभाषते संयतस्य ज्ञानपरीक्षां कर्तुं. संयतमुनिमित्यध्याहारः. किं परिभाषते? तदाह—हे साधो! यथा येन प्रकारेण ते तव रूपं बाह्याकारं दृश्यते, तथा तेन प्रकारेण तव मनः प्रसन्नं विकाररहितं वर्तते. अंतःकालुष्ये ह्येवं प्रसन्नताऽसंभवात्. ॥ २० ॥ पुनः किं परिभाषते ? इत्याह—

॥ मूलम् ॥—किं नामे किं गुत्ते। कस्सट्ठा एव माहणे ॥ कहं पडियरसि बुद्धे । कहं विणीएत्ति वुच्चसि ॥ २१ ॥ व्याख्या—हे साधो ! तव किं नाम ? तव किं गोत्रं ? पुनः 'कस्सट्ठाए' इति कस्मै अर्थाय वा त्वं माहनः प्रव्रजितोऽसि ? हे साधो ! त्वं बुद्धान् कथं प्रतिचरसि ? त्वमाचार्यान् केन प्रकारेण सेवसे ? पुनर्हे साधो ! त्वं कथं विनीत इत्युच्यसे ? अहं त्वां पृच्छामि. ॥ २१ ॥

॥ मूलम् ॥—संजओ नाम नामेणं । तहा गुत्तेण गोयमो ॥ गद्दभाली ममायरिया । विज्जाचरणपारगा ॥ २२ ॥ व्याख्या—अथ क्षत्रियसाधोः प्रश्नानंतरं संयतसाधुरुवाच. हे साधो ! अहं संयत इति नाम्नाऽभिधानेन नाम प्रसिद्धोऽस्मि. तथा पुनरहं गोत्रेण गौतमोऽस्मि. ममाचार्या गुरवो गर्दभालिनामानः. कीदृशा मम गुरवः ? विद्याचरणपारगाः, विद्या च चरणं च विद्याचरणे, तयोः पारगा विद्याचरणपारगाः. विद्या श्रुतज्ञानं, चरणं चारित्रं, तयोः पारगामिनः. अयमाशयः—अहं तैर्गर्दभालिनामाचार्यैर्जीवघातान्निवर्तितः, तन्निवृत्तौ मुक्तिफलमुक्तं च. ततस्तदर्थं माहनोऽस्मि. यथा तदुपदेशानुसारतो गुरून् प्रतिचरामि, तदुपदेशसेवनाच्च विनीतोऽस्मीति भावः. ॥२२॥ अथ तद्गुणबहुमानतोऽपृष्टोऽपि क्षत्रियमुनिराह—

॥ मूलम् ॥—किरियं १ अकिरियं २ विणयं ३ । अन्नाणं ४ च महामुणी ॥ एएहिं चउहिं ठाणेहिं । मेयन्ने किं पभासई ॥ २३ ॥ व्याख्या—हे संयतमहामुने ! एतैश्चतुर्भिः स्थानैर्मिथ्यात्वाधारभूतैर्हेतुभिः कृत्वा मेयज्ञाः किं प्रभाषंते ? मेयं जीवादिवस्तु जानंतीति मेयज्ञाः पदार्थज्ञाः कुतीर्थ्या वादिनः कुत्सितं प्रजल्पंते, एतावता एतैश्चतुर्भिर्हेतुभिर्मिथ्यात्वि-

नि वैमानिक आसीत्, ततश्च्युत्वैकस्मिन् क्षत्रियकुले समुत्पन्नः, तत्र कुतश्चित्तथाविधनिमित्त-दर्शनादुत्पन्नजातिस्मृतिस्ततः समुत्पन्नवैराग्यो राज्यं त्यक्त्वा प्रव्रजितः स क्षत्रियो राजर्षिर-निर्दिष्टनामा क्षत्रियजातिविशिष्टत्वात् क्षत्रियमुनिर्जातिस्मृतिज्ञानवान्, स संयतं मुनिं दृष्ट्वा परिभाषते संयतस्य ज्ञानपरीक्षां कर्तुं. संयतमुनिमित्यध्याहारः. किं परिभाषते? तदाह— हे साधो! यथा येन प्रकारेण ते तव रूपं बाह्याकारं दृश्यते, तथा तेन प्रकारेण तव मनः प्रसन्नं विकाररहितं वर्तते. अंतःकालुष्ये ह्येवं प्रसन्नताऽसंभवात्. ॥ २० ॥ पुनः किं परिभाषते? इत्याह—

॥ मूलम् ॥—किं नामे किं गुत्ते। कस्सट्ठा एव माहणे ॥ कहं पडियरसि बुद्धे । कहं विणीएत्ति वुच्चसि ॥ २१ ॥ व्याख्या—हे साधो! तव किं नाम? तव किं गोत्रं? पुनः 'कस्सट्ठाए' इति कस्मै अर्थाय वा त्वं माहनः प्रव्रजितोऽसि? हे साधो! त्वं बुद्धान् कथं प्रतिचरसि? त्वमाचार्यान् केन प्रकारेण सेवसे? पुनर्हे साधो! त्वं कथं विनीत इत्युच्यसे? अहं त्वां पृच्छामि. ॥ २१ ॥

॥ मूलम् ॥—संजउ नाम नामेणं । तहा गुत्तेण गोयमो ॥ गद्दभाली ममायरिया । वि-
ज्जाचरणपारगा ॥ २२ ॥ व्याख्या—अथ क्षत्रियसाधोः प्रश्नानंतरं संयतसाधुरुवाच. हे सा-
धो ! अहं संयत इति नाम्नाऽभिधानेन नाम प्रसिद्धोऽस्मि. तथा पुनरहं गोत्रेण गौतमोऽस्मि.
ममाचार्या गुरवो गर्दभालिनामानः. कीदृशा मम गुरवः ? विद्याचरणपारगाः, विद्या च चर-
णं च विद्याचरणे, तयोः पारगा विद्याचरणपारगाः. विद्या श्रुतज्ञानं, चरणं चारित्रं, तयोः
पारगामिनः. अयमाशयः—अहं तैर्गर्दभालिनामाचार्यैर्जीवघातान्निवर्तितः, तन्निवृत्तो मुक्ति-
फलमुक्तं च. ततस्तदर्थं माहनोऽस्मि. यथा तदुपदेशानुसारतो गुरून् प्रतिचरामि. तदुपदे-
शसेवनाच्च विनीतोऽस्मीति भावः. ॥२२॥ अथ तद्गुणबहुमानतोऽपृष्टोऽपि क्षत्रियमुनिराह—
॥ मूलम् ॥—किरियं १ अकिरियं २ विणयं ३ । अन्नाणं ४ च महामुणी ॥ एएहिं च-
उहिं ठाणेहिं । मेयन्ने किं पभासई ॥ २३ ॥ व्याख्या—हे संयतमहामुने ! एतैश्चतुर्भिः स्था-
नैर्मिथ्यात्वाधारभूतैर्हेतुभिः कृत्वा मेयज्ञाः किं प्रभाषंते ? मेयं जीवादिवस्तु जानंतीति मेय-
ज्ञाः पदार्थज्ञाः कुतीर्थ्या वादिनः कुत्सितं प्रजल्पंते, एतावता एतैश्चतुर्भिर्हेतुभिर्मिथ्यात्वि-

नः सर्वे त्रिषष्ट्युत्तरत्रिशतभेदाः (३६३) पाखंडिनो यथावस्थिततत्वमजानाना यथातथा प्रलापिनः संति, ते त्वया ज्ञातव्याः. तानि कानि चत्वारि स्थानानि? क्रिया जीवादिसत्तारूपा १, पश्चादक्रिया जीवादिपदार्थानामक्रिया नास्तित्वरूपा २, विनयं सर्वेभ्यो नमस्कारकरणं ३, अज्ञानं सर्वेषां पदार्थानामज्ञानं भव्यं ४. एते ह्येकांतवादित्वेन मिथ्यात्विनो ज्ञेयाः. कुत्सितभाषणं ह्येतेषां विचारस्याऽसहत्वात्. यतो हि सर्वथा सर्वत्र सत्तायाः सत्वात्सर्वत्र जीवः स्यात्, अजीवेऽपि जीवबुद्धिः स्यात्. १. पुनर्नास्तित्वे आत्मनो नास्तित्वेऽस्य प्रमाणबाधितत्वाच्च जीवाजीवयोरुभयोरपि सादृश्यं नास्तित्वं स्यात्. २. सर्वत्र विनये क्रियमाणे निर्गुणे विनयस्याऽशुभफलत्वात्. विनयोऽपि स्थाने एव कृतः फलदः, तस्मादेकांतं विनयोऽपि न श्रेष्ठः. ३. अज्ञानं हि मुक्तिसाधने कारणं नास्ति, मुक्तेर्ज्ञानस्यैव कारणत्वात्. हेयोपादेयपदार्थयोरपि ज्ञानेनैव साध्यत्वात्. ज्ञानं विना हितमपि न जानाति, तस्मादज्ञानमपि न श्रेष्ठं. ४. तस्मात्क्रियावादिनः १, अक्रियावादिनः २, विनयवादिनः ३, अज्ञानवादिनश्च ४, सर्वेऽप्येते एकांतवादिनो मिथ्यात्विनः कुतीर्थिनः कुत्सितभाषिणो ज्ञेयाः. एतेषां

पाखंडिनां सर्वे भेदाः (३६३) त्रिषष्टयुत्तरत्रिशतप्रमिता भवंति. तत्र क्रियावादिनां १८०, अक्रियावादिनां ८४, विनयवादिनां ३२, अज्ञानवादिनां ६७. कुत्सितभाषितं हि न चेतत् स्वाभिप्रायेण, किंतु भगवद्वचसैतेषां कुत्सितभाषितं. ॥ २३ ॥ तदाह—

॥ मूलम् ॥—इइ पाउकरे बुद्धे । नायए परिनिव्वुए ॥ विज्जाचरणसंपन्ने । सच्चे सच्चपरक्कमे ॥ २४ ॥ व्याख्या—इत्येते क्रियावादिनः कुत्सितं प्रभाषंते, इत्येवंरूपं वचनं बुद्धो ज्ञाततत्त्वो ज्ञातकः श्रीमहावीरः प्रादुरकरोत् प्रकटीचकार. कीदृशो ज्ञातकः? परिनिर्वृतः, कषायाभावात् परि समंताच्छीतीभूतः. पुनः कीदृशः? सत्यः सत्यवचनवादी, पुनः कीदृशः? सत्यपराक्रमः सत्यवीर्यसहितः. ॥ २४ ॥ तेषां फलमाह—

॥ मूलम् ॥—पडंत नरए घोरे । जे नरा पावकारिणो ॥ दिव्वं च गइं गच्छंति । चरित्ता धम्ममारियं ॥ २५ ॥ व्याख्या—पुनः क्षत्रियमुनिर्वदति, हे महामुने! ये पापकारिणो नराः पापमसत्प्ररूपणं कुर्वतीत्येवंशीलाः पापकारिणो ये नरा भवंति, ते नरा घोरे भीषणे नरके पतंति, च पुनर्धर्मं सत्यप्ररूपणारूपं 'चरित्ता' आराध्य दिव्यां दिवः संबंधिनीमुत्तमां ग-

तिं गच्छंति. कथंभूतं धर्मं? 'आरियं' आर्यं वीतरागोक्तमित्यर्थः. अत्र पापमसत्यवचनं ज्ञेयं, धर्मं च सत्यवचनं ज्ञेयं. एवं ज्ञात्वा भो संयत! भवता सत्यप्ररूपणापरेणैव भाव्यमित्यर्थः. ॥ २५ ॥ कथममी पापकारिण इत्याह—

॥ मूलम् ॥—मायावुईयमेयं तु । मुसा भासा निरत्थिया ॥ संजममाणोत्ति अहं । वसामि ईरियामि अ ॥ २६ ॥ व्याख्या—एतत्क्रियाऽक्रियाविनयाऽज्ञानवादिनां मायोक्तं, मायया कपटेनोक्तं मायोक्तं शाठ्योक्तं ज्ञेयं, एते सर्वेऽपि कपटेन मृषां भाषंते इत्यर्थः. एतेषां क्रियावादिनां तु तस्मात्कारणान्मृषा भाषा असत्या भाषा निरर्थका सत्यार्थरहिता. अपि निश्चयेन तेनैव कारणेन हे साधो! संयच्छन् पापान्निवर्तितः सन्, तेषां पाखंडिनामसत्प्ररूपणातो निवर्तितः सन्नहं वसामि, निरवद्योपाश्रयादौ तिष्ठामि. अत्राहं पाखंडिनां वाक्यरूपपापान्निवृत्तः सन् तिष्ठामीत्युक्तं, तत्तस्य स्थिरीकरणार्थं. यथाहमसत्प्ररूपणातो निवृत्तस्तथा त्वयापि निवर्तितव्यमित्यर्थः. यतः साधुः स्वयं साधुमार्गे स्थितोऽपरमपि साधुमार्गे स्थापयति. च पुनर्हे साधो! अहं इरियामीति ईर्यया गच्छामि, गौचर्यादौ भ्रमामि. ॥ २६ ॥

॥ मूलम् ॥—सव्वे ते विइया मज्झं । मित्यादिट्ठी अणारिया ॥ विज्जमाणे परे लोए । सम्मं जाणामि अप्पयं ॥ २७ ॥ व्याख्या—हे साधो! ते सर्वेऽपि क्रियाऽक्रियाविनयाऽज्ञानवादिनश्चत्वारोऽपि पाखंडिनो मया विदिता ज्ञाताः. एते चत्वारोऽपि मिथ्यादृष्टयो मिथ्यादर्शनयुक्ताः. पुनरेते चत्वारोऽप्यनार्या अनार्यकर्मकर्तारः, सम्यग्मार्गविलुंपकाः. मयैते यादृशाः संति तादृशा ज्ञाताः. पुनरहं मुने परलोके विद्यमाने सम्यक्प्रकारेण 'अप्पयं' आत्मानं स्वस्य परस्य च जानामि. आत्मा परलोकादागतस्ततोऽहं परलोकमात्मानं च सम्यग् जानामि. ते कुतीर्थिनोऽपि सम्यग् ज्ञाताः, तेन कुतीर्थिनां संगं न करोमि. ॥२७॥ कथं जानामीत्याह—

॥ मूलम् ॥—अहमासि महापाणे । जुइमं वरिससओवमो ॥ जा सा पाली महापाली । दिव्वा वरिससओवमा ॥ २८ ॥ व्याख्या—हे मुने! अहं महाप्राणे विमाने पंचमे ब्रह्मलोके देव आसं. कथंभूतोऽहं? द्युतिमान्, द्युतिर्विद्यते यस्य स द्युतिमांस्तेजस्वी. पुनः कथंभूतोऽहं? वर्षशतोपमो वर्षशतजीविनः पुरुषस्योपमा यस्यासौ वर्षशतोपमः. कोऽर्थः? यथेह वर्षशतजीवीदानीं परिपूर्णायुरुच्यते, तथाहं तत्र विमाने परिपूर्णायुरभूवं. तत्र या पालिर्महा-

पालिश्च, सा दिव्या स्थितिर्मेऽनूदिति शेषः. पालिशब्दस्य कोऽर्थः? पालिरिव पालिर्जीवितजलधारणात्, पालिशब्देन भवस्थितिः कथ्यते, सा चेह पल्योपमप्रमाणा, महापालिः सागरोपमप्रमाणा स्थितिः कथ्यते. दिवि भवा दिव्या, देवसंबंधिनी स्थितिरित्यर्थः. कथंभूता पालिर्महापालिश्च? वर्षशतोपमा, वर्षशतैः केशोद्धारहेतुभिरुपमीयते या सा वर्षशतोपमा, द्विविधापि दिव्या भवस्थितिस्तत्रास्ति. परं मे महापालिर्दिव्या भवस्थितिरासीदित्याम्नायः, दशसागरायुरहमासमित्यर्थः. ॥ २७ ॥

॥ मूलम् ॥—से चुर्ज बंभलोगार्ज । माणुस्सं भवमागर्ज ॥ अप्पणो य परेसिं च । आउं जाणे जहा तहा ॥ २९ ॥ व्याख्या—"से" इति सोऽहमित्यध्याहारः, सोऽहं ब्रह्मलोकात्पंचमदेवलोकाच्च्युतः सन् मानुष्यं भवं नरसंबंधिजन्म समागतः, आत्मनश्च पुनः परेषां च यथा यथायुर्जीवितं वर्तते तथा जानामि, यस्य मानवस्य येन प्रकारेणायुरस्ति, तस्य तेन प्रकारेण सर्वं जानामि, परं विपरीतं न जानामि, सत्यं जानामि. ॥ २९ ॥

॥ मूलम् ॥—नाणारुइं च छंदं च । परिवज्जेज्ज संजए ॥ अणट्ठा जे य सवट्ठा । इइ वि-

झामणुसंवरे ॥ ३० ॥ व्याख्या—हे मुने ! संयतसाधो ! नानारुचिं क्रियावाद्यादिमतविषय-मनिलापं परिवर्जयेः, च पुनर्ये-ऽनर्था अनर्थहेतवो ये सर्वार्था अशेषहिंसादयो गम्यत्वात्तान् परिवर्जयेरिति संबंधः. इत्ये-वंरूपां विद्यां सम्यग्ज्ञानरूपामनुलक्ष्यीकृत्य संचरेस्त्वं संयमाध्वनि यायाः, अहमपीति वि-द्यां ज्ञानं ज्ञात्वांगीकृत्य संयममार्गे यामीति त्वयापि तथैव संचरितव्यमिति हार्दं. ॥ ३० ॥ च पुनश्छंदः स्वमतिकल्पिताभिप्रायं नानाविधं परिवर्जयेः,

॥ मूलम् ॥—पडिक्कमामि पसिणाणं । परमंतेहिं वा पुणो ॥ अहो उट्ठिए अहोरायं । इइ विज्जा तवं चरे ॥ ३१ ॥ व्याख्या—पुनः स्वाचारं वक्ति, हे मुने! अहं 'पसिणाणं' इति प्राकृतत्वाद्विभक्तिव्यत्ययः, प्रश्नेभ्यः शुभाशुभसूचकांगुष्टादिप्रश्नेभ्यः प्रतिक्रमामि परा-ङ्मुखो भवामि. वाथवा पुनः परमंत्रेभ्यः प्रतिक्रमामि प्रतिनिवर्ते, परस्य गृहस्थस्य मंत्राणि कार्यालोचनानि तेभ्यः परमंत्रेभ्यः, एभ्यः सर्वेभ्यः पराङ्मुखो भवामि. अहो इति आश्चर्ये, अहोरात्रमुत्थितो धर्मप्रत्युद्यतः कश्चिदेव महात्मैवंविधः स्यात्, इति विदन्निति जानंस्तपश्च-रेः, न तु प्रश्नमंत्रादिके चरेः. ॥ ३१ ॥

॥ मूलम् ॥—जं च पुच्छसि काले । सम्मं सुद्धेण चेयसा ॥ ताइं पाउकरे बुद्धे । तं नाणं जिणसासणे ॥ ३२ ॥ व्याख्या—अथ संयतमुनिना पृष्टं, त्वमायुः कथं जानासि? तदा पुनः क्षत्रियमुनिराह—हे संयत! त्वं मां काले इति कालविषयमायुर्विषयं ज्ञानं पृच्छसि. कीदृशस्त्वं? सम्यक् शुद्धेन निर्मलेन चित्तेनोपलक्षितः. तमिति सूत्रत्वात्तद् ज्ञानं बुद्धः श्रीमहावीरः, अथवा बुद्धः श्रुतज्ञानवान् प्राडुरकरोत्. पुनस्तच्च ज्ञानं श्रीजिनशासने जानीहि? नापरस्मिन् कुत्रापि दर्शनेऽस्ति. ततोऽहं तत्र स्थितः, तत्प्रसादाद् बुद्धोऽस्मीति भावः. ॥३२॥

॥ मूलम् ॥—किरियं च रोए धीरो । अकिरियं परिवज्जए ॥ दिट्ठीए दिट्ठीसंपन्ने । धम्मं चरसु दुच्चरं ॥ ३३ ॥ व्याख्या—धीरोऽक्षोभ्यः क्रियां जीवस्य विद्यमानतां जीवसत्तां रोचयति, स्वयं स्वस्मै अभिलषयति, तथा परस्मै अप्यभिलषयतीत्यर्थः. अथवा क्रियां सम्यगनुष्टानरूपां प्रतिक्रमणप्रतिलेखनारूपां मोक्षमार्गसाधनभूतां ज्ञानसहितां क्रियां रोचयति. पुनरक्रियां जीवस्य नास्तित्वं जीवे जीवस्याऽविद्यमानतां परिवर्जयेत्. अथवा अक्रियां मिथ्यात्विभिः कल्पितां कष्टक्रियामज्ञानक्रियां परित्यजेत्. पुनर्धीरः पुमान् दृष्ट्या सम्यग्द-

र्शनात्मिकया दृष्टिसंपन्नो भवति. दृष्टिः सम्यग्ज्ञानात्मिका बुद्धिस्तया संपन्नः सहितो दृष्टिसंपन्नः, सम्यग्दर्शनेन सम्यग्ज्ञानसहित इत्यर्थः. तस्मात्त्वमपि सम्यग्ज्ञानदर्शनसहितः सन् सुदुश्चरं कर्तुमशक्यं धर्मं चारित्रधर्मं चरांगीकुरु? ॥ ३३ ॥

॥ मूलम् ॥—एयं पुराणपयं सोच्चा । अत्थधम्मोवसोहियं ॥ भरहोवि भारहं वासं । चिच्चा कामाइ पवए ॥ ३४ ॥ व्याख्या—अथ क्षत्रियमुनिः संयतमुनिंप्रति महापुरुषाणां धर्ममार्गप्रवर्तितानां दृष्टांतेन दृढीकरोति. हे मुने! भरतोऽपि भरतनामा चक्र्यपि भारतं क्षेत्रं पट्खंमर्द्धिं त्यक्त्वा पुनः कामान् कामभोगांस्त्यक्त्वा प्रव्रजितो दीक्षां प्रपन्न इत्यर्थः. किं कृत्वा? एतत्पूर्वोक्तं पुण्यपदं श्रुत्वा, पुण्यं च तत्पदं च पुण्यपदं, पुण्यं पवित्रमर्थान्निष्कलंकं निर्दूषणं, अथवा पुण्यं पुण्यहेतुभूतं, एतादृशं पदं. पद्यते ज्ञायतेऽर्थोऽनेनेति पदं सूत्रं जिनोक्तमागमं, क्रियावाद्यादिनानारुचिवर्जननिवेदकशब्दसूचनालक्षणं, तत् श्रवणविषयीकृत्य, अथवा पूर्णं पदं, पूर्णपदं संपूर्णज्ञानं, पदशब्देन ज्ञानमप्युच्यते. कीदृशं पुण्यपदं? अर्थधर्मोपशोभितं, अर्थ्यते प्रार्थ्यते इत्यर्थः, स्वर्गापवर्गलक्षणः पदार्थः, धर्मस्तदुपायभूतः, अर्थश्च

धर्मश्चार्थधर्मौ, ताभ्यामुपशोभितमर्थधर्मोपशोभितं. एतादृशं जिनोक्तं सिद्धांतमर्थधर्मसहितं श्रुत्वा यदि भरतश्चक्रधरः संपूर्णभरतक्षेत्रं षट्खंडसाम्राज्यं त्यक्त्वा दीक्षां जग्राह, तदा त्वयाप्यस्मिन् जिनोक्तागमे चलितव्यं, महाजनो येन गतः स पंथेत्युक्तत्वात्. सकलनृपेषु ऋषभपुत्रो भरतो मुख्यस्तेनायं मार्गः समाश्रित इत्यर्थः. ॥ ३४ ॥ अथात्र भरतचक्रिणः कथा—

अयोध्यायां नगर्यां श्रीऋषभदेवपुत्रः पूर्वभवकृतमुनिजनवैयावृत्त्यार्जितचक्रिभोगः प्रथमचक्री भरतनामास्ति. तस्य नवनिधानानां चतुर्दशरत्नानां द्वात्रिंशत्सहस्रनरपतीनां द्विसप्ततिसहस्रपुरवराणां षण्णवतिकोटिग्रामाणां चतुरशीतिशतसहस्रहयगजरथानां षट्खंडभरतस्यैश्वर्यमनुभवतः, स्वसंपत्त्यनुसारेण साधर्मिकवात्सल्यं कुर्वतः, स्वयं कारिताष्टापदशिरःसंस्थितचतुर्मुखयोजनायामजिनायतनमध्यस्थापितनिजनिजवपुःप्रमाणोपेतश्रीऋषभादिचतुर्विंशतिजिनप्रतिमावंदनार्चनं समाचरतः श्रीभरतचक्रिणः पंच पूर्वलक्षाण्यतिक्रांतानि. अन्यदा महाविभूत्योद्वर्तितदेहः सर्वालंकारविभूषितः स भरतचक्री आदर्शभवने गतः. तत्र स्वदेहं प्रेक्षमाणस्यांगुलीयकं पतितं, तच्च तेन न ज्ञातं. आदर्शभित्तौ स्वदेहं पश्यता तेन पतितमु-

ड्रिका स्वकरांगुल्यशोभमाना दृष्टा. ततो द्वितीयांगुलीतोऽपि मुद्रिकाऽपनीता. साप्यशोभमाना दृष्टा. ततः क्रमात्सर्वांगाभरणान्युत्तारितानि. तदा स्वशरीरमतीवाशोभमानं निरीक्ष्य संवेगमापन्नश्चक्री एवं चिंतितुं प्रवृत्तः. अहो! आगंतुकद्रव्यैरेवेदं शरीरं शोभते, न स्वभावसुंदरं. अपि चैतच्छरीरसंगेन सुंदरमपि वस्तु विनश्यति. उक्तं च—मणुन्नं असणपाणं । विविहं खाइमसाइमं ॥ सरीरसंगमावन्नं । सव्वंपि असुई भवे ॥ १ ॥ वरं वत्थं वरं पुप्फं । वरं गंधविलेवणं ॥ विनस्सए सरीरेण । वरं सयणमासणं ॥ २ ॥ निहाणं सव्वरोगाणं । कयग्घमथिरं इमं ॥ पंचासुहभूअमयं । अथक्कपरिक्कमणं ॥ ३ ॥ तत एतच्छरीरकृते सर्वथा न युक्तमनेकपापकर्मकरणेन मनुष्यजन्महारणं. यत उक्तं—लोहाय नावं जलधौ भिनत्ति । सूत्राय वैडूर्यमणिं दृणाति ॥ सच्चंदनं ह्योषति भस्महेतो—र्यो मानुषत्वं नयतींद्रियार्थे ॥ १ ॥ इत्यादिकं चिंतयतस्तस्य भरतस्य प्राप्तभावचारित्रस्य प्रवर्धमानशुभाध्यवसायक्षपकश्रेणिप्रपन्नस्य केवलज्ञानमुत्पन्नं. शक्रस्तत्र समायातः, कथयति च द्रव्यलिंगं प्रपद्यस्व? येन दीक्षोत्सवं करोमि. ततो भरतकेवलिना स्वमस्तके पंचमौष्टिको लोचः कृतः, शासनदेवतया च र-

जोहरणोपकरणानि दत्तानि. दशसहस्रराजभिः समं प्रव्रजितो भरतः, शेषचक्रिणस्तु सहस्रपरिवारेण प्रव्रजिताः. ततः शक्रेण वंदितोऽसौ ग्रामाकरनगरेषु भ्रमन् भव्यसत्वान् प्रतिबोधयन् एकपूर्वलक्षं यावत् केवलिपर्यायं पालयित्वा परिनिर्वृतः. तत्पट्टे च शक्रेणादित्ययशा नृपोऽभिषिक्तः. इति भरतदृष्टांतः. ॥ ३४ ॥ पुनस्तदेव महापुरुषदृष्टांतेन दृढ यति—

॥ मूलम् ॥—सगरोवि सागरंतं । भरहवासं नराहिवो ॥ इस्सरियं केवलं हिच्चा । दयाइ परिनिव्वुडे ॥ ३५ ॥ व्याख्या—हे मुने! सगरोऽपि सगरनामा नराधिपोऽपि दयया संयमेन परिनिर्वृतः, कर्मभ्यो मुक्तः. अत्र नराधिपशब्देन अपिशब्दाद् द्वितीयश्चक्रवर्त्यधिकारादनुक्तोऽपि चक्र्येव गृह्यते. किं कृत्वा? भरतवर्षं भरतक्षेत्रमर्थाद्भरतक्षेत्रराज्यं त्यक्त्वा, पुनः केवलं परिपूर्णमेकछत्ररूपमैश्वर्यं हित्वा त्यक्त्वा, कीदृशं भरतवर्षं? सागरांतं समुद्रांतसहितं, चुल्लहिमवत्पर्वतं यावद्विस्तीर्णं भरतक्षेत्रराज्यमित्यर्थः. ॥ ३५ ॥ अत्र सगरचक्रवर्तिदृष्टांतः, तथाहि—अयोध्यायां नगर्यामीक्ष्वाकुकुलोद्भवो जितशत्रुनृपोऽस्ति, तस्य भार्या विजयानाम्न्यस्ति. सुमित्रनामा जितशत्रुसहोदरो युवराजो वर्तते, तस्य यशोमतीनाम्नी भार्या-

म्नि. जितशत्रुराज्ञ्या विजयानाम्न्या चतुर्दशमहास्वप्नसूचितः पुत्रः प्रसूतः, तस्य नामाऽजित इति दत्तं, स च द्वितीयस्तीर्थंकर इति. सुमित्रयुवराजपत्न्या यशोमत्या सगरनामा द्वितीयश्चक्रवर्ती प्रसूतः. तौ द्वावपि यौवनं प्राप्तौ, पितृभ्यां कन्याः परिणायितौ. कियता कालेन जितशत्रुराज्ञा निजे राज्येऽजितकुमारः स्थापितः, सगरश्च यौवराज्ये स्थापितः. सहोदरसुमित्रसहितेन जितशत्रुनृपेण दीक्षा गृहीता. अजितराज्ञा च कियत्कालं राज्यं परिपाल्य तीर्थप्रवर्तनसमये स्वराज्ये सगरं स्थापयित्वा दीक्षा गृहीता. सगरस्तूत्पन्नचतुर्दशरत्नः साधितपट्खण्डभरतक्षेत्रो राज्यं पालयति. तस्य पुत्राः षष्टिसहस्रसंख्याका जाताः, सर्वेषां तेषां मध्ये ज्येष्ठो जह्नुकुमारो वर्तते. अन्यदा जह्नुकुमारेण कथंचित्सगरः संतोषितः. स उवाच, जह्नुकुमार! यत्तव रोचते तन्मार्गय? जह्नुरुवाच तात ममास्त्ययमभिलाषः, यत्तातानुज्ञातोऽहं चतुर्दशरत्नसहितोऽखिलभ्रातृपरिवृतः पृथ्वीं परिभ्रमामि. सगरचक्रिणा तत्प्रतिपन्नं. प्रशस्ते मुहूर्ते सगरचक्रिणः समीपात्स निर्गतः सबलवाहनोऽनेकजनपदेषु भ्रमन् प्राप्तोऽष्टापदपर्वते. सैन्यमधस्तान्निवेश्य स्वयमष्टापदपर्वतमारूढः. दृष्टवांस्तत्र भरतनरेंद्रकारितं मणिक-

नकमयं चतुर्विंशतिजिनप्रतिमाधिष्टितं स्तूपशतसंगतं जिनायतनं. तत्र जिनप्रतिमा अभिवंद्य जह्नुकुमारेण मंत्रिणः पृष्टं, केन सुकृतवतेदमतीवरमणीयं जिनभवनं कारितं? मंत्रिणा कथितं भवत्पूर्वजेन श्रीभरतचक्रिणेति श्रुत्वा जह्नुकुमारोऽवदत्, अन्यः कश्चिदष्टापदसदृशः पर्वतोऽस्ति? यत्रेदृशमन्यं चैत्यं कारयामः. चतसृषु दिक्षु पुरुषास्तद्गवेषणाय प्रेषिताः, ते सर्वत्र परिभ्रम्य समायाताः, ऊचुश्च स्वामिन् ईदृशः पर्वतः क्वापि नास्ति, जह्नुना भणितं यद्येवं वयं कुर्म एतस्यैव रक्षां. यतोऽत्र क्षेत्रे कालक्रमेण लुब्धाः शठाश्च नरा भविष्यंति. अभिनवकारणात्पूर्वकृतपरिपालनं श्रेयः. ततश्च दंडरत्नं गृहीत्वा समंततोऽष्टापदपार्श्वेषु जह्नुप्रमुखाः सर्वेऽपि कुमाराः खातुं लग्नाः. तच्च दंडरत्नं योजनसहस्रं भित्वा प्राप्तं नागभवनेषु, तेन तानि भिन्नानि दृष्ट्वा नागकुमाराः शरणं गवेषयंतो गता नागराजज्वलनप्रभसमीपे, कथितः स्वभवनविदारणवृत्तांतः. सोऽपि संभ्रांत उत्थितोऽवधिना ज्ञात्वा क्रोधोध्धुर समागतः सगरसुतसमीपं, भणितवांश्च भो भो किं भवद्भिर्दंडरत्नेन पृथ्वीं विदार्यास्मद्भवनोपद्रवः कृतः? अविचार्य भवद्भिरेतत्कृतं. यत उक्तं—

अप्पवहाए नूणं । होइ वलं उत्तणाण जुवणंमि ॥ णियपक्खवलेणं चिय । पक्खइ पयं-
गो पईवंमि ॥ १ ॥ ततो नागराजोपशमननिमित्तं जह्नुना नणितं, नो नागराज ! कुरु प्रसा-
दं. उपसंहर कोपसंभरं, क्षमस्वास्मदपराधमेकं, न ह्यस्माभिर्नवतामुपद्रवनिमित्तमेतत्कृतं,
किंत्वष्टापदचैत्यरक्षार्थमेषा परिखा कृता. न पुनरेवं करिष्यामः. तत उपशांतकोपो ज्वलन-
प्रनः स्वस्थानं गतः. जह्नुकुमारेण भ्रातॄणां पुर एवं नणितं, एषा परिखा दुर्लंघ्यापि जलवि-
रहिता न शोनते, तत इमां नीरेण पूरयामः. ततो दंमरत्नेन गंगां भित्वा जह्नुना जलमा-
नीतं. नृता च परिखा. तज्जलं नागनवनेषु प्राप्तं, जलप्रवाहसंत्रस्तं नागनागिनीप्रकरमित-
स्ततः प्रणश्यंतं प्रेक्ष्य प्रदत्तावधिज्ञानोपयोगः कोपानलज्वालामालाकुलो ज्वलनप्रन एवम-
चिंतयत्. अहह्हो ! एतेषां जह्नुकुमारादीनां महापापानां मयैकवारमपराधः क्षांतः, पुनरधि-
कतरमुपद्रवः कृतः. ततो दर्शयाम्येषामविनयफलं. इति ध्यात्वा ज्वलनप्रनेण तद्वधार्थं न-
यनविषा महाफणिनः प्रेषिताः. तैः परिखाजलांतर्निर्गत्य नयनैस्ते कुमाराः प्रलोकिताः. न-
स्मराशीभूताश्च सर्वेऽपि सगरसुताः. तथाभूतांस्तान् वीक्ष्य सैन्ये हाहारवो जातः, मंत्रिणो-

क्रमेते तु तीर्थरक्षां कुर्वतोऽवश्यन्नावितयेमामवस्थां प्राप्ताः सन्नतावेव गता नविष्यंतीति किं शोच्यते? अतस्त्वरितमितः प्रयाणं क्रियते, गम्यते च महाराजचक्रिसमीपं. सर्वसैन्येन मंत्रिवचनमंगीकृतं, ततस्त्वरितप्रयाणकरणेन क्रमात्प्राप्तं स्वपुरसमीपे. ततः सामंतामात्यादिन्निरेवं विचारितं समस्तपुत्रवधोदंतः कथ चक्रिणो वक्तुं पार्यते? ते सर्वे दग्धाः, वयं चाक्षतांगाः समायाता. एतदपि प्रकामं त्रपाकरं. ततः सर्वेऽपि वयं प्रविशामोऽग्नौ. एवं विचारयतां तेषां पुरः समायात एको द्विजः. तेनेदमुक्तं, न्नो वीराः! किमेवमाकुलीनूताः? मुंचत विषादं, यतः संसारे न किंचित्सुखं, दुःखमत्यंतमद्भुतमस्ति, भणितं च—

कालंमि अणाइए। जीवाणं विविहकम्मवसगाणं॥ तं नत्थि संविहाणं। जं संसारे न संन्नवइ॥ १॥ अहं सगरचक्रिणः पुत्रवधव्यतिकरं कथयिष्यामि. सामंतादिन्निस्तद्वचः प्रतिपन्नं. ततः स द्विजो मृतं बालकं करे धृत्वा मुष्टोऽस्मीति वदन् सगरचक्रिगृहद्वारे गतः. चक्रिणा तस्य विलापशब्दः श्रुतः. चक्रिणा स द्विज आकारितः, केन मुष्टोऽसीति चक्रिणा पृष्टः स प्राह, देव! एक एव मे सुतः सर्पेण दष्टो मृतः, एतद् दुःखेनाहं विलपामीति, हे

करुणासागर! त्वमेनं जीवय? अस्मिन्नवसरे तत्र मंत्रिसामंताः प्राप्ताः, चक्रिणं प्रणम्य चोपविष्टाः, तदानीं चक्रिणा राजवैद्यमाकार्यैवमुक्तं, एनं निर्विषं कुरु? वैद्येन तु चक्रिसुतमरणं श्रुतवतोक्तं, राजन्! यस्मिन् कुले कोऽपि न मृतस्तत्कुलाद्भस्म यद्येष आनयति तदैनमहं जीवयामि. द्विजेन गृहे गृहे प्रश्नपूर्वकं तस्य मार्गितं. गृहमनुष्याः स्वभ्रातृपितृभ्रातृदुहितृप्रमुखकुटुंबमरणान्याचख्युः. द्विजश्चक्रिसमीपे समागत्योवाच, नास्ति वैद्योपदिष्टतादृशभस्मोपलब्धिः, सर्वगृहे कुटुंबमनुष्यमरणसद्भावात्. चक्रिणोक्तं यद्येवं तत्किं स्वपुत्रं शोचसि? सर्वसाधारणमिदं मरणं. उक्तं च—किं अत्थि कोइ भुवणे । जस्स जायाइं नेव यायाइं ॥ नियकम्मपरिणईए । जम्ममरणाइं संसारे ॥ १ ॥ ततो भो ब्राह्मण! मा रुद? शोकं मुंच? आत्महितं कार्यं चिंतय? यावत्त्वमप्येवं मृत्युसिंहेन न कवलीक्रियसे. विप्रेण भणितं, देव! अहमपि जानाम्येवं, परं पुत्रमंतरेण संप्रति मे कुलक्षयः, तेनाहमतीवदुःखितः, त्वं तु दुःखितानाथवत्सलोऽप्रतिहतप्रतापश्चासि, ततो मे देहि पुत्रजीवितदानेन मनुष्यभिक्षां? चक्रिणा भणितं भद्र! इदमशक्यप्रतीकारं. उक्तं च—

सीयंति सव्वसत्ताइं। एत्थ न कम्मंति मंततंताइं॥ अदिठ्ठपहरगंसि। विहिंपि किं पोरुसं कुणई ॥ १ ॥ ततः परित्यज्य शोकं कुरु परलोकहितं? मूर्ख एव हृते नष्टे मृते करोति शोकं. विप्रेण भणितं महाराज! सत्यमेतत्, न कार्योऽत्र जनकेन शोकः, ततस्त्वमपि मा कार्षीः शोकं, असंभावनीयं भवतः शोककारणं जातं. संभ्रांतेन चक्रिणा पृष्टं भो विप्र! कीदृशं मम शोककारणं जातं? विप्रेण भणितं देव! तव षष्टिसहस्राः पुत्राः कालं गताः. इदं श्रुत्वा चक्री वज्रप्रहाराहत इव नष्टचेतनः सिंहासनान्निपतितो मूर्छितः, सेवकैरुपचरितश्च. मूर्छावसाने च शोकातुरमना मुत्कलकंठेन रुरोद, एवं विलापांश्च चकार, हा पुत्राः! हा हृदयदयिताः! हा बंधुवल्लभाः! हा शुभस्वभावाः! हा विनीताः! हा सकलगुणनिधयः! कथं मामनाथं मुक्त्वा यूयं गताः? युष्मद्विरहार्त्तस्य मम दर्शनं ददत? हा निर्दय पाप विधे! एकपदेनैव सर्वांस्तान् बालकान् संहरतस्तव किं पूर्णं जातं? हा निष्ठुरहृदय! असह्यसुतमरणसंतप्तं त्वं किं न शतखंडं भवसि? एवं विलपमानश्चक्री तेन विप्रेण भणितः महाराज! त्वं मम संप्रत्येवमुपदिष्टवान्, स्वयं च कथं शोकं गच्छसीति? उक्तं च—परवसणंमि सुहेणं

। संसारमावन्नं कहइ जोई ॥ णियबंधुजणविणासे । सव्वस्सवि चलइ धीरत्तं ॥ १ ॥ एक- पुत्रस्यापि मरणं दुःसहं, किं पुनः षष्टिसहस्रपुत्राणां? तथापि सत्पुरुषा व्यसनं सहंते, पृथि- व्येव वज्रनिपातं सहते, नापर इति. अतोऽवलंबस्व सुधीरत्वं? अलमत्र विलपितेन. यत उक्तं-सोयंताणं पि नो ताणं । कम्मबंधो उ केवलो ॥ तो पंडिया न सोयंति । जाणंता ज- वत्तणं ॥ १ ॥ एवमादिवचनविन्यासैर्विप्रेण स्वस्थीकृतो राजा, जणिताश्च तेनैव सामंतमं- त्रिणः, वदंतु यथावृत्तं षष्टिसहस्रपुत्र[illegible]व्यतिकरं. तैरुक्तः सकलोऽपि तद्व्यतिकरः, प्रधान- पुरुषैः सं[illegible]रपि राजा धीरत्वं नीतः, उचितकृत्यं कृतवान्. अत्रांतरेऽष्टापदासन्नवासिनो जनाः प्रणम्य चक्रिणं एवं कथयंति, यथा देव ! यो युष्मदीयसुतैरष्टापदरक्षणार्थं गंगाप्रवा- ह आनीतः, स आसन्नग्रामनगराण्युपद्रवति, तं जवान्निवारयतु देवः. अन्यस्य कस्यापि त- न्निवारणशक्तिर्नास्तीति. चक्रिणा स्वपौत्रो जगीरथिर्जणितः, वत्स ! नागराजमनुज्ञाप्य दंड- रत्नेन गंगाप्रवाहं नय समुद्रं. ततो जगीरथिरष्टापदसमीपं गतः, अष्टमजक्तेन नागराज आ- राधितः समागतो जणति, किं ते संपादयामि ? प्रणामपूर्वं जगीरथिना जणितं, तव प्रसा-

देनामुं गंगाप्रवाहमुदधिं नयामि, अष्टापदासन्नलोकानां महानुपद्रवोऽस्तीति. नागराजेन भणितं, विगतभयस्त्वं कुरु स्वसमीहितं? निवारयिष्याम्यहं भरतनिवासिनो नागान्, इति भणित्वा नागराजः स्वस्थानं गतः. भगीरथिनापि कृता नागानां बलिकुसुमादिभिः पूजा, ततः प्रभृति लोको नागबलिं करोति. भगीरथिर्दंडेन गंगाप्रवाहमाकर्षन् भंजंश्च बहून् स्थलशैलप्रवाहान् प्राप्तः पूर्वसमुद्रं, तत्रावतारिता गंगा, तत्र नागानां बलिपूजा विहिता, यत्र गंगा सागरे प्रवाहिता, तत्र गंगासागरतीर्थं जातं. गंगा जह्नुनाऽनीतेति जाह्नवी, भगीरथिना नीतेति भागीरथी. भगीरथिस्तदा मिलितैर्नागैः पूजितो गतोऽयोध्यां. पूजितश्चक्रिणा तुष्टेन स्थापितः स्वराज्ये. सगरचक्रवर्तिना श्रीअजितनाथसमीपे दीक्षा गृहीता, क्रमेण च कर्मक्षयं कृत्वा सगरः सिद्धः. अन्यदा भगीरथिना राज्ञा कश्चिदतिशयज्ञानी पृष्टः, भगवन्! किं कारणं? यज्जह्नुप्रमुखाः षष्टिसहस्रा भ्रातरः समकालं मरणं प्राप्ताः? ज्ञानिना भणितं, महाराज! एकदा महान् संघश्चैत्यवंदनार्थं सम्मेतपर्वते प्रस्थितः, अरण्यमुल्लंघ्यांतिमग्रामं प्राप्तः, तन्निवासिना सर्वेणानार्यजनेनात्यंतमुपद्रुतो दुर्वचनेन वस्त्रान्नधनहरणादिना

च. तत्प्रत्ययं तद्ग्रामवासिलोकैरशुभं कर्म बद्धं. तदानीमेकेन प्रकृतिभद्रकेण कुंभकारेणोक्तं, मोपद्रवतेमं तीर्थयात्रागतं जनं, इतरस्यापि निरपराधस्य परिक्लेशनं महापापस्य हेतुर्भवति, किं पुनरेतस्य धार्मिकजनस्य? यतो यद्येतस्य संघस्य स्वागतप्रतिपत्तिं कर्तुं न शक्तास्तदोपद्रवं तु रक्षतेति भणित्वा कुंभकारेण निवारितः स ग्रामजनः. संघस्ततो गतः. अन्यदा तद्ग्रामनिवासिनैकेन नरेण राजसन्निवेशे चौर्यं कृतं. ततो राजनियुक्तैः पुरुषैः स ग्रामो द्वारपिधानपूर्वकं ज्वालितः. तदा स कुंभकारः साधुप्रसिद्ध्या ततो निष्कासितोऽन्यस्मिन् ग्रामे गतः. तत्र षष्टिसहस्रजना दग्धाः, उत्पन्ना विराटविषयेंतिमग्रामे कोड्रवित्वेन. ताः कोड्रव्य एकत्र पुंजीभूताः स्थिताः संति. तत्रैकः करी समायातः. तच्चरणेन ताः सर्वा अपि मर्दिताः. ततो मृतास्ते नानाविधासु दुःखप्रचुरासु योनिषु सुचिरं परिभ्रम्यानंतरभवे किंचिच्छुभकर्मोपार्ज्य सगरचक्रिसुतत्वेनोत्पन्नाः. षष्टिसहस्रप्रमाणा अपि ते तत्कर्मशेषवशेन तादृशं मरणव्यसनं प्राप्ताः. सोऽपि कुंभकारस्तदा स्वायुःक्षये मृत्वा एकस्मिन् सन्निवेशे धनसमृद्धो वणिग्जातः. तत्र कृतसुकृतो मृत्वा नरपतिः संजातः. तत्र शुभानुबंधेन शुभकर्मोदयेन प्रतिपन्नो मुनिध-

र्म. शुद्धं च परिपाल्य ततो मृत्वा सुरलोकं गतः. ततश्च्युतस्त्वं जह्नुसुतो जातः. इदं भगीरथिः श्रुत्वा संवेगमुपागतस्तमतिशयज्ञानिनं नत्वा गतः स्वभवनं. इदं च भगीरथिपृष्ठासंविधानकं प्रसंगत उक्तं. इति सगरदृष्टांतः. २. ॥ ३५ ॥

॥ मूलम् ॥—चइत्ता भारहं वासं । चक्कवट्टी महड्ढिए ॥ पवज्जमब्भुवगओ । मघवं नाम महाजसो ॥ ३६ ॥ व्याख्या—पुनर्मघवानामा तृतीयचक्रवर्ती प्रव्रज्यां दीक्षामभ्युगतश्चारित्रं प्राप्तः. कीदृशो मघवा ? महर्द्धिकश्चतुर्दशरत्ननवनिधानधारको वैक्रियर्द्धिधारीवा. पुनः कीदृशः ? महायशा विस्तीर्णकीर्तिः. ॥ ३६ ॥ अत्र मघवाख्यस्य चक्रिणो दृष्टांतः—

इहैव भरतक्षेत्रे श्रावस्त्यां नगर्यां समुद्रविजयस्य राज्ञो भद्रादेव्याः कुक्षौ चतुर्दशमहास्वप्नसूचितो मघवानामा चक्री समुत्पन्नः. स च यौवनस्थो जनकेन वितीर्णराज्यः क्रमेण प्रसाधितभरतक्षेत्रस्तृतीयश्चक्रवर्ती जातः. सुचिरं राज्यमनुभवतस्तस्यान्यदा भवविरक्तता जाता. स एवं भावयितुं प्रवृत्तः, येऽत्र प्रतिबंधहेतवो रमणीयाः पदार्थास्तेऽस्थिराः, उक्तं च—हियइछिया उ दारा । सुआ विणीया मणोरमा भोगा ॥ विउला लच्छी देहो । निरामओ दीह-

जीवित्तं ॥ १ ॥ भवपरिबंधनिमित्तं। एगाइवत्थु न वर सव्वंपि ॥ कइवयदिणावसाणे । सुमिणोवोगुव्व न हि किंचि ॥ २ ॥ ततोऽहं धर्मकर्मण्युद्यमं करोमि, धर्म एव भवांतरानुगामी. एवमादिकं परिभाव्य पुत्रनिहितराज्यो मघवाचक्री परिव्रजितः. कालक्रमेण विविधतपश्चरणेन कालं कृत्वा सनत्कुमारे कल्पे गतः. इति मघवादृष्टांतः. ३. ॥ ३६ ॥

॥ मूलम् ॥—सणंकुमारो मणुस्सिंदो । चक्कवट्टी महड्ढिए ॥ पुत्तं रज्जे ठविऊणं । सोवि राया तवं चरे ॥ ३७ ॥ व्याख्या—पुनः सनत्कुमारो मनुष्येंद्रश्चतुर्थचक्री, सोऽपि तपश्चारित्रं समाचरदित्यर्थः. किं कृत्वा ? पुत्रं राज्ये स्थापयित्वा. स च कीदृशः ? महर्द्धिकः. ॥ ३७ ॥ अत्र सनत्कुमारदृष्टांतः—

अस्त्यत्र भरतक्षेत्रे कुरुजंगलजनपदे हस्तिनागपुरं नाम नगरं. तत्राश्वसेनो नाम राजा. तस्य भार्या सहदेवीनाम्नी. तयोः पुत्रश्चतुर्दशस्वप्नसूचितश्चतुर्थश्चक्रवर्ती सनत्कुमारो नाम. तस्य सूरिकालिंदीतनयेन महेंद्रसिंहेन परममित्रेण समं कलाचार्यसमीपे सर्वकलाभ्यासो जातः. सनत्कुमारो यौवनमनुप्राप्तः. अन्यदा वसंतसमयेऽनेकराजपुत्रनगरलोकसहितः सन-

त्कुमारः क्रीमार्थमुद्याने गतः. तत्राश्वक्रीमां कर्तुं सर्वे कुमारा अश्वारूढाः स्वं स्वमश्वं खेलयंति. सनत्कुमारोऽपि जलधिकल्लोलाजिधानं तुरंगमारूढः समकालं सर्वैः कुमारैः सह. ततो विपरीतशिक्षितेन कुमाराश्वेन तथा गतिः कृता, यथाऽपरकुमाराश्वाः प्राक् पतिताः. कुमाराश्वस्त्वदृश्यीजूतः. ज्ञातवृत्तांतो राजा सपरिकरस्तत्पृष्ठौ चलितः. अस्मिन्नवसरे प्रचंरुवायुर्वातुं लग्नः, तेन तुरंगपदमार्गो जग्नः. महेंद्रासिंहो राजाज्ञां मार्गयित्वोन्मार्गेणैव कुमारमार्गणाय लग्नः, प्रविष्टो जीषणां महाटवीं. तत्र भ्रमतस्तस्य वर्षमेकमतिक्रांतं. एकस्मिन् दिवसे गतः स्तोकं भूमिभागं यावत्, तावदेकं महत्सरो दृष्टवान्, तत्र कमलपरिमलमाघ्रातवान्, श्रुतवांश्च मधुरगीतवेणुरवं. यावन्महेन्द्रासिंहोऽग्रे गच्छति, तावत्तरुणीगणमध्यसंस्थितं सनत्कुमारं दृष्टवान्. विस्मितमना महेन्द्रासिंहश्चिंतयति, किं मयैष विभ्रमो दृश्यते? किं वा सत्य एवायं सनत्कुमारः? यावदेवं चिंतयन्महेन्द्रासिंहस्तिष्ठति तावत्पठितमिदं बंदिना—जय आससेण नहयल-मयंककुरुजुवणलग्गणे खंन ॥ जय तिहुअणनाह सणं—कुमार जय लऊमाहप्पं ॥ १ ॥ ततो महेंद्रासिंहः सनत्कुमारोऽयमिति निश्चितवान्.

अथ प्रकामं प्रमुदितमना महेंद्रसिंहः सनत्कुमारेण दूरादागच्छन् दृष्टः. सनत्कुमारोऽभ्युत्थायाभिमुखमाययौ. महेंद्रसिंहः सनत्कुमारपादयोः पतितः. सनत्कुमारेण समुत्थापितो गाढमालिंगितश्च. द्वावपि प्रमुदितमनस्कौ विद्याधरदत्तासने उपविष्टौ. विद्याधरलोकश्च तयोः पार्श्वे उपविष्टः. अथानंदजलपूरितनयनेन सनत्कुमारेण भणितं, मित्र! कथमेकाक्येव त्वमस्यामटव्यामागतः? कथं चात्र स्थितोऽहं त्वया ज्ञातः? किं च करोति मद्विरहे मम पिता माता च? कथितः सर्वो वृत्तांतो महेंद्रसिंहेन. ततो महेंद्रसिंहो वरविलासिनीभिर्मज्जितः स्नापितश्च. भोजनं द्वाभ्यां सममेव कृतं. भोजनावसाने च महेंद्रसिंहेन सनत्कुमारः पृष्टः, कुमार! तदा त्वं तुरंगमेणापहृतः क गतः? क स्थितश्च? कुत एतादृशी ऋद्धिस्त्वया प्राप्ता? सनत्कुमारेण चिंतितं न युक्तं निजचरित्रकथनं मुखेन, इति संज्ञिता स्वयं परिणीता खेचरेंद्रपुत्री विपुलमतीनाम्नी स्वप्रियसनत्कुमारवृत्तांतं स्वविद्याबलेन कथयितुं प्रवृत्ता—तदानीं कुमारो भवदादिषु पश्यत्सु तुरंगमेणापहृतो महाटव्यां प्रविष्टः, द्वितीयदिनेऽपि तथैव धावतोऽश्वस्य मध्याह्नसमयो जात. क्षुधापिपासाकुलितेन श्रांतेनाश्वेन-

निष्कासिता जिह्वा, कुमारस्तत उत्तीर्णः, सोऽश्वस्तदानीमेव मृतः. कुमारस्ततः पादाभ्यामेव चलितः, तृषाक्रांतश्च सर्वत्र जलं गवेषयन्नपि न प्राप. ततो दीर्घाध्वश्रमेण सुकुमारत्वेन चात्यंतमाकुलीभूतो दूरदेशस्थितं सप्तच्छदं वृक्षं पश्यन् तदभिमुखं धावन् कियत्कालानंतरं तत्र प्राप्तः. छायायामुपविष्टः पतितश्च लोचने भ्रामयित्वा कुमारः. अत्रावसरे कुमारपुण्यानुभावेन वनवासिना यक्षेण जलमानीतं, शिशिरशीतलजलेन सर्वांगं सिक्तः, आश्वासितश्च. लब्धचेतनेन कुमारेण जलं पीतं, पृष्टं च कस्त्वं? कुतो वानीतं जलमिदं? तेन भणितमहं यक्षोऽत्र निवासी, सलिलं चेदं मानसरोवरादानीतं. कुमारेणोक्तं यदि मां तद्दर्शयसि, तदा तत्र मानसरोवरे प्रक्षालयामि मद्वपुः, येन तत्तापोऽपनयति. तत् श्रुत्वा यक्षेण करतलसंपुटे-गृहीत्वा नीतो मानसरोवरं. तत्र व्यसनापतितोऽयमिति कृत्वा क्रुद्धेन वैताढ्यवासिनाऽसितयक्षेण समं कुमारस्य युद्धं जातं. तथाहि—यक्षेण प्रथमं मोटिततरुः प्रचंडः पवनो मुक्तः, तेन नभःस्थलं बहुलधूल्यांधकारितं. ततो विमुक्ताट्टहासा ज्वलनज्वालापिंगलकेशा पिशाचा मुक्ताः, कुमारस्तैर्मनाग् न भीतिं गतः. ततो नयनज्वालास्फुलिंगवर्षिभिर्नागपाशैः कुमा-

रो यक्षेण बद्धः. जीर्णरज्जुबंधनानीव तांस्त्रोटयतिस्म कुमारः. ततः करास्फालनपूर्वं मुष्टिमु-
दस्य यक्षः समायातः, तावता मुष्टिप्रहारेण कुमारस्तं खंडीकृतवान्. पुनर्यक्षः स्वस्थो भूत्वा
गुरुमत्सरेण कुमारं घनप्रहारेण हतवान्. तत्प्रहारार्त्तः कुमारश्छिन्नमूलद्रुम इव भूमौ निप-
तितः. ततो यक्षेण दूरमुत्क्षिप्य गिरिवरः कुमारस्योपरि क्षिप्तः. तेन दृढपीडितांगोऽसौ नि-
श्चेतनो जातः. अथ कियत्कालानंतरं लब्धसंज्ञः कुमारस्तेन समं बाहुयुद्धं चकार. कुमारेण
करमुद्गराहतो यक्षः प्रचण्डवाताहतचूत इव तथा भूमौ निपतितो यथा मृत इव दृश्यते,
परं देवत्वात्स न मृतः. आरार्टि कुर्वाणः स यक्षस्तथा नष्टो यथा पुनर्न दृष्टः. कौतुकान्नभ-
स्यागतविद्याधरैः पुष्पवृष्टिर्मुक्ता, उक्तं च जितो यक्षः कुमारेणेति. ततो मानससरसि यथेष्टं
स्नात्वोत्तीर्णः कुमारो यावत्स्तोकं भूमिभागं गतस्तावत्तत्र वनमध्यगता अष्टौ विद्याधरपुत्रीर्द-
ष्टवान्. ताभिरप्यसौ स्निग्धदृष्ट्या विलोकितः. कुमारेण चिंतितमेताः कुतः समायाताः संति?
पृच्छाम्यासां स्वरूपमिति पृष्टं कुमारेण तासां समीपे गत्वा मधुरवाण्या, कुतो भवंत्य आगताः?
किमर्थमेतच्छून्यमरण्यमलंकृतं? ताभिर्भणितं महाभाग! इतो नातिदूरे प्रियसंगमाभिधा-

नास्माकं पुर्यस्ति, त्वमपि तत्रैवागच्छेति भणितः किंकरीदर्शितमार्गस्तासां नगरीं प्राप्तः. कंचुकिपुरुषै राजभुवनं नीतः, दृष्टश्च तन्नगरस्वामिना भानुवेगराज्ञा, अभ्युत्थानादिना सत्कृतश्च. उक्तं राज्ञा महाभाग! त्वमेतासां ममाष्टकन्यानां वरो भव? पूर्वं ह्यत्रायातेनार्चिर्मालिनाम्ना मुनिनैवमादिष्टं, योऽसिताक्षं यक्षं जेष्यति स एतासां भर्ता भविष्यति. ततस्त्वमेताः परिणयेति नृपेणोक्ते कुमारेण तथेति प्रतिपन्नं. राज्ञा महामहःपूर्वकं विवाहः कृतः, कंकणं कुमारकरे बद्धं, सुप्तश्च ताभिः सार्धं रतिभवने कुमारः पल्यंकोपरि. निद्राविगमे चात्मानं भूमौ पश्यति, किमेतदिति चिंतितवांश्च, करबद्धं कंकणं च न पश्यति. ततः खिन्नमना कुमारस्ततो गंतुं प्रवृत्तः. अरण्यमध्ये च गिरिवरशिखरे मणिमयस्तंभप्रतिष्ठितं दिव्यभवनं दृष्टं. कुमारेण चिंतितमिदमपींद्रजालप्रायं भविष्यतीति. तदासन्ने यावद्गंतुं प्रवृत्तः कुमारस्तावत्तद्भवनांतः करुणस्वरेण रुदंत्या एकस्या नार्याः शब्दं श्रुतवान्. प्रविष्टस्तद्भवनांतः सप्तमभूमिमारूढः. रुदंत्या तत्रैकया कन्यया भणितं, कुरुजनपदनभस्तलमृगांकसनत्कुमार! त्वं भवांतरेऽपि मम भर्ता भूया इति वारंवारं भणंती पुनर्गाढं रोदितुं प्रवृत्ता. ततो रुदंत्यैव तया-

सनं दत्तं. तत्रोपविश्य कुमारस्तां पृष्टवान्, सनत्कुमारेण सह तव कः संबंधः? येन त्वं तमेवं स्मरसि. सा प्राह मम स मनोरथमात्रेण भर्ता. कथमिति कुमारेणोक्ते सा प्राह, अहं हि साकेतपुरस्वामिसुरथनामनरेन्द्रभार्याचंद्रयशापुत्र्यस्मि. अन्यदाहं यौवनं प्राप्ता, पित्रा च मत्कृतेऽनेकराजकुमारचित्रपटरूपाणि दूतैरानीय दर्शितानि. एकमपि चित्रपटरूपं मम न रोचते. एकदा सनत्कुमारचक्रिपटरूपं दूतैरानीय मे दर्शितं, तदत्यंतं मे रुरुचे. मोहिता चाहं तद्रूपमेव ध्यायंती स्वगृहे तिष्ठामि. तावदहमेकेन विद्याधरकुमारेण कुट्टिमतलादिहानीता. स विद्याविकुर्वितेऽस्मिन् धवलगृहे मां मुक्त्वा क्वापि गतश्च. सा कन्यका यावदेवं जल्पति, तावत्तेनाशनिवेगसुतेन वज्रवेगेन विद्याधरेण तत्रागत्य सनत्कुमार उत्क्षिप्तो गगनमंडले. सा च कन्या हाहारवं कुर्वाणा मूर्छापराधीना निपतिता पृथिवीपीठे.

तावदाकाशमार्गादागत्य सनत्कुमारेण स विद्याधरो मुष्टिप्रहारेण व्यापादितः, सनत्कुमारेण तस्यै स्ववृत्तांतः कथितः, परिणीता च सा सुनंदाभिधाना कन्या, सास्य स्त्रीरत्नं भविष्यति. स्तोकवेलायां तत्र वज्रवेगविद्याधरभगिनी संध्यावली समागता. भ्रातरं व्यापादि-

तं दृष्ट्वा कोपमुपागता. पुनरपीदं नैमित्तिकं वचः स्मृतिपथमागतं, यथा तव भ्रातृवधकस्तव भर्ता भविष्यतीति मत्वा कुमारस्यैवं विज्ञप्तिं चकार. अहमिह त्वां विवाहार्थमायातास्मीति. सनत्कुमारेण सा तत्रैव परिणीता. अत्रांतरे सनत्कुमारसमीपे द्वौ विद्याधरनृपौ समायातौ. ताभ्यां प्रणामपूर्वं कुमारस्यैवं भणितं, देव ! अशनिवेगविद्याधरो विद्याबलज्ञातपुत्रमरणवृत्तांतस्त्वया समं योद्धुमायाति. अतश्चंद्रवेगभानुवेगाभ्यामावां हरिचंद्रचंद्रसेनाभिधानौ निजपुत्रौ प्रेषितौ, रहसि संनाहश्च प्रेषितः. आवामस्मत्पितरौ च भवत्सेवार्थं संप्राप्ताः. तदनंतरं तत्र समागतौ चंद्रवेगभानुवेगौ सनत्कुमारस्य साहाय्याय. संध्यावल्या प्रज्ञप्तिविद्या दत्ता. चंद्रवेगभानुवेगसहितः सनत्कुमारः संग्रामाभिमुखं चलितः. तावताऽशनिवेगः सैन्यवृत्तः समायातः. तेन समं प्रथमं चंद्रवेगभानुवेगौ योद्धुं प्रवृत्तौ. चिरकालं युद्धं कृत्वा तयोर्बलं भग्नं. ततः स्वयमुत्थितः सनत्कुमारः, तेनाशनिवेगेन समं घोरं युद्धमारब्धं. प्रथमं महोरगास्त्रं कुमारस्याभिमुखं मुक्तं, तच्च कुमारेण गरुडास्त्रेण विनिहतं. पुनस्तेनाग्नेयं शस्त्रं मुक्तं, तत्कुमारेण वरुणास्त्रेण निहतं. पुनस्तेन वायव्यास्त्रं मुक्तं, कुमारेण शैलास्त्रेण प्रतिहतं.

ततो गृहीतधनुर्बाणान्मुंचन् कुमारस्तं निर्जीवमिव चकार. पुनर्गृहीतकरवालः सनत्कुमारेण छिन्नदक्षिणकरः स कृतः. ततो द्वितीयकरेण बाहुयुद्धमिच्छतस्तस्याभिमुखमायातस्य कुमारेण चक्रेण शिरश्छिन्नं. तदानीमशनिवेगविद्याधरलक्ष्मीरनेकविद्याधरैः सहिता सनत्कुमारे संक्रांता. ततोऽशनिवेगं हत्वा चंद्रवेगादिविद्याधरपरिवृतः सनत्कुमारो नभोमार्गाद्विद्याधररथेन समुत्तीर्य तदावासे पुनरायातः, दृष्टस्तत्र हर्षिताभ्यां सुनंदासंध्यावलीभ्यां, उक्तं च ताभ्यामार्यपुत्र! स्वागतं. अत्र च समस्तविद्याधरैः सनत्कुमारस्य राज्याभिषेकः कृतः. सुखेनात्र विद्याधरराजसेवितः सनत्कुमारस्तिष्ठति. अन्यदा चंद्रवेगेन विज्ञप्तः सनत्कुमारो यथा देव! मम पूर्वमर्चिमालिमुनिनैवमादिष्टं, यथेदं तव कन्याशतं भानुवेगस्य चाष्टकन्या यः परिणेष्यति सोऽवश्यं सनत्कुमारनामा चतुर्थश्चक्री भविष्यति. स इतो मासमध्ये मानसरोवरे समेष्यति, तत्र व्यसनापतितं सरसि स्नातमसिताक्षो यक्षः पूर्वभववैरी द्रक्ष्यति. स पूर्वभववैरी कथमिति सनत्कुमारेण पृष्टे चंद्रवेगो मुनिमुखश्रुतं तत्पूर्वभववृत्तांतं प्राह—

अस्ति कांचनपुरं नाम नगरं, तत्र विक्रमयशोनामराजा, तस्य पंचशतान्यंतःपुर्यो वर्त-

ते. तत्र नागदत्तनामा सार्थवाहोऽस्ति. तस्य रूपलावण्यसौभाग्ययौवनगुणैः सुरसुंदरीभ्योऽधिका विष्णुश्रीनामभार्यास्ति. सान्यदा विक्रमयशोराज्ञा दृष्टा, मदनातुरेण तेन स्वांतःपुरे क्षिप्ता. ततो नागदत्तस्तच्चिंतयोन्मत्तीभूत एवं विलपति, हा चंद्रानने! क गता? दर्शनं मे देहीति विलपन् कालं नयति. विक्रमयशोराजा तु मुक्तसकलराज्यकार्योऽगणितजनापवादस्तया विष्णुश्रिया सहात्यंतं रतिप्रसक्तः कालं नयति. पंचशतांतःपुरीणां नामापि न गृह्णाति. अन्यदा ताभिः कार्मणादियोगेन विष्णुश्रीर्व्यापादिता. ततो राजा तस्या मरणेनात्यंतं शोकार्तोऽश्रुजलभृतनयनो नागदत्त इवोन्मत्तीभूतो विष्णुश्रीकलेवरं वह्निसात्कर्तुं न ददाति. ततो मंत्रिभिर्नृपः कथमपि वंचयित्वाऽरण्ये तत्कलेवरं त्यक्तं. राजा च तत्कलेवमपश्यन् परितो हृतान्नपानभोजनः स्थितः. मंत्रिभिर्विचारितमेष तत्कलेवरदर्शनमंतरेण मरिष्यतीत्यरण्ये नीत्वा राज्ञस्तत्कलेवरं दर्शितं. राज्ञा तदानीं तत्कलेवरं गलत्पूतिनिवहं निर्यत्कृमिजालं वायसकर्षितनयनयुगलं चंचूखगतुंडखंडितं दुरभिगंधं प्रेक्ष्यैवमात्मानं निंदितुं प्रारब्धं. रे जीव! यस्य कृते त्वया कुलशीलजातियशोलज्जाः परित्यक्ताः, तस्येदृश्यवस्था जाता. ततो वैरा-

ग्यमार्गं प्राप्तो राजा राज्यं राष्ट्रं पुरमंतःपुरं स्वजनवर्गं च परिहृत्य सुव्रताचार्यसमीपे निष्क्रांतः. ततश्चतुर्थषष्ठाष्टमादिविचित्रतपःकर्मभिरात्मानं भावयन् प्रांते संलेखनां कृत्वा सनत्कुमारदेवलोके गतः. ततश्च्युतो रत्नपुरे श्रेष्ठिसुतो जिनधर्मो जातः. स च जिनवचनभावितमनाः सम्यक्त्वमूलं द्वादशविधं श्रावकधर्मं पालयन् जिनेंद्रपूजारतः कालं गमयति. इतश्च स नागदत्तः प्रियाविरहदुःखितो भ्रांतचित्त आर्त्तध्यानपरिक्लिष्टशरीरो भूत्वा बहुतिर्यग्योनिषु भ्रांत्वा ततः सिंहपुरे नगरेऽग्निशर्मनामा द्विजो जातः. कालेन त्रिदंडिव्रतं गृहीत्वा द्विमासक्षपणरतो रत्नपुरमागतः. तत्र हरिवाहनो नाम राजा तापसभक्तः, तेन तपस्व्यागतः श्रुतः, पारणकदिने राज्ञा निमंत्रितः, स गृहमागतः. अत्रांतरे स जिनधर्मनामा श्रावकस्तत्रागतः. तं दृष्ट्वा पूर्वभवजातवैरानुभवेन रोषारुणलोचनेन मुनिनैवमुक्तं राज्ञः, यदा त्वं मां भोजयसि तदास्य श्रेष्ठिनः पृष्टौ स्थालं विन्यस्य मां भोजय? अन्यथा नाहं भोक्ष्ये. राज्ञोक्तमसौ श्रेष्ठी महान् वर्तते, ततोऽपरस्य पुरुषस्य पृष्ठौ त्वं भोजनं कुरु? स प्राहैतस्य पृष्ठावेव भोजनं करिष्ये, नापरस्येति. राज्ञा तापसानुरागेण तत्प्रतिपन्नं. राज्ञो वचनात् श्रेष्ठिना पृष्टौ स्थाल-

मारोपितं, तापसेन तत्पृष्ठौ दाहपूर्वकं भोजनं कृतं. श्रेष्ठिना पूर्वभवदुष्कर्मफलं ममोपस्थि-
तमिति मन्यमानेन तत्सम्यक् सोढमिति. स्थालीदाहेन तत्पृष्ठौ क्षतं जातं. ततः स ताप-
सस्तथा भुक्त्वा स्वस्थाने गतः. श्रेष्ठ्यपि स्वगृहे गत्वा स्वकुटुंबवर्गं प्रतिबोध्य जैनदीक्षां ज-
ग्राह. ततो नगरान्निर्गतो गिरिशिखरे गत्वाऽनशनमुच्चचार. पूर्वदिगभिमुखं मासार्धं याव-
त्कायोत्सर्गेण स्थितः. एवं शेषास्वपि दिक्षु. ततः पृष्ठिक्षते काकशिवादिभिर्भक्षितः सम्यक्
तत्पीडां सहमानो मृत्वा सौधर्मे कल्पे इंद्रो जातः. स तापसोऽपि तस्यैव वाहनमैरावणो
जातः. ततश्च्युतोऽथ स ऐरावणो नरतिर्यक्षु भ्रांत्वाऽसिताक्षो जातः, शक्रोऽपि ततश्च्युत्वा
हस्तिनागपुरे सनत्कुमारश्चक्री जातः. एवमसिताक्षयक्षस्य भवता सह वैरकारणमिति मुनि-
नोक्ते मया तवांतरवासनिमित्तं भानुवेगं विसर्जयित्वा प्रियसंगमपुरीनिवेशपूर्वं तव भानुवे-
गेन कन्याः परिणायिताः, मुक्तो मयैव कारणेन त्वं तद्वने, एवं करिष्याम इति विचार्य त-
दा विद्याधरास्तत्कृतवंतः. ततो विज्ञापयामि देव! मन्यस्व मे कन्याशतपाणिग्रहणं? ता
अपि तत्र भवन्मुखकमलं पश्यंति. एवं भवत्विति कुमारेणोक्ते चंद्रवेगः कुमारेण समं स्व-

नगरे गतः. तत्र कुमारेण कन्याशतं परिणीतं. पुनरप्यागतश्च दशोत्तरेण कन्याशतेन सह भोगान् भुंक्ते कुमारः. अथ पुनरेवमुक्तं कुमारेण यथाद्य गंतव्यं यत्रास्माभिर्यक्षो जितः. सांप्रतमत्रायातस्य कुमारस्य पुरः प्रेक्षणं कुर्वतीनामस्माकं कुमारपत्नीनां भवद्दर्शनं जातमिति. अत्रांतरे रतिगृहशय्यात उत्थितः कुमारो महेंद्रसिंहेन समं विद्याधरपरिवृतो वैताढ्यं गतः. अवसरं लब्ध्वा महेंद्रसिंहेन विज्ञप्तं, कुमार! तव जननीजनकौ त्वद्विरहार्त्तौ दुःखेन कालं गमयतः, ततस्तद्दर्शनप्रसादः क्रियतां. इति महेंद्रसिंहवचनानंतरमेव महता गगनस्थितविद्याधरविमानहयगजादिवाहनारूढविद्याधरवृंदसंमर्देन हस्तिनागपुरे प्राप्तः कुमारः. आनंदिताश्च जननीजनकनागरजनाः. ततो महता विभूत्याऽश्वसेनराज्ञा सनत्कुमारः स्वराज्येऽभिषिक्तः. महेंद्रसिंहश्च सेनापतिः कृतः. जननीजनकाभ्यां स्थविरणामंतिके प्रव्रज्यां गृहीत्वा स्वकार्यमनुष्ठितं. सनत्कुमारोऽपि प्रवर्तमानकोशबलसारो राज्यमनुपालयति. उत्पन्नानि चतुर्दश रत्नानि नव निधयश्च. कृता च तेषां पूजा. तदनंतरं चक्ररत्नदर्शितमार्गो मगधवरदामप्रभासासिंधुखंडप्रपातादिक्रमेण भरतक्षेत्रं साधितवान्.

एवं सनत्कुमारो हस्तिनागपुरे चक्रवर्तिपदवीं पालयन् यथेष्टं सुखानि भुंक्ते. शक्रेणाव-
धिज्ञानप्रयोगात्तं पूर्वभवे स्वपदाधिरूढं ज्ञात्वा महता हर्षेण वैश्रमणोऽनुज्ञातः, सनत्कुमारस्य
राज्याभिषेकं कुरु? इमं च हारं, वनमालां, छत्रं, मुकुटं, चामरयुगलं, कुंडलयुगं, दूष्ययुगं
सिंहासनं, पादपीठं च प्राभृतं कुरु? शक्रेण तव वृत्तांतः पृष्टोऽस्तीति ब्रूयाः. वैश्रमणोऽपि श-
क्रदत्तं गृहीत्वा गजपुरनगरे समागत्य तत्प्राभृतं चक्रिणः पुरो मुक्तवान्, शक्रवचनं चोक्त-
वानिति. पुनः शक्रेण तिलोत्तमारंभे देवांगने तत्र तदभिषेककरणाय प्रेषिते. चक्रिणोऽनुज्ञां
गृहीत्वा विकुर्वितयोजनप्रमाणमणिपीठोपरि रचितमणिमंडपांतः स्थापिते मणिसिंहासने कु-
मारं निवेश्य कनककलशाहृतक्षीरोदजलधाराभिर्धवलगीतानि गायंतो देवीदेवा अभ्यषिंच-
न्. रंभातिलोत्तमादिदेव्यस्तदानीं नृत्यं कुर्वंति. महामहोत्सवेन कुमारमभिषिच्य वैश्रमणा-
दयः स्वर्गलोकं जग्मुः. चक्र्यपि भोगान् भुंजन् कालं गमयति. अन्यदा सुधर्मासभायां सौ-
धर्मेंद्रः सिंहासनेऽनेकदेवदेवीसेवितः स्थितोऽस्ति. अत्रांतरे एक ईशानकल्पदेवः सौधर्मेंद्र-
पार्श्वे आगतः. तस्य देहप्रभया सभास्थितदेवदेहप्रभाभरः सर्वतो नष्टः. आदित्योदये चं-

ग्रग्रहादय इव निःप्रनाः सर्वे सुरा जाताः. तस्मिन् पुनः स्वस्थाने गते देवैः सौधर्मेंद्रः पृष्टः, स्वामिन्! केन कारणेनास्य देवस्येदृशी प्रना जातास्ति? शक्रः प्राहानेन पूर्वनवे आचाम्लवर्धमानतपोऽखंडं कृतं, तत्प्रनावादस्य देहे प्रनेदृशी जातास्ति. देवैः पुनरिंद्रः पृष्टः, अन्योऽपि कश्चिदीदृशो दीप्तिमानस्ति न वा? इंद्रेण नणितं यथा हस्तिनागपुरे कुरुवंशेऽस्ति सनत्कुमारनामा चक्री, तस्य रूपं सर्वदेवेन्योऽप्यधिकमस्ति. इदं शक्रवचोऽश्रद्दधानौ विजयवैजयंतौ देवौ ब्राह्मणरूपावागतौ, प्रतीहारेण मुक्तद्वारौ गृहांतः प्रविष्टौ राजसमीपं गतौ. दृष्टश्च तैलान्यंगं कुर्वन् राजा, अतीवविस्मितौ देवौ शक्रवर्णितरूपाधिकरूपं तं पश्यंतौ तौ राज्ञा पृष्टौ. किमर्थं नवंतावत्रायातौ? तौ नणतो देव! नवद्रूपं त्रिनुवने वर्ण्यते, तद्दर्शनार्थं कौतुकेनावामत्रायातौ. ततोऽतिरूपगर्वितेन राज्ञा तावुक्तौ, नो नो विप्रौ! युवान्यां किं मद्रूपं दृष्टं? स्तोककालं प्रतीक्षेथाः, यावदहमास्थानसनायामुपविशामि. एवमस्त्विति प्रोच्य निर्गतौ द्विजौ. चक्र्यपि शीघ्रं मज्जनं कृत्वा सर्वांगोपांगशृंगारं दधत् सनायां सिंहासने उपविष्टः, आकारितौ द्विजौ, तान्यां तदा चक्रिरूपं दृष्ट्वा विषण्णान्यां नणितमहो! मनुष्या-

णां रूपलावण्ययौवनानि क्षणदृष्टनष्टानि. तयोर्द्विजयोरेतद्वचः श्रुत्वा चक्रिणा भणितं, भो! किमेवं भवंतौ विषण्णौ मम शरीरं निंदतः? ताभ्यां भणितं महाराज! देवानां रूपयौवनतेजांसि प्रथमवयसः समारभ्य षण्मासशेषायुःसमयं यावदवस्थितानि भवंति, यावज्जीवं न हीयंते. भवतां शरीरे त्वाश्चर्यं दृश्यते, यत्तव रूपलावण्यादिकं सांप्रतमेव दृष्टं नष्टं. राज्ञा भणितं कथमेवं भवद्भ्यां ज्ञातं? ताभ्यां शक्रप्रशंसादिकः सर्वोऽपि वृत्तांतः कथितः.

चक्रिणा तु केयूरादिविभूषितं बाहुयुगलं पश्यता, हारादिविभूषितमपि स्ववक्षःस्थलं विवर्णमुपलक्ष्य चिंतितमहो! अनित्यता संसारस्य! असारता शरीरस्य! एतावन्मात्रेणापि कालेन मच्छरीरस्य यौवनतेजांसि नष्टानि. अयुक्तोऽस्मिन् भवे प्रतिबंधः, शरीरमोहोऽज्ञानं, रूपयौवनाभिमानो मूर्खत्वं, भोगासेवनमुन्मादः, परिग्रहो ग्रह इव. तदेतत्सर्वं व्युत्सृज्य परलोकहितं संयमं गृह्णामीति विचार्य चक्रिणा पुत्रः स्वराज्येऽभिषिक्तः, स्वयं संयमग्रहणायोद्यतो जातः. तदानीं ताभ्यां देवाभ्यां भणितं—अणुचरियं धीर तुमे । चरियं निययस्स पुव्वपरिसस्स ॥ भरहमहानरवइणो । तिहुअणविक्खायकित्तिस्स ॥ १ ॥ इत्याद्युक्त्वा देवौ

गतौ. चक्र्यपि तदानीमेव सर्वं परिग्रहं परित्यज्य विरताचार्यसमीपे प्रव्रजितः. ततः स्त्रीरत्नप्रमुखाणि सर्वरत्नानि, शेषाश्च रमण्यः, सर्वेऽपि नरेंद्राः सर्वसैन्यलोका नव निधयश्च षण्मासान् यावत्तन्मार्गानुलग्नास्तेन संयमिना सिंहावलोकनन्यायेन दृष्ट्वापि न विलोकिताः. षष्ठभक्तेन भिक्षानिमित्तं गोचरप्रविष्टस्य प्रथममेवाऽजातक्रं तस्य गृहस्थेन दत्तं. द्वितीयदिवसे च षष्ठमेव कृतं. पारणके प्रांतनीरसाहारकरणात्तस्यैते रोगाः प्रादुर्भूताः—कंडूः १ ज्वरः २, कासः ३, श्वासः ४, स्वरभंगः ५, अक्षिदुःखं ६, उदरव्यथा ७, एताः सप्त व्याधयः सप्तशतवर्षाणि यावदध्यासिताः. उग्रतपः कुर्वतस्तस्य आमर्षौषधी १, खेलौषधी २, विप्रुडौषधी ३, जल्लौषधी ४, सर्वौषधी ५ प्रभृतयो लब्धयः संपन्नाः. तथाप्यसौ स्वशरीरप्रतीकारं न करोति. पुनः शक्रेणैकदैवं स प्रशंसितः, अहो! पश्यंतु देवाः सनत्कुमारस्य धीरत्वं! व्याधिकदर्थितोऽप्ययं न स्वयं स्ववपुःप्रतीकारं कारयति. एतदिंद्रवचनमश्रद्दधानौ तावेव देवौ वैद्यरूपेण तस्य मुनेः समीपे समायातौ, भणितवंतौ च भगवंस्तव वपुष्यावां प्रतीकारं कुर्वः. सनत्कुमारस्तदानीं तूष्णीक एव स्थितः. पुनस्ताभ्यां भणितं, परं तथैव मुनिर्मौनभा-

ग्जातः, पुनः पुनस्तथैव तौ भणतः, तदा मुनिना भणितं, भवंतौ किं शरीरव्याधिस्फेटकौ? किंवा कर्मव्याधिस्फेटकौ? ताभ्यां भणितमावां शरीरव्याधिस्फेटकौ. तदानीं सनत्कुमारमुनिना स्वमुखथूत्कृतेन घर्षिता स्वांगुली कनकवर्णा दर्शिता. भणितं चाहं स्वयमेव शरीरव्याधिं स्फेटयामि, यदि मे सहनशक्तिर्न स्यात्तदेति. युवां यदि संसारव्याधिस्फेटनसमर्थौ तदा तं स्फेटयेथाः? देवौ विस्मितमनस्कौ प्रकटितस्वरूपावेवमूचतुः, भगवंस्त्वमेव संसारव्याधिस्फेटनसमर्थोऽसि. आवाभ्यां तु शक्रवचनमश्रद्दधानाभ्यामिहागत्य त्वं परीक्षितः, यादृशः शक्रेण वर्णितस्तादृश एव त्वमसीत्युक्त्वा प्रणम्य च तौ स्वस्थानं गतौ. भगवान् सनत्कुमारस्तु कुमारत्वे पंचाशद्वर्षसहस्राणि, मांडलिकत्वे पंचाशद्वर्षसहस्राणि, चक्रवर्तित्वे वर्षलक्षं, श्रामण्ये च वर्षलक्षमेकं परिपाल्य सम्मेतशैलशिखरं गतः. तत्र शिलातले आलोचनाविधानपूर्वं मासिकेन भक्तेन कालं कृत्वा सनत्कुमारकल्पे देवत्वेनोत्पन्नः. ततश्च्युतो महाविदेहे वर्षे सेत्स्यति. इति सनत्कुमारदृष्टांतः. ४. ॥ ३७ ॥

॥ मूलम् ॥—चइत्ता भारहं वासं । चक्कवट्टी महड्ढिओ ॥ संती संतिकरे लोए । पत्तो

गइमणुत्तरं ॥ ३८ ॥ व्याख्या—पुनः शांतिः शांतिनाथः प्रस्तावात्पंचमश्चक्री अनुत्तरां गतिं प्राप्तो मोक्षं प्राप्तः. कथंभूतः शांतिः? लोके शांतिकरः, शांतिं करोतीति शांतिकरः, इति विशेषणेन तीर्थकरत्वं प्रतिपादितं. षोडशस्तीर्थकरः शांतिनाथो मोक्षं जगामेत्यर्थः. किं कृत्वा? भारतं वासं त्यक्त्वा, भरतस्येदं भारतं, भरतक्षेत्रसंबंधिवासमिति राज्यवासं. कीदृशः शांतिः? चक्रवर्ती महर्द्धिकः, इत्यनेन शांतेश्चक्रवर्तित्वं तीर्थकरत्वं च प्रतिपादितं. ॥ ३८ ॥ अत्र शांतिनाथदृष्टांतः—इहैव जंबूद्वीपे भरतक्षेत्रे वैताढ्यपर्वते रथनूपुरचक्रवालं नाम नगरमस्ति. तत्र राजाऽमिततेजाः परिवसति, तस्य सुतारानाम्नी भगिनी वर्तते. सा च पोतनाधिपतिना श्रीविजयराज्ञा परिणीता. अन्यदा अमिततेजो राजा पोतनपुरे श्रीविजयसुतारादर्शनार्थं गतः, प्रेक्षते च प्रमुदितमुच्छ्रितपताकं सर्वमपि पुरं, विशेषतश्च राजकुलं. ततो विस्मितलोचनोऽमिततेजो राजा गगनतलादुत्तीर्णः, गतश्च राजभवनं, अभ्युत्थानादिना सत्कृतः श्रीविजयेन, कृतमुचितं करणीयं. उपविष्टः सिंहासनेऽमिततेजो राजा पप्रच्छ नगरोत्सवकारणं. श्रीविजयः प्राह, यथेतोऽष्टमे दिवसे मदंतिके एको नैमित्तिकः समायातः, म-

दनुज्ञाते सिंहासने चोपविष्टः. पृष्टश्च मया किमागमनप्रयोजनं? ततस्तेन भणितं, महाराज! मया निमित्तमवलोकितं, यथा पोतनाधिपतेरुपरि इतो दिवसात्सप्तमे दिवसे मध्याह्नसमये विद्युत्पतिष्यति. इदं च कर्णकटुकं वचः श्रुत्वा मंत्रिणा भणितं, तदानीं तवोपरि किं पतिष्यति? तेनोक्तं मा कुप्यत? यथा मयोपलब्धं निमित्तं तथा भवतां कथितं, न चात्र मम कोऽपि भावदोषोऽस्ति. ममोपरि तस्मिन् दिवसे हिरण्यवृष्टिः पतिष्यति. मया भणितं त्वयैतन्निमित्तं क पठितं? तेन भणितं त्रिपृष्टवासुदेवभ्रातृअचलबलदेवदीक्षासमये पित्रा समं मयापि प्रव्रज्या गृहीता. तत्रानेकशास्त्राध्ययनं कुर्वता मयाष्टांगनिमित्तमप्यधीतं. ततोऽहं प्राप्तयौवनः पूर्वदत्तकन्याया भ्रातृभिरुत्प्रव्राजितः. कर्मपरिणतिवशेन सा मया परिणीता. तेन मया सर्वज्ञप्रणीतनिमित्तानुसारेण प्रलोकितं, यथा सप्तमे दिवसे पोतनाधिपतेरुपरि विद्युत्पातो भविष्यति. एवं तेन नैमित्तिकेनोक्ते एकेन मंत्रिणा भणितं, यथा महाराज! समुद्रमध्ये वाहनांतर्भवद्भिः सप्तदिवसान् यावत् स्थेयं, तत्र विद्युन्न पराभवति. अन्येन मंत्रिणा भणितं दैवयोगोऽन्यथा कर्तुं न तीर्यते. यत उक्तं—

धारिज्जइ इंतो सागरोवि । कल्लोलभिन्नकुलसेलो ॥ न हु अन्नजम्मनिम्मिअ—सुहासुहो कम्मपरिणामो ॥ १ ॥ अपरेण मंत्रिणा भणितं, पोतनाधिपतेर्वधोऽनेन समादिष्टः, न पुनः श्रीविजयराज्ञः, सप्तमदिवसान् यावदपरः कोऽपि पोतनाधिपतिर्विधीयते. सर्वैरप्युक्तमयमुपायः साधुः. भयोक्तं मज्जीवितरक्षाकृतेऽपरजीववधः कथं क्रियते ? सर्वैरुक्तं तर्हि यक्षप्रतिमाया राज्याभिषेकः क्रियते. एवं मंत्रयित्वा सर्वैरपि यक्षप्रतिमा पोतनपुरराज्येऽभिषिक्ता. सप्तदिवसान् यावन्मया पौषधागारे गत्वा पौषधा एव कृताः. सप्तमदिवसमध्याह्नसमये गगनमार्गेऽकस्मान्मेघः समुत्पन्नः, स्फुरिता विद्युल्लता, इतस्ततः परिभ्रम्य यक्षप्रतिमा विनाशिता. अष्टमे दिवसे चाहं पौषधशालातो निर्गत्य क्रमेण स्वभुवने समायातः, तं नैमित्तिकं च कनकरत्नादिभिः पूजितवान्. पुनरहं नागरिकैः पोतनराज्येऽभिषिक्तः. तदिदमस्मिन्नगरे महोत्सवकारणमिति श्रीविजयेनोक्तेऽमिततेजः प्राह अविसंवादिनिमित्तं, शोभनो रक्षणोपाय इत्युक्त्वाऽमिततेजो राजा स्वस्थानं गतवान्. अन्यदा श्रीविजयराजा सुतारया समं वने रंतुं गतः. सुतारया तत्र कनकमृगो दृष्टः, श्रीविजयस्योक्तं स्वामिन्! ममैनं मृगमानीय दे-

तश्च देशांतरे रत्नपुरं नाम नगरं. तत्र कस्यचिडुपाध्यायस्य मठे गतः, उपाध्यायेन पृष्टः क-
स्त्वं ? कुत आगतः ? कपिलेनोक्तमचलग्रामे धरणीजटविप्रसुतः कपिलनामाहं विद्यार्थी अ-
त्रायातस्तवसमीपमिति. उपाध्यायेन सबहुमानं स्वगृहे रक्षितः. विद्यामध्याप्य स्वपुत्री तस्य
दत्ता सत्यनामानाम्नी. अन्यदा वर्षाकाले स कपिलो रात्रौ स्ववस्त्राणि कक्षायां कृत्वा वर्ष-
त्येव मेघे स्वगृहद्वारे समायातः. सत्यनामा चायं स्तिमितवस्त्रो नविष्यतीति चिंतयंत्यपराणि
वस्त्राणि गृहीत्वा गृहद्वारे सन्मुखमायाता. कपिलेन तस्या उक्तमस्ति मम प्रनावो येन व-
स्त्राणि न स्तिम्यंति. तावता विद्युत्प्रकाशे तया स नग्नो दृष्टः. ज्ञातं चायं नग्न एव समाया-
तः, वस्त्राणि कक्षायां च निहितवानित्यवश्यमयं हीनकुल इति सा कपिले मंदस्नेहा जाता.
अन्यदा धरणीजटो विप्रस्तत्र कपिलसमीपे समायातः. सत्यनामा च पितृपुत्रयोर्विरुद्धमाचारं
दृष्ट्वा परमार्थं पृष्टो धरणीजटविप्रः. तेन यथार्थं कथितं. तत् श्रुत्वोद्विग्ना सत्यनामा काम-
नोगेन्यो निर्विण्णा, प्रव्रज्याग्रहणनिमित्तं पृष्टः कपिलः, न मुंचत्येष कपिलः. तदेयं गता त-
त्रिवासिश्रीषेणराज्ञः समीपं, बनाण च नो राजन्! मां कपिलसमीपान्मोचय? येनाहं दी-

ह्णां गृह्णामि. राज्ञा कपिलस्योक्तं, कपिलो न मन्यते. राज्ञा पुनस्तस्या उक्तं, तावत्त्वं मम गृहे तिष्ठ? यावत्कपिलं बोधयामीति. अन्यदा स राजा स्वपुत्रौ गणिकानिमित्तं युध्यमानौ दृष्ट्वा वैराग्येण विषं भक्षितवान्. ततः सिंहनंदिताऽभिनंदितानाम्न्यौ श्रीषेणनृपस्य भार्ये, कपिलस्य भार्या सत्यभामा च विषप्रयोगेण कालं गताः. चत्वारोऽप्यमी जीवा देवकुरुषु युगलत्वेनोत्पन्नाः, ततः सौधर्मे कल्पे गताः. ततश्च्युत्वा श्रीषेणजीवोऽमिततेजो जातः, अभिनंदिताजीवः श्रीविजयो जातः, सत्यभामाजीवः सुतारा जाता, स कपिलजीवस्तिर्यग्भवेषु चिरकालं भ्रांत्वा कश्चित्तथाविधमनुष्टानं कृत्वाऽशनिघोषः समुत्पन्नः. सुतारां च सत्यभामाभार्याजीवं दृष्ट्वा पूर्वस्नेहेनापहृत्य गतः. पुनरप्यमिततेजसा पृष्टं, भगवन्नहं किं भव्योऽभव्यो वा? अचलकेवलिना कथितं त्वं भव्य इतश्च नवमे भवे तीर्थंकरो भविष्यसि, एषोऽपि श्रीविजयस्तव गणधरो भविष्यति. तत एतदाकर्ण्यामिततेजःश्रीविजयनृपावचलकेवलिनं वंदित्वा गतौ स्वस्थानं.

अन्यदामिततेजःश्रीविजयाभ्यामुद्यानगताभ्यां चारणश्रमणाभ्यामवधिज्ञानेन ज्ञात्वो-

हि? मम क्रीडार्थं भविष्यति. ततः श्रीविजयराजा तद्ग्रहणार्थं स्वयमेव प्रधावितः, नष्टो मृगः, तत्पृष्टिं राजा न त्यजति. कियंतीं भुवं गत्वोत्पतितो मृगः, तावता सुतारा कुर्कुटसर्पेण दष्टा पूच्चकार. अहं कुर्कुटसर्पेण दष्टा, हा प्रिय! मां त्रायस्वेति श्रुत्वा श्रीविजयस्त्वरितं पश्चादायातः. तावता सुतारा पंचत्वमुपागता. राजा च शोकपरवशस्तया समं चितायां प्रविष्टः, उद्दीप्तो ज्वलनः, तावता स्तोकवेलायां समागतौ द्वौ विद्याधरौ, तत्रैकेन सलिलमभिमंत्र्य चिता सिक्ता, वैतालिनी विद्या नष्टा, राजा स्वस्थो जातो बभाण च किमिदमिति. विद्याधराभ्यां भणितमावाममिततेजसः स्वकीयौ जिनवंदननिमित्तमाकाशमार्गे भ्रमंतावशनिघोषविद्याधरेणापह्रियमाणायाः सुताराया आक्रंदशब्दं श्रुतवंतौ, तन्मोचनार्थमावाभ्यां युद्धमारब्धं, ततः सुतारया च प्रोक्तमलं युद्धेन, यथा महाराजः श्रीविजयो वैतालिनीविद्यामोहितो जीवितं न परित्यजति, तथा तदुद्याने गत्वा शीघ्रं कुरुत? तत आवामिहायातौ, दृष्टस्त्वं वैतालिन्या समं चितारूढः, अभिमंत्र्य जलेन सिक्ता चिता, नष्टा सा दुष्टवैतालिनी, स्वस्थावस्थस्त्वमुत्थितः, इत्यपहृतां सुतारां ज्ञात्वा विषण्णः श्रीविजयो राजा भणितश्च ता-

भ्यां, राजन्, खेदं मा कुरु? स पापः क यास्यतीत्यादिवचनैः श्रीविजराजानमाश्वास्य तौ विद्याधरावमिततेजसमीपं गतौ.

ततोऽमिततेजप्रेपितविद्याधररचितविमानैः स श्रीविजयोऽप्यमिततेजसमीपं गतः. अमिततेजश्रीविजयाभ्यां ससैन्याभ्यां गत्वा तन्नगरं वेष्टितं, अशनिघोषांतिके दूतः प्रेषितः, तयोरागमनं श्रुत्वाशनिघोषो नष्टः, उत्पन्नकेवलस्याचलस्य च समीपे गतः. अमिततेजश्रीविजयावपि तत्पृष्टौ तत्रायातौ. सर्वेऽपि गतमत्सरा धर्मं शृण्वंति एकेन विद्याधरेण सुतारापि तत्रानीता. लब्धावसरेणाशनिघोषेण भणितं, न मया दुष्टभावेन सुतारापहृता, किं तु विद्यां साधयित्वा गछता मयेयं दृष्टा, पूर्वस्नेहेनेमां त्यक्तुं न शक्नोमीति वैतालिन्या विद्यया श्रीविजयं मोहयित्वा सुतारां गृहीत्वा स्वनगरे गतः, नास्याः शीलभंगमकार्षं. तथापि ममात्रार्थे योऽपराधः स क्षंतव्य इत्याकर्ण्यामिततेजसा भणितं, भगवन्! किं पुनः कारणं? एतस्यास्यां स्नेहोऽभूत्. ततोऽचलकेवली कथयति, मगधदेशेऽचलग्रामे धरणीजटो नाम विप्रः, तस्य कपिलानाम चेटी, तस्याः पुत्रः कपिलो नाम. तेन कर्णश्रवणमात्रेण विद्या शिक्षिता, ग-

तश्च देशांतरे रत्नपुरं नाम नगरं. तत्र कस्यचिदुपाध्यायस्य मठे गतः, उपाध्यायेन पृष्टः कस्त्वं? कुत आगतः? कपिलेनोक्तमचलग्रामे धरणीजटविप्रसुतः कपिलनामाहं विद्यार्थी अत्रायातस्तवसमीपमिति. उपाध्यायेन सबहुमानं स्वगृहे रक्षितः. विद्यामध्याप्य स्वपुत्री तस्य दत्ता सत्यभामानाम्नी. अन्यदा वर्षाकाले स कपिलो रात्रौ स्ववस्त्राणि कक्षायां कृत्वा वर्षत्येव मेघे स्वगृहद्वारे समायातः. सत्यभामा चायं स्तिमितवस्त्रो भविष्यतीति चिंतयंत्यपराणि वस्त्राणि गृहीत्वा गृहद्वारे सन्मुखमायाता. कपिलेन तस्या उक्तमस्ति मम प्रभावो येन वस्त्राणि न स्तिम्यंति. तावता विद्युत्प्रकाशे तया स नग्नो दृष्टः. ज्ञातं चायं नग्न एव समायातः, वस्त्राणि कक्षायां च निहितवानित्यवश्यमयं हीनकुल इति सा कपिले मंदस्नेहा जाता. अन्यदा धरणीजटो विप्रस्तत्र कपिलसमीपे समायातः. सत्यभामा च पितृपुत्रयोर्विरुद्धमाचारं दृष्ट्वा परमार्थं पृष्टो धरणीजटविप्रः. तेन यथार्थं कथितं. तत् श्रुत्वोद्विग्ना सत्यभामा कामभोगेभ्यो निर्विण्णा, प्रव्रज्याग्रहणनिमित्तं पृष्टः कपिलः, न मुंचत्येष कपिलः. तदेयं गता तन्निवासिश्रीषेणराज्ञः समीपं, बभाण च भो राजन्! मां कपिलसमीपान्मोचय? येनाहं दी-

हां गृह्णामि. राज्ञा कपिलस्योक्तं, कपिलो न मन्यते. राज्ञा पुनस्तस्या उक्तं, तावत्त्वं मम गृहे तिष्ट? यावत्कपिलं बोधयामीति. अन्यदा स राजा स्वपुत्रौ गणिकानिमित्तं युध्यमानौ दृष्ट्वा वैराग्येण विषं भक्षितवान्. ततः सिंहनंदिताऽभिनंदितानाम्न्यौ श्रीषेणनृपस्य भार्ये, कपिलस्य भार्या सत्यभामा च विषप्रयोगेण कालं गताः. चत्वारोऽप्यमी जीवा देवकुरुषु युगलत्वेनोत्पन्नाः, ततः सौधर्मे कल्पे गताः. ततश्च्युत्वा श्रीषेणजीवोऽमिततेजो जातः, अभिनंदिताजीवः श्रीविजयो जातः, सत्यभामाजीवः सुतारा जाता, स कपिलजीवस्तिर्यग्भवेषु चिरकालं भ्रांत्वा कंचित्तथाविधमनुष्टानं कृत्वाऽशनिघोषः समुत्पन्नः. सुतारां च सत्यभामाभार्याजीवं दृष्ट्वा पूर्वस्नेहेनापहृत्य गतः. पुनरप्यमिततेजसा पृष्टं, भगवन्नहं किं भव्योऽभव्यो वा? अचलकेवलिना कथितं त्वं भव्य इतश्च नवमे भवे तीर्थंकरो भविष्यसि, एषोऽपि श्रीविजयस्तव गणधरो भविष्यति. तत एतदाकर्ण्यामिततेजश्रीविजयनृपावचलकेवलिनं वंदित्वा गतौ स्वस्थानं.

अन्यदामिततेजश्रीविजयाभ्यामुद्यानगताभ्यां चारणश्रमणाभ्यामवधिज्ञानेन ज्ञात्वो-

तश्च देशांतरे रत्नपुरं नाम नगरं. तत्र कस्यचिदुपाध्यायस्य मठे गतः, उपाध्यायेन पृष्टः क-स्त्वं? कुत आगतः? कपिलेनोक्तमचलग्रामे धरणीजटविप्रसुतः कपिलनामाहं विद्यार्थी अ-त्रायातस्तवसमीपमिति. उपाध्यायेन सबहुमानं स्वगृहे रक्षितः. विद्यामध्याप्य स्वपुत्री तस्य दत्ता सत्यभामानाम्नी. अन्यदा वर्षाकाले स कपिलो रात्रौ स्ववस्त्राणि कक्षायां कृत्वा वर्ष-त्येव मेघे स्वगृहद्वारे समायातः. सत्यभामा चायं स्तिमितवस्त्रो भविष्यतीति चिंतयंत्यपराणि वस्त्राणि गृहीत्वा गृहद्वारे सन्मुखमायाता. कपिलेन तस्या उक्तमस्ति मम प्रभावो येन व-स्त्राणि न स्तिम्यंति. तावता विद्युत्प्रकाशे तया स नग्नो दृष्टः. ज्ञातं चायं नग्न एव समाया-तः, वस्त्राणि कक्षायां च निहितवानित्यवश्यमयं हीनकुल इति सा कपिले मंदस्नेहा जाता. अन्यदा धरणीजटो विप्रस्तत्र कपिलसमीपे समायातः. सत्यभामा च पितृपुत्रयोर्विरुद्धमाचारं दृष्ट्वा परमार्थं पृष्टो धरणीजटविप्रः. तेन यथार्थं कथितं. तत् श्रुत्वोद्विग्ना सत्यभामा काम-भोगेभ्यो निर्विण्णा, प्रव्रज्याग्रहणनिमित्तं पृष्टः कपिलः, न मुंचत्येष कपिलः. तदेयं गता त-न्निवासिश्रीषेणराज्ञः समीपं, बभाण च भो राजन्! मां कपिलसमीपान्मोचय? येनाहं दी-

क्षां गृह्णामि. राज्ञा कपिलस्योक्तं, कपिलो न मन्यते. राज्ञा पुनस्तस्या उक्तं, तावत्त्वं मम गृहे तिष्ट? यावत्कपिलं बोधयामीति. अन्यदा स राजा स्वपुत्रौ गणिकानिमित्तं युद्ध्यमानौ दृष्ट्वा वैराग्येण विषं भक्षितवान्. ततः सिंहनंदिताऽभिनंदितानाम्न्यौ श्रीषेणनृपस्य भार्ये, कपिलस्य भार्या सत्यभामा च विषप्रयोगेण कालं गताः. चत्वारोऽप्यमी जीवा देवकुरुषु युगलत्वेनोत्पन्नाः, ततः सौधर्मे कल्पे गताः. ततश्च्युत्वा श्रीषेणजीवोऽमिततेजो जातः, अभिनंदिताजीवः श्रीविजयो जातः, सत्यभामाजीवः सुतारा जाता, स कपिलजीवस्तिर्यग्भवेषु चिरकालं भ्रांत्वा क्वचित्तथाविधमनुष्टानं कृत्वाऽशनिघोषः समुत्पन्नः. सुतारां च सत्यभामाब्राह्मणीजीवं दृष्ट्वा पूर्वस्नेहेनापहृत्य गतः. पुनरप्यमिततेजसा पृष्टं, भगवन्नहं किं भव्योऽभव्यो वा? अचलकेवलिना कथितं त्वं भव्य इतश्च नवमे भवे तीर्थंकरो भविष्यसि, एषोऽपि श्रीविजयस्तव गणधरो भविष्यति. तत एतदाकर्ण्यामिततेजश्रीविजयनृपावचलकेवलिनं वंदित्वा गतौ स्वस्थानं.



अन्यदामिततेजश्रीविजयाभ्यामुद्यानगताभ्यां चारणश्रमणाभ्यामवधिज्ञानेन ज्ञात्वो-

क्तं, यथा षड्विंशतिदिनानि नवतोर्द्वयोरप्यायुः. ततस्ताभ्यां मेरौ गत्वा कृतोऽष्टाह्निकामहोत्सवः, स्वस्वराज्ये च गत्वा स्वस्वपुत्रावभिषिच्य जगन्नंदनमुनिसमीपे संयममादाय पादपोपगमनमनशनं विहितं. विधिना कालं कृत्वा प्राणते कल्पे विंशतिसागरोपमायुर्देवत्वेनोत्पन्नौ. ततश्च्युताविहैव जंबूद्वीपे पूर्वविदेहे रमणीविजये शीताया महानद्या दक्षिणकुले सुभगायां नगर्यां प्रेमसागरस्य राज्ञो वसुंधराऽनंगसुंदर्योर्महागर्भे क्रमेण कुमारत्वेनोत्पन्नौ. अमिततेजजीवोऽपराजितनामा श्रीविजयजीवोऽनंतवीर्यनामा जातः. तत्रापि प्रतिशत्रुदमितारिं व्यापाद्य क्रमेण बलदेवत्वं वासुदेवत्वमापन्नौ. तयोश्च पिता प्रव्रज्याविधानेन मृत्वाऽसुरकुमारेंद्रत्वेनोत्पन्नः. अनंतवीर्यस्तु कालं कृत्वा द्विचत्वारिंशत्सहस्रवर्षायुर्नारकः प्रथमपृथिव्यामुत्पन्नः. चमरस्तु पुत्रस्नेहेन तत्र गत्वा वेदनोपशमं चकार. सोऽपि संविग्नः सम्यक् सहते. अपराजितो बलदेवो भ्रातृविरहदुःखितो निक्षिप्तपुत्रराज्यो जगद्धरगणधरसमीपे निष्क्रांतः. शुद्धां प्रव्रज्यां परिपाल्याच्युतेंद्रत्वेनोत्पन्नः. अनंतवीर्यस्तु नरकादुध्धृत्य वैताढ्ये विद्याधरत्वेनोत्पन्नः. अच्युतेंद्रेण प्रतिबोधितोऽसौ प्रव्रज्यां गृहीत्वाऽच्युतकल्पेंद्रसामानिकत्वेनोत्पन्नः. अपरा-

जिनोऽच्युतेंद्रस्ततश्च्युत्वा इहैव जंबूद्वीपे शीतामहानदीदक्षिणकूले मंगलावतीविजये रत्नसंचयापुर्यां क्षेमंकरो राजा, तस्य भार्या रत्नमाला, तयोः पुत्रो वज्रायुधाभिधानो जातः. इतश्च श्रीविजयजीवो देवायुरनुपाल्य तस्यैव पुत्रत्वेनोत्पन्नः. सहस्रायुध इति तस्य नाम प्रतिष्ठितं. अन्यदा पौषधशालायां स्थितो वज्रायुधो देवेंद्रेण प्रशंसितः, यथायं वज्रायुधो धर्माच्चालयितुं न शक्यते देवैर्दानवैश्च. तत एको देवस्तद्वाक्यमश्रद्दधानः पारापतरूपं विकुर्व्य भयभ्रांतो वज्रायुधमाश्रितः, हे वज्रायुध! तव शरणं ममास्त्विति मनुष्यभाषयोवाच. वज्रायुधेन तस्य शरणं दत्तं, स्थितस्तदंतिके पारापतः, तदनंतरं तत्रैवागतो लावकः, तेनापि भणितं, यथा महासत्व! एष मया क्षुधाक्रांतेन प्राप्तः, ततो मुंचैनं, अन्यथा नास्ति मम जीवितमिति. ततस्तद्वचनमाकर्ण्य वज्रायुधेन भणितं, न युक्तं शरणागतसमर्पणं, तवापि न युक्तमेतत्, यतः—हंतूण परप्पाणे। अप्पाणं जो करेइ सप्पाणं ॥ अप्पाणं दिवसाणं। कए स नासेइ अप्पाणं ॥ १ ॥ यथा जीवितं तव प्रियं, सर्वेषामपि जीवानां तथैवास्ति, एनं भयभ्रांतं दीनं व्यापादयितुं तव न युक्तं, धर्मं कुरु? पापं मुंच? लावकः प्रतिभणति,

राजन्नहं बुभुक्षितः, न मे मनसि धर्मस्तिष्ठति, ततः पुनरपि भणितं राज्ञा, भो महासत्व! यदि बुभुक्षितस्त्वं ततोऽन्यत्तव मांसं ददामि. लावकः प्रतिभणति, स्वयंव्यापादितजीवमांसाश्यस्म्यहं, न च रोचते मह्यं परव्यापादितमांसं. राज्ञा भणितं, यावन्मात्रेण मांसेन पारापतस्तुलति, तावन्मात्रं मांसं ददामि. सोऽप्यवदत्, यदि त्वं स्वदेहादुत्कीर्य मांसं ददासि तदाहं तं मुंचामि. तद्राज्ञा प्रतिपन्नं. ततस्तुष्टो लावकः, राज्ञा च तुलाऽऽनायिता, एकस्मिन् पार्श्वे पारापतो गुरुतरो देवमायया भवति, राजा पुनः पुनरुत्कृत्योत्कृत्य स्वदेहमांसमन्यत्र क्षिपति, तं दृष्ट्वा राजलोकः समस्तो हाहारवं चकार. पारापतपार्श्वे गुरुभारमवेत्य स्वमांसपार्श्वे राजा स्वयमारूढः, एतादृशं वज्रायुधस्य सत्वं दृष्ट्वा विस्मितो देवः स्वं रूपं प्रकटीकृत्य प्रकामं स्तुत्वा च स्वस्थानं गतवान्. अन्यदा वज्रायुधसहस्रायुधौ पितृपुत्रौ क्षेमंकरगणधरसमीपे जातवैराग्यौ सहस्रायुधसुतं बलिं राज्येऽभिषिच्य प्रव्रजितौ. प्रव्रज्यापर्यायं च परिपाल्य पादपोपगमनविधिना कालं कृत्वा द्वावपि जनावुपरितनग्रैवेयके एकत्रिंशत्सागरोपमस्थितिकावहमिंद्रदेवौ जातौ. अहमिंद्रसौख्यमनुभूय ततश्च्युताविहैव जंबूद्वीपे पूर्वविदेहे पु-

पुष्कलावतीविजये पुंडरीकिण्यां नगर्यां घनरथो राजा, तस्य द्वे महादेव्यौ पद्मावती मनोरमती च. तयोर्गर्भे जातौ वज्रायुधो मेघरथः, सहस्रायुधो दृढरथश्चेति वृद्धिं गतौ. ततः कृतं ताभ्यां कलाग्रहणं, तौ द्वौ राज्ये स्थापयित्वा घनरथः स्वयं दीक्षां गृहीत्वा केवलज्ञानमुत्पाद्य तीर्थंकरो जातः. तयोर्मेघरथदृढरथयोः पूर्वभवाभ्यासतो जिनधर्मदक्षताभूत्. अधिगतजीवाजीवादिभावौ तौ सुश्रावकौ जातौ.

अन्यदा पितुस्तीर्थंकरस्य समीपे द्वावपि जनौ निजपुत्रं राज्येऽभिषिच्य प्रव्रजितौ. तत्राधीतसूत्रार्थेन मेघरथेन विंशतिस्थानकैः समर्जितं तीर्थंकरनामगोत्रं. दृढरथेन शुद्धं चारित्रमाराधितं. द्वावपि संलेखनाविधिना कालं कृत्वाऽनुत्तरोपपातिकेषु देवेषूत्पन्नौ. तत्र सर्वार्थसिद्धविमानेऽनर्गलं सुखमनुभूय मेघरथकुमारस्ततश्च्युत्वेहैव जंबूद्वीपे भारते क्षेत्रे हस्तिनागपुरं विश्वसेनस्य राज्ञोऽचिरादेव्याः कुक्षौ भाद्रपदकृष्णसप्तम्यां चतुर्दशस्वप्नसूचितः पुत्रत्वेनोत्पन्नः. साधिकनवमासानुदरे धृत्वा तमचिरादेवी ज्येष्ठकृष्णत्रयोदश्यां प्रसूतवती. षट्पंचाशद्दिक्कुमारीमहोत्सवो जातः. चतुःषष्टिसुरेंद्रैरपि जन्माभिषेकः कृत उचितसमये. गर्भस्थे

चास्मिन् जगवति सर्वदेशेषु शांतिर्जातेति शांतिरिति नाम कृतं मातृपितृभ्यां, क्रमेणासौ सर्वकलाकुशलो जातः. यौवनं प्राप्तो विवाहितः प्रवरराजकन्याः, क्रमेण राज्ये स्थापितः, पित्रा चारित्रं गृहीतं. शांतेश्चक्रवर्तिपदवी समायाता, उत्पन्नानि चतुर्दश रत्नानि, साधितं जरतं, अखंरुं षट्खंरुराज्यं परिपाल्योचितावसरे स्वयं संबुद्धोऽपि लोकांतिकामरैः प्रतिबोधितः, सांवत्सरं दानं दत्वा ज्येष्टकृष्णचतुर्दश्यां चक्रिजोगांस्त्यक्त्वा निष्क्रांतः. चतुर्ज्ञानसमन्वितस्योद्यतविहारं कुर्वतः पौषशुक्लनवम्यां केवलज्ञानं समुत्पन्नं. देवैः समवसरणं कृतं, जगवता धर्मदेशना प्रारब्धा, प्रव्राजिता गणधराः, प्रतिबोधिता बहवः प्राणिनः. क्रमेण विहृत्य जरतक्षेत्रे बोधिबीजमुप्त्वा क्षीणसर्वकर्मांशो ज्येष्टकृष्णत्रयोदश्यां मोक्षं गत इति. अस्य जगवतः कुमारत्वे पंचविंशतिवर्षसहस्राणि, मांरुलिकत्वेऽपि पंचविंशतिवर्षसहस्राणि, चक्रित्वे पंचविंशतिवर्षसहस्राणि, श्रामण्ये च पंचविंशतिवर्षसहस्राणि, सर्वायुश्च वर्षलक्षमेकं जातमिति. इति शांतिनाथदृष्टांतः. ५.

॥ मूलम् ॥—इक्खागरायवसहो । कुंथुनामनरेसरो ॥ विक्खायकित्ती जयवं । पत्तो ग-

प्तमणुत्तरं ॥ ३९ ॥ व्याख्या—पुनः कुंथुनामा नरेश्वरः षष्टचक्री अनुत्तरां सर्वोत्कृष्टां गतिं प्राप्तः. कीदृशः कुंथुः? भगवानैश्वर्यज्ञानवान्. पुनः कीदृशः कुंथुः? इक्ष्वाकुराजवृषभः, इक्ष्वाकुवंशीनृपेषु वृषभो वृषभसमानः प्रधान इत्यर्थः. पुनः कीदृशः? विख्यातकीर्तिः. अत्र भगवानिति विशेषणेनाष्टमहाप्रातिहार्याद्यैश्वर्ययुक्तः सप्तदशस्तीर्थंकरः षष्टश्चक्री कुंथुर्ज्ञेयः. ॥ ३९ ॥ अत्र कुंथुनाथदृष्टांतः—हस्तिनागपुरे सूरराज्ञः श्रीदेवी भार्या. तस्या कुक्षौ भगवान् पुत्रत्वेनोत्पन्नः. जन्ममहोत्सवानंतरं च स्वप्ने जनन्या रत्नस्तूपः कुस्थो (पृथ्वीस्थः) दृष्टः. गर्भस्थे च भगवति पित्रा शत्रवः कुंथुवद् दृष्टा इति कुंथुनाम कृतं. पित्रा प्राप्तयौवनश्चायं विवाहितो राजकुमारिकाभिः. काले च भगवंतं राज्ये व्यवस्थाप्य सूरराजा स्वयं दीक्षां जग्राह. भगवांश्चोत्पन्नचक्ररत्नप्रसाधितभरतश्चक्रवर्तिभोगान् बुभुजे. तीर्थ[illegible]र्तनसमये च निःक्रम्य षोडश वर्षाणि चोग्रविहारेण विहृत्य केवलज्ञानभाक् जातः. देवाश्च समवसरणमकार्षुः. प्रव्रजिताः केवलपर्यायेण घना लोकाः. घ कालं विहृत्य सम्मेतगिरिशिखरे मोक्षमगमत्. तस्य भगवतः कुमारत्वे त्रयोविंशतिवर्षसहस्राणि, मांडलिकत्वे च त्रयोविंशतिवर्षसहस्राणि, च-

क्रित्वे त्रयोविंशतिवर्षसहस्राणि, श्रामण्ये च त्रयोविंशतिवर्षसहस्राणि सार्द्धानि च सप्तशतानि वर्षाण्यभवन्. सर्वायुर्द्धिनवतिवर्षसहस्राणि सार्धसप्तशतानि चास्य बभूव. इति श्रीकुंथुनाथदृष्टांतः. ॥ ६ ॥

॥ मूलम् ॥—सागरंतं चइत्ताणं । जरहं नरवरीसरो ॥ अरो य अरयं पत्तो । पत्तो गइमणुत्तरं ॥ ४० ॥ व्याख्या—च पुनररोऽरनामा नरवरेश्वरः सप्तमश्चक्री सागरांतं समुद्रांतं जरतक्षेत्रं षट्खंडराज्यं त्यक्त्वाऽरजस्त्वं प्राप्तः सन्ननुत्तरां गतिं सिद्धिगतिं प्राप्तो मोक्षं गत इत्यर्थः. चक्री भूत्वा तीर्थंकरपदं जुक्त्वा मोक्षं गत इत्यर्थः. ॥ ४० ॥ अत्र अरनाथदृष्टांतः—

अरनाथवृत्तांतस्तूत्तराध्ययनवृत्तिद्वयेऽपि नास्ति, तथापि ग्रंथांतराल्लिख्यते—प्राग्विदेहविभूषणे मंगलावतीविजये रत्नसंचया पुर्यस्ति. तत्र महीपालनामा भूपालोऽस्ति. प्राज्यं राज्यं भुंक्ते. अन्यदा गुरुमुखाद्धर्मं श्रुत्वा वैराग्यमागतः स तृणमिव राज्यं त्यक्त्वा दीक्षां लली. गुर्वंतिके एकादशांगान्यधीत्य गीतार्थो बभूव. बहुवत्सरकोटीः स संयममाराध्य विशुद्धविंशतिस्थानकैरर्हन्नामकर्म बबंध. ततो मृत्वा सर्वार्थसिद्धविमाने देवो बभूव. ततश्च्युत्वेह

भरतक्षेत्रे हस्तिनागपुरे सुदर्शननामा नृपो बभूव, तस्य राज्ञी देवीनाम्नी बभूव, तस्याः कुक्षौ जीवोऽवततार. तदानीं रेवतीनक्षत्रं बभूव, तया चतुर्दश स्वप्ना दृष्टाः. ततः पूर्णेषु मासेषु रेवतीनक्षत्रे तस्य जन्म बभूव. जन्मोत्सवस्तदा षट्पंचाशद्दिक्कुमारिकाभिश्चतुःषष्टिसुरेन्द्रैर्निर्मितः. ततः सुदर्शनराजापि स्वपुत्रस्य जन्मोत्सवं विशेषाच्चकार. अस्मिन् गर्भवते मात्रा प्रौढरत्नमयोऽरः स्वप्ने दृष्टः. ततः पित्रास्याऽर इति नाम कृतं. देवपरिवृतः स वयसा गुणैश्च वर्धतेस्म. एकविंशतिसहस्रवर्षेषु गतेष्वरकुमारस्य पित्रा राज्यं दत्तं. एकविंशतिवर्षसहस्राणि माण्डलिकराज्यं भुक्तवतस्तस्य शस्त्रकोशे चक्ररत्नं समुत्पन्नं. ततो भरतं प्रसाध्यैकविंशतिसहस्रवर्षाणि यावच्चक्रवर्तित्वं बुभुजे. ततः स्वामी स्वयंबुद्धोऽपि लोकांतिकदेवबोधितो वार्षिकं दानं दत्वा चतुःषष्टिसुरेन्द्रसेवितो वैजयंत्याख्यां शिविकामारूढः, सहस्राम्रवने सहस्रराजभिः समं प्रव्रजितः. ततश्छद्मस्थो त्रीणि वर्षाणि बाह्यस्थ्ये विहृत्य पुनः सहस्राम्रवने प्राप्तः. तत्र शुक्लध्यानेन ध्वस्तपापकर्माः केवलज्ञानं प्राप. ततः सुरैः समवसरणे कृते स्वामी योजनगामिना शब्देन देशनां चकार. तद्देशनां श्रुत्वा केऽपि सुश्रावका जाताः, केऽपि च प्रव-

जिताः. तदानीं कुंथुभूपः प्रव्रज्य प्रथमो गणधरो जातः. अरनाथस्य षष्टिसहस्राः साधवो जाताः. साध्व्यः स्वामिनस्तावत्प्रमाणा एव जाताः. श्रावकाश्चतुरशीतिसहस्राधिकलक्षमाना बभूवुः. श्राविकाश्चतुरशीतिसहस्राधिकलक्षत्रयमाना बभूवुः. सर्वायुः चतुरशीतिसहस्रवर्षाणि भुक्त्वा सम्मेतशैलशिखरे मासिकानशनेन भगवान्निर्वृत्तः. देवैर्निर्वाणोत्सवो भृशं कृतः. इत्यरचक्रवर्तिदृष्टांतः. ७.

॥ मूलम् ॥—चइत्ता भारहं वासं । चक्कवट्टी महड्ढिओ ॥ चइत्ता उत्तमे भोए । महापउमो तवं चरे ॥ ४१ ॥ व्याख्या—हे मुने! महापद्मोऽप्यष्टमश्चक्री महार्द्धिकस्तपोऽचरत्. किं कृत्वा? भारतं वासं त्यक्त्वा, पुनरुत्तमान् प्रधानान् भोगांस्त्यक्त्वा. ॥ ४१ ॥ अत्र महापद्मचक्रवर्तिदृष्टांतः—इहैव जंबूद्वीपे भारते वर्षे कुरुक्षेत्रे हस्तिनागपुरं नाम नगरं. तत्र श्रीऋषभवंशप्रसूतः पद्मोत्तरो नाम राजा. तस्य ज्वालानाममहादेवी. तस्याः सिंहस्वप्नसूचितो विष्णुकुमारनामा प्रथमः पुत्रः. द्वितीयश्चतुर्दशस्वप्नसूचितो महापद्मनामा. द्वावपि वृद्धिं गतौ, महापद्मो युवराजा कृतः. इतश्चोज्जयिन्यां नगर्यां श्रीधर्मनामराजा, तस्य नमुचिना-

मा मंत्री. अन्यदा तत्र श्रीमुनिसुव्रतस्वामिशिष्यः सुव्रतो नाम सूरिः समवसृतः. तद्वंदनार्थं लोकः स्वविभूत्या निर्गतः, प्रासादोपरि स्थितेन राज्ञा दृष्टः. पृष्टाश्च सेवकाः. अकालयात्रया क्वायं लोको गच्छति? ततो नमुचिमंत्रिणा भणितं, देव अत्रोद्याने श्रमणाः समागताः, तेषां यो भक्तो लोकः स तद्वंदनार्थं गच्छति. राज्ञा भणितं वयमपि यास्यामः. नमुचिनोक्तं तर्हि त्वया तत्र मध्यस्थेन भाव्यं, यथाहं वादं कृत्वा तान्निरुत्तरीकरोमि. राजा नमुचिसहितस्तत्र गतः. नमुचिना भणितं, भो श्रमणाः! यदि यूयं धर्मतत्वं जानीथ तर्हि वदथ? सर्वेऽपि मुनयः क्षुद्रोऽयमिति कृत्वा मौनेन स्थिताः. ततो नमुचिर्भृशं रुष्टः सूरिप्रत्येवं भणति, एष बलद्दः ( बलद ) किं जानाति? ततः सूरिभिर्भणितं भणामः किमपि यदि त्वं खर्जति. इदं वचः श्रुत्वाऽनेकशास्त्रविचक्षणेन क्षुल्लकशिष्येण भणितं, भगवन्नहमेनं निराकरिष्यामि. इत्युक्त्वा क्षुल्लकेन स वादे निरुत्तरीकृतः, साधूनामुपरि द्वेषं गतः. रात्रौ च चण्डरूपैकाक्येव मुनिवधार्थमागतो देवतया स्तंभितः. प्रभाते तदाश्चर्यं दृष्ट्वा राज्ञा लोकेन च स भृशं तिरस्कृतो विलक्षीभूतो गतो हस्तिनागपुरं, महापद्मयुवराजस्य मंत्री

जातः. इतश्च पर्वतवासी सिंहबलो नाम राजा, स च कोट्टाधिपतिरिति महापद्मदेशं विनाश्य कोट्टे प्रविशति. ततो रुष्टेन महापद्मेन नमुचिमंत्री पृष्टः, सिंहबलराजग्रहणे किंचिदुपायं जानासि? नमुचिनोक्तं सुष्टु जानासि. ततो महापद्मप्रेरितोऽसौ सैन्यवृतो गतो निपुणोपायेन च दुर्गं भंक्त्वा सिंहबलो बद्ध आनीतश्च महापद्मांतिके. महापद्मेनोक्तं नमुचे! यत्तवेष्टं तन्मार्गय? नमुचिनोक्तं सांप्रतं वरः कोशेऽस्तु, अवसरे मार्गयिष्यामि. एवं यौवराज्यं पालयतो महापद्मस्य कियान् कालो गतः. अन्यदा महापद्ममात्रा ज्वालादेव्या जिनरथः कारितः, अपरमात्रा च मिथ्यात्ववासितया जिनधर्मप्रत्यनीकया लक्ष्मीनाम्न्या ब्रह्मरथः कारितो भणितश्च पद्मोत्तरो नाम राजा, यथैष ब्रह्मरथः प्रथमं नगरमध्ये परिभ्रमतु. जिनरथश्च पश्चात्परिभ्रमतु. इदं वचः श्रुत्वा जयादेव्या प्रतिज्ञा कृता, यदि जिनरथः प्रथमं न भ्रमिष्यति तदाऽपरजन्मनि ममाहारः. ततो राज्ञा द्वावपि रथौ निरुद्धौ. महापद्मः स्वजनन्याः परमामधृतिं दृष्ट्वा नगरान्निर्गतः केनापि न ज्ञातः. परदेशे गच्छन् महाटव्यां प्रविष्टः, तत्र च परिभ्रमंस्तापसालये गतः. तापसैर्दत्तसन्मानस्तत्र तिष्ठति.

इतश्च चंपायां नगर्यां जनमेजयो राजा परिवसति. स च कालनरेंद्रेण प्रतिरुद्धः, ततो महान् संग्रामो बभूव. जनमेजयो नष्टः, तस्यांतःपुरमपीतस्ततो नष्टं. जनमेजयस्य राज्ञो नागवतीनाम नार्या, सा मदनावलीपुत्र्या समं नष्टा, आगता तं तापसाश्रमं, समाश्वासिता कुलपतिना तत्रैव स्थिता. कुमारमदनावल्योः परस्परमनुरागो जातः. कुलपतिना तन्माता च नयोः परस्परमनुरागो ज्ञातः. कुलपतिना नागवत्या मात्रा च भणिता मदनावली, यथा पुत्रि! त्वं किं न स्मरसि नैमित्तिकवचनं? यथा चक्रवर्तिनस्त्वं प्रथमपत्नी भविष्यसि. ततः कथं चत्र नवानुरागं करोषि? कुलपतिनापि कुमारस्य विसर्जनार्थमुक्तं, कुमार! त्वमितो गच्छ? तद्वाणीं त्वरितमेव ततो निर्गतः कुमार एवं मनोरथं चकार, यथाहमेतस्याः संगमेन भरताधिपो भूत्वा ग्रामाकरनगरादिषु सर्वत्र जिनभवनानि कारयिष्यामीति. भ्रमन् कुमारोऽथ प्राप्तः सिंधुनंदनं नाम नगरं. तत्रोद्यानिकामहोत्सवे नगरान्निर्गता नरनार्यश्च विविधक्रीडाभिः क्रीडंति. अस्मिन्नवसरे राज्ञः पट्टहस्ती आलानस्तंभमुन्मूल्य गृहहट्टभित्तिभंगं कुर्वन्नगराद्बहिर्युवतीजनमध्ये समायातः. ताश्च तं तथाविधं दृष्ट्वा दूरतः प्रधावितुमसमर्थास्तत्रैव स्थि-

ताः. यावदसौ तासामुपरि शुंमापातं करोति, तावता दूरदेशस्थितेन महापद्मेन करुणापूर्णहृदयेन हक्कितोऽसौ करी, सोऽपि वेगेन चलितः कुमाराभिमुखं. तदानीं ताः सर्वा अपि भणंति, हाहा! अस्मद्रक्षणार्थं प्रवृत्तोऽयं करिणा हिंस्यते! एवं तासु प्रलपंतीषु च तयोः करिकुमारयोर्घोरः संग्रामो बभूव. सर्वेऽपि नागरजनास्तत्रायाताः. सामंतभृत्यसहितो महासेनो राजापि तत्रायातः. भणितं च नरेंद्रेण कुमार! अनेन समं संग्रामं मा कुरु? कृतांत इव च रुष्टोऽसौ तव विनाशं करिष्यतीति. महापद्म उवाच, राजन्! विश्वस्तो भव? पश्य मम कलामित्युक्त्वा क्षणेन तं मत्तकरिणं स्वकलया वशीकृतवान्. आरूढश्च तं मत्तगजं महापद्मः स्वस्थाने नीतवान्. साधुकारेण तं लोकः पूजितवान्, यथैष कोऽपि महापुरुषः प्रधानकुलसमुद्भवोऽस्ति. अन्यथा कथमीदृशं रूपं विज्ञानं चास्य भवति? ततो राज्ञा स्वगृहे नीत्वा कुमारस्य विविधोपचारकरणपूर्वकं कन्याशतं दत्तं. तेन समं विषयसुखमनुभवतस्तस्य महापद्मकुमारस्य दिवसास्तत्र सुखेन यांति. तथापि स तां मदनावलीं हृदयान्न विस्मारयति. अन्यदा रजन्यां शय्यातोऽसौ वेगवत्या विद्याधर्यापहृतः, निद्राक्षये सा तेन दृष्टा, मुष्टिं द-

र्शयित्वा ना कुमारेण जणिता, किं त्वमेव मामपहरसि? तया भणितं कुमार!

नाढ्ये सूर्योदयनाम नगरमस्ति, तत्रेंद्रधनुर्नाम विद्याधराधिपतिरस्ति. तस्य जार्या श्रीकांता वर्तते. तस्याः पुत्री जयचंद्रानाम्नी वर्तते. सा च पुरुषद्वेषिणी नेछति कथमपि वरं. ततो नरपत्याज्ञया मया सर्वत्र वरनरेंद्रा विलोक्य विलोक्य पट्टिकायां लिखिताः, सर्वेऽपि तस्या दर्शिताः, न कोऽपि रुचितः, अन्यदा मया तस्यास्तव रूपं दर्शितं. तद्दर्शनानंतरमेव सा कामावस्थया गृहीता, जणितं च तया यद्येष जर्ता न जविष्यति, तदाऽवश्यं मया मर्तव्य, अन्यपुरुषस्य मम यावज्जीवं निवृत्तिरेव. एष तस्या व्यतिकरो मया तन्मातृपित्रोर्ज्ञापितः. ताभ्यां त्वदानयनायाहं प्रयुक्ता. अविश्वसंत्यास्तस्या विश्वासार्थं मयेयं प्रतिज्ञा कृता, यद्यहं त्वरितं नानयामि, तदा ज्वालाकुले ज्वलने प्रविशामि. ततः कुमार! यदि तव प्रसादेन मम मरणं न संपद्यते, यथा च मे प्रतिज्ञानिर्वाहो जवति, तथा प्रसादं कुरु? ततस्तदाज्ञया तया महापद्मः सूर्योदये तत्र नीतः. खेचराधिपतिर्मिलितः, तेन च सुमुहूर्ते तस्याः पाणिग्रहणं कारितः, पूजिता च वेगवती. इतश्च जयचंद्राया मातुलजातरौ गंगाधरमहीधरनामानौ

विद्याधरावतिप्रचंडाविमं व्यतिकरं ज्ञात्वा अनेकभटसहितौ महापद्मेन समं संग्रामार्थमागतौ. महापद्मोऽपि तयोरागमनं श्रुत्वा सूरोदयपुराद्बहिर्विद्याधरभटपरिवृतो निर्गतः, संप्रलग्नस्तयोः संग्रामः, तदानीं महापद्मेन स्यंदनाः, कुंजराः, अश्वाः, सुभटाः परबलसत्काः सर्वेऽपि बाणैर्विद्धाः, भग्नं स्वं बलं दृष्ट्वा गंगाधरमहीधरौ स्वयमुत्थितौ, महापद्मेनोभावपि हतौ. ततो लब्धजयः स महापद्म उत्पन्नस्त्रीरत्नवर्जसर्वरत्नः, प्राप्तनवनिधिर्द्वात्रिंशत्सहस्रमुकुटेश्वरसेवितपादपद्मः, परिणीतैकोनचतुःषष्टिसहस्रांतःपुरो हयगजरथपदातिकोशसंपन्नोऽष्टमश्चक्रवर्ती जातः. तथापि षट्खंडभरतराज्यं स मदनावल्या रहितं नीरसं मन्यते. अन्यदा तस्मिन्नाश्रमपदे गतस्य तस्य महापद्मचक्रिणस्तापसैर्महान् सत्कारः कृतः. जनमेजयेनापि राज्ञा मदनावली तस्य दत्ता, तेन परिणीता स्त्रीरत्नं बभूव. ततो महापद्मश्चक्रवर्तिऋद्धिसमेतो हस्तिनागपुरं प्राप्तः, प्रणनाम च जननीजनकपादान्. ताभ्यामप्यधिकस्नेहेन प्रेक्षितः. अत्रांतरे तत्रैव समवसृतो मुनिसुव्रतस्वामिशिष्यो नागसूरिः, ततो निर्गतः सपरिवारः पद्मोत्तरराजा तं वंदित्वा पुरो निषण्णः. गुरुणा च तत्पुरो भवनिर्वेदजननी देशना कृता. तां श्रुत्वा

वैराग्यमापन्नो राजा गुरुं प्रत्येवमुवाच, भगवन्नहं राज्यं स्वस्थं कृत्वा भवदंतिके प्रव्रजिष्यामि. गुरुणा भणितं मा विलंबं कुर्विति गुरुं प्रणम्य नगरे प्रविष्टो राजा. आकारिता मंत्रिणः प्रधानपरिजना विष्णुकुमारश्च, सर्वेषामपि राज्ञैवमुक्तं, भो भो! श्रुता भवद्भिः संसारासारता, अहमेतावत्कालं वंचितः, यत् श्रामण्यं नानुष्ठितवान्. ततः सांप्रतं विष्णुकुमारं निजराज्येऽभिषिच्य प्रव्रज्यां गृह्णासि. ततो विष्णुकुमारेण विज्ञप्तं, तात! ममापि किंपाकोपमैर्भोगैः सृतं, तव मार्गमेवानुसरिष्यामि.

ततो विष्णुकुमारस्य दीक्षानिश्चयं ज्ञात्वा पद्मोत्तरराज्ञा महापद्म आकारितो भणितश्च, पुत्र! ममेदं राज्यं प्रतिपद्यस्व? विष्णुकुमारोऽहं च प्रव्रज्यां प्रतिपद्यावः. अथ विनीतेन महापद्मेन च भणितं, तात! निजराज्याभिषेकं विष्णुकुमारस्यैव कुरु? अहं पुनरेतस्यैवाज्ञाप्रतीछको भविष्यामि. राज्ञा भणितं वत्स! मयोक्तोऽप्ययं राज्यं न प्रतिपद्यते, अवश्यमयं मया समं प्रव्रजिष्यति. ततः शोभनदिवसे महापद्मस्य कृतो राज्याभिषेकः. विष्णुकुमारसहितः पद्मोत्तरराजा सुव्रतसूरिसमीपे प्रव्रजितः. ततो महापद्मो विख्यातशासनश्चक्रवर्ती जातः.

स्वमातृअपरमातृकारितौ द्वावपि रथौ तथैव स्तः. महापद्मचक्रिणा तु जननीसत्को जिनरथो नगरीमध्ये भ्रामित, जिनप्रवचनस्य कृतोन्नतिः. तत्प्रभृति बहुलोको धर्मोद्यममतिर्जिनशासनं प्रतिपन्नः. तेन महापद्मचक्रिणा सर्वस्मिन्नपि भरतक्षेत्रे ग्रामाकरनगरोद्यानादिषु कारितानि जिनायतनान्येककोटिलक्षप्रमाणानि पद्मोत्तरमुनिरपि पालितनिष्कलंकश्रामण्यः शुक्लाध्यवसायेन कर्मजालं क्षपयित्वा समुत्पन्नकेवलज्ञानः संप्राप्तः सिद्धिमिति. विष्णुकुमारमुनेरप्युग्रतपोविहारनिरतस्य वर्धमानज्ञानदर्शनचारित्रपरिणामस्याकाशगमनादिवैक्रियलब्धय उत्पन्नाः. स कदाचिन्मेरुवत्तुंगदेहो गगने व्रजति, कदाचिन्मदनवद्रूपवान् भवति. एवं नानाविधलब्धिपात्रः स संजातः. इतश्च ते सुव्रताचार्या बहुशिष्यपरिवृता वर्षारात्रस्थित्यर्थं हस्तिनागपुरोद्याने समायाताः, ज्ञाताश्च तेन विरुद्धेन नमुचिना, अवसरं ज्ञात्वा तेन राज्ञे विज्ञप्तं, यथा पूर्वप्रतिपन्नं मम वरं देहि ? चक्रिणोक्तं यथेष्टं मार्गय ? नमुचिना भणितं राजन्नहं वेदभणितेन विधिना यज्ञं कर्तुमिच्छामि, अतो राज्यं मे देहि ? चक्रिणा नमुचिः स्वराज्येऽभिषिक्तः, स्वयं चांतःपुरे प्रविश्य स्थितः. नमुचिर्यज्ञपाटकमागम्य यागनिमित्तं दीक्षि-

तो बभूव. राज्येऽभिषिक्तस्य तस्य वर्धापनार्थं जैनयतीन् वर्जयित्वा सर्वेऽपि लिंगिनो लोका-
श्च समायाताः. नमुचिना सर्वलोकसमक्षमुक्तं, सर्वेऽपि लोका मम वर्धापनार्थं समायाताः,
जैनयतयः कोऽपि नायाताः. एवं छलं प्रकाश्य सुव्रताचार्या आकारिता आगताः. नमुचिना
भणिता भो जैनाचार्याः! यो यदा ब्राह्मणो वा क्षत्रियो वा राज्यं प्राप्नोति, स तदा पाखंडि-
भिरागत्य दृष्टव्यः, इयं लोकस्थितिः, यतो राजरक्षितानि तपोधनानि भवंति. यूयं पुनः स्त-
ब्धाः सर्वपाखंडदूषका निर्मर्यादा मां निंदथ, अतो मदीयं राज्यं मुक्त्वाऽन्यत्र यथासुखं व्र-
जत? यो युष्माकं मध्ये कोऽपि नगरे भ्रमन् दृश्यते स मे वध्यो भविष्यति. सुव्रताचार्यैरु-
क्तं राजन्नस्माकं राजवर्धापनाचारो नास्ति, तेन वयं त्वद्वर्धापनकृते नायाताः, न च वयं किं-
चिन्निंदामः, किं तु समभावास्तिष्ठामः. ततः स रुष्टः प्रतिभणति यदि श्रमणं सप्तदिनोपर्य-
हं द्रक्ष्ये तमहमवश्यं मारयिष्यामि, नात्र संदेहः. एतन्नमुचिवाक्यं श्रुत्वाचार्याः स्वस्था-
नमायाताः, सर्वेऽपि साधवः पृष्टाः, किमत्र कर्तव्यं? तत एकेन साधुना भणितं, यथा सदा
सेविततपोविशेषो विष्णुकुमारनामा महामुनिः सांप्रतं मेरुपर्वतचूलास्थो वर्तते, स च महा-

पद्मचक्रिणो भ्रातास्ति, ततस्तद्वचनादयमुपशमिष्यति. आचार्यैरुक्तं तदाकारणार्थं यो विद्यालब्धिसंपन्नः स तत्र व्रजतु ?

तत एकेन साधुनोक्तमहं मेरुचूलां यावद्गगने गंतुं शक्तोऽस्मि, पुनः प्रत्यागंतुं न शक्तोऽस्मि. गुरुणा भणितं विष्णुकुमार एव त्वामिहानेष्यति. तथेति प्रतिपद्य स मुनिराकाशे उत्पतितः, क्षणमात्रेण मेरुचूलायां प्राप्तः. तमायांतं दृष्ट्वा विष्णुकुमारेण चिंतितं किंचिद्गुरुकं संघकार्यमुत्पन्नं, यदयं मुनिर्वर्षाकालमध्येऽत्रायातः. ततः स मुनिर्विष्णुकुमारं प्रणम्यागमनप्रयोजनं कथितवान्. विष्णुकुमारस्तं मुनिं गृहीत्वा स्तोकवेलयाऽऽकाशमार्गेण गजपुरे प्राप्तः, वंदितास्ते गुरवः, गुर्वाज्ञया साधुसहितो विष्णुकुमारमुनिर्नमुचिपर्षदि गतः सर्वैः सामंतादिभिर्वंदितः, नमुचिस्तु तथैव सिंहासने तस्थिवान्, न मनाग् विनयं चकार. विष्णुना धर्मकथनपूर्वं नमुचेरेवं भणितं, वर्षाकालं यावन्मुनयोऽत्र तिष्ठंति. नमुचिना भणितं, किमत्र पुनः पुनर्वचनप्रयासेन ? पंचदिवसान् यावन्मुनयोऽत्र तिष्ठंतु; विष्णुना भणितं तवोद्याने मुनयस्तिष्ठंतु. ततः संजातामर्षेण नमुचिनैवं भणितं, सर्वपाखंडाधमैर्भवद्भिर्न मद्राज्ये स्थेयं,

सद्राज्यं त्वरितं त्यजत ? यदि जीवितेन कार्यं. ततः समुत्पन्नकोपानलेन विष्णुना भणितं, तथापि त्रयाणां पादानां स्थानं देहि ? ततो भणितं नमुचिना, दत्तं त्रिपदीस्थानं, परं यं त्रिपद्या बहिर्दृक्ष्यामि तस्य शिरश्छेदं करिष्यामि. ततः स विष्णुकुमारः कृतनानाविधरूपो वृद्धिं गछन् क्रमेण योजनलक्षप्रमाणरूपो जातः. क्रमाभ्यां दर्दरं कुर्वन् ग्रामाकरनगरसागराकीर्णां भूमिमकंपयत्, शिखरिणां शिखराणि पातयतिस्म. त्रिभुवने क्षोभं कुर्वन् स मुनिः शक्रेण ज्ञातः तस्य कोपोपशांतये शक्रेण गायनदेव्यः प्रेषिताः, ताश्चैवं गायंतिस्म—सपर संतावउ धम्मवणदावउ कुग्गइगमणहेउ कोवो ता उवसमं करेसु भयवंति. एवमादीनि गीतानि ता वारंवारं श्रावयंतिस्म. स मुनिर्नमुचिं सिंहासनात्पृथिव्यां पातितवान्, दत्तपूर्वापरसमुद्रपादः स सर्वजनं भापयतिस्म. ज्ञातवृत्तांतो महापद्मश्चक्री तत्रायातः, तेन समस्तसंघेन सुरासुरैश्च शांतिनिमित्तं विविधोपचारैः स उपशामितः. तत्प्रभृति विष्णुकुमारस्त्रिविक्रम इति ख्यातः. उपशांतकोपः स मुनिरालोचितः प्रतिक्रांतः शुद्धश्च. यत उक्तं—आयरिए गछंमि । कुलगणसंघे अ चेइअविणासे ॥ आलोइयपडिक्कंतो । सुद्धो जं निज्जरा विउला ॥ १ ॥

निष्कलंकं श्रामण्यमनुपाल्य समुत्पन्नकेवलः स विष्णुकुमारः सिद्धिं गतः. महापद्मचक्रवर्त्यपि क्रमेण दीक्षां गृहीत्वा सुगतिभागभूत्. इति महापद्मदृष्टांतः. ८.

॥ मूलम् ॥—एगछत्तं पसाहित्ता । महिं माणनिसूरणो ॥ हरिसेणो मणुस्सिंदो । पत्तो गइमणुत्तरं ॥ ४२ ॥ व्याख्या—पुनर्हे मुने! हरिषेणो मनुष्येंद्रो हरिषेणनामा नवमश्चक्री अनुत्तरां गतिं सिद्धिं प्राप्तः. किं कृत्वा? महीं पृथ्वीमेकछत्रां प्रसाध्य प्रपाल्य. कीदृशो हरिषेणः? माननिसूरणोऽहंकारिशत्रुमानदलनः. ॥ ४२ ॥ अत्र हरिषेणदृष्टांतः—कांपिल्ये नगरे महाहरिराज्ञो मेरादेव्याः कुक्षौ चतुर्दशस्वप्नसूचितो हरिषेणनामा चक्रवर्ती समुत्पन्नः. क्रमेण यौवनं प्राप्तः पित्रा राज्ये स्थापितः. उत्पन्नानि चतुर्दश रत्नानि, प्रसाधितं च भरतं, कृतपट्टाभिषेको हरिषेण उदारान् भोगान् भुंजन् कालं गमयति. अन्यदा लघुकर्मतया भववासाद्विरक्तः स एवं चिंतितुं प्रवृत्तः, पूर्वकृतसुकृतकर्मवशेन मयात्रेदृशी ऋद्धिः प्राप्ता, पुनरपि परलोकहितं करोमि. उक्तं च—मासैरष्टभिरह्ना वा । पूर्वेण वयसा यथा ॥ तत्कर्तव्यं मनुष्येण । यथांते सुखमेधते ॥ १ ॥ एवमादि परिभाव्य पुत्रं राज्ये निवेश्य स निष्क्रांतः,

उत्पन्नकेवलश्च सिद्धिं गतः. पंचदशधनुरुच्चत्वं दशवर्षसहस्रायुश्च संजातमिति हरिषेणच- क्रिदृष्टांतः. ए. ॥ ४१ ॥

॥ मूलम् ॥—अन्निउ रायसहस्सेहिं । सुपरिच्चाइ दमं चरे ॥ जयनामो जिणक्खायं । पत्तो गइमणुत्तरं ॥ ४२ ॥ व्याख्या—जयनामैकादश्चक्री जिनाख्यातं जिनोक्तं धर्मं चरित्वा चानुत्तरां गतिं प्राप्तः. कीदृशो जयनामा? राजसहस्रैरन्वितो नृपसहस्रेण परिवृतो जैनीं दीक्षामचरत्. पुनः कीदृशो जयनामा? सुपरित्यागी सम्यक् परित्यागी. ॥ ४२ ॥ अत्र जयनामाचक्रवर्तिदृष्टांतः—राजगृहे नगरे वप्राया राज्ञ्याः कुक्षौ चतुर्दशस्वप्नसूचितो जयनामा पुत्रो जातः, क्रमेण संसाधितन्नरतश्चक्री जातः, राजश्रियमनुन्नवन् न्नोगेन्यो विरक्तो जातः, एवं च चिंतितवान्—सुचिरमपि उपित्वा स्यात् प्रियैर्विप्रयोगः । सुचिरमपि चरित्वा नास्ति न्नोगेपु तृप्तिः ॥ सुचिरमपि सुपुष्टं याति नाशं शरीरं । सुचिरमपि विचिंत्यो धर्म एकः सहायः ॥ १ ॥ एवं संवेगमुपागतो निष्क्रांतोऽनुक्रमेण सिद्धः. द्वादशधनुर्देहमानो वर्षसहस्रायुश्चैष आसीदिति जयचक्रीदृष्टांतः. १०.

॥ मूलम् ॥—दसन्नरज्जं मुइयं । चइत्ताणं मुणी चरे ॥ दसन्नभद्दो निक्खंतो । सक्कं स-
क्खं सक्केण चोइओ ॥ ४४ ॥ व्याख्या—दशार्णभद्रो राजा साक्षात् शक्रेण चोदितः प्रेरितः सन्
निष्क्रांतः, गृहस्थावस्थातो निःसृतः. पुनर्मौनी समचरत्. मुनेः कर्म मौनं, मौनमस्यास्तीति
मौनी, मुनिर्भूत्वा विहारमकरोत्. किं कृत्वा? दशार्णराज्यं त्यक्त्वा, दशार्णानां देशानां रा-
ज्यं दशार्णराज्यं. कीदृशं दशार्णराज्यं? मुदितं समृद्धं. ॥४४॥ अत्र दशार्णभद्रदृष्टांतः—अस्ति
विराटदेशे धन्यपुरं नाम सन्निवेशः, तत्रैको मदहरनामा महत्तरपुत्रोऽस्ति, तस्य भार्या दुःशी-
ला नगरारक्षकेण समं चौर्यरतिं कुर्वत्यस्ति. अन्यदा तत्र सन्निवेशे नटैर्नाट्यं प्रारब्धं तत्रैको
नर्तकः स्त्रीवेषं कृत्वा नृत्यन्नस्ति. घनो लोको दर्शनार्थं मिलितोऽस्ति, सापि तत्र गतास्ति. सा
स्त्रीरूपधरं तं नर्तकं प्रेक्ष्य पुरुषं च ज्ञात्वा कामविह्वला जाता. एकं तत्पुरुषं प्राह, यद्यसावनेन
वेषेण मद्गृहे समागत्य मया समं रमते, तदाहमस्मै अष्टोत्तरशतद्रव्यं ददामि. तेन प्रतिपन्नं,
भणितं च त्वं याहि? एष तव पृष्ठौ त्वरितमेव समायास्यति. एषोऽपि तत्पृष्ठौ तद्गृहे गतः, तया
पादशौचनं दत्तं, स भोक्तुमुपविष्टः, तया परिवेषितं दैरेय्या भृतं भाजनं, यावदसौ भुंक्ते,

तावत्तारक्षकस्तत्रायातोऽवदत् कपाटमुद्घाटयेति. सा नटपुरुषमुवाच, त्वं तिलगृहोदरे प्रविश? यावदेनं निवर्तयामि. स तिलगृहोदरे प्रविष्टः, बुभुक्षितः सन् कोणस्थांस्तिलान् फूत्कृत्य फूत्कृत्य खादति. आगतस्तलारक्षः कपाटं पिधाय. दैरेयीभृतं पात्रं दृष्ट्वा स भोक्तुमुपविष्टः, यावज्जेमति तावत्तस्याः पतिर्द्वारे समायातः. तयोक्तं तलारक्षस्य, शीघ्रमुत्तिष्ठ? प्रविशास्मिंस्तिलगृहोदरे, परं दूरे न गंतव्यं, कोणे सर्पस्तिष्ठति, त्वया तत्र प्रदेशे न गंतव्यं. प्रविष्टस्तलारक्षस्तिलगृहोदरे, पतिस्तत्रायातः दैरेयीपात्रं दृष्ट्वा तेन पृष्टं किमेतत्? तयोक्तं बुभुक्षितास्मीति जेमामि. स उवाच त्वं तिष्ठ? अहं पथश्रांतत्वाद्विशेषतो बुभुक्षितोऽस्मीति प्रथमं जेमामि. तयोक्तमद्याष्टमी वर्तते, कथमस्नातो जेमसि? तेनोक्तं त्वं स्नातासीति तव स्नानेन मम स्नानं जातमिति प्रोच्य स भोक्तुमुपविष्टः.

इतश्च तिलभक्षकनटफूत्कारश्रवणे सर्पोऽयमिति फूत्करोतीति भीतस्तलारक्षस्तिलगृहोदरान्निर्गतो नष्टः, ततोऽयमेवावसर इति कृत्वा स्त्रीवेषधरो नटोऽपि नष्टः. पत्या पृष्टा सा स्त्री किमेतत्? तयोक्तं मया त्वं सांप्रतमेव वारितो यदद्याष्टम्यां त्वमस्नातो मा भोजनं कुरु?

त्वया त्वास्नातेनाद्य भोजनं कर्तुमारब्धं, अतस्त्वद्गृहे सदा वसंताविमौ पार्वतीमहेश्वरौ न-
ष्टौ गतौ. मदहर उवाच हा! दुष्टु कृतं मया, एवं पश्चात्तापं कुर्वन् पुनस्तां स उवाच, को-
ऽप्यस्त्युपायो यदेतौ पुनरायातः? सोवाच यदि न्यायेन वित्तमुपार्ज्य पूजां कुर्यास्तदा पुनरे-
तौ तव गृहे समायास्यतः. ततो गतो मदहरो देशांतरे, दशार्णदेशे ईक्षुवाटककर्मणि लग्नः,
दशगद्याणकसुवर्णं लब्धं, तथाप्यल्पमिति कृत्वा स न तुष्टिं प्राप. इतस्ततो भ्रमन् स एक-
दाटव्यां प्रविष्टः, पिप्पलतरुमूले विश्रामं गृह्णाति. अत्रांतरेऽश्वापहृतो दशार्णभद्रस्तत्रायातः,
तं दृष्ट्वा राज्ञा पृष्टं, कस्त्वं? किमर्थमत्रायातः? स उवाच यथास्थितवृत्तांतं. राज्ञा चिंतित-
मसौ स्त्रिया विप्रतारितः परदेशे भ्रमन्नस्ति. ततस्तस्य स्त्रीचरितमुक्त्वा तं च स्वगृहे नीत्वा
भोजनादिचिंतनं विहितं. राज्ञा चिंतितमहो असत्यदेवेऽपीश्वरादौ कीदृशी भक्तिर्वर्तते? म-
या सत्यदेवेऽपि श्रीमहावीरे विद्यमानेऽपि तादृशं भक्तिप्रपंचनं न विहितमिति राजा याव-
च्चिंतयति तावदेकप्रतिहारपुरुषेण राज्ञोऽग्रे एवमुक्तं भगवान् श्रीमहावीरः समायातः. राजा
परितुष्टश्चिंतयति, यदि नामैष मदहरो विशिष्टविवेकरहितोऽपि निजदेवपूजासंपादनार्थमेवं

परिक्लिश्यते, ततोऽस्माभिरीदृशैः सारासारविवेचनविचक्षणैः समग्रसामग्र्या त्रिभुवनचिंतामणिकल्पस्य श्रीमहावीरस्य विशेषेण पूजा कार्येति. ततः कल्येऽहं सर्वर्द्ध्या तथा श्रीमहावीरं वंदिष्ये, यथा केनाप्येवं न वंदितः पूर्वं. ततो द्वितीयदिवसे कृतप्रभातकृत्यः स्नातविलिप्तालंकृतदेहः स्फाररूपयौवनलावण्यनेपथ्ययुक्तः सर्वांगोपांगालंकृतया चतुरंगिण्या सेनया सहितो बहुभिर्मंत्रिसामंतैः श्रेष्ठिसार्थवाहैश्च परिवृतः, भंभादिवादित्रश्रेणिबधिरितदिगंतरालो गंधर्वैर्गीयमानगुणो नृत्यंतीभिर्विलासिनीभिः पोषितनेत्ररसो गजेंद्रारूढो दशार्णभद्रभूपतिर्भगवतो वंदनार्थमायातः. विशुद्धभावेन भगवान् वंदितः. राजा मदहरश्च हर्षं प्राप्तौ. अत्रांतरे शक्रेण चिंतितं मत्कृतया महाविभूत्याऽसौ दशार्णभद्रः प्रतिबोधं यास्यतीति. शक्र ईदृशीं विभूतिं विकुर्वितवान्. तथाहि—ऐरावणहस्तिनोऽष्टौ दंता विकुर्विताः, दंते दंतेऽष्टाष्ट पुष्करिण्यो विकुर्विताः, पुष्करिण्यां पुष्करिण्यामष्टावष्टौ पद्मानि, पद्मे पद्मेऽष्टाष्ट पत्राणि, पत्रे पत्रे द्वात्रिंशद्बद्धनाट्यानि. अनया विभूत्या ऐरावणारूढेन शक्रेण प्रदक्षिणीकृत्य भगवान् वंदितः. तं तादृशं दृष्ट्वा दशार्णभद्रेण चिंतितमहो खलु तुच्छोऽहं, यस्तुच्छया विभूत्या गर्वं कृतवा-

न. यत उक्तं—अदिठ्ठभद्दा थोवेणवि । हुंति उत्तणाणीया ॥ णच्चइ उत्तालमुहो हु । मूसगो वीहिमासज्ज ॥ १ ॥ (अस्या व्याख्या—अदृष्टभद्रा नीचाः स्तोकेनाप्युत्ताना भवंति मायंतीत्यर्थः. हु इति वितर्के मूषको व्रीहिमासाद्योत्तालमुख उच्चैर्मुखो नृत्यति.) अनेन शक्रेण प्राग्भवे शुद्धो धर्मः कृतः, तत ईदृशी ऋद्धिर्लब्धा, ततोऽहमपि तमेव धर्मं करोमि, किं ममात्र विषादेन? उक्तं च—समसंख्यावयवः सन् । पुरुषः पुरुषं किमन्यमभ्येति ॥ पुण्यैरधिकतरं चे—न्ननु सोऽपि करोतु तान्येव ॥ १ ॥ इत्यादिसंवेगभावनया प्रतिबुद्धः क्षयोपशमं प्राप्तचारित्रमोहनीयो भगवंतंप्रत्येवं दशार्णभद्रोऽवादीत्, भगवन्! भवचारकादहं निर्विण्णोऽस्मि. ततश्चारित्रप्रदानेनानुग्रहं मम कुरु? भगवता तदानीमेव सदहरेण समं स दशार्णभद्रो दीक्षितः, शक्रेण तदा वंदितः, उक्तं च श्रमणमार्गग्रहणेन त्वयैव जितं, येनेदृशी ऋद्धिः सहसा परित्यक्ता. पूर्वं त्वयाऽभिमानग्रस्तेन द्रव्यवंदनं कृतमिति त्वमेव धन्यो नाहमिति दशार्णभद्रमुनेः प्रशंसां कृत्वा शक्रः स्वस्थानं गतवानिति दशार्णभद्रदृष्टांतः. ११.

॥ मूलम् ॥—नमीनमेइ अप्पाणं । सक्कं सक्केण चोइओ ॥ चइऊण गेहं वैदेही । सा-

मन्ने पज्जुवठ्ठिओ ॥ ४५ ॥ व्याख्या—पुनर्हे मुने! विदेहेषु देशेषु भवो वैदेही, विदेहदेशस्वामी नमिनामा नृपो गेहं गृहवासं त्यक्त्वा श्रामण्यं साधुधर्मं पर्युपस्थितः, चारित्रयोग्यानुष्ठानं प्रत्युद्यतोऽभूदित्यर्थः. पुनः स मुनिः साक्षाद्ब्राह्मणरूपेण शक्रेण प्रेरितः सन् ज्ञानचर्यायां परीक्षितः सन्नात्मानं नमेइ इति नये स्थापयति, क्रोधादिकषायरहितो भवतीत्यर्थः. ॥ ४५ ॥ अथ द्वाभ्यां गाथाभ्यां चतुर्णां प्रत्येकबुद्धानामेकसमये सिद्धानां नामान्याह—

॥ मूलम् ॥—करकंडू कलिंगेसु । पंचालेसु य डुम्मुहो ॥ नमीराया विदेहेसु । गंधारेसु य निग्गई ॥ ४६ ॥ एवं नरिंदवसहा । निक्खंता जिणसासणे ॥ पुत्ते रज्जे ठवेऊणं । सामन्ने पज्जुवठ्ठिया ॥ ४७ ॥ व्याख्या—हे मुने! करकंडू राजा कलिंगेषु देशेष्वभूदित्यध्याहारः, च पुनः पांचालेषु देशेषु द्विमुखो नृपोऽभूत्, विदेहेषु देशेषु नमी राजाभूत्, च पुनर्गंधारेषु गंधारनामदेशेषु निर्गतिनामा राजाभूत्. एते चत्वारः करकंडूद्विमुखनमिनिर्गतिनामानो नरेंद्रवृषभा राजमुख्याः पुत्रान् राज्ये स्थापयित्वा पश्चाज्जिनशासने जिनाज्ञायां श्रामण्ये चारित्रे पर्युपस्थिताः, चारित्रयोग्यक्रियानुष्ठानतत्पराः संतो निष्क्रांताः संसारान्निःसृताः, भवभ्रम-

णाद्विरता आसन्नित्यध्याहारः, सिद्धिं प्राप्ता इति भावः. एतेषां चतुर्णां प्रत्येकबुद्धानां कथा प्रसंगतः पूर्वं नमेरध्ययनतो ज्ञेया. ॥ ४६ ॥ ४७ ॥

॥ मूलम् ॥—सोवीररायवसभो । चइत्ताण मुणी चरे ॥ उदायणो पव्वइओ । पत्तो गइमणुत्तरं ॥ ४८ ॥ व्याख्या—सौवीरराजवृषभः, सौवीराणां देशानां राजा सौवीरराजः, स चासौ वृषभश्च सौवीरराजवृषभो राज्यभारधरणसमर्थः सौवीरदेशेषु भूपमुख्यः, एतादृश उदायननामा राजा वीतभयपत्तनाधीशो मौनं मुनिधर्ममाचरत्. किं कृत्वा? राज्यं परिहृत्य. स चोदायनः प्रव्रजितः सन्ननुत्तरां प्रधानां गतिं प्राप्तः. ॥ ४८ ॥ अत्रोदायनभूपदृष्टांतः—भरतक्षेत्रे सौवीरदेशे वीतभयनामनगरे उदायनो नाम राजा, तस्य प्रभावती राज्ञी, तयोर्ज्येष्ठपुत्रोऽभीचिनामाभवत्. तस्य भागिनेयः केशीनामाभूत्. स उदायनराजा सिंधुसौवीरप्रमुखषोडशजनपदानां, वीतभयप्रमुखत्रिशतत्रिषष्टिनगराणां, महासेनप्रमुखाणां दशराज्ञां बद्धमुकुटानां छत्राणां चामराणां चैश्वर्यं पालयन्नस्ति. इतश्चंपायां नगर्यां कुमारनंदी नाम सुवर्णकारोऽस्ति. स च स्त्रीलंपटो यत्र यत्र सुरूपां दारिकां पश्यति जानाति वा, तत्र तत्र पंच-

शतसुवर्णानि दत्वा तां परिणयति. एवं च तेन पंचशतकन्याः परिणीताः, एकस्तंभं प्रासादं कारयित्वा स ताभिः समं क्रीमति, तस्य च मित्रं नागिलनामा श्रावकोऽस्ति. अथ पंचशैलद्वीपवास्तव्यहासाप्रहासाव्यंतर्यौ स्तः, तयोर्भर्ता विद्युन्मालिनामदेवोऽस्ति, सोऽन्यदा च्युतः. ताभ्यां चिंतितं कमपि व्युद्ग्राहयावः, स आवयोर्भर्ता भवति. स्वयोग्यपुरुषगवेषणायेतस्ततो व्रजंतीभ्यां ताभ्यां चंपानगर्यां कुमारनंदी सुवर्णकारः पंचशतस्त्रीपरिवृतो दृष्टः. ताभ्यां चिंतितमेष स्त्रीलंपटः सुखेन व्युद्ग्राहयिष्यते. कुमारनंदी भणति के भवंत्यौ? कुतः समायाते? ते आहतुरावां हासाप्रहासादेव्यौ, तद्रूपमोहितः कुमारनंदी सुवर्णकारस्ते देव्यौ भोगार्थं प्रार्थितवान्. ताभ्यां भणितं यद्यस्मद्भोगकार्यं तदा पंचशैलद्वीपं समागछेः. एवं भणित्वा ते देव्यावुत्पतिते, गते च स्वस्थानं. अथ स राज्ञः सुवर्णं दत्वा पटहं वादयतिस्म, कुमारनंदिसुवर्णकारं यः पंचशैलद्वीपं नयति तस्य स धनकोटिं ददाति. एकेन स्थविरेण तत्पटहः स्पृष्टः, कुमारनंदिना तस्य कोटिधनं दत्तं. स्थविरोऽपि तद्धनं पुत्राणां दत्वा कुमारनंदिना सह यानपात्रमारूढः समुद्रमध्ये प्रविष्टः. यावद्दूरे गतस्तावदेकं वटं दृष्टवान्. स्थ-

विर उवाच तस्य वटस्याध इदं वाहनं निर्गमिष्यति, तत्र जलावर्त्तोऽस्तीति वाहनं भंक्ष्यति, त्वं त्वेतद्वटशाखामाश्रयेः, वटेऽत्र पंचशैलद्वीपाद्भारंडपक्षिणः समायास्यंति. संध्यायां तच्चरणेषु स्वं वपुः स्ववस्त्रेण दृढं बध्नीयाः, ते च प्रभाते इत उड्डीनाः पंचशैलं यास्यंति, त्वमपि तैः समं पंचशैलं गछेः, स्थविरेणैवमुच्यमानेन तद्वाहनं वटाधो गतं. कुमारनंदिना वटशाखावलंबनं कृतं, भग्नं च तद्वाहनं. कुमारनंदी तु भारंडपक्षिचरणावलंबेन पंचशैले गतः, हासाप्रहासाभ्यां दृष्टः, उक्तं च तवैतेन शरीरेण नावाभ्यां भोगो विधीयते, स्वनगरे गत्वांगुष्ठत आरभ्य मस्तकं यावज्ज्वलनेन स्वं शरीरं त्वं दह ? यथा पंचशैलाधीशो भूत्वाऽस्मन्मनोगेहं पूर्णीकुरु ? तेनोक्तं तत्राहं कथं यामि ? ताभ्यां करतले समुत्पाट्य तन्नगरोद्याने स मुक्तः. ततो लोकस्तं पृछति, किं त्वया तत्राश्चर्यं दृष्टं ? स भणति, दृष्टं श्रुतमनुभूतं पंचशैलं द्वीपं मया, यत्र प्रशस्ते हासाप्रहासाभिधे देव्यौ स्तः. अथात्र कुमारनंदिना स्वांगुष्ठेऽग्निं मोचयित्वा मस्तकं यावत् स्वशरीरं ज्वालयितुमारब्धं, तदा मित्रेणायं वारितः, भो मित्र! तवेदं कापुरुषजनोचितं चेष्टितं न युक्तं. महानुभाव! दुर्लभं मनुष्यजन्म मा हारय ? तुछमिदं

भोगसुखमस्ति. किं च यद्यपि त्वं भोगार्थी तथापि सद्धर्मानुष्टानमेव कुरु? यत उक्तं—धम्मो धणत्थियाणं । कामत्थीणं च सवकामकरो ॥ सग्गापवग्गसंगम—हेऊ जिणदेसिओ धम्मो ॥ १ ॥ इत्यादिशिक्षावादैर्मित्रेण स वार्यमाणोऽपि इंगिनीमरणेन मृतः पंचशैलाधिपतिर्जातः. तन्मित्रस्य श्रावकस्य महान् खेदो जातः, अहो! भोगकार्ये जना इत्थं क्लिश्यंति. जानंतोऽपि वयं किमत्र गार्हस्थ्ये स्थिताः स्म इति स श्रावकः प्रव्रजितः, क्रमेण कालं कृत्वाऽच्युतदेवलोके समुत्पन्नः. अवधिना स स्ववृत्तांतं जानातिस्म. अन्यदा नंदीश्वरयात्रार्थं सर्वे देवेंद्राश्चलिताः, स श्रावकदेवोऽप्यच्युतेंद्रेण समं चलितः. तदा पंचशैलाधिपतेस्तस्य विद्युन्मालिनाम्नो देवस्य गले पटहो लग्नः; उत्तारितो नोत्तरति. हासाप्रहासाभ्यामुक्तमियं पंचशैलद्वीपवासिनः स्थितिः, यन्नंदीश्वरद्वीपयात्रार्थं चलितानां देवेंद्राणां पुरः पटहं वादयन् विद्युन्मालिदेवस्तत्र याति. ततस्त्वं खेदं मा कुरु? गललग्नमिमं पटहं वादयन् गीतानि गायंतीभ्यामावाभ्यां सह नंदीश्वरद्वीपे याहि? ततः स तथा कुर्वन्नंदीश्वरद्वीपोद्देशेन चलितः. श्रावकदेवस्तं सखेदं पटहं वादयंतं दृष्ट्वोपयोगेनोपलक्षितवान्, भणति च भो त्वं मां

जानासि? स नणति कः शक्रादिदेवान्न जानाति? ततस्तं श्रावकदेवस्तस्य स्वप्राग्नवरूपं दर्शयतिस्म, सर्वं पूर्ववृत्तांतमाख्याति. ततः संवेगमापन्नः स देवो नणति, तदानीमहं किं करोमि? श्रावकदेवो नणति श्रीवर्धमानस्वामिनः प्रतिमां कुरु? यथा तव सम्यक्त्वं सुस्थिरं नवति. यत उक्तं—जो कारवेइ जिणपडिमं । जिणाण जियरागदोसमोहाणं ॥ सो पावेइ अन्ननवे । सुहजणणं धम्मवररयणं ॥ १ ॥ अन्यच्च—दारिद्दं दोहग्गं । कुजाइकुसरीरकुगइकुमईओ ॥ अवमाणरोयसोआ । न हुंति जिणबिंबकारीणं ॥ २ ॥

ततः स विद्युन्माली महाहिमवच्छिखराद्गोशीर्षचंदनदारु छेदयित्वा श्रीवर्धमानस्वामिप्रतिमां निर्वर्तितवान्, कियंतं कालं प्रतिमा पूजिता, तत आयुःक्षये तां च मंजूषायां क्षिप्तवान्. तस्मिन्नवसरे षण्मासान् यावदितस्ततो भ्रमद्वाहनं वायुभिरास्फाल्यमानं स विलोकितवान्. तत्र गत्वा चासौ तमुत्पातमुपशामितवान्, सांयात्रिकाणां च तां मंजूषां दत्तवान्, नणितवांश्च, देवाधिदेवप्रतिमा चात्रास्ति. ततस्तां लात्वा सांयात्रिका वीतनयपत्तनं प्राप्ताः, तत्रोदायनराजा तापसनक्तस्तस्य सा मंजूषा दत्ता, कथितं च सुरवचनं, मिलितश्च तत्र

ब्राह्मणादिकभूरिलोको भणति च गोविंदाय नम इत्युक्ते मंजूषा नोद्घटिता. तत्र केचिद्भणंत्यत्र देवाधिदेवश्चतुर्मुखो ब्रह्मास्ति. अन्ये केचिद्वदंत्यत्र चतुर्भुजो विष्णुरेवास्ति. केचिद्भणंत्यत्र महेश्वरो देवाधिदेवोऽस्ति. अस्मिन्नवसरे तत्रोदायनराजपट्टराज्ञी चेटकराजपुत्री प्रभावतीनाम्नी श्रमणोपासिका तत्रायाता. तया तस्या मंजूषायाः पूजां कृत्वैवं भणितं—राय-

रागदोसमोहो । सवन्नू अट्ठपाडिहेरसंजुत्तो ॥ देवाहिदेवगुरुउ । अइरा मे दंसणं देउ ॥१॥

एवमुक्त्वा तया मंजूषायां हस्तेन परशुप्रहारो दत्तः, उद्घटिता सा मंजूषा, तस्यां दृष्टाऽतीवसुंदराऽम्लानपुष्पमालालंकृता श्रीवर्धमानस्वामिप्रतिमा, जाता जिनशासनोन्नतिः, अतीवानंदिना प्रभावत्येवं भणितं— सवन्नू सोमदंसण । अपुणब्भव भवियजणमणानंद ॥ जय चिंतामणि जगगुरु । जय जय जिण वीर अकलंको ॥ १ ॥ तत्र प्रभावत्यांऽतःपुरमध्ये चैत्यगृहं कारितं, तत्रेयं प्रतिमा स्थापिता. तां च त्रिकालं सा पवित्रा पूजयति. अन्यदा प्रभावती राज्ञी तत्प्रतिमायाः पुरो नृत्यति, राजा च वीणां वादयति. तदानीं स राजा तस्या मस्तकं न पश्यति, राज्ञोऽधृतिर्जाता, हस्ताद्वीणा पतिता, राज्ञ्या पृष्टं किं मया दुष्टं नर्तितं?

॥ ६६१ ॥

राजा मौनमालंब्य स्थितः. राज्ञ्या अतिनिर्बंधेन स उक्तवान्, यत्तव मस्तकमपश्यमहं व्याकुलीभूतो हस्ताद्वीणां पातितवान्. सा भणति मया सुचिरं श्रावकधर्मः पालितः, न कंचिन्मम मरणाद्भीतिरस्ति. अन्यदा तत्प्रतिमापूजनार्थं स्नाता सा राज्ञी स्वचेटींप्रति वस्त्राण्यानयेत्युवाच. तया च दत्तानि, परं प्रभावती दृष्टिभ्रमेण, तया च रक्तानि वस्त्राण्यानीतानीति ज्ञात्वा क्रुद्धा प्राह, जिनगृहे प्रविशंत्या मम रक्तानि वस्त्राणि ददासीत्युक्त्वा चेटीमादर्शेण हतवती, मर्मणि तत्प्रहारलग्नात्सा मृता. प्रभावत्या चिंतितं हा! मया निरपराधत्रसजीववधकरणाद्व्रतं भग्नं. अतः परं किं मे जीवितव्येन? ततस्तया राज्ञ्या राज्ञ उक्तमहं भक्तं प्रत्याख्यामि. राज्ञा नैवेति प्रतिपादितं. तया पुनः पुनस्तथैवोच्यते, तदा राज्ञोक्तं, यदि त्वं देवी भूत्वा मां प्रतिबोधयसि तदा त्वं भक्तं प्रत्याख्याहि? राज्ञ्या तद्वचोंगीकृतं. भक्तं प्रत्याख्याय समाधिना मृत्वा सा देवलोकं गता देवोऽभूत्. तां च प्रतिमां कुब्जा देवदत्ता दासी त्रिकालं पूजयति. प्रभावतीदेवस्तूदायनं राजानं प्रतिबोधयति, न च स संबुध्यते. राजा तु तापसभक्तोऽतः स देवस्तापसरूपं कृत्वाऽमृतफलानि गृहीत्वाऽऽगतो राज्ञे दत्तवान्.

राज्ञा तान्यास्वादितानि, पृष्टश्च तापसः क्वैतानि फलानि ? तापसो भणति, एतन्नगराभ्यर्णे-
ऽस्मदाश्रमोऽस्ति, तत्रैतानि फलानि संति. राजा तेन सममेकाक्येव तत्र गतः, परं तत्र ता-
पसैः स हंतुमारब्धः. राजा ततो नष्टस्तस्मिन्नेव वने जैनसाधून् ददर्श, तेषामसौ शरणमा-
श्रितः. भयं मा कुर्विति तैराश्वासितः, तापसा निवृत्ताः, साधुभिश्च तस्यैवं धर्म उक्तः—

धम्मो चेवेत्थ सत्ताणं । सरणं भवसायरे ॥ देवं धम्मं गुरुं चेव । धम्मत्थी य परिक्ख-
ए ॥ १ ॥ दसअट्ठदोसरहिओ । देवो धम्मोवि निउणदयसहिओ ॥ सुगुरू य बंभयारी । आ-
रंभपरिग्गहा विरओ ॥ २ ॥ इत्यादिकोपदेशेन स राजा प्रतिबोधितः, प्रतिपन्नो जिनधर्मं. प्र-
भावतीदेव आत्मानं दर्शयित्वा, राजानं च स्थिरीकृत्य स्वस्थाने गतः. एवमुदायनराजा श्रा-
वको जातः. इतश्च गंधारदेशवास्तव्यः सत्यनामा श्रावकः सर्वत्र जिनजन्मभूम्यादितीर्थानि
वंदमानो वैताढ्यं यावद्गतः. तत्र शाश्वतप्रतिमावंदनार्थमुपवासत्रयं कृतवान्. तपस्तुष्टया त-
दधिष्टातृदेव्या तस्य शाश्वतजिनप्रतिमा दर्शिताः, तेन च वंदिताः. अथ तया देव्या तस्मै
श्रावकाय कामितगुटिका दत्ता, ततः स निवृत्तो वीतभयपत्तने जीवितस्वामिप्रतिमां वंदितु-

मायातः. गोशीर्षचंदनमयीं तां स ववंदे. दैवात्तस्यातीसारो रोग उत्पन्नः, कुब्जया दास्या स प्रतिचरितः स नीरुग् जातः. तुष्टेन तेन तस्यै कामगुणिता गुटिका दत्ताः, कथितश्च तासां चिंतितार्थसाधकप्रभावः. अन्यदा सा दास्यहं सुवर्णवर्णा सुरूपा भवामीति चिंतयित्वैकां गुटिकां भक्षितवती, सुवर्णवर्णा सुरूपा च जाता. ततस्तस्याः सुवर्णगुलिकेति नाम जातं. अन्यदा सा चिंतयति भोगसुखमनुभवामि. एष उदायनराजा मम पिता, अपरे मत्तुल्याः केऽपि राजानो न संतीति चंडप्रद्योतमेव मनसि कृत्वा द्वितीयां गुटिकां भक्षितवती. तदानीं तस्य चंडप्रद्योतस्य स्वप्ने देवतया कथितं, वीतभयपत्तने उदायनराज्ञो दासी सुवर्णगुलिकानाम्नी सुवर्णवर्णाऽतीवरूपवती त्वद्योग्यास्ति. चंडप्रद्योतेन सुवर्णगुलिकायाः समीपे दूतः प्रेषितः. दूतेनैकांते तस्या एवं कथितं चंडप्रद्योतस्त्वामीहते. तया भणितमत्र चंडप्रद्योतः प्रथममायातु, तं पश्यामि, पश्चाद्यथारुच्या तेन सहायास्यामि. दूतेन गत्वा तस्या वचनं चंडप्रद्योतस्योक्तं. सोऽप्यनलगिरिहस्तिनमारुह्य रात्रौ तत्रायातः, दृष्टस्तया रुचितश्च. सा भणति यदिमां प्रतिमां सार्धं नयसि तदाहमायामि, नान्यथेति. ततस्तेन तत्स्थानस्थापनयो-

स्वानुरूपप्रतिमा तदानीं नास्तीति तस्यां रात्रौ तत्रोषित्वा स स्वनगरे पश्चाद्गतः. तत्र तादृशीं जिनप्रतिमां कारयित्वा पुनरत्रायातस्तां प्रतिमां तत्र स्थापयित्वा मूलप्रतिमां दासीं च गृहीत्वोज्जयिनीं स गतः.

तत्रानलगिरिणा मूत्रपुरीषे कृते. तद्गंधेन वीतभयपत्तनसत्का हस्तिनो निर्मदा जाताः. उदायनराज्ञा तत्कारणं गवेषितं, अनलगिरिहस्तिनः पदं दृष्टं, उदायनेन चिंतितं स किमर्थमत्रायातः? गृहमानुषैरुक्तं सुवर्णगुलिका न दृश्यते. राज्ञोक्तं सा चेटी चंडप्रद्योतेन गृहीता, परं प्रतिमां विलोकयत? तैरुक्तं प्रतिमा दृश्यते, परं पुष्पाणि म्लानानि दृश्यंते. राज्ञा गत्वा स्वयं प्रतिमा विलोकिता, पुष्पम्लानिदर्शनेन राज्ञा ज्ञातं, नेयं सा प्रतिमा, किं त्वन्येति विमृश्य राज्ञा दूतश्चंडप्रद्योतांतिके प्रेषितः, मम दास्या नास्ति कार्यं, परं प्रतिमां त्वरितं प्रेषयेति दूतेन चंडप्रद्योतस्योक्तं. चंडप्रद्योतः प्रतिमां नार्पयति. तदा सैन्येन समं ज्येष्ठमास एवोदायनश्चलितः, यावन्मरुदेशे तत्सैन्यमायातं, तावज्जलाप्राप्त्या तत्सैन्यं तृषाक्रांतं व्याकुलीबभूव. तदानीं राज्ञा प्रभावतीदेवश्चिंतितः, तेन समागत्य त्रीणि पुष्कराणि कृतानि,

तेषु जललाजात्सर्वं सैन्यं स्वस्थं जातं. क्रमेणोदायनराजोज्जयिनीं गतः, कथितवांश्च, जो चंद्रप्रद्योत! तव मम च साक्षाद्युद्धं जवतु, किं नु लोकेन मारितेन? अश्वस्थेन वा त्वया मया च युद्धमंगीकर्तव्यं. चंद्रप्रद्योतेनोक्तं रथस्थैनैव त्वया मया च योद्धव्यं. प्रभाते चंद्रप्रद्योतः कपटं कृतवान्. स्वयमनलगिरिहस्तिनमारुह्य संग्रामांगणे समायातः. उदायनस्तु स्वप्रतिज्ञानिर्वाही रथारूढः संग्रामांगणे समायातः. तदानीमुदायनेन चंद्रप्रद्योतस्योक्तं त्वमसत्यप्रतिज्ञो जातः, कपटं च कृतवानसि. तथापि तव मत्तो मोक्षो नास्तीति जणतोदायनेन रथो मंडल्यां क्षिप्तः, चंद्रप्रद्योतेन तत्पृष्टावनलगिरिहस्तो वेगेन क्षिप्तः. स च हस्ती यं यं पादमुत्क्षिपति, तं तमुदायनः शरैर्विध्यति, यावद्धस्ती भूमौ निपतितः. तत्स्कंधादुत्तरंश्चंद्रप्रद्योतो बद्धः. तस्य च ललाटे मम दासीपतिरित्यक्षराणि लिखितानि. तत उदायनराज्ञा चंद्रप्रद्योतदेशे स्वाधिकारिणः स्थापिताः, स्वयं तु चंद्रप्रद्योतं काष्टपिंजरे क्षिप्त्वा सार्धं च नीत्वा स्वदेशंप्रति चलितः. सा प्रतिमा तु ततो नोत्तिष्ठतीति तत्रैव सा मुक्ता. अविछिन्नप्रयाणैश्चलितस्य तस्यांतरा वर्षाकालः समायातः, तेन रुद्धो दशजी राजन्निर्धूलीप्राकारं कृत्वा स-

ध्ये स रक्षितः सुखेन तत्र तिष्ठति, यत्स्वयं भुंक्ते तत्प्रद्योतस्यापि भोजयति. एकदा पर्यूषणादिनमायातं, तदोदायनेनोपवासः कृतः, सूपकारैः प्रद्योतः पृथग्भोजनार्थं पृष्टः, स चिंतयत्यद्य मां भोजनांतर्विषदानेन मारयिष्यतीति पृथग्भोजनार्थं मां प्रश्नयंति. ततश्चंडप्रद्योतेनोक्तमद्य किं पृथग्भोजनार्थं पृच्छ्यते? तैरुक्तमद्य पर्यूषणादिने उदायनराजोपोषितोऽस्तीति यद्भवतो रोचते तत्पच्यते. प्रद्योतेनोक्तं ममाप्यद्योपवासोऽस्ति, न ज्ञातं मयाद्य पर्यूषणादिनं, सूपकारैश्चंडप्रद्योतोक्तं कथितमुदायनराज्ञः. तेनापि चिंतितं जानाम्यहं यथायं धूर्तसाधर्मिकोऽस्ति. तथाप्यस्मिन् बद्धे मम पर्यूषणा न शुध्यति, इति चंडप्रद्योतो मुक्तः क्षामितश्च. तदक्षरगोपनार्थं ललाटनिमित्तं रत्नपट्टस्तस्य मूर्ध्नि बद्धः, स्वविषयश्च तस्य दत्तः, ततः प्रभृति पट्टबद्धा राजानो जाताः, मुकुटबद्धाश्च पूर्वमप्यासन्. वर्षारात्रे व्यतिक्रांते उदायनराजा ततः प्रस्थितः. व्यापारार्थं यो वणिग्वर्गस्तत्रायातः स तत्रैव स्थितः, दशभी राजभिर्वासितत्वाद्दशपुरं नाम नगरं प्रसिद्धं जातं.

अन्यदा स उदायनराजा पौषधशालायां पौषधिकः पौषधं प्रतिपालयन् विहरति. पूर्वरा-

त्रसमये च तस्यैतादृशोऽभिप्रायः समुत्पन्नः, धन्यानि तानि ग्रामाकरनगराणि, यत्र श्रमणो भगवान् श्रीमहावीरो विहरति. राजेश्वरप्रभृतयो ये श्रमणस्य धन्यास्ते भगवतः श्रीमहावीरस्यांतिके केवलिप्रज्ञप्तं धर्मं शृण्वंति, पंचाणुव्रतिकं सप्तशिक्षाव्रतकं द्वादशविधं श्रावकधर्मं च प्रतिपद्यंति, तथा मुंडीभूत्वाऽगारादनगारितां व्रजंति. ततो यदि श्रमणो भगवान् श्रीमहावीरः पूर्व्यानुपूर्व्या चरन् यदीहागच्छेत्, ततोऽहमपि भगवतोंतिके प्रव्रजामि. उदायनस्यायमध्यवसायो भगवता ज्ञातः. प्रातश्चंपातः प्रतिनिष्क्रम्य वीतभयपत्तनस्य मृगवनोद्याने भगवान् समवसृतः. तत्र पर्षन्मिलिता, उदायनोऽपि तत्रायातो भगवदंतिके धर्मं श्रुत्वा हृष्टश्चैवमवादीत्. स्वामिन्! भवदंतिकेऽहं प्रव्रजिष्यामि. परं राज्यं कस्मैचिद्ददामीत्युक्त्वा भगवंतं वंदित्वा स स्वगृहाभिमुखं चलितः. भगवतापि प्रतिबंधं मा कार्षीरित्युक्तं. ततो हस्तिरत्नमारुह्योदायनराजा स्वगृहे समायातः. तत उदायनस्यैतादृशोऽध्यवसायः समुत्पन्नो यद्यहं स्वपुत्रमभीचिकुमारं राज्ये स्थापयित्वा प्रव्रजामि, तदायं राज्ये जनपदे मानुष्यकेषु कामभोगेषु मूर्छितोऽनाद्यनंतं संसारकांतारं भ्रमिष्यति, तत श्रेयः खलु मम निजकं भगिनी-

जातं केशिकुमारं राज्ये स्थापयितुं. एवं संप्रेक्ष्य शोभने तिथिकरणमुहूर्ते कौटुंविकपुरुषानाकार्यैवमवादीत्, क्षिप्रमेव केशिकुमारस्य राज्याभिषेकसामग्रीमुपस्थापयत? तैः कृतायां सर्वसामग्र्यां केशिकुमारो राज्येऽभिषिक्तः. ततस्तत्र केशिकुमारो राजा जातः. उदायनराजा च केशिकुमारराजानं पृष्ट्वा तत्कृतनिष्क्रमणाभिषेकः श्रीमहावीरांतिके प्रव्रजितः. बहूनि षष्टाष्टमदशमद्वादशमासार्धमासक्षपणादीनि तपःकर्माणि कुर्वाणो विहरति. अन्यदा तस्योदायनराजर्षेरंतप्रांताहारकरणेन महान् व्याधिरुत्पन्नः, वैद्यैरुक्तं दध्यौषधं कुरु? स चोदायनराजर्षिर्गवदाज्ञयैकाक्येव विहरति, अन्यदा विहरन् स वीतभये गतः. तत्र तस्य भागिनेयः केशिकुमारराजाऽमात्यैर्भणितः, स्वामिन्नेष उदायनराजर्षिः परिषहादिपराभूतः प्रव्रज्यां मोक्तुकाम एकाक्येवेहायातः, तव राज्यं मार्गयिष्यति. स प्राह दास्यामि. तैरुक्तं नैष राजधर्मः. स प्राह तर्हि किं क्रियते? ते प्राहुर्विषमस्य दीयते. राज्ञोक्तं यथेष्टं कुर्वंतु. ततस्तैरेकस्याः पशुपाल्या गृहे विषमिश्रितं दधि कारितं, तेषां शिक्षया तया तस्य तद्दत्तं.

उदायनभक्तया च देवतयाऽपहृतं, उक्तं च तस्य देवतया, हे महर्षे! तव विषं दत्तं

त्रसमये च तस्यैतादृशोऽभिप्रायः समुत्पन्नः, धन्यानि तानि ग्रामाकरनगराणि, यत्र श्रमणो
भगवान् श्रीमहावीरो विहरति. राजेश्वरप्रभृतयो ये श्रमणस्य धन्यास्ते भगवतः श्रीमहावीर-
स्यांतिके केवलिप्रज्ञप्तं धर्मं शृण्वंति, पंचाणुव्रतिकं सप्तशिक्षाव्रतकं द्वादशविधं श्रावकधर्मं च
प्रतिपद्यंति, तथा मुंडीभूत्वाऽगारादनगारितां व्रजंति. ततो यदि श्रमणो भगवान् श्रीमहा-
वीरः पूर्व्यानुपूर्व्या चरन् यदीहागच्छेत्, ततोऽहमपि भगवतोंतिके प्रव्रजामि. उदायनस्याय-
मध्यवसायो भगवता ज्ञातः. प्रातश्चंपातः प्रतिनिष्क्रम्य वीतभयपत्तनस्य मृगवनोद्याने भ-
गवान् समवसृतः. तत्र पर्षन्मिलिता, उदायनोऽपि तत्रायातो भगवदंतिके धर्मं श्रुत्वा हृष्ट-
श्चैवमवादीत्. स्वामिन्! भवदंतिकेऽहं प्रव्रजिष्यामि. परं राज्यं कस्मैचिद्ददामीत्युक्त्वा भग-
वंतं वंदित्वा स स्वगृहाभिमुखं चलितः. भगवतापि प्रतिबंधं मा कार्षीरित्युक्तं. ततो हस्ति-
रत्नमारुह्योदायनराजा स्वगृहे समायातः. तत उदायनस्यैतादृशोऽध्यवसायः समुत्पन्नो यद्य-
हं स्वपुत्रमभीचिकुमारं राज्ये स्थापयित्वा प्रव्रजामि, तदायं राज्ये जनपदे मानुष्यकेषु का-
मभोगेषु मूर्छितोऽनाद्यनंतं संसारकांतारं भ्रमिष्यति, तत श्रेयः खलु मम निजकं भगिनी-

जातं केशिकुमारं राज्ये स्थापयितुं. एवं संप्रेक्ष्य शोभने तिथिकरणमुहूर्ते कौटुंबिकपुरुषाना-कार्यैवमवादीत्, क्षिप्रमेव केशिकुमारस्य राज्याभिषेकसामग्रीमुपस्थापयत? तैः कृतायां स-र्वसामग्र्यां केशिकुमारो राज्येऽभिषिक्तः. ततस्तत्र केशिकुमारो राजा जातः. उदायनराजा च केशिकुमारराजानं पृष्ट्वा तत्कृतनिष्क्रमणाभिषेकः श्रीमहावीरांतिके प्रव्रजितः. बहूनि ष-ष्ठाष्टमदशमद्वादशमासार्धमासक्षपणादीनि तपःकर्माणि कुर्वाणो विहरति. अन्यदा तस्यो-दायनराजर्षेरंतप्रांताहारकरणेन महान् व्याधिरुत्पन्नः, वैद्यैरुक्तं दध्यौषधं कुरु? स चोदायन-राजर्षिर्गवदाङ्येकाक्येव विहरति, अन्यदा विहरन् स वीतभये गतः. तत्र तस्य भागिने-यः केशिकुमारराजाऽमात्यैर्भणितः, स्वामिन्नेष उदायनराजर्षिः परिषहादिपराभूतः प्रव्रज्यां मोक्तुकाम एकाक्येवेहायातः, तव राज्यं मार्गयिष्यति. स प्राह दास्यामि. तैरुक्तं नैष रा-जधर्मः, स प्राह तर्हि किं क्रियते? ते आहुर्विषमस्य दीयते. राज्ञोक्तं यथेष्टं कुर्वंतु. ततस्तै-रेकस्याः पशुपाल्या गृहे विषमिश्रितं दधि कारितं, तेषां शिक्षया तया तस्य तद्दत्तं.

उदायनभक्तया च देवतयाऽपहृतं, उक्तं च तस्य देवतया, हे महर्षे! तव विषं दत्तं

दध्यंतः, तेन दध्यौषधं परिहर ? तद्वाक्याद्दधि परिहृतं, रोगो वर्धितुमारब्धः, पुनस्तेन दध्यौषधं कर्तुमारब्धं. पुनरपि तद्दत्तविषं देवतयापहृतं. एवं वारत्रयं जातं. अन्यदा देवता प्रमत्ता जाता, तैश्च विषं दत्तं. तत उदायनराजर्षिर्बहूनि वर्षाणि श्रामण्यपर्यायं पालयित्वा मासिक्या संलेखनया केवलज्ञानमुत्पाद्य सिद्धः. तस्य शय्यातरः कुंभकारस्तदानीं क्वचिद्ग्रामांतरे कार्यार्थं गतोऽभूत्. कुपितया च देवतया वीतभयस्योपरि पांशुवृष्टिर्मुक्ता, सकलमपि पुरमाच्छादितं, अद्यापि तथैवास्ति. शय्यातरः कुंभकारस्तु शनिपल्ल्यां मुक्तः. उदायनराजपुत्रस्याभीचिकुमारस्य तदायं वृत्तांतो जातः. यदोदायनः केशिकुमारं राज्येऽभिषिच्य प्रव्रजितस्तदास्यायमध्यवसायः समुत्पन्नः. अहमुदायनस्य ज्येष्ठपुत्रः प्रभावत्यात्मजः, तादृशमपि मां मुक्त्वा केशिकुमारं राज्येऽभिषिच्योदायनः प्रव्रजितः, इत्यंतर्मानसिकेन दुःखेन पराभूतोऽसौ वीतभयपत्तनं मुक्त्वा चंपायां कोणिकराजानमुपसंपद्य विपुलभोगसमन्वितोऽभूत्. स चाभीचिकुमारः श्रमणोपासकोऽधिगतजीवाजीवोऽप्युदायनराज्ञि समनुगतवैरोऽभूत्. अभीचिकुमारो बहूनि वर्षाणि श्रमणोपासकपर्यायं प्रतिपाल्यार्धमासिक्या संलेख-

नयोदायनवैरस्थानमनालोच्य कालं कृत्वाऽसुरकुमारत्वेनोत्पन्नः. एकपल्योपमस्थितिरस्यासीत्. महाविदेहे क्षेत्रे चायं सेत्स्यतीत्युदायनकथा.

॥ मूलम् ॥—तहेव कासीराया । सेऊ सच्चपरिक्कमो ॥ कामभोए परिच्चज्ज । पहणे कम्ममहावणं ॥ ४९ ॥ व्याख्या—हे मुने! तथैव तेनैव प्रकारेण पूर्वोक्तनृपवत्काशीदेशपतिर्नंदननामा राजा सप्तमबलदेवः कर्मरूपं महावनं प्राहनदुन्मूलयामासेत्यर्थः. किं कृत्वा? भोगान् परित्यज्य. कीदृशो नंदनः? श्रेयःसत्यपराक्रमः, श्रेयः कल्याणकारकं यत् सत्यं संयमः श्रेयःसत्यं, तत्र पराक्रमो यस्य स श्रेयःसत्यपराक्रमः, मोक्षदायकचारित्रधर्मे विहितवीर्य इत्यर्थः. ॥ ४९ ॥ अत्र काशीराजदृष्टांतः—वाणारस्यां नगर्यामग्निशिखो राजा, तस्य जयंत्यभिधाना देवी, तस्याः कुक्षिसमुद्भूतः सप्तमबलदेवो नंदनो नाम. तस्यानुजो भ्राता शेषवतीराज्ञीसुतो दत्ताख्यो वासुदेवः, स च पित्रा प्रदत्तराज्यः साधितभरतार्धो नंदनानुगतो राज्यश्रियं स्फीतामनुबभूव. कालेन षट्पंचाशद्वर्षसहस्राण्यायुरतिवाह्य मृत्वा दत्तः पंचमनरकपृथिव्यामुत्पन्नः. नंदनोऽपि च गृहीतश्रामण्यः समुत्पादितकेवलज्ञानः पंचषष्टिवर्षसहस्राणि

जीवितमनुपाल्य मोक्षं गतः. षड्विंशतिधनूंषि चानयोर्देहप्रमाणमासीत्. इति काशीराजदृष्टांतः

॥ मूलम् ॥—तहेव विजओ राया। अणट्ठाकित्ति पव्वए ॥ रज्जं तु गुणसमिद्धं। पहित्तु य महायसो ॥ ५० ॥ व्याख्या—हे मुने! तथैव विजयो नामा द्वितीयो बलदेवो राजा प्रव्रजितो दीक्षां प्रपन्नः. किं कृत्वा? राज्यं तु पहित्तु इति परिहृत्य, कीदृशं राज्यं? गुणसमृद्धं गुणैः सप्तांगैः पूर्णं, स्वामी १ अमात्य २ सुहृत् ३ कोश ४ राष्ट्र ५ दुर्ग ६ बलानि ७ च राज्यांगानि. अथवा गुणैरिंद्रियकामगुणैः पूर्णं. कीदृशो विजयः? अनार्त्त आर्त्तध्यानरहितः. पुनः कीदृशः? कीर्तिः कीर्त्योपलक्षितः. अथवा 'आणट्ठाकित्ति' इति 'आनष्टाऽकीर्तिः' आ समंतान्नष्टा अकीर्तिर्यस्य स आनष्टाऽकीर्तिः, अयशोरहितः. पुनः कीदृशः? महायशा महद्यशो यस्य स महायशाः. ॥ ५० ॥ अत्र विजयराजकथा—द्वारावत्यां ब्रह्मराजस्य पुत्रः सुभद्राकुक्षिसंभूतो विजयनामा द्वितीयो बलदेवोऽस्ति. स च स्वलघुभ्रातृद्विसप्तवर्षसहस्रायुर्द्विपृष्ठवासुदेवमरणानंतरं श्रामण्यमंगीकृत्योत्पादितकेवलज्ञानः पंचसप्ततिवर्षशतसहस्राणि सर्वायुरतिवाह्य मुक्तिं गतः. सप्ततिधनूंषि चानयोर्देहमानं. इति विजयराजकथा. १५.

॥ मूलम् ॥—तद्देवुग्गं तवं किच्चा । अव्वक्खित्तेण चेयसा ॥ महब्बलो रायरिसी । आदाय सिरसा सिरं ॥५१॥ व्याख्या—तथैव महाबलनामा राजर्षिस्तृतीये भवे मोक्षं जगामेति-शेषः. किं कृत्वा? अव्याक्षिप्तेन चेतसा, स्थिरेण चित्तेन, उग्रं प्रधानं तपः कृत्वा. पुनः किं कृत्वा? शिरसा मस्तकेन श्रियं चारित्रलक्ष्मीमादाय गृहीत्वा. ॥ ५१ ॥ अत्र महाबलराज्ञः कथा—अत्रैव भरतक्षेत्रे हस्तिनागपुरं नगरमस्ति, तत्र बलनाम राजा, तस्य प्रभावती-नाम्नी राज्ञी, अन्यदा सा राज्ञी प्रवरशयनीयोपगतेषन्निद्रां गच्छंती शशांकशंखधवलं सिंहं स्वप्ने दृष्ट्वा प्रतिबुद्धा. ततः सा तुष्टा यत्र बलस्य राज्ञः शयनीयं तत्रोपागच्छति, तं स्वप्नं च बलस्य राज्ञः कथयति. ततः स बलो राजा तं स्वप्नं श्रुत्वा हृष्टस्तुष्ट एवमवादी-त्, हे देवि! त्वया कल्याणकृत्स्वप्नो दृष्टः, अर्थलाभो भोगलाभो राज्यलाभश्च भविष्य-ति. एवं खलु तव नवमासेषु सार्धसप्तदिनान्यधिकेषु गतेषु कुलप्रदीपः कुलतिलकः सर्वल-क्षणसंपूर्णो दारको भविष्यतीति. ततः सा प्रभावत्येतदर्थं श्रुत्वा हृष्टा तुष्टा बलस्य राज्ञ-स्तद्वचनं स्वीकरोति. राजानुज्ञया च स्वशयनीये समागच्छति. तत्प्रभृति च सा सुखेन गर्भ-

सर्वलक्षणोपेतं
मुरूद्दति. प्रशस्तदोहदा प्रतिपूर्णदोहदा सा पूर्णेषु मासेषु सुकुमालपाणिपादं सर्वलक्षणोपेतं
देवकुमारोपमं दारकं प्रसूतवती. ततः प्रनावत्या देव्या प्रतिचारिका बलं राजानं विजयज-
जयाभ्यां पुत्रजन्मना च वर्धयंति. ततो बलराजैतमर्थं श्रुत्वा हृष्टतुष्टो धाराहतकदंबपुष्प-
मिव समुवच्छ्सितरोमकूपस्तासामंगप्रतिचारिकाणां मुकुटवर्जं सर्वं स्वशरीरालंकारं ददौ. म-
स्तकक्षालनादिकं प्रीतिदानं च यथेष्टं वितीर्णवान्. ततः स बलो राजा कौटुंबिकपुरुषानाका-
रयति. आगतांश्च तानेवमवादीत्, नो देवानुप्रियाः! क्षिप्रमेव हस्तिनागपुरे नगरे चारक-
शोधनं मानोन्मानप्रवर्धनं कुरुत? वर्धापनं च घोषयत? एवं राजाज्ञया ते तथैव कृतवंतः.
प्राप्ते च द्वादशे दिवसे तस्य बालकस्य महाबल इति नाम चक्रतुः. ततो महाबलः पंचधा-
त्रीपरिवृतो ववृधे. गृहीतकलाकलापश्च यौवनमनुप्राप्तोऽसदृशरूपलावण्यगुणोपपेतानामष्टानां
राजवरकन्यानामेकस्मिन्नेव दिवसे पाणिग्रहणमकरात्. ततस्तस्य महाबलकुमारस्य मातापि-
तरावतिशयेन हर्षेण महदष्टप्रासादोपशोभितं वासभवनं कारयतः. एतादृशं च प्रीतिदानं
ददतः—अष्टौ हिरण्यकोटयः, अष्टौ मुकुटानि, अष्टौ कुंडलयुगलानि, अष्टौ हाराः, अष्टौ

गौसाहस्रिकं, अष्टौ ग्रामाः, अष्टौ दासाः, अष्टौ मदहस्तिनः, अष्टौ सौवर्णस्थालानि. एवमन्यदपि सारं स्वापतेयं मातृपितृभ्यां तस्य दत्तं. ततः स महाबलः प्रासादवरगत उदारभोगान् भुंजानो विचरति.

तस्मिंश्च काले विमलस्वामिनः, प्रपौत्रो धर्मघोषनामाऽनगारः पंचभिरनगारशतैः परिवृतो ग्रामानुग्रामं विहरन् हस्तिनागपुरमागतः. तस्यांतिके नागरिकपरिषत्समागता. महाबलोऽपि धर्मं श्रोतुं तत्रायातः. श्रुत्वा च धर्मं वैराग्यमापन्नो महाबलकुमारो हृष्टस्तुष्टस्त्रिवारं नत्वैवमवादीत्. हे भगवन्! श्रद्दधामि निर्ग्रंथं प्रवचनं यथा भवद्भिरुक्तं सत्यमेवेति. संयममार्गमहमंगीकरिष्यामि, नवरं मातापितरावापृछामि. गुरवः प्रोचुः प्रतिबंधं माकार्षीः. ततः स महाबलो धर्मघोषमनगारं वंदित्वा हृष्टस्तुष्टो रथमारुह्य हस्तिनागपुरमध्ये यत्र स्वगृहं, तत्रोपागतो रथात्प्रत्यवतरति. यत्र मातापितरौ तत्रोपागत्यैवमवादीत्—अहो! मातापितरौ! मया धर्मघोषस्यानगारस्यांतिके धर्मः श्रुतः, स च धर्मो मेऽभिरुचितः. ततो महाबलकुमारं मातापितरावेवमवदतां, पुत्र! त्वं धन्यः कृतार्थश्च. ततः स महाबल एवमवादीत्—अहो!

मातापितरौ! इच्छाम्यहं भवदाज्ञया प्रव्रजितुं, संसारभयादहमुद्विग्नोऽस्मीति. ततः सा प्रभावत्यनिष्टामश्रुतपूर्वामिमां पुत्रवाचं श्रुत्वा रोमकूपगलत्स्वेदाकीर्णगात्रा शोकभरवेपितांगा निस्तेजस्का दीनवदना करतलमर्दितकमलमालेव म्लाना विकीर्णकेशहस्ता त्रुटित्वा धरणीतले निपतिता मूर्छिता च. परिचारिकाभिः कांचनकलशोत्क्षिप्तशीतलजलधाराभिषिच्यमाना समाश्वासिता सती रुद्यमानैवमवादीत्—त्वमस्माकमेक एव पुत्रोऽसि, इष्टः कांतो रत्नभूतो निधिभूतो जीवितभृत उंबरपुष्पवद्दुर्लभः, ततो नैवं वयमिच्छामस्तव क्षणमात्रमपि विप्रयोगं. ततः पुत्र! त्वं तावद्गृहे तिष्ठ? यावद्वयं जीवामः. अस्मासु कालगतेषु परिवर्धितकुलसंतानस्त्वं पश्चात्परिव्रजेः. ततः स महाबल एवमवादीत्, हे मातर्यत्त्वं वदसि तत्स वै मोहविलसितं. परं मनुष्यभवे जन्मजरामरणशोकाभिभूतेऽध्रुवे संध्याभ्ररागसदृशे स्वप्नदर्शनोपमे विध्वंसनस्वभावे मम प्रीतिर्नास्ति. को जानाति हे मातः! कः पूर्वं कः पश्चाद्वा गमिष्यति? अतोऽहं शीघ्रमेव प्रव्रजिष्यामि. ततः सा प्रभावत्येवमवादीत्, पुत्र! इदं ते शरीरं विशिष्टरूपलक्षणोपपेतं, विज्ञानविचक्षणं, रोगरहितं, सुखोचितं प्रथमयौवनस्थं वर्तते, अतस्त्व-

मेतादृशशरीरयौवनगुणाननुभव ? पश्चाद्व्रजेः. ततः स महाबल एवमवादीत्, हे मातरिदं मनुष्यशरीरं दुःखायतनं, विविधव्याधिग्रस्तमस्थिसंबद्धं, स्नसा जालसंबद्धं, अशौचनिधानमनवस्थिताकारं विनश्वरमेव भविष्यतीतीच्छाम्यहं त्वरितं प्रव्रजितुं. ततः सा प्रभावत्येवमवादीत् पुत्र! इमास्तव सर्वकलाकोमलस्वभावा मार्दवार्जवक्षमाविनयगुणयुक्ता हावभावविचक्षणाः सुविशुद्धशीलाः कुलशालिन्यः प्रगल्भवयस्का मनोऽनुकूलभावानुरक्ता अष्टौ तव भार्याः संति, ताभिः समं भोगान् भुंक्ष्व? पश्चाद्वयःपरिपाके परिव्रजेः. ततः स महाबल एवमवादीत्—इमे खलु मानुष्यकाः कामभोगा उच्चारप्रश्रवणश्लेष्मवातपित्ताश्रयाः शुक्रशोणितसमुद्भवा अल्पकालीना बहूपसर्गाः कटुकविपाकदुःखानुबंधिनः सिद्धिविघातकारिणः संतीति सद्य एवाहं प्रव्रजिष्यामि. पुनर्मातापितरावेवमूचतुः—पुत्र! परंपरपर्यायाद्बहुहिरण्यसुवर्णविपुलधनधान्यानि स्वयमास्वादमानोऽन्येषां दानाच्चानुग्रहाण ? मनुष्यलोकसत्कारसन्मानान्यनुगृहाण? पश्चात्परिव्रजेः. ततः स महाबल एवमवादीत्—इदं सर्वं हिरण्यादिकं वस्त्वग्निग्राह्यं, राजग्राह्यं, दायादग्राह्यं, मृत्युग्राह्यमध्रुवं विद्युच्चंचलं, नास्य भोगः केनापि प्र-

हीतुं शक्यः, इति शीघ्रमेवाहं प्रव्रजिष्यामि. ततो मातापितरौ विषयप्रवर्तकवाक्यैरेनं गृहे रक्षितुं न शक्नुतः, अथ संयमोद्वेगकरैरेवमूचतुः—पुत्र! अयं निर्ग्रंथमार्गो दुरनुचरोऽस्ति, अत्र लोहमया यवाश्चर्वणीयाः संति, गंगाप्रतिश्रोतसि गंतव्यमस्ति, समुद्रो भुजाभ्यां तरणीयोऽस्ति, दीप्ताग्निशिखायां प्रवेष्टव्यमस्ति, खड्गधारायां संचरणीयमस्ति, पुत्र! निर्ग्रंथानामाधाकर्मिकं बीजादिभोजनं च न कर्तव्यमस्ति. पुत्र! त्वं तु सुकुमालोऽसि, सुखोचितोऽसि, न त्वं क्षुधातृषाशीतोष्णादिपरीषहोपसर्गान् सोढुं समर्थोऽसि. पुनर्भूमिशयनं, केशलोचनमस्नानं, ब्रह्मचर्यं, भिक्षाचर्यां च विधातुं न शक्तोऽसि. ततः पुत्र! त्वं तावद्गृहे तिष्ट यावद्वयं जीवामः. ततः स महाबल एवमवादीत्—अयं निर्ग्रंथमार्गः क्लीबानां कातराणां चेहलोकप्रतिबद्धानां परलोकपराङ्मुखानां दुरनुचरोऽस्ति, न पुनर्वीरस्य निश्चितमतेः पुरुषस्य किमप्यत्र दुष्करणीयमस्तीति मामनुजानीत प्रव्रज्याग्रहणार्थं. अथ मातृपितृभ्यां तं गृहे रक्षयितुमशक्ताभ्यामनवांछयैव प्रव्रज्यानुमतिस्तस्य दत्ता. ततो बलराजा कौटुंबिकपुरुषैर्हस्तिनागपुरं बाह्याभ्यंतरे संमार्जितोपलिप्तं कारयति, तं महाबलं कुमारं च मातापितरौ सिंहा-

सने समारोपयतः. सौवर्णिककलशानामष्टोत्तरशतेन यावद्भौमेयानामष्टोत्तरशतेन सर्वर्द्ध्या महान् निष्क्रमणाभिषेकोऽस्य कृतः. पिता वभाण पुत्र! भण? तव किं ददामि? कस्य वस्तुनः सांप्रतं तवार्थः? ततः स महाबल उवाच—इच्छामि तात! कुत्रिकापणादेकेन लक्षेण पतद्ग्रहं, एकेन लक्षेण रजोहरणं, एकेन लक्षेण काश्यपाकारणमिति.

ततो बलराजा कौटुंबिकपुरुषैस्त्रीण्यपि वस्तूनि प्रत्येकमेकैकलक्षेणानायितवान्. ततः स काश्यपो वसुभूतिनामा बलेन राज्ञाभ्यनुज्ञातोऽष्टगुणपोतिकेन पिनद्धमुखश्चतुरंगुलवर्जकेशान् महाबलमस्तके चकर्त. प्रभावती तान् केशान् हंसलक्षणपटशाटके प्रतिक्षिपति, तच्च वस्त्रं स्वोच्छीर्षकस्थाने न्यस्यति. ततः स महाबलो गोशीर्षचंदनानुलिप्तः सर्वालंकारविभूषितः पुरुषसहस्रवाह्यां शिबिकामारूढः, एकया वरतरुण्या धृतातपत्रो द्वाभ्यां वरतरुणीभ्यां चाल्यमानवरचामरो मातृपितृभ्यामनेकभट्टकोटिपरिवृतः प्रव्रज्याग्रहणार्थं चलितः. तदानीं तं नगरलोका एवं प्रशंसंति. धन्योऽयं कृतार्थोऽयं, सुलब्धजन्मायं महाबलकुमारो यः संसारभयोद्विग्नः सर्वं सांसारिकविलासमपहाय प्रथमवयःस्थ एवं परिव्रजति. एवं लोकैः प्रशस्यमानः प्रलोक्यमानोंगुलिभि-

ईक्ष्यमानः पुष्पफलेषु विकीर्यमाणेषु, याचकेभ्यश्च स्वयं दानं ददद्धस्तिनागपुरमध्यं मध्ये निर्ग-
च्छन् धर्मघोषानगारांतिके समायातः, शिबिकातश्च प्रत्यवतीर्णः. ततो महाबलं कुमारं पुरतः
कृत्वा मातापितरौ धर्मघोषमनगारं वंदित्वैवमवदतां, भगवन्नेष महाबलकुमारः संसारभयो-
द्विग्नः कामभोगविरक्तो भवदंतिके प्रव्रजितुमिच्छति, तत इमां शिष्यभिक्षां वयं दद्मः, स्वीकुर्वंतु
भवंतः. धर्मघोषानगार एवमुवाच यथासुखं देवानुप्रिया मा प्रतिबंधं कुरुत? ततः स महा-
बलो हृष्टस्तुष्टो धर्मघोषमनगारं वंदित्वोत्तरपूर्वदिगंतरालेऽपक्रम्यालंकारवर्गमुत्तारयति. अश्रू-
णि मुंचंती प्रभावती देव्युत्तरीयवस्त्रे तमलंकारवर्गं प्रक्षिपति. महाबलकुमारंप्रत्येवमवदत्,
पुत्र! अत्रार्थे विशेषाद् घटितव्यं यतितव्यं, अत्रार्थे न प्रमाद्यं. ततः स महाबलः पंचमौष्टि-
कं लोचं करोति. ततोऽसौ धर्मघोषानगारांतिके समागत्यैवमवादीत्, भगवन्नयं लोक आ-
दीप्तप्रदीप्तो जरामरणग्रस्तश्चास्तीति स्वयमेव मां प्रव्राजयत? ततः स धर्मघोषसूरिस्तं स्वय-
मेव प्रव्राज्य सामाचारीमशिक्षयत्. ततो महाबलोऽनगारो जातः. पंचसमितित्रिगुप्तियुक्तः
बहुभिश्चतुर्थषष्ठाष्टमादिभिर्विचित्रैस्तपःकर्मभिरात्मानं भावयन्,
क्रमेण चतुर्दशपूर्वधरश्चाभूत्.

द्वादशवर्षाणि श्रामण्यपर्यायमनुपालयन्, अंते मासिक्या संलेखनया आलोचितप्रतिक्रांतः समाधिप्राप्तः कालमासे कालं कृत्वा स ब्रह्मकल्पे दशसागरोपमस्थितिको देवो बभूव. ततश्च्युतश्च श्रेष्ठिकुले वाणिजग्रामे पुत्रत्वेनोत्पन्नः. तत्र सुदर्शन इति कृतनामोन्मुक्तबालभावः श्रमणस्य श्रीमहावीरस्यांतिके प्रव्रजितः. क्रमेण सिद्धश्चेति महाबलकथा. ॥ १६ ॥

॥ मूलम् ॥—कहं धीरे अहेऊहिं । उम्मत्तुव्व महिं चरे ॥ एए विसेसमादाय । सूरा दढपरक्कमा ॥ ५२ ॥ व्याख्या—हे मुने! एते भरतादयः शूरा धैर्यवंतः, पुनर्दृढपराक्रमाश्च संयमे स्थिरवीर्यभाजो बभूवुरिति शेषः. किं कृत्वा? विशेषं मिथ्यादर्शिभ्यो जिनमतस्य विशेषं गृहीत्वा मनस्याधाय. तस्मात् हे मुने! धीरः साधुरहेतुभिः क्रिया १ अक्रिया २ विनय ३ अज्ञान ४ प्रमुखैः कुत्सितहेतुभिर्विपरीतभाषणैरुन्मत्त इव मद्यपानीव मह्यां पृथिव्यां कथं चरेत्? अपि तु स्वेच्छया यथातथा प्रलपनपरायणः सन्न चरेत्. तस्मात्त्वयापि धीरेण भवता तत्रैव मनो निश्चितं विधेयमिति हार्दं. ॥ ५२ ॥

॥ मूलम् ॥—अच्चंतनियाणखमा । सच्चा मे भासिया वई ॥ अतरिंसु तरंतेगे । तरि-

स्संति अणागया ॥ ५३ ॥ व्याख्या—हे मुने! मे मया सत्या 'वई' इति सत्या वाक् भाषिता, प्राकृतत्वात्तृतीयायां षष्ठी. जिनशासनमेवाश्रयणीयमित्येवंरूपा वाणी मयोक्ता. अनया वाण्यांगीकृतया बहवो जना अतरन्, संसारसमुद्रं तरंतिस्म, एकेऽनया वाण्येदानीमपि तरंति, अनागता अप्यग्रे भाविनो भव्या अप्यनया वाण्या भवोदधिं तरिष्यंति. कीदृशास्ते भूतभविष्यद्वर्तमानजनाः? अत्यंतनिदानक्षमाः, अत्यंतं निदानं कर्ममलशोधनं तत्र क्षमाः कर्ममलप्रक्षालनसावधानाः, नितरां दीयते शोध्यते पवित्रीक्रियतेऽनयेति निदानं, दैप् शोधने इत्यस्य रूपं. ॥ ५३ ॥

॥ मूलम् ॥—कहं धीरे अहेऊहिं । अत्ताणं परिआवसे ॥ सव्वसंगविणिम्मुक्के । सिद्धे हवइ नीरएत्तिबेमि ॥ ५४ ॥ व्याख्या—धीरः साधुरहेतुभिः क्रियावाद्यादिकुमतीनां वचोयुक्त्यसत्प्ररूपणालक्षणैर्मिथ्यात्वस्य कारणैरात्मानं स्वकीयमात्मानं कथं पर्यावासयेत्? कुत्सितहेतूनामावासमात्मानं कथं कुर्यात्? अपि तु न कुर्यादित्यर्थः. किमित्थं स्थितस्य फलं स्यादित्याह—सर्वसंगैर्द्रव्यभावभेदेन संयोगैः संयोगेभ्यो वा विशेषेण निर्मुक्तः सर्वसंगवि-

निर्मुक्तः सन् साधुः सिद्धो भवति, कर्ममलापहारेण नीरजा निर्मलः स्यादुज्ज्वलो भवेदित्या-
शुपदेशं दत्वा क्षत्रियमुनिर्महीतले विजहार. संयतमुनिरपि चारित्रं प्रपाल्य मोक्षं प्रापेति
सुधर्मास्वामी जंबूस्वामिनं प्राह, हे जंबू अहं ब्रवीमि, इति परिसमाप्तौ. ॥ ५४ ॥ इति सं-
यतीयाध्ययनं. १८. इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशि-
ष्यलक्ष्मीवल्लभगणिविरचितायां संयतीयाध्ययनमष्टादशमर्थतो व्याख्यातं. १८. श्रीरस्तु. ॥

---

॥ अथैकोनविंशतितममध्ययनं प्रारभ्यते ॥

अष्टादशेऽध्ययने भोगर्द्धीनां त्याग उक्तः, भोगर्द्धित्यागात्साधुत्वं स्यात्, तत्साधुत्वं ह्य-
प्रतिकर्मतया स्यात्, तत एकोनविंशतितमेऽध्ययने निःप्रतिकर्मतां मृगापुत्रदृष्टांतेन कथयति—

॥ मूलम् ॥—सुग्गीवे नयरे रम्मे । काणणुज्जाणसोहिए ॥ राया बलभद्दत्ति । मिया त-
स्सग्गमाहिसी ॥ १ ॥ व्याख्या—सुग्रीवे नाम्नि नगरे बलभद्र इति नामा राजाभूत्. कीद-

शे सुग्रीवे नगरे? रम्ये रमणीये, पुनः कीदृशे? काननोद्यानशोभिते, तत्र काननं बृहद्वृ-
क्षाणामाम्रराजादनादितरूणां वनं. उद्यानं नानाविधपादपलतादीनां वनं, अथवा क्रीडायो-
ग्यं वनमुद्यानमुच्यते. ततः काननं चोद्यानं च काननोद्याने, ताभ्यां शोभितं काननोद्यान-
शोभितं, तस्मिन्. तस्य बलभद्रभूपस्य मृगा नाम्न्यग्रमहिष्यभूत्, महिषी पट्टराज्ञी अग्रा
प्रधाना, सा चासौ महिषी चाग्रमहिषी. ॥ १ ॥

॥ मूलम् ॥—तेसिं पुत्ते बलसिरी । मियापुत्तेति विस्सुए ॥ अम्मापिऊण दइए । जुव-
राया दमीसरे ॥ २ ॥ व्याख्या—' तेसिं पुत्ते ' इति तयोर्बलभद्रमृगाराज्ञयोः पुत्रो बलश्री-
नामासीत्. बलश्रीति मातापितृभ्यां कृतनामा. स बलश्रीर्विश्रुतो लोकप्रसिद्धो मृगापुत्र इ-
त्यभूत्. मृगाया महाराज्ञ्याः पुत्रो मृगापुत्रः, लोकास्तं मृगापुत्रमित्यूचुरित्यर्थः. कीदृशो मृ-
गापुत्रः? ' अम्मापिऊण दइए ' इति मातापित्रोर्दयितो वल्लभः. पुनः कीदृशः? युवराजः,
युवा चासौ राजा च युवराजः कुमारपदधारकः, पितरि जीवति सति राज्ययोग्यः कुमारो
युवराज उच्यते. पुनः कीदृशः? दमीश्वरः, दमो विद्यते येषां ते दमिनस्तेषामीश्वरो दमी-

श्वरः, उपशमवतां साधूनामैश्वर्यधारी. अत्र कुमारावस्थायामेव दमीश्वर इति विशेषणमुक्तं, तत्तु भाविनि भूतोपचारात्. अथवात्र द्रव्यनिक्षेपो ज्ञेयः, द्रव्यजिना जिनजीवा इति वचनात्.

॥ मूलम् ॥—नंदणे सो उ पासाए । कीलए सह इत्थिहिं ॥ देवो दोगुंदगो चेव । निच्चं मुइयमाणसो ॥ ३ ॥ मणिरयणकुट्टिमतले । पासाएलोयणट्ठिओ ॥ आलोएइनगरस्स । चउक्कतियचच्चरे ॥४॥ व्याख्या—उभाभ्यां गाथाभ्यां संबंधः. स मृगापुत्रः कुमारो नंदने विशिष्टवास्तुशास्त्रोक्तसम्यग्लक्षणोपेते प्रासादे राजमंदिरे स्त्रीभिः सह क्रीडते. क इव ? दोगुंदकदेव इव. त्रायस्त्रिंसकसुर इव. इंद्रस्य पूज्यस्थानीया देवास्त्रायस्त्रिंसका दोगुंदका अप्युच्यंते. पुनः कीदृशः सः ? नित्य मुदितमानसो निरंतरहृष्टचित्तः. एतादृशो मृगापुत्रः प्रासादालोकने स्थितः सन् नगरस्य चतुष्कत्रिकचत्वरानालोकते. प्रासादस्यालोकने गवाक्षे स्थितो नगरस्य चतुष्कादिस्थितानि कौतूहलानि पश्यति. कीदृशे प्रासादालोकने? 'मणिरयणकुट्टिमतले' मणयश्च रत्नानि च तैः कुट्टिमं जटितं तलं यस्य तन्मणिरत्नकुट्टिमतलं, तस्मिन्. ॥ ३ ॥ ४ ॥

॥ मूलम् ॥—अह तत्थ अइच्छंतं । पासइ समणसंजयं ॥ तवनियमसंजमधरं । सीलड्ढं

गुणआगरं ॥ ५ ॥ व्याख्या—अथानंतरं स मृगापुत्रः कुमारस्तत्र तस्मिंश्चतुष्कत्रिकचत्वरादौ 'अइच्छंतं' अतिक्रामंतं विचरंतं श्रमणं पश्यति. कीदृशं श्रमणं? संयतं जीवयतनां कुर्वंतं, संयतमिति विशेषणेन वीतरागदेवमार्गानुसारिणं, न तु शाक्यादिमुनिं. पुनः कीदृशं? तपोनियमसंयमधरं, तपो बाह्याभ्यंतरभेदेन द्वादशविधं, नियमो द्रव्यक्षेत्रकालभावेनाभिग्रहग्रहणं. संयमः सप्तदशविधः, तपश्च नियमश्च संयमश्च तपोनियमसंयमास्तान् धरतीति तपोनियमसंयमधरस्तं. पुनः कीदृशं? शीलाढ्यं शीलैरष्टादशसहस्रब्रह्मचर्यभेदैराढ्यं पूर्णं. पुनः कीदृशं? गुणाकरं गुणानां ज्ञानदर्शनचारित्रगुणानामाकरं खनिसदृशं. ॥ ५ ॥

॥ मूलम् ॥—तं देहई मियापुत्ते । दिट्ठीए अणिमिस्सिए ॥ कहिं मन्नेरिसं रूवं । दिट्ठपुव्वं मए पुरा ॥ ६ ॥ व्याख्या—मृगापुत्रस्तं मुनिमनिमेषया दृष्ट्या 'देहई' पश्यति. दृष्ट्वा चैवं विचारयति, क्वचिदेतादृशं रूपं मया दृष्टपूर्वमहमेवं मन्ये जानामि. मुनिं दृष्ट्वा प्रमुदितमना अभूत्, पूर्वपरिचितमिव मुनिं मेने इत्यर्थः. ॥ ६ ॥

॥ मूलम् ॥—साहुस्स दरिसणे तस्स । अज्झवसाणंमि सोहणे ॥ मोहं गयस्स संतस्स

। जाईसरण समुप्पन्नं ॥ ७ ॥ व्याख्या—तस्य मृगापुत्रस्य कुमारस्य तस्य साधोर्दर्शने जातिस्मरणं समुत्पन्नं, प्राग्भवस्मरणज्ञानं संजातं. तस्य कथंभूतस्य सतः? शोभने अध्यवसाये, समीचीने मनसः परिणामे क्षायोपशमभावे मोहं मूर्छां गतस्य प्राप्तस्य सतः. क्वाप्ययं मया दृष्ट इति चिंतासंघट्टमूर्छात्मको मोहः. कोऽर्थः? पुरा साधोर्दर्शनं जातं, दर्शनात्सम्यग्मनःपरिणामोऽभूत्, तदा च मूर्छोत्पन्ना, तस्यां मूर्छायां च जातिस्मृतिरभूदिति भावः.

॥ मूलम् ॥—देवलोअचुओ संतो । माणुस्सं भवमागओ ॥ सन्निनाणे समुप्पन्ने । जाईसरणं पुराणयं ॥ ८ ॥ व्याख्या—किं तज्जातिस्मरणं? तदाह—अहं देवलोकाच्च्युतः सन् मानुष्य भवमागत इति संज्ञिज्ञाने समुत्पन्ने सति पुराणकं प्राचीनं जातिस्मरणमभूदिति शेषः. संज्ञिनो गर्भजपंचेंद्रियस्य ज्ञानं संज्ञिज्ञानं, तस्मिन् संज्ञिज्ञाने. ॥ ८ ॥

॥ मूलम् ॥—जाईसरणे समुप्पन्ने । मियापुत्ते महड्ढिए ॥ सरई पोराणियं जाइं । सामन्नं च पुरा कयं ॥ ९ ॥ व्याख्या—मृगापुत्रो महार्द्धिको राज्यलक्ष्मीयुक्तः पौराणिकीं प्राचीनां जातिं स्मरति. किं स्मरति? मया श्रामण्यं चारित्रं पुरा कृतं, पूर्वं पालितमभूत्. क

सति? जातिस्मरणे ज्ञाने समुत्पन्ने सति संजाते सति. ॥ ९ ॥ इत्यत्र पाठांतरमस्ति, गाथायाः पुनरुक्तित्वात्.

॥ मूलम् ॥—विसएसु अरज्जंतो । रज्जंतो संजमंमि य ॥ अम्मापिउरं उवागम्म । इमं वयणमब्बवी ॥ १० ॥ व्याख्या—मृगापुत्रः 'अम्मापिउरं' मातापितरमुपागम्य समीपमागत्येदं वचनमब्रवीत्. किं कुर्वन्? विषयेष्वरजन् विषयेभ्यो विरक्तो भवन्. च पुनश्चारित्रे संयमे रजन् साधुमार्गे प्रीतिं कुर्वन्नित्यर्थः. ॥ ९ ॥

॥ मूलम् ॥—सुयाणि मे पंचमहव्वयाणि । नरएसु दुक्खं च तिरिक्खजोनिसु ॥ निव्विन्नकामोमि महन्नवाउ । अणुजाणह पव्वइस्सामि अम्मो ॥ १० ॥ व्याख्या—हे पितरौ! मे मया पंच महाव्रतानि प्राग्जन्मनि श्रुतानि, नरकेषु पुनस्तिर्यग्योनिषु दुःखं भुक्तमभूत्. ततोऽहं निर्विण्णकामोऽस्मि, निवृत्तविषयाभिलाषोऽस्मि. महार्णवात्संसारसमुद्रात् प्रव्रजिष्यामि निस्तरिष्यामि. यूयमतो मामनुजानित? आज्ञां दत्त? ॥ १० ॥

॥ मूलम् ॥—अम्मातायं मए भोगा । भुत्ता विसफलोवमा ॥ पच्छा कडुयविवागा ।

अणुबंधदुहावहा ॥ ११ ॥ व्याख्या—हे पितरौ मया पूर्वं भोगा भुक्ताः. कीदृशा भोगाः? विषफलोपमाः, विषफलैरुपमीयंते इति विषफलोपमाः. पूर्वं भोगसमये मधुराः, परं पश्चात्कटुकविपाकाः, कटुको विपाको येषां ते कटुकविपाकाः, प्रांते दुःखदा इत्यर्थः. अथ पुनः कीदृशाः? अनुबंधदुःखावहा अनुबंधं निरंतरं दुःखस्य आवहा दायकाः, अविछिन्नदुःखदायिनः.

॥ मूलम् ॥—इमं सरीरं अणिच्चं । असुई असुइसंभवं ॥ असासयावासमिणं । दुक्खकेसाण भायणं ॥ १२ ॥ व्याख्या—हे पितराविमं शरीरमनित्यमशाश्वतं, अशुच्यपवित्रं च वर्तते. पुनरिदं शरीरमशुचिसंभवमशुचिशुक्ररेतःसंभृतं. पुनरिदं शरीरमशाश्वतावासं, अशाश्वतोऽनित्य आवासो जीवस्य निवासो यस्मिंस्तदशाश्वतावासं. पुनरिदं शरीरं दुःखक्लेशानां भाजनं, दुःखानि जन्मजरामृत्युप्रमुखाणि, क्लेशा धनहानिस्वजनवियोगादयस्तेषां भाजनं स्थानं. अथवा दुःखहेतवो ये क्लेशा रोगास्तेषां भाजनं. ॥ १३ ॥

॥ मूलम् ॥—असासए सरीरंमि । रइं नेव लभामिहं ॥ पच्छा पुरा वचइच्चे । फेणवुब्बुयसन्निभे ॥ १४ ॥ व्याख्या—हे पितरावहमशाश्वते शरीरे रतिं न लभामि, अहं स्वास्थ्यं

न प्राप्नोमि. पुनः कीदृशे शरीरे? पश्चाद्भोगभोगानंतरं ( भुक्तभोगावस्थायां वार्धक्यादौ ) त्यक्तव्ये. पुनः कीदृशे शरीरे? पुरा पूर्वं भोगभोगादर्वागेव ( अभुक्तभोगितायां बाल्यादौ ) त्यक्तव्ये. पुनः कीदृशे शरीरे? फेनबुद्बुदसंनिभे पानीयप्रस्फोटकसदृशे. ॥ १४ ॥

॥ मूलम् ॥—माणुसत्ते असारंमि । वाहिरोगाण आलए ॥ जरामरणघत्थंमि । खणंपि न रमामिहं ॥ १५ ॥ व्याख्या—हे पितरावसारे मनुष्यत्वेऽहं क्षणमपि न रमामि, न हर्षं व्रजामि. कीदृशे मनुष्यत्वे? व्याधिरोगाणामालये, व्याधयः कुष्टशूलादयः, रोगा वातपित्तश्लेष्मज्वरादयः, तेषां गृहे. पुनः कीदृशे मनुष्यत्वे? जरामरणाभ्यां ग्रस्ते. ॥ १५ ॥

॥ मूलं ॥—जम्मदुक्खं जरादुक्खं । रोगा य मरणाणि य ॥ अहो दुक्खो हु संसारे । जत्थ कीसंति जंतुणो ॥ १६ ॥ व्याख्या—हे पितरौ! हु इति निश्चयेन संसारो दुःखं दुःखहेतुर्वर्तते. अहो इत्याश्चर्ये यत्र संसारे जीवाः क्लिश्यंति क्लेशं प्राप्नुवंति. संसारे किं किं दुःखं? तदाह—जन्म दुःखं जरा दुःखं, पुनः संसारे रोगास्तापशीतशिरोऽर्त्तिप्रमुखाः, पुनर्मरणानि च, एतानि सर्वाणि दुःखानि यत्र संति. तस्मादयं संसारो दुःखहेतुरेव. यत्र भवभ्र-

मणे जीवाः क्लिश्यंति, क्लेशार्त्ता जवंति. ॥ १६ ॥

॥ मूलम् ॥—खित्तं वत्थु हिरणं च । पुत्तं दारं च बंधवा ॥ चइत्ताणं इमं देहं । गंतव्वमवसस्स मे ॥ १७ ॥ व्याख्या—हे पितरौ! ममाऽवशस्य परवशस्य सतः परजवे गंतव्यं. किं कृत्वा? क्षेत्रं ग्रामवाटिकादिकं त्यक्त्वा, पुनर्वास्तु गृहं, हिरण्यं रूप्यं स्वर्णं, पुत्रं तनयं. दारं कलत्रं च पुनर्बांधवान् स्वज्ञातीन् ज्रातृपितृव्यान्, इमान् सर्वांस्त्यक्त्वा, इमं देहं शरीरमपि त्यक्त्वा. ॥ १७ ॥

॥ मूलम् ॥—जहा किंपाकफलाणं । परिणामो न सुंदरो ॥ एवं जुत्ताण जोगाणं । परिणामो न सुंदरो ॥ १८ ॥ व्याख्या—हे पितरौ! यथा किंपाकफलानां विषवृक्षफलानां परिणामो जक्षणानंतरपरिणतिसमयः सुंदरो न जवति, एवं जुक्तानां जोगानामपि परिणामः सुंदरो नास्ति. यादृशं विषफलानां जक्षणं, तादृशो जोगानां परिणामः. किंपाकफलानि हि दर्शनेन रमणीयानि, जक्षणसमयेऽपि सुस्वादूनि जवंति, जुक्तेरनंतरं प्राणापहारीणि, तथा विषयसुखान्यपि. ॥ १८ ॥

॥ मूलम् ॥—अद्धाणं जो महंतं तु । अपाहिज्जो पवज्जई ॥ गछंतो सो दुही होइ । बुहातण्हाए पीकिर्ज ॥ १९ ॥ व्याख्या—हे पितरौ! यः पुरुषो महांतमध्वानं दीर्घं मार्गमपाथेयः संबलरहितः सन् प्रव्रजति, स पुमान् क्षुधातृक्षया पीकितः सन् दुःखी नवति. ॥१९॥

॥ मूलम् ॥—एवं धम्मं अकाऊणं । जो गछइ परं नवं ॥ गछंतो सो दुही होइ । वाहिरोगेहिं पीकिर्ज ॥ २० ॥ व्याख्या—एवममुना प्रकारेण अशंबलपुरुषदृष्टांतेन यः पुरुषो धर्ममकृत्वा परनवं गछत्यन्यज्जन्म व्रजति, स गछन् दुःखी नवति. कीदृशः सः? व्याधिरोगैः पीकितः ॥ २० ॥

॥ मूलम् ॥—अद्धाणं जो महंतं तु । सपाहेज्जो पवज्जइ ॥ गछंतो सो सुही होइ । बुहातिण्हा विवज्जई ॥ २१ ॥ व्याख्या—हे पितरौ! यः पुरुषो महांतमध्वानं दीर्घं मार्गं सपाथेयः शंबलसहितः सन् प्रव्रजति, स पुरुषः क्षुधातृक्षाभ्यां विवर्जितः क्षुधातृक्षाविवर्जितः सन् मार्गं गछन् सुखीनवति. ॥ २१ ॥

॥ मूलम् ॥—एवं धम्मंपि काऊणं । जो गछइ परं नवं ॥ गछंते से सुही होइ । अ-

प्पकम्मे अवेयणे ॥ २२ ॥ व्याख्या—एवममुना प्रकारेणानेन शंबलसहितपुरुषदृष्टांतेन यो मनुष्यो धर्मं कृत्वा परभवं परलोकं गच्छति, स धर्माराधकः पुरुषः सुखी भवति. कीदृशः सः? अल्पकर्मा अल्पानि कर्माणि यस्य सोऽल्पकर्मा लघुकर्मा. पुनः कीदृशः सः? अवेदनः, न विद्यते वेदना यस्य सोऽवेदनः, अल्पवेदनो वेदनारहितो वा. अल्पपापकर्मा अल्पाऽसातावेदन इत्यर्थः. ॥ २२ ॥

॥ मूलम् ॥—जहा गेहे पलित्तंमि । तस्स गेहस्स जो पहू ॥ सारभंडाणि नीणेइ । असारं अवउज्झइ ॥ २३ ॥ व्याख्या—हे पितरौ! यथा गृहेऽग्निना प्रदीप्ते प्रज्ज्वलिते सति तस्य गृहस्य यः प्रभुः स्वामी तदा सारभांडानि सारपदार्थानाजीविकाहेतून् गृहात् ' नीणेइ ' इति निष्कासयति, असारं भांडं चाऽपोज्झति अपोहति त्यजतीत्यर्थः. ॥ २३ ॥

॥ मूलम् ॥—एवं लोए पलित्तंमि । जराए मरणेण य ॥ अप्पाणं तारइस्सामि । तुज्झेहिं अणुमन्निओ ॥ २४ ॥ व्याख्या—एवममुनाऽनेन दृष्टांतेन लोके जरया मरणेन च प्रदीप्ते प्रज्ज्वलिते सत्यहमात्मानं तारयिष्यामि. कीदृशोऽहं? युष्माभिरनुमतो भवद्भिर्दत्ताज्ञ-

स्तस्मान्मह्यमाज्ञा दातव्या. अहं भवदाज्ञया आत्मन उद्धारं करिष्यामीति भावः ॥ २४ ॥

मूलम् ॥—तं बिंति अम्मापियरो । सामन्नं पुत्त डुच्चरं ॥ गुणाणं तु सहस्साइं । धारेयव्वाइ भिक्खुणो ॥ २५ ॥ व्याख्या—अथ मातापितरौ तं मृगापुत्रंप्रति ब्रूतः, हे पुत्र! श्रामण्यं दुश्चरं, साधुधर्मो डुष्करोऽस्ति. हे पुत्र! चारित्रस्योपकारकारकाणां गुणानां सहस्राणि भिक्षोर्धारयितव्यानि, मूलगुणाश्चोत्तरगुणाश्च भिक्षुणा धारणीयाः ॥ २५ ॥

॥ मूलम् ॥—समया सव्वभूएसु । सत्तुमित्तेसु वा जगे ॥ पाणायवायविरई । जावज्जीवाइ दुक्करं ॥ २६ ॥ व्याख्या—पुनर्हे पुत्र! सर्वभूतेषु समता कर्तव्या, अथवा जगे इति जगति शत्रुमित्रेषु समता कर्तव्या. पुनर्यावज्जीवं प्राणातिपातविरतिर्दुष्करमिति डुष्करा. ॥२६॥ =दुष्कर है=

॥ मूलम् ॥—निच्चकालप्पमत्तेण । मुसावायविवज्जणं ॥ भासियव्वं हियं सच्चं । निच्चाउत्तेण डुक्करं ॥ २७ ॥ व्याख्या—पुनर्नित्यकालं सर्वदा अप्रमादित्वेन मृषावादस्य विवर्जनं मृषावादविवर्जनं कर्तव्यं. पुनर्हितं हितकारकं सत्यं वक्तव्यं. पुनर्नित्यायुक्तेन स्थातव्यं, तदपि डुष्करमस्ति, आयुक्तः क्रियासु सावधानत्वं, नित्यमायुक्तो नित्यायुक्तस्तेन स्थातव्यं. अत्र

भावप्रधाननिर्देशो मंतव्यः. नित्यमायुक्तत्वेन स्थातव्यं तदपि दुष्करमित्यर्थः. ॥ २७ ॥

॥ मूलम् ॥—दंतसोहणमाइस्स । अदत्तस्स विवज्जणं ॥ अणवज्जेसणिज्जस्स । गेण्हणा अवि डुक्करा ॥ २८ ॥ व्याख्या—हे पुत्र ! पुनः साधुधर्मे दंतशोधनप्रमुखस्याप्यदत्तस्य वस्तुनोऽपि विवर्जनं. शलाकामात्रमपि वस्त्वदत्तं न ग्रहितव्यं. अनवद्यं च तदेषणीयं चाऽनवद्यैषणीयं, तस्यानवद्यैषणीयस्य पिंडादेर्ग्रहणमपि दुष्करं. अनवद्यं निर्दूषणमचित्तं प्रासुकमेषणीयं द्विचत्वारिंशद्दोषरहितं पिंडं ग्रहीतव्यं, तदपि दुष्करमित्यर्थः. ॥ २८ ॥

॥ मूलम् ॥—विरई अबंभचेरस्स । कामभोगरसन्नुणा ॥ उग्गं महव्वयं बंभं । धारेयव्वं सुदुक्करं ॥ २९ ॥ व्याख्या—हे पुत्र ! अब्रह्मचर्यस्य मैथुनस्य विरतिः कर्तव्या, सापि दुष्करा. हे पुत्र ! कामभोगरसज्ञेन पुरुषेणोग्रं घोरं बंभं ब्रह्मचर्यं महाव्रतं धर्तव्यं, तदपि डुष्करं. लब्धभोगसुखास्वादस्य भोगेभ्यो निवृत्तिरत्यंतं दुष्करेत्यर्थः. ॥ २९ ॥

॥ मूलम् ॥—धणधन्नपेसवग्गेसु । परिग्गहविवज्जणं ॥ सव्वारंभपरिच्चाओ । निम्ममत्तं सुदुक्करं ॥ ३० ॥ व्याख्या—धनधान्यप्रेष्यवर्गेषु परिग्रहविवर्जनं कर्तव्यं, धनं गणिमादि,

धान्यं गोधूमादि, प्रेष्यवर्गो दासदास्यादिवर्गः. धनं च धान्यं च प्रेष्यवर्गश्च धनधान्यप्रेष्यवर्गास्तेषु मोहबुद्धेर्विशेषेण वर्जनं, एतदपि दुष्करं. पुनः सर्वारंभपरित्यागः कर्तव्यः, स चापि दुष्करः, पुनर्निर्ममत्वाचिंतनं दुष्करं, न मे कश्चिदस्ति, अहमपि कस्यापि नास्मीति चिंतनं दुष्करं ॥ ३० ॥

॥ मूलम् ॥—चउव्विहेपि आहारे । राईभोयणवज्जणा ॥ सन्निहीसंचओ चेव । वज्जेयावा सुदुक्करं ॥ ३१ ॥ व्याख्या—हे पुत्र ! पुनः साधुधर्मे चतुर्विधे आहारे रात्रिभोजनस्य वर्जना कार्या. अशनपानखादिमस्वादिमानां चतुर्णामाहाराणामपि रात्रौ भोजनत्याग एव कर्तव्यः. च पुनः संनिधिर्घृतगुडादेरुचितकालातिक्रमेण स्थापनं. ततः संनिधिश्चासौ संचयश्च संनिधिसंचयः, एव निश्चयेन वर्जितव्यः, सोऽपि सुतरां दुष्करः. ॥ ३१ ॥

॥ मूलम् ॥—छुहा तण्हा य सीउण्हं । दंसमसगवेयणा ॥ अक्कोसा दुक्खसिज्जा य । तणफासा जल्लमेव य ॥ ३२ ॥ व्याख्या—पुनर्हे पुत्र ! क्षुधा सहनीयेत्यध्याहारः. तृषा तृष्णा च सोढव्या, शीतोष्णं सहनीयं, दंशमशकानां वेदना सहनीया, पुनराक्रोशा दुर्वचनानि,

तत्सहनमपि दुष्करं. पुनर्दुःखशय्या उपाश्रयस्य दुःखं शय्यादुःखं तदपि सहनीयं. संस्तारके तृणस्पर्शदुःखं, पुनर्जल्लं मलपरीषहोऽपि सोढव्यः साधुना. ॥ ३२ ॥

॥ मूलम् ॥—तालणा तज्जणा चेव । वहबंधपरीसहा ॥ दुक्खं भिक्खायरिया । जायणा य अलाभया ॥ ३४ ॥ व्याख्या—पुनस्ताडना चपेटाटक्करादिना हननं, पुनस्तर्जनसंगुल्यादिना निर्भर्त्सनं भयोत्पादनं. पुनर्वधबंधपरिषहाः सहनीयाः. तत्र वधो यष्ट्यादिभिर्हननं, बंधनं रज्ज्वादिना दमनं, वधश्च बंधश्च वधबंधौ, तयोः परिषहाः सोढव्याः. पुनर्भिक्षाचर्याया दुःखं, गृहस्थगृहे याचना कर्तव्या, तत्करणेऽपि दुःखमस्ति. तत्रापि याचनायां कृतायामप्यलाभतोऽप्राप्तिर्भवेत्, तदापि दुःखं न कर्तव्यमेतदपि दुष्करं. ॥ ३४ ॥

॥ मूलम् ॥—कावोया जा इमा वित्ती । केसलोओ य दारुणो ॥ दुक्खं बंभवयं घोरं । धारेउं अ महप्पणा ॥ ३४ ॥ व्याख्या—हे पुत्र! साधुधर्मे पुनः कापोतीया वृत्तिर्वर्तते इति शेषः. कपोतानां पक्षिणां या इयं वृत्तिः सा कापोतीया. यथा हि पक्षिणो नित्यं शंकिताः संतः स्वभक्ष्यग्रहणे प्रवर्तंते, भक्ष्यं कृत्वा च पुनः सार्थे किमपि न गृह्णंति, कुक्षिशंबला भ-

वंति, तथा साधवोऽपि दोषेभ्यः शंकमाना आहारग्रहणे प्रवर्तंते, आहारं कृत्वा च किमपि सार्थे संचयं न कुर्वंति. पुनः साधूनां केशलोचोऽपि दारुणो नयदोऽस्ति, पुनर्महात्मना साधुना ब्रह्मव्रतं धर्तुं दुःखमिति दुष्करं. यद् ब्रह्मव्रतं महात्मना महापुरुषेण ध्रियते तद्ब्रह्मव्रतं धर्तुं दुष्करमिति नावः. कीदृशं ब्रह्मव्रतं? घोरं, अन्येषामल्पसत्वानां नयदायकं. ॥ ३४ ॥

॥ मूलम् ॥—सुहोइर्ज तुमं पुत्ता । सुकुमालो समुज्जिर्ज ॥ न हुसी पभू तुमं पुत्ता । सामन्नमणुपालिर्ज ॥ ३५ ॥ व्याख्या—हे पुत्र! त्वं सुखोचितोऽसि, हे पुत्र! पुनस्त्वं सुकुमालोऽसि, अथ चारित्रग्रहणाय समुद्यतोऽसि. परं त्वं श्रामण्यं साधुधर्ममनुपालयितुं प्रभुः समर्थो न नवसि. ॥ ३५ ॥

॥ मूलम् ॥—जावज्जीवमविस्सामो । गुणाणं तुह महप्भरो ॥ गुरुर्ज लोहनारुव । जो पुत्ता होइ डुव्वहो ॥ ३६ ॥ व्याख्या—हे पुत्र! यो गुणानां चारित्रस्य मूलोत्तरगुणानां महान्नारः स लोहनार इव गुरुर्गरिष्ठो डुर्वहो नवति. कीदृशो गुणानां महान्नारः? यावज्जीवमविश्रामो विश्रामरहितः. अन्योऽपि गुरुन्नारो यदा वोढुं न शक्यते, तदा क्वचित्प्रदेशे वि-

मुच्य विश्रामो गृह्यते, परमेवं चारित्रगुणभारः कदापि न मोचनीयो यावज्जीवं धारणीयोऽस्ति.

॥ मूलम् ॥—आगासे गंगसोउव्व । पडिसोउव्व दुत्तरो ॥ बाहाहिं सागरो चेव । तरिअव्वो गुणोयही ॥ ३७ ॥ व्याख्या—हे पुत्र ! आकाशे गंगायाः श्रोतोवद्दुस्तरमिति योज्यं. यथा हिमाचलात्पतद्गंगाप्रवाहस्तरितुमशक्यस्तथा संयमो धारितुमशक्यः. प्रतीपजलप्रवाह इव दुस्तरो, बाहुभ्यां सागरस्तरितव्यः. तथा गुणोदधिर्गुणानां ज्ञानादीनामुदधिर्गुणोदधिः, अथवा गुणा ज्ञानादयस्त एवोदधिर्गुणोदधिश्चारित्रसमुद्रस्तरणीयः ( कायवाङ्मनोनियंत्रणेनैव तत्तरणात्तस्य च दुःकरत्वात्. ) ॥ ३७ ॥

॥ मूलम् ॥—वालुयाकवले चेव । निरस्साए उ संजमे ॥ असिधारागमणं चेव । दुक्करं चरिउं तवो ॥ ३८ ॥ व्याख्या—हे पुत्र ! वालुकाकवलो यथा निःस्वादस्तथा संयमः. असिधारागमनमसिधारायां गमनं, खड्गधारायां चलनं यथा दुष्करं तथा तपश्चरितुं दुष्करं वर्तते.

॥ मूलम् ॥—अहीवेगंतदिट्ठीए । चरित्ते पुत्त दुच्चरे ॥ जवा लोहमया चेव । चावेयव्वा सुदुक्करं ॥ ३९ ॥ व्याख्या—हे पुत्र ! साधुरहिरिवैकांतदृष्टिः, एकांतो निश्चयो यस्याः सैकां-

ता, एकांता चासौ दृष्टिश्चैकांतदृष्टिः. यथा सर्प एकाग्रदृष्ट्या चलति, इतस्ततश्च न विलोकयति, तथा साधुमार्गे साधुश्चरेत्, मोक्षमार्गे दृष्टिं विधाय चरेत्. कीदृशे चारित्रे? दुश्चरे चरितुमशक्ये. यथा लोहमया यवाश्चर्वितव्या दुष्करास्तथा चारित्रमपि चरितुं दुष्करं. ॥३९॥

॥ मूलम् ॥—जहा अग्गिसिहा दित्ता । पाउं होइ सुदुक्करं ॥ तह दुक्करं करेउं जे । तारुण्ये समणत्तणं ॥ ४० ॥ व्याख्या—हे पुत्र! यथाग्निशिखा दीप्ता सती ज्वलंती पातुं पानं कर्तुं सुतरां दुष्करा, तथा तारुण्ये यौवने श्रमणत्वं चारित्रं कर्तुं दुष्करं. यौवनावस्थायां हींद्रियाणि दुर्दमानीत्यर्थः. ॥ ४० ॥

॥ मूलम् ॥—जहा दुक्खं भरेउं जे । होइ वायस्स कुत्थलो ॥ तहा दुक्खं करेउं जे । कीवेण समणत्तणं ॥ ४१ ॥ व्याख्या—हे पुत्र! यथा वायोरिति वायुना भरितुं पूरितुं कुत्थलो वस्त्रमयं भाजनं दुष्करं, तथा क्लीवेन हीनसत्वेन श्रामण्यं कर्तुं दुष्करं. ॥ ४१ ॥

॥ मूलम् ॥—जहा तुलाए तोलेउं । दुक्करं मंदरो गिरी ॥ तहा निहुयं निस्संकं । दुक्करं समणत्तणं ॥ ४२ ॥ व्याख्या—हे पुत्र! यथा मंदरो गिरिर्मेरुपर्वतस्तुलया तोलितुं दुष्कर-

॥ ७०० ॥

स्तथा निवृत्तं निश्चलं निःशंकं शंकारहितं यथास्यात्तथा शरीरापेक्षारहितं श्रमणत्वं साधुत्वं शरीरेण धर्तुं दुष्करं ॥ ४२ ॥

॥ मूलम् ॥—जहा भुयाहिं तरिउं । दुक्करं रयणायरो ॥ तहा अणुवसंतेणं । दुक्करं दमसागरो ॥ ४३ ॥ व्याख्या—हे पुत्र! यथा रत्नाकरः समुद्रो भुजाभ्यां तरितुं दुष्करस्तथाऽनुपशांतेन मनुष्येण दमसागरस्तरितुं दुष्करः. उपशांतो जितकषायः, न उपशांतोऽनुपशांतस्तेन सकषायेण पुरुषेण दम इंद्रियदमोऽर्थाच्चारित्रं, दम एव दुस्तरत्वात्सागर इव दमसागरस्तरितुं दुःशक्य इत्यर्थः. ॥ ४३ ॥

॥ मूलम् ॥—भुंज माणुस्सए भोए । पंचलक्खणए तुमं ॥ भुत्तभोगी तओ जाया । पच्छा धम्मं चरिस्ससि ॥ ४४ ॥ व्याख्या—हे पुत्र! मानुष्यकान्, मनुष्यस्येमे मानुष्यकास्तान् मानुष्यकान् मनुष्यसंबंधिनः पंचलक्षणान् पंचविधान् भोगांस्त्वं भुंक्ष्वाऽनुभव? हे जात! हे पुत्र! ततः पश्चाद् भुक्तभोगीभूय धर्मं यतिधर्मं चरिष्यस्यंगीकरिष्यसि. इदानीं तव भोगानुभवसमयोऽस्तीति, न पुनर्भोगत्यागावसर इति भावः. ॥ ४४ ॥

॥ मूलम् ॥—सोवि तम्हा पियरो । एवमेयं जहा फुडं ॥ इहलोयनिप्पिवासस्स । न-
त्थि किंचिवि दुक्करं ॥ ४५ ॥ व्याख्या—अथ मृगापुत्रो ब्रूते, हे पितरावेवमिति यथा भव-
द्भ्यां प्रोक्तं तत्तथैव. यथा प्रव्रज्याया दुष्करत्वं स्फुटं प्रकटं वर्तते तदसत्यं नास्ति. तथापी-
ह लोके निष्पिपासस्य, पिपासायास्तृष्णाया निर्गतो निःपिपासस्तस्य निःपिपासस्य निःस्पृहस्य
पुरुषस्य किंचिदपि दुष्करं नास्ति. निःस्पृहस्य तृणं जगदित्युक्तेः. यः स्पृहावान् भवति तस्य
परिग्रहत्यागो दुष्कर एव. परं निरीहस्य साधुधर्मः सुकर एव. तेनाहं निःस्पृहोऽस्मि, मया
सुखेन साधुधर्मः कर्तव्यः. ॥ ४५ ॥

॥ मूलम् ॥—सारीरमाणसा चेव । वेयणाउ अणंतसो ॥ मए सोढाउ भीमाउ । अ-
सइं दुक्खभयाणि य ॥ ४६ ॥ व्याख्या—हे पितरौ ! मया शारीरमानस्यो वेदना अनंतशो-
ऽनंतवारान् सोढा अनुभूताः. चैव पादपूरणे. च पुनरसकृद्वारंवारं दुःखानि भयानि सोढा-
नि. कीदृशा वेदनाः ? भीमा भयानकाः. दुःखानां भयानां च भीमशब्दो विशेषणेन प्रति-
पाद्यः. कीदृशानि दुःखानि भयानि च ? भीमानि भयोत्पादकानि. दुःखानि च भयानि च

दुःखजयानि. अथवा दुःखहेतूनि जयानि दुःखजयानि, राजविड्वराग्निचौरधाटीप्रमुखाणि, तानि वारंवारमनुभूतानीत्यर्थः. ॥ ४७ ॥

॥ मूलम् ॥—जरामरणकंतारे । चाउरंते जयागरे ॥ मए सोढाणि जीमानि । जम्माणि मरणाणि य ॥ ४७ ॥ व्याख्या—पुनर्मृगापुत्रो वक्ति, हे पितरौ ! चातुरंते संसारे जीमानि जयदानि जन्मानि च पुनर्मरणानि मया सोढान्यनुभूतानि. चत्वारो देवमनुष्यतिर्यग्नरकरूपा जवा अंता अवयवा यस्य स चतुरंतः, चतुरंत एव चातुरंत इति व्युत्पत्तिः. अर्थात्संसारस्तस्मिंश्चातुरंते संसारे. कीदृशे चातुरंते ? जरामरणकांतारे, जरामरणाभ्यामतिगहनतया कांतारं वनं जरामरणकांतारं, तस्मिन् जरामरणकांतारे. ॥ ४७ ॥

॥ मूलम् ॥—जहा इहं अगणी उण्हो । इत्तो अणंतगुणो तहिं ॥ नरएसु वेयणा उण्हा । असाया वेइया मए ॥ ४८ ॥ व्याख्या—हे पितरौ ! येषु नरकेष्वहमुत्पन्नस्तेषु नरकेषु मयोष्णाः स्पर्शनेंद्रियदुःखदा असातावेदना वेदिता जुक्ताः. कीदृशा उष्णाः ? यथेह मनुष्यलोकेऽग्निरुष्णो वर्तते, इतोऽग्नेः स्पर्शात्तत्र नरकेष्वनंतगुणोऽग्निस्पर्शः, तत्र च वादराग्नेर-

भावात् पृथिव्या एव तथाविधः स्पर्श इति गम्यते. ॥ ४८ ॥

॥ मूलम् ॥—जहा इह इमं सीयं । इत्तोणंतगुणं तहिं ॥ नरएसु वेयणा सीया । असाया वेइया मए ॥ ४९ ॥ व्याख्या—यथेह मनुष्यलोके इदं प्रत्यक्षं शीतं वर्तते, इतः शातात्तत्र नरकेषु मया शीता स्पर्शनेंद्रियदुःखदाऽसातावेदनाऽनंतगुणाधिका भुक्ताऽनुभूता. ।४९।

॥ मूलम् ॥—कंदंतो कंडुकुंभीसु । उड्ढपाओ अहोसिरो ॥ हुयासणे जलंतंमि । पक्कपुव्वो अणंतसो ॥ ५० ॥ व्याख्या—हे पितरावहं कंदुकुंभीषु पाकभाजनविशेषासु लोहमयीषु हुताशने देवमायाकृते वह्नावनंतशो बहून् वारान् पक्कपूर्वः, पूर्वं पक्क इति पक्कपूर्वः. कीदृशोऽहं? ऊर्ध्वपाद ऊर्ध्वचरणः, च पुनरधःशिरा अधोमस्तकः. अहं किं कुर्वन्? क्रंदन् पूत्कृतिं कुर्वन्. कीदृशे हुताशने? ज्वलति देदीप्यमाने. ॥ ५० ॥

॥ मूलम् ॥—महादवग्गिसंकासे । मरुंमि वयरवालुए ॥ कलंबवालुया एव । भट्ठपुव्वो अणंतसो ॥ ५१ ॥ व्याख्या—हे पितरौ! कलंबवालुकाया नद्या मरुंमि वालुकानिवहेऽनंतशो वारंवारमहं दग्धपूर्वः. कलंबवालुका नरकनदी, तस्याः पुलिनधूल्यां भ्रष्टपूर्वः, यथा-


=भुंजाय्रो=

ल चणकादिधान्यानि भ्राष्ट्रे भज्यंते, तथाहमपि वहुशो दग्धः. कथंभूते मरौ? महादवाग्निसंकाशे महादवानलसदृशे दाहकशक्तियुक्ते. पुनः कीदृशे मरौ? वज्रवालुके, वज्रवालुका यस्य स वज्रवालुकस्तस्मिन् वज्रवालुके. ॥ ५१ ॥

॥ मूलम् ॥—रसंतो कंदुकुंभीसु । उड्ढं वद्धो अवंधवो ॥ करवत्तकरवयाईहिं । छिन्नपुव्वो अणंतसो ॥ ५२ ॥ व्याख्या—हे पितरौ! पुनरहं कंदुकुंभीषु लोहमयपाचनभांडविशेषेषु ऊर्ध्वं वृक्षशाखादौ वद्धः सन् परमाधार्मिकदेवैरिति बुध्ध्या मायमवद्धः कुत्रचिन्नष्ट्वा यायात्, तस्मादधोदेशे कुंभी वर्तते, उपरि च वृक्षशाखायामहं वद्धः, करपत्रैः क्रकचैश्चानंतशो वहुवारं छिन्नपूर्वो द्विधा कृतः. यथा काष्टं वध्ध्वा करपत्रैः क्रकचैश्छिद्यते, तथाहं छिन्नः. लघूनि काष्टविदारणोपकरणानि क्रकचानि, वृहंति च तानि करपत्रकाण्युच्यंते. कीदृशोऽहं? रसन् विलपन् पूत्कारं कुर्वन्, पुनः कीदृशोऽहं? अवांधवः, न विद्यते वांधवो हितकारी यस्य सोऽवांधवः. ॥ ५२ ॥

॥ मूलम् ॥—अइतिक्खकंटयाइन्ने । तुंगे सिंवलिपायवे ॥ खेवियं पासवद्धेणं । कड्ढा-

कढाइ दुक्करं ॥ ५३ ॥ व्याख्या—हे पितरावतितीक्ष्णकंटकाकीर्णे तुंगे उच्चे शंबलपादपे कढाकढैः कर्षापकर्षणैः परमाधार्मिककृतैः क्षेपितं पूर्वोपार्जितं कर्मानुभूतं. मया यानि कर्माण्युपार्जितानि तानि भुक्तानीति शेषः. कीदृशेन मया? पाशबद्धेन रज्वा संजितेन. इदमपि दुष्करं कष्टं भुक्तमिति शेषः. ॥ ५३ ॥

॥ मूलम् ॥—महजंतेसु उच्छूव । आरसंतो सुभेरवं ॥ पीलिओमि सकम्मेहिं । पावकम्मो अणंतसो ॥ ५४ ॥ व्याख्या—हे पितरौ! पुनरहं पापकर्मा, पापं कर्म यस्य स पापकर्मा पापः. अनंतशो बहुवारं स्वकर्मभिर्महायंत्रेषु पीडितोऽस्मि. क इव? ईक्षुरिव, यथेक्षुर्महायंत्रेषु पीड्यते. अहं किं कुर्वन्? सुभैरवं सुतरामत्यंतं भैरवं भयानकं शब्दमारसन्नाक्रंदं कुर्वन्.

॥ मूलम् ॥—कुयंतो कोलसुणएहिं । सामेहिं सबलेहि य ॥ पाडिओ फालिओ छिन्नो । विफुरंतो अणेगसो ॥ ५५ ॥ व्याख्या—हे पितरावनेकशोऽनेकवारं श्यामैः श्यामाभिधानैः, च पुनः शबलैः शबलाभिधानैः परमाधार्मिकदेवैर्भूमौ पृथिव्यामहं पातितः. परमाधार्मिका हि पंचदशविधाः. अंबे १ भंति बध्नंति च १. अंबरीसे चेव २ करीषे पचंति २. सामेय ३ शात-

नां यातनां च कुर्वंति ३. सवलत्ति य ४ अंत्रादि निष्काशयंति ४. रुद्दो ५ कुंतादौ प्रोतयंति ५. अवरुद्द ६ अंगोपांगानि मोटयंति ६. काले य ७ तैलादौ तलयंति ७. महाकाले तहावरे ८ स्वमांसानि खादयंति ८. ॥ १ ॥ असिपत्ते ए असिपत्रवनं विकुर्वंति ए. धणू १० धनुर्बाणैर्घ्नंति १०. कुंत्ने ११ कुंन्तिपाके पचंति ११. वालुया १२ भ्राष्ट्रे पचंति १२. वेयणत्ति य १३ वैतरिण्यामवतारयंति १३. खरस्सरे १४ शाल्मल्यामारोप्य खरस्वरान् प्रकुर्वंति १४. महाघोसे १५ नश्यतो नारकान् मिलयंति, महाशब्देन त्रापयंति च १५. इति परमाधार्मिकाः. कीदृशैः श्यामैः शबलैश्च? कोलशुनकैर्वराहकुर्कुररूपधारिन्निर्देवैः पुनरहं स्फाटितः पुरातनवस्त्रवद्विदारितः. पुनरहं तैर्वराहकुर्कुटैः स्फाटितो दंतैर्दंष्ट्रान्निश्च वृक्षवच्छिन्नश्च. पुनः कीदृशोऽहं? कूजन्नव्यक्त शब्दं कुर्वन्. पुनः कदृशोऽहं? विस्फुरन्नितस्ततस्तरफरून्. ॥ ५५ ॥

॥ मूलम् ॥—असीहिं अयसिवन्नाहिं । नल्लीहिं पिट्टिसेहि य ॥ ठिन्नो न्निन्नो विन्निन्नो य । उइन्नो पावकम्मुणा ॥ ५६ ॥ व्याख्या—हे पितरौ! पुनरहं पापकर्मणोदीर्णः प्रेरितः सन्नरकेष्वसिन्निः खड्गैः, पुनर्नल्लीन्निः कुंतैस्त्रिशूलैर्वा, पुनः पिट्टिशैः प्रहरणविशेषैश्छिन्नो छि-

धा कृतः, भिन्नो विदारितः, च पुनर्विभिन्नो विशेषेण सूक्ष्मखंडीकृतः. कथंभूतैरसिभिः? अतसीकुसुमवर्णैः श्यामवर्णैरित्यर्थः. ॥ ५६ ॥

॥ मूलम् ॥—अवसो लोहरहे जुत्ते । जलंते समिलाजुए ॥ चोइओ तोत्तजुत्तेहिं । रोज्झोवा जह पाडिओ ॥ ५७ ॥ व्याख्या—हे पितरौ! पुनरहं नरके लोहरथेऽवशः परवशः सन् परमाधार्मिकदेवैर्ज्वलत्यग्निना जाज्वल्यमाने समिलायुगे युक्तो योत्रितः. समिला युगरंध्रक्षेपणीयकीलिका. युगस्तु जूसरः. उभयोरपि वह्निना प्रदीप्तत्वं कथितं. तत्राग्निना ज्वलमाने रथेऽहं योत्रितस्तोत्रयोक्त्रैर्नोदितः प्रेरितः. तोत्राणि प्राजनकानि पुराणकादीनि. योक्त्राणि नासाप्रोतबद्धरज्जुबंधनानि, तैः प्रेरितः. पुनरहं रोझोवा इति गवयव इव पातितः, यष्टिमुष्ट्यादिना हत्वा पातितः. वाशब्दः पादपूरणे, यथाशब्द इवार्थे. ॥ ५७ ॥

॥ मूलम् ॥—हुयासणे जलंतंमि । चियासु महिसोविव ॥ दड्ढो पक्को य अवसो । पावकम्मेहि पावियो ॥ ५८ ॥ व्याख्या—हे पितरौ! पापकर्मभिरहं प्रावृतो वेष्टितः सन् ज्वलति हुताशने जाज्वल्यमानेऽग्नौ दग्धो भस्मसात्कृतः. पुनरहं पक्को वृंताकादिवद्भटित्रीकृतः.

१८ =जोड्यो= =बाल्यो पक्को=

कीदृशोऽहं ? अवशः परवशः. अहं क इवाग्नौ दग्धः पक्वश्च ? चितास्वग्निषु महिष इव, यथात्र पापाः पक्कं वध्ध्वाग्नौ प्रज्वालयंति जटित्रीकुर्वंति, तथा तत्राहं परमाधार्मिकदेवैर्विक्रियारचिताग्नौ दग्धः पक्वश्च. ॥ ५७ ॥

॥ मूलम् ॥—बला संदंसतुंडेहिं । लोहतुंडेहि पक्खीहिं ॥ विलुत्तो विलवंतोहं । ढंकगिद्धेहिणंतसो ॥ ५८ ॥ व्याख्या—हे पितरावहमनंतशो वहुवारं ढंकगृध्रैर्ढंकपक्षिभिर्गृध्रपक्षिभिश्च बलद्विलुप्तश्चुंबितः, विशेषेण लुप्तो विलुप्तः, नासानेत्रांत्रकालेयादिषु चुंटित इत्यर्थः. कथंभूतैर्ढंकैर्गृध्रैश्च ? संदंशतुंडैः संदंशाकारं तुंडं येषां ते संदंशतुंडाः, तैः संदंशाकारमुखैः. पुनः कीदृशैः ? लोहतुंडैर्लोहवत्कठोरमुखैः. किं कुर्वन्नहं ? विलपन् विलापं कुर्वन्. ॥५८॥

॥ मूलम् ॥—तएहा किलंतो धावंतो । पत्तो वेयरणिं नइं ॥ जलं पिहंति चिंतिंतो । खुरधाराहिवाइओ ॥ ६० ॥ व्याख्या—हे पितरौ ! पुनरहं तृष्णाक्रांतस्तृपाभिव्याप्तो धावन् वैतरणीं प्राप्तः सन् जलं पिबामीति चिंतयन् क्षुरधाराभिर्व्यापादितः. कोऽर्थः ? यावदहं तृषाक्रांतो मनसि पानीयं पिबामीति चिंतयामि, तावद्वैतरणीनद्या ऊर्मिभिः कल्लोलैर्हतो दुः-

स्वीकृतः, वेतरणीनद्या जलं हि क्षुरधाराप्रायं गलच्छेदकमस्तीति भावः. ॥ ६० ॥

॥ मूलम् ॥—उण्हाभितत्तो संपत्तो । असिपत्तं महावणं ॥ असिपत्तेहि पडंतेहिं । छिन्नपुव्वो अणंतसो ॥ ६१ ॥ व्याख्या—हे पितरौ पुनरहमुष्णाभितप्त आतपपीडितश्छायार्थी असिपत्रमहावनं प्राप्तः. असिवत्खड्गवत्पत्रं येषां तेऽसिपत्राः खड्गपत्रवृक्षास्तेषां महावनमसिपत्रमहावनं गतः सन्नसिपत्रैः पतद्भिरनंतशोऽनेकवारं छिन्नपूर्वो द्विधा कृतः. ॥ ६१ ॥

॥ मूलम् ॥—मुग्गरेहिं मुसंढीहिं । सूलेहिं मूसलेहि य ॥ गयासंभग्गगत्तेहिं । पत्तं दुक्खमणंतसो ॥ ६२ ॥ व्याख्या—हे पितरावहं मुद्गरैर्लोहमयैर्गुरुभिः, च पुनर्मुसंढीभिः शस्त्रविशेषैर्लेपटाभिधानैः शस्त्रैर्वा, तथा शूलैस्त्रिशूलैश्च पुनर्मुशलैः, पुनर्गदाभिर्लोहमयीभिर्यष्टिभिरनंतशो दुःखं प्राप्तः. कथंभूतैरेतैर्मुद्गरादिभिः शस्त्रैः? संभग्नगात्रैश्चूर्णितशरीरैः ॥ ६२ ॥

॥ मूलम् ॥—खुरेहिं तिक्खधारेहिं । छुरियाहि कप्पणीहि य ॥ कप्पिओ फालिओ छिन्नो । उक्कित्तो य अणेगसो ॥ ६३ ॥ व्याख्या—हे पितरौ! क्षुरै रोममुंडनसाधनैः, पुनस्तीक्ष्णधाराभिः क्षुरिकाभिः, कल्पनीभिः कर्तरीभिरहं कल्पितो वस्त्रवत्खंडितः, पुनः स्फाटितो व-

त्रवदूर्ध्वं विदारितः, पुनश्छिन्नः क्षुरिकाभिः कर्कटीव खंडितः. पुनरुत्कृतः शरीराद् दूरीकृतचर्मेत्यर्थः. एवमनंतशो वारंवारं कदर्थितः. ॥ ६३ ॥

॥ मूलम् ॥—पासेहिं कूडजालेहिं । मिओवा अवसो अहं ॥ वाहिओ वद्धरुद्धो य । निवसो चेव विवाइओ ॥ ६४ ॥ व्याख्या—हे पितरौ! पुनरहं वहुशो वारंवारं पाशैर्वंधनैस्तथा कूटजालैः कुत्सिवागुरादिभिर्मृग इव वाहिओ इति त्रोलवितस्तथा वद्धो रुद्धश्च वाह्यप्रचारान्निषिद्धः. यथा मृगं वंचयित्वा पाशे निक्षिपंति, कूटजाले च पातयंति, तथाहं वंचितो वद्धो रुद्धश्च. च पुनरेव निश्चयेनावशः परवशः सन् व्यापादितो मारितः. ॥ ६४ ॥

॥ मूलम् ॥—गलेहिं मगरजालेहिं । मच्छो वा अवसो अहं ॥ उल्लिओ फालिओ गहिओ । मारिओ य अणंतसो ॥ ६५ ॥ व्याख्या—हे पितरौ! पुनरहं गलैर्मत्स्यानां पाशैर्मकरजालैर्मत्स्यजालैर्मत्स्य इव विद्धगलोऽभूवं. पुनर्गृहीतो मकररूपधारिभिः परमाधार्मिकैर्वलादुपादत्तः. पुनरुल्लिओ इति उल्लिखितश्चीरितः. पुनः स्फाटितः काष्टवद्विदारितः. पुनरनंतशो मारितो गर्दभ इव कुट्टितः. ॥ ६५ ॥

॥ मूलम् ॥—विदंसएहिं जालेहिं । लेप्पाहिं सउणोविव ॥ गहिउ लग्गो य बद्धो य । मारिउ य अणंतसो ॥ ६६ ॥ व्याख्या—हे पितरौ! पुनरहं शकुनिरिव पक्षीव, विशेषेण दंशंतीति विदंशकाः श्येनादयस्तैर्जालैस्तादृग्बंधनैः पक्षिबंधनविशेषैर्बलाद्गृहीतः. 'वीतंशो मृगपक्षिणां' इति हैमः. पुनरहं जालैर्गृहीतः, पुनर्लेप्याभिः शिरीषलेपनक्रियाभिर्लग्नः श्लिष्टः, पुनरहं बद्धो दवकादिना चरणग्रीवादौ नियंत्रितः. पुनर्मारितः प्राणैर्विहीनः कृतः.

॥ मूलम् ॥—कुहाडफरसुमाईहिं । वड्ढइहिं डुमो इव ॥ कुट्टिउ फालिउ छिन्नो । तच्छिउ य अणंतसो ॥ ६७ ॥ व्याख्या—हे पितरौ! पुनरहं कुठारैः पर्श्वादिकैः काष्ठसंस्करणसाधनप्रहरणैर्वार्द्धकिभिः काष्ठवर्द्धिभिर्द्रुम इव कुट्टितः स्फाटितश्छिन्नश्च. यथा काष्ठवर्द्धिभिर्वृक्षः कुठारैः पर्श्वादिभिः प्रहरणैः कुट्यते स्फाट्यते छेद्यते, तथाहं परमाधार्मिकैर्वारंवारं पीडितः. ॥

॥ मूलम् ॥—चवेडमुट्ठिमाईहिं । कुमारेहिं अयंपि व ॥ ताडिउ कुट्टिउ भिन्नो । चुण्णिउ य अणंतसो ॥ ६८ ॥ व्याख्या—हे पितरौ! पुनरहं परमाधार्मिकैर्देवैश्चपेटाभिर्हस्ततलैः, पुनर्मुष्ट्यादिभिर्बद्धहस्तैः, आदिशब्दाल्लत्ताजानुकूर्पराप्रहारैरनंतशस्ताडितः कुट्टितः, भिन्नो

भेदं प्रापितः, चूर्णितः, कैः कमिव? कुमारैर्लोहकारैरय इव लोह इव. यथा लोहकारेण लोहः कुट्यते भेद्यते चूर्ण्यते श्लक्ष्णीक्रियते. ॥ ६७ ॥

॥ मूलम् ॥—तत्ताइं तंवलोहाइं । तउयाइं सीसगाणि य ॥ पाईओ कलकलंताइं। आरसंतो सुभेरवं ॥ ६९ ॥ व्याख्या—हे पितरौ! पुनरहं परमाधार्मिकैस्तप्तानि गालितानि ताम्रलोहादीनि वैक्रियाणि त्रपुकानि कस्तीरकाणि चाहं पायितः. कीदृशानि ताम्रादीनि? कलकलंतानि कलकलशब्दं कुर्वंति, अत्यंतमुत्कलितान्यव्यक्तं शब्दं कुर्वंति. कीदृशोऽहं? सुभैरवमतिभीषणं शब्दं रसन् विलपन्. ॥ ६९ ॥

॥ मूलम् ॥—तुहं पियाइं मंसाइं । खंडाइं सोल्लगाणि य ॥ खाविओमि य मंसाई । अग्गिवण्णाइणेगसो ॥७०॥ व्याख्या—हे पितरौ! पुनः परमाधार्मिकैरिति स्मारयित्वा स्वमांसान्यहं खादितः स्वमांसानि भोजितः. कीदृशानि स्वमांसानि? खंडानि खंडरूपाणि, पुनः कीदृशानि? सोल्लकानि भटित्रीकृतानि. स्वमांसान्येव भटित्रीकृत्य शूलीकृत्य च खादितानि. पुनः कीदृशानि? अग्निवर्णानि जाज्वल्यमानानि, तान्यप्येकवारं न खादितानि, किं-

त्वनेकवारं खादितानीति, किं स्मारयित्वा? रे नारक! तव प्राग्भवे मांसानि प्रियाण्यासन् जीवानां हि त्वं मांसानि खंडानि सोल्लकान्यादः, इदानीं त्वं स्वमांसमेवाद्धि? इत्युक्त्वा पूर्वकर्म स्मारयित्वा परमाधार्मिकैः स्वमांसानि खादितः, स्वमांसैरेव भोजित इत्यर्थः. ॥ ७० ॥

॥ मूलम् ॥—तुहं पिया सुरा सीहू । मेरेई य महूणि य ॥ पाइउमि जलंतीउ । वसाउ रुहिराणि य ॥ ७१ ॥ व्याख्या—हे पितरौ! पुनरहं परमाधार्मिकैर्वसा अस्थिगतरसान्, च पुना रुधिराणि पायितोऽस्मि. किं कृत्वा? इति स्मारयित्वेत्यध्याहारः. इतीति किं? रे नारक! तव प्राग्भवे सुरा चंद्रहासाभिधं मद्यं, सीधुस्तालवृक्षदुग्धोद्भवा, मेरेई इति पिष्टोद्भवा शाटितोत्पन्नान्नरसा. पुनर्मधूनि पुष्पोद्भवानि मद्यानि प्रियाण्यासन्. इति निर्भर्त्सनापूर्वकं पायित इत्यर्थः. ॥ ७१ ॥

॥ मूलम् ॥—निच्चं भीएण तत्थेण । दुहिएण वहिएण य ॥ परमा दुहसंबद्धा । वेयणा वेइया मए ॥ ७२ ॥ व्याख्या—हे पितरौ! मया परमोत्कृष्टा वक्तुमशक्या दुःखसंबद्धा, एतादृशी वेदना वेदिता भुक्तेत्यर्थः. कथंभूतेन मया? नित्यं भीतेन, पुनः कीदृशेन? त्रस्तेनो-



१९ मृगा=

=दुःखमासंबंधवा

 वा:

=नयमा मैजा=

द्विग्नेन, पुनः कीदृशेन? त्रासवशादेव दुःखितेन. पुनः कीदृशेन? व्यथितेन कंपमानसर्वांगोपांगेन. ॥ ७२ ॥

॥ मूलम् ॥—निच्चं चंडप्पगाढाउ । घोराउ अइदुस्सहा ॥ महाभयाउ भीमाउ । नरएसु वेइया मए ॥ ७३ ॥ व्याख्या—हे पितरौ! मया नरकेषु वेदना वेदिता, असाताऽनुभूता. कथंभूता वेदना? तीव्रचंडप्रगाढा, तीव्रा चासौ चंडा च तीव्रचंडा, तीव्र चंडा चासौ प्रगाढा च तीव्रचंडप्रगाढा. तीव्रा रसानुभवाधिक्यात्, चंडोत्कटा वक्तुमशक्या, गाढा बहुलस्थितिका. पुनः कीदृशा वेदना? घोरा भयदा, यस्यां श्रुतायामपि शरीरं कंपते. पुनः कीदृशा? अतिदुस्सहाऽत्यंतं दुरध्यासा, दुःखेनानुभूयते, अत एव महाभया. पुनः कीदृशा वेदना? भीमा या श्रूयमाणापि भयप्रदा. एकार्थिकाश्चैते शब्दा वेदनाधिक्यसूचकाः. ॥७३॥

॥ मूलम् ॥—जारिसा माणुसे लोए । ताया दीसंति वेयणा ॥ इत्तोणंतगुणिया । नरएसु दुक्खवेयणा ॥ ७४ ॥ व्याख्या—हे तात! मनुष्यलोके यादृश्यः शीतोष्णादिका वेदना दृश्यंते, इतस्तच्छीतोष्णवेदनाभ्यो नरकेषु दुःखवेदना अनंतगुणा वर्तते. ॥ ७४ ॥

॥ मूलम् ॥—सव्वभवेसु असाया । वेयणा वेइया मए ॥ निमिसंतरमित्तंमि । जं साया नत्थि वेयणा ॥ ७५ ॥ व्याख्या—हे पितः! मया वेदना सर्वभवेषु स्थावरत्रसभवेष्वसाता वेदिता, सीतोष्णक्षुत्पिपासादिकाऽनुभूता. हे पितः! निमेषांतरमात्रमपि यत्साता वेदना सुखानुभवनं नास्ति, तदा दीक्षायां किं दुःखं? कथमहं भवद्भिः सुखोचित इत्युक्तः? मया तु सर्वत्र भवे दुःखमेवानुभूतं. ॥ ७५ ॥

॥ मूलम् ॥—तं बिंतम्मापियरो । छंदेण पुत्त पव्वय ॥ नवरं पुण सामन्ने । दुक्खं निप्पडिकम्मणा ॥ ७६ ॥ व्याख्या—अथ पितरौ मृगापुत्रं ब्रूतः, हे पुत्र! छंदसा स्वकीयेच्छया प्रव्रज? दीक्षां गृहाण? कस्त्वां निषेधयति? नवरं शब्देनायं विशेषोऽस्ति. पुनः श्रामण्ये चारित्रे एतद्दुखं वर्तते, यन्निःप्रतिकर्मतास्ति, रोगोत्पत्तौ प्रतीकारो न विधेयः. निर्गता प्रतिकर्मता निःप्रतिकर्मता, चिकित्सा न कर्तव्या, न चिंतनीयापि, सावद्यवैद्यकं न कारयितव्यं.

॥ मूलम् ॥—सो बिंतम्मापियरं । एवमेयं जहा फुडं ॥ पडिकम्मं को कुणई । अरण्णे मियपक्खिणं ॥ ७७ ॥ व्याख्या—ततोऽनंतरं मातापितरौप्रति स मृगापुत्रः कुमारो ब्रूते, हे

पितरौ! एतद्भवद्भ्यामुक्तमेवं यथा स्फुटमवितथं भवदुक्तं सत्यमित्यर्थः. हे पितरावरण्ये मृगाणां पक्षिणां च कः प्रतिकर्मणां कुरुते? यदा हि मृगा व्याधिपीडिता वने भवंति, पक्षिणो वा वने रोगपीडिता भवंति, तदा को वैद्य आगत्य रोगचिकित्सां कुरुते? न कोऽपि कुरुत इत्यर्थः. ॥ ७७ ॥

॥ मूलम् ॥—एगभूउ अरणे वा । जहा य चरई मिगे ॥ एवं धम्मं चरिस्सामि । संजमेण य तवेण य ॥ ७८ ॥ व्याख्या—हे पितरौ! यथा मृगोऽरण्येऽटव्यां, वा इति पदपूरणे. एकीभूत एकाकी सन् चरति, स्वेछया भ्रमति. एवमनेन प्रकारेण मृगस्य दृष्टांतेनाहं संयमेन सप्तदशविधेन, तपसा द्वादशविधेन धर्मं श्रीवीतरागोक्तं चरिष्याम्यंगीकरिष्यामि.

॥ मूलम् ॥—जया मियस्स आयंके । महारन्नंमि जायई ॥ अछंतं रुक्खमूलंमि । कोणं ताहे चिगिछई ॥ ७९ ॥ व्याख्या—यदा महारण्ये महाटव्यां मृगस्यातंको रोगो जायते, तदा तं मृगं वृक्षमूले संतिष्टंतं को वैद्यश्चिकित्सते? परिचर्यां कुरुते? सेवां कुरुते? णमिति वाक्यालंकारे. ॥ ७९ ॥

॥ मूलम् ॥—को वा से ओसहं देइ । को वा से पुछई सुहं ॥ को वा से नत्तपाणं च । आहारित्ता पणामए ॥ ८० ॥ व्याख्या—हे पितरौ! तस्य रोगग्रस्तस्य मृगस्य क औषधं ददाति? वाऽथवा तस्य मृगस्य कश्चिदागत्य सुखं पृछति? नो मृग! तव समाधिर्वर्तते, इति कः पृछति? वाऽथवा तस्य मृगस्य नक्तपानमाहारपानीयमाहृत्यानीय ददाति? ॥ ८० ॥

॥ मूलम् ॥—जया य से सुही होइ । तया गछइ गोयरं ॥ नत्तपाणस्स अट्ठाए । वल्लराणि सराणि य ॥ ८१ ॥ व्याख्या—हे पितरौ! यदा च स मृगः सुखी नवति, स्वनावेन रोगमुक्तो नवति, तदा गोचरं गछति, नक्ष्यस्थाने गछति, तत्र च नक्तपानस्यार्थं वल्लराणि हरितस्थलानि, च पुनः सरांसि जलस्थानानि विलोकयतीत्यध्याहारः. ॥ ८१ ॥

॥ मूलम् ॥—खाइत्ता पाणियं पाउं । वल्लरेहिं सरेहिं वा ॥ मिगचारियं चरित्ताणं । गछई मिगचारियं ॥ ८२ ॥ व्याख्या–हे पितरौ! स नीरोगो मृगो मृगचर्यया मृगनोजनपानविधिना चरित्वा वल्लरेन्यो हरितप्रदेशेन्यः खादित्वा, निजनक्ष्यं नुक्त्वा, तथा सरोन्यस्तटाकेन्यः पानीयं पीत्वा मृगो मृगचर्यां गछति, इतस्तत उत्प्लवनात्मिकां गतिं

प्राप्नोतीत्यर्थः. ॥ ८२ ॥

॥ मूलम् ॥—एवं समुट्ठिए भिक्खू । एवमेव अणेगओ ॥ मिगचारियं चरित्ताणं । उड्ढं पक्कमई दिसं ॥ ८३ ॥ व्याख्या—एवममुना प्रकारेण मृगवत्समुत्थितः संयमक्रियानुष्ठानंप्रत्युद्यतो भिक्षुर्मृगचर्यां चरित्वांगीकृत्योर्ध्वां दिशं प्रतिक्रमते प्रव्रजति. तथाविधरोगोत्पत्तावपि चिकित्साशाभिमुखो न भवति. पुनः कीदृशः साधुः? एवमेवानेनैव प्रकारेण मृगवदनेकगोऽनेकस्थाने स्थितोऽनियतस्थानविहारी, यथा मृगो वनखंडे नवीने नवीने स्थाने विहरति, तथा नानास्थानविहारीत्यर्थः. तथाहं मृगचर्ययाऽऽतंकस्याऽभावे भक्तपानादिगवेषणतयेतस्ततो भ्रमणेन भक्तपानं गृहीत्वा, संयमात्मानं धृत्वा पश्चादूर्ध्वां दिशं, मुक्तिरूपां दिशं प्रतिक्रमिष्यामि, सर्वोपरिस्थो भविष्यामीति भावः. ॥ ८३ ॥

॥ मूलम् ॥—जहा मिए एग अणेगचारी । अणेगवासे धुवगोयरे य ॥ एवं मुणी गोयरियप्पविट्ठे । नो हीलए नोवि य खिंसइज्जा ॥ ८४ ॥ व्याख्या—यथा मृग एकोऽसहायी सन्ननेकचारी भवति, अनेकभक्तपानाचरणशीलो नानाविधभक्तपानग्रहणतत्परः स्यात्, पु-

नर्यथा मृगोऽनेकवासः स्यात्, पुनर्यथा मृगो ध्रुवगोचरो भवेत्, ध्रुवः सदा गोचरो यस्य स ध्रुवगोचरः, निश्चयेन भ्रमणादेव लब्धाहारः स्यात्. एवममुना प्रकारेण मृगदृष्टांतेन मुनिः साधुर्गोचर्यां भिक्षाटनं प्रविष्टः सन् नो हीलयेत्, अनिष्टं नीरसं लब्ध्वेदं कुत्सितं विरसमित्यादिवाक्यैर्न निंदयेत्. तथा अपि निश्चयेन पुनर्नो खिंसयेत्, आहारे पानीये वाऽलब्धे सति कमपि गृहस्थं ग्रामं नगरमात्मानं वा न निंदेत्. ॥ ८४ ॥

॥ मूलम् ॥—मिगचारियं चरिस्सामि । एवं पुत्तो जहासुहं ॥ अम्मापिऊहिं अणुन्नाउ । जहाइ उवहिं तउ ॥ ८५ ॥ व्याख्या—यदा मृगापुत्रेण पितरौप्रतीत्युक्तं, हे पितरावहं मृगचर्यां चरिष्यामि, यथा भवदग्रे मृगचर्योक्ता, तामंगीकरिष्यामि, साधुमार्गं ग्रहीष्यामि. यदा मृगापुत्रेणैवमुक्तं तदा मातापितरौ ब्रूतः, हे पुत्र! यद्येवं तदा यथासुखं, यथा तव सुखं स्यात्, यथा भवतेऽभिरुचितं सुखमिति यथासुखं तथा कर्तव्यं, अस्माकमाज्ञास्ति. ततो मातापितृभ्यामनुज्ञातो मृगापुत्रः कुमार उपाधिं परिग्रहं सचित्ताचित्तरूपं परित्यजति. ॥८५॥

॥ मूलम् ॥—मिगचारियं चरिस्सामि । सव्वदुक्खविमोक्खणिं ॥ तुज्झेहिं समणुन्नाउ ।

गछ पुत्त जहा सुहं ॥ ७६ ॥ व्याख्या—सर्वं परिग्रहं त्यक्त्वा पुनर्मृगापुत्रो वदति, हे पितरौ! अहं भवद्भ्यामनुज्ञातः सन् मृगचर्यामंगीकरिष्यामि. कीदृशीं मृगचर्यां? सर्वदुःखविमोक्षणीं, सर्वविपत्तिविमोचिनीं. तदा मृगापुत्रंप्रति पितरौ वदतः, हे पुत्र! यथासुखं गछ? दीक्षां गृहाण? ॥ ७६ ॥

॥ मूलम् ॥—एवं सो अम्मापियरो । अणुमाणित्ताण बहुविहं ॥ ममत्तं छिंदए ताहे । महानागोव्व कंचुकं ॥ ७७ ॥ व्याख्या—एवममुना प्रकारेण स मृगापुत्रो मातापित्रोरनुज्ञां लात्वा, ताहे इति तदा तस्मिन् काले बहुविधं ममत्वं छिनत्ति. इदं धनं मम, इदं गृहं मम, इदं कुटुंबं ममेति बुद्धिं त्यजतीत्यर्थः. कः किमिव? महानागो महासर्पः कंचुकमिव, यथा महासर्पो निर्मोकं त्यजति, तथा मृगापुत्रः सर्वं ममत्वं त्यजतीति भावः. ॥ ७७ ॥

॥ मूलम् ॥—इड्ढी वित्तं च मित्ते य । पुत्ते दारं च नायओ ॥ रेणुयंव पडे लग्गं । निध्धुणित्ताण निग्गओ ॥ ७८ ॥ व्याख्या—मृगापुत्र एतत्सर्वं निर्धूय त्यक्त्वा निर्गतः, संसाराद् गृहाच्च निःसृतः. किं किं त्यक्तमित्याह—ऋद्धिर्हस्त्यश्वादिः, वित्तं धनधान्यादिः, च पुनर्मि-



=छेदसौहणो=

त्राणि सहजसहवर्धितसहपांशुक्रीडितानि सुहृदः, पुनः पुत्राण्यंगजाः, पुनर्दाराः स्त्रियः, पुनर्ज्ञातयः स्वजनाः क्षत्रियाः, एतत्सर्वं परित्यज्य प्रव्रजितः. किमिव? पटे लग्नं रेणुमिव नूतनवस्त्रे लग्नं रज इव. यथा कश्चिच्चतुरो मनुष्यो वस्त्रे लग्नं रजो निर्धूनोति, तथा मृगापुत्रोऽपीत्यर्थः. ॥ ७७ ॥

॥ मूलम् ॥—पंचमहव्वयजुत्तो । पंचसमिओ तिगुत्तिगुत्तो य ॥ सब्भिंतरबाहिरिए । तवोकम्मंमि उज्जुओ ॥ ७८ ॥ व्याख्या—तदा मृगापुत्रः कीदृशो जातः? पंचमहाव्रतयुक्तो जातः, पुनः पंचसमितिसहितः, ईर्याभाषैषणादाननिक्षेपणोच्चारप्रश्रवणखेलजल्लसंघाणपारिष्ठापनिकासमितियुक्तः. पुनस्त्रिगुप्तिगुप्तो मनोवाक्कायगुप्तिसहितः. पुनः साभ्यंतरबाह्यतपःकर्मण्युद्यतः. पायच्छित्तं विणओ । वेयावच्चं तहेव सज्झाओ ॥ झाणं उस्सग्गोवि य । अब्भिंतरओ तवो होइ ॥ १ ॥ अणसणमूणोयरिआ । वित्तीसंखेवणं रसच्चाओ ॥ कायकिलेसो संलीणया य बज्झो तवो होइ ॥ २ ॥ द्वादशविधतपःकर्मणि सावधानो जातः. ॥ ७९ ॥

॥ मूलम् ॥—निम्ममो निरहंकारो । निस्संगो चत्तगारवो ॥ समो य सव्वभूएसु । त-

सेसु थावरेसु य ॥ ९० ॥ व्याख्या—पुनः कीदृशो मृगापुत्रः? निर्ममो वस्त्रपात्रादिषु ममत्वभावरहितः, पुनः कीदृशः? निरहंकारोऽहंकाररहितः, पुनः कीदृशः? निस्संगः, बाह्याभ्यंतरसंयोगरहितः, पुनः कीदृशः? त्यक्तगारवो गारवत्रयरहितः, ऋद्धिगारवरसगारवसातागारव इत्यादिगर्वत्रयरहितः, पुनः कीदृशः? सर्वभूतेषु समो रागद्वेषपरिहारात् समस्तप्राणिषु त्रसेषु स्थावरेषु च समस्तजीवेषु सदृशः. ॥ ९० ॥

॥ मूलम् ॥—लाभालाभे सुहे दुक्खे । जीविए मरणे तहा ॥ समो निंदापसंसासु । तहा माणवमाणओ ॥ ९१ ॥ व्याख्या—तथा पुनर्मृगापुत्रो लाभे, आहारपानीयवस्त्रपात्रादीनां प्राप्तौ, तथाऽलाभेऽप्राप्तौ, तथा सुखे तथा दुःखे, तथा पुनर्जीविते मरणे समः समानवृत्तिः, तथा पुनर्निंदासु तथा प्रशंसासु स्तुतिषु, तथा माने आदरे, अपमानेऽनादरे, मानश्चापमानश्च मानापमानौ, तयोर्मानापमानयोः समः सदृशः. केनाप्यादरे प्रदत्ते सति मनसि न प्रहृष्टो भवति, केनाप्यपमाने प्रदत्ते सति मनसि दूनो न भवति. ॥ ९१ ॥

॥ मूलम् ॥—गारवेसु कसाएसु । दंडसल्लभएसु य ॥ नियत्तो हाससोगाओ । अनिया-

णो अबंधणो ॥ ९२ ॥ व्याख्या—पुनः स मृगापुत्रः कीदृशो जातः? गारवेभ्यो निवृत्तः, पुनः कषायेभ्यः क्रोधादिभ्यो निवृत्तः. च पुनर्दंडशल्यत्रयेभ्यो निवृत्तः. दंडत्रयं मनोवाक्कायानामसद्व्यापारो दंड उच्यते, तस्मान्निवृत्तः. पुनः शल्यत्रयान्निवृत्तः, मायाशल्यं, निदानशल्यं, मिथ्यादर्शनशल्यं चैतच्छल्यत्रयं, ततो निवृत्तः. तथा पुनः सप्तभयेभ्यो निवृत्तः. सप्त भयानीमानि—इहलोकभयं १, परलोकभयं २, आदानभयं ३, अकस्माद्भयं ४, मरणभयं ५, अयशोभयं ६, आजीविकाभयं ७ च. एवं सप्तभयानि. अत्र सर्वत्र प्राकृतत्वात्पंचम्यां सप्तमी. पुनः कीदृशो मृगापुत्रः? हास्यशोकाभ्यां निवृत्तः. पुनः कीदृशः? अनिदानो निदानरहितः. पुनः कथंभूतः? अबंधनो रागद्वेषबंधनरहितः. ॥ ९२ ॥

॥ मूलम् ॥—अणिस्सिओ इहं लोए। परलोए अणिस्सिओ ॥ वासीचंदणकप्पो य। असणे अणसणे तहा ॥ ९३ ॥ व्याख्या—पुनः कीदृशः? अनिश्रितो निश्रारहितः, कस्यापि साहाय्यं न वांछति. तथा पुनरिह लोके राज्यादिभोगे, तथा परलोके देवलोकादिसुखेऽनिश्रितो निश्रां न वांछते. पुनः स मृगापुत्रो वासीचंदनकल्पः, यदा कश्चिद्वास्या पर्शुना शरीरं

निनत्ति. कश्चिच्चंदनेन शरीरमर्चयति, तदा तयोरुपरि समानकल्पः सदृशाचारः. तथा पुनरशने आहारकरणे, तथाऽनशने आहाराऽकरणे सदृशः. ॥ ९३ ॥

॥ मूलम् ॥—अप्पसत्थेहिं दारेहिं । सव्वउ पिहियासवे ॥ अज्झप्पज्झाणजोगेहिं । पसत्थदमसासणे ॥ ९४ ॥ व्याख्या—पुनर्मृगापुत्रोऽप्रशस्तेभ्यो द्वारेभ्यः कर्मोपार्जनोपायेभ्यो हिंसादिभ्यो निवृत्त इति शेषः. पुनः कीदृशः? अप्रशस्तद्वारेभ्यो निवर्तनादेव सर्वतः पिहिताश्रवः, पिहिता निरुद्धा आश्रवाः पापागमनद्वाराणि येन स पिहिताश्रवः. पुनः कीदृशः? अध्यात्मध्यानयोगैः प्रशस्तदमशासनः, अधि आत्मनि ध्यानयोगा अध्यात्मध्यानयोगास्तैरध्यात्मध्यानयोगैर्मनसि शुभव्यापारैः प्रशस्ते दमशासने यस्य स प्रशस्तदमशासनः. दम उपशमः, शासनं सर्वज्ञसिद्धांतः. यस्य शुभध्यानयोगैरुपशमश्रुतज्ञाने शुभे वर्तेते इत्यर्थः. ॥

॥ मूलम् ॥—एवं नाणेण चरणेण । दंसणेण तवेण य ॥ भावणाहि य सुद्धाहिं । सम्मं भावित्तु अप्पयं ॥ ९५ ॥ बहुयाणि य वासाणि । सामन्नमणुपालिया ॥ मासिएण उ भत्तेणं । सिद्धिं पत्तो अणुत्तरं ॥ ९६ ॥ युग्मं ॥ व्याख्या—उभाभ्यां गाथाभ्यां वदति—तु

पुनर्मृगापुत्रो मुनिर्मासिकेन भक्तेन सिद्धिं प्राप्तो मोक्षं गतः. मासे भवं मासिकं, तेन मासिकेन भक्तेन, मासोपवासेनेत्यर्थः. कथंभूतां सिद्धिं? अनुत्तरां प्रधानां, सर्वस्थानकेभ्य उत्कृष्टं स्थानमित्यर्थः, जन्मजरामृत्यूपद्रवेभ्यो रहितत्वात्. किं कृत्वा? एवममुना प्रकारेण ज्ञानेन मतिश्रुतादिकेन, पुनश्चरणेन यथाख्यातेन, पुनर्दर्शनेन शुद्धसम्यक्त्वश्रद्धारूपेण, पुनस्तपसा द्वादशविधेन, च पुनर्भावनाभिर्महाव्रतसंबंधिनीभिः पंचविंशतिसंख्याभिर्भावनाभिः. अथवाऽनित्यादिभिर्द्वादशप्रकाराभिरात्मानं सम्यक् प्रकारेण भावयित्वा, निर्मलं कृत्वा. कथंभूताभिर्भावनाभिः? शुद्धाभिर्निदानादिदोषमलरहिताभिः. पुनः किं कृत्वा? बहूनि वर्षाणि श्रामण्यं यतिधर्ममनुपाल्याराध्य. ॥ ९५ ॥ ९६ ॥

॥ मूलम् ॥—एवं करंति संबुद्धा । पंडिया य वियरकणा ॥ विणिवट्टंति भोगेसु । मियापुत्ते जहामिसी ॥ ९७ ॥ व्याख्या—संबुद्धाः सम्यग्ज्ञाततत्वाः पुरुषाः, पंडिता हेयोपादेयबुद्धियुक्ताः, अत एव प्रकर्षेण विचक्षणा अवसरज्ञाः, एवं कुर्वंति भोगेभ्यो विशेषेण निवर्तन्ते. क इव? यथाशब्द इवार्थे, मृगापुत्रर्षिरिव. यथा मृगापुत्रर्षिर्भोगेभ्यो विनिवृत्तस्त-

यान्यैरपि चतुरैर्भोगेभ्यो विनिवर्तितव्यमिति भावः. अत्र मिसीति मकारः प्राकृतत्वादलाक्षणिकः. ॥ ९७ ॥

॥ मूलम् ॥—महप्पभावस्स महाजसस्स। मियाएपुत्तस्स निसम्म भासियं ॥ तवप्पहाणं चरियं च उत्तमं। गइप्पहाणं च तिलोयविस्सुयं ॥ ९८ ॥ वियाणिया दुक्कविवद्धणं धणं। ममत्तबंधं च महाभयावहं ॥ सुहावहं धम्मधुरं अणुत्तरं। धारेह निव्वाणगुणावहं तिबेमि ॥ ९९ ॥ व्याख्या—पुनर्गाथायुग्मेन संबंधः. भो भव्या अनुत्तरां सर्वोत्कृष्टां धर्मधुरं धर्मरथस्य भारं धारयध्वं? कथंभूतां धर्मधुरं? सुखावहां सुखप्राप्तिहेतुभूतां. पुनः कीदृशां धर्मधुरं? निर्वाणगुणावहां, निर्वाणस्य गुणा निर्वाणगुणा मोक्षगुणाः, अनंतज्ञानदर्शनानंतसुखानंतायुरनंतवीर्यरूपास्तेषामावहा पूरका निर्वाणगुणावहा, तां निर्वाणगुणावहां. किं कृत्वा धर्मधुरं धारयध्वं? धनं दुःखविवर्धनं विज्ञाय, च पुनर्ममत्वं बंधमिव संसारस्य बंधनं विज्ञाय. कीदृशं धनं ममत्वं च? महाभयावहं महाभयदायकं, चौराग्निनृपादिभ्यः कष्टप्रदं. पुनः किं कृत्वा? च पुनर्मृगाया राज्याः पुत्रस्य मृगापुत्रस्योत्तमं प्रधानं चरितं चरित्रं चारि-

त्रवृत्तांतं, तथा तस्य मृगापुत्रस्य जाषितं, मातापितृन्यां संसारस्यानित्यतोपदेशदानं निशम्य हृदि धृत्वा. कीदृशं मृगापुत्रस्य चरित्रं? तवप्पहाणं तपःप्रधानं, पुनः कीदृशं मृगापुत्रस्य चरित्रं? गइप्पहाणं गत्या प्रधानं, गतिर्मोक्षलक्षणा, तया प्रधानं श्रेष्टं, मोक्षगमनार्हं. पुनः कीदृशं मृगापुत्रस्य चरित्रं? त्रिलोकविश्रुतं त्रिलोकप्रसिद्धं. कीदृशस्य मृगापुत्रस्य? महाप्रजावस्य, रोगादीनामजावेन उःकरप्रतिज्ञाप्रतिमारूपाजिग्रहाणां पालनेन महामहिमान्वितस्य. पुनः कीदृशस्य मृगापुत्रस्य? महायशसः, महद्यशो यस्य स महायशास्तस्य महायशसः, सर्वदिग्व्यापिकीर्तेः. इत्यहं मृगापुत्रस्य चरितं तवाग्रे ब्रवीमीति सुधर्मास्वामी जंबूस्वामिनंप्रत्याह ॥ एए ॥ इति मृगापुत्रीयमेकोनविंशतितममध्ययनमर्थतः संपूर्णं. ॥ १ए ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायां श्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लनगणिविरचितायामेकोनविंशतितमं मृगापुत्रीयमध्ययनमर्थतः संपूर्णं. ॥ १ए ॥ श्रीरस्तु ॥

॥ अथ विंशतितममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययने साधूनां निःप्रतिकर्मतोक्ता, रोगादावुत्पन्ने सति चिकित्सा न कर्तव्या, न कारयितव्या, नानुमंतव्येत्युक्तं. अथ विंशेऽध्ययने सा निःप्रतिकर्मता महानिर्ग्रंथस्य हिना, अतोऽनाथत्वपरिभावनया सेत्युच्यते—

॥ मूलम् ॥—सिद्धाणं णमो किच्चा । संजयाणं च भावओ ॥ अत्थधम्मगइं तत्थं । अणुसिट्ठिं सुणेह मे ॥ १ ॥ व्याख्या—भो शिष्याः! मे ममानुशिष्टिं शिक्षां यूयं शृणुत? किं कृत्वा? सिद्धान् पंचदशप्रकारान्नमस्कृत्य, च पुनर्भावतो भक्तितः संयतान् साधूनाचार्योपाध्यायादिभिर्सर्वसाधून्नमस्कृत्य. कीदृशीं मेऽनुशिष्टिं? अर्थधर्मगतिं, अर्थ्यते प्रार्थ्यते धर्मात्मभिः पुरुषैरित्यर्थः, स चासौ धर्मश्चार्थधर्मस्तस्य गतिर्ज्ञानं यस्यां साऽर्थधर्मगतिस्तां. द्रव्यवद्यो दुःप्राप्यो धर्मस्तस्य धर्मस्य प्रापिकारिकां. यया शिक्षया मम दुर्लभधर्मस्य प्राप्तिः स्यादिति भावः. पुनः कीदृशीं मेऽनुशिष्टिं? तथ्यां सत्यां, अथवा तत्वं तत्वरूपां वा. ॥ १ ॥

॥ मूलम् ॥—पभूयरयणो राया । सेणिओ मगहाहिवो ॥ विहारजत्तणिज्जाओ । मंडि-

कुच्छिंसि चेइए ॥ २ ॥ व्याख्या—श्रेणिको नाम राजा, एकदा मंडितकुक्षिनाम्नि चैत्ये उद्याने विहारयात्रयोद्यानक्रीडया निर्यातः, नगरात्क्रीडार्थं मंडितकुक्षिवने गत इत्यर्थः. कीदृशः श्रेणिको राजा? मगधाधिपो मगधानां देशानामधिपो मगधाधिपः. पुनः कीदृशः? प्रभूतरत्नः प्रचुरप्रधानगजाश्वमणिप्रमुखपदार्थधारी. ॥ २ ॥

॥ मूलम् ॥—नाणादुमलयाइन्नं । नाणापक्खिनिसेवियं ॥ नाणाकुसुमसंछन्नं । उज्जाणं नंदणोवमं ॥ ३ ॥ व्याख्या—अथ मंडितकुक्षिनामोद्यानं कीदृशं वर्तते? तदाह—कीदृशं तद्वनं? नानाद्रुमलताकीर्णं विविधवृक्षवल्लीभिर्व्याप्तं. पुनः कीदृशं? नानापक्षिनिषेवितं, विविधविहंगैरतिशयेनाश्रितं. पुनः कीदृशं? नानाकुसुमसंछन्नं बहुवर्णपुष्पैर्व्याप्तं. पुनः कीदृशं तदुद्यानं? नागरिकजनानां क्रीडास्थानं. नगरसमीपस्थं वनमुद्यानमुच्यते. पुनः कीदृशं? नंदनोपमं. नंदनं देववनं तदुपमं. ॥ ३ ॥

॥ मूलम् ॥—तत्थ सो पासई साहुं । संजयं सुसमाहियं ॥ निसन्नं रुक्खमूलंमि । सुकुमालं सुहोइयं ॥ ४ ॥ व्याख्या—तत्र वने स श्रेणिको राजा साधुं पश्यति. कीदृशं साधुं?

संयतं सम्यक् प्रकारेण यतं यत्नं कुर्वंतं. पुनः कीदृशं? सुसमाधितं, सुतरामतिशयेन समाधियुक्तं. पुनः कीदृशं? वृक्षमूले निषण्णं स्थितं. पुनः कीदृशं? सुकुमालं. पुनः कीदृशं? सुखोचितं सुखयोग्यं. ॥ ४ ॥

॥ मूलम् ॥—तस्स रूवं तु पासित्ता । राइणो तंमि संजए ॥ अच्चंतपरमो आसी । अउलो रूवविम्हओ ॥ ५ ॥ व्याख्या—राज्ञः श्रेणिकस्य तस्मिन् संयते साधावत्यंतपरमोऽधिकोत्कृष्टोऽतुलो निरुपमो रूपविस्मयो रूपाश्चर्यमासीत्. किं कृत्वा? तस्य साधो रूपं दृष्ट्वा. तुशब्दोऽलंकारे. ॥ ५ ॥

॥ मूलम् ॥—अहो वन्नो अहो रूवं । अहो अज्जस्स सोमया ॥ अहो खंती अहो मुत्ती । अहो भोगे असंगया ॥ ६ ॥ व्याख्या—तदा राजा मनसि चिंतयति, अहो इत्याश्चर्ये, आश्चर्यकार्यस्य शरीरस्य वर्णो गौरत्वादिः. अहो आश्चर्यकृदस्य साधो रूपं लावण्यसहितं. अहो आश्चर्यकारिण्यस्यार्यस्य सौम्यता, चंद्रवन्नेत्रप्रियता. अहो! आश्चर्यकारिणी अस्य क्षांतिः क्षमा. अहो! आश्चर्यकारिणी चास्य मुक्तिर्निर्लोभता. अहो! आश्चर्यकारिण्यस्य

कुछिंसि चेइए ॥ २ ॥ व्याख्या—श्रेणिको नाम राजा, एकदा मंडितकुक्षिनाम्नि चैत्ये उद्याने विहारयात्रयोद्यानक्रीडया निर्यातः, नगरात्क्रीडार्थं मंडितकुक्षिवने गत इत्यर्थः. कीदृशः श्रेणिको राजा? मगधाधिपो मगधानां देशानामधिपो मगधाधिपः. पुनः कीदृशः? प्रभूतरत्नः प्रचुरप्रधानगजाश्वमणिप्रमुखपदार्थधारी. ॥ २ ॥

॥ मूलम् ॥—नाणादुमलयाइन्नं । नाणापक्खिनिसेवियं ॥ नाणाकुसुमसंछन्नं । उज्जाणं नंदणोवमं ॥ ३ ॥ व्याख्या—अथ मंडितकुक्षिनामोद्यानं कीदृशं वर्तते? तदाह—कीदृशं तद्वनं? नानाद्रुमलताकीर्णं विविधवृक्षवल्लीभिर्व्याप्तं. पुनः कीदृशं? नानापक्षिनिषेवितं, विविधविहंगैरतिशयेनाश्रितं. पुनः कीदृशं? नानाकुसुमसंछन्नं बहुवर्णपुष्पैर्व्याप्तं. पुनः कीदृशं तदुद्यानं? नागरिकजनानां क्रीडास्थानं. नगरसमीपस्थं वनमुद्यानमुच्यते. पुनः कीदृशं? नंदनोपमं. नंदनं देववनं तदुपमं. ॥ ३ ॥

॥ मूलम् ॥—तत्थ सो पासई साहुं । संजयं सुसमाहियं ॥ निसन्नं रुक्खमूलंमि । सुकुमालं सुहोइयं ॥ ४ ॥ व्याख्या—तत्र वने स श्रेणिको राजा साधुं पश्यति. कीदृशं साधुं?

संयतं सम्यक् प्रकारेण यत्तं यत्नं कुर्वंतं. पुनः कीदृशं? सुसमाधितं, सुतरामतिशयेन समाधियुक्तं. पुनः कीदृशं? वृक्षमूले निषण्णं स्थितं. पुनः कीदृशं? सुकुमालं. पुनः कीदृशं? सुखोचितं सुखयोग्यं. ॥ ४ ॥

॥ मूलम् ॥—तस्स रूवं तु पासित्ता । राइणो तंमि संजए ॥ अच्चंतपरमो आसी । अउलो रूवविम्हओ ॥ ५ ॥ व्याख्या—राज्ञः श्रेणिकस्य तस्मिन् संयते साधावत्यंतपरमोऽधिकोत्कृष्टोऽतुलो निरुपमो रूपविस्मयो रूपाश्चर्यमासीत्. किं कृत्वा? तस्य साधो रूपं दृष्ट्वा. तुशब्दोऽलंकारे. ॥ ५ ॥

॥ मूलम् ॥—अहो वन्नो अहो रूवं । अहो अज्जस्स सोमया ॥ अहो खंती अहो मुत्ती । अहो भोगे असंगया ॥ ६ ॥ व्याख्या—तदा राजा मनसि चिंतयति, अहो इत्याश्चर्यं, आश्चर्यकार्यस्य शरीरस्य वर्णो गौरत्वादिः. अहो आश्चर्यकृदस्य साधो रूपं लावण्यसहितं. अहो आश्चर्यकारिण्यस्याऽर्यस्य सौम्यता, चंद्रवन्नेत्रप्रियता. अहो! आश्चर्यकारिणी अस्य क्षांतिः क्षमा. अहो! आश्चर्यकारिणी चास्य मुक्तिर्निर्लोभता. अहो! आश्चर्यकारिण्यस्य

भोगेऽसंगता, विषये निःस्पृहता. ॥ ६ ॥

॥ मूलम् ॥—तस्स पाए उ वंदित्ता । काऊण य पयाहिणं ॥ नाइदूरमणासन्ने । पंजली पडिपुच्छई ॥ ७ ॥ व्याख्या—तस्य साधोः पादौ वंदित्वा, पुनः प्रदक्षिणां कृत्वा, राजा नातिदूरं, नात्यासन्नः, नातिदूरवर्ती, नातिनिकटवर्ती सन्, प्रांजलिपुटो बद्धांजलिः पृछति प्रश्नं करोति. ॥ ७ ॥

॥ मूलम् ॥—तरुणोसि अज्जो पवइओ । भोगकालंमि संजया ॥ उवट्ठिओसि सामन्ने । एयमट्ठं सुणामि ते ॥ ८ ॥ व्याख्या—तदा श्रेणिकः किं पृछति? हे आर्य! हे साधो! त्वं तरुणोऽसि युवासि, हे संयत! हे साधो! तस्माद्भोगकाले भोगसमये प्रव्रजितो गृहीतदीक्षः, तारुण्यं हि भोगस्य समयोऽस्ति, न तु दीक्षायाः समयः. हे संयत! तारुण्ये भोगयोग्यकाले त्वं श्रामण्ये दीक्षायामुपस्थितोऽसि, आदरसहितोऽसि. एतदर्थमेतन्निमित्तं त्वत्तः शृणोमि, किं दीक्षायाः कारणं? कस्मान्निमित्ताद्दीक्षा त्वया गृहीता? तत्कारणं त्वन्मुखात् श्रोतुमिच्छामीत्यर्थः. ॥ ८ ॥

॥ मूलम् ॥—अणाहोमि महाराय । नाहो मज्झ न विज्जई ॥ अणुकंपयं सुहियं वावि । किंचि णाभिसमेमहं ॥ ९ ॥ व्याख्या—इदानीं स साधुर्वदति, हे महाराज! अहमनाथोऽस्मि, न विद्यते नाथो योगक्षेमविधाता यस्य सोऽनाथः, निःस्वामिकोऽस्मि, मम नाथो न विद्यते इत्यर्थः. पुनरहं कंचित्कमप्यनुकंपकं कृपाचिंतकं सुहितं सुहृदं मित्रं वा नाभिसमेमि न संप्राप्नोमि, केनापि दयालुना मित्रेण वा संगतोऽहं न. अनेनार्थेन तारुण्येऽपि प्रव्रजित इति भावः.

॥ मूलम् ॥—तओ पहसिओ राया । सेणिओ मगहाहिवो ॥ एवं ते इड्ढिमंतस्स । कहं नाहो न विज्जई ॥ १० ॥ व्याख्या—ततस्तदनंतरं श्रेणिको मगधाधिपो राजा प्रहसितः. हे महाभाग्यवन्! ते तव ऋद्धिमत ऋद्धियुक्तस्य कथं नाथो न विद्यते. ॥ १० ॥

॥ मूलम् ॥—होमिनाहो भयंताणं । भोगे भुंजाहि संजया ॥ मित्तनाईहिं परिवुडो । माणुस्सं खलु दुल्लहं ॥ ११ ॥ व्याख्या—हे पूज्याः! अहं 'भयंताणं' इति भदंतानां पूज्यानां युष्माकं नाथो भवामि. यदा भवतां कोऽपि स्वामी नास्ति, तदाहं भवतां स्वामी भवामि. यदाऽनाथत्वाद्युष्माभिर्दीक्षा गृहीता, तदाहं नाथोऽस्मीति भावः. हे संयत! हे सा-

धो! भोगान् भुंक्ष्व? कीदृशः सन्? मित्रज्ञातिभिः परिवृतः सन्. हे साधो! खलु निश्चयेन मानुष्यं दुर्लभं वर्तते. तस्मान्मनुष्यत्वं दुर्लभं प्राप्य भोगान् भुक्त्वा सफलीकुरु? ॥ ११ ॥
अथ मुनिर्वदति—

॥ मूलम् ॥—अप्पणा हि अणाहोसि । सेणिया मगहाहिव ॥ अप्पणा अणाहो संतो । कहं नाहो भविस्ससि ॥ १२ ॥ व्याख्या—हे राजन् श्रेणिक! मगधाधिप! त्वमात्मनाप्यनाथोऽसि, आत्मनाऽनाथस्य सतस्तवाप्यनाथत्वं, तदा त्वमपरस्य कथं नाथो भविष्यसि?

॥ मूलम् ॥—एवं वुत्तो नरिंदो सो । सुसंभंतो सुविम्हिओ ॥ वयणं अस्सुयंपुव्वं । साहुणा विम्हयं निओ ॥ १३ ॥ व्याख्या—स नरेंद्रः साधुनैवमुक्तः सन् विस्मयं नीतः, आश्चर्यं प्रापितः. कीदृशो नरेंद्रः? सुसंभ्रांतोऽत्यंतं व्याकुलतां प्राप्तः. पुनः कीदृशः? सुविस्मितः, पूर्वमेव तद्दर्शनात्संजाताश्चर्यः, पुनरपि तद्वचनश्रवणाद्विस्मयवान् जातः. यतो हि तद्वचनमश्रुतपूर्वं, श्रेणिकाय अनाथोऽसि त्वमिति वचनं पूर्वं केनापि नो श्रावितं. ॥ १३ ॥

॥ मूलम् ॥—अस्सा हत्थी मणुस्सा मे । पुरं अंतेउरं च मे ॥ भुंजामि माणुसे भोए।

नाथस्यार्थमजिधेयं, चशब्दः पुनरर्थे, च पुनरनाथस्य प्रोत्थां न जानासि, प्रकर्षेणोत्थानं मूलोत्पत्तिः प्रोत्था, तां प्रोत्थां, केनाजिप्रायेणायमनाथशब्दः प्रोक्त इत्येवंरूपां न जानासि. हे राजन्! यथाऽनाथोऽथवा सनाथो जवति, तथा न जानासि. कथमनाथो जवति? कथं च सनाथो जवति? ॥ १६ ॥

॥ मूलम् ॥—सुणेह मे महाराय । अव्वक्खित्तेण चेयसा ॥ जहा अणाहो हवई । जहा मे य पवत्तियं ॥ १७ ॥ व्याख्या—हे महाराज! मे मम कथयतः सतस्त्वमव्याक्षिप्तेन स्थिरेण चेतसा शृणु? यथाऽनाथो नाथरहितो जवति, यथा मे ममानाथत्वं प्रवर्तितं, अथवा मेय इति एतदनाथत्वं प्रवर्तितं, तथा त्वं शृणु? इत्यनेन स्वकथाया उट्टङ्कः कृतः. ॥ १७ ॥

॥ मूलम् ॥—कोसंबीणाम णयरी । पुराणपुरजेयणी ॥ तत्थ आसी पिया मज्झं । पजूयधणसंचर्ज ॥ १८ ॥ व्याख्या—हे राजन्! कौशांबीनाम्नी नगर्यासीत्. कीदृशी कौशांबी? पुराणपुरजेदिनी; जीर्णनगरजेदिनी. यादृशानि जीर्णनगराणि जवंति, तेज्योऽधिकशोजावती. कौशांबी हि जीर्णपुरी वर्तते. जीर्णपुरस्था हि लोकाः प्रायशश्चतुरा धनवंतश्च बहुज्ञा विवे-

कबंतश्च जवंतीति हार्दं. तत्र तस्यां कौशांब्यां मम पितासीत्. कीदृशो मम पिता? प्रभूत-धनसंचयः, नाम्नापि धनसंचयः, गुणेनापि बहुलधनसंचय इति वृद्धसंप्रदायः. ॥ १८ ॥

॥ मूलम् ॥—पढमेव महारायं । अउला अछिवेयणा ॥ अहोत्था विउलो दाहो । स-व्वगत्तेसु पछिवा ॥ १९ ॥ व्याख्या—हे महाराज! प्रथमे वयसि यौवने एकदाऽतुलोत्कृष्टाऽस्थिवेदनाऽस्थिपीडा 'अहोत्था' इत्यभूत्. अथवा 'अछिवेयणा' इति पाठे अक्षिवेदना नेत्रपीडाऽभूत्. ततश्च हे पार्थिव! हे राजन्! सर्वगात्रेषु विपुलो दाघोऽभूत्. ॥ १९ ॥

॥ मूलम् ॥—सत्थं जहा परमतिक्खं । सरीरविवरंतरे ॥ पवीलिज्जा अरी कुद्धे । एव मे अछिवेयणा ॥ २० ॥ व्याख्या—हे राजन्! यथा कश्चिदरिः क्रुद्धः सन् शरीरविवरांतरे नासाकर्णचक्षुःप्रमुखरंध्राणां मध्ये परमतीक्ष्णं शस्त्रं प्रपीडयेद्गाढमवगाहयेत्, एवं मे ममास्थिवेदनाभूत्. ॥ २० ॥

॥ मूलम् ॥—तियं मे अंतरिछं च । उत्तमंगं च पीडई ॥ इंदासणिसमं घोरा । वेयणा परमदारुणा ॥ २१ ॥ व्याख्या—हे राजन्! सा परमदारुणा वेदना मे मम त्रिकं कटिपृष्ठ-

विभागं, च पुनरंतरिछां, अंतर्मध्ये इछा अंतरिछा, तामंतरिछां भोजनपानरमणाभिलाषरू-
पां, च पुनरुत्तमांगं मस्तकं पीडयति. कीदृशी वेदना? इंद्राशनिसमा घोरा, इंद्रस्याशनिर्वज्रं
तत्समा, अतिदाहोत्पादकत्वात्तत्तुल्या घोरा भयदा. ॥ २१ ॥

॥ मूलम् ॥—उवठ्ठिया मे आयरिया । विज्जामंततिगछगा ॥ अधीया सत्थकुसला ।
मंतमूलविसारया ॥ २२ ॥ व्याख्या—हे राजन्! तदेत्यध्याहारः, आचार्याः प्राणाचार्या वै-
द्यशास्त्राभ्यासकारका मे ममोपस्थिताश्चिकित्सां कर्तुं लग्नाः. कीदृशा आचार्याः? विद्यामंत्र-
विचिकित्सकाः, विद्यया मंत्रेण च चिकित्संति चिकित्सां कुर्वंतीति विद्यामंत्रचिकित्सकाः,
प्रतिक्रियाकर्तारः. पुनः कीदृशा आचार्याः? अधीताः सम्यक् पठिताः. 'अवीया' इति पा-
ठे न विद्यतेऽन्यो द्वितीयो येभ्यस्तेऽद्वितीयाः, असाधारणाः. पुनः कीदृशास्ते? शास्त्रकुशलाः
शास्त्रेषु विचक्षणाः. पुनः कीदृशास्ते? मंत्रमूलविशारदाः, मंत्राणि देवाधिष्ठितानि, मूलानि
जटिकारूपाणि, तत्र विचक्षणाः, मंत्रमूलिकानां गुणज्ञाः. ॥ २२ ॥

॥ मूलम् ॥—ते मे तिगछं कुवंति । चाउप्पायं जहा हियं ॥ न य दुक्खा विमोयंति ।

एसा मज्झ अणाहया ॥ २३ ॥ व्याख्या—ते वैद्याचार्या मे मम चैकित्स्यं रोगप्रतिक्रियां यथा हितं भवेत्तथा कुर्वंति. कीदृशं चैकित्स्यं? चातुःपादं, चत्वारः पदाः प्रकारा यस्य तच्चतुःपदं, तस्य भावः चातुःपादं, चातुर्विध्यमित्यर्थः. वैद्य १ औषध २ रोगि ३ प्रतिचारक ४ रूपं. अथवा वमन १ विरेचन २ मर्दन ३ स्वेदन ४ रूपं. अथवा अंजन १ बंधन २ लेपन ३ मर्दनरूपं ४, शास्त्रोक्तं गुरुपारंपर्यागतं चक्रुरिति स्थाने प्राकृतत्वात्कुर्वतीत्युक्तं. ते वैद्या मां दुःखान्न विमोचयंतिस्म. प्राकृतत्वाद् भूतार्थे वर्तमानार्थप्रत्ययः. एषा ममानाथता वर्तते. ॥२३॥

॥ मूलम् ॥—पिया मे सव्वसारंपि । दिज्जाहि मम कारणा ॥ न य दुक्खा विमोयंति । एसा मज्झ अणाहया ॥ २४ ॥ व्याख्या—हे राजन्! मम पिता मम कारणेन सर्वमपि सारं, गृहे यत्सारं सारं वस्तु, तत्सर्वमपि वैद्येभ्योऽदात्. तथापि वैद्या मां दुःखात्कष्टान्न विमोचयंतिस्म. एषा ममाऽनाथता ज्ञेयेति शेषः. ॥ २४ ॥

॥ मूलम् ॥—मायावि मे महाराय । पुत्तसोय दुहट्ठिया ॥ न य दुक्खा विमोयंति । एसा मज्झ अणाहया ॥ २५ ॥ व्याख्या—हे महाराज! मे मम मातापि दुःखान्मां न विमो-

चयतिस्म. कथंभूता माता? पुत्रशोकदुःखस्थिता, पुत्रस्य यः शोकः पीडाप्रादुर्भावः सातोऽभावः, स एव दुःखं, तत्र स्थिता पुत्रशोकदुःखस्थिता. एषा ममाऽनाथता ज्ञेया. ॥ २५ ॥

॥ मूलम् ॥—भायरा मे महाराय । सगा जिट्ठकणिट्ठगा ॥ न य दुरका विमोयंति । एसा मझ अणाहया ॥ २६ ॥ व्याख्या—हे महाराज मे मम भ्रातरोऽपि, स्वका आत्मीया ज्येष्ठकनिष्ठका वृद्धा लघवश्च न मां दुःखाद्विमोचयंतिस्म. एषा ममानाथता ज्ञेया. ॥ २६ ॥

॥ मूलम् ॥—भयणीउ मे महाराय । सगा जिट्ठकनिट्ठगा ॥ न य दुरका विमोयंति । एसा मझ अणाहया ॥ २७ ॥ व्याख्या—हे महाराज! मे मम भगिन्योऽपि, स्वका एकमातृजाः, ज्येष्ठाः कनिष्ठाश्च मां दुःखान्न विमोचयंतिस्म. एषा ममाऽनाथता ज्ञेया. ॥ २७ ॥

॥ मूलम् ॥—भारिया मे महाराय । अणुरत्ता अणुव्वया ॥ अंसुपुण्णेहिं नयणेहिं । उरं मे परिसिंचई ॥ २८ ॥ अन्नं पाणं च न्हाणं च । गंधमल्लविलेवणं ॥ मए नायमनायं वा । सा बाला नोवभुंजई ॥ २९ ॥ खणंपि मे महाराय । पासाउ न विफिट्टई ॥ न य दुरका विमोयंति । एसा मझ अणाहया ॥ ३० ॥ तिसृभिर्गाथाभिः कुलकं ॥ व्याख्या—हे महाराज!

मे मम जार्या कामिन्यपि दुःखान्मां न मोचयतिस्म. कथंभूता जार्या? अनुरक्ता अनुरागवती. पुनः कथंजूता? अनुव्रता पतिव्रता, पतिमनु लक्ष्यीकृत्य व्रतं यस्याः साऽनुव्रता. एतादृशी जार्या मे मम उरो हृदयमश्रुपूर्णाज्यां लोचनाज्यां सिंचतिस्म. ॥ २७ ॥ पुनः सा वाला मत्कामिनी अन्नमशनं मोदकादिकं जक्ष्यं, पानं शर्करोदकादिकं, पुनः स्नानं कुंकुमादिपानीयैः. गंधैः सुरजितैलचोवकगोशीर्षचंदनप्रमुखैः, माल्यैरनेकसुरजिपुष्पदामभिर्विलेपनं गात्रार्चनं, मया ज्ञातं वा अज्ञातं, स्वजावेनैवैतत्सर्वं जोगांगं नोपजुंक्ते, नानुजवति. मम दुःखात्तया सर्वाण्यपि जोगांगानि त्यक्तानि. ॥ २९ ॥ पुनर्हे महाराज! सा वाला मम पार्श्वान्नैकस्यान्न 'विफिट्टइ' इति न विफिट्टति, नापयातीत्यर्थः. परं दुःखान्मां न विमोचयति, एषा ममाऽनाथता ज्ञेया. ॥ ३० ॥

॥ मूलम् ॥—तउहं एवमाहिंसु । दुरकमा हु पुणो पुणो ॥ वेयणा अणुजवेउं जे । संसारंमि अणंतए ॥ ३१ ॥ व्याख्या—ततोऽनंतरं प्रतीकारेषु विफलेषु जातेष्वहमेवमवादिषं. एवमिति किं? हु इति निश्चयेन या वेदना अक्षिरोगप्रमुखा अनुजवितुं दुःक्षमाः, जोक्तुम-



२०

चयतिस्म. कथंभूता माता? पुत्रशोकदुःखस्थिता, पुत्रस्य यः शोकः पीमाप्रादुर्भावः साताऽ-भावः, स एव दुःखं, तत्र स्थिता पुत्रशोकदुःखस्थिता. एषा ममाऽनाथता ज्ञेया. ॥ २५ ॥

॥ मूलम् ॥—भायरा मे महाराय । सगा जिठकणिठगा ॥ न य दुक्खा विमोयंति । एसा मज्झ अणाहया ॥ २६ ॥ व्याख्या—हे महाराज मे मम भ्रातरोऽपि, स्वका आत्मीया ज्येष्टकनिष्टका वृद्धा लघवश्च न मां दुःखाद्विमोचयंतिस्म. एषा ममानाथता ज्ञेया. ॥ २६ ॥

॥ मूलम् ॥—भयणीउ मे महाराय । सगा जिठकनिठगा ॥ न य दुक्खा विमोयंति । एसा मज्झ अणाहया ॥ २७ ॥ व्याख्या—हे महाराज! मे मम भगिन्योऽपि, स्वका एकमातृजाः, ज्येष्टाः कनिष्टाश्च मां दुःखान्न विमोचयंतिस्म. एषा ममाऽनाथता ज्ञेया. ॥ २७ ॥

॥ मूलम् ॥—भारिया मे महाराय । अणुरत्ता अणुव्वया ॥ अंसुपुणेहिं नयणेहिं । उरं मे परिसिंचई ॥ २८ ॥ अन्नं पाणं च न्हाणं च । गंधमल्लविलेवणं ॥ मए नायमनायं वा । सा बाला नोवभुंजई ॥ २९ ॥ खणंपि मे महाराय । पायाउ न विफिट्टई ॥ न य दुक्खा विमोयंति । एसा मज्झ अणाहया ॥ ३० ॥ तिसृभिर्गाथाभिः कुलकं ॥ व्याख्या—हे महाराज!

मे मम नार्या कामिन्यपि दुःखान्मां न मोचयतिस्म. कथंभूता नार्या? अनुरक्ता अनुरागवती. पुनः कथंभूता? अनुव्रता पतिव्रता, पतिमनु लक्ष्यीकृत्य व्रतं यस्याः साऽनुव्रता. एतादृशी नार्या मे मम उरो हृदयमश्रुपूर्णाभ्यां लोचनाभ्यां सिंचतिस्म. ॥ २८ ॥ पुनः सा वाला मत्कामिनी अन्नमशनं मोदकादिकं भक्ष्यं, पानं शर्करोदकादिकं, पुनः स्नानं कुंकुमादिपानीयैः. गंधैः सुरभितैलचोवकगोशीर्षचंदनप्रमुखैः, माल्यैरनेकसुरभिपुष्पदामभिर्विलेपनं गात्रार्चनं, मया ज्ञातं वा अज्ञातं, स्वभावेनैवैतत्सर्वं भोगांगं नोपभुंक्ते, नानुभवति. मम दुःखात्तया सर्वाण्यपि भोगांगानि त्यक्तानि. ॥ २९ ॥ पुनर्हे महाराज! सा वाला मम पार्श्वान्नैकस्मान्न 'विफिट्टइ' इति न विफिट्टति, नापयातीत्यर्थः. परं दुःखान्मां न विमोचयति, एषा ममाऽनाथता ज्ञेया. ॥ ३० ॥

॥ मूलम् ॥—तओहं एवमाहिंसु । दुक्कमा हु पुणो पुणो ॥ वेयणा अणुभवेउं जे । संसारंमि अणंतए ॥ ३१ ॥ व्याख्या—ततोऽनंतरं प्रतीकारेषु विफलेषु जातेष्वहमेवमवादिषं. एवमिति किं? हु इति निश्चयेन या वेदना अक्षिरोगप्रमुखा अनुभवितुं दुःक्षमाः, भोक्तुम-

समर्थाः, ता वेदनाः संसारे पुनः पुनर्भुक्ता इति शेषः. वेद्यते दुःखमनयेति वेदना. ता वेदना दुःखेन क्षम्यंते सह्यंते इति दुःक्षमा दुःसहाः. कीदृशे संसारे? अनंतकेऽपारे. ॥ ३१ ॥

॥ मूलम् ॥—सइं च जइ मुच्चिज्जा । वेयणा विउलाउ मे ॥ खंतो दंतो निरारंभो । पव्वइए अणगारियं ॥ ३२ ॥ व्याख्या—अहं किमवादिषं तदाह—यदि सकृदप्येकवारमप्यहं वेदनाया विमुच्ये, तदाहं क्षांतो भूत्वा, पुनर्दांतो जितेंद्रियो भूत्वा निरारंभः सन्ननगारत्वं साधुत्वं प्रव्रजामि दीक्षां गृह्णामीति भावः. कथंभूताया वेदनायाः? विपुलाया विस्तीर्णायाः ॥ ३२ ॥

॥ मूलम् ॥—एवं चितइत्ताणं । पसुत्तोमि नराहिवा ॥ परिवत्तंति राईए । वेयणा मे खयं गया ॥ ३३ ॥ व्याख्या—एवं पूर्वोक्तं चिंतनं चिन्तयित्वा हे नराधिप! यावदहं सुप्तोऽस्मि, तावत्तस्यामेव रात्रौ प्रवर्तमानायामतिक्रामत्यां मे मम वेदनाः क्षयं गताः, वेदना उपशांता इत्यर्थः. ॥ ३३ ॥

॥ मूलम् ॥—तओ कल्ले पभायंमि । आपुच्छित्ताण बंधवे ॥ खंतो दंतो निरारंभो । पव-

ईउ अणगारियं ॥ ३४ ॥ व्याख्या—ततो वेदनोपशांतेरनंतरं कल्ये इति नीरोगे जाते सति प्रभातसमये बांधवान् स्वज्ञातीनापृच्छ्याहमनगारत्वं साधुत्वं प्रव्रजितः, साधुधर्ममंगीकृतवान्. कीदृशोऽहं? क्षांतः, पुनर्दांतः, पुनरहं निरारंभः. ॥ ३४ ॥

॥ मूलम् ॥—तउहं णाहो जाउ । अप्पणो य परस्स य ॥ सव्वेसिं चे भूयाणं । तसाणं थावराण य ॥ ३५ ॥ व्याख्या—हे राजन्! ततो दीक्षानंतरमात्मनश्च पुनः परस्य नाथो योगक्षेमकरत्वेन स्वामी जातः. आत्मनो हि नाथः शुद्धप्ररूपणत्वात्, अपरस्य च हितचिंतनात्. एव निश्चयेन सर्वेषां भूतानां त्रसानां च पुनः स्थावराणां नाथो जातः. ॥३५॥ अथ यश्चात्मनो नाथः, स च सर्वेषां नाथः, तदेव दृढयति—

॥ मूलम् ॥-अप्पा नई वेयरणी । अप्पा मे कूडसामली ॥ अप्पा कामदुहा धेणु । अप्पा मे नंदणं वणं ॥ ३६ ॥ व्याख्या—हे राजन् दीक्षायां गृहीतायामहं नाथोऽभूवं, पूर्वमनाथ आसं. तत्कथं? उच्यते—अयमात्मा जीवो वेतरणीनदी प्रवर्तते, पुनर्ममात्मैव कूटशाल्मलीवृक्षो नरकस्थो वर्तते. पुनरयमात्मैव कामदुघा धेनुर्वर्तते, कामं दोग्धि पूरयतीति

कामदुघा. जीवो यां शुभक्रियां करोति सा शुभक्रिया सुखदेत्यर्थः. मे ममात्मा नंदनं वनं, देवानां सुखदायकं वनमस्ति. ॥ ३६ ॥

॥ मूलम् ॥—अप्पा कत्ता विकत्ता य । सुहाण य दुहाण य ॥ अप्पा मित्तममित्तं च । दुप्पइठि य सुप्पइठिउं ॥ ३७ ॥ व्याख्या—हे राजन्नात्मा जीवः स एव कर्ता, च पुनरात्मैव विकिरिता विक्षेपकः. केषां? तदाह—सुखानां च पुनर्दुःखानां, अर्थात् सुखासुखयोः कर्ता विकिरिता विनाशकश्चात्मैव. च पुनरात्मा मित्रमुपकारकृत् सुहृद्वर्तते. तथात्मैवाऽमित्रं शत्रुरहितकारी वर्तते. हे राजन्नयमात्मा दुष्टाचारे प्रस्थितः प्रवर्तितो वैतरण्यादिनरकभूमिदर्शको वर्तते, अयमेवात्मा सुष्टु आचारे प्रस्थितः प्रवर्तितः कामधेन्वादिनंदनवनादिवरूषदो वर्तते. ॥ ३७ ॥

॥ मूलम् ॥—इमा हु अन्नावि अणाहया निव । तमेगचित्तो निहुउं सुणेहिं ॥ नियंठधम्मं लहियाण वीजहा । सीयंति एगे बहु कायरा नरा ॥ ३८ ॥ व्याख्या—हे नृप! हे राजन्! हु इति निश्चये, इयमनाथता, अन्याप्यनाथता वर्तते, तामनाथतामेकचित्तः पुनर्नि-

नृतोऽन्यकार्येन्त्यो निवृत्तः सन्नर्थान्निश्चितः सन् शृणु? यथा निर्ग्रंथधर्मं लब्ध्वाप्येके केचिज्जना बहुकातराः, बहु यथा स्यात्तथा हीनसत्वाः पुरुषाः सीदंति, साध्वाचारे शिथिला नवंति.

॥ मूलम् ॥—जो पव्वइत्ताण महव्वयाइं । सम्मं च नो फासयई पमाया ॥ अणिग्गहप्पा य रसेसु गिद्धे । न मूलओ छिंदइ वंधणं से ॥ ३९ ॥ व्याख्या—हे राजन्! यो मनुष्यः प्रव्रज्य, दीक्षां गृहीत्वा महाव्रतानि प्रमादात् सम्यग्विधिना न स्पृशति, न सेवते, से इति स प्रमादवशवर्ती, प्रमादादनिग्रहात्मा विषयाऽनियंत्रितात्मा, अत एव रसेषु मधुरादिषु गृद्धो बंधनं कर्मबंधनं रागद्वेषलक्षणं संसारकारणं मूलतो मूलान्न छिनत्ति, मूलतो नोत्पाटयति, सर्वथा रागद्वेषौ न निवारयतीत्यर्थः. ॥ ३९ ॥

॥ मूलम् ॥—आउत्तया जस्स य नत्थि काई । इरियाए नासाए तहेसणाए ॥ आयाणनिक्खेवदुगंछणाए । न धीरजायं अणुजाइ मग्गं ॥ ४० ॥ व्याख्या—हे राजन्! स साधुर्धीरयातं मार्गं नानुयाति, धीरैर्महापुरुषैस्तीर्थकरैर्गणधरैश्च यातं प्राप्तं, अर्थान्मोक्षमार्गं न प्राप्नोति. स कः? यस्य साधोरीर्यायां गमनागमनसमितौ, तथा नाषायां, तथैषणायामा-

कामदुघा. जीवो यां शुन्नक्रियां करोति सा शुन्नक्रिया सुखदेत्यर्थः. मे ममात्मा नंदनं वनं, देवानां सुखदायकं वनमस्ति. ॥ ३६ ॥

॥ मूलम् ॥—अप्पा कत्ता विकत्ता य । सुहाण य दुहाण य ॥ अप्पा मित्तममित्तं च । डुप्पट्ठि य सुप्पट्ठिर्ज ॥ ३७ ॥ व्याख्या—हे राजन्नात्मा जीवः स एव कर्ता, च पुनरात्मैव विकिरिता विक्षेपकः. केषां? तदाह—सुखानां च पुनर्दुःखानां, अर्थात् सुखासुखयोः कर्ता विकिरिता विनाशकश्चात्मैव. च पुनरात्मा मित्रमुपकारकृत् सुहृद्वर्तते. तथात्मैवाऽमित्रं शत्रुरहितकारी वर्तते. हे राजन्नयमात्मा दुष्टाचारे प्रस्थितः प्रवर्तितो वैतरण्यादिनरकनूमिदर्शको वर्तते, अयमेवात्मा सुष्टु आचारे प्रस्थितः प्रवर्तितः कामधेन्वादिनंदनवनादिवरूपदो वर्तते. ॥ ३७ ॥

॥ मूलम् ॥—इमा हु अन्नावि अणाहया निव । तमेगचित्तो निहुर्ज सुणेहिं ॥ नियंठधम्मं लहियाण वीजहा । सीयंति एगे बहु कायरा नरा ॥ ३८ ॥ व्याख्या—हे नृप! हे राजन्! हु इति निश्चये, इयमनाथता, अन्याप्यनाथता वर्तते, तामनाथतामेकचित्तः पुनर्नि-

रिक्तो मुष्टिरसारो मध्ये शुषिर एव. तथा स मुंरुरुचिः कूटकार्षापण इवाऽसत्यनाणकमिवाऽयंत्रितो भवति, न यंत्रितोऽयंत्रितोऽनादरणीयो निर्गुणत्वादुपेक्षणीयः स्यादित्यर्थः. उक्तमर्थमर्थांतरन्यासेन दृढयति–हु यस्मात्कारणात् राढामणिः काचमणिः 'जाणएसु' इति ज्ञातृकेषु मणिपरीक्षकनरेषु वैडूर्यप्रकाशोऽमहर्घको भवति, वहुमूल्यो न भवति. वैडूर्यमणिवत् प्रकाशो यस्य स वैडूर्यमणिप्रकाशः, वैडूर्यमणिसदृग्तेजाः. महत्यर्घा यस्य स महर्घः, महर्घ एव महार्घकः, न महार्घकोऽमहार्घकोऽवहुमूल्य इत्यर्थः. यथा मणिज्ञेषु वैडूर्यमणिर्वहुमौल्यः स्यात्तथा काचमणिर्वहुमौल्यो न स्यात्. एवं धर्महीनो मुनिः साधुगणज्ञेषु यथा सद्धर्माचारयुक्तः साधुर्वंदनीयः स्यात्, तथा स मुंरुरुचिर्वंदनीयो न स्यादिति भावः. ॥ ४२ ॥

॥ मूलम् ॥—कुसीललिंगं इह धारयित्ता । इसिज्झयं जीविय वूहइत्ता ॥ असंजए संजयलप्पमाणे । विणिघायमागच्छइ से चिरंपि ॥ ४३ ॥ व्याख्या–से इति स साध्वाचाररहित इह संसारे चिरं चिरकालं यावद्विनिघातमागच्छति पीडां प्राप्नोति. किं कृत्वा? कुशीललिंगं पार्श्वस्थादीनां चिन्हं धारयित्वा, पुनर्जीविकायै आजीविकार्थं ऋषिध्वजं रजोहरणमुखपो-

हारग्रहणसमितौ, पुनरादाननिक्षेपणसमितौ, वस्तूनां ग्रहणमोचनविधौ, तथा 'डुगंछणाए' इति उच्चारप्रश्रवणश्लेष्मजल्लसिंघाणादीनां परिष्ठापनसमितौ आयुक्तता काचिन्नास्ति. ॥४०॥

॥ मूलम् ॥—चिरंपि से मुंडरुई भवित्ता । अथिरव्वए तवनियमेहिं भट्ठे ॥ चिरंपि अप्पाण किलेसइत्ता । न पारए होइ हु संपराए ॥ ४१ ॥ व्याख्या—स पूर्वोक्तः पंचसमितिरहितो मुन्याभासश्चिरं मुंडरुचिर्भूत्वा, आत्मानमपि चिरं क्लेशयित्वा क्लेशे पातयित्वा, हु इति निश्चयेन संपराए संसारे पारगो न भवति. कीदृशः सः? अस्थिरव्रतोऽस्थिराणि व्रतानि यस्य सोऽस्थिरव्रतः. पुनः कीदृशः सः? तपोनियमभ्रष्टः. यः कदापि तपो न करोति, तथा पुनर्नियममभिग्रहादिकं च न करोति, केवलं द्रव्यमुंडो भवति, स संसारस्य पारं न प्राप्नोतीत्यर्थः. ॥ ४१ ॥

॥ मूलम् ॥—पोल्ले च मुट्ठी जह से असारो । अयंतिए कूडकहावणे व ॥ राढामणी वेरुलियप्पगासे । अमहग्घए होइ हु जाणएसु ॥ ४२ ॥ व्याख्या—स पूर्वोक्तमुंडरुचिरसारो भवति, अंतःकरणे धर्माऽभावाद्रिक्तोऽकिंचित्करो भवति. स क इव? पोल्लो मुष्टिरिव, यथा

' सुविणं ' स्वप्नविद्यां प्रयुंजानो भवति, स्वप्नानां फलाफलं वक्ति. पुनर्यः साधुर्निमित्तकौतूहलसंप्रगाढो भवति, निमित्तं च कौतूहलं च निमित्तकौतूहले, तयोः संप्रगाढोऽत्यंतासक्तः स्यात्, तत्र निमित्तं भूकंपोल्कापातकेतूदयादि, कौतूहलं कौतुकं पुत्रादिप्राप्त्यर्थं स्नानभेषजौपधादिप्रकाशनं, उभयत्र संरक्तो भवति. पुनर्यः साधुः कुहेटकविद्याश्रवद्वारजीवी भवति, कुहेटका विद्याः कुहेटकविद्याः, अलीकाश्चर्यविधायिमंत्रतंत्रयंत्रज्ञानात्मिकाः, ता एवाश्रवद्वाराणि, तैर्जीवितुमाजीविकां कर्तुं शीलं यस्य स कुहेटकविद्याश्रवद्वारजीवी. एतादृशो यो भवति, हे राजन्! परं तस्मिन् काले लक्षणस्वप्ननिमित्तकौतूहलकुहेटकविद्याश्रवद्वारोपार्जितपातकफलोपभोगकाले स साधुः शरणं त्राणं दुःकृतरक्षाक्षमं न गच्छति न प्राप्नोति, तं साधुं कोऽपि दुःखान्नरकतिर्यग्योन्यादौ न त्रायते इत्यर्थः. ॥ ४५ ॥

॥ मूलम् ॥—तमंतमेणेव उ से असीले । सया दुही विप्परियासुवेई ॥ संधावई नरगतिरिक्खजोणिं । मोणं विराहित्तु असाहुरूवे ॥ ४६ ॥ व्याख्या—तु पुनः स द्रव्यमुंडोऽसाधुरूपो मौनं विराध्य साधुधर्मं दूषयित्वा नरकतिर्यग्योनिं संधावति, सततं गच्छति. पुनः

तिकादिकं बृंहयित्वा वृद्धिं प्रापयित्वा, विशेषेण निघातं विनिघातं विविधपीडां. स किं कुर्वाणः? असंयतः सन्नहं संयत इति लालप्यमानः, असाधुरपि साधुरहमिति ब्रुवाणः. ॥४३॥

॥ मूलम् ॥—विसं तु पीयं जह कालकूटं । हणाइ सत्थं जह कुग्गहीयं ॥ एमेव धम्मो विसओववन्नो । हणाइ वेयाल इवाविवन्नो ॥ ४४ ॥ व्याख्या—हे राजन्! यथा कालकूटो महाविषः पीतः सन् 'हणाइ' इति हंति, पुनर्यथा कुगृहीतं विपरीतवृत्त्या गृहीतं शस्त्रं हंति, एवमेवानेनैव दृष्टांतेन, महाविषकुगृहीतशस्त्रदृष्टांतेन विषयैरिंद्रियसुखैरुपपन्नो विषयोपपन्नो विषयसुखाभिलाषयुक्तो धर्मोऽपि हंति. पुनः सविषयो धर्मोऽविपन्नवेताल इव हंति, मंत्रादिभिरकीलितः स्फुरद्बलो मंत्रयंत्रैरनिवारितबलो वेतालो महापिशाचो मारयति, तथा विषयसहितो धर्मोऽपि मारयतीत्यर्थः. ॥ ४४ ॥

॥ मूलम् ॥—जे लक्खणं सुविणं पउंजमाणे । निमित्तकोऊहलसंपगाढे ॥ कुहेडविज्जासवदारजीवी । न गच्छई सरणं तंमि काले ॥ ४५ ॥ व्याख्या—यः साधुर्लक्षणं प्रयुंजानः, सामुद्रोक्तं स्त्रीपुरुषशरीरचिन्हं शुभाशुभसूचकं प्रयुंक्ते, गृहस्थानां पुरतो वक्ति. पुनर्यः साधुः

ता स्वकीया दुष्टाचारप्रवृत्तिर्यमनर्थं करोति, तमनर्थं कंठे छेत्ता कंठछेदकोऽरिरपि न करोति. प्राणापहारकाद्वैरिणोऽपि दुरात्मता दुष्टा. दुष्टाचारप्रवृत्त आत्मा आत्मन एव घातकृदिति ह्रादं. स च दुष्टाचारप्रवृत्त आत्मा मृत्युमुखं प्राप्तः सन् 'णाहई' इति ज्ञास्यति, स्वयमेवेति शेषः. केन? पश्चादनुतापेन, हा! मया दुष्टं कर्म कृतमिति पश्चात्तापेन मरणसमये ज्ञास्यति. कीदृशः स दुरात्मा? दयाविहीनः. ॥ ४८ ॥

॥ मूलम् ॥— निरट्ठिया नग्गरुई उ तस्स। जे उत्तमट्ठे विवज्जासमेई। इमेवि से नत्थि परेवि लोए। दुहओवि से झिज्जइ तत्थ लोए ॥ ४९ ॥ व्याख्या—हे राजन्! य उत्तमार्थे विपर्यासमेति, तस्य नाग्न्यरुचिर्नाग्न्ये श्रामण्ये रुचिरिच्छा निरर्थिका. उत्तमः प्रधानोऽर्थो मोक्षो यस्मात्स उत्तमार्थः, तस्मिन्नुत्तमार्थे, अर्थात्पर्यंतसमयाराधनरूपे जिनाज्ञाराधने वैपरीत्यं प्राप्नोति, दुरात्मत्वे सुंदरात्मत्वज्ञानं प्राप्नोति, तस्य नग्नत्वादिरुचिर्निर्वस्त्रादिक्लेशवांछा निःफला. मिथ्यात्विनो हि कष्टं निःफलं, यतो ह्यन्यस्य पुण्यस्य तु किंचित्फलं स्यादेव, परं तु मिथ्यात्विनो नग्नत्वरुचेरर्थाद् द्रव्यलिंगिनोऽयं लोको नास्ति, लोचादिनग्नत्वादिकष्टसेव-

सोऽशीलः कुशीलो विपर्यासमुपेति, तत्वेषु वैपरीत्यं प्राप्नोति, मिथ्यात्वमूढो भवतीति भावः. कीदृशः सः? तमस्तमसैव सदा दुःखी, अतिशयेन तमस्तमस्तमः, तेन तमस्तमसैवाऽज्ञानमहांधकारेणैव संयमविराधनाजनितदुःखसहितः. ॥ ४६ ॥

॥ मूलम् ॥—उद्देसियं कीयगडं नियागं । न मुचई किंचि अणेसणिज्जं ॥ अग्गीव वा सव्वभक्खी भवित्ता । इओ चुओ गच्छइ कट्टु पावं ॥ ४७ ॥ व्याख्या—पुनर्यः साधुपाश उद्देशिकं दर्शनिन उद्दिश्य कृतमुद्देशिकमाहारं, नित्यकं नित्यपिंडं गृहस्थस्य गृहे नियतपिंडं, एतादृशं सदोषमाहारमनेषणीयं साधुनाऽग्राह्यं न मुंचति, जिह्वालांपट्येन किमपि न त्यजति, सर्वमेव गृह्णाति, सोऽग्निरिव सर्वभक्षीभूय हरितशुक्कप्रज्वालको वैश्वानर इव भूत्वा, प्रासुकाहारं भुक्त्वा, इतश्च्युतो मनुष्यभवाच्च्युतः कुगतिं व्रजति. किं कृत्वा? पापं कृत्वा, संयमविराधनां विधाय. ॥ ४७ ॥

॥ मूलम् ॥—न तं अरी कंठछित्ता करेइ । जं से करे अप्पणिया दुरप्पा । से णाहई मच्चुमुहं तु पत्ते । पच्छाणु तावेण दयाविहूणो ॥ ४८ ॥ व्याख्या—हे राजन्नात्मीया दुरात्म-

यमुखार्थी साधुर्लोकद्वयानर्थं प्राप्नोति. ततोऽस्य स्वपरित्राणासमर्थत्वेनाऽनाथत्वमिति भावः. ॥ ५० ॥ अथ यत्कृत्यं तदाह—

॥ मूलम् ॥—सुच्चाण मेहावि सुभासियं इमं । अणुसासणं नाणगुणोववेयं ॥ मग्गं कुसीलाण जहाय सव्वं । महानियंठाण वए पहेणं ॥ ५१ ॥ व्याख्या—हे मेधाविन्! हे पंडित! हे राजन्! इदं सुष्ठु भाषितं सुभाषितमनुशासनमुपदेशं श्रुत्वा सर्वं कुशीलानां मार्गं जहायेति त्यक्त्वा महानिर्ग्रंथानां महासाधूनां पथि मार्गे व्रजेस्त्वं चरेः? कीदृशमनुशासनं? ज्ञानगुणोपपेतं, ज्ञानस्य गुणा ज्ञानगुणास्तैरुपपेतं ज्ञानगुणोपपेतं. ॥ ५१ ॥

॥ मूलम् ॥—चरित्तमायारगुणन्निए तओ । अणुत्तरं संजमपालियाणं ॥ निरासवे संखवियाण कम्मं । उवेइ ठाणं विउलुत्तमं धुवं ॥ ५२ ॥ व्याख्या—ततस्तस्मात्कारणान्महानिर्ग्रंथमार्गगमनान्निराश्रवो मुनिर्महाव्रतपालकः साधुर्विपुलमनंतसिद्धानामवस्थानादसंकीर्णं, उत्तमं सर्वोत्कृष्टं, पुनर्ध्रुवं निश्चलं शाश्वतमेतादृशं मोक्षस्थानमुपैति प्राप्नोति, कीदृशः साधुः? चारित्राचारगुणान्वितः, चारित्रस्याचारश्चारित्राचारश्चारित्रसेवनं, गुणा ज्ञानशीलादयः, चा-

नादिहलोकसुखमपि नास्ति, पुनस्तस्य द्रव्यलिंगिनः संयमविराधनातः परलोकः परलोकसुखमपि नास्ति, कुगतिगमनाद्दुःखं स्यात्, तत्रोभयलोकाऽभावे सति स धर्मभ्रष्टो द्विधाप्यैहिकपारलौकिकसुखाऽभावेनोभयलोकसुखयुक्तान्नरानवलोक्योभयलोकसुखाद्भ्रष्टं मां धिगिति चिंतया ' झिज्झइ ' इति क्षीयते जीर्णो भवति. मनसि दूयते इत्यर्थः. ॥ ४९ ॥

॥ मूलम् ॥—एमेवहाछंदकुसीलरूवे । मग्गं विराहित्तु जिणुत्तमाणं ॥ कुररी इवाभोगरसाणुगिद्धा । निरट्ठसोया परियावमेइ ॥ ५० ॥ व्याख्या—एवमेवामुना प्रकारेण महाव्रतविराधनादिप्रकारेणैव यथाछंदः कुशीलरूपः स्वकीयरुचिरुचिताचारः कुत्सितशीलस्वभावः साधुर्जिनोत्तमानां तीर्थंकराणां मार्गं विराध्य परितापं पश्चात्तापमेति प्राप्नोति. क इव ? भोगरसानुगृद्धा कुररीव पक्षिणीव, भोगानां जिह्वास्वाददायकानां मांसानां रसेऽनुगृद्धा लोलुपा भोगरसानुगृद्धा. पुनः कीदृशा कुररी? निरट्ठसोया, निरर्थकः शोको यस्याः सा निरर्थशोका. यथा हि मांसरसगृद्धा पक्षिणी अन्येभ्यो महाबलेभ्यः पक्षिभ्यो विपत्तिं प्राप्य शोचते, तद्विपत्तेः प्रतीकारमनवलोकयंती पश्चात्तापं प्राप्नोति, तथा संयमविराधको विषयाभिलाषींद्रि-

महायशा महाकीर्तिः. ॥ ५३ ॥

॥ मूलम् ॥—तुट्ठो हु सेणिओ राया । इणमुदाह कयंजली ॥ अणाहत्तं जहाभूयं । सुठु मे उवदंसियं ॥ ५४ ॥ व्याख्या—श्रेणिको राजा तुष्टो हु इति निश्चयेनेदमुदाहेदमवादीत्. कीदृशः श्रेणिकः? कृतांजलिर्बद्धांजलिः. इदमिति किं? हे मुने! यथाभूतं यथावस्थितमनाथत्वं मे मम सुष्ठूपदर्शितं, त्वया मे ममाऽनाथत्वं सम्यग्दर्शितमिति भावः. ॥ ५४ ॥

॥ मूलम् ॥—तुम्हं सुलद्धं खु मणुस्सजम्मं । लाभा सुलद्धा य तुमे महेसी ॥ तुब्भे सणाहा य सबंधवा य । जं भे ठिया मग्गे जिणुत्तमाणं ॥ ५५ ॥ व्याख्या—किं श्रेणिक आह—हे महर्षे! मानुष्यं जन्म 'खु' इति निश्चयेन सुलब्धं, सफलं त्वदीयं मानुष्यं जन्म. हे महर्षे! त्वयैव लाभा रूपवर्णविद्यादीनां लाभाः सुलब्धाः, रूपलावण्यादिप्राप्तयः सुप्राप्ताः. हे महर्षे! यूयमेव सनाथाः, आत्मनो नाथत्वान्नाथसहिताः. च पुनर्यूयमेव सबांधवा ज्ञातिकुटुंबसहिताः, यद्यस्मात्कारणात् 'भे' भवंतो जिनोत्तमानां तीर्थंकराणां मार्गे स्थिताः. ॥५५॥

॥ मूलम् ॥—तं सणाहो अणाहाणं । सव्वभूयाण संजया ॥ खामेमि ते महाभाग ।

रित्राचारश्च गुणाश्च चारित्राचारगुणास्तैरन्वितश्चारित्राचारगुणान्वितः. अत्र मकारः प्राकृतत्वात्. किं कृत्वा साधुर्मोक्षं प्राप्नोति? अनुत्तरं प्रधानं भगवदाज्ञाशुद्धं संयमं सप्तदशविधं पालयित्वा. पुनः किं कृत्वा? कर्माण्यष्टावपि संक्षिपय्य क्षयं नीत्वा. एतावता चारित्राचारज्ञानादिगुणयुक्तः, अत एव निरुद्धाश्रवः प्रधानं संयमं प्रपाल्य सर्वकर्माणि संक्षयं नीत्वा मोक्षं प्राप्नोतीत्यर्थः. ॥ ५२ ॥ अथोपसंहारमाह—

॥ मूलम् ॥—एवुग्गदंतेवि महातवोहणे । महामुणी महापइन्ने महायसे ॥ महानियंठिज्जमिणं महासुयं । से काहए महया वित्थरेण ॥ ५३ ॥ व्याख्या—एवममुना प्रकारेण श्रेणिकेन राज्ञा पृष्टः सन् स महामुनिर्महासाधुर्महता विस्तरेण बृहता व्याख्यानेन महानिर्ग्रंथीयं महाश्रुतमकथयत्. महांतश्च ते निर्ग्रंथाश्च महानिर्ग्रंथाः, तेभ्यो हितं महानिर्ग्रंथीयं, महामुनीनां हितमित्यर्थः. कीदृशः सः? उग्रः कर्मशत्रुहनने बलिष्टः, पुनः कीदृशः सः? दांतो जितेंद्रियः, पुनः कीदृशः? महातपोधनो महच्च तत्तपश्च महातपः, महातपो धनं यस्य स महातपोधनः, पुनः कीदृशः? महाप्रतिज्ञो व्रते दृढप्रतिज्ञाधारकः, पुनः कीदृशः?

रोधांतःपुरेण सहितः, पुनः कीदृशः? सपरिजनः सह परिजनैर्वर्तत इति सपरिजनो भृत्यादिवर्गसहितः. पुनः कीदृशः? सबांधवः सह बांधवैर्भ्रातृप्रमुखैर्वर्तत इति सबांधवः. पुरापि वनवाटिकायां सर्वातःपुरपरिजनबांधवकुटुंबसहित एव क्रीडां कर्तुमागात्, ततो मुनेर्वाक्यश्रवणात् सर्वपरिकरयुक्तो धर्मानुरक्तोऽभूदित्यर्थः. ॥ ५८ ॥

॥ मूलम् ॥—ऊससियरोमकूवो । काऊण य पयाहिणं ॥ अभिवंदिऊण सिरसा । अइयाउ नराहिवो ॥ ५९ ॥ व्याख्या—नराधिपः श्रेणिकोऽतियातो गृहं गतः. किं कृत्वा? शिरसा मस्तकेनाभिवंद्य मुनिं नमस्कृत्य, पुनः किं कृत्वा? प्रदक्षिणां कृत्वा प्रदक्षिणां दत्वा. कथंभूतो नराधिपः? 'ऊससियरोमकूवः' उच्छ्वसितरोमकूपः, साधोर्दर्शनाद्वाक्यश्रवणादुच्छ्वसितरोमकूपः. ॥ ५९ ॥

॥ मूलम् ॥—इयरोवि गुणसमिद्धो । तिगुत्तिगुत्तो तिदंडविरउ य ॥ विहंग इव विप्पमुक्को । विहरइ वसुहं विगयमोहोत्तिबेमि ॥ ६० ॥ व्याख्या—अथेतरोऽपि श्रेणिकापेक्षयाऽपरोऽपि मुनिरपि वसुधां पृथिवीं विहरति विहारं करोति. कीदृशः सन्? विमोहः सन् मो-

च्छामि अणुसासिउं ॥ ५६ ॥ व्याख्या—हे संयत! त्वमनाथानां सर्वभूतानां त्रसानां स्थावराणां जीवानां नाथोऽसि. हे महाभाग! हे महाभाग्ययुक्त! ते इति त्वामहं क्षमामि. मया पूर्वं यस्तवापराधः कृतः स क्षंतव्य इत्यर्थः. अथ भवतोऽनुशासयितुं त्वत्तः शिक्षयितुमात्मानमिच्छामि, मदीय आत्मा तवाज्ञावर्ती भवत्विवतीच्छामीत्यर्थः. ॥ ५६ ॥

॥ मूलम् ॥—पुच्छिऊण मए तुज्झं । झाणविग्घो य जो कउ ॥ निमंतिउं य भोगेहिं । तं सव्वं मरिसेहि मे ॥ ५७ ॥ व्याख्या—हे महर्षे! मया तुभ्यं पृष्ट्वा प्रश्नं कृत्वा यस्तव ध्यानविघ्नः कृतः, च पुनर्भोगैः कृत्वा निमंत्रितः, भो स्वामिन्! भोगान् भुंक्ष्वेत्यादिप्रार्थना तव कृता, तं सर्वं मे ममापराधं क्षंतुमर्हसि, सर्वं ममापराधं क्षमस्वेत्यर्थः. ॥ ५७ ॥

॥ मूलम् ॥—एवं थुणित्ताण य रायसीहो । अणगारसीहं परमाइ भत्तीए ॥ सउरहो सपरियणो सबंधवो । धम्माणुरत्तो विमलेण चेयसा ॥ ५८ ॥ व्याख्या—स राजसु सिंहो राजसिंहः श्रेणिको राजा एवममुना प्रकारेण तमनगारसिंहं मुनिसिंहं परमयोत्कृष्टया भक्त्या स्तुत्वा विमलेन निर्मलेन चेतसा धर्मानुरक्तोऽभूदिति शेषः. कीदृशः श्रेणिकः? साव-

रोधांतःपुरेण सहितः, पुनः कीदृशः? सपरिजनः सह परिजनैर्वर्तेत इति सपरिजनो भृत्यादिवर्गसहितः, पुनः कीदृशः? सबांधवः सह बांधवैर्भ्रातृप्रमुखैर्वर्तेत इति सबांधवः. पुरापि वनवाटिकायां सर्वांतःपुरपरिजनबांधवकुटुंबसहित एव क्रीडां कर्तुमागात्, ततो मुनेर्वाक्यश्रवणात् सर्वपरिकरयुक्तो धर्मानुरक्तोऽभूदित्यर्थः. ॥ ५८ ॥

॥ मूलम् ॥—ऊससियरोमकूवो । काऊण य पयाहिणं ॥ अभिवंदिऊण सिरसा । अइयाओ नराहिवो ॥ ५९ ॥ व्याख्या—नराधिपः श्रेणिकोऽतियातो गृहं गतः. किं कृत्वा? शिरसा मस्तकेनाभिवंद्य मुनिं नमस्कृत्य, पुनः किं कृत्वा? प्रदक्षिणां कृत्वा प्रदक्षिणां दत्वा. कथंभूतो नराधिपः? 'ऊससियरोमकूवः' उच्छ्वसितरोमकूपः, साधोर्दर्शनाद्वाक्यश्रवणादुल्लसितरोमकूपः. ॥ ५९ ॥

॥ मूलम् ॥—इयरोवि गुणसमिद्धो । तिगुत्तिगुत्तो तिदंडविरओ य ॥ विहंग इव विप्पमुक्को । विहरइ वसुहं विगयमोहोत्तिबेमि ॥ ६० ॥ व्याख्या—अथेतरोऽपि श्रेणिकापेक्षयाऽपरोऽपि मुनिरपि वसुधां पृथिवीं विहरति विहारं करोति. कीदृशः सन्? विमोहः सन् मो-

हरहितः सन्, अर्थात् केवली सन्. कीदृशो मुनिः? गुणसमृद्धः सप्तविंशतिसाधुगुणसहितः, पुनः कीदृशः? त्रिदंडविरतस्त्रिदंडेभ्यो मनोवाक्कायानामशुभव्यापारेभ्यो विरतः, पुनः कीदृशः? विहग इव विप्रमुक्तः, पक्षीव क्वचिदपि प्रतिबंधरहितो निःपरिग्रह इत्यर्थः. इति सुधर्मास्वामी जंबूस्वामिनंप्रति वदति, अहमिति ब्रवीमि, इति महानिर्ग्रंथीयमध्ययनं विंशतितमं संपूर्णं ॥ २० ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां महानिर्ग्रंथीयाख्यं विंशतितममध्ययनं समाप्तं. श्रीरस्तु.

---



॥ अथैकविंशमध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययनेऽनाथत्वमुक्तं, तदनाथत्वं विविक्तचर्यया विचार्यते, अतोऽस्मिन्नध्ययने विविक्तचर्योच्यते—

॥ मूलम् ॥—चंपाए पालिए नाम । सावए आसि वाणिए ॥ महावीरस्स भगवउ ।

सीसो सो उ महप्पणो ॥ १ ॥ व्याख्या—' चंपाए ' इति चंपायां नगर्यां पालित इति नाम्ना श्रावको देशविरतिधारी वणिगासीत्. कीदृशः स वणिक्? भगवतो महावीरस्य महात्मनो महापुरुषस्य तीर्थंकरस्य शिष्यः शिक्षाधारकः. ' सो उ ' इति स पुनः पालितो नाम श्राद्धः कीदृशो वर्तते? तदाह—॥ १ ॥

॥ मूलम् ॥—निग्गंथे पावयणे । सावए सेवि कोविए ॥ पोएण ववहरंते । पिहुंडं नगरमागए ॥ २ ॥ व्याख्या—स पालितनामा श्रावको महात्मा नैर्ग्रंथे प्रावचने श्रीवीतरागस्य सिद्धांते कोविदोऽभूत्. स पालित एकदा पोतेन व्यवहरन् प्रवहणेन वाणिज्यं कुर्वन् पिहुंडं नाम नगरमागतः. चंपानगरीतः प्रवहणमारुह्य व्यापारार्थं पिहुंडनगरं समायात इति.

॥ मूलम् ॥—पिहुंडे ववहरंतस्स । वाणिउ देइ धूयरं ॥ तं ससत्तं पइगिज्झ । सयं देसं पइट्ठिए ॥ ३ ॥ व्याख्या—अथ तत्र पिहुंडनगरे कश्चिद्वणिक् व्यवहरतस्तस्य पालितस्य गुणैः संतुष्टः सन् पालिताय धूयरमिति पुत्रीं ददाति. स च पालितस्तां परिणीय कतिचिद्दिनानि तत्र स्थित्वा तां वणिक्पुत्रीं ससत्वां सगर्भां प्रतिगृह्य स्वकं देशंप्रति प्रस्थितः, पिहुंडा-

हरहितः सन्, अर्थात् केवली सन्. कीदृशो मुनिः? गुणसमृद्धः सप्तविंशतिसाधुगुणसहि-
तः, पुनः कीदृशः? त्रिदंडविरतस्त्रिदंडेभ्यो मनोवाक्कायानामशुभव्यापारेभ्यो विरतः, पुनः
कीदृशः? विहग इव विप्रमुक्तः, पक्षीव कचिदपि प्रतिबंधरहितो निःपरिग्रह इत्यर्थः. इति
सुधर्मास्वामी जंबूस्वामिनंप्रति वदति, अहमिति ब्रवीमि, इति महानिर्ग्रंथीयमध्ययनं विंश-
तितमं संपूर्णं ॥ २० ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणि-
शिष्यलक्ष्मीवल्लभगणिविरचितायां महानिर्ग्रंथीयाख्यं विंशतितममध्ययनं समाप्तं. श्रीरस्तु.

---

॥ अथैकविंशमध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययनेऽनाथत्वमुक्तं, तदनाथत्वं विविक्तचर्यया विचार्यते, अतोऽस्मिन्नध्ययने
विविक्तचर्योच्यते—

॥ मूलम् ॥—चंपाए पालिए नाम । सावए आसि वाणिए ॥ महावीरस्स भगवउ ।

वो दोगुंदगो जहा ॥ ७ ॥ व्याख्या—अथ तस्य समुद्रपालस्य पिता पालितो रूपवतीं भार्यां रूपिणीतिनाम्नीमानयति, परिणाययतिस्म. ततो रम्ये रमणीके प्रासादे क्रीडां करोति. को यथा? दोगुंदको देवो यथा, यथेंद्राणां पूज्यस्थानीयो देवः सुखानि भुंक्ते, तथा सुखं भुंक्ते इत्यर्थः. ॥ ७ ॥

॥ मूलम् ॥—अह अन्नया कयाइ। पासायालोयणे ठिओ ॥ वज्झमंडणसोभागं। वज्झं पासइ वज्झगं ॥ ८ ॥ व्याख्या—अथानंतरं समुद्रपालोऽन्यदा कदाचित् प्रासादस्य धवलगृहस्यालोकने प्रासादावलोकने मंदिरगवाक्षे स्थितो वध्यं चौरं पश्यति, वधायार्हो वध्यस्तं. कीदृशं वध्यं? वध्यमंडनशोभाकं वध्यस्य चोरस्य यानि मंडनानि रक्तचंदननिंबपत्रकरवीरपुष्पस्रगादीनि वध्यमंडनानि, तैः शोभा यस्यासौ वध्यमंडनशोभाकस्तं. पुनः कीदृशं? वाह्यगं बहिर्नयं बाह्यं बहिर्भूमंडलं, तद्गच्छति प्राप्नोतीति वाह्यगस्तं, राजपुरुषैर्बहिर्निःसारयंतं. अथवा वध्यगं, इह वध्यशब्देनोपचाराद्वध्यभूमिरुच्यते, तत्र वध्यभूमौ गच्छंतं. ॥ ८ ॥

॥ मूलम् ॥—तं पासिऊण संविग्गो। समुद्दपालो इणमब्बवी ॥ अहो असुहाण कम्मा-

चंपांप्रति चलितः. ॥ ३ ॥

॥ मूलम् ॥—अह पालियस्स घरणी । समुद्दंमि य पसवई ॥ अह दारए तहिं जाए । समुद्दपालोत्ति नामए ॥ ४ ॥ व्याख्या—अथानंतरं पालितस्य गृहिणी समुद्रे दारकं प्रसूतेस्म. अथ तस्मिन् दारके पुत्रे जाते सति समुद्रपाल इति नामतः स बाल आसीदिति शेषः.

॥ मूलम् ॥—खेमेण आगए चंपं । सावए वाणिए घरं ॥ संवड्ढइ घरे तस्स । दारए से सुहोइए ॥ ५ ॥ व्याख्या—तस्मिन् पालिते नाम्नि वणिजि चंपायां नगर्यां क्षेमेण सुखेन गृहमागते सति समुद्रपालो बालकः संवर्धते. कीदृशः स बालकः? सुखोचितः सुखयोग्यः.

॥ मूलम् ॥—बावत्तरीकलाओ य । सिक्खए नीइकोविए ॥ जोव्वणेण य संपन्ने । सुरूवे पियदंसणे ॥ ६ ॥ व्याख्या—च पुनः स समुद्रपालो द्वासप्ततिकलाशिक्षितः सन्नीतिकोविदोऽभूत्, लोकनीतिधर्मनीतिचतुरोऽभूत्. च पुनर्यौवनेन संपन्नः संजात इति गम्यं. कथंभूतः सः? प्रियदर्शनः. पुनः कथंभूतः समुद्रपालः? सुरूपः सुंदररूपः. ॥ ६ ॥

॥ मूलम् ॥—तस्स रूववईभज्जं । पिया आणेय रूविणं ॥ पासाए कीलिए रम्मे । दे-

यो दोगुंदगो जहा ॥ ७ ॥ व्याख्या—अथ तस्य समुद्रपालस्य पिता पालितो रूपवतीं नार्यां रूपिणीतिनाम्नीमानयति, परिणाययतिस्म. ततो रम्ये रमणीके प्रासादे क्रीडां करोति. को यथा? दोगुंदको देवो यथा, यथेंद्राणां पूज्यस्थानीयो देवः सुखानि भुंक्ते, तथा सुखं भुंक्ते इत्यर्थः. ॥ ७ ॥

॥ मूलम् ॥—अह अन्नया कयाइ। पासायालोयणे ठिओ ॥ वज्झमंडणसोभागं। वज्झं पस्सइ वज्झगं ॥ ८ ॥ व्याख्या—अथानंतरं समुद्रपालोऽन्यदा कदाचित् प्रासादस्य धवलगृहस्यालोकने प्रासादावलोकने मंदिरगवाक्षे स्थितो वध्यं चौरं पश्यति, वधायार्हो वध्यस्तं. कीदृशं वध्यं? वध्यमंडनशोभाकं वध्यस्य चौरस्य यानि मंडनानि रक्तचंदननिंबपत्रकरवीरपुष्पस्रगादीनि वध्यमंडनानि, तैः शोभा यस्यासौ वध्यमंडनशोभाकस्तं. पुनः कीदृशं? वाह्यगं वहिर्नयं वाह्यं वहिर्भूमंडलं, तद्गच्छति प्राप्नोतीति वाह्यगस्तं, राजपुरुषैर्वहिर्निःसारयंतं. अथवा वध्यगं, इह वध्यशब्देनोपचाराद्वध्यभूमिरुच्यते, तत्र वध्यभूमौ गच्छंतं. ॥ ८ ॥

॥ मूलम् ॥—तं पासिऊण संविग्गो। समुद्दपालो इणमब्बवी ॥ अहो असुहाण कम्मा-

णं निज्जाणं पावगं इमं ॥ ए ॥ व्याख्या—समुद्रपालः संवेगं प्राप्तः सन्निदमब्रवीत्. किं कृत्वा? तं चौरं वध्यं दृष्ट्वा. इदमिति किं? अहो इत्याश्चर्येऽशुभानां कर्मणामिदं पापकं निर्याणमशुभं प्रांतं दृश्यते. ॥ ए ॥

॥ मूलम् ॥—संबुद्धो सो तहिं भयवं । परमसंवेगमागओ ॥ आपुछम्मापियरं । पवइए अणगारियं ॥ १० ॥ व्याख्या—स समुद्रपालो भगवान् माहात्म्यवान् संबुद्धः प्रतिबुद्धः सन् परमसंवेगमागतः, परमवैराग्यं प्राप्तः. मातापितरमापृच्छ्यानगारत्वं प्रव्रजितः, प्रकर्षेणांगीकृतवान्. ॥ १० ॥

॥ मूलम् ॥—जहित्तु संगंथ महाकिलेसं । महंतमोहं कसिणं भयावहं ॥ परियायधम्मं चभिरोयइज्जा । वयाणि सीलाणि परिसहे य ॥ ११ ॥ व्याख्या—समुद्रपालो भगवान् आत्मने ' परियायधम्मं ' प्रव्रज्याधर्मसभिरोचयेत्. च पुनर्व्रतानि अहिंसानृतास्तेयब्रह्माकिंचनत्वलक्षणानि पंच, तथा शीलान्युत्तरगुणरूपाणि शुद्धाचारगोचरीकरणसततिरूपाणि, तान्यप्यात्मनेऽभिरोचयेत्, अर्थात्प्रव्रज्यां जग्राहेत्यर्थः. किं कृत्वा? संगं स्वजनादिसंबंधं त-

क्त्वा, थः पादपूरणे. कथंभूतं संगं? ' महाकिलेसं ' महान् क्लेशो यस्मात्स महाक्लेशस्तं. पुनः कथंभूतं संगं? महान् मोहो यस्मिन् स महामोहस्तं महामोहं प्रचुराज्ञानसहितं. पुनः कथंभूतं ' किसणं ' कृष्णलेश्याया हेतुं, तस्मात्कृष्णं, पुनः कथंभूतं? भयानकं भयजनकमित्यर्थः. ॥ ११ ॥

॥ मूलम् ॥—अहिंससच्चं च अतेणगं च । तत्तो य बंभं अपरिग्गहं च ॥ पडिवज्जिया पंच महव्वयाइं । चरिज्ज धम्मं जिणदेसियं विऊ ॥ १२ ॥ व्याख्या—तानि पंचव्रतानां नामान्याह—अहिंसा, जीवानां वधो हिंसा, न हिंसाऽहिंसा सर्वजीवेषु दया प्रथमं १. च पुनः सत्यं २. च पुनरस्तैन्यकं, स्तेनस्य चौरस्येदं कर्म स्तैन्यं, न स्तैन्यमस्तैन्यं, अस्तैन्यमेवाऽस्तैन्यकं ३. ततोऽनंतरं ब्रह्म शीलं ४. च पुनरपरिग्रहं सर्वथा लोभत्यागः ५. स समुद्रपालः पंच महाव्रतानीमानि प्रतिपद्य जिनदेशितं धर्मं चरेत् सेवेत, महाव्रतानि गृहीत्वैकत्र न तिष्ठेदिति भावः. कथंभूतः सः? 'विऊ' इति विद्वान्, वेत्ति हेयोपादेयविधीनिति विद्वान्.

॥ मूलम् ॥—सव्वेहिं भूएहिं दयाणुकंपे । खंतिखमे संजय बंभयारी ॥ सावज्जजोगं प-

रिवज्जयंते । चरिज्ज भिक्खू सुसमाहिइंदिए ॥ १३ ॥ व्याख्या—'भिक्खू' इति भिक्षुः समुद्रपालितसाधुः सुसमाहितेंद्रियः सन् 'चरिज्ज' इति विचरतेस्म. कथंभूतः सः? सर्वेषु भूतेषु दयानुकंपी, सर्वेषु प्राणिषु दयया हितोपदेशरूपयाऽनुकंपनशीलो दयापालनपरः स दयानुकंपी. पुनः कथंभूतः? क्षांतिक्षमः, क्षांत्या तत्वलोचनया क्षमते दुष्टानां दुर्वचनताडनादिकमिति क्षांतिक्षमः. पुनः कथंभूतः? संयतः साध्वाचारपालकः. पुनः कथंभूतः? ब्रह्मचारी, ब्रह्मणि परमात्मस्वरूपे चरतीति ब्रह्मचारी ब्रह्मचर्यधारको वा. पुनः स किं कुर्वन् विचरतेस्म? सावद्ययोगं वर्जयन्, सपापयोगं परित्यजन्. ॥ १३ ॥

॥मूलम्॥—कालेण कालं विहरेज्ज रट्ठे । बलाबलं जाणिय अप्पणो अ ॥ सीहोव्व सद्देण न संतसिज्जा । वयजोग सुच्चा न असब्भमाहु ॥१४॥ व्याख्या—पुनः स साधुः कालेन प्रस्तावेन प्रथमपौरुष्यादिसमयेन कालमवसरयोग्यं कार्यं ध्यानानुष्ठानतपस्यादिकं कुर्वन् राष्ट्रे मंडले विचरेत्. किं कृत्वा? आत्मनो बलाबलं ज्ञात्वा, परीषहादिसहनसामर्थ्यं विचार्य, यथा संयमयोगहानिर्न स्यात्तथेति भावः. पुनः स साधुः सिंह इव शब्देन भयोत्पादकेन न

संत्रसेत् सत्वान्नात्रसत्. अत एव वाग्योगं श्रुत्वा दुःखोत्पादकं वचनं श्रुत्वा, खलानामसत्यं वचनं कर्णे विधायाऽसत्यं वचनं न आह, न ब्रूयात्, आर्षत्वादाहुरिति. ॥ १४ ॥

॥ मूलम् ॥—उवेहमाणो उ परिव्वइज्जा । पियमप्पियं सव्व तितिक्खइज्जा ॥ न सव्व सव्वत्थभिरोयइज्जा । न यावि पूयं गरहं च संजए ॥ १५ ॥ व्याख्या—तु पुनः स साधुरुपेक्ष्यमाणोऽसत्यवचनमवगणयन् परिव्रजेत्, मनसि वचसि दुर्वचनमधारयन् ग्रामानुग्रामेष्वतिशयेन विचरेत्, प्रियं च पुनरप्रियं सर्वं तितिक्षेत्, लोकानां सत्यवचनं दुष्टं वचनं च सहेत. पुनः स समुद्रपालितसाधुः सर्वं वस्तु सर्वत्र न रोचयेत्, आत्मने नाभिलषयेत्. च पुनः स संयतः स साधुः पूजामपि स्तुतिरूपां वाणीमपि निश्चयेन गर्हां निंदां परापवादरूपामपि न रोचयेत्, यतो हि स समुद्रपालितसाधुर्दृष्टादृष्टपदार्थेष्वभिलाषुको माभूदिति भावः. ननु किं भिक्षोरप्यन्यथाभावः स्यात्? येनेत्थमित्थमात्मनोऽनुशासनमसौ चक्रे, इत्याह—॥ १५ ॥

॥ मूलम् ॥—अणेगछंदा इह माणवेहिं । जे भावउ संपगरेइ भिक्खू ॥ भयभेरवा तत्थ उविंति भीमा । दिव्वा मणुस्सा अडुवा तिरिक्खा ॥ १६ ॥ व्याख्या—इहास्मिन् जगति

मानवेषु मनुष्येष्वनेकानि छंदांसि बहवोऽनिप्राया वर्तंते, याननेकाननिप्रायान् नावतस्तत्ववृत्त्या निक्षुरपि संप्रकरोति. अतस्तत्र दीक्षायां नयनैरवाः प्रचुरनयोत्पादका नीमा रौद्राः, दिव्या देवसंबंधिनः, अथवा मानुष्या मनुष्यसंबंधिनः, तिर्यंचास्तिर्यग्योनिसंबंधिन उत्पद्यंते.

॥ मूलम् ॥—परीसहा डुव्विसहा अणेगे । सीयंति जत्था बहुकायरा नरा ॥ से तत्थ पत्ते न वहिज्ज निक्खू । संगामसीसे इव नागराया ॥ १७ ॥ व्याख्या—दुर्विषहा डुःखेन सोढुं शक्याः परीषहा अनेके उत्पद्यंते इति संबंधः. यत्र येषूपसर्गेषूत्पन्नेषु बहुकातरा नरा अनेके कातराः सीदंति, संयमात् श्लथीनवंति. स साधुस्तत्र परीषहे प्राप्ते उदयमागते सति न व्यथेन्न सत्वाच्चलेत्. क इव? नागराज इव गजराज इव. यथा गजराजः संग्रामशीर्षे युद्धप्रकर्षे न विपरीतमुखो भवति. ॥ १७ ॥

॥ मूलम् ॥—सीउसिणादंसमसगायफासा । आउंका देहं विविहा फुसंति ॥ अकुक्कुउं तत्थहियासएज्जा । रयाइ खेविज्ज पुरा कडाइ ॥ १८ ॥ व्याख्या—शीतोष्णदंशमशकतृणस्पर्शाः, एते परीषहाः साधोर्देहं विविधा आतंका रोगपरीषहाः स्पृशंति, तदा साधुः ' अ-

कुक्कुज इति ' कुत्सितं कूजति पीडितः सन्नाक्रंदतीति कुकूजः, न कुकूजोऽकुकूजः, आक्रंदमकुर्वंस्तत्र तान् परीषहानधिसहेत. एवंविधः साधुः पुराकृतानि रजांसि पापानि क्षपयेत् क्षयं नयेत. ॥ १८ ॥

॥ मूलम् ॥—पहाय रागं च तहेव दोसं । मोहं च भिक्खू सततं वियक्खणो ॥ मेरुव्व वाएण अकंपमाणो । परीसहे आयगुत्ते सहिज्जा ॥ १९ ॥ व्याख्या—साधुः परीषहान् सहेत. किं कृत्वा? रागं तथा द्वेषं, च पुनर्मोहं प्रहाय त्यक्त्वा. कीदृशः साधुः? सततं विचक्षणो निरंतरं तत्त्वविचाररतः. क इव? मेरुरिव वातैरकंपमानः, पुनः कीदृशः साधुः? आत्मगुप्तः कूर्म इव गुप्तशरीरः. ॥ १९ ॥

॥ मूलम् ॥—अणुन्नए नावणए महेसी । नयावि पूयं गरहं च संजए ॥ से उज्जुभावं पडिवज्ज संजया । निव्वाणमग्गं विरए उवेइ ॥ २० ॥ व्याख्या—महर्षिः पूजां स्तुतिं, च पुनर्गर्हां निंदामपि न संगयेत् संगं न कुर्यात्, स्तुतिनिंदयोः प्रसंगं न कुर्यात्. स्तुतिं श्रुत्वा दर्पं न कुर्यात्, निंदां च श्रुत्वा दुःखं न कुर्यादिति भावः. कीदृशो महर्षिः? अनुन्नतः, न

उन्नतोऽभिमानरहितः, पुनः कीदृशः? नावनतो न अवनतो दीनभावेन रहितः. स एतादृशः समुद्रपालितः संयत ऋजुभावं सरलत्वं प्रतिपद्य विरतः पापान्निवृत्तः सन् निर्वाणमार्गं मोक्षमार्गमुपैति प्राप्नोति. ॥ २० ॥

॥ मूलम् ॥—अरइरइसहे पहीणसंथवे । विरए आयहिए पहाणवं ॥ परमठ्ठपए हि चिठ्ठइ । छिन्नसोए अममे आकिंचणे ॥ २१ ॥ व्याख्या—पुनः स साधुररतिरतिसहः, अरतिश्च रतिश्चाऽरतिरती, ते सहते इत्यरतिरतिसहः, पुनः कीदृशः? प्रहीणसंस्तवः प्रकर्षेण हीनो गतः संस्तवो गृहस्थैः सह परिचयो यस्य स प्रहीणसंस्तवस्त्यक्तसंगः. पुनः कीदृशः? विरतः पापक्रियातो निवृत्तः. पुनः कीदृशः? आत्महित आत्मनां सर्वजीवानां हितो हितवांछकः. पुनः कीदृशः? प्रधानवान्, प्रधानः संयमः स विद्यते यस्य स प्रधानवान् संयमयुक्तः. पुनः स साधुः किं करोति? परमार्थपदेषु तिष्टति, परमार्थस्य मोक्षस्य पदानि स्थानानि मोक्षदायकत्वात्कारणानि परमार्थपदानि ज्ञानदर्शनचारित्राणि, तेषु तिष्टति. प्राकृतत्वात् सप्तमीस्थाने तृतीया. पुनः कीदृशः सः? छिन्नशोकः, अथवा छिन्नानि श्रोतांसि मिथ्याद-

र्शनादीनि यस्यासौ छिन्नश्रोताः. इह संयमपदानामानंत्यात्तदभिधायिपदानां पुनः पुनर्वचनेऽपि न पौनरुक्त्यं. पुनः कीदृशः सः? अममो ममत्वरहितः. पुनः कीदृशः? अकिंचनो द्रव्यादिपरिग्रहरहितः. ॥ २१ ॥

॥ मूलम् ॥—विवित्तलयणाइं भएज्ज ताई। निरोवलेवाइ असंथडाइ ॥ इसीहि चिन्नाइ महायसेहिं। काएण फासिज्ज परीसहाइं ॥ २२ ॥ व्याख्या—पुनः समुद्रपालितः साधुः कीदृशः? तायी, त्रायते रक्षति कायषट्कमिति त्रायी, षट्कायरक्षाकारको मुनिरित्यर्थः. स विविक्तलयनानि स्त्रीपशुपंडकरहितानि धर्मस्थानानि भजेत्. कीदृशानि विविक्तलयनानि? निरुपलेपानि द्रव्यतो भावतश्च लेपरहितानि, द्रव्यतो हि साधुनिमित्तेन न लिप्तानि, गृहस्थेन नार्थं लिप्तानीत्यर्थः. भावतस्तु रागादिलेपरहितानि. मदीयानीमानि स्थानानीति रागबुद्ध्या रहितानि. पुनः कीदृशानि? 'असंथडाइ' असंस्तृतानि शाल्यादिबीजैरव्याप्तानि, सचित्तबीजसंघट्टरहितानि. पुनः कीदृशानि? महायशोभिः ऋषिभिश्चीर्णान्यंगीकृतानि सेवितानीत्यर्थः. पुनः समुद्रपालितः साधुः कायेन परीषहान् 'फासिज्ज' इति स्पृशेत्, द्वाविंशति-

परीषहान् सहेत. ॥ २२ ॥

॥ मूलम् ॥—स नाणनाणोवगए महेसी । अणुत्तरं चरिउं धम्मसंचयं ॥ अणुत्तरे नाणधरे जसंसी । उन्नासइ सूरिएवंतलिक्खे ॥ २३ ॥ व्याख्या—स समुद्रपालो महर्षिरनुत्तरं प्रधानं धर्मसंचयं दशविधधर्मं चरित्वाऽऽराध्याऽवन्नासते शोन्नते. कीदृशः सः? ज्ञानज्ञानोपगतः, ज्ञानेन श्रुतज्ञानेन यद् ज्ञानं सम्यक् क्रियाकलापवेदनं ज्ञानज्ञानं, तेनोपगतः सम्यग्ज्ञानक्रियासहितः.. पुनः कीदृशः? यशस्वी. स क इव? अंतरिक्षे आकाशे सूर्य इव, यथाकाशे सूर्यो विराजते, तथा स तपस्तेजसा विराजते इत्यर्थः. ॥ २३ ॥

॥ मूलम् ॥—दुविहं खविऊण य पुण्णपावं । निरंगणे सव्वउ विप्पमुक्के ॥ तरित्ता समुद्दं च महान्नवोहं । समुद्दपाले अपुणागमं गइं गइत्तिबेमि ॥ २४ ॥ व्याख्या—समुद्रपालः साधुरपुनरागमगतिं गतः, न विद्यते पुनरागमो यस्याः साऽपुनरागमा, अपुनरागमा चासौ गतिश्चाऽपुनरागमगतिस्तां गतिं, यत्र गतौ गतानां जीवानां पुनः संसारे आगमो न न्नवति, मोक्षं गत इत्यर्थः. किं कृत्वा मोक्षं गतः? द्विविधं घातिकं न्नवोपग्राहिकं पुण्यपापं शुन्नाशुन्न-

प्रकृतिरूपं क्षपयित्वा संपूर्णं त्रुक्त्वा. पुनः किं कृत्वा? महाजवौघं समुद्रं तरित्वोल्लंघ्य, मदांतश्च ते जवाश्च महाभवाः, तेषामोघः समूहो यत्र स महाजवौघः, तमेतादृशं समुद्रमर्थात्संसारसमुद्रं विलंघ्य सिद्धो बभूवेत्यर्थः. परं कीदृशः स समुद्रपालितः साधुः? सर्वतो बाह्याभ्यंतरपरिग्रहाद्विप्रमुक्तः, अथवा शरीरसंगादपि विप्रमुक्तः. पुनः कीदृशः सः? निरंगनो निर्गतमंगनं चलनं यस्मात्स निरंगनः, संयमे निश्चलः, अंगेर्गत्यर्थत्वात्, साधुमार्गे निश्चलचित्त इत्यर्थः. इत्यहं ब्रवीमि, हे जंबू! श्रीवीरवाक्यात्तवाग्रे इत्यमुना प्रकारेणाहं समुद्रपालितसाधुसंबंधं ब्रवीमि. ॥ २४ ॥

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायामेकविंशाध्ययनस्यार्थः संपूर्णः. ॥ श्रीरस्तु ॥

---

परीषहान् सहेत. ॥ २२ ॥

॥ मूलम् ॥—स नाणनाणोवगए महेसी । अणुत्तरं चरिउं धम्मसंचयं ॥ अणुत्तरे नाणधरे जसंसी । उन्नासइ सूरिएवंतलिक्खे ॥ २३ ॥ व्याख्या—स समुद्रपालो महर्षिरनुत्तरं प्रधानं धर्मसंचयं दशविधधर्मं चरित्वाऽऽराध्याऽवन्नासते शोन्नते. कीदृशः सः? ज्ञानज्ञानोपगतः, ज्ञानेन श्रुतज्ञानेन यद् ज्ञानं सम्यक् क्रियाकलापवेदनं ज्ञानज्ञानं, तेनोपगतः सम्यग्ज्ञानक्रियासहितः. पुनः कीदृशः? यशस्वी. स क इव? अंतरिक्षे आकाशे सूर्य इव, यथाकाशे सूर्यो विराजते, तथा स तपस्तेजसा विराजते इत्यर्थः. ॥ २३ ॥

॥ मूलम् ॥—दुविहं खविऊण य पुस्मपावं । निरंगणे सवउ विप्पमुक्के ॥ तरित्ता समुद्दं च महान्नवोहं । समुद्दपाले अपुणागमं गइं गइत्तिबेमि ॥ २४ ॥ व्याख्या—समुद्रपालः साधुरपुनरागमगतिं गतः, न विद्यते पुनरागमो यस्याः साऽपुनरागमा, अपुनरागमा चासौ गतिश्चाऽपुनरागमगतिस्तां गतिं, यत्र गतौ गतानां जीवानां पुनः संसारे आगमो न न्नवति, मोक्षं गत इत्यर्थः. किं कृत्वा मोक्षं गतः? द्विविधं घातिकं न्नवोपग्राहिकं पुण्यपापं शुन्नाशुन्न-

प्रकृतिरूपं रूपयित्वा संपूर्णं उक्त्वा. पुनः किं कृत्वा? महाजवौघं समुद्रं तरित्वोल्लंघ्य, महांतश्च ते जवाश्च महाजवाः, तेषामोघः समूहो यत्र स महाजवौघः, तमेतादृशं समुद्रमर्थात्संसारसमुद्रं विलंघ्य सिद्धो बभूवेत्यर्थः. परं कीदृशः स समुद्रपालितः साधुः? सर्वतो बाह्याभ्यंतरपरिग्रहाद्विप्रमुक्तः, अथवा शरीरसंगादपि विप्रमुक्तः. पुनः कीदृशः सः? निरंगनो निर्गतमंगनं चलनं यस्मात्स निरंगनः, संयमे निश्चलः, अंगेर्गत्यर्थत्वात्, साधुमार्गे निश्चलचित्त इत्यर्थः. इत्यहं ब्रवीमि, हे जंबू! श्रीवीरवाक्यात्तवाग्रे इत्यमुना प्रकारेणाहं समुद्रपालितसाधुसंबंधं ब्रवीमि. ॥ २४ ॥

इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायामेकविंशाध्ययनस्यार्थः संपूर्णः. ॥ श्रीरस्तु ॥

## ॥ अथ द्वाविंशतितममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययने विविक्तचर्या धृतिमता कार्या, तत्र च कदाचिन्मनःपरिणामाद्धर्माद्भ्रष्टा भवंति, तदा रथनेमिवच्चरणे धृतिराधेया, तद्दृष्टांतमाह—तत्र श्रीनेमिनाथेन कस्मिन् भवे तीर्थंकरनामकर्म निबद्धमिति शिष्यकौतुकोपनोदाय श्रीनेमिचरितं लेशतो लिख्यते—एकस्मिन् सन्निवेशे ग्रामाधिपतिसुतो धननामा कुलपुत्र आसीत्, तन्मातुलदुहिता धनवतीनाम्नी तस्य भार्या. अन्यदा भार्यासहितः कुलपुत्रो ग्रीष्मकाले मध्याह्नसमये प्रयोजनवशेन गतोऽरण्यं. तत्रैकं पथः परिभ्रष्टं, क्षुधातृषापरिश्रमातीरेकनिमिलितलोचनं भूमितलमतिगतं कृशशरीरं मुनिवरं ददर्श. तं च दृष्ट्वा स कुलपुत्र एवं चिंतितवान्, अहो एष महातपस्वीदृशीं विषमावस्थामापन्नः, ततस्तं जलेन सिक्तवान्, चेलांचलेन वीजितवांश्च, स्वास्थ्य-

मापन्नो नीतः स्वग्रामं, प्रतिजागरितश्चौषधपथ्याहारादिभिः. मुनिनापि दत्त उपदेशः, यथेह दुःखप्रचुरे संसारे परलोकहितमवश्यं जनेन कर्तव्यं. ततो भवद्भ्यामपि परमांसमद्याखेटकादिनियमं कर्तव्यं यदि पालयितुं शक्तौ, यतो वहुदोषाण्येतानि, यदुक्तं—पंचेंदियवहभूयं। मंसं दुग्गंधमसुइवीभत्थं ॥ रक्खपरितुलिय भक्खग। भीईजणयं कुगइमूलं ॥ १ ॥ तथा—गुरुमोहकलहनिद्दा। परिहव उवहासरोगभयहेऊ ॥ मज्जं दुग्गइमूलं। हिरिसिरिमइधम्मनासकरं ॥ २ ॥ अपि च—मज्जे महुंमि मंसंमि। नवणीयंमि चउत्थए ॥ उप्पज्जंति असंखा। तव्वण्णा जत्थ जंतुणो ॥ ३ ॥ तथा—सपरोवघायजणणी। इहेव तह नरयतिरियगइमूलं ॥ दहमारणस्स य हेऊ। पावड्ढी वेरवुड्ढिकरा ॥४॥ इदं श्रुत्वा संविग्नाभ्यां ताभ्यां भणितं, भगवन्! देह्यस्माकं गृहस्थावस्थोचितं धर्मं? यतिना तु सम्यक्त्वमूलद्वादशव्रतरूपो धर्मस्तयोर्दत्तः, उक्तं च–सो धम्मो जत्थ दया। दसट्ठदोसा न जस्स सो देवो ॥ सो हु गुरू जो णाणी। आरंभपरिग्गहा विरओ ॥५॥ श्रावकधर्मं प्रपद्य तौ दंपती तुष्टौ. ... जहिं मह जत्थ होइ सं-

जोगो ॥ जत्थ चेइयभवणं । अन्नेवि जत्थ साहम्मी ॥ १ ॥ देवगुरूण तिसंझं । करेज्ज तह परमवंदणं विहिणा ॥ तह पुप्फवत्थमाईहिं । पूयणं सव्वकालंपि ॥ २ ॥ अन्यच्च—अपुव्वनाणगहणं । पच्चक्खाणं सुधम्मसवणं च ॥ कुज्जा सइ जह सत्ति । तवसज्झायाइजोगं वा ॥१॥ अन्यच्च—भोअणसमए सयणे । विबोहणे पवसणे भए वसणे ॥ पंचनमोक्कारं खलु । समरेज्जा सव्वकज्जेसु ॥ १ ॥ एवं तयोः शिक्षां दत्वा साधुरन्यत्र विजहार. तौ दंपती स्वगृहे गतौ साधूपदीष्टं धर्मानुष्टानं कुरुतः. कालक्रमेण ताभ्यां यतिधर्मः प्रतिपन्नः. कालं कृत्वा धनः सौधर्मदेवलोके देवत्वेनोत्पन्नः. सा स्त्री तु तस्यैव मित्रदेवत्वेनोत्पन्ना. तत्र सुरसुखमनुभूय धनदेवजीवो वैताढ्ये सूरतेजोराज्ञः पुत्रश्चित्रगतिनामा विद्याधरराजो जातः, धनवत्यपि कस्यचिद्राज्ञः कन्या जाता, परिणीता च चित्रगतिनैव. तत्र मुनिधर्मं कृत्वा ' माहिंदे धणो समाणिओ इयरो य तम्मित्तो जाओ, तत्तो चुऊण धणो अवराजिओ नाम राया जाओ, सा च पिईमई तस्स पत्ती. काउं समणधम्मं गयाइं ' द्वावपीमावारण्यकल्पे मित्रदेवौ जातौ, ततश्च्युतो धनदेवजीवः शंखराजा जातः, धनवतीजीवश्च तस्यैव कांता जाता. तत्र शंखराजा

प्रतिपन्नमुनिधर्मो विंशतिस्थानकैर्निबद्धतीर्थंकरनामगोत्रः कालं कृत्वाऽपराजितविमाने समुत्पन्नः. तत्कांतापि धर्मप्रभावेण तत्रैवोत्पन्ना. धनजीवस्ततश्च्युत्वा सौर्यपुरे नगरे दशदशाराणां मध्ये ज्येष्ठस्य समुद्रविजयस्य राज्ञो भार्यायाः शिवादेव्याः कुक्षौ चतुर्दशमहास्वप्नसूचितः कार्तिककृष्णद्वादश्यां पुत्रत्वेनोत्पन्नः. उचितसमये श्रावणशुक्लपंचम्यां प्रसूता शिवादेवी, जातो दारकः, दिक्कुमारिकाविहितजातकर्मानंतरं सुरासुरैर्मेरुमस्तके जन्माभिषेके कृते सति राज्ञापि वर्धापनं कारितं. अस्मिंश्च गर्भगते कदाचित् स्वप्ने शिवादेव्याऽरिष्टरत्नमयो नेमिर्दृष्टः, अतोऽरिष्टनेमिरित्यस्य नाम कृतं. अयं कुमारोऽष्टवार्षिको जातः.

अत्रांतरे कृष्णेन कंसे निपातिते जीवयशावचनेन यादवानामुपरि क्रुद्धो जरासिंधुराजा, तच्छंकया सर्वेऽपि यादवाः पश्चिमसमुद्रं यावद्गताः. तत्र केशवाराधितवैश्रमणेन कृता सर्वकांचनमयी द्वादशयोजनायामा नवयोजनविस्तारा द्वारिकानाम्नी नगरी. तत्र सुखेन यादवास्तिष्ठंति. क्रमेण निहते जरासिंधौ रामकेशवौ भरतार्धस्वामिनौ जातौ. अरिष्टनेमिर्भगवान् यौवनमनुप्राप्तः. विषयसुखपराङ्मुखोऽपि मित्रैः प्रेर्यमाणोऽसौ नानाविधक्रीडां करोति. अन्य-

दा समानवयस्कैरनेकराजकुमारैः सह क्रीडन् स गतो नारायणस्यायुधशालायां. तत्र दृष्टान्यनेकानि देवाधिष्ठितान्यायुधानि. तत्र दिव्यं कालावर्त्तं धनुः कौतुकेन गृह्णन् नेमिरायुधपालेन भणितः, कुमार! किमनेनाशक्यानुष्ठानेन? न हि नारायणमंतरेणान्यः कोऽपि नर इदं धनुरारोपयितुं शक्तः. तदा ईषद्धसित्वा नेमिना तद्धनुर्लीलयैवारोपितं, आस्फालिता जीवा, तस्याः शब्देन मेदिनी कंपिता, विस्मिताः सर्वेऽप्यायुधशालिका नराः. ततस्तद्धनुर्मुक्त्वा नेमिना शंखो गृहीतः पूरितश्च. तच्छब्देन सर्वं जगद्बधिरितं, कंपिता भूमिः, गिरिशिखराणि तुत्रुटुः, सा नगरी तु विशेषाच्चकंपे. ततः कृष्णश्चिंतयति, किमेष प्रलयकालकलनामापन्नोऽयं शंखनादः श्रूयते? तावताऽऽयुधपालेन कृष्णस्य यथार्थो व्यतिकरः कथितः. ततो नेमिकुमारपराक्रमेण विस्मितो हरिर्बलदेवंप्रत्येवं बभाण. यस्य नेमिकुमारस्यैतादृशं सामर्थ्यमस्ति, स वर्धमानो मद्राज्यं सुखेन लास्यति. ततोऽस्य बलं परीक्ष्य राज्यरक्षणोपायं चिंतयामः. बलदेवेन भणितमलमनयाऽलीकशंकया, येनायं पूर्वं केवलिभिर्निर्दिष्टो द्वाविंशतितमो जिनः, त्वं पुनर्भरतार्धस्वामी नवमवासुदेवः. अयं च भगवानकृतराज्य एव परित्यक्तसकलसावद्ययोगः

प्रव्रज्यां ग्रहीष्यति.

एवं निरंतरं वलदेवेन राज्यहरणशंकया वार्यमाणोऽपि कृष्णः कदाचिदुद्याने गत्वा नेमिनंप्रत्येवमाह—कुमार! निजनिजवलपरीक्षार्थमावां वाहुयुद्धेन युध्यावः. नेमिना भणितं किमनेन वुधजननिंदनीयेन वाहुयुद्धेन? वाग्युद्धेनैवावां युध्यावः. वाहुयुद्धेन हारितस्य तव महानयशःप्राग्भारो भविष्यति. कृष्णेनोक्तं क्रीडया युध्यतोरावयोः कीदृशोऽयमयशःसमूहः? ततो भगवता नेमिना स्ववाहुः प्रसारितः, कथितं चायं मदीयो वाहुर्यदि भवता नामितस्तदा त्वया जितं, मया च हारितमिति. ततः कृष्णेन सर्वशक्त्यांदोलितोऽपि भगवद्वाहुर्न मनाक् चलितः. यथास्य भगवतो मनो निश्चलं तथा वाहुरपि निश्चल एवेति जनैः प्रशंसा कृता. ततः परमचमत्कारं गतस्य स्वराज्यहरणशंकाकुलितचेतसो नारायणस्य कियान् कालोऽतिक्रांतः. अन्यदा नेमिर्यौवनं प्राप्तो विषयसुखनिःपिपासोऽपि समुद्रविजयादिना विवाहार्थं भृशमुक्तोऽपि न विवाहमंगीकुरुते. ततः समुद्रविजयादिभिः केशवस्यैवमुक्तं, केशव! तथा कुरु? यथा नेमिर्विवाहमंगीकुरुते. कृष्णेनापि रुक्मिणीप्रमुखाः स्वभार्याः

प्रेरिताः, ताभिर्जलकेलिकरणपूर्वकमेवं श्रीनेमिनाथस्योक्तं, स्वामिन्! लोकोत्तरं तव रूपं, निरुपमाः सौभाग्यादयोऽनंतास्त्वयि गुणाः, निरामयस्तव देहः, सुरसुंदरीणामप्युन्मादजनकं तव तारुण्यं. ततोऽनुरूपदारसंग्रहेण सफलं कुरु दुर्लभं मनुष्यत्वं. ततो हसित्वा नेमिनाथेन भणितं मुग्धानामशुचिस्वरूपाणां बाहुदोषालयानां तुच्छसुखनिबंधनानामस्थिरसंगमानां रमणीनां संगमेन न भवति नरत्वं सफलं. अपि चैकांतशुद्धाया निष्कलंकाया निरुपमसुखायाः शाश्वतसंगमायाः सिद्धिवध्वा एव संगमेन नरत्वं सफलं भवति. यतः—माणुसत्ताइसामग्गी । तुच्छभोगाण कारणा रयणं च कोडिआइच्च । हारिंति अबुहा जणा ॥ १ ॥ अहं सिद्धिवधूनिमित्तमेव यतिष्ये.

नेमेरयमभिप्रायस्ताभिः कृष्णाय निवेदितः. कृष्णेन च नेमिः स्वयं भणितः, ऋषभादयस्तीर्थकरा दारसंग्रहं कृत्वा संतानपरंपरां वर्धयित्वा स्वेष्टलोकमनोरथान् पूरयित्वा पश्चिमवयसि निष्क्रांताः, शिवं प्राप्ताश्च. त्वमपि तत्तुल्यस्तत्रैव मोक्षे यास्यसीति, दशारचक्रसंतोषाय किं न पाणिग्रहणं करोषि? इति कृष्णः प्रकामं विवाहाग्रहं कृतवान्. नेमिस्तु

मोनमालंब्य स्थितः. कृष्णेन चिंतितमनिषिद्धमनुमतमिति न्यायादंगीकृत एव नेमिना विवाह इति दशारचक्रायोक्तवान्. संजातहर्षेण दशारचक्रेण भणितः कृष्णस्त्वमेव नेम्यनुरूपां कन्यां गवेषय? ततः कृष्णेन गवेषयतोग्रसेनपुत्री राजीमती कन्या नेमितुल्यरूपाप्ता. सा पुनर्धनवतीजीवोऽपराजितविमानाच्च्युत्वा तत्रोत्पन्नास्तीति. इयमेव नेम्यनुरूपेति तदर्थं कृष्णेनोग्रसेनः प्रार्थितः. तेनापि मनोरथातीतोऽयमनुग्रह इति भणित्वा कन्या दत्ता. ततः कारितं कुलद्वयेऽपि वर्धापनं, गृहीतं विवाहलग्नं, कारितः समस्तजातिवर्गस्य भोजनाच्छादनादिसत्कारः, प्राप्ते च लग्नदिवसे दिव्यरमणीभिः स्नापितोऽलंकृतो विभूषितो मत्तवारणमारूढः, समंतान्मिलितदशारचक्रबलदेववासुदेवादियादवपरिकरितः, पृष्टौ वादितानेककोटिप्रमाणवादित्रः, शिरोधृतातपत्रश्चामरैर्वीज्यमानः, पृष्टौ गायमानमंगलः, सर्वतो मागधैः कृतजयजयारवः, सुरनरसंघेन सर्वतो वीक्ष्यमाणः, सुरीभिर्नारीभिश्च प्रार्थ्यमानो नेमिकुमारः प्राप्तो महता विस्तरेणोग्रसेननृपद्वारपुरोरचितविवाहमंडपासन्नदेशं. राजीमत्यपि सर्वालंकारविभूषिता गवाक्षस्था नेमिं दृष्ट्वाऽऽनंदपरवशा जाता. एतदपि तदानीं न वेत्ति, काऽहं? किमत्रास्ति?

कोऽयं कालः? कीदृशी चेष्टेति. अत्रांतरे करुणारवं श्रुत्वा जानतापि नेमिना पृष्टः सारथिः, कोऽयं मरणभीरूणां प्राणिनामेष करुणारवः? तेन कथितं स्वामिंस्तव विवाहगौरवायानेकजनभोजनाय मेलिता अमी हरिणादयो जीवा व्यापादयिष्यंते, ते च सांप्रतमाक्रंदं कुर्वंतीति. नेमिराह सारथे! रथमितो निवर्तय? नाहं विवाहं करिष्ये. यत्रैतावतां प्राणिनां वधस्तेन विवाहेन मे समाप्तं, संसारपरिभ्रमणहेतुरेवायं विवाहः. नेमिवचनात्ते सर्वेऽपि प्राणिनो मुक्ता गताः स्वस्थानं सुखेन.

विरक्तचित्तं पश्चाद्वलमानं नेमिनमालोक्याऽकांडवज्रप्रहारताडितेव विह्वला राजीमती धरणीतले निपतिता मूर्छिता, ससंभ्रमेण सखीजनेन शीतलजलसिक्ता, तालवृंतेन वीजिता लब्धचेतनैवं विललाप. अहो! मयात्यंतदुर्लभे भुवननाथेऽनुरागं कुर्वत्याऽऽत्मा लघूकृतः. धिग् मम सुकुलोत्पत्तिं, धिग् मम रूपयौवनं, च धिग् मम कलाकुशलतां, येनाहं नेमिनाप्रतिपद्यापि मुक्ता. हे नाथ! मे जीवितं निर्गच्छति, अंगानि मे त्रुटंति, हृदयं मे स्फुटति, विरहाग्निज्वालाकुलितोऽयं ममात्मा आहारो मे क्षारसदृशः, जलचंदनचंद्रिकादयः पदार्था॰

ताग्निसदृशाः स्वामिंस्तव विरहे मम जायंते, स्वामिन्! मां त्वं किं त्यजसि? किं मम विरुद्धं त्वया श्रुतं दृष्टं वा? जन्मांतरकृतं ममाशुभकर्मैवोदितं, स्वामिन्नेकवारं ममाभिमुखं दृष्टिं देहि? प्रेमपरायां मयि त्वं सर्वथा निरपेक्षो माभूः? अथवा सिद्धिवधूत्कंठितस्य तव हृदयं सुरसुंदर्योऽपि न हरंति, मनुष्यस्त्रीणां तद्धरणे का गणना? एवं महाशोकभरार्दिता विलपंती राजीमती सखीजनेन भणिता, अलंघनीयो भवितव्यतापरिणामः, ततो धीरत्वावलंबनं कुरु? अलमत्र विलपितेन, सत्वप्रधाना राजपुत्र्यो भवंतीति भणित्वा संस्थापिता. द्वितीयदिनेऽनया सखीनां पुर एवमुक्तं, अद्य मयेदृशः स्वप्नो दृष्टः, यथा मद्द्वारदेशे एको दिव्यपुरुषो देवदानवपरिवृतः सिंहासनमारूढः, तस्याभ्यर्णेऽनेकजंतवः समायाताः, अहमपि तत्रैव गता. स चतुरः शारीरमानसदुःखप्रणाशकानि पादपफलानि तेभ्यो ददन्मया प्रार्थितो भगवन्! ममाप्येतानि फलानि देहि? तेन तानि दत्तानि. तदनंतरं प्रतिबुद्धाहं. सखीभिर्भणितं हे प्रियसखि! मुखकटुकोऽपि स्वप्नोऽयं शीघ्रं परिणामसुंदरो भविष्यति. इतश्च नेमिनाथः समुद्रविजयशिवादेव्यादिभिर्विविधैरुपायैः पाणिग्रहणार्थं प्रार्थ्यमानोऽपि नैव तमर्थ-

मंगीचकार. अस्मिन्नवसरे लोकांतिकास्तत्रागत्यैवमूचिरे, भगवन्? सर्वजगज्जीवहितं त्वं तीर्थं प्रवर्तयेति भणित्वा जननीजनकादीनामंतिके गत्वैवमूचुः, भवत्कुलोत्पन्नः श्रीनेमिः प्रव्रजिषुरस्तीति को भवतां विषादः! नेमिरपि मातृपित्रोः पुरः कृतांजलिरेवमुवाच, इच्छामि युष्मदनुज्ञातः प्रव्रजितुं. इदं च श्रुत्वा शोकसंघट्टनिरुद्धहृदया धरणीतले निपतिता चूर्णितभुजवलया शिवादेवी, मिलितं तत्र दशारचक्रं, जलाभिषेकादिना लब्धसंज्ञा सा भणितुमारब्धा, वत्स! कथमस्माकं मनोरथं मूलादुच्छिंदसि? कथं वा त्वं सत्पुरुषोऽपि प्रार्थनाभंगं करोषि? दशारचक्रस्यापि मनःसंतापं किं करोषि? कथं च वयमुग्रसेनराज्ञो मुखं दर्शयिष्यामः? कथं च त्वदेकचित्ता सा वराकी राजीमती भविष्यति? ततोऽस्मदुपरोधेन तस्याः पाणिग्रहणं कुरु? ततः पश्चात्प्रव्रज्यां गृह्णीयाः? भणितं च भगवता मातर्मनःसंतापं माकुर्याः, सर्वभावानामनित्यत्वं भावय? विषयाणां विपाकदारुणत्वमतृप्तिजनकत्वं चास्ति. यौवनधनादीनां चंचलत्वं, संध्यासमयाभ्रतुल्यतां च विलासानामवेहि? अकांडप्रहारत्वं मृत्योः जन्मजरामरणरोगादिप्रचुरत्वं च संसारस्यालोचय? ततो मातर्मामनुजानीहि भवप्रदीपान्निर्ग-

त्रांतं. अत्रांतरे दशारचक्रेण नेमिर्भणितः, कुमार! संप्रति त्वया परित्यक्तस्य यादवलोकस्य न कश्चित् त्राणमिति, ततः कंचित्कालं प्रत्यक्षस्व? तडुपरोधशीलया वाण्या भगवता संवत्सरमेकं यावत् स्थितिरंगीकृता, दत्तं च तस्मिन्नेव सांवत्सरिकं दानं. प्रतिपूर्णे च संवत्सरे मातृपित्रादीनामापृच्छ्य श्रावणशुक्लषष्ठ्यां स देवमनुष्यपर्षदा परिवृतो नगर्या निर्गत्य सहस्राम्रवनोद्याने, त्रीणि वर्षशतानि गृहस्थावासे स्थित्वा षष्ठभक्तेन पुरुषसहस्रेण समं निष्क्रांतस्तपःसंयमरतो विहरति. इतश्च भगवतो भ्राता रथनेमिः प्रीतिपर एकांते राजीमतीमेवमाह. सुभ्रु! मा कुरु विषादं? सौभाग्यनिधिं कः को न प्रार्थयति? भगवान् पुनर्नेमिनाथो वीतरागत्वान्न करोति विषयानुबंधं, ततः प्रतिपद्यस्व मां? सर्वकालमहं त्वदाज्ञाकारी भविष्यामि. तया भणितं यद्यहं नेमिनाथेन परित्यक्ता, तथाप्यहं तं न परित्यजामि. यतोऽहं भगवत एव शिष्यणी भविष्यामि. ततस्त्वमेनं प्रार्थनानुबंधं त्यज? ततः स कतिचिद्दिनानि यावन्मौनेन स्थितः. अन्यस्मिन् दिने पुनरपि तेन सा प्रार्थिता. ततस्तया तत्प्रतिबोधार्थं तत्प्रत्यक्षमेव क्षीरं पीत्वा मदनफलपानेन वांत्वा, तच्च सौवर्णिककच्चोलके क्षिप्त्वा समुपनीतं

रथनेमेर्भणितं चेदं पिब? तेनोक्तं कथं वांतं पिबामि? तया भणितं त्वं किमेतज्जानासि? स आह बालोऽप्येतज्जानाति. साख्यत्तर्हि नेमिनाथवांतां मां कथं त्वं पातुमिच्छसि? इदं राजीमत्या वचः श्रुत्वा स उपरतः. राजीमत्यपि दीक्षाभिमुखी तपोविधानैः शरीरं शोषयंती तिष्ठति. अत्रांतरे चतुःपंचाशद्दिनपर्यंते भगवतः श्रीनेमिनाथस्य रैवतगिरिसहस्राम्रवणे केवलज्ञानमुत्पन्नं. देवैः कृतं समवसरणं. तत्र समायातासु द्वादशपर्षत्सु देशना कृता. तां च श्रुत्वा बहवः प्राणिनः प्रव्रजिताः. केचिद्गणधरा जाताः, स्थापितं भगवता तीर्थं, राजीमत्यपि विविधकन्याभिः सह प्रव्रजिता. रथनेमिरपि संविग्नस्तदानीमेव प्रव्रजितः. राजीमती तदानीमेवमचिंतयत्, यो मया तदानीं दिव्यपुरुषस्वप्नो दृष्टः सोऽद्य सफलो जातः. अन्यदा राजीमती साध्वीभिः समं भगवतो वंदनार्थं रैवतगिरिं गच्छंत्यकस्मान्मेघवृष्ट्याऽभ्याहता. सर्वा अपि साध्व्योऽन्यगुहासु निलीनाः. राजीमत्यप्येकस्यां गुहायां प्रविष्टा. तत्र च पूर्वं रथनेमिसाधुः प्रविष्टोऽस्ति, परमंधकारप्रदेशे स्थितोऽयं न दृष्टस्तया. ततस्तया चीवराणि सर्वाण्यप्युत्तारितानि, एवं सा निरावरणा जाता. तस्याः शरीरशोभां दृष्ट्वा, इंद्रियाणां च दुर्दांततयाऽ-



२२

नादिनवाच्यस्ततया च विषयाग्निप्रायेण स परवशो जातः, तादृशो रथनेमिश्च तया दृष्टः. ततो नयभ्रांता सा सद्य आत्मानं प्रावृत्य बाहुभ्यां संगोप्य च स्थिता. तेन भणिता हे सुतनु! तवानुरागवशेनाहमिदं शरीरमरतिपरिगतं धर्तुं न शक्नोमि. ततः कृत्वानुग्रहं प्रतिपद्यस्व मया समं विषयसेवनं? पश्चात् संजातमनःसमाधी आवां निर्मलं तपःसंयमं चरिष्यावः. तयापि साहसमवलंब्य प्रगल्भवचनैः स भणितः, महाकुलप्रसूतस्य तव किमिदं युक्तं स्वयं प्रतिपन्नस्य व्रतस्य भंजनं? जीवितमपि सत्पुरुषास्त्यजंति, न पुनर्व्रतलोपं कुर्वन्ति. ततो महाभाग! मनःसमाधिं कृत्वा चिंतय विषयविपाकदारुणत्वं, शीलखंडनस्य नरकादिकं च फलं? न च विषयसेवनेन मनःसमाधिः, किं तु भूरितराऽरतिर्भविष्यति. विषयसेवनेन लब्धप्रसरस्य मनसः प्रकाममिच्छा वर्धते, उक्तं च—भुत्ता दिव्वा भोगा। सुरेसु तह य मणुएसुं॥ न य संजाया तत्ति। अतत्तिरंकस्सवि जीअस्स॥ १॥ इत्यादिवाक्यैस्तयाऽनुशासितः स संबुद्धः, सम्यगहं प्रतिबोधितस्त्वयेति भणन्नात्मानं निंदयित्वा, राजीमतीं च भृशं स्तुत्वा स गतः साधुसभामध्ये, सापि च साध्वीसभामध्ये गतेति. अरिष्टनेमिर्भगवान् मरकतसमवर्णो

दशधनुरुच्छ्रितदेहः शंखलांछनस्त्रीणि वर्षशतानि गृहवासे स्थितः, चतुःपंचाशद्दिनानि छाद्मस्थ्ये स्थितः, चतुःपंचाशद्दिनोनानि सप्तशतवर्षाणि केवलपर्यायेण विहृत्यानेकभव्यान् प्रतिबोध्य च सर्वं वर्षसहस्रायुः परिपाल्य रैवतगिरावाषाढशुक्लाष्टम्यां सिद्धिं गतः. क्रमेण रथनेमिराजीमत्यावपि सिद्धिं जग्मतुः. इत्यरिष्टनेमिचरित्रं. सूलमग्रे लिख्यते—

॥ मूलम् ॥—सोरियपुरंमि नयरे । आसि राया महड्ढिए ॥ वसुदेवत्ति नामेणं । रायलक्खणसंजुए ॥ १ ॥ व्याख्या—सौर्यपुरे नाम्नि नगरे वसुदेव इति नाम्ना राजासीत्. यद्यपि सौर्यपुरे समुद्रविजयप्रमुखा दश दशार्हा भ्रातरो विद्यंते, तेषु दशसु लघुर्भ्राता वसुदेवोऽस्ति, तथापि वसुदेवपुत्रो विष्णुरभूत्. तेन वसुदेवस्यैव वर्णनं कृतं. कीदृशो वसुदेवः? महर्द्धिकः, छत्रचामरादिविभूतियुक्तः. पुनः कीदृशः? राजलक्षणसंयुतः, हस्तपादयोस्तलेषु राज्ञो लक्षणानि चक्रस्वस्तिकांकुशवज्रध्वजछत्रचामरादिभिः सहितः, अथवौदार्यधैर्यगांभीर्यादिसहितः.

॥ मूलम् ॥—तस्स भज्जा दुवे आसि । रोहिणी देवई तहा ॥ तासि दोह्नंपि दो पुत्ता। अइट्ठा रामकेसवा ॥ २ ॥ व्याख्या—तस्य वसुदेवस्य द्वे भार्ये आस्तां, रोहिणी तथा देव-

की. यद्यपि वसुदेवस्य द्वासततिसहस्रं दारा आसन्, तथाप्यत्रोनयोरेव कार्याद्रोहिणीदेवक्योरेव ग्रहणं कृतं. तयो रोहिणीदेवक्योर्द्वयोर्द्वौ पुत्रावभूतां. तौ पुत्रौ कौ? रामकेशवौ. कीदृशौ तौ? अभिष्टौ मातापित्रोरधिकवल्लभौ. ॥ २ ॥

॥ मूलम् ॥—सोरियपुरंमि नयरे । आसि राया महड्ढिए ॥ समुद्दविजए नामं । रायलक्खणसंजुए ॥ ३ ॥ व्याख्या—सौर्यपुरे नगरे समुद्रविजयो राजा महर्द्धिक आसीत्. कीदृशः समुद्रविजयः? राजलक्षणसंयुक्तः. अत्र पुनः सौर्यपुराभिधानं समुद्रविजयवसुदेवयोरेकत्रावस्थितिदर्शनार्थं. ॥ ३ ॥

॥ मूलम् ॥—तस्स भजा सिवानाम । तीय पुत्ते महायसे ॥ भयवं अरिट्ठनेमित्ति । लोगनाहे दमीसरे ॥ ४ ॥ व्याख्या—तस्य समुद्रविजयस्य राज्ञः शिवानाम्नी भार्यासीत्. तस्याः शिवादेव्याः पुत्रो भगवानैश्वर्यधारी अरिष्टनेमिरासीत्. चतुर्दशस्वप्नदर्शनानंतरमेकमरिष्टरत्नमयं रथचक्रं सा ददर्श, तेनारिष्टनेमिरिति नाम प्रदत्तं. कथंभूतोऽरिष्टनेमिः? महायशा महाकीर्तिः, पुनः कीदृशोऽरिष्टनेमिः? लोकनाथश्चतुर्दशरज्जुप्रमाणलोकप्रभुः. पुनः की-

दृशोऽरिष्टनेमिः? दमीश्वरः, कुमारत्वेऽपि येन कंदर्पो जितः. तस्माद्दमिनां जितेंद्रियाणामीश्वरो दमीश्वरः. ॥ ४ ॥

॥ मूलम् ॥—सोरिठ्ठनेमिनामो उ । लख्कणस्सरसंजुउ ॥ अट्ठसहस्सलख्कणधरो । गोयमो कालगछवी ॥ ५ ॥ व्याख्या—अथारिष्टनेमेर्वर्णनमाह—सोऽरिष्टनेमिनामा भगवानष्टसहस्रलक्षणधरो वर्तते, अष्टभिरधिकं सहस्रमष्टसहस्रं, लक्षणानामष्टसहस्रं लक्षणाष्टसहस्रं, तद्धरतीति लक्षणाष्टसहस्रधरः. अष्टसहस्रलक्षणानि धरतीति वाऽष्टसहस्रलक्षणधरः. पुनः कीदृशः? लक्षणस्वरसंयुतः, लक्षणैः सहितः स्वरो लक्षणस्वरस्तेन संयुतः. स्वरस्य लक्षणानि माधुर्यलावण्याऽव्याहतगांभीर्यादीनि, तैः संयुतः. तीर्थंकरस्य हि अष्टाधिकसहस्रलक्षणानि शरीरे भवंति. स्वस्तिकवृषभसिंहश्रीवत्सशंखचक्रगजाश्वछत्राब्धिप्रमुखाणि लक्षणानि हस्तपादादौ भवंति. पुनः कीदृशोऽरिष्टनेमिः? गौतमो गौतमगोत्रीयः, पुनः कीदृशः? कालकछविः श्यामकांतिः. ॥ ५ ॥

॥ मूलम् ॥—वज्जरिसहसंघयणे समचउरसो झसोयरो ॥ तस्स राइमईकन्नं । भज्जं

जायइ केसवो ॥ ६ ॥ व्याख्या—पुनः कीदृशः सः? वज्रं कीलिका, ऋषभः पट्टः, नाराच उभयपार्श्वयोर्मर्कटबंधः, एभिः संहननं शरीररचना यस्य स वज्रर्षभनाराचसंहननः. पुनः कीदृशः? समचतुरस्रः प्रथमसंस्थानवान्, यः पद्मासने स्थितः सन् चतुःषु पार्श्वेषु सदृशशरीरप्रमाणो भवति, स समचतुरस्रसंस्थानवानुच्यते. अथ तस्यारिष्टनेमिकुमारस्य केशवः कृष्णो राजीमतीं कन्यां भार्यायै याचते. कृष्णदेवो राजीमत्या जनकपार्श्वे राजीमतीं कन्यां नेमिनाथस्य भार्यार्थं याचते इति भावः. ॥ ६ ॥

॥ मूलम् ॥—अह सा रायवरकन्ना । सुसीला चारुपेहिणी ॥ सव्वलक्खणसंपन्ना । विज्जुसोयामणिप्पभा ॥ ७ ॥ व्याख्या—अथानंतरं सा वरराजकन्या राजीमती कीदृशी वर्तते? तद्वर्णनमाह—राजसु वरो राजवरः, षोडशसहस्रमुकुटबद्धभूपेषु श्रेष्ठ उग्रसेनो राजा, तस्य कन्या पुत्री राजवरकन्या. सा कीदृशी? सुशीला शोभनाचारा, पुनः कीदृशी? चारुप्रेक्षणी, चारु प्रेक्षणमवलोकनं यस्याः सा चारुप्रेक्षणी सुंदरावलोकना, सुंदरनयना वा. पुनः कीदृशी? सर्वलक्षणसंपन्ना, चतुःषष्टिकामिनीकलाकोविदा. पुनः कीदृशी? विद्युत्सौदा-

मिनीप्रना, विशेषेण द्योतते इति विद्युत्, सा चासौ सौदामिनी च विद्युत्सौदामिनी, तद्व-त्प्रन्ना यस्याः सा विद्युत्सौदामिनीप्रन्ना, स्फुरद्विद्युत्कांतिः. ॥ ७ ॥

॥ मूलम् ॥—अहाह जणउ तीसे । वासुदेवं महड्डियं ॥ इहागब्ञउ कुमारो । जा से कन्नं दलामहं ॥ ८ ॥ व्याख्या—अथ कृष्णेन नेमिकुमारार्थं कन्याया याचनानंतरं तस्या राजीमत्या जनको महर्द्धिकं वासुदेवं कृष्णमाह, हे वासुदेव ! कुमारोऽरिष्टनेमिरिहास्मद्गृहे आगब्ञतु, 'जा' इति येन कारणेन 'से' इति तस्मै अरिष्टनेमिकुमाराय तां राजीमतीं कन्यामहं ददामि. आसन्नक्रोष्टुकिनैमित्तिकादिष्टे लग्ने विवाहविधिनोपढौकयामि. ॥ ८ ॥

॥ मूलम् ॥—सव्वोसहीहिंएहविउ । कयकोउअमंगलो ॥ दिव्वजुअलं परिहिउ । आ-हरणेहिं विभूसिउ ॥ ए ॥ व्याख्या—अथारिष्टनेमिकुमारः क्रोष्टुक्यर्पितलग्ने सर्वाभिरौषधीभिः, जयाविजयाशल्यविशल्यारुद्धिवृध्यादिभिः स्नपितः, पुनः कृतकौतुकमंगलः, पुनः कीदृशः ? परिधृतदिव्ययुगलः, परिहितं दिव्यं विवाहप्रस्तावाद्देवदुष्ययुगलं येन स परिहितदिव्ययुगलः, प्राकृतत्वाच्छब्दविपर्ययः. पुनः कीदृशः ? आभरणैः कुंमलमुकुटहारादिभिर्वि-

भूषितोऽलंकृतः ॥ ए ॥

॥ मूलम् ॥—मत्तं च गंधहत्थिं च । वासुदेवस्स जट्ठगं ॥ आरूढो सोहई अहियं । सिरे चूडामणि जहा ॥ १० ॥ व्याख्या—च पुनररिष्टनेमिकुमारो वासुदेवस्य ज्येष्टकं मत्तं गंधहस्तिनमारूढोऽधिकं शोभते. क इव? शिरसि मस्तके चूडामणिरिव, यथा मस्तके मुकुटः शोभते, तथा नेमिः सर्वेषां यादवानां मध्ये चूडामणिसदृशो विराजते. ॥ १० ॥

॥ मूलम् ॥—अह उस्सिएण छत्तेण । चामराहियसोहिउ ॥ दसारचक्केण य सो । सव्वउ परिवारिउ ॥ ११ ॥ चउरंगिणीए सेणाए । रइयाए जहक्कमं ॥ तुडियाण सन्निनाएण । दिव्वेणं गयणं फुसा ॥ १२ ॥ एयारिसीए इड्ढीए । जुइए उत्तिमाइय ॥ नियगाउ नवणाउ । णिज्जाउ वण्हिपुङ्गवो ॥ १३ ॥ तिसृभिः कुलकं ॥ व्याख्या—अथानंतरं वृष्णिपुङ्गवो नेमिकुमारो निजकाद्भवनात्स्वकीयगृहादेतादृश्या समीपतरवर्तिन्या ऋद्ध्या, पुनरुत्तमया प्रधानया द्युत्या दीप्त्या पाणिग्रहणाय निर्गतः, उग्रसेनगृहंप्रति स्वमंदिरान्निःसृत इत्यर्थः. कीदृश्या ऋद्ध्या? तां ऋद्धिपद्धतिमाह—स नेमिकुमार उच्छ्रितेनोच्चैः कृतेन छत्रेण मेघाडंबरछत्रेण, च

पुनश्चामराभ्यामुभयपार्श्वयोर्वीज्यमानः शोभितः, पुनः स नेमिकुमारो दशार्हचक्रेण यादवसमूहेन सर्वतः परिवृतः. ॥ ११ ॥ पुनः कीदृशः? चतुरंगिण्या सेनया परिवृतः, पुनः कीदृशः? त्रुटितानां तूर्याणां भेरिमृदंगपटहकरताललतालादीनां दिव्येन देवयोग्येन सन्निनादेन सम्यक्शब्देन सहितः. कीदृशेन तूर्याणां निनादेन? गगनस्पृशा, गगनं स्पृशतीति गगनस्पृक्, तेनाकाशव्यापिना. ॥ १३ ॥

॥ मूलम् ॥—अह सो तत्थ निज्जंते । दिस्स पाणे भयद्दुए ॥ वाडेहिं पंजरेहिं च । संनिरुद्धे सुदुक्खिए ॥ १४ ॥ जीवियंतं तु संपत्ते । मंसट्ठा भक्खियव्वए ॥ पासित्ता से महापन्ने । सारहिं इणमब्बवी ॥ १५ ॥ युग्मं ॥ व्याख्या—अथानंतरं स नेमिकुमारः सारथिमिदमब्रवीत्, किं कृत्वा? तत्र विवाहमंडपासन्ने निर्यन्नधिगच्छन् भयद्रुतान् भयव्याकुलान् प्राणान् जीवान् स्थलचरान् मृगशशकशूकरतित्तिरलावकादीन् मांसार्थं भक्षितव्यान् 'पासित्ता' इति विचार्य दृष्ट्वा, तादृशान् हृदि निधाय, कथंभूतान् प्राणान्? वाटकैर्निर्भित्तिभिः कंटकवाटिकादिभिर्वा निरुद्धानतिशयेन यंत्रितान्, पुनः पंजरैर्लोहवंशशलाकादिविनिर्मितैः प-

ह्निनियंत्रणस्थानैः संनिरुद्धान्, अत एव सुदुःखितान्. पुनः कीदृशान्? जीवितांतं संप्राप्तान्, ते प्राणिन एवं जानंत्यस्माकं मरणमागतं, कुतोऽस्माकं जीवितमिति मरणदशां संप्राप्तान्. कीदृशो नेमिकुमारः? महाप्राज्ञो महाबुद्धिसहितः, अर्थाद् ज्ञानत्रयेण विस्तीर्णबुद्धिरित्यर्थः.

॥ मूलम् ॥—कस्स अट्ठा इमे पाणा। एते सव्वे सुहेसिणो॥ वाडेहिं पंजरेहिं च। संनिरुद्धा य अच्छहि ॥ १६ ॥ व्याख्या—सारथिं किमब्रवीदित्याह—हे सारथे! इमे प्रत्यक्षं दृश्यमानाः सर्वे प्राणा वाटकैश्च पुनः पंजरैः संनिरुद्धा अत्यंतं नियंत्रिताः कस्यार्थं कस्य हेतोः? 'अच्छहि' इति तिष्ठंति. कीदृशा इमे प्राणाः? सुखार्थिनः, सर्वे संसारिणो जीवाः सुखार्थिनः संति, किमर्थं दुःखिनः क्रियंते? भगवान् जानन्नपि जीवदयाप्रकटीकरणार्थं सारथिं पप्रच्छेति भावः. ॥ १६ ॥

॥ मूलम् ॥—अह सारही तओ भणइ। एए भद्दा उ पाणिणो॥ तुज्झं विवाहकज्जंमि। भोयावेउं बहुं जणं ॥ १७ ॥ व्याख्या—अथ नेमिकुमारवाक्यश्रवणानंतरं ततः सारथिर्भणति, हे स्वामिन्नेते भद्राः प्राणिनो युष्माकं विवाहकार्ये बहुजनान् यादवलोकान् भोज-

यितुमेकत्र मेलिताः संति. ॥ १७ ॥

॥ मूलम् ॥—सोऊण तस्स वयणं । बहुपाणिविणासणं ॥ चिंतेइ से महापन्ने । साणुक्कोसे जिए हिउं ॥ १८ ॥ व्याख्या—से इति स नेमिकुमारस्तस्य सारथेर्वचनं श्रुत्वा चिंतयति. कीदृशः सः? महाप्राज्ञो महाबुद्धिमान्. पुनः कीदृशः सः? जीवे हितो जीवविषये हितेप्सुः. पुनः कीदृशः? सानुक्रोशः, सह अनुक्रोशेन वर्तते इति सानुक्रोशः सदयः, अथवा जीवे हि निश्चयेन सानुक्रोशः सकरुणः. तु शब्दः पादपूरणे. कीदृशं सारथेर्वचनं? बहुप्राणिविनाशनं बहुजीवानां विघातकारकं. ॥ १८ ॥

॥ मूलम् ॥—जइ मज्झ कारणा एए । हम्मंते सुबहुजिया ॥ न मे एयं तु निस्सेसं । परलोए भविस्सई ॥ १९ ॥ व्याख्या—तदा नेमिकुमारः किं चिंतयतीत्याह—यदि मम विवाहादिकारणेनैते सुबहवः प्रचुरा जीवा हनिष्यंते मारयिष्यंते, तदैतद्धिंसाख्यं कर्म परलोके परभवे निःश्रेयसं कल्याणकारि न भविष्यति. परलोकभीरुत्वस्यात्यंतमभ्यस्ततयैवमभिधानं, अन्यथा भगवतश्चरमदेहत्वादतिशयज्ञानत्वाच्च कुत एवंविधा चिंतेति भावः. ॥ १९ ॥

॥ मूलम् ॥—सो कुंडलाण जुअलं । सुत्तगं च महाजसो ॥ आभरणाणि य सव्वाणि । सारहिस्स पणामए ॥ २० ॥ व्याख्या—स नेमिकुमारो महायशाः, नेमिनाथस्याभिप्रायात् सर्वेषु जीवेषु बंधनेभ्यो मुक्तेषु सत्सु सर्वाण्याभरणानि सारथये प्रणामयति ददाति. कानि तान्याभरणानि? कुंडलानां युगलं. पुनः सूत्रकं कटीदवरकं, चकारादाभरणशब्देन हारादीनि सर्वांगोपांगभूषणानि सारथेर्ददौ. ॥ २० ॥

॥ मूलम् ॥—मणपरिणामे य कए । देवा य जहोइयं समोइन्ना ॥ सव्वड्ढीए सपरिसा । निक्खमणं तस्स काउं जे ॥ २१ ॥ व्याख्या—तस्मिन्नेमिकुमारे मनःपरिणामे चित्ताभिप्राये दीक्षांप्रति कृते सति, लोकांतिकदेववचनात्सांवत्सरिकदाने दत्ते सति, देवाश्चतुर्विधा यथोचितं यथायोग्यं सर्वर्द्ध्या समवतीर्णास्तत्रागताः. किं कर्तुं? तस्य भगवतो नेमिकुमारस्य निःक्रमणमहोत्सवं दीक्षामहिमानं कर्तुं. जेशब्दः पादपूरणे. कीदृशा देवाः? सपरिषदः, सह तिसृभिः परिषद्भिर्वर्तंते इति सपरिषदः परीषत्सहिता इत्यर्थः. ॥ २१ ॥

॥ मूलम् ॥—देवमणुस्सपरिवुडो । सिवियारयणं तओ समारूढो ॥ निक्खिमिय वारगा-

ठ। रेवयंमि ठिर्ठ जयवं ॥ २२ ॥ व्याख्या—ततोऽनंतरं नेमिकुमारो जगवान् ज्ञानवान् दीक्षावसरज्ञो देवैर्मनुष्यैः परिवृत्तो देवमनुष्यपरिवृतः शिबिकारत्नमुत्तरकुरुनामकं समारूढो द्वारिकापुरितो निःक्रम्य निःसृत्य रेवते रेवताचले स्थितः. ॥ २२ ॥

॥ मूलम् ॥—उज्जाणे संपत्तो। उइन्नो उत्तमार्ज सीयार्ज ॥ सामस्सीए परिवुमो। अह निक्कमईहिं चित्ताहिं ॥ २३ ॥ व्याख्या—तत्र रेवताचले उद्याने सहस्राम्रनाम्नि वने संप्राप्तः. पुनरुत्तमायाः प्रधानायाः शिबिकाया उत्तीर्णः, सहस्रेण परिवृतः प्रधानपुरुषसहस्रेण संयुतः सन्. अथ चित्रायां चित्रानक्षत्रे निःक्रामति, दीक्षां गृह्णाति, पंचमहाव्रतोच्चारणं करोति. ॥ २३ ॥

॥ मूलम् ॥—अह सो सुगंधगंधिए। तुरियं मउयकुंचिए ॥ सयमेव लुंचई केसे। पंचमुठीहिं समाहिए ॥ २४ ॥ व्याख्या—अथ पंचमहाव्रतोच्चारणानंतरं स नेमिनाथः स्वयमेवात्मनैव त्वरितं केशान् पंचमुष्टिभिः कृत्वालुंचते. कीदृशः सन्? समाहितो ज्ञानदर्शनचारित्ररूपसमाधियुक्तः सन्. कीदृशान् केशान्? सुगंधगंधिकान् स्वभावतः सुरभिगंधान्. पुनः

कीदृशान्? मृदुककुंचितान्, मृदुकाश्च ते कुंचिताश्च मृदुककुंचितास्तान् सुकुमालान् कुटिलान्.

॥ मूलम् ॥—वासुदेवो य तं भणइ। लुत्तकेसं जिइंदियं ॥ इच्छियमणोरहे तुरियं। पावेसू तं दमीसर ॥२५॥ व्याख्या—तदा वासुदेवः कृष्णः, चकारात् समुद्रविजयादिनृपगणोऽपि तं नेमिनाथं जितेंद्रियं, पुनर्लुप्तकेशं कृतलोचमिति वचनं भणति, इत्याशीर्वादवाक्यं ददति. भो दमीश्वर! दमिनां जितेंद्रियाणामीश्वरो दमीश्वरः, तत्संबोधनं हे दमीश्वर! यतीश्वर! ईप्सितं वांछितं मनोरथं त्वरितं शीघ्रं, तमिति त्वं प्राप्नुहि? ॥ २५ ॥

॥ मूलम् ॥—नाणेण दंसणेणं। चरित्तेणं तहेव य ॥ खंतीए मुत्तीए। वड्ढमाणो भवाहि य ॥ २६ ॥ व्याख्या—पुनराशीर्वचनमाह–पुनर्हे स्वामिंस्त्वं ज्ञानेन दर्शनेन तथैव चारित्रेण, च पुनः क्षांत्या क्षमया, च पुनर्मुक्त्या निर्लोभत्वेन वर्धमानो 'भवाहि' इति भव?

॥ मूलम् ॥—एवं ते रामकेसवा। दसारा य बहूजणा ॥ अरिट्ठनेमिं वंदित्ता। अइगया बारगापुरिं ॥ २७ ॥ व्याख्या—एवममुना प्रकारेण रामकेशवौ, च पुनर्दशापि दशार्हाः, च पुनर्बहवोऽन्ये जनाश्चत्वारो वर्णा अरिष्टनेमिं स्वामिनं वंदित्वा स्तुत्वा नत्वा च द्वारिका-

पुरीमतिगताः प्रविष्टाः. ॥ २७ ॥

॥ मूलम् ॥—सोऊण रायकन्ना । पवज्जं सा जिणस्स उ ॥ नीहासा य निराणंदा । सोगेण य समुब्बया ॥ २८ ॥ व्याख्या—सा राजवरकन्योग्रसेननृपपुत्री राजीमती शोकेन समुच्चया समवस्तृताऽवष्टब्धा व्याप्ताभूदित्यर्थः. किं कृत्वा? जिनस्य नेमिनाथस्य प्रव्रज्यां दीक्षां श्रुत्वा. कथंभूता सा? निर्हासा निर्गतो हासो यस्याः सा निर्हासा हास्यरहिता. पुनः कीदृशा सा? निरानंदा आनंदरहिता. ॥ २८ ॥

॥ मूलम् ॥—राईमई विचिंतेइ । धीरत्थु मम जीवियं ॥ जाहं तेणं परिच्चत्ता । सेयं पव्वइउं मम ॥ २९ ॥ व्याख्या—सा राजीमती मनसि विचिंतयति, मम जीवितं धिगस्तु. याहं तेन नेमिनाथेन परित्यक्ता, अतो मम प्रव्रजितुं दीक्षां गृहीतुं श्रेयः, न तु गृहे स्थातुं श्रेय इति भावः. ॥ २९ ॥

॥ मूलम् ॥ अह सा भमरसन्निभे । कुच्चफणगसाहिए ॥ सयमेव लुंचई केसे । धिइमंता ववस्सिया ॥ ३० ॥ व्याख्या—अथानंतरं सा राजीमती स्वयमेव केशान् लुंचति. कथं-

भूता सा? धृतिमती धैर्ययुक्ता, पुनः कथंभूता? व्यवसिता निश्चला, धर्मं कर्तुं स्थिरा. कीदृशान् केशान्? 'कुच्चफणगपसाहिए' कूर्चफनकप्रसाधितान् कूर्चो गूढकेशोन्मोचको वंशशलाकारचितः केशसंस्करणोपकरणविशेषः, फनको गजदंतकाष्टमयः कंकतकः, कूर्चश्च फनकश्च कूर्चफनकौ, ताभ्यां प्रसाधिताः संस्कृताः कूर्चफनकप्रसाधितास्तान्. पुनः कीदृशान्? भ्रमरसन्निभान् भ्रमरवच्छ्यामान्. ॥ ३० ॥

॥ मूलम् ॥—वासुदेवो य तं भणइ । लुत्तकेसं जिइंदियं ॥ संसारसागरं घोरं । तर कन्ने लहुं लहु ॥ ३१ ॥ व्याख्या—च पुनस्तदा वासुदेवः श्रीकृष्णस्तां राजीमतीं कन्यां भणति, आशीर्वादं पठति. हे कन्ये! हे राजीमति! घोरं रौद्रं संसारसमुद्रं लघुलघु त्वरितं त्वरितं तर? संसारसमुद्रस्य पारं कुरु? लघुंलघु इति संभ्रमे आदरे द्विर्वचनं. कीदृशीं राजीमतीं? लुप्तकेशां कृतलोचां, पुनः कीदृशीं? जितेन्द्रियां साध्वीमित्यर्थः. ॥ ३१ ॥

॥ मूलम् ॥—सा पव्वइया संती । पव्वेसी ताहि बहुं ॥ सयणं परियणं चेव । सीलवंता बहुस्सुया ॥ ३२ ॥ व्याख्या—सा राजीमती प्रव्रजिता सती गृहीतदीक्षा सती, तत्र द्वा-

रिकायां बहून् स्वजनान् स्वज्ञातीन् स्त्रीजनान्, च पुनः परिजनान् दास्यादिस्त्रीजनान् प्राव्राजयत्, स्वसार्थेऽपरानपि दारान् प्रव्राजयामासेत्यर्थः. कीदृशी सा? शीलवती, पुनः कीदृशी? बहुश्रुता प्रचुरकृतज्ञानाभ्यासा. ॥ ३२ ॥

॥ मूलम् ॥—गिरिं देवइयं जंती । वासेणुल्ला उ अंतरा ॥ वासंते अंधयारंमि । अंतो लयणस्स सा ठिया ॥ ३३ ॥ व्याख्या—सा राजीमत्येकदा स्वामिवंदनार्थं रैवतकं गिरिं गिरनारपर्वतं यांती लयनस्य गिरिगुहागृहस्यांतर्मध्ये स्थिता. क्व सति? वर्षति मेघेंधकारे सति, मेघांधकारेण दृक्प्रचारे निरुद्धे सति. कीदृशी सा? अंतरा अर्धमार्गे वासेणेति वर्षाभिरुल्लाऽऽर्द्रा क्लीन्नसर्वचीवरा. ॥ ३३ ॥

॥ मूलम् ॥—चीवराणि विसारंती । जहाजाइत्ति पासिया ॥ रहनेमी भग्गचित्तो । पच्छा दिट्ठो तीइवि ॥ ३४ ॥ व्याख्या—रथनेमिर्भग्नचित्तोऽभूत्, संयमाच्चलितमना अभूत्. किं कृत्वा? चीवराणि सार्द्राणि शरीरादुत्तार्य विस्तारयंतीं यथाजातामित्येवंरूपां निर्वस्त्रां तां राजीमतीं दृष्ट्वा, तया राजीमत्यापि स रथनेमिश्चलचित्तः पश्चाद् दृष्टः. पूर्वमंधकारे सति न दृ-

पः. अन्यथा यदि पूर्वं दृष्टोऽभविष्यत्, तदैकाकिनी तत्र न प्राविक्षदिति भावः. ॥ ३४ ॥

॥ मूलम् ॥—भीया य सा तहिं दट्ठुं । एगंते संजयं सयं ॥ बाहाहिं काउं संगोफं । वेवमाणी निसीयई ॥ ३५ ॥ व्याख्या—सा राजीमती तदैकांते गुहायां रथनेमिं संयतं साधुं दृष्ट्वा भीता, कदाचिदयं मम शीलभंगं कुर्यादिति विचार्य शीलभंगभयाद्वेपमाना कंपमाना सती निषीदति, तदाश्लेषपरिहारार्थं भूमावुपविशति. किं कृत्वा? बाहुभ्यां द्वाभ्यां भुजाभ्यां संगोफं परस्परबाहुसंगुंफनं स्तनोपरि मर्कटबंधं कृत्वा. ॥ ३५ ॥

॥ मूलम् ॥—अह सोवि य रायपुत्तो । समुद्दविजयंगओ ॥ भीयं पवेइयं दट्ठुं । इमं वक्कमुदाहरे ॥ ३६ ॥ व्याख्या—अथानंतरं सोऽपि राजपुत्रः समुद्रविजयांगजो रथनेमिर्भीतां प्रवेपितां कंपमानां राजीमतीं साध्वीं दृष्ट्वा इदं वाक्यमुदाहरत्. ॥ ३६ ॥

॥ मूलम् ॥—रहनेमी अहं भद्दे । सुरूवे चारुभासिणि ॥ ममं भयाहि सुतणू । न ते पीला भविस्सइ ॥ ३१ ॥ व्याख्या—किं वाक्यमुवाचेत्याह—हे भद्रे! हे कल्याणि! अहं रथनेमिरस्मि, मामन्यं कमपि मा जानीहि? हे सुरूपे! सुंदराकारे! हे चारुभाषिणि! हे

मधुरवचने ! हे सुतनु शोजनशरीरे ! कोमलगात्रि ! त्वं मां जजस्व ? जर्तृत्वेनांगीकुरु ? ते तव पीमा डुःखं न जविष्यति, मया सह विषयसुखं जुंक्ष्व ? ॥ ३७ ॥

॥ मूलम् ॥—एहि ता जुंजिमो जोए । माणुस्सं खु सुदुल्लहं ॥ जुत्तभोए तर्ज पछा । जिणमग्गं चरिस्समो ॥ ३७ ॥ व्याख्या—हे राजीमति ! एहि मम समीपे आगछ ? तावदावां विषयं जुंजीवहि. हे प्रिये ! खु इति निश्चयेन मानुष्यं मनुष्यस्य जन्म सुडुर्लजं वर्तते. ततोऽनंतरमावां जुक्तजोगौ भूत्वा पश्चाज्जिनमार्गं जिनोक्तधर्मं चारित्रधर्मं मोक्षमार्गं चरिष्यावः. पूर्वं हि यदा जोगसुखं जुज्यते, ततश्च दीक्षा गृह्यते, तदा जुक्तजोगत्वेन पुनर्जोगसुखेषु मनो न स्यात्. तस्मात्पूर्वमधुना यथेछं जोगसुखं जोक्तव्यमिति जावः. ॥ ३७ ॥

॥ मूलम् ॥—दहूण रहनेमिं तं । जग्गजोयं पराइयं ॥ राइमई असंजंता । अप्पाणं संवरे तहिं ॥ ३९ ॥ व्याख्या—तदा राजीमत्यसंज्रांता सती, निर्जया सती, तया ज्ञातमहं बलात्कारेणापि शीलं रक्षयिष्यामीति निश्चित्याऽत्रस्तासत्यात्मानं शरीरं वस्त्रैः संवृणोत्याछादयति, गुहामध्यमेव स्थिता सतीति शेषः. किं कृत्वा ? रथनेमिं भग्नयोगं दृष्ट्वा, जग्नो नष्टो

योगः संयमोत्साहो यस्य स भग्नयोगस्तं पराजितं स्त्रीपरीषहेण पराभूतं रथनेमिं ज्ञात्वा. ॥३९॥

॥ मूलम् ॥—अह सा रायवरकन्ना । सुट्टिया नियमव्वए ॥ जाई कुलं च सीलं च । रक्खमाणी तयं वए ॥ ४० ॥ व्याख्या—अथानंतरं भग्नयोगस्य रथनेमेर्दर्शनानंतरं सा राजवरकन्या राजीमती साध्वी तदा वदति, कीदृशी सा? नियमव्रते सुस्थिता, नियमे शौचसंतोषस्वाध्यायतपोलक्षणे स्थिरा. तथा व्रते पंचमहाव्रतलक्षणे स्थिरा. पुनः सा किं कुर्वाणा? जातिकुलेप्रति संरक्षमाणा. तत्र मातुर्वंशो जातिः, पितुर्वंशः कुलमुच्यते, तयोरुभयोरपि नैर्मल्यं विदधतीत्यर्थः. ॥ ४० ॥

॥ मूलम् ॥—जइसि रूवेण वेसमणो । ललिएणं नलकूवरो ॥ तहावि ते न इच्छामि । जइसि सक्खं पुरंदरो ॥४१॥ व्याख्या—भो रथनेमे! यदि त्वं रूपेण वैश्रमणो धनदोऽसि, यदि पुनर्ललितेन मनोहरलावण्यविलासेन नलकूवरो देवविशेषोऽसि, पुनर्यदि हे रथनेमे! त्वं साक्षात्प्रत्यक्षं पुरंदरोऽसि, इंद्रावतारोऽसि, तथाप्यहं त्वां नेच्छामि, भोगार्थं नाभिलषामि.

॥ मूलम् ॥—पक्खंदे जलियं जोइं । धूमकेउं दुरासयं ॥ ने इच्छंति वंतयं भोत्तुं । कुले

जाया अगंधणे ॥ ४२ ॥ व्याख्या—हे रथनेमे! अगंधने कुले जाता उत्पन्नाः, अर्थादगंधकुलोत्पन्नाः सर्पा वांतं विषं जोक्तुं, पुनः पश्चाद् गृहीतुं नेबंति न वांबन्ति. ज्वलद्धूमकेतोरग्नेर्ज्योतिर्ज्वालां प्रस्कंदेदिति प्रस्कंदेयुः, प्राकृतत्वाद्दहुवचने एकवचनं. अगंधनजातीयाः सर्पा ज्वलदग्निज्वालां प्रविशेयुः, न तूजीर्णं विषं पश्चाद्गृह्णन्ति. कीदृशं धूमकेतोर्ज्योतिः? दुरासदं दुस्सहमित्यर्थः. ॥ ४२ ॥

॥ मूलम् ॥—धिरत्थु तेजसोकामी । जो तं जीवियकारणा ॥ वंतं इबसि आवेउं । सेयं ते मरणं जवे ॥ ४३ ॥ व्याख्या—हे अयशःकामिन्! हे अकीर्तिवांबक! अथवा हे अयशः! अकीर्ते! हे कामिन्! त्वां धिगस्तु. तव जीवितव्यं धिगित्यर्थः. यस्त्वमसंयमजीवितव्यकारणाद्वांतं वदनान्निःसृतमाहारं पुनरापातुं जोक्तुमिबसि, दीक्षां गृहीत्वा जोगांस्त्यक्त्वा पुनर्जोगान् जोक्तुमिबसि. अतः कारणात्ते तवाऽस्मादसंयमजीवितव्यात् पंमितमरणेन मरणं श्रेयः कल्याणकारकं जवेत्, न पुनस्तव जोगाजिलाषः श्रेयस्कर इति जावः. ॥ ४३ ॥

॥ मूलम् ॥—अहं च जोगरा ? । तं चसि अंसस्धमवण्हिणो ॥ मा कुले गंधणा हो-

मो । संजमे निहुओ चर ॥ ४४ ॥ व्याख्या—राजीमती वदति; हे रथनेमे! अहं भोगराजस्योग्रसेननृपस्य पुत्र्यस्मि, च पुनस्त्वमंधकवृष्णेः समुद्रविजयस्य पुत्रोऽसि, तस्मादावां गंधने। गंधनकुलोत्पन्नौ सर्पौ माऽभूवस्सवाव. यतो हि गंधनकुलोत्पन्नः सर्पो वांतं विषं पश्चाद् गृह्णाति, तद्वदावाभ्यां वांता भोगाः पुनर्न वांछनीयाः, यतो हि सर्पा द्विविधाः, अगंधनकुलोद्भवा गंधनकुलोद्भवाश्च. यदा हि कस्यचित्पुरुषस्य सर्पो लगति, तदा मंत्रवादिनोऽग्निं ज्वालयित्वा मंत्रेण सर्पानाकर्षन्ति, तत्र च गंधनकुलोद्भवाः स्वविषं पश्चाद्गृह्णन्ति. अगंधनकुलोद्भवास्त्वग्नौ ज्वलंति, न पुनर्वांतं विषं पश्चाद् गृह्णंति, तस्मादावामगंधनकुलोत्पन्नसर्पतुल्यौ भवाव इति भावः. तस्मात्त्वमिदानीं संयमे चारित्रे निभृतो निश्चलः सन् चर? साधुमार्गे विचरेत्यर्थः. ॥ ४४ ॥

॥ मूलम् ॥--जइ तं काहिसि भावं । जा जा दिछसि नारीओ ॥ वायाविद्धोव्व हढो । अट्ठिअप्पा भविस्ससि ॥ ४५ ॥ व्याख्या—हे मुने! यदि त्वं भावं भोगाभिलाषं करिष्यसि, यां यां नारीं द्रक्ष्यसि. अर्थाद्यां सुरूपां नारीं दृष्ट्वा भोगाभिलाषं करिष्यसि, तदा त्व-

मस्थिरात्माऽस्थिरचित्तो भविष्यसि. क इव? वाताविद्धो हठ इव, हठो वनस्पतिविशेषः शेवालः, यथा पानीयोपरि शेवालो वातेन प्रेरितोऽस्थिरो भवति, तथा त्वमप्यतिरूपवतीं कामिनीं दृष्ट्वा कामाभिलाषी सन्नस्थिरचित्तो भविष्यसि. ॥ ४५ ॥

॥ मूलम् ॥—गोवालो भंडपालो वा । जहा तद्दवनिस्सरो ॥ एवं अणिस्सरो तंपि । सामन्नस्स भविस्ससि ॥ ४६ ॥ व्याख्या—हे मुने! तथा त्वमपि श्रामण्यस्य साधुधर्मस्यानीश्वरो भविष्यसि, भोगाभिलाषकरणेन संयमफलस्याऽभोक्ता भविष्यसि. क इव? गोपाल इव, वाऽथवा भंडपाल इव. गाः पालयतीति गोपालो गोरक्षकः, उदरपूरणार्थं परकीयगोचारकः. पुनर्भांडानि परकीयक्रयाणकवस्तूनि भाटकादिना पालयतीति भांडपालकः, गोपालो गवां स्वामी न भवति, तद्रक्षणादुदरपूर्तिमात्रफलभाक् स्यात्, न तु गवां स्वामित्वफलभाक्. तथा पुनर्भांडपालः क्रयाणकाधिपेन क्रयाणकरक्षार्थं रक्षितः पुरुषः क्रयाणकानामीश्वरत्वफलभाग् न भवति, उदरपूर्तिमात्रफलभागेव भवति. ईश्वरत्वफलभाक् त्वपर एव. तथा त्वमपि श्रामण्यवेषधारकत्वेन द्रव्यधर्मपालकत्वादुदरपूर्तिफलभाग् वर्तसे, न तु भावधर्मफ-

तस्य मोक्षस्येश्वरो भविष्यसीति भावः. ॥ ४६ ॥

॥ मूलम् ॥—कोहं माणं निगिह्णित्ता । मायं लोभं च सव्वसो ॥ इंदियाइं वसे काउं । अप्पाणं उवसंहरे ॥ ४७ ॥ तीसे सो वयणं सुच्चा । संजयाए सुभासियं ॥ अंकुसेण जहा नागो । धम्मे संपडिवाइओ ॥ ४८ ॥ युग्मं ॥ व्याख्या—स रथनेमिरिन्द्रियाणि वशीकृत्यात्मानमुपसंहरति स्थिरं करोति, विषयेभ्यो निवारयति. किं कृत्वा? क्रोधं मानं मायां च पुनः सर्वथा लोभं निगृह्यात्यंतं जित्वा. एवं रथनेमिरात्मानं धर्मे दृढं चकार. एतदेवोक्तं दृष्टांतेन दृढयति—तस्या राजीमत्याः संयत्याः साध्व्याः सुभाषितेन स रथनेमिः पूर्वं धर्माद्भ्रष्टो धर्मे संप्रतिपातितो धर्म्ये मार्गे स्थापितः. केन क इव? अंकुशेन नाग इव, यथांकुशेन नागो हस्ती मार्गाद्भ्रष्टो मार्गे स्थाप्यते, तथा रथनेमिरपि. ॥ ४८ ॥

॥ मूलम् ॥—मणगुत्तो वयगुत्तो । कायगुत्तो जिइंदिओ ॥ सामन्नं निच्चलं फासे । जावज्जीवं दढव्वए ॥ ४९ ॥ व्याख्या—यदा स साधुमार्गे स्थिरोऽभूत्तदा कीदृशोऽभूदित्याह—मनसा गुप्तो मनोगुप्तः, तथा वचसा गुप्तो वचोगुप्तो गुप्तवाक्. तथा पुनः कायेन गुप्तः कायगु-

सो गुप्तकायः, इति गुप्तित्रयसहितः. पुनः कीदृशः? जितेंद्रियो वशीकृतेंद्रियः, एतादृशो रथनेमिर्यावज्जीवं दृढव्रतः सन् श्रामण्यं चारित्रधर्मं निश्चलं यथास्यात्तथा स्पृशति, सम्यक् क्रियानुष्ठानेन पालयति. ॥ ४९ ॥

॥ मूलम् ॥—उग्गं तवं चरित्ताणं । जाया दुन्निवि केवली ॥ सव्वं कम्मं खवित्ताणं । सिद्धिं पत्ता अणुत्तरं ॥ ५० ॥ व्याख्या—अनुक्रमेण तौ द्वावपि राजीमतीरथनेमी केवलिनौ जातौ. किं कृत्वा? उग्रमन्यैः कर्तुमशक्यं तपश्चरित्वा तपः कृत्वा, अनुक्रमेण च सर्वाणि कर्माणि क्षपयित्वा, पुनस्तावनुत्तरां सर्वोत्कृष्टां सिद्धिं मोक्षगतिं प्राप्तौ. ॥ ५० ॥

॥ मूलम् ॥—एवं करंति संबुद्धा । पंडिया पवियक्खणा ॥ विणियट्टंति भोगेसु । जहा से पुरिसुत्तमुत्तिबेमि ॥ ५१ ॥ व्याख्या—पंडितास्तत्त्वमतियुक्ताः, प्रकर्षेण विचक्षणा विवेकिनः पुरुषा भोगेभ्यो विशेषेण निवर्तंते, कथंचिच्चेतसि विकारे समुत्पन्नेऽपि पुनः कस्यचिन्महात्मनः पुरुषस्य धर्मोपदेशधारणेन चित्तं निरुध्य भोगेभ्यो निवर्तंते. क इव? यथा स रथनेमिः पुरुषोत्तमः पूर्वं चंचलचित्तो भूत्वा पुनर्धर्मोपदेशाद्धर्मे स्थिरचित्तो बभूव. तथान्यैर-

ति निश्चलचित्तैर्नवितव्यमिति, न तु चंचलचित्तेन जाव्यमित्यहं ब्रवीमीति श्रीसुधर्मास्वामी जंबूस्वामिनमाह्—हे जंबू ! अहं भगवद्वचसेति ब्रवीमि. ॥ ५१ ॥ इति रथनेमीयं द्वाविंशतितममध्ययनं संपूर्णं. २२. इतिश्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां द्वाविंशतितमस्याध्ययनस्यार्थः संपूर्णः. ॥ श्रीरस्तु ॥

---

## ॥ अथ त्रयोविंशतितममध्ययनं प्रारभ्यते ॥

द्वाविंशतितमेऽध्ययने उत्पन्नविश्रोतसि केनापि रथनेमिवद्धृतिश्चरणे विधेयेति कथितं. अथ त्रयोविंशतितमेऽध्ययने ज्ञानिना परेषामपि चित्ते संशयं ज्ञात्वा संशयो दूरीकर्तव्यः केशिगोतमवदित्याह्—' जिणे पासित्ति नामेणं ' इत्यस्यां गाथायां कथितोऽयं पार्श्वनामा तीर्थंकरः, कस्मिन् नवे चानेन तीर्थंकरनामकर्म निबद्धमिति सकौतुकश्रोतृवैराग्योत्पादनार्थं पार्श्वनाथचरित्रमुच्यते—

इहैव जंबूद्वीपे भरते क्षेत्रे पोतनपुरे नगरेऽरविंदो नाम राजा, तस्य विश्वभूतिर्नामा पुरोहितः, स श्रावकोऽस्ति, तस्य द्वौ पुत्रौ, कमठो मरुभूतिश्च. तयोः क्रमेण भार्या वरुणा वसुंधरा च. तयोः कमठमरुभूत्योः शिरसि गृहकार्यभारं विन्यस्य स्वयं धर्मं कुर्वाणः क्रमेण कालं कृत्वा विश्वभूतिर्देवलोकं गतः. तद्भार्याऽनुद्धरी विशेषतपःकरणेन शोषितशरीरा मृता. कमठोऽपि कृतमातृपितृप्रेतकार्यः पुरोहितो जातः. मरुभूतिरपि प्रायो ब्रह्मचारिकृत्योद्यतः संपन्नः. तस्य भार्या मनोहरा, तस्याश्च यौवनोद्भेदं दृष्ट्वा कमठस्य चित्तं चलितं, तां सविकारलोचनाभ्यां स पश्यति. सापि कामविरहमसहंती तं सविकारं पश्यति. उभयोर्भृशं रंगोल्लासेऽनाचारप्रवृत्तिर्जाता, मरुभूतिनापि सामान्यतो ज्ञाता. विशेषज्ञानाय तस्याः कमठस्य च पुरोऽहं ग्रामांतरं यास्यामीत्युक्त्वा निजमंदिराद्बहिर्गत्वा संध्यासमये कार्पटिकरूपं कृत्वा स्वरभेदेन कमठंप्रत्येवं बभाण. हे महानुभाव ! निराहारस्य मम शीतत्राणाय किंचिन्निवासस्थानं देहि ? अविज्ञातपरमार्थेन कमठेन भणितमहो ! कार्पटिक ! अत्र चतुर्हस्तमध्ये स्वछंदं निवस ? ततस्तत्र रात्रौ स्थितो मरुभूतिस्तयोः सर्वमनाचारस्वरूपमालोक्येर्ष्यापरवशो

जातः, परं लोकापवादभीरुत्वान्न तयोः प्रतीकारं चकार. प्रभाते च राजांतिके गत्वा सर्वं तयोः स्वरूपं यथास्थितमाख्यातवान्. राज्ञा च कुपितेन समादिष्टाः स्वपुरुषाः, तैर्डिंडिमास्फालनपूर्वं गलारोपितशरावमालः खरारूढः कमठः सर्वतो नगरे भ्रामितः, भ्रातृजायाभोगकार्ययमिति जनानां पुरो निर्घोषं कृत्वा स नगरान्निष्कासितः. ततः संजातामर्षः कमठोऽपि समुत्पन्नवैराग्यो गृहीतपरिव्राजकलिंगो दुष्करं तपः कर्तुं लग्नः. तं च वृत्तांतं ज्ञात्वा मरुभूतिः संजातपश्चात्तापः स्वापराधक्षामणाय तस्यांतिके गत्वा पादयोः पपात. कमठोऽपि तदानीं समुत्पन्नपूर्ववैरोल्लासेन मरुभूतेर्मूर्ध्न उपरि महाशिलां पातितवान्. ततो मरुभूतिस्तस्याः प्रहारेणार्त्तन् कालं कृत्वा विंध्याचले बहुयूथाधिपतिः करी समुत्पन्नः. इतश्चारविंदराजा कदाचिच्छरत्काले सांतःपुरः प्रासादोपरि स्थितः क्रीडन् शरदभ्रं सुस्निग्धं प्रह्लादितनयनःस्थलं मनोहरं ददर्श. पुनस्तत्क्षणादेव वायुना विलीनं तदभ्रं पश्यन् दृष्टांतावष्टंभेन सर्वेषां भावानां क्षणभंगुरतां भावयन् समुत्पन्नावधिज्ञानः परिजनेन ध्रियमाणोऽपि दत्तनिजपुत्रराज्यः स प्रव्रजितः. अन्यदा स राजर्षिर्विहरन् सागरदत्तसार्थवाहेन समं सम्मेतशिखरे चैत्यवंद-

नार्थं प्रस्थितः. सागरदत्तसार्थवाहेन पृष्टं, भगवन्! क्व गमिष्यसि? यतिनोक्तं तीर्थयात्रायां. सार्थवाहेनोक्तं कीदृशो भवतां धर्मः? मुनिना कथितो दयादानविनयमूलः सविस्तरस्तस्य धर्मः. तं श्रुत्वा स सार्थवाहः श्रावको जातः, क्रमेण महाटवीं प्राप्तः, यत्र स मरुभूतिजीवः करी जातोऽस्ति. तत्र महासरोवरं दृष्ट्वा तत्तीरे सार्थ उत्तीर्णः.

अत्रांतरे तस्मिन्नेव सरसि बहुहस्तिनीपरिवृतः स करी जलपानार्थमागतो जलं सविलासं पीत्वा पालमारूढः सर्वत्र चक्षुर्विक्षिपन् सार्थं दृष्ट्वा तद्विनाशनार्थं त्वरितं धावितः. तं च तथागच्छंतं दृष्ट्वा सार्थजना इतस्ततः प्रणष्टाः, मुनिस्त्ववधिना ज्ञात्वा स्वस्थाने स्थितः कायोत्सर्गेण. तेन करिणा सर्वं सार्थप्रदेशं भ्रमता दृष्टः स महामुनिः, तदभिमुखं स धावितः. आसन्नप्रदेशे गत्वा तं पश्यन्नुपशांतकोपोऽसौ निश्चलः स्थितः. तथारूपं तं दृष्ट्वा तत्प्रतिबोधार्थं पारितकायोत्सर्गो मुनिरेवमूचे. भो मरुभूते! किं न त्वं स्मरसि मामरविंदनरपतिमात्मनः पूर्वभवं वा? एतन्मुनिवचः श्रुत्वा स करी संजातजातिस्मरणः पतितो मुनिचरणयोः. मुनिनापि सविशेषदेशनाकरणपूर्वं स श्रावकः कृतः. ततः प्रणम्य स करी स्वस्थानं ग-

तः. अत्रांतरे उपशांतं तं करिणं दृष्ट्वा साश्चर्यः सार्थजनः पुनस्तत्र मिलितः. प्रणम्य च मुनिचरणयुगलं प्रतिपन्नवान् दयामूलं श्रावकधर्मं. ततः कृतकृत्यः सर्वोऽपि सार्थो मुनिश्च स्वस्वाचारनिरतो विजहार. इतश्च स कमठपरिव्राजको मरुभूतिविनाशनेनाप्यनिवृत्तवैरानुबंधो निजायुःक्षये मृत्वा समुत्पन्नः कुर्कुटसर्पः, विंध्यावनौ परिभ्रमता तेन दृष्टः स हस्ती पंकनिमग्नः, पूर्ववैरोल्लासेन कुंभस्थले दृष्टः, तद्विषवेदनामनुभवन्नपि श्रावकत्वात् क्षमावान् मृत्वा समुत्पन्नः सहस्रारकल्पे देवः. कुर्कुटसर्पोऽपि समये मृत्वा सप्तदशसागरोपमायुः पंचमनरकपृथिव्यां नारकः संजातः. इतश्च स हस्तिदेवश्च्युत इहैव जंबूद्वीपे पूर्वविदेहे कच्छविजये वैताढ्यपर्वते तिलकानगर्यां विद्युद्गतिविद्याधरस्य भार्यायाः कनकतिलकायाः किरणवेगो नाम पुत्रो जातः. स च तत्र क्रमागतराज्यमनुपाल्य सुगुरुसमीपे प्रव्रजितः, एकत्वविहारी चारणश्रमणो जातः. अन्यदाऽऽकाशविहारेण स गतः पुष्करद्वीपे, तत्र कनकगिरिसन्निवेशे कायोत्सर्गेण स्थितः किंचित्तपः कर्तुमारब्धः. इतश्च स कुर्कुटसर्पजीवो नरकादुध्धृत्य तस्यैव कनकगिरेः समीपे संजातो महोरगः, तेन स मुनिर्दृष्टो दष्टश्च. विधिना कालं कृत्वाऽच्युत-

कल्पे जंबूद्रुमावर्त्तविमाने देवो जातः. सोऽपि महोरगः क्रमेण कालं कृत्वा पुनरपि सप्तदश-सागरोपमायुः पंचमपृथिवीनारको जातः. किरणवेगदेवोऽपि ततश्च्युत्वेहैव जंबूद्वीपेऽपरविदेहे सुगंधविजये शुभंकरानगर्यां वज्रवीर्यराज्ञोऽक्ष्मिताया भार्याया वज्रनाभनामा पुत्रः समुत्पन्नः. सोऽपि तत्र क्रमागतं राज्यमनुपाल्य दत्तचक्रायुधनामस्वपुत्रराज्यः क्षेमंकरजिनसमीपे प्रव्रजितः. तत्र विधिना तपोविधानेन बहुलब्धिसंपन्नोऽसौ गतः सुकच्छविजयं. तत्राऽप्रतिबद्धविहारेण विहरन् स संप्राप्तो ज्वलनगिरिसमीपं. दिने चास्तमिते तत्रैव कायोत्सर्गेण स्थितः. प्रभाते ततश्चलितोऽटव्यां प्रविष्टः. इतश्च स महोरगनारकः पंचमपृथिवीत उध्धृत्य कियंतं संसारं भ्रांत्वा तस्यैव ज्वलनगिरेः समीपे भीमाटव्यां जातो वनेचरश्चांडालः. तेनाखेटकनिमित्तं निर्गच्छता दृष्टः प्रथमं स साधुः, ततः पूर्वभववैरवशतोऽपशकुनोऽयमिति कृत्वा बाणेन विद्धः, तेन विधुरीकृतवेदनो विधिना मृत्वा स वज्रनाभो मुनिर्मध्यग्रैवेयके ललितांगो नाम देवो जातः. सोऽपि चांडालवनेचरस्तं विपन्नं महामुनिं दृष्ट्वाऽहो! अहं महाधनुर्धर इति मन्यमानो निकाचितक्रूरकर्मा कालेन मृत्वा सप्तमे नरके नारकत्वेन समुत्पन्नः. वज्र-

नानदेवस्ततश्च्युत इहैव जंबूद्वीपे पूर्वविदेहे पुराणपुरे कुशलबाहुराज्ञः सुदर्शनादेव्याः कनकप्रभो नाम पुत्रो जातः, स च क्रमेण चक्रवर्ती जातः. अन्यदा प्रासादोपरि संस्थितेन तेनाकाशे निर्गच्छन् देवसंघातो दृष्टः. तद्दर्शनादेव विज्ञातजगन्नाथतीर्थकरागमः स्वयं निर्गतस्तद्वंदनार्थं. वंदित्वा च तत्रोपविष्टस्य तस्य पुरतो भगवता देशना कृता. तां च श्रुत्वा हृष्टश्चक्रवर्ती वंदित्वा स्वनगर्यां प्रविष्टः. अन्यदा स कनकप्रभनामा चक्रवर्ती तां तीर्थकरदेशनां भावयन् जातजातिस्मरणः पूर्वभवान् दृष्ट्वा भवविरक्तचित्तः प्रव्रजितः. इतश्च स क्रमेण विहरन् क्षीरवनाटव्यां क्षीरपर्वते सूर्याभिमुखं कायोत्सर्गेण स्थितः.

इतश्च स चांडालवनेचरजीवस्ततो नरकादुध्धृत्य तस्यामेवाटव्यां क्षीरपर्वतगुहायां सिंहो जातः. स च भ्रमन् कथमपि संप्राप्तस्तस्य मुनेः समीपे, ततः समुच्छलितपूर्ववैरेण तेन विनाशितः स मुनिः समाधिना कालं कृत्वा निबद्धतीर्थकरनामकर्मा प्राणतकल्पे महाप्रभे विमाने उत्पन्नो विंशतिसागरोपमायुर्देवः. सोऽपि सिंहो बहुलसंसारं भ्रांत्वा कर्मवशाद् ब्राह्मणो जातः. तत्रापि पापोदयवशेन जातमात्रस्य तस्य पितृमातृभ्रातृप्रमुखः सकलोऽपि स्व-

जनवर्गः क्वयं गतः, स च दयापरेण लोकेन जीवितः. संप्राप्तयौवनोऽपि कुरूपो दुर्भगो दुः-
खेन वृत्तिं कुर्वन् वैराग्यमुपगतो वने कंदमूलफलाहारस्तापसो जातः, करोति च बहुप्रकार-
मज्ञानतपोविशेषं. इतश्च स कनकप्रभचक्रवर्तिदेवः प्राणतकल्पाच्चैत्रकृष्णचतुर्थ्यां च्युत्वा इ-
हैव जंबूद्वीपे भरते क्षेत्रे काशीदेशे वाराणस्यां नगर्यामश्वसेनस्य राज्ञो वामादेव्याः कुक्षौ
मध्यरात्रिसमये विशाखानक्षत्रे त्रयोविंशतितमतीर्थंकरत्वेन समुत्पन्नः. तस्यामेव रात्रौ सा
वामादेवी चतुर्दशस्वप्नान् ददर्श, निवेदयामास च राज्ञः. तेनापि राज्ञातीवानंदमुद्वहता भ-
णितं, प्रिये! सर्वलक्षणसंपूर्णः सर्वकलाकुशलस्तव पुत्रो भविष्यति. तद्वचः श्रुत्वा सुष्टुतरं
परितुष्टा सा. प्रभाते च राज्ञा स्वप्नपाठकानाहूय तान् यथार्थानाचख्यौ. तेऽपि पूर्णं स्वप्ना-
ध्यायं सविस्तरमाख्याय चतुर्दशस्वप्नानां फलमेवमाहुः, तीर्थंकरमाता चक्रवर्तिमाता वा ए-
तांश्चतुर्दश स्वप्नान् पश्यति. ततोऽस्याः कुक्षौ तीर्थंकरश्चक्री वा समुत्पन्नोऽस्तीति स्वप्नानुसा-
रेण. इदं च तेषां वचः श्रुत्वाऽऽनंदातिरेकेण पुलकिततनुर्नृपतिस्तानतीवसत्कारपूर्वं विसर्जि-
तवान्. वामादेवी सुखं सुखेन गर्भमुद्वहति. क्रमेण पूर्णेषु मासेषु शुभवेलायां भगवान् जातः.

षट्पंचाशद्दिक्कुमारीभिर्जन्ममहोत्सवः पूर्वं कृतः. ततः स्वासनकंपादिज्ञातभगवज्जन्मभिः श-क्रैर्मेरुशिरसि जन्माभिषेकः कृतः. प्रभाते चाश्वसेनोऽपि नगरांतर्दशाहिकोत्सवं कृतवान्. अ-स्मिन् गर्भे स्थिते भगवति जनन्या पार्श्वे गछन् सर्पो रात्रौ दृष्टः, ततोऽस्य पार्श्व इति नाम कृतं. ततः कल्पतरुवज्जनानंदकः स भगवान् वृद्धिं प्राप, अष्टवार्षिकश्च भगवान् सर्वकला-कुशलो बभूव. अथ भगवान् सर्वमनोहरं यौवनं प्राप. पित्रा च तदानीं प्रभावतीं कन्यां प-रिणायितः, भगवान् तया समं विषयसुखं बुभुजे. अन्यदा भगवता प्रासादोपरि गवाक्ष-जालस्थेन दिगवलोकनं कुर्वता दृष्टो नगरलोकः प्रवरकुसुमहस्तो बहिर्गछन्. पृष्टं च भगव-ता कस्यचित्पार्श्ववर्तिनः, भो किमद्य कश्चित्पर्वोत्सवोऽस्ति? येनैष जनः पुष्पहस्तो बहिर्गछ-न्नस्ति. तेन पुरुषेणोक्तमद्य कोऽपि पर्वोत्सवो नास्ति, किंतु कमठो नाम महातपस्वी पुरीब-हिः समागतोऽस्ति, तद्वंदनार्थं प्रस्थितोऽयं जनः.

ततस्तद्वचनमाकर्ण्य जातकौतुकविशेषो भगवांस्तत्र गतः पंचाग्नितपः कुर्वाणं कमठं दृ-ष्टवान्. त्रिज्ञानवता भगवता ज्ञात एकस्मिन्नग्निकुंडे प्रक्षिप्ततीव्रमहत्काष्ठमध्ये प्रज्वलन् स-

र्पः. उत्पन्नपरमकरुणेन भगवता भणितमहो कष्टमज्ञानं, यदीदृशेऽपि तपसि क्रियमाणे दया न ज्ञायते. ततः कमठेन भणितं राजपुत्रास्तु कुंजरतुरगखेलनमेव जानंति, धर्मं तु मुनय एव विदंतीति. ततो भगवतैकस्य स्वपुरुषस्यैवमादिष्टं, अरे! इदमग्निमध्ये प्रक्षिप्तं काष्टं कुठारेण द्विधा कुरु? तेन पुरुषेण तत्काष्टं द्विधा कृतं, तत्र दृष्टो दह्यमानः सर्पः, तस्य भगवता स्वपुरुषवदनेन पंचपरमेष्टिनमस्काराः प्रदापिताः. नागोऽपि तत्प्रभावान्मृत्वा समुत्पन्नो नागलोके धरणेंद्रो नागराजा. लोकैश्चाहो भगवतो ज्ञानशक्तिरिति भणद्भिर्महान् सत्कारः कृतः. ततो विलक्षीभूतः कमठपरिव्राजको गाढमज्ञानतपः कृत्वा मेघकुमारनिकायमध्ये समुत्पन्नो मेघमालीनामभवनवासी देवः. अन्यदा सुखेन तिष्टतो भगवतो वसंतसमयः समागतः. तत् ज्ञापनार्थमुद्यानपालेन सहकारमंजरी भगवतः समर्पिता. भगवता भणितं भो! किमेतत्? स आह भगवन्! बहुविधक्रीडानिवासो वसंतसमयः प्राप्तः. ततो मित्रप्रेरितः श्रीपार्श्वकुमारो वसंतक्रीडानिमित्तं बहुजनपरिवारसमन्वितो यानारूढो गतो नंदनं वनं, तत्र यानात्समुत्तीर्य स निषण्णो नंदनवनप्रासादमध्यस्थितकनकमयासिंहासने. अतिरमणीयं नं-

दनवनं सर्वतः पश्यन्, भित्तिस्थं परमरम्यं चित्रं दृष्ट्वा अहो! किमत्र लिखितं ज्ञातमिति सम्यग् निरूपयता भगवता दृष्टमरिष्टनेमिचरित्रं.

ततः स चिंतितुं प्रवृत्तो धन्यः सोऽरिष्टनेमिर्यो विरसावसानं विषयसुखमाकलय्य निर्भरानुरागां निरुपमरूपलावण्यां जनकवितीर्णां राजकन्यां च त्यक्त्वा भग्नमदनमंगलप्रचारः कुमार एव निष्क्रांतः. ततोऽहमपि करोमि सर्वसंगपरित्यागं. अत्रांतरे लोकांतिका देवास्तत्रागत्य भगवंतं प्रतिबोधयंतिस्म. त्रिंशद्वर्षाणि गृहस्थवासेऽसौ स्थितः, ततो मार्गणगणस्य यथोचितं सांवत्सरिकदानं दत्वा भगवान् मातृपित्राद्यनुज्ञया महामहःपूर्वमाश्रमपदोद्यानेऽशोकपादपस्याधः पोषशुक्लैकादशीदिने पूर्वाह्णसमये पंचमौष्टिकं लोचं कृत्वा अपानकेनाष्टमभक्तेनैकं देवदूष्यमादाय त्रिभिः पुरुषशतैः समं निष्क्रांतः. अथ श्रीपार्श्वो भगवान् विहरन्नेकदा वटपादपाधः कायोत्सर्गेण स्थितः. इतश्च स कमठजीवो मेघमाली असुरोऽवधिना ज्ञात्वाऽऽत्मनो व्यतिकरं, स्मृत्वा च पूर्वभववैरकारणं समुत्पन्नतीव्रामर्षः समागतस्तत्र. प्रारब्धास्तेनानेकसिंहादिरूपैरनेके उपसर्गाः, तथापि भगवान् श्रीपार्श्वोऽक्षुब्धो धर्मध्यानान्न च-

लितः. तादृशं तं ज्ञात्वा कमठ एवं चिंतयामास, अहमेनं जलेन प्लावयित्वा मारयामीति ध्यात्वा भगवदुपरिष्टान्महामेघवृष्टिं चकार. जलेन भगवदंगं नाशिकांयावद्व्याप्तम्.

अत्रांतरे कंपितासनेन धरणेंद्रेणावधिना ज्ञातभगवद्व्यतिकरेण समागत्य स्वामिशीर्षोपरिफणिफणाटोपं कृत्वा फणिशरीरेण भगवच्छरीरमावृत्य जलोपसर्गं च निवार्य भगवत्पुरो वेणुवीणागीतनिनादैः प्रवरं प्रेक्षणं कर्तुमारब्धवान्. कमठासुरस्तादृशमक्षोभ्यं भगवंतं धरणेंद्रकृतमहिमानं च दृष्ट्वा समुपशांतदर्पो भगवच्चरणौ प्रणम्य गतो निजस्थाने. धरणेंद्रोऽपि भगवंतं निरुपसर्गं ज्ञात्वा स्तुत्वा च स्वस्थानं गतवान्. पार्श्वस्वामिनो निष्क्रमणदिवसाच्चतुरशीतितमे दिवसे चैत्रकृष्णाष्टम्यामष्टमभक्तेन पूर्वाह्णसमयेऽशोकतरोरधः शिलापट्टे सुखनिषण्णस्य शुक्लध्यानेन क्षीणघातिकर्मचतुष्कस्य सकललोकावभासि केवलज्ञानं समुत्पन्नं. चलितासनैः शक्रैस्तत्रागत्य केवलज्ञानोत्सवो महान् कृतः. पार्श्वोऽर्हन् सप्तफणानां लांछनो वामदक्षिणपार्श्वयोर्वैरोट्याधरणेंद्राभ्यां पर्युपास्यमानः प्रियंगुवर्णदेहो नवहस्तशरीरो भव्यसत्वान् प्रतिबोधयन् चतुस्त्रिंशदतिशयसमेतः पृथिवीमंडले विहरति. पार्श्वभगवतो दश गणधरा अ-

भवन्. आर्यदिन्नप्रमुखाः षोडशसहस्रसाधवोऽभवन्. पुष्पचूलाप्रमुखा अष्टत्रिंशत्सहस्रार्यिका अभवन्. सुव्रतप्रमुखाः श्रमणोपासका एकं लक्षं चतुःषष्टिसहस्राश्चाभवन्. सुनंदाप्रमुखाः श्रमणोपासिका लक्षत्रयं सप्तविंशतिसहस्राश्चाभवन्. सार्धत्रीणि शतानि चतुर्दशपूर्विणामभवन्. अवधिज्ञानिनां चतुर्दशशतानि, केवलज्ञानिनां दशशतानि, वैक्रियलब्धिमतामेकादशशतानि, विपुलमतीनां सार्धत्रीणि शतानि, वादिनां षट्शतानि, अंतेवासिनां दशशतानि सिद्धिं गतानि. आर्यिकाणां विंशतिशतानि सिद्धानि. अनुत्तरोपपातिकानां द्वादशशतान्यभवन्. श्रीपार्श्वनाथस्यैषा परिवारसंपदभूत्. ततः पार्श्वो भगवान् देशोनानि सप्ततिवर्षाणि केवलपर्यायेण विहृत्यैकं वर्षशतं सर्वायुः परिपाल्य सम्मेतशिखरे ऊर्ध्वस्थित एवाधःकृतपाणिर्निर्वाणमगमत्. तत्कलेवरसंस्कारोत्सवः शक्रादिभिस्तत्रैव विहितः. ॥ इति श्रीपार्श्वनाथचरित्रं ॥ अथाग्रे सूत्रं लिख्यते—

॥ मूलम् ॥—जिणे पासित्ति नामेणं । अरहा लोगपूइए ॥ संबुद्धप्पा य सवन्नू । धम्मतित्थयरे जिणे ॥ १ ॥ व्याख्या—पार्श्व इति नामाऽर्हन्नभूत्तीर्थकरोऽभूत्. कीदृशः सः?

जिनः परीषहोपसर्गजेता, रागद्वेषजेता वा. पुनः कीदृशः स पार्श्वजिनः? लोकपूजितो लोकेन त्रिजगताऽर्चितः. पुनः कथंभूतः सः? 'संबुद्धप्पा' संबुद्धात्मा तत्वावबोधयुक्तात्मा. पुनः कीदृशः स पार्श्वः? सर्वज्ञः. पुनः कीदृशः पार्श्वः? धर्मतीर्थकरः, धर्म एव भवांबुधितरणहेतुत्वात्तीर्थं, धर्मतीर्थं करोतीति धर्मतीर्थकरः. पुनः कीदृशः? जयतिस्म सर्वकर्माणीति जिनः, द्वितीयजिनविशेषणेन श्रीपार्श्वनाथस्य मुक्तिगमनं सूचितं. तदा हि श्रीमहावीरः प्रत्यक्षं तीर्थकरो विहरति, श्रीपार्श्वनाथस्तु मुक्तिं जगामेति भावः. ॥ १ ॥

॥ मूलम् ॥—तस्स लोगपईवस्स । आसि सीसं महाजसे ॥ केसीकुमारसमणे । विज्जाचरणपारगे ॥ २ ॥ व्याख्या—तस्य लोकप्रदीपस्य श्रीपार्श्वनाथतीर्थकरस्य केशीकुमारः शिष्य आसीत्. कुमारो ह्यपरिणीततया, कुमारत्वेनैव श्रमणः संगृहीतचारित्रः कुमारश्रमणः. कथंभूतः सः? महायशा महाकीर्तिः, पुनः कीदृशः? विद्याचरणपारगो ज्ञानचारित्रयोः पारगामी इति. ॥ २ ॥

॥ मूलम् ॥—ओहिनाणसुए बुद्धे । सीससंघसमाकुले ॥ गामाणुगामं रीयंते । सावत्थिं

नगरिमागए ॥ ३ ॥ व्याख्या—स केशीकुमारश्रमणः श्रावस्त्यां नगर्यामागतः, किं कुर्वन्? ग्रामानुग्रामं 'रीयंते' इति ग्रामानुग्रामं विचरन्. कीदृशः सः? 'ओहिनाणसुएबुद्धे' इत्यवधिज्ञानश्रुताभ्यां बुद्धोऽवगततत्वो मतिश्रुतावधिज्ञानसहितः. पुनः कीदृशः? शिष्यसंघसमाकुलः शिष्यवर्गसहितः. ॥ ३ ॥

॥ मूलम् ॥—तिंदुयं णाम उज्जाणं । तम्मी नयरमंडले ॥ पासुए सिज्जसंथारे । तत्थ वासमुवागए ॥ ४ ॥ व्याख्या—स केशीकुमारश्रमणस्तत्र श्रावस्त्यां नगर्यां, तस्याः श्रावस्त्या नगरमंडले पुरपरिसरे तिंदुकं नामोद्यानं वर्तते, तत्रोद्याने प्रासुके प्रदेशे जीवरहिते शय्यासंस्तारे वासमुपागतः. शय्या वसतिस्तस्यां संस्तारः शिलाफलकादिः शय्यासंस्तारस्तस्मिन् समवसृत इत्यर्थः. ॥ ४ ॥

॥ मूलम् ॥—अह तेणेव कालेणं । धम्मतित्थयरे जिणे ॥ भगवं वद्धमाणुत्ति । सव्वलोगंमि विस्सुए ॥ ५ ॥ व्याख्या—अथशब्दो वक्तव्यांतरोपन्यासे. तस्मिन्नेव काले धर्मतीर्थंकरो जिनो भगवान् श्रीवर्धमान इति सर्वलोके विश्रुतोऽभूत्. ॥ ५ ॥

॥ मूलम् ॥—तस्स लोगपईवस्स । आसि सीसे महाजसे ॥ जयवं गोयमं नामे । विज्जाचरणपारगे ॥ ६ ॥ व्याख्या—तस्य श्रीवर्धमानस्वामिनो लोकप्रदीपस्य तीर्थंकरस्य गौतमनामा शिष्योऽभूत्. कथंभूतो गौतमः? महायशा महाकीर्तिः. पुनः कीदृशो गौतमः? विद्याचरणपारगो ज्ञानचारित्रधारी. पुनः कीदृशो गौतमः? भगवांश्चतुर्ज्ञानी मतिश्रुतावधिमनःपर्यायज्ञानयुक्. ॥ ६ ॥

॥ मूलम् ॥ बारसंगविउ बुद्धे । सीससंघसमाकुले ॥ गामाणुगामं रीयंते । सोवि सावत्थीमागए ॥ ७ ॥ व्याख्या—स गौतमोऽपि ग्रामानुग्रामं विहरन् श्रावस्त्यां नगर्यामागतः. कीदृशो गौतमः? द्वादशांगवित्, एकादशांगानि दृष्टिवादसहितानि येन गौतमेन संपूर्णानि ज्ञातानीत्यर्थः. पुनः कीदृशो गौतमः? बुद्धो ज्ञाततत्वः. पुनः कीदृशः? शिष्यसंघसमाकुलः.

॥ मूलम् ॥—कोट्ठगं णाम उज्जाणं । तम्मि नगरमंडले ॥ फासुए सिज्जसंथारे । तत्थ वासमुवागए ॥ ८ ॥ व्याख्या—तस्याः श्रावस्त्या नगर्या मंडले परिसरे क्रोष्टुकं नामोद्यानं वर्तते. तत्र प्रासुके शय्यासंस्तारे वासमवस्थानमुपागतः प्राप्तः. ॥ ८ ॥

॥ मूलम् ॥—केसीकुमारसमणे । गोयमे य महाजसे ॥ उन्नउवि तत्थ विहरिंसु । अल्लीणा सुसमाहिया ॥ ९ ॥ व्याख्या—केशीकुमारश्रमणश्च पुनर्गौतम एतावुन्नावपि व्यवाहार्थमागातां. कीदृशौ तावुन्नौ? महायशसौ, पुनः कीदृशौ? अलीनौ मनोवाक्कायगुप्तिष्वाश्रितौ, पुनः कीदृशौ? सुसमाहितौ सम्यक्समाधियुक्तौ. ॥ ९ ॥

॥ मूलम् ॥—उन्नउ सीससंघाणं । संजयाणं तवस्सिणं ॥ तत्थ चिंता समुप्पन्ना । गुणवंताण ताइणं ॥ १० ॥ व्याख्या—तत्र तस्यां श्रावस्त्यामुन्नयोः केशीगौतमयोः शिष्यसंघानां संयतानां तपस्विनां साधूनां गुणवतां ज्ञानदर्शनचारित्रवतां त्रायिणां षड्जीवरक्षाकारिणां परस्परावलोकनाच्चिंता समुत्पन्ना, विचारः समुत्पन्नः. ॥ १० ॥

॥ मूलम् ॥—केरिसो वा इमो धम्मो । इमो धम्मो व केरिसो ॥ आयारधम्मपणिही । इमा वा सा व केरिसी ॥ ११ ॥ व्याख्या—अयमस्मत्संबंधी धर्मः कीदृशः? वा इति विकल्पे, वशब्दोऽपि वार्थे, वाऽथवाऽयं धर्मो दृश्यमानगणभृच्छिष्यसंबंधी कीदृशः? पुनरयमाचारधर्मप्रणिधिरस्माकं कीदृशः? पुनरेतेषां वाऽचारप्रणिधिः कीदृशः? प्राकृतत्वाल्लिंगव्यत्ययः.

आचारो वेषधारणादिको बाह्यः क्रियाकलापः, स एव धर्मस्तस्य प्रणिधिर्व्यवस्थापनमाचारधर्मप्रणिधिः पृथक् पृथक् कथं? सर्वज्ञोक्तस्य धर्मस्य तत्साधनानां च भेदे हेतुं ज्ञातुमिच्छाम इति भावः. ॥ ११ ॥

॥ मूलम् ॥—चाउज्जामो य जो धम्मो । जो इमो पंचसिक्खिओ ॥ देसिओ वद्धमाणेणं । पासेण य महामुणी ॥ १२ ॥ अचेलगोय जो धम्मो । जो इमो संतरुत्तरो ॥ एककज्जपवन्नाणं । विसेसो किं नु कारणं ॥ १३ ॥ युग्मं ॥ व्याख्या—यश्चायं चातुर्यामो धर्मः पार्श्वेन महामुनिना तीर्थकरेण दर्शितः, चत्वारश्च ते यामाश्च चतुर्यामस्तत्र भवश्चातुर्यामश्चातुर्व्रतिकोऽहिंसा १ सत्य २ चौर्यत्याग ३ परिग्रहत्याग ४ लक्षणो धर्मः प्रकाशितः. यश्च पुनरयं धर्मो वर्धमानेन पंचशिक्षिकः पंचशिक्षितो वा, पंचभिर्महाव्रतैः शिक्षितः पंचशिक्षितः प्रकाशितः. पंचसु शिक्षासु भवः पंचशिक्षिकः पंचमहाव्रतात्मा, अहिंसा १ सत्य २ चौर्यत्याग ३ मैथुनपरिहार ४ परिग्रहत्याग ५ लक्षणो धर्मः प्रकाशितः. ॥ १२ ॥ पुनर्वर्धमानेनाऽचेलको धर्मः प्रकाशितः, अचेलं मानोपेतं धवलं जीर्णप्रायमल्पमूल्यं वस्त्रं धारणीयमिति वर्धमान-

स्वामिना प्रोक्तं, असदिव चेलं यत्र सोऽचेलः, अचेल एवाऽचेलकः, यद्वस्त्रं सदप्यसदिव तत्कार्यमित्यर्थः. पुनर्यो धर्मः पार्श्वेन स्वामिना सांतरोत्तरः, सह अंतरेणोत्तरेण प्रधानबहुमूल्येन नानावर्णेन प्रलंबेन वस्त्रेण च वर्तते यः स सांतरोत्तरः सचेलको धर्मः प्रकाशितः. एककार्ये मुक्तिरूपे कार्ये प्रवृत्तयोः श्रीवीरपार्श्वयोर्धर्माचारप्रणिधिविषयो विशेषस्तत्र किं नु कारणं? को हेतुः? कारणभेदे हि कार्यभेदसंभवः. कार्यं तूभयोरेकमेव, कारणं च पृथक् पृथक् कथमिति भावः. किमिति प्रश्ने, नु इति वितर्के. ॥ १३ ॥

॥ मूलम् ॥—अह ते तत्थ सीसाणं । विन्नाय पवियक्कियं ॥ समागमे कयमई । उभउ केसिगोयम ॥ १४ ॥ व्याख्या—अथानंतरं तयोरुभयोस्तत्र श्रावस्त्यामागमनानंतरं केशिगौतमौ तावुभौ समागमे कृतमती अभूतां. किं कृत्वा? शिष्याणां क्षुल्लकानां प्रवितर्कितं विज्ञाय, विकल्पं ज्ञात्वा. ॥ १४ ॥

॥ मूलम् ॥—गोयमे पडिरूवन्नू । सिस्ससंघसमाकुले ॥ जिट्ठं कुलमविक्खंतो । तिंदुयं वणमागउ ॥ १५ ॥ व्याख्या—गौतमस्तिंदुकं वनमागतः, केशीकुमाराधिष्ठिते वने आगतः.

कीदृशो गौतमः? प्रतिरूपज्ञः प्रतिरूपो यथोचितविनयस्तं जानातीति प्रतिरूपज्ञः. पुनः कीदृशः? शिष्यसंघसमाकुलः शिष्यवृंदसहितः, गौतमः किं कुर्वाणः? ज्येष्टं कुलमपेक्षमाणो ज्येष्टं वृद्धं प्रथमजननात् पार्श्वनाथस्य कुलं संतानं विचारयन्नित्यर्थः. ॥ १५ ॥

॥ मूलम् ॥—केसीकुमारसमणे । गोयमं दिस्समागयं ॥ पडिरूवं पडिवत्तिं । सम्मं च पडिवज्जई ॥ १६ ॥ व्याख्या—केशीकुमारश्रमणो गौतममागतं दृष्ट्वा सम्यक् प्रतिरूपामागतानां योग्यां प्रतिपत्तिं सेवां संप्रतिपद्यते सम्यक्करोतीत्यर्थः. ॥ १६ ॥

॥ मूलम् ॥—पलालं फासुयं तत्थ । पंचमं कुसतणाणि य ॥ गोयमस्स निसिज्जाए । खिप्पं संपणामए ॥ १७ ॥ व्याख्या—तत्र तिंदुकोद्याने एव केशीकुमारश्रमणो गौतमस्य निषद्यायै गौतमस्योपवेशनार्थं प्रासुकं निर्बीजं चतुर्विधं पलालं, पंचमानि कुशतृणानि, चकारादन्यान्यपि साधुयोग्यानि तृणानि ' संपणामए ' समर्पयति. पंचमत्वं हि कुशतृणानां पलालभेदेन, चतुर्विधं पलालं यथा—तणपणगं पन्नत्तं । जिणेहिं कम्मट्ठगंठिमहणेहिं ॥ साली १ वीही २ कोद्दव ३ । रालग ४ रन्ने तणा ५ पंच ॥ १ ॥ इति वचनात्. चत्वारि पलालानि

साधुप्रस्तरणयोग्यानि, पंचमं हि दर्न्नादि प्रासुकं तृणं वर्तते. तत् केशीकुमारश्रमणेन गौतमस्य प्रस्तरणार्थं प्रदत्तमिति न्नावः. ॥ १७ ॥

॥ मूलम् ॥—केसीकुमारसमणो । गोयमे य महाजसे ॥ उन्नर्ज निसन्ना सोहंति । चंदसूरसमप्पन्ना ॥ १८ ॥ व्याख्या—तदा केशीकुमारश्रमणश्च पुनर्गौतमो महायशाः, एतावुन्नौ तत्र तिंदुकोद्याने निपणावुपविष्टौ शोन्नेते विराजेते. कथंभूतौ तौ? चंद्रादित्यसमप्रन्नौ.

॥ मूलम् ॥—समागया बहु तत्थ । पासंमा कोजगा मिया ॥ गिहित्थाणं अणेगार्ज । सहस्सीर्ज समागया ॥ १९ ॥ व्याख्या—तत्र तस्मिंस्तिंडुकोद्याने बहवः पाखएमा अन्यदर्शनिनः परिव्राजकादयः समागताः. कीदृशास्ते पाखएमाः? कौतुकान्मृगा आश्चर्यान्मृगा इवाऽज्ञानिनः. तु पुनर्गृहस्थानामनेकलोकानां सहस्त्रं समागतं. अनेका प्रचुरा लोकानां सहस्रीति आर्पत्वात्, समागता तत्र संप्राप्ता. ॥ १९ ॥

॥ मूलम् ॥—देवदाणवगंधव्वा । जक्खरक्खसकिन्नरा ॥ अदिस्साणं च न्नूयाणं । आसी तत्थ समागमो ॥ २० ॥ व्याख्या—तत्र तस्मिन् प्रदेशे देवदानवगंधर्वा यक्षराक्षसकिन्नराः

समागता इति शेषः. च पुनस्तत्राऽदृश्यानां भूतानां केलीकिलव्यंतरविशेषाणां समागमः संगम आसीत्. ॥ २० ॥

॥ मूलम् ॥—पुच्छामि ते महाभाग । केसी गोयममब्बवी ॥ तओ केसीं बुवंतं तु । गोयमो इणमब्बवी ॥ २१ ॥ व्याख्या—तयोर्जल्पमाह—तदा केशी गौतममब्रवीत्, किमब्रवीदित्याह—हे महाभाग! ते त्वामहं पृच्छामि, यदा केशीकुमारेणेत्युक्तं तदा केशीकुमारश्रमणं ब्रुवंतमिदमब्रवीत्. ॥ २१ ॥

॥ मूलम् ॥—पुच्छ भंते जहिच्छं ते । केसिं गोयममब्बवी ॥ तओ केसी अणुन्नाए । गोयम इणमब्बवी ॥ २२ ॥ व्याख्या—गौतमो वदति, हे भदंत! हे पूज्य! ते तव यथेच्छं यत्तव चेतस्यवभासते तत्त्वं पृच्छ? मम प्रश्नं कुरु? इति केशीकुमारंप्रति गौतमोऽब्रवीत्. 'गौतमं' इति प्राकृतत्वात्प्रथमास्थाने द्वितीया. ततो गौतमवाक्यादनंतरं केशीकुमारो गौतमेनानुज्ञातः सन् गौतमेन दत्ताज्ञः सन् गौतमंप्रतीदं वक्ष्यमाणं वचनमब्रवीत्. ॥ २२ ॥

॥ मूलम् ॥—चाउज्जामो य जो धम्मो । जो इमो पंचसिक्खिओ ॥ देसिओ वद्धमाणेण ।

पासेण य महामुणी ॥ २३ ॥ एककज्जपवन्नाणं । विसेसे किं नु कारणं ॥ धम्मे दुविहे मेहावी । कहं विपच्चओ न ते ॥ २४ ॥ युग्मं ॥ व्याख्या—हे गौतम! पार्श्वेन महामुनिना तीर्थकरेण यश्चातुर्यामश्चातुर्व्रतिकोऽयमस्माकं धर्म उद्दिष्टः, पुनर्योऽयं धर्मो वर्धमानेन पंचशिक्षिकः पंचमहाव्रतात्मको दिष्टः कथितः, ॥ २३ ॥ एककार्ये मोक्षसाधनरूपे कार्ये प्रपन्नयोः श्रीपार्श्वमहावीरयोर्विशेषे भेदे किं कारणं? हे मेधाविन्! द्विविधे धर्मे तव कथं विप्रत्ययः संशयो न भवति, यतो द्वावपि तीर्थंकरौ, द्वावपि मोक्षकार्यसाधने प्रवृत्तौ, कथमनयोर्भेद इति हेतोस्तव मनसि कथं विप्रत्ययो न भवति? संदेहो न भवति? ॥ २४ ॥

॥ मूलम् ॥—तओ केसिं बुवंतं तु । गोयमो इणमब्ववी ॥ पण्णा समिक्खए धम्मं । तत्तं तत्थ विणिच्छयं ॥ २५ ॥ व्याख्या—ततोऽनंतरं केशीकुमारश्रमणं ब्रुवंतं कथयंतं गौतम इदमब्रवीत्, हे केशीकुमारश्रमण! प्रज्ञा बुद्धिर्धर्मतत्त्वं धर्मस्य परमार्थं पश्यति, धर्मतत्त्वं बुद्ध्यैव विलोक्यते, न तु चर्मचक्षुषा धर्मतत्त्वं विलोक्यते. सूक्ष्मं धर्मं सुधीर्वेत्तीति वचनात्. कीदृशं धर्मतत्त्वं? तत्त्वविनिश्चयं, तत्त्वानां जीवादीनां विशेषेण निश्चयो यस्मिंस्तत्तत्त्वविनि-

श्चयं. केवलं धर्मतत्वस्य श्रवणमात्रेण निश्चयो न भवति, किंतु प्रज्ञावशादेव धर्मतत्वस्य निश्चयः स्यादिति भावः. ॥ २५ ॥

॥ मूलम् ॥—पुरिमा उज्जुजडा उ । वक्कजडा य पच्छिमा ॥ मज्झिमा उजुपन्नाउ । तेण धम्मो दुहा कउ ॥ २६ ॥ व्याख्या—हे केशीकुमारश्रमण ! पुरिमाः पूर्वे प्रथमतीर्थकृत्साधव आदीश्वरस्य मुनय ऋजुजडाः, ऋजवश्च ते जडाश्च ऋजुजडा बभूवुरिति शेषः. शिक्षाग्रहणतत्परा ऋजवः, दुःप्रतिपाद्यतया जडा मूर्खाः, तुशब्दो यस्मादर्थे. पश्चिमाः पश्चिमतीर्थकृत्साधवो महावीरस्य मुनयो वक्रजडाः, वक्राश्च ते जडाश्च वक्रजडाः, वक्राः प्रतिबोधसमये वक्रज्ञानाः, जडाः कदाग्रहपराः, तादृशा बभूवुः. तु पुनर्मध्यमा मध्यमतीर्थकराणां मुनयो द्वाविंशतितीर्थकृत्साधव ऋजुप्राज्ञा बभूवुः, ऋजवश्च ते प्राज्ञाश्च ऋजुप्राज्ञाः, ऋजवः शिक्षाग्रहणतत्पराः, पुनः प्राज्ञाः प्रकृष्टबुद्धयः, तेन कारणेन हे मुने ! धर्मो द्विधा कृतः.

॥ मूलम् ॥—पुरिमाण दुव्विसोज्झो । चरिमाणं दुरणुपालउ चेव ॥ कप्पो मज्झिमगाणं तु । सुविसोज्झो सुपालउ ॥ २७ ॥ व्याख्या—'पुरिमाणं' इति प्रथमतीर्थकृत्साधूनां

कल्पः साध्वाचारो दुर्विशोध्यो दुःखेन निर्मलीकरणीयः, आदीश्वरस्य साधव ऋजुजडाः, ऋजुजडत्वात्कल्पनीयाकल्पनीयज्ञानविकलाः. पुनश्चरमाणां चरमतीर्थकृत्साधूनां दुरनुपालको दुःखेनानुपाल्यते इति दुरनुपालकः, महावीरस्य साधवो वक्रजडाः, वक्रत्वाद्विकल्पबहुलत्वात्साध्वाचारं जानंतोऽपि कर्तुमशक्ताः. तु पुनर्मध्यमगानां द्वाविंशतितीर्थकृत्साधूनामजितनाथादारभ्य पार्श्वनाथपर्यंततीर्थकरमुनीनां कल्पः साध्वाचारः सुविशोध्यः सुपालकश्च साध्वाचारः सुखेन निर्मलीकर्तव्यः, पुनः सुखेन पाल्यः. द्वाविंशतितीर्थकृत्साधवो हि ऋजुप्राज्ञाः, स्तोकेनोक्तेन वहुज्ञाः, तस्माच्चातुर्व्रतिको धर्म उद्दिष्टः, मैथुनं हि परिग्रहे एव गण्यते. आदीश्वरस्य साधूनां यदि पंच महाव्रतानि प्राणातिपातविरतिमृषावादविरतिस्तेयविरतिमैथुनविरतिपरिग्रहविरतिरूपाणि पृथक् पृथक् कथ्यंते, तदा ते ऋजुजडाः पंचमहाव्रतानि पालयंति, नो चेत्ते व्रतभंगं कुर्वंति, ते तु यावन्मात्रमाचारं शृण्वंति तावन्मात्रमेव कुर्वंति, अधिकं स्वबुद्ध्या किमपि न विदंति. महावीरस्य साधवस्तु चेत्पंचमहाव्रतानि शृण्वंति तदैव पालयंति, तेऽपि वक्रा जडाश्च चेच्चत्वारि व्रतानि शृण्वंति तदा चत्वार्येव पालयंति, न तु पं-

चमं पालयंति. वक्रजडा हि कदाग्रहग्रस्ता अतीवहठधारिणः. द्वाविंशतितीर्थकृत्साधव ऋजवः प्राज्ञाश्च चत्वारि व्रतानि श्रुत्वा सुबुद्धित्वात् पंचापि व्रतानि पालयंति. तस्माच्चत्वारि व्रतानि प्रोक्तानि. तस्माद्धर्मो द्विविधः कृतः, चातुर्व्रतकः पंचव्रतात्मकश्च. स्वस्ववारकपुरुषाणामभिप्रायं विज्ञाय तीर्थकरैर्धर्म उपदिष्ट इति भावः. ॥ २७ ॥

॥ मूलम् ॥—साहु गोयम पन्ना ते। छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं। तं मे कहसु गोयमा ॥ २८ ॥ व्याख्या—इति श्रुत्वा केशीकुमारः श्रमणो वदति, हे गौतम! ते तव साधुप्रज्ञास्ति, सम्यग्बुद्धिरस्ति, मे ममायं संशयस्त्वया छिन्नो दूरीकृतः. अन्योऽपि मम संशयोऽस्ति, तमिति तस्योत्तरं हे गौतम! त्वं कथयस्व? इदं वचनं हि शिष्यापेक्षं, न तु तस्य केशिमुनेर्ज्ञानत्रयवत एवंविधसंशयसंभवः. ॥ २८ ॥

॥ मूलम् ॥—अचेलगो य जो धम्मो। जो इमो संतरुत्तरो ॥ देसिओ वद्धमाणेण। पासेण य महाजसा ॥ २९ ॥ एककज्जपवन्नाणं। विसेसे किं नु कारणं ॥ लिंगे दुविहे मेहावी। कहं विपच्चओ न ते ॥ ३० ॥ युग्मं ॥ व्याख्या—वर्धमानेन चतुर्विंशतितमतीर्थकरेण

यो धर्मोऽचेलकः प्रमाणोपेतजीर्णप्रायधवलवस्त्रधारणात्मकः साध्वाचारो दिष्टः, च पुनः पार्श्वेन महायशसा त्रयोविंशतितमतीर्थकरेण योऽयं धर्मः सांतरुत्तरः पंचवर्णबहुमूल्यप्रमाणरहितवस्त्रधारणात्मकः साध्वाचारः प्रदर्शितः. हे मेधाविन्! एककार्यप्रतिपन्नयोः श्रीवीरपार्श्वयोर्विशेषे भेदे किं कारणं? को हेतुः? हे गौतम! द्विविधे लिंगे द्विप्रकारके साधुवेषे ते तव कथं विप्रत्ययो नोत्पद्यते? कथं संदेहो न जायते? उभावपि तीर्थकरौ मोक्षकार्यसाधकौ, कथं ताभ्यां वेषभेदः प्रकाशितः? इति कथं तवायं संशयो न भवति? ॥ ३० ॥

॥ मूलम् ॥—केसिं एवं बुवंताणं । गोयमो इणमब्बवी ॥ विन्नाणेण समागम्म । धम्मसाहणमिछियं ॥ ३१ ॥ व्याख्या—तु पुनर्गौतम एवं ब्रुवाणं केशीकुमारं मुनिमिदमब्रवीत्, हे केशीमुने! तीर्थकरैर्विज्ञानेन विशिष्टज्ञानेन केवलज्ञानेन समागम्य यद्यद्यस्योचितं तत्तथैव ज्ञात्वा धर्मसाधनं धर्मोपकरणं वर्षाकल्पादि, इदमृजुप्राज्ञयोग्यं, इदं च वक्रजडयोग्यमितीप्सितमनुमतमिष्टं कथितमिति यावत्. यतो हि वीरशिष्याणां रक्तवर्णादिवस्त्रानुज्ञाने वक्रजडत्वेन रंजनादिषु प्रवृत्तिर्दुर्निवारैव स्यात्. पार्श्वनाथशिष्यास्तु ऋजुप्राज्ञत्वेन शरीराद्या-

दनमात्रेण प्रयोजनं जानंति, न च ते किंचित्कदाग्रहं कुर्वंति. ॥ ३१ ॥

॥ मूलम् ॥—पच्चयत्थं च लोगस्स । नाणाविहविगप्पणं ॥ जत्तत्थं गहणत्थं च । लोगे लिंगप्पओयणं ॥ ३२ ॥ व्याख्या—हे केशीमुने! नानाविधविकल्पनं नानाप्रकारोपकरणपरिकल्पनमनेकप्रकारोपकरणचतुर्दशोपकरणधारणं वर्षाकल्पादिकं च यत्पुनर्लोके लिंगस्य प्रयोजनं, साधुवेषस्य प्रवर्तनं यत्तीर्थकरैरुक्तं तल्लोकस्य प्रत्ययार्थं. लोकस्य गृहस्तस्य प्रत्ययाय, यतो हि साधुवेषं लुंचनाद्याचारं च दृष्ट्वाऽमी व्रतिन इति प्रतीतिरुत्पद्यते. अन्यथा विडंबकाः पाखंडिनोऽपि पूजाद्यर्थं वयं व्रतिन इति ब्रुवीरन्, ततश्च व्रतिष्वप्रतीतिः स्यात्, अतो नानाविधविकल्पनं लिङ्गप्रयोजनं च पुनर्यात्रार्थं संयमस्य निर्वाहार्थं. यतो हि वर्षाकल्पादिकं विना वृष्ट्यादिना संयमनिर्वाहो न स्यात्, तेन वर्षाकल्पादिकं वर्षर्तुयोग्याचारोपकरणधारणं च दर्शितं. पुनर्ग्रहणं ज्ञानं, तदर्थमिति ग्रहणार्थं ज्ञानायेत्यर्थः. यदि कदाचिच्चित्तविप्लवोत्पत्तिः स्यात्, परीषहोत्पत्तौ संयमेऽरतिरुत्पद्यते, तदा साधुवेषधारी मनस्येतादृशं ज्ञानं कुर्यात्, यतोऽहं साधोर्वेषधार्यस्मि, यतो ' धम्मं रक्खइ वेसो ' इत्युक्तत्वात्. इत्यादिहेतो-

लिङ्गधारणं ज्ञेयं. ॥ ३२ ॥

॥ मूलम् ॥—अह भवे पइन्नाउ । मोक्खसप्भूयसाहणे ॥ नाणं च दंसणं चेव । चरित्तं चेव निच्छए ॥ ३३ ॥ व्याख्या—पुनर्गौतमो वदति, हे केशीकुमारश्रमण! निश्चयनये मोक्षसद्भूतसाधनानि ज्ञानदर्शनचारित्राणि संति. मोक्षरूपस्य कार्यस्य ज्ञानदर्शनचारित्राणि सत्यानि साधनानि निश्चयनये वर्तंते. अथ प्रतिज्ञा भवेत्, श्रीपार्श्वनाथमहावीरयोरियमेकैव प्रतिज्ञा भवेत्. श्रीपार्श्वनाथस्यापि मोक्षस्य साधनानि ज्ञानदर्शनचारित्राण्येव, श्रीवीरस्यापि मोक्षस्य साधनानि ज्ञानदर्शनचारित्राण्येव. श्रीपार्श्ववीरयोरेषा प्रतिज्ञा भिन्ना नास्तीत्यर्थः. वेषस्यांतरं ऋजुजडवक्रजडाद्यर्थं, मोक्षस्य साधने वेषो व्यवहारनये ज्ञेयः, न तु निश्चये नये वेषः. निश्चये नये तु ज्ञानदर्शनचारित्राण्येव. तत्र ज्ञानं मतिज्ञानादिकं, दर्शनं तत्त्वरुचिः. चारित्रं सर्वसावद्यविरतिरूपं. तस्मान्निश्चयव्यवहारनयौ ज्ञातव्यावित्यर्थः. ॥ ३३ ॥

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसउ इमो ॥ अन्नोवि संसउ मज्झं । तं मे कहसु गोयमा ॥ ३४ ॥ व्याख्या—अस्या अर्थस्तु पूर्ववत्, न वरं प्रसंगतः शिष्याणां

व्युत्पत्त्यर्थं जानन्नप्यपरमपि वस्तुतत्वं गौतमस्य स्तुतिद्वारेण पृच्छन्नन्योऽपि संशय इत्याद्याह—

॥ मूलम् ॥ अणेगाण सहस्साणं । मज्के चिट्ठसि गोयमा ॥ ते य ते अभिगच्छंति । कहं ते निज्जिया तुमे ॥ ३५ ॥ व्याख्या—केशी वदति, हे गातम! अनेकेषां शत्रुसंबंधिनां सहस्राणां मध्ये त्वं तिष्टसि, ते चानेकसहस्रसंख्याः शत्रवस्ते इति त्वामभि लक्षीकृत्य गच्छंति सन्मुखं धावंति, ते शत्रवस्त्वया कथं निर्जिताः. ॥ ३५ ॥ अथ गौतम उत्तरं वदति—

॥ मूलम् ॥—एगे जिए जिया पंच । पंचे जिए जिया दस ॥ दसहा उ जिणित्ताणं । सव्वसत्तू जिणामिहं ॥ ३६ ॥ व्याख्या—हे केशीमुने! एकस्मिन् शत्रौ जिते पंच शत्रवो जिताः, पंचसु जितेषु दश शत्रवो जिताः, दशैव वैरिणो वशीकृताः. दशप्रकारान् शत्रून् जित्वा सर्वशत्रून् जयामि. यद्यपि चतुर्णां कषायाणामवांतरभेदेन षोडशसंख्या भवति, नोकषायाणां नवानां मीलनात् पंचविंशतिर्भेदा भवंति, तथापि सहस्रसंख्या न भवति, परंतु तेषां दुर्जयत्वात् सहस्रसंख्या प्रोक्ता. ॥ ३६ ॥ अथ केशी पृच्छति—

॥ मूलम् ॥—सत्तू य के य वुत्ते । केसी गोयममब्बवी ॥ तओ केसी वुवंतं तु । गोयमो

णमब्बवी ॥ ३७ ॥ एगप्पा अजिए सत्तू । कसाया इंदियाणि य ॥ ते जिणित्तु जहा नायं । विहरामि अहं मुणी ॥ ३८ ॥ व्याख्या—हे मुने! एक आत्मा चित्तं, तस्याऽभेदोपचारादात्ममनसोरेकीभावे मनसः प्रवृत्तिः स्यात्, तस्मादेक आत्मा अजितः शत्रुर्दुर्जयो रिपुरनेकदुःखहेतुत्वात्. एवं सर्वेऽप्येते उत्तरोत्तरभेदादेकस्मिन्नात्मनि जिते चत्वारः कषायाः, तेषां मीलनात्पंच, पंचस्वात्मकषायेषु जितेष्विंद्रियाणि पंच जितानि, तदा दश शत्रवो जिताः, आत्मा १ कषायाश्चत्वारः, एवं पंच, पुनः पंचेंद्रियाणि, एवं दशैव. आत्मा. कषायाः, नोकषायाः. इंद्रियाणि च, एते सर्वे शत्रवोऽजिताः संति. तान् सर्वान् शत्रून् यथान्यायं वीतरागोक्तवचसा जित्वाऽहं विहरामि. तेषां मध्ये तिष्ठन्नप्यप्रतिबद्धविहारेण विचरामि. अत्र पूर्वं हि प्रश्नकालेऽनेकेषां सहस्राणामरीणां मध्ये तिष्ठसीत्युक्तं, उत्तरसमये तु कषायाणामवांतरभेदेन षोडशसंख्या भवंति, नोकषायाणां नवानां मीलनाच्च पंचविंशतिभेदा भवंति. तथात्मेंद्रियाणामपि सहस्रसंख्या न भवति, परंत्वेतेषां दुर्जयत्वात् सहस्रसंख्योक्तेति भावः. ॥३८॥

॥ मूलम् ॥—साहु गोयम पन्नाते । छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं ।

तं मे कह सुगोयमा ॥ ३९ ॥ व्याख्या—अस्या अर्थः पूर्ववत्. ॥ ३९ ॥

॥ मूलम् ॥—दीसंति बहवे लोए । पासबद्धा सरीरिणो ॥ मुक्कपासो लहुब्भूओ । कहं तं विहरसी मुणी ॥ ४० ॥ व्याख्या—पुनः केशी वदति, हे गौतममुने! लोके संसारे बहवः शरीरिणः पाशबद्धा दृश्यंते, त्वं मुक्तपाशः सन् लघूभूतो वायुरिव कथं विहरसि? ॥४०॥ अथ गौतमः प्राह—

॥ मूलम् ॥—ते पासे सव्वसो छित्ता । निहंतूणं उवायओ ॥ मुक्कपासो लहुब्भूओ । विहरामि अहं मुणी ॥ ४१ ॥ व्याख्या—हे केशीमुने! तान् पाशान् सर्वशः सर्वान् छित्वा, पुनस्तान् पाशानुपायतो निस्संगादित्वाभ्यासान्निहत्य पश्चान्मुक्तपाशो बंधनरहितः सन् लघूभूतोऽहं विहरामि. ॥ ४१ ॥

॥ मूलम् ॥—पासा इइ के वुत्ते । केसी गोयममब्बवी ॥ तओ केसीं बुवंतं तु । गोयमो इणमब्बवी ॥ ४२ ॥ व्याख्या—इति गौतमवाक्यादनंतरं केशीश्रमणो गौतममब्रवीत्, हे गौतम! पाशाः के उक्ताः? बंधनानि कान्युक्तानि? तत इति ब्रुवंतं केशिकुमारमुनिं गौतम इ-

दनुत्तरमब्रवीत्. ॥ ४२ ॥

॥ मूलम् ॥—रागदोसाइओ तिव्वा । नेहपासा भयंकरा ॥ ते छिंदित्तु जहानायं । विहरामि जहक्कमं ॥ ४३ ॥ व्याख्या—हे केशीमुने ! जीवानां रागद्वेषादयस्तीव्राः कठोराश्छेत्तुमशक्याः स्नेहपाशा मोहपाशा उक्ताः, कीदृशास्ते स्नेहपाशाः ? भयंकरा भयं कुर्वंतीति भयंकराः, रागद्वेषावादौ येषां ते रागद्वेषादयः, रागद्वेषमोहा एव जीवानां भयदाः, तान् स्नेहपाशान् यथान्यायं वीतरागोक्तोपदेशेन छित्वा यथाक्रमं साध्वाचारानुक्रमेणाहं विहरामि, साधुमार्गे विचरामि. ॥ ४३ ॥

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं । तं मे कहसु गोयमा ॥ ४४ ॥—व्याख्या—अस्या अर्थस्तु पूर्ववत्. ॥ ४४ ॥

॥ मूलम् ॥—अंतोहियसंभूया । लया चिट्ठइ गोयमा ॥ फलेइ विसभक्खीणं । सा उ उद्धरिया कहं ॥ ४५ ॥ व्याख्या—हे गौतम ! सा लता सा वल्ली त्वया कथं केन प्रकारेणोध्धृतोत्पाटिता ? सा का ? या लता अंतःहृदयसंभूता सती तिष्ठति. अंतःहृदयं मन

उच्यते, एतावता मनस्युक्तता, पुनर्या वल्ली विषभक्ष्याणि फलानि फलति. विषवद्भक्ष्याणि विषभक्ष्याणि विषफलानि निष्पादयति, पर्यंतदारुणतया विषोपमानि फलानि यस्या लताया भवंति. ॥ ४५ ॥

॥ मूलम् ॥—तं लयं सव्वसो छित्ता । उद्धरित्ता समूलियं ॥ विहरामि जहानायं । मुक्कोसि विसभक्खणा ॥ ४६ ॥ व्याख्या—गौतमो वदति हे मुने ! तां लतां सर्वतः सर्वप्रकारेण छित्वा खंडीकृत्य, पुनः समूलिकां मूलसहितामुध्धृत्योत्पाट्य यथान्यायं साधुमार्गे विहरामि. ततोऽहं विषभक्षणाद्विषोपमफलाहारान्मुक्तोऽस्मि. ॥ ४६ ॥

॥ मूलम् ॥—लया इइ का वुत्ता । केसी गोयममब्बवी ॥ तउ केसीं बुवंतं तु । गोयमो इणमब्बवी ॥ ४७ ॥ व्याख्या—हे गौतम ! लता इति का उक्ता ? इति पृष्टे सति, इति ब्रुवंतं केशीमुनिं गौतम इदमब्रवीत्. ॥ ४७ ॥

॥ मूलम् ॥—भवतण्हा लया वुत्ता । भीमा भीमफलोदया ॥ तमुद्धित्तु जहानायं । विहरामि महामुणी ॥ ४८ ॥ व्याख्या—हे केशीमुने ! भवे संसारे तृष्णा लोभप्रकृतिर्लता

वल्लयुक्ता, कीदृशी सा? भीमा भयदायिनी, पुनः कीदृशी? भीमफलोदया, भीमो दुःख-कारणानां फलानां दुष्टकर्मणामुदयो विपाको यस्याः सा भीमफलोदया, दुःखदायककर्मफ-हेतुभूता, लोभमूलानि पापानीत्युक्तत्वात्. तां तृष्णावल्लीं यथान्यायमुध्धृत्याहं विहारं करोमि.

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं । तं मे कहसु गोयमा ॥ ४९ ॥ व्याख्या—अर्थस्तु पूर्ववत्. ॥ ४९ ॥

॥ मूलम् ॥—संपज्जलिया घोरा । अग्गी चिट्ठइ गोयमा ॥ जे डहंति सरीरत्था । कहं विज्झाविया तुमे ॥ ५० व्याख्या—हे गौतम! संप्रज्वलिता जाज्वल्यमाना घोरा भीषणा अग्नयः संसारे तिष्टंति, येऽग्नयः शरीरस्थान् अर्थात् प्राणिनो जीवान् दहंति ज्वालयंति. तेऽग्नयस्त्वया कथं विध्यापिताः? कथं शमिता इत्यर्थः. ॥ ५० ॥

॥ मूलम् ॥—महामेहप्पभूयाओ । गिज्झ वारिजलुत्तमं ॥ सिंचामि सययं ते उ । सित्ता नेव डहंति मे ॥ ५१ ॥ व्याख्या—हे केशीमुने! महामेघप्रभूतान्महामेघसमुत्पन्नाद्यर्थान्म-हानदीप्रवाहाद्वारि पानीयं गृहीत्वा तानग्नीन् सततं निरंतरं सिंचामि. तेऽग्नयो जलेन सि-

क्ताः संतो मां नैव दहंति. कथंभूतं तद्वारि? 'जलुत्तमं' जलोत्तमं, सर्वेषु जलेषु मेघोदकस्यैवोत्तमत्वात्. ॥ ५१ ॥

॥ मूलम् ॥—अग्गी इइ के वुत्ते । केसी गोयममब्बवी ॥ तओ केसीं बुवंतं तु । गोयमो इणमब्बवी ॥ ५२ ॥ व्याख्या—तदा केशीश्रमणो गौतममिदमब्रवीत्, हे गौतम! तेऽग्नय इति के उक्ताः? इत्युक्तवंतं केशीकुमारमुनिं गौतम इदमब्रवीत्. ॥ ५२ ॥

॥ मूलम् ॥—कसाया अग्गिणो वुत्ता । सुयसीलतवो जलं ॥ सुयधाराभिहया संता । भिन्ना हु न डहंति मे ॥ ५३ ॥ व्याख्या—हे केशीमुने! कषाया अग्नय उक्ताः, श्रुतं शीलं तपश्च जलं वर्तते, तत्र श्रुतं च श्रुतमध्योपदेशः, महामेघस्तीर्थंकरः, महाश्रोतश्च तदुत्पन्न आगमः, ते कषायाग्नयः श्रुतधाराभिहताः, श्रुतस्यागमवाक्यस्य, उपलक्षणत्वाच्छीलतपसोरपि, धारा इव धाराः, ताभिरभिहता विध्यापिताः श्रुतधाराभिहताः संतो भिन्ना विध्यापिताः, हु निश्चयेन मे इति मां न दहंति, मां न ज्वालयंति. ॥ ५३ ॥

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं ।

तं मे कहसु गोयमा ॥ ५४ ॥ व्याख्या–अर्थस्तु पूर्ववत्. ॥ ५४ ॥

॥ मूलम् ॥—अइसाहसिओ भीमो । दुहस्सो परिधावई ॥ जंसि गोयममारूढो । कहं तेण न हिरसि ॥ ५५ ॥ व्याख्या–हे गौतम! अतिसाहसिको दुष्टाश्वः परिधावति, यस्मिन् दुष्टाश्वे हे गौतम! त्वमारूढोऽसि, तेन दुष्टाश्वेन कथं न ह्रियसे? कथमुन्मार्गे न नीयसे? कथंभूतः स दुष्टाश्वः? सहसाऽविचार्य प्रवर्तते इति साहसिकः, अविचारिताध्वगामी. पुनः कीदृशो दुष्टाश्वः? भीमो भयानकः. ॥ ५५ ॥

॥ मूलम् ॥—पहावंतं निगिह्लामि । सुयरस्सीसमाहियं ॥ न मे गच्छई उम्मग्गं । मग्गं च पडिवज्जई ॥ ५६ ॥ व्याख्या—अथ गौतमो वदति, हे केशीमुने! तं दुष्टाश्वं प्रधावंतमुन्मार्गे व्रजंतमहं निगृह्णामि वशीकरोमि. कीदृशं तं दुष्टाश्वं? श्रुतरश्मिसमाहितं सिद्धांतवल्गया बद्धं. ततः स मे मम दुष्टाश्व उन्मार्गे न गच्छति, स दुष्टाश्वो मार्गं च प्रतिपद्यतेंगीकरोति. ॥ ५६ ॥

॥ मूलम् ॥—अस्से इइ के वुत्ते । केसी गोयममब्बवी ॥ तओ केसीं बुवंतं तु । गोयमो

इणमब्बवी ॥ ५७ ॥ व्याख्या—केशी पृछति, हे गौतम! अश्व इति क उक्तः? तत इति ब्रु-
वंतं केशीमुनिं गौतम इदमब्रवीत. ॥ ५७ ॥

॥ मूलम् ॥—मणो साहसिओ भीमो । दुठ्ठस्सो परिधावई ॥ तं सम्मं निगिह्णामि । ध-
म्मसिरकाय कंथगं ॥ ५८ ॥ व्याख्या–हे केशीमुने! मनो दुष्टाश्वः साहसिकः परिधावति,
इतस्ततः परिभ्रमति. तं मनोदुष्टाश्वं धर्मशिक्षायै धर्माभ्यासनिमित्तं कंथकमिव जात्याश्वमि-
व निगृह्णामि वशीकरोमि, यथा जात्याश्वो वशीक्रियते, तथा मनोदुष्टाश्वं वशीकरोमि. ॥५८॥

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं ।
तं मे कहसु गोयमा ॥ ५९ ॥ व्याख्या—अस्या अर्थस्तु पूर्ववत्. ॥ ५९ ॥

॥ मूलम् ॥—कुप्पहा बहवो लोए । जेहिं नासंति जंतवो ॥ अद्धाणे कह वट्टंतो । तं
न नासिसि गोयमा ॥ ६० ॥ व्याख्या—हे गौतम! लोके बहवः कुपथाः कुमार्गाः संति,
यैः कुमार्गैर्जंतवो नश्यंति, दुर्गतिवने व्रजंतो विलीयंते, सन्मार्गाच्च्यवंते इत्यर्थः. हे गौतम!
त्वमध्वनि वर्तमानः सन् कथं न नश्यसि? नाशं न प्राप्नोषि? सत्पथात्त्वं न च्यवसे? ॥६०॥

23

॥ मूलम् ॥—जे य मग्गेण गछंति । जे य उम्मग्गपठ्ठिया ॥ ते सव्वे विइया मज्झं । तो ण नस्सामिहं मुणी ॥ ६१ ॥ व्याख्या—हे केशीमुने! ये भव्यजना मार्गेण वीतरागोपदेशेन गछंति, च पुनर्येऽभव्या उन्मार्गप्रस्थिता भगवदुपदेशाद्विपरीतं प्रचलितास्ते सर्वे मया विदिताः. भव्याभव्ययोः सन्मार्गाऽसन्मार्गयोर्ज्ञानं मम जातमिति भावः. 'तो' तस्मात्कारणादहं न नश्यामि, अपथपरिज्ञानान्नाशं न प्राप्नोमि. ॥ ६१ ॥

॥ मूलम् ॥—मग्गे इइ के वुत्ते । केसी गोयममब्बवी ॥ तओ केसीं वुवंतं तु । गोयमो इणमब्बवी ॥ ६२ ॥ व्याख्या—अस्या अर्थः पूर्ववत्. ॥ ६२ ॥

॥ मूलम् ॥—कुप्पवयणपासंडी । सव्वे उम्मग्गपठ्ठिया ॥ समग्गं तु जिणक्खायं । एस मग्गे हि उत्तमे ॥ ६३ ॥ व्याख्या—हे केशीमुने! कुत्सितानि प्रवचनानि कुप्रवचनानि कुदर्शनानि, तेषु पाखंडिनः कुप्रवचनपाखंडिन एकांतवादिनः, ते सर्वे उन्मार्गे प्रस्थिताः, उन्मार्गगामिनः संति. सन्मार्गं तु पुनर्जिनाख्यातं विद्यते, एष जिनोक्तो मार्गः सर्वमार्गेषूत्तमः, सर्वमार्गेभ्यः प्रधानो विनयमूलत्वादित्यर्थः. ॥ ६३ ॥

पारं गमिस्ससि ॥ ७० ॥ व्याख्या—हे गौतम! महौघेऽर्णवे महाप्रवाहे समुद्रे नावा इति नौर्विपरिधावति, इतस्ततः परिभ्रमति. यस्यां नौकायां त्वमारूढः सन् कथं पारं गमिष्यसि? कथं पारं प्राप्स्यसि? ॥ ७० ॥ अथ केशीमुनिना प्रश्ने कृते सति गौतमो वदति—

॥ मूलम् ॥—जा उ अस्साविणी नावा । न सा पारस्स गामिणी ॥ जा निस्साविणी नावा । सा उ पारस्स गामिणी ॥ ७१ ॥ व्याख्या—हे केशीमुने! या नौः आश्राविणी छिद्रसहितास्ति, आश्रवत्यागच्छति पानीयं यस्यां साऽश्राविणी, सा नौः पारस्य गामिनी नास्ति, या निःश्राविणी निश्छिद्रा नौः, सा तु पारस्य गामिनी. ॥ ७१ ॥ अथ केशी पृच्छति—

॥ मूलम् ॥—नावा इइ का वुत्ता । केसी गोयममब्बवी ॥ तउ केसीं बुवंतं तु । गोयमो इणमब्बवी ॥ ७२ ॥ व्याख्या—ततः केशीमुनींप्रति गौतमोऽब्रवीत्. ॥ ७२ ॥

॥ मूलम् ॥—सरीरमाहुनावित्ति । जीवो वुच्चइ नाविउ ॥ संसारो अन्नवो वुत्तो । जं तरंति महेसिणो ॥ ७३ ॥ व्याख्या—हे केशीमुने! शरीरं नौर्वर्तते, जीवो नाविको नौखेटक उच्यते. संसारोऽर्णवः समुद्र उक्तः, यं संसारसमुद्रं महर्षयस्तरंति. एतावता महर्षयः



23

स्वजीवं तपोऽनुष्ठानक्रियावंतं नौवाहकं नाविकं कृत्वा चतुर्गतिभ्रमणरूपे भवार्णवे स्वशरीरं धर्माधारकत्वेन नावं कृत्वा पारं प्राप्नुवंति, मोक्षं व्रजंतीति भाव. ॥ ७३ ॥

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं । तं मे कहसु गोयमा ॥ ७४ ॥ व्याख्या—अस्या अर्थस्तु पूर्ववत्. ॥ ७४ ॥

॥ मूलम् ॥—अंधयारे तमे घोरे । चिठ्ठंते पाणिणो बहू ॥ को करिस्सइ उज्जोयं । सव्वलोगंमि पाणिणं ॥ ७५ ॥ व्याख्या—अथ पुनः केशीश्रमणो गौतमं पृछति, हे गौतम! अंधकारे तमसि प्रकाशाभावे बहवः प्राणिनस्तिष्टंति. अंधकारतमःशब्दयोर्यद्यप्येक एवार्थस्तथाप्यत्रांधकारशब्दस्तमसो विशेषणत्वेन प्रतिपादितः. कीदृशे तमसि? अंधकारे, अंधं करोति लोकमित्यंधकारं, तस्मिन्नंधकारे. पुनः कीदृशे तमसि? घोरे रौद्रे भयोत्पादके. हे गौतम! एतादृशे सर्वस्मिन् लोके सर्वेषां प्राणिनां सर्वजीवानां कः पदार्थ उद्योतं करिष्यति? प्रकाशं करिष्यति? न किंचित्तादृशं पश्याम इति भावः. ॥ ७५ ॥

॥ मूलम् ॥—उग्गओ विमलो भाणू । सव्वलोगप्पभंकरो ॥ सो करिस्सइ उज्जोयं । स-

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं । तं मे कहसु गोयमा ॥ ६४ ॥ व्याख्या—अस्या अर्थस्तु पूर्ववत्. ॥ ६४ ॥

॥ मूलम् ॥—महाउदगवेगेणं । बुझमाणाण पाणिणं ॥ सरणं गईपइट्ठाय । दीवं कं मन्नसी मुणी ॥ ६५ ॥ व्याख्या—केशी गौतमंप्रति पृछति, हे गौतममुने! महोदकवेगेन महाजलप्रवाहेण बुध्यमानानां प्लवतां प्राणिनां त्वं द्वीपं कं मन्यसे? इति प्रश्नः. कीदृशं द्वीपं? शरणं रक्षणक्षमं, पुनः कीदृशं? गतिमाधारभूमिं. पुनः कीदृशं? प्रतिष्टां स्थिरावस्थानहेतुं. द्वीपं निवासस्थानं जलमध्यवर्ति. ॥ ६५ ॥

॥ मूलम् ॥—अत्थि एगो महादीवो । वारिमज्झे महालओ ॥ महाउदगवेगस्स । गई तत्थ न विज्जई ॥ ६६ ॥ व्याख्या—हे केशीमुने! वारिमध्ये पानीयांतराले यो 'महालओत्ति' महानुच्चैस्त्वेन विस्तीर्णतया वाऽऽलयः स्थानं यस्य स महालयो विस्तीर्ण एको द्वीपोऽस्ति, द्विर्गता आपो यस्मिन् स द्वीपः, तत्र तस्मिन् द्वीपे महोदकवेगस्य गतिर्न विद्यते, पातालकलशवातैः क्षुभितस्य जलवेगस्य गमनं नास्ति. अपरत्र द्वीपे प्रलयकाले समुद्रजलस्य गति-

रस्ति, परं तत्र द्वीपे नास्ति. ॥ ६६ ॥

॥ मूलम् ॥—दीवे इइ के वुत्ते । केसी गोयममब्बवी ॥ तउ केसीं बुवंतं तु । गोयमो इणमब्बवी ॥ ६७ ॥ व्याख्या—केशी गौतमं पृछति, हे गौतम! द्वीपमिति किमुक्तं? इत्युक्तवंतं केशीश्रमणंप्रति गौतम इदमब्रवीत्. ॥ ६७ ॥

॥ मूलम् ॥—जरामरणवेगेणं । वुज्झमाणाण पाणिणं ॥ धम्मो दीवो पइठा य । गई सरणमुत्तमं ॥ ६८ ॥ व्याख्या—हे केशीमुने! जरामरणजलप्रवाहेण त्रुफतां वहतां प्राणिनां संसारसमुद्रे श्रुतधर्मश्चारित्रधर्मरूपो द्वीपो वर्तते, मुक्तिसुखहेतुर्धर्मोऽस्तीति नावः. कीदृशः स धर्मः? प्रतिष्ठा निश्चलं स्थानं. पुनः कीदृशो धर्मः? गतिर्विवेकिनामाश्रयणीयः. स धर्म उत्तमं प्रधानं स्थानं शरणमस्तीति नावः. ॥ ६८ ॥

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसउ इमो ॥ अन्नोवि संसउ मज्झं । तं मे कहसु गोयमा ॥ ६९ ॥ व्याख्या—अस्या अर्थस्तु पूर्ववत्. ॥ ६९ ॥

॥ मूलम् ॥—अन्नवंसि महोहंसि । नावा विपरिधावई ॥ जंसि गोयममारूढो । कहं

पारं गमिस्ससि ॥ ७० ॥ व्याख्या—हे गौतम! महौघेऽर्णवे महाप्रवाहे समुद्रे नावा इति नौर्विपरिधावति, इतस्ततः परिभ्रमति. यस्यां नौकायां त्वमारूढः सन् कथं पारं गमिष्यसि? कथं पारं प्राप्स्यसि? ॥ ७० ॥ अथ केशीमुनिना प्रश्ने कृते सति गौतमो वदति—

॥ मूलम् ॥—जा उ अस्साविणी नावा । न सा पारस्स गामिणी ॥ जा निस्साविणी नावा । सा उ पारस्स गामिणी ॥ ७१ ॥ व्याख्या—हे केशीमुने! या नौः आश्राविणी छिद्रसहितास्ति, आश्रवत्यागच्छति पानीयं यस्यां साऽश्राविणी, सा नौः पारस्य गामिनी नास्ति, या निःश्राविणी निश्छिद्रा नौः, सा तु पारस्य गामिनी. ॥ ७१ ॥ अथ केशी पृच्छति—

॥ मूलम् ॥—नावा इइ का वुत्ता । केसी गोयममब्बवी ॥ तउ केसीं बुवंतं तु । गोयमो इणमब्बवी ॥ ७२ ॥ व्याख्या—ततः केशीमुनींप्रति गौतमोऽब्रवीत्. ॥ ७२ ॥

॥ मूलम् ॥—सरीरमाहुनाविति । जीवो वुच्चइ नाविउ ॥ संसारो अन्नवो वुत्तो । जं तरंति महेसिणो ॥ ७३ ॥ व्याख्या—हे केशीमुने! शरीरं नौर्वर्तते, जीवो नाविको नौखेटक उच्यते. संसारोऽर्णवः समुद्र उक्तः, यं संसारसमुद्रं महर्षयस्तरंति. एतावता महर्षयः

स्वजीवं तपोऽनुष्ठानक्रियावंतं नौवाहकं नाविकं कृत्वा चतुर्गतिभ्रमणरूपे भवार्णवे स्वशरीरं धर्माधारकत्वेन नावं कृत्वा पारं प्राप्नुवंति, मोक्षं व्रजंतीति भाव. ॥ ७३ ॥

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं । तं मे कहसु गोयमा ॥ ७४ ॥ व्याख्या—अस्या अर्थस्तु पूर्ववत्. ॥ ७४ ॥

॥ मूलम् ॥—अंधयारे तमे घोरे । चिठ्ठंते पाणिणो बहू ॥ को करिस्सइ उज्जोयं । सव्वलोगंमि पाणिणं ॥ ७५ ॥ व्याख्या—अथ पुनः केशीश्रमणो गौतमं पृछति, हे गौतम! अंधकारे तमसि प्रकाशाभावे बहवः प्राणिनस्तिष्ठंति. अंधकारतमःशब्दयोर्यद्यप्येक एवार्थस्तथाप्यत्रांधकारशब्दस्तमसो विशेषणत्वेन प्रतिपादितः. कीदृशे तमसि? अंधकारे, अंधं करोति लोकमित्यंधकारं, तस्मिन्नंधकारे. पुनः कीदृशे तमसि? घोरे रौद्रे भयोत्पादके. हे गौतम! एतादृशे सर्वस्मिन् लोके सर्वेषां प्राणिनां सर्वजीवानां कः पदार्थ उद्योतं करिष्यति? प्रकाशं करिष्यति? न किंचित्तादृशं पश्यामि इति भावः. ॥ ७५ ॥

॥ मूलम् ॥—उग्गओ विमलो भाणू । सव्वलोगप्पभंकरो ॥ सो करिस्सइ उज्जोयं । स-

व्वलोगंमि पाणिणं ॥ ७६ ॥ व्याख्या—गौतमः प्राह, हे केशीमुने! सर्वलोकप्रभाकरो विमलो भानुरुद्गतः, स भानुः सर्वस्मिन् लोके सर्वेषां प्राणिनामुद्योतं करिष्यति. सर्वस्मिन् लोके प्रभां करोतीति सर्वलोकप्रभाकरः, सर्वलोकालोकप्रकाशको निर्मलो वार्दलादिनाऽनाच्छादितो भानुरेव सर्वेषां प्राणिनां सर्वत्रोद्योतं करोति, नान्यः कोऽपि तेजस्वी पदार्थ इति भावः.

॥ मूलम् ॥—भाणू य इइ के वुत्ते । केसी गोयममब्बवी ॥ तओ केसीं वुवंतं तु । गोयमो इणमब्बवी ॥ ७७ ॥ व्याख्या—तदा केशीमुनिर्गौतमं पृच्छति, हे गौतम! भानुरिति क उक्तः? केशीमुनिर्गौतममित्यब्रवीत्. ततः केशीमुनिमिति ब्रुवंतं गौतम इदमब्रवीत्. ॥ ७७ ॥

॥ मूलम् ॥—उग्गओ खीणसंसारो । सव्वन्नू जिणभक्खरो ॥ सो करिस्सइ उज्जोयं । सव्वलोगंमि पाणिणं ॥ ७८ ॥ व्याख्या—हे केशीमुने! क्षीणः संसारो भवभ्रमणं यस्य स क्षीणसंसारः क्षयीकृतसंसारः, सर्वज्ञः सर्वपदार्थवेत्ता, जिनो रागद्वेषयोर्विजेता, स भास्करः सूर्यः सर्वस्मिन् लोके चतुर्दशरज्ज्वात्मके लोके सर्वेषां प्राणिनामुद्योतं करिष्यति, प्रकाशं करिष्यति. ॥ ७८ ॥

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसओ इमो ॥ अन्नोवि संसओ मज्झं । तं मे कहसु गोयमा ॥ ७९ ॥ व्याख्या—अस्या अर्थस्तु पूर्ववत्. ॥ ७९ ॥

॥ मूलम् ॥—सारीरमाणसे दुक्खे । बज्झमाणाण पाणिणं ॥ खेमं सिवं अणाबाहं । ठाणं किमन्नसी मुणी ॥ ८० ॥ व्याख्या—अथ पुनः केशीश्रमणो गौतमं पृच्छति, हे गौतममुने ! शारीरिकैः शरीरादुत्पन्नैः, तथा मानसैर्मनस उत्पन्नैर्दुःखैर्बध्यमानानां पीड्यमानानां प्राणिनां त्वं क्षेमं व्याध्याधिरहितं, शिवं जरोपद्रवरहितं, अनाबाधं शत्रुजनाऽभावात्स्वभावेन पीडारहितं, एतादृशं स्थानं किं मन्यसे ? मां वदेरिति शेषः. ॥ ८० ॥

॥ मूलम् ॥—अत्थि एगं धुवं ठाणं । लोगग्गंमि दुरारुहं ॥ जत्थ नत्थि जरा मच्चू । वाहिणो वेयणा तहा ॥ ८१ ॥ व्याख्या—हे केशीमुने! लोकाग्रे लोकस्य चतुर्दशरज्ज्वात्मकस्याग्रं लोकाग्रं, तस्मिन् लोकाग्रे एकं ध्रुवं निश्चलं स्थानमस्ति. कथंभूतं तत्स्थानं? दुरारुहं, दुःखेनारुह्यते यस्मिंस्तद् दुरारुहं दुःप्रापमित्यर्थः पुनर्यत्र यस्मिन् स्थाने जरामृत्यू न स्तः, जरामरणे न विद्येते. पुनर्यस्मिन् व्याधयस्तथा वेदना वा वातपित्तकफश्लेष्मादयो न

विद्यंते. ॥ ८१ ॥

॥ मूलम् ॥—ठाणे य इइ के वुत्ते । केसी गोयममब्बवी ॥ तउ केसीं बुवंतं तु । गोयमो इणमब्बवी ॥ ८२ ॥ व्याख्या—हे गौतम ! स्थानमिति किमुक्तं? केशीश्रमणो गौतममित्यब्रवीत्. ततः केशीकुमारमिति ब्रुवंतं गौतम इदमब्रवीत्. ॥ ८२ ॥

॥ मूलम् ॥—निव्वाणंति अवाहंति । सिधी लोगग्गमेव य ॥ खेमं सिवमणाबाहं । जं चरंति महेसिणो ॥ ८३ ॥ तं ठाणं सासयं वासं । लोयग्गंमि दुरारुहं ॥ जं संपत्ता ण सोयंति । भवोहंतकरा मुणी ॥ ८४ ॥ युग्मं ॥ व्याख्या—हे केशीमुने! तत् शाश्वतं सदातनं वासं स्थानं लोकाग्रे वर्तते, यत्स्थानं संप्राप्ताः संतो भवौघांतकराः संसारप्रवाहविनाशका मुनयो न शोचंते, शोकं न कुर्वंति. कीदृशं तत्स्थानं? दुरारुहं, दुःखेन तपःसंयमयोगेनारुह्यते आसाद्यते इति दुरारोहं दुःप्राप्यमिति द्वितीयगाथया संबंधः. अथ प्रथमगाथाया अर्थः—पुनः कीदृशं तत्स्थानं? यत्स्थानमेभिर्नामभिरुच्यते—कानि तानि नामानि? निर्वाणमिति, अबाधमिति, सिद्धिरिति, लोकाग्रमेव, च पुनः शिवमिति नामानि, एतादृशैः सार्थकैर-

निधानैर्यत्स्थानमुच्यते, तेषां नाम्नामर्थो यथा—निर्वाति संतापस्याऽभावात् शीतीभवंति जीवा यस्मिन्निति निर्वाणं. न विद्यते बाधा यस्मिंस्तदबाधं निर्भयं. सिद्ध्यंति समस्तकार्याणि भ्रमणाऽभावाद्यस्यामिति सिद्धिः. लोकस्याग्रमग्रभूमिर्लोकाग्रमेव. क्षेमं क्षेमस्य शाश्वतसुखस्य कारकत्वात्क्षेमं. शिवमुपद्रवाऽभावात्. पुनर्यत्स्थानंप्रति महर्षयोऽनाबाधं यथा स्यात्तथा चरंति व्रजंति सुखेन मुनयः प्राप्नुवंति. मुनयो हि चक्रवर्त्यधिकसुखभाजः संतो मोक्षं लभंते इति भावः. ॥ ८४ ॥

॥ मूलम् ॥—साहु गोयम पन्ना ते । छिन्नो मे संसओ इमो ॥ नमो ते संसयातीत । सव्वसुत्तमहोयही ॥ ८५ ॥ व्याख्या—अथ केशीकुमारो मुनिर्गौतमं स्तौति, हे गोतम ! ते तव प्रज्ञा साध्वी वर्तते, मे ममायं संशयश्छिन्नः, संदेहो दूरीकृतः. हे संशयातीत ! हे संदेहरहित ! हे सर्वसूत्रमहोदधे ! सकलसिद्धांतसमुद्र ! तुभ्यं नमो नमस्कारोऽस्तु. ॥ ८५॥

॥ मूलम् ॥—एवं तु संसए छिन्ने । केसी घोरपरक्कमे ॥ अभिवंदित्ता सिरसा । गोयमं तु महाजसं ॥ ८६ ॥ पंचमहव्वयं धम्मं । पडिवज्जइ भावओ ॥ पुरिमस्स पच्छिमंमि । मग्गे

तत्थ सुहावए ॥ ८७ ॥ युग्मं ॥ व्याख्या—केशीकुमारश्रमणो न्नावतः श्रद्धातः 'पुरिमस्स' इति प्रथमतीर्थकृतो मार्गे, पश्चिमे पश्चिमतीर्थकरस्य मार्गे, अर्थादादीश्वरमहावीरयोर्मार्गे, तत्र तिंडुकोद्याने पंचमहाव्रतरूपं धर्मं प्रतिपद्यतेंगीकरोति. किं कृत्वा? गौतमं शिरसा मस्तकेनाभिवंद्य नमस्कृत्य. क सति? एवमसुना प्रकारेण गौतसेन संशये छिन्ने सति. कीदृशं गौतमं? महायशसं. कीदृशः केशीमुनिः? घोरपराक्रमो रौद्रपुरुषाकारयुक्तः पूर्वं केशीकुमारश्रमणेन चत्वारि व्रतानि गृहीतान्यासन्, तदा गौतमवाक्यात्पंचमहाव्रतान्यंगीकृतानीति न्नावः. ॥ ८७ ॥

॥ मूलम् ॥—केसीगोयमर्ज निच्चं । तम्मि आसि समागमो ॥ सुयसीलसमुक्करिसो । महत्थत्थविणिच्छर्ज ॥ ८८ ॥ व्याख्या—तत्र तस्यां नगर्यां केशीगौतमयोर्नित्यं समागम आसीत्. तयोः पुनः श्रुतशीलसमुत्कर्षः श्रुतज्ञानचारित्रयोः समुत्कर्षोऽतिशयोऽभूत्. पुनस्तयोरुन्नयोर्महानर्थविनिश्चयोऽन्नूत्, शिक्षाव्रततत्वादीनां निर्णयोऽभूत्. ॥ ८९ ॥

॥ मूलम् ॥—तोसिया परिसा सवा । सम्मग्गं समुवट्ठिया ॥ संथुया ते पसीयंति । न-

गवं केसिगोयमत्तिबेमि. ॥ ८९ ॥ व्याख्या—तदा सर्वा परिषत् सदेवमनुजासुरसभा तोषिता प्रीणिता, सम्यग्मार्गे समुपस्थिता सावधाना जाता. तौ भगवंतौ ज्ञानवंतौ केशीगौतमौ परिषदा संस्तुतौ प्रसीदतां प्रसन्नौ भवतां सतामिति शेषः, इत्यहं ब्रवीमि. इति सुधर्मास्वामी जंबूस्वामिनं प्राह. ॥ ८९ ॥ इति केशिगौतमाध्ययनं संपूर्णं. इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां केशीगौतमीयमध्ययनं त्रयोविंशतितमं संपूर्णं. ॥ २३ ॥ श्रीरस्तु. ॥

---

॥ अथ चतुर्विंशतितमाध्ययनस्यार्थो व्याख्यायते ॥

पूर्वस्मिन्नध्ययने परेषां चित्तविप्लुतिः केशिगौतमवद् दूरीकर्तव्या, तद्दूरीकरणं सम्यग्वाग्योगेन स्यात्, वाग्योगो हि अष्टप्रवचनमातृस्वरूपः, अतोऽष्टप्रवचनमातृस्वरूपं चतुर्विंशतितमेऽध्ययने कथ्यते—सूत्रं—

॥ मूलम् ॥—अट्ठ पवयणमायाउ । समिई गुत्ती तहेव य ॥ पंचवयसमिईउ । त-उ गुत्ती उ आहिया ॥ १ ॥ व्याख्या—एता अष्टौ प्रवचनमातर आहिता आख्याताः, प्रवचने सिद्धांते मातरश्चारित्रस्य जनन्यः प्रवचनमातरः, साध्वाचारजननात्परिपालनाज्ज्ञानन्यस्तीर्थकरैः कथिताः. ता अष्ट प्रवचनमातरः काः? समितयः कति? गुप्तयश्च कति? तयोः समितिगुप्त्योः संख्यां वदति. पंचैव, एव निश्चये पादपूरणे वा. पंच समितयस्तिस्रो गुप्तयः, उभयोर्मीलनेऽष्टप्रवचनमातर उक्ताः. ॥ १ ॥

॥ मूलम् ॥—इरिया भासेसणादाणे । उच्चारे समिईइय ॥ मणगुत्ती वयगुत्ती । कायगुत्ती य अट्ठमा ॥ २ ॥ व्याख्या—एता पंच समितयः, प्रथममीर्यासमितिः, ईरणमीर्या, समितिशब्दस्य प्रत्येकमभिसंबंधः. ईर्यायां गमनागमने सं सम्यक् प्रकारेण इतिरात्मचेष्टा ईर्यासमितिः, सार्धहस्तत्रयावलोकनं वा चक्षुषा कृत्वा यत्नेन चंक्रमणमीर्यासमितिः १. द्वितीया भाषासमितिः, विचार्य भाषणं भाषासमितिः. २. तृतीया एषणासमितिः, शुद्धस्याहारस्य ग्रहणमेषणासमितिः ३. चतुर्थी आदानसमितिर्वस्त्रपात्रप्रमुखोपकरणानामादानं ग्र-

त्राणं, उपलक्षणत्वान्निक्षेपो मुंचनमादाननिक्षेपसमितिः. ४. पंचम्युच्चारादीनां व्युत्सर्जनमुच्चारप्रश्रवणश्लेष्मसिंघाणजल्लपारिष्टापनिकासमितिः ५. तत्रोच्चारं विष्टा, प्रश्रवणं मूत्रं, श्लेष्म मुखजं मलं, सिंघाणो नासिकामलं, जल्लो देहमलं, एताः पंच समितयः. तिस्रो गुप्तयः, गोपनं गुप्तिर्मनसोऽशुभव्यापारान्निवर्तनं मनोगुप्तिः प्रथमा १. अथ द्वितीया वचनस्याऽशुभव्यापाराद्गोपनं वचनगुप्तिः २. तृतीया कायगुप्तिः, कायस्याऽशुभकर्मणो गोपनं निवर्तनं कायगुप्तिः ३. एवं पंचसमितीनां तिसृणां गुप्तीनां च मीलनादष्टौ प्रवचनमातरो ज्ञेयाः. ॥२॥

॥ मूलम् ॥—एया उ अठ समिईउ । समासेण वियाहिया ॥ दुवालसंगं जिणक्खायं । मायं जत्थ उ पवयणं ॥ ३ ॥ व्याख्या—एतास्तु समासेन संक्षेपेणाष्टौ समितयो व्याख्याताः. विस्तरत्वेन चेद्वर्ण्यंते तर्हि पंच समितय उच्यंते, तिस्रो गुप्तयश्चोच्यंते. समासेन संक्षेपेण चेदुच्यते, तर्ह्यष्टावपि समितय उच्यंते. तस्मादेतासामष्टानामपि समितिसंज्ञोच्यते. यत्तु पूर्वं पंचानां समितिसंज्ञा, तिसृणां च गुप्तिसंज्ञा, तत्कथंचिद्भेदख्यापनार्थं. यत्र यास्वष्टासु मातृषु द्वादशांगं जिनाख्यातं प्रवचनं श्रुतं चारित्रं वा ' मायं ' इति मातं. संपू-

र्णत्वेन संस्थितं. यतो हि सर्वा एता अष्टावपि चारित्ररूपाः, चारित्रं हि ज्ञानदर्शनं विना न भवति, ज्ञानदर्शनचारित्रेभ्योऽतिरिक्तं द्वादशांगं न भवति. तस्माद् द्वादशांग्यष्टासु मातृषु स्थिता, तेनैतासां प्रवचनजननीसंज्ञा. ॥ ३ ॥ प्रथममीर्यासमितिस्वरूपमाह—

॥ मूलम् ॥—आलंबणेण १ कालेण २ । मग्गेण ३ जयणा ४ इय ॥ चउकारणपरिसुद्धं । संजए इरियं रिए ॥ ४ ॥ व्याख्या—संयतः साधुरेभिश्चतुर्भिः कारणैः परिशुद्धया निर्दोषया, ईर्यया निर्दोषया गत्या रीयेत गच्छेत्, प्राकृतत्वात् तृतीयास्थाने प्रथमा. तानि चत्वारि कारणानि कानि? आलंब्यते निश्चलः क्रियते मनो येनेत्यालंबनं, तेनालंबनेन. १. पुनर्द्वितीयं कारणं काल ईर्यायाः समयस्तेन कालेन. २. पुनस्तृतीयं कारणं मार्गः पंथा, तेन विहारयोग्यमार्गेण. ३. पुनश्चतुर्थं कारणं यत्ना यतनं, यत्ना जीवदया, तया यतनया. ४. एवं चतुर्भिः कारणैः शुद्धया गत्या साधुना गंतव्यमिति भावः. ॥ ४ ॥ पूर्वं चतुर्णां कारणानां नामान्युक्त्वाथ विस्तरेण वर्णयति—

॥ मूलम् ॥—तत्थ आलंबणं नाणं । दंसणं चरणं तहा ॥ काले य दिवसे वुत्ते । मग्गे

उप्पल्लवज्जिए ॥ ५ ॥ व्याख्या—तत्र चतुःषु कारणेष्वालंबनं, यदालंब्य गमनमनुज्ञायते तदालंबनं. यतो ह्यालंबनं विना निरर्थकं गुरुनिर्गमनमनुज्ञातं नास्ति, तदालंबनं ज्ञानं सूत्रं अर्थ तदुनयं सूत्रार्थज्ञानं सिद्धांतपठनपाठनं. ततो दर्शनं सम्यक्त्वं तत्वरुचिरूपं, तस्य ग्रहणं आद्दणं वा, तदपि कारणं. पश्चाच्चरणं चारित्रं, अत्र चारित्रशब्देन सामायिकादिकं, सामाइयं समइयं । सम्मावाउ समाससंखेवो ॥ अणवज्जं च परिस्रा । पच्चक्खाणे य ते अठ्ठ ॥ ॥ १ ॥ इत्याद्यपि कारणं. यतो हि ज्ञानार्थं दर्शनार्थं चारित्रार्थं, एवं द्वयोरर्थं, एवं पृथक् पृथक्, एवं त्रयाणामप्यर्थं, एवमष्टादश नेदा नवंति. च पुनः काल ईर्यायाः समयो दिवस एवोक्तः, न तु रात्रिरीर्यायाः समयोऽस्ति. रात्रौ हि विहारं कुर्वतः साधोरीर्याशुद्धिर्न स्यादित्यर्थः. मार्गस्तूत्पथवर्जनमुन्मार्गस्य त्यागः, उन्मार्गे चलमानस्यात्मनः संयमस्य विराधना स्यात्, ॥ ५ ॥

॥ मूलम् ॥—दव्वउ खित्तउ चेव । कालउ नावउ तहा ॥ जयणा चउव्विहा वुत्ता । तं मे कित्तयउ सुण ॥ ६ ॥ व्याख्या—तीर्थकरैरित्यध्याहारः, तीर्थकरैर्गणधरैश्चतुर्विधा य-

तोक्ता, तां चतुर्विधां यत्नां मे मम कथयतस्त्वं शृणु? जो शिष्य! तदेव चतुर्विधत्वमाह—द्रव्यतो यत्ना, च पुनः क्षेत्रतो यत्ना, कालतो यत्ना, तथा भावतो यत्ना. ॥ ६ ॥ अथ द्रव्यतः कथं यत्ना? तमाह—

॥ मूलम् ॥—दव्वउ चक्खुसा पेहे । जुगमित्तं च खित्तउ ॥ कालउ जाव रीएज्जा । उवउत्ते य भावउ ॥ ७ ॥ व्याख्या—द्रव्यतो द्रव्यमाश्रित्यैवं यत्ना, यच्चक्षुषा जीवादिद्रव्यं विलोकयेत्. क्षेत्रतः क्षेत्रमाश्रित्य युगमात्रं चतुर्हस्तप्रमाणं क्षेत्रं मार्गं प्रेक्षेत विलोकयेत्, इयं क्षेत्रतो यत्ना. कालतः कालमाश्रित्येयं यत्ना यावत्कालं यावत्कालप्रमाणेन रीयते गमनं विधीयते, सा च कालयत्ना. यः साधुरुपयुक्तस्तत्रेर्यायां सावधानः स्यात्, सा भावतो यत्ना ज्ञेया. ७ ॥ अथोपयुक्तत्वमेव विस्तरेण वर्णयति—

॥ मूलम् ॥—इंदियत्थे विवज्जित्ता । सज्झायं चेव पंचहा॥ तम्मुत्ती तप्पुरक्कारे । उवउत्तेरियं रिये ॥ ८ ॥ व्याख्या—साधुरुपयुक्तः सन् ईर्यायां साधुयोग्यायां गतौ रीयेद्व्रजेत्. किं कृत्वा? पंचेन्द्रियार्थान् पंचानामिंद्रियाणामर्थान् विषयान् विवर्ज्य, च पुनर्वाचनादिभेदतः

पंचप्रकारं स्वाध्यायं विवर्ज्य, पुन साधुः कीदृशः सन्नीर्यायां रीयेत्? तन्मूर्त्तिः सन्, तस्यामीर्यासमितौ मूर्तिः शरीरं यस्य स तन्मूर्तिः, न तु यतस्ततः शरीरं धूनयन् गच्छेत्, कायचापल्यरहित इति भावः. पुनः कीदृशः साधुः? तत्पुरस्कारः, तामेव पुरस्करोतीति तत्पुरस्कारः, तामीर्यासमितिं प्राधान्येनांगीकुरुते इत्यर्थः. अनेन कायमनसोस्तत्परतोक्ता. एवमुपयुक्तः सावधानो विचरेदित्यर्थः. ॥ ८ ॥

॥ मूलम् ॥—कोहे माणे य माया य । लोभे य उवउत्तया ॥ हासे भय मोहरिए । विगहासु तहेव य ॥ ९ ॥ एयाइं अठ्ठठाणाइं । परिवज्जित्तु संजए ॥ असावज्जं मिअं काले । भासं भासिज्ज पन्नवं ॥ १० ॥ व्याख्या—अथ द्वाभ्यां गाथाभ्यां भाषासमितिमाह—'पन्नवं' इति प्रज्ञावान् संयतः काले प्रस्तावे भाषायाः समयेऽसावद्यां निःपापां, तथा मितां स्वल्पां भाषां भाषेत. किं कृत्वा? एतान्यष्टौ स्थानान्युपयुक्ततयैकाग्रत्वेन परित्यज्य त्यक्त्वा. एतान्यष्ट स्थानानि कानि? क्रोधो १ मानो २ माया ३ लोभश्च ४ हास्यं ५ भयं ६ मौखरिका ७ विदचेष्टा असंबद्धवचनजापणं वा, विकथां ८ च राज्यादिचतुर्विधां. एतान्यष्टावसत्य-

वाक्यस्थानानि. तस्मात्प्रत्येकं क्रोधे माने मायायां लोभे च हास्ये भये मौखरिकायां तथैव विकथासु च मृषादिरूपमसद्वाग्योगं परिहृत्याऽसावद्यां निर्दोषां परिमितां प्रस्तावे भाषां वदेदित्यर्थः. ॥ १० ॥ अथैषणासमितिमाह—

॥ मूलम् ॥—गवेसणा य गहणे य । परिभोगेसणा य जा ॥ आहारोवहिसिज्जाए । एए तिन्नि विसोहिए ॥ ११ ॥ व्याख्या—गवेषणायामेषणा गवेषणैषणा, गौरिवैषणा गवैषणा, विशुद्धाहारदर्शनविचारणा प्रथमैषणा १. द्वितीया ग्रहणैषणा, विशुद्धाहारस्य ग्रहणं ग्रहणैषणा २. तृतीया परिभोगैषणा, परि समंताद्भुज्यते आहारादिकमस्मिन्निति परिभोगो मंडलीभोजनसमयः, तत्रैषणा विचारणा परिभोगैषणा ३. एतास्तिस्रोऽप्येषणा आहारोपधिशय्यासु विशोधयेत्, केवलमाहारे एवैता एषणा न भवेयुः; किं त्वाहारे उपधौ वस्त्रपात्रादौ, शय्या उपाश्रयः संस्तारकादिश्च, तत्र सर्वत्रैषणा विधेयेत्यर्थः. ॥ ११ ॥

॥ मूलम् ॥—उग्गमुप्पयणं पढमे । बिइए सोहिज्ज एसणं ॥ परिभोगंमि चउक्कं च । विसोहिज्ज जयं जइ ॥ १२ ॥ व्याख्या—'जयं' इति यत्नावान् 'जइ' इति यतिः सा-

धुः प्रथमे इति प्रथमायां गवेषणैषणायामुद्गमोत्पादनान् दोषान् विशोधयेद्विशेषेण विचारयेत्. पुनः साधुर्द्वितीयायां ग्रहणैषणायां शंकितादिदोषान् विचारयेत्. पुनस्तृतीयायां परिभोगैषणायां चतुष्कं दोषचतुष्टयं विशोधयेत्.॥१२॥ इति गाथार्थः. अत्र प्रथमायां गवेषणैषणायां द्वात्रिंशद्दोषा भवंति, तद्यथा–प्रथमं षोडशोद्गमदोषाः, उद्गमशब्देनाधकर्मिकादिषोडशदोषाः, एते दोषा गृहस्थादेवो-त्पद्यंते. तथा प्रथमैषणायामेव षोडशोत्पादनादिदोषा भवंति. उत्पाद्यंते साधुना ये ते उत्पादनाः, साधोः सकाशादेव षोडश दोषा उत्पद्यंते, ते च धात्रीप्रमुखाः, एवं द्वात्रिंशद्दोषाः. द्वितीयायामेषणायां ग्रहणैषणायां शंकितादिदशदोषा उभयतो दायकाद्ग्राहकाच्च भवंति. एवं द्विचत्वारिंशद्दोषा भवंति. तत्र प्रथम आधकर्मिकः, अधकर्मणि भव आधकर्मिकः, यदाहारं गृहस्थेन सर्वान् दर्शनिनः, सर्वान् लिंगिन उद्दिश्य कृतमाधकर्मिकमुच्यते. १. साधुयोगे सति यदुद्दिश्य कृत्वा दीयते तदुद्देशिकमुच्यते. २. अयं द्वितीयो दोषः. बहुतरे विशुद्ध आहारे आधकर्मिकाहारकरणैर्युक्तं भवति, तदा पूतिकर्मदोषः, यथा शुचिः पयोधरेऽप्येकेन मद्यबिंदुनाऽशुचिः स्यात्, तथा पूतिकर्मणा विशुद्धाहारमप्याधकर्मिकयोगात्पूतिकं

स्यात्, अयं तृतीयो दोषः ३. अथ चतुर्थो मिश्रकर्मदोषः, किंचित्साधुनिमित्तं, किंचिदात्मार्थं गृहस्थो यदाहारं कारयति तदा मिश्रितदोष उत्पद्यते ४. अथ पंचमं स्थापनाकर्म, यदा साधुरायास्यति तदा साधवे दास्यामीति विचार्य स्थाप्यते साधुनिमित्तमिति स्थापना, यदाहारं रक्षितं, तदाहारं स्थापनाकर्मदोषयुक्तं स्यात् ५. अथ षष्ठो दोषः प्राभृतकः, गृहस्थः स्वगृहे उत्सवं ज्ञात्वा संखडिकस्य परावृत्तिं करोति स प्राभृतिको दोषः ६. अंधकारे उद्योतं कृत्वा मुनये आहारं यदा दीयते तदा प्रादुःकरणदोषः सप्तमः ७. यदा गृहस्थो मौल्येनानीय साधवे ददाति तदा क्रीताख्यो दोषश्चाष्टमो ज्ञेयः ८. यदा गृहस्थः साधुनिमित्तमुद्धारकमानीयाहारादिकं ददाति, तदा नवमः प्रामित्यदोषः ९. यदाहारादिकं परावृत्य सरसनीरसयोः परावर्तनं कृत्वा साधवे ददाति तदा दशमः परावर्तदोषो भवति १०. यदा स्वगृहाद्बहिर्ग्रामाद्वाऽऽहारादिकं मुनिसन्मुखमानीय मुनये दीयते, तदाऽभ्याहृतो दोष एकादशः स्यात् ११. यदा कोष्ठकादौ गर्भगृहादौ मुद्रितमुद्घाट्याहारादिकं निष्कास्य दीयते तदोद्भिन्नदोषो द्वादशः स्यात् १२. यदोच्चस्थानादुत्तीर्यानीयाहारादि ददाति तदा मालाहृतस्त्रयोद-

शो दोषः स्यात्, एवं नीचैरपि दुःखीभूय ददाति, तदापि स एव मालापहृतो दोषः स्यात् १३. यदा कस्माच्चिन्निर्बलादुद्दाल्याहारादिकं ददाति, तदाच्छिद्यश्चतुर्दशो दोषः १४. यदा छित्राणां पुरुषाणां साधारणे आहारे एकोऽन्याननापृच्छ्य साधवे ददाति, तदा पंचदशोऽनिसृष्टो दोषः १५. यदा स्वनिमित्तमाहारे राध्यमाने साधुनिमित्तमपि तस्मिन्नाहारेऽधिकं हंडिकायां पूर्यते तदाऽध्यवपूरो दोषः षोऽशः १६. एते षोडशोद्गमदोषाः, एते दायकाद्दोषा उत्पद्यंते.

अथाऽनगारात् षोडश दोषा उत्पद्यंते, ते चोत्पादनदोषा अमी—प्रथमो धात्रीदोषः, यदा साधुर्गृहस्थस्य बालकान् चिःपिटिकादिभिः क्रीडयित्वा धात्रीवत्प्रमोदमुत्पाद्याहारं गृह्णाति, तदा प्रथमो धात्रीदोषः १. यदा गृहस्थगृहे गुप्तप्रकटसमाचारान् स्वजनादीनां कथयित्वाऽऽहारं गृह्णाति तदा दूतकर्माख्यो द्वितीयो दोषः २. यदा लाभालाभजीवितमृत्युसुखदुःखादिनिमित्तं त्रिकालस्थं गृहस्थाग्रे उक्त्वाऽऽहारं गृह्णाति तदा निमित्तदोषस्तृतीयः ३. यदा गृहस्थस्य ज्ञातिं कुलं ज्ञात्वाऽऽत्मीयमपि साधुस्तमेव ज्ञातिं, तदेव कुलं च प्रकाश्याहारं गृह्णाति तदाऽऽजीविकादोषश्चतुर्थः ४. यदा स्वकीयं दीनत्वं दयालुत्वं गृहस्थाग्रे प्रकटीकृत्या-

हारादिकं गृह्णाति तदा वनीपको दोषः पंचमः ५. यदा वैद्यवन्नाडिकां दृष्ट्वा वमनविरेचनाजीर्णज्वरादीनां भेषजमुपदिश्य वैद्यकं कृत्वाऽहारं गृह्णाति तदा चिकित्सादोषः ६. यदा गृहस्थं भापयित्वा शापं दत्वाऽहारं गृह्णाति तदा क्रोधपिंडः सप्तमो दोषः ७. यदा साधूनां समक्षं पणं कृत्वा, तदाहं लब्धिमान् यदा भवतां सरसमाहारममुकगृहादानीय ददामि, इत्युक्त्वा गृहस्थं विडंब्य गृह्णाति तदाऽष्टमो मानपिंडदोषः ८. यदा मायां कृत्वा लोभाद्वेषं परावृत्याहारं गृह्णाति तदा मायापिंडो नवमो दोषः ९. यदा लोभेन सरसाहारलौल्येन भ्रांत्वा भ्रांत्वाऽहारं गृह्णाति तदा लोभपिंडो दशमो दोषः १०. यदा पूर्वं पश्चाद्वा गृहस्थस्य स्तुतिं विधत्ते, आहारं च गृह्णाति तदा संस्तवदोष एकादशः ११. यदा विद्यया सुरं साधयित्वा भोजनं साधयति, तदा विद्यापिंडो द्वादशो दोषः. अथवा विद्यां पाठयित्वा ग्रंथमध्याप्य भोजनादिकं गृहस्थाद्गृह्णाति, तदा विद्यापिंडो द्वादशो दोषः १२. यदा कार्मणं मोहनं यंत्रमंत्रं साधयित्वा कृत्वा दत्वाऽहारादिकं गृह्णाति तदा मंत्रदोषस्त्रयोदशः १३. यदा अदृश्यीकरणाद्यं जनमोहनचूर्णयोगेनाहारं गृह्णाति तदा चतुर्दशश्चूर्णयोगो दोषः १४. यदा मुग्धलो-

कान् सौनाग्यादिविलेपनराजवशीकरणादितिलकेन जलस्थलमार्गोल्लंघनसुनगदुर्नगविधि-मुपदिश्याहारं गृह्णाति, तदा योगपिंडदोषः पंचदशः १५. यदा पुत्रादिजन्मदूषणनिवारणार्थं मघाज्येष्ठाश्लेषामूलादिनक्षत्रशांत्यर्थं मूलैः स्नानमुपदिश्याहारादिकं गृह्णाति, तदा षोडशो मूलकर्मदोषः १६. एवमुद्गमोत्पादनादिदोषाः, सर्वेऽपि गवैषणायां द्वात्रिंशद्दोषा नवंति. ३२. अथ द्वितीयायां ग्रहणैषणायां दश दोषाः कथ्यंते—यदा दायकः शंकां कुर्वन् ददाति, साधुरपि जानात्यसौ दायकः शंकां करोति, एवं सत्याहारं गृह्णाति, तदा प्रथमं शंकितो दोषः, १. द्वितीयो म्रक्षितो दोषः स द्विविधः, सचित्तेन खरंटित आहारः, अचित्तेन खरंटितश्चाहारो नवति, तदा म्रक्षितदोष उच्यते २. यदा पृथिव्यां जलेऽग्नौ वनस्पतिमध्ये त्रसजीवानां मध्ये निक्षिप्तमाहारं ददाति, तदा निक्षिप्तस्तृतीयो दोषः ३. यदाऽचित्तमाहारमपि सचित्तेनाच्छादितं स्यात्तदा पिहितदोषश्चतुर्थः ४. पिहितदोषस्य चतुर्नंगी यथा—सचित्तमाहारं सचित्तेन पिहितं १, अचित्तमाहारमचित्तेन पिहितं २, अचित्तमाहारं सचित्तेन पिहितं ३, सचित्तमाहारमचित्तेन पिहितं ४. एवं चतुर्नंग्यामचित्ताहारमचित्तेन पिहि-

तमत्र कोऽपि न दोषः. यदा बृहद्भाजने स्थितमाहारं तत्रस्थभाजनेन दातुमशक्यत्वेन तद्भाजने स्थितमपरत्रोत्तार्य, अथवा तस्माद्भाजनादपरस्मिन् भाजने उत्तार्याहारं ददाति स संहृतदोषः पंचमः ५. यदा असमर्थः पंडकः शिशुः स्थविरोंध उन्मत्तो मत्तो ज्वरपीडितः कंपमानशरीरो निगडबद्धो हडे क्षिप्तो गलितहस्तश्छिन्नपादः, एतादृशो वा दाता ददाति तदा दायकदोषः. पुनर्यदा कश्चिद्दायिका दायको वाऽग्निं प्रज्वालयन्, अरहट्टकं भ्रामयन्, घरट्टके चान्नपीषणं कुर्वन्, मुशलेन खंडयन्, शिलायां लोष्टकेन वर्तयन्, चरख्यां कार्पासादिकं लोढयन्, रुतं वा पिंजयन्, सूर्पकेण धान्यमाछोटयन्, फलादिकं विदारयन्, प्रमार्जनेन रजः प्रमार्जयन्, इत्याद्यारंभं कुर्वन्, तथा भोजनं कुर्वन्, स्त्री च या संपूर्णगर्भा स्थिता भवति, पुनर्या च स्त्री बालंप्रति स्तन्यं पाययंती, पुनस्तं बालं रुदंतं मुक्त्वाऽऽहारदानायोत्तिष्ठति, पुनर्यः षट्कायसंमर्दनं संघट्टनं वा कुर्वन् साधुं दृष्ट्वा हंडिकोपरिस्थपथ्रपिंडमुत्तारयति, इत्यादयो बहवो दायकदोषाः. इति षष्ठो दायकदोषः ६. यदाऽनाभोगेनाऽविचार्यैव शुद्धाशुद्धमाहारं संमील्य ददाति, तदा सप्तम उन्मिश्रितदोषः ७. यदा द्रव्येणाऽपरिणतमाहारं, भावेनोभयोः पुरुष-

योराहारं वर्तते, तन्मध्ये एकस्य साधवे दातुं मनोऽस्ति, एकस्य च नास्ति, तदाहारमपरिणतदोषयुक्तं स्यात्, इत्यपरिणतदोषश्चाष्टमः ८. यदा दधिदुग्धतैरेय्यादिद्रव्यं, येन द्रव्येण दर्वी करो वा लिप्तः स्यात्तदा पश्चात्कर्मवेन लिप्तपिंडो नवमो दोषः स्यात् ९. यदा सिक्थानि घृतदधिदुग्धादिबिंदून् पातयन्नाहारं ददाति, तदा छर्दितो दशमो दोषः स्यात्. १०. इति ग्रहणैषणायां दायकग्राहकयोरन्योन्यं दोषसंभवः. एवं सर्वमीलने द्विचत्वारिंशद्दोषा भवंति.

अथ परिभोगैषणायां ग्रासैषणायां पंच दोषाः संभवंति. तद्यथा—यदा क्षीरखंडघृतादिद्रव्यं संमील्य रसलोल्येन भुंक्ते, तदा संयोजनादोषः प्रथमः १. यावत्प्रमाणः सिद्धांते पुरुषस्याहार उक्तोऽस्ति तस्मादाहारप्रमाणात्स्वादलोभेनाधिकमाहारं यदा करोति, तदाऽप्रमाणो द्वितीयो दोषः २, यदा सरसाहारं कुर्वन् धनवंतं दातारं वर्णयति तदेङ्गालदोषस्तृतीयः ३. विरसमाहारं कुर्वन् दरिद्रं कृपणं वा निंदति, तदा चतुर्थो धूमदोषः ४. यदा तपःस्वाध्यायवैयावृत्यादिकारणषट्कं विना बलवीर्याद्यर्थं सरसाहारं करोति तदा पंचमोऽकारणदोषः

५. एते पंच दोषाः परिभोगैषणाया ज्ञेयाः. एवं सर्वे सप्तचत्वारिंशद्दोषा भवंति. परिभोगैषणायां चतुष्कं दोषचतुष्टयं सूत्रे उक्तं, तत्त्विंगालधूमयोर्मोहनीयकर्मोदयादेव दायकस्य प्रशंसातो निंदातश्च प्रादुर्भावादेकत्वमेवांगीकृतं, तस्माच्चत्वार एव दोषा गृहीताः. एवं षट्चत्वारिंशद्दोषा भवंति. अथवा परिभोगैषणायां परिभोगसमये आसेवनासमये पिंड १ शय्या २ वस्त्र ३ पात्रं ४ चैतच्चतुष्कं विशोधयेत्, अयमप्यर्थो विद्यते, इत्यनेन 'उग्गमुप्पायणं पढमे' इति गाथाया अर्थः. ॥ १२ ॥ इत्येषणासमितिः, अथ चतुर्थीं समितिं प्राह—

॥ मूलम् ॥—उहोवहोवग्गहियं । भंडगं दुविहं मुणी ॥ गिएहंतो निक्खिवंतो यं । पउंजिज्ज इमं विहिं ॥ १३ ॥ व्याख्या—उघोपधिकं सामुदायिकं, उपग्राहिकौपधिकं, उपगृह्यते वारंवारं यत्नार्थमित्युपग्राहिकं रजोहरणपोतिकादिकं. अत्रोपधिशब्दस्य प्रत्येकं प्रयोगः. एवं भांडमुपकरणं द्विविधं भवति, रजोहरणदंडकादिकं द्विप्रकारं वर्तते, मुनिस्तं द्विविधमपि भांडं गृह्णन्, च पुनर्निक्षिपन् मुंचन्निमं विधिं प्रयुंजीत. ॥ १३ ॥ तं विधिं प्राह—

॥ मूलम् ॥—चक्खुसा पडिलेहित्ता । पमज्जिज्जा जयं जयी ॥ आइए निक्खिविज्जा वा ।

दुहुर्ज समिउवि सया ॥ १४ ॥ व्याख्या—यत्नावान् यतिर्यत्नया चक्षुपा प्रतिलेख्य प्रमार्जयित्वा सदा समितः सन्नादाननिक्षेपणासमितियुक्तः सन्, अथवा द्रव्यभावच्छेदेन समितः समितियुक्तः सन् द्विविधमप्युपधिमोघिकमथोपग्राहिकं गृह्णीतादद्दीत? वाऽथवा मुंचेन्निक्षिपेत्.

॥ मूलम् ॥—उच्चारं पासवणं । खेलं सिंघाणजल्लियं ॥ आहारं उवहिं देहं । अन्नं वावि तहाविहं ॥ १५ ॥ अणावायमसंलोए । अणाबाए चेव होइ संलोए ॥ आवायमसंलोए । आवाए चेव संलोए ॥ १६ ॥ अणावायमसंलोए । परस्सणुवघाइए ॥ समे अज्झुसिरेयावि । अचिरकालकयंमि य ॥ १७ ॥ विछिन्ने दूरमोगाढे । नासन्ने विलवज्जिए ॥ तसपाणबीयरहिए । उच्चाराईणि वोसिरे ॥ १८ ॥ चतसृभिः कुलकं ॥ व्याख्या—अथ पंचमीं समितिं प्राह—साधुरुच्चारादीन्येतादृशे स्थंडिले व्युत्सृजेत् परिष्ठापयेदिति चतुर्थ्या गाथया संबंधः. तानि कानि? उच्चारादीनि, उच्चारं पुरीषं, प्रश्रवणं मूत्रं, खेलं कफः, सिंघाणं श्लेष्म, जल्लकं शरीरमलं, आहारमन्नादिकं. उपधिं जीर्णवस्त्रादिकं, देहं शरीरं, अन्यत्तथाविधपरिष्ठापनायोग्यं, भेषजाद्यर्थमानीतं गोमूत्रादिकं, एतत्प्रासुके स्थंडिले परिष्ठाप्येत. पूर्वं स्थंडिल-

स्य चतुर्भंगीमाह—अनापातेऽसंलोके, न विद्यते आपातः स्वपक्षीयपरपक्षीयाणामापातो गमनागमनं यत्र तदनापातं. पुनर्यदसंलोकं भवति, न विद्यते लोकानां संलोको दूराद् दृष्टिप्रचारो यत्र तदसंलोकं. कोऽर्थः? यत्र स्थंडिले प्रायो गृहस्थः कोऽपि नायाति, यत्र च स्थंडिले प्रायो दूराद्गृहस्थानां दृष्टिप्रचारो न स्यात्, तत्र स्थंडिले इत्यर्थः, इति प्रथमो भंगः १. पुनर्यत्स्थंडिलमनापातं भवति, परं संलोकं भवति. लोकानामुपागमनरहितं भवति, अथ च लोकानां दूरात्संलोकसहितं दृष्टिप्रचारसहितं भवतीति द्वितीयो भंगः. २. पुनर्यत्स्थंडिलं लोकानामापातसहितमुपागमनसहितं भवति, अथ च दूराल्लोकानां संलोकरहितं दृक्प्रचाररहितं भवति, अयं तृतीयो भंगः ३. पुनर्यत्स्थंडिलमापातं लोकानामुपागमनसहितं भवति, अथ च संलोकं दूराल्लोकानां दृष्टिप्रचारसहितमपि भवति, अयं चतुर्थो भंगः ४. ॥ १६ ॥

'अणावायेति' तत्र चतुःषु भेदेष्वनापातेऽसंलोके स्थंडिले उच्चारादीनि व्युत्सजेत्. कथंभूते स्थंडिले? दशविधविशेषणविशिष्टे, तानि दशविशेषणान्याह—कथंभूते स्थंडिले? परस्याऽ-

नुपघातके, यत्रान्यस्योपघातो न स्यात्, संयमस्यात्मनः प्रवचनस्य बाधारहिते हीलारहिते. १. पुनः कीदृशे? समे निम्नोन्नतत्वादिरहिते २. पुनः कीदृशे? 'अज्झूसरे अपि' अज्झूसरे इति घासवृक्षपत्रकाष्ठादिभिरव्याप्ते, तत्र हि परिष्ठापिते जंतूनामुत्पत्तिः स्यात्. ३. पुनः कीदृशे? अचिरकालकृते, अग्न्यादिना स्तोकेन कालेनाचित्तीकृते ४. ॥ १७ ॥ पुनः कीदृशे? विच्छिन्ने विस्तीर्णे (जघन्यतोऽपि हस्तप्रमाणे) ५. पुनः कीदृशे? दूरं उंगाढे, अधस्ताद्दूरं सचित्ते, उपरिष्टादंगुलपंचकं यावदचित्ते ६. पुनः कीदृशे? न आसन्नेऽनासन्ने, ग्रामाद्दूरवर्तिनि ७. पुनः कीदृशे? विलवर्जिते मूषककसर्पकीटकादिरंध्रवर्जिते ८. पुनः कीदृशे? त्रसप्राणैर्द्वीन्द्रियादिनी रहिते ९. पुनः कीदृशे? बीजैः शालिगोधूमादिसचित्तधान्यै रहिते १०. एतादृशे दशविधविशेषणैर्विशिष्टे स्थंडिले पूर्वोक्तानुच्चारादीन् व्युत्सृजेत् संत्यजेदिति भावः. ॥ १८ ॥

॥ मूलम् ॥—एयाउ पंचसमिईउ । समासेण वियाहिया ॥ इत्तो य तिउ गुत्तीउ । वुच्छामि अणुपुव्वसो ॥ १९ ॥ व्याख्या—एताः पंच समितयः समासेन संक्षेपेण व्याख्याताः. इतोऽनंतरं तिस्रो गुप्तीर्मनोगुप्तिवाग्गुप्तिकायगुप्तीरानुपूर्वीतोऽनुक्रमतो वक्ष्यामि. ॥ १९ ॥

॥ मूलम् ॥—सच्चा तहेव मोसा य । सच्चामोसा तहेव य ॥ चउत्थी असच्चमोसाउ । मणगुत्ती चउविहा ॥ २० ॥ व्याख्या—मनोगुप्तिश्चतुर्विधा, प्रथमा सत्या मनोगुप्तिः १. तथा द्वितीयाऽसत्या मनोगुप्तिः २. तथैव तृतीया सत्यामृषा मनोगुप्तिः ३. तथा चतुर्थी असत्याऽमृषा मनोगुप्तिः ४. यत्सत्यं वस्तु मनसि चिंत्यते, जगति जीवतत्वं विद्यते, इत्यादिचिंतनस्य योगस्तद्रूपा गुप्तिः सत्या मनोगुप्तिः प्रथमा १. यदसत्यं वस्तु मनसि चिंत्यते, जीवो नास्तीत्यादिचिंतनस्य योगस्तद्रूपा गुप्तिरसत्या मनोगुप्तिर्द्वितीया २. बहूनां नानाजातीयानामाम्रादिवृक्षाणां वनं दृष्ट्वाऽऽम्राणामेव वनमेतद्वर्तते, तत्सत्यं पुनर्मृषायुक्तमेवेत्यादिचिंतनयोगस्तद्रूपा गुप्तिः सत्यामृषा मनोगुप्तिस्तृतीया, यतोऽत्र काचित्सत्या चिंतना, काचिन्मृषा चिंतना, केचित्तत्र वने आम्राः संति तेन सत्या, केचित्तत्र वने धवखदिरपलाशादयो वृक्षा अपि संति तेन मृषाप्यस्ति ३. चतुर्थी असत्यामृषा या चिंतना, सत्यापि नास्ति, मृषापि नास्ति, यदादेशनिर्देशादिचिंतनं मनसि चिंत्यते, हे देवदत्त ! घटमानय ? अमुकं वस्तु मह्यमानीय दीयतां, इत्यादिचिंतनाव्यवहाररूपा, तद्रूपा गुप्तिरसत्यामृषा मनोगुप्तिश्चतुर्थी, यत

ण्या चिंतना सत्यापि नास्ति, मृषापि नास्ति, व्यवहाराचिंतनेत्यर्थः ४. ॥ २० ॥

॥ मूलम् ॥—संरंभसमारंभे । आरंभे य तहेव य ॥ मणं पवत्तमाणं तु । निवत्तिज्ज जयं जई ॥ २१ ॥ व्याख्या—यतिः साधुर्यत्नावान् सन् संरंभसमारंभे, तथैव चारंभे प्रवर्तमानं मनो निवर्तयेत. संरंभश्च समारंभश्चानयोः समाहारः संरंभसमारंभं तस्मिन् संरंभसमारंभे. संरंभः संकल्पः, अहं तथा ध्यानं करिष्यामि करोमि वा, यथासौ म्रियते मरिष्यतीत्यादिसंकल्पः संरंभः, तत्र संकल्पे प्रवर्तमानं मनो निवर्तयेत्. तथा समारंभः परपीडाकरोच्चाटनकीलनादीनिबंधनं ध्यानं, तत्रापि प्रवर्तमानं मनो निवारयेत्. तथैव च पुनरारंभः परप्राणापहारक्रमोऽशुभपरिणामः, तस्मिन् परिणामे प्रवर्तमानं मनो निवर्तयेत्. ॥ २१ ॥ अथ वचनयोगं वदति—

॥ मूलम् ॥—संकप्पो संरंभो । परितावकरो भवे समारंभो ॥ आरंभो उद्दवओ—सुद्धवयाईण सव्वेसिं ॥ २१ ॥ व्याख्या—सर्वेषामशुद्धवचसामेते भेदा भवंति. कीदृशास्ते भेदाः? परितापकराः, के ते भेदाः? संरंभः संकल्प इत्याद्यर्थः पूर्ववदेव. ॥ २१ ॥

॥ मूलम् ॥—सच्चा तहेव मोसा य । सच्चामोसा तहेव य ॥ चउत्थी असच्चमोसा उ । वयगुत्ती चउव्विहा ॥ २२ ॥ व्याख्या—वचनगुप्तिश्चतुर्विधा भवति. सत्या सत्यवाक्, तस्या योगः सत्यवाग्योगः, तद्रूपा गुप्तिः सत्या वाग्गुप्तिः १. एवमसत्याऽसत्यवाक्, तस्या योगोऽसत्यवाग्योगः, तद्रूपा गुप्तिरसत्यवाग्गुप्तिः २. तथा या सत्या वाग् सती, असत्यया वाचा सह मिलति सा सत्यामृषा वाग्गुप्तिस्तृतीया ३. पुनश्चतुर्थी असत्यामृषा वाग्गुप्तिः, या सत्यापि नास्ति, मृषापि नास्ति, अर्थाद्व्यवहारवाक् सा चतुर्थीत्यर्थः ४. ॥ २२ ॥

॥ मूलम् ॥—संरंभसमारंभे । आरंभे य तहेव य ॥ वयं पवट्टमाणं तु । निवत्तिज्ज जयं जई ॥२३॥ व्याख्या—यतिः साधुः ' जयं ' इति यत्नावान् सन् वचनं संरंभे समारंभे तथैव चारंभे प्रवर्तमानं वचो वचनं निवर्तयेत्. संरंभः परजीवस्य विनाशनसमर्थं दुष्टविद्यानां गुणनं, समारंभः परेषां परितापकारकमंत्रादीनां मुहुर्मुहुः परावर्तनं. तथैव चारंभः परेषां क्लेशोच्चाटनमारणादिमंत्रजापकरणं. तत्रापि प्रवर्तमानं निवारयेत्. ॥ २३ ॥ इत्यनेन वाग्गुप्तिरेवोक्ता, अथ कायगुप्तिमाह—

॥ मूलम् ॥—ठाणे निसीयणे चेव । तहेव य तुयट्टणे ॥ उल्लंघणपल्लंघण । इंदियाण य जुंजणा ॥ २४ ॥ संरंभे समारंभे । आरंभंमि तहेव य ॥ कायं पवत्तमाणं तु । निवत्तिज्ज जयं जई ॥ २५ ॥ युग्मं ॥ व्याख्या—स्थाने ऊर्ध्वस्थितौ, च पुनरेव निश्चयेन निषीदने उपविशने, तथैव 'तुयट्टणे' त्वग्वर्तने अर्थाच्छयने, तथोल्लंघनप्रलंघने उल्लंघनं, तथाविधनिमित्ताद्गर्तादेरुत्क्रमणं, तत्र. पुनः प्रलंघनं सामान्येन गमनं, तत्र. च पुनरिंद्रियाणां प्रयुंजने श्रोत्रनेत्ररसनानासात्वगादीनामिंद्रियाणां शब्दरूपरसगंधस्पर्शादिविषयेषु व्यापारणे. तथा संरंभे मुष्ट्यादिना ताडने, तथा समारंभे परितापकारिणि लत्ताद्यभिघाते. तथैव च पुनरारंभे प्राणिवधकरे यष्ट्यादिप्रयोगे कायं प्रवर्तमानं यतिः साधुर्यत्नावान् सन् कायं निवर्तयेत्, सर्वत्र शरीरगुप्तिर्विधेयेत्यर्थः. ॥ २४ ॥ २५ ॥

॥ मूलम् ॥—एयाउ पंचसमिईउ । चरणस्स य पवत्तणे ॥ गुत्ती निअत्तणे वुत्ता । असुभत्थेसु सव्वसो ॥ २६ ॥ व्याख्या—एताः पंच समितयश्चरणस्य चारित्रस्य प्रवर्तने उक्ताः, सर्वशः सर्वप्रकारेणाऽशुभार्थेभ्यो व्यापारेभ्यो निवर्तने तिस्रो गुप्तय उक्ताः. ॥ २६ ॥

॥ मूलम् ॥—एया पवयणमाया । जे सम्मं आयरे मुणी ॥ सो खिप्पं सव्वसंसारा । विप्पमुच्चइ पंमिए त्तिबेमि ॥ २३ ॥ व्याख्या—यो मुनिरेताः प्रवचनमातॄः सम्यक् जिनाज्ञयाऽऽचरेत्, स मुनिः क्षिप्रं शीघ्रं सर्वसंसाराच्चतुर्गतिभ्रमणाद्विशेषेण प्रमुच्यते प्रकर्षेण मुक्तो भवति. कीदृशो मुनिः? पंमितस्तत्वज्ञः, स एवाष्टप्रवचनमातृप्रपालकः स्यादिति भावः. इति सुधर्मास्वामी जंबूस्वामिनं प्राह, हे जंबू! तीर्थंकरवचसा तवाग्रे ब्रवीमीति प्रवचनमातृकं समित्यध्ययनं चतुर्विंशतितमं संपूर्णं ॥ २४ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां समित्यध्ययनं चतुर्विंतितमं संपूर्णः. ॥ २४ ॥ श्रीरस्तु ॥

—

## ॥ अथ पंचविंशतितममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययने प्रवचनमातर उक्ताः, तास्तु ब्रह्मगुणयुक्तस्य स्युः, तस्माद्ब्रह्मगुणज्ञानाय यज्ञीयाध्ययनं कथ्यते—

॥ मूलम् ॥—माहणकुलंमि संभूओ । आसिविप्पो महाजसो ॥ जायाई जमजणंमि । जयघोसित्ति नामओ ॥ १ ॥ व्याख्या—वाराणस्यां द्विजौ यमलौ भ्रातरौ जयघोषविजयघोषाभूतां. तयोरेको जयघोषनामा गंगायां स्नातुं गतः, क्रूरसर्पमंडुकग्रासं दृष्ट्वा प्रव्रजितः, तद्वार्तामाह—' माहणकुलम्मित्ति ' ब्राह्मणकुले संभूतो विप्रकुले समुत्पन्नो जयघोष इति नामतो विप्र आसीत्. अत्र हि यद् ब्राह्मणकुलसंभूतो विप्र आसीदित्युक्तं, तद् ब्राह्मणजनकादुत्पन्नोऽपि जननीजातिहीनत्वेऽब्राह्मणः स्यात्, अतो विप्र इत्युक्तं. कीदृशो जयघोषः? यमजन्नंमि यमयज्ञे यायाजी, यायजीत्येवंशीलो यायाजी. यमा अहिंसासत्याऽस्तेयब्रह्मनि-

लोंत्राः पंच, ते एव यज्ञो यमयज्ञस्तस्मिन् यमयज्ञेऽतिशयेन यज्ञकरणशीलः, अर्थात् पंचमहाव्रतरूपे यज्ञे याज्ञिको जातो यतिर्जात इत्यर्थः. ॥ १ ॥

॥ मूलम् ॥—इंदियग्गामनिग्गाही । मग्गगामी महामुणी ॥ गामाणुगामं रीयंतो । पत्तो वाणारसीं पुरीं ॥ २ ॥ व्याख्या—स महामुनिरेकाकी साधुर्ग्रामानुग्रामं 'रीयंतो' इति विचरन् वाराणसीं पुरीं प्राप्तः. कीदृशः स महामुनिः? इंद्रियग्रामनिग्राही, इंद्रियाणां ग्रामं समूहमिंद्रियपंचकं निगृह्णाति मनोजयेन वशीकरोतीतींद्रियग्रामनिग्राही. पुनः कीदृशः सः? मार्गगामी, मार्गं मोक्षं गच्छति स्वयमन्यांश्च गमयतीति मार्गगामी. ॥ २ ॥

॥ मूलम् ॥—वाणारसीए बहिया । उज्जाणंमि मणोरमे ॥ फासुए सिज्जसंथारे । तत्थ वासमुवागए ॥ ३ ॥ व्याख्या—स साधुर्वाणारस्यां बाह्ये मनोरमे मनोहरे उद्याने प्रासुके जीवरहिते शय्यासंस्तारके दर्भतृणादिरचिते शयनोपवेशनस्थितौ, तत्र 'वासं' इति वसतिं कर्तुमुपागतः. ॥ ३ ॥

॥ मूलम् ॥—अह तेणेव कालेणं । पुरीए तत्थ माहणे ॥ विजयघोसित्ति नामेणं ।

जणं जयइ वेयवी ॥ ४ ॥ व्याख्या—अथानंतरं तस्मिन्नेव काले यस्मिन् काले साधुर्वने समागतस्तस्मिन्नेव काले तस्यां वाराणस्यां पुर्यां विजयघोष इति नामा ब्राह्मणो यज्ञं यजति, यज्ञं करोति. कीदृशो विजयघोषः? वेदविद्वेदज्ञः. ॥ ४ ॥

॥ मूलम् ॥—अह से तत्थ अणगारे । मासखमणपारणे ॥ विजयघोसस्स जन्नंमि । निक्खस्सट्टा उवट्ठिए ॥ ५ ॥ व्याख्या—अथानंतरं तस्य विजयघोषस्य यज्ञे स पूर्वोक्तो जयघोषोऽनगारो मासक्षमणस्य पारणे भिक्षाया अर्थं भिक्षायै उपस्थितः. ॥ ५ ॥

॥ मूलम् ॥—समुवट्ठियं तहिं संतं । जायगो पडिसेहई ॥ न हु दाहामि ते भिक्खं । भिक्खू जायाहि अण्णओ ॥ ६ ॥ व्याख्या—तदा याजको यजमानो विजयघोषो ब्राह्मणस्तत्र भिक्षार्थं समुपस्थितं संतं तं साधुं प्रतिषेधयति निवारयति. कथं निवारयतीत्याह—हे भिक्षो! त्वमन्यतोऽन्यत्र याहि? ते तुभ्यं भिक्षां न ददामि. ॥ ६ ॥.

॥ मूलम् ॥ जे य वेयविऊ विप्पा । जण्णट्ठा य जिइंदिया ॥ जोइसंगविऊ जे य । जे य धम्माण पारगा ॥ ७ ॥ जे समत्था समुद्धत्तुं । परं अप्पाणमेव य ॥ तेसिं अन्नमिणं देयं ।

भो भिक्खू सव्व कामियं ॥ ८ ॥ युग्मं ॥ विजयघोषो वदति, हे भिक्षो! अस्मिन् यज्ञे इदं प्रत्यक्षं दृश्यमाणमन्नं सर्वकामिकं षड्रससिद्धं तेषां पात्राणां देयं वर्तते. तेभ्यो देयमस्ति, न तु तुभ्यं देयं वर्तते. तेषां केषां? ये आत्मानं स्वकीयमात्मानं. च पुनः परं परस्यात्मानं समुद्धर्तुं समर्थाः, ये संसारसमुद्रादात्मानं तारयितुं समर्थाः, परमपि तारयितुं समर्थास्तेषां प्रदेयमस्तीति भावः. ॥ ७ ॥ पुनः केषां प्रदेयमन्नं वर्तते? ये विप्रा वेदविदो वेदज्ञास्तेषां, पुनर्ये यज्ञार्थाः, यज्ञ एवार्थः प्रयोजनं येषां ते यज्ञार्थास्तेषां. पुनर्ये जितेंद्रिया इंद्रियाणां जेतारस्तेषां, पुनर्ये ज्योतिषामंगविदः, ज्योतिःशास्त्रस्यांगवेत्तारः, यद्यपि ज्योतिःशास्त्रं वेदस्यांगमेवास्ति, वेदविद इत्युक्ते आगतं, तथाप्यत्र ज्योतिःशास्त्रस्य पृथगुपादानं प्राधान्यख्यापनार्थं. तस्मादेतद्गुणविशिष्टा ये ब्राह्मणास्तेषां देयमस्ति. पुनर्ये धर्मशास्त्राणां पारगास्तेषां देयमत्रान्नं वर्तते इत्यर्थः. ॥ ७ ॥ ८ ॥

॥ मूलम् ॥—सो तत्थ एवं पडिसिद्धो । जायगेण महामुणी ॥ नवि रुट्ठो नवि तुट्ठो । उत्तमट्ठगवेसओ ॥ ९ ॥ व्याख्या—स महामुनिर्जयघोषस्तत्र यज्ञे एवममुना प्रकारेण विज-

यघोषेण याजकेन यज्ञकारकेण प्रतिषिद्धः सन् निवारितः सन् नापि रुष्टो नापि तुष्टः समभावयुक्तोऽभूत्. कीदृशः स महामुनिः? उत्तमार्थगवेषको मोक्षाभिलाषी. ॥ ९ ॥

॥ मूलम् ॥—नन्नठं पाणहेउं वा । नवि निव्वाहणाय वा ॥ तेसिं विमोखणट्ठाए । इमं वयणमब्बवी ॥ १० ॥ व्याख्या—स महामुनिस्तेषां विजयघोषादिब्राह्मणानां विमोक्षणार्थं कर्मबंधनान्मुक्तिकरणार्थमिदं वचनमब्रवीत्, परमन्नपानलाभार्थं नाब्रवीत्. एवं ज्ञात्वा नाब्रवीदनाहमेभ्य उपदेशं ददामि, एते च प्रसन्नीभूय मह्यं सम्यगन्नपानं ददतीति बुद्ध्या नाब्रवीत. किंतु तेषां संसारनिस्तारणार्थमवदत. वाऽथवा निर्वाहणायापि न, वस्त्रपात्रादिकानां निर्वाहं एभ्यो मम भविष्यतीति नाब्रवीदिति भावः. ॥ १० ॥

॥ मूलम् ॥—ण विजाणसि वेयमुहं । णवि जन्नाण जं मुहं ॥ नक्खत्ताण मुहं जं च । जं च धम्माण वा मुहं ॥ ११ ॥ व्याख्या—किमब्रवीदित्याह—भो ब्राह्मण विजयघोष! त्वं वेदमुखं न विजानासि, पुनर्यद्यज्ञानां मुखं वर्तते तदपि त्वं न जानासि. पुनर्यन्नक्षत्राणां मुखं तदपि त्वं न जानासि. पुनर्यद्धर्माणां मुखं वर्तते तदपि त्वं न जानासि. ॥ ११ ॥ पुनः

स साधुर्विजयघोषं ब्राह्मणं पृछति—

॥ मूलम् ॥—जे समत्था समुद्धत्तुं । परं अप्पाणमेव य ॥ ण ते तुमं वियाणासि । अह जाणासि तो जण ॥ १२ ॥ व्याख्या—हे विजयघोष! ये परं च पुनरात्मानमेव समुद्धर्तुं संसारान्निस्तारयितुं समर्थास्तान् स्वपरनिस्तारकांस्त्वं न जानासि, अथ चेत्त्वं जानासि तदा जण? कथय? ॥ १२ ॥

॥ मूलम् ॥—तस्सारकेवपमोरकं च । अवयंतो तहिं दिउ ॥ सपरिसो पंजलिउडो । पुछई तं महामुणिं ॥ १३ ॥ व्याख्या—' तहिं ' इति तत्र यज्ञे द्विजो विजयघोषः प्रांजलिपुटो बद्धांजलिः सन् तं महामुनिं पृछति, कीदृशो द्विजः? सपरिषद्बहुभिर्मनुष्यैः सहितः. पुनः स द्विजः कीदृशः सन्? तस्य साधोराक्षेपं प्रश्नस्तस्य प्रमोक्षं प्रतिवचनमुत्तरं, ' अवयंतो ' इति दातुमशक्नुवन्, प्रश्नस्योत्तरं दातुमसमर्थः सन्, दातुमित्यध्याहारः. ॥ १३ ॥

॥ मूलम् ॥—वेयाणं च मुहं बूहि । बूहि जन्नाणजं मुहं ॥ नरकत्ताण मुहं बूहि । बूहि धम्माण जं मुहं ॥ १४ ॥ व्याख्या—हे महामुने! त्वमेव वेदानां मुखं ब्रूहि? पुनर्यद्

स साधुर्विजयघोषं ब्राह्मणं पृच्छति—

॥ मूलम् ॥—जे समत्था समुद्धत्तुं। परं अप्पाणमेव य ॥ ण ते तुमं वियाणासि। अह
जाणासि तो भण ॥ १२ ॥ व्याख्या—हे विजयघोष! ये परं च पुनरात्मानमेव समुद्धर्तुं
संसारान्निस्तारयितुं समर्थास्तान् स्वपरनिस्तारकांस्त्वं न जानासि, अथ चेत्त्वं जानासि तदा
भण? कथय? ॥ १२ ॥

॥ मूलम् ॥—तस्सक्खेवपमोक्खं च। अचयंतो तहिं दिओ ॥ सपरिसो पंजलिउडो।
पुच्छई तं महामुणिं ॥ १३ ॥ व्याख्या—'तहिं' इति तत्र यज्ञे द्विजो विजयघोषः प्रांज-
लिपुटो बद्धांजलिः सन् तं महामुनिं पृच्छति, कीदृशो द्विजः? सपरिषद्बहुभिर्मनुष्यैः सहितः.
पुनः स द्विजः कीदृशः सन्? तस्य साधोराक्षेपं प्रश्नस्तस्य प्रमोक्षं प्रतिवचनमुत्तरं, 'अचयं-
तो' इति दातुमशक्नुवन्, प्रश्नस्योत्तरं दातुमसमर्थः सन्, दातुमित्यध्याहारः. ॥ १३ ॥

॥ मूलम् ॥—वेयाणं च मुहं बूहि। बूहि जन्नाणजं मुहं ॥ नक्खत्ताण मुहं बूहि। बू-
हि धम्माण जं मुहं ॥ १४ ॥ व्याख्या—हे महामुने! त्वमेव वेदानां मुखं ब्रूहि? पुनर्यद्

यज्ञानां मुखो वर्तते. यज्ञो दशप्रकारधर्मः—सत्यं १ तपश्च २ संतोषः ३ । क्षमा ४ चारित्र ५ मार्जवं ६ ॥ श्रद्धा ७ धृति ८ रहिंसा ९ च । संवरश्च १० तथापरः ॥ १ ॥ इतिदशप्रकारः. स चात्र प्रस्तावाद्भावयज्ञः, तं यज्ञमर्थयत्यभिलषतीति यज्ञार्थी, स एव यज्ञानां मुखं वर्तते. नक्षत्राणामष्टाविंशतीनां मुखं चंद्रो वर्तते. धर्माणां श्रुतधर्माणां चारित्रधर्माणां काश्यप आदीश्वरो मुखं वर्तते. धर्माः सर्वेऽपि तेनैव प्रकाशिता इत्यर्थः. ॥ १६ ॥

॥ मूलम् ॥—जहा चंदं गहाईया । चिठ्ठंते पंजलिउडा ॥ वंदमाणा नमंसंति । उत्तमं मणहारिणो ॥ १७ ॥ व्याख्या—यथा ग्रहादिका अष्टाशीतिग्रहाः, नक्षत्राण्यष्टाविंशतिप्रमितानि, एवं सर्वे ज्योतिष्का देवाश्चंद्रं प्रांजलिपुटा बद्धांजलयस्तिष्ठंति सेवंते, एवं श्रीऋषभदेवमुत्तमं प्रधानं यथास्यात्तथा मनोहारिणस्त्रिभुवनवर्तिनो भव्या वंदमानाः स्तवनां कुर्वंतो नमस्कुर्वंति, विनये प्रवर्तंते इति भावः. ॥ १७ ॥

॥ मूलम् ॥—अजाणगा जन्नवाई । विज्जामाहणसंपयां ॥ मूढा सज्झायतवसा । भासछन्ना इवाग्गिणो ॥ १८ ॥ व्याख्या—हे विजयघोष! विद्याब्राह्मणसंपदामजानानाः, पुनर्यज्ञ-

वादिनः, ते च त्वया पात्रत्वेन मन्यंते. विद्या आरण्यकब्रह्मांडपुराणात्मिकाः, ता एव ब्राह्मणसंपदो विद्याब्राह्मणसंपदस्तासामज्ञाः संतो यज्ञवादिनो वर्तंते. चेद् बृहदारण्यकाद्युक्तं यज्ञमेते जानंते, तदा कथमेतादृशं यज्ञं कुर्युः? (बृहदारण्यकपुराणे तु सत्यादिदशप्रकारधर्ममयो भावयज्ञः प्रोक्तोऽस्ति, पुनः सकलपुराणमुख्ये ब्रह्मांडपुराणेऽप्युक्तं, इह हि इक्ष्वाकुकुलवंशोद्भवेन नाभिसुतेन मरुदेव्या नंदनेन महादेवेन ऋषभेण दशप्रकारो धर्मः स्वयमेव चीर्णः, केवलज्ञानलंभाच्च निर्ग्रंथादिमहर्षीणां प्रणीतस्त्रेतायामादावित्यादि.) तस्मादज्ञत्वैव वयं याज्ञिका इत्यभिमानं कुर्वंति. पुनः कथंभूताः? स्वाध्यायतपसा वेदाध्ययनोपवासादिना मूढाः, नहि: यथार्थतया आच्छादिततत्त्वज्ञानाः. एते के इव? भस्मच्छन्ना अग्नय इव, रक्षादिना वह्नय इव. इत्यनेन बाह्ये शीतत्वं प्राप्ताः, परं कषायाग्निना मध्ये संतप्ता एवेति भाव. ॥१८॥ पुनः साधुर्वदति—

॥ मूलम् ॥—जो लोए बंभणो वुत्तो । अग्गीव महिओ जहा ॥ सया कुसलसंदिट्ठं । तं वयं बूम माहणं ॥ १९ ॥ व्याख्या—हे विजयघोष! वयं तं ब्राह्मणं ब्रूमः, तं कं? यो मु-

निभिर्ब्राह्मण उक्तः, यत्कैश्चिदज्ञैरब्राह्मणोऽपि ब्राह्मणोऽयमित्युक्तस्तं ब्राह्मणं न ब्रूम इति भावः. कथंभूतः सः? लोके महितः पूजितः सन् दीप्यते. क इव? अग्निरिव, यथाग्निः पूजितो घृतादिसिक्तो दीप्यते. कीदृशं तं ब्राह्मणं? सदा कुशलसंदिष्टं, सदा कुशलैस्तत्वाभिज्ञैः संदिष्टं कथितं. ॥ १९ ॥ अथ कुशलसंदिष्टस्वरूपं ब्राह्मणमाह—

॥ मूलम् ॥—जो न सज्जइ आगंतु । पव्वयंतो न सोयई ॥ रमइ अज्जवयणंमि । तं वयं बूम माहणं ॥ २० ॥ व्याख्या—हे विजयघोष! तं वयं ब्राह्मणं ब्रूमः. तमिति कं? य आगंतुमिति बहुभ्यो दिनेभ्यः प्राप्तं स्वजनादिकं वल्लभं जनं न स्वजति नालिंगति. अथवा आगंतुमिति स्वजनादिस्थानमागत्य स्वजनादिकं न स्वजति. नाभिष्वंगं करोति. पुनर्यः प्रव्रजन् स्थानादन्यत्स्थानं स्थानांतरं गच्छन्, अर्थाद्विहरन् न शोचते, न शोकं कुरुते. पुनर्य आर्यवचने तीर्थंकरवाक्ये रमते तं वयं ब्राह्मणं वदामः. ॥ २० ॥

॥ मूलम् ॥—जायरूवं जहा मठं । निद्धंतमलपावगं ॥ रागदोषभयातीतं । तं वयं बूम माहणं ॥ २१ ॥ व्याख्या—हे विजयघोष! वयं तं ब्राह्मणं ब्रूमः. कीदृशं? जातरूपं

स्वर्णमिवामृष्टं, तेजोवृद्धये मनःशिलादिना परामृष्टं, कृतवर्णिकावर्धनं, अनेन वाह्यगुण उक्तः. यथाशब्द इवार्थे. पुनः कीदृशं तं? ' निद्धंतमलपावगं ' नितरामतिशयेन ध्मातं मलं किट्टं तद्रूपं पातकं यस्य स निर्ध्मातमलपापकस्तं, अनेन चांतरो गुण उक्तः. पुनः कथंभूतं? रागद्वेषभयातीतं, रागः प्रेमरूपः, द्वेषोऽप्रीतिरूपः, ताभ्यामतीतो दूरीभूतस्तं विप्रं वदामः.॥२१॥

॥ मूलम् ॥—तवस्सियं किसं दंतं । अवचियमंससोणियं ॥ सुव्वयं पत्तनिव्वाणं । तं वयं बूम माहणं ॥ २२ ॥ व्याख्या—हे विजयघोष वयं तं ब्राह्मणं ब्रूमः. तं कं? तपस्विनमत एव कृशं दुर्बलं. पुनः कीदृशं? दांतं जितेंद्रियं. पुनःकीदृशं? अपचितमांसशोणितं शोषितमांसरुधिरं. पुनः कीदृशं? सुव्रतं सम्यग्व्रतानां धर्तारं. पुनः कीदृशं? प्राप्तनिर्वाणं प्राप्तं कषायाग्निशमनेन निर्वाणं शीतीभावं येन स प्राप्तनिर्वाणस्तं. ॥ २२ ॥

॥ मूलम् ॥——तसपाणे वियाणित्ता । संगहेण य थावरे ॥ जो न हिंसइ तिविहेणं । तं वयं बूम माहणं ॥ २३ ॥ व्याख्या—हे ब्राह्मण! तं वयं ब्राह्मणं ब्रूमः. तमिति कं? यः त्रसान् प्राणान्, पुनः स्थावरान् संग्रहेण समासेन संक्षेपेण विज्ञाय त्रिविधेन मनोवाक्काये-

निभिर्ब्राह्मण उक्तः, यत्कैश्चिदज्ञैरब्राह्मणोऽपि ब्राह्मणोऽयमित्युक्तस्तं ब्राह्मणं न ब्रूम इति भावः. कथंभूतः सः? लोके महितः पूजितः सन् दीप्यते. क इव? अग्निरिव, यथाग्निः पूजितो घृतादिसिक्तो दीप्यते. कीदृशं तं ब्राह्मणं? सदा कुशलसंदिष्टं, सदा कुशलैस्तत्त्वाभिज्ञैः संदिष्टं कथितं. ॥ १९ ॥ अथ कुशलसंदिष्टस्वरूपं ब्राह्मणमाह—

॥ मूलम् ॥—जो न सज्जइ आगंतु । पव्वयंतो न सोयई ॥ रमइ अज्जवयणंमि । तं वयं बूम माहणं ॥ २० ॥ व्याख्या—हे विजयघोष! तं वयं ब्राह्मणं ब्रूमः. तमिति कं? य आगंतुमिति बहुभ्यो दिनेभ्यः प्राप्तं स्वजनादिकं वल्लभं जनं न स्वजति नालिंगति. अथवा आगंतुमिति स्वजनादिस्थानमागत्य स्वजनादिकं न स्वजति. नाभिष्वंगं करोति. पुनर्यः प्रव्रजन् स्थानादन्यत्स्थानं स्थानांतरं गच्छन्, अर्थाद्विघुटन् न शोचते, न शोकं कुरुते. पुनर्य आर्यवचने तीर्थंकरवाक्ये रमते तं वयं ब्राह्मणं वदामः. ॥ २० ॥

॥ मूलम् ॥—जायरूवं जहा मट्ठं । निद्धंतमलपावगं ॥ रागदोसभयातीतं । तं वयं बूम माहणं ॥ २१ ॥ व्याख्या—हे विजयघोष! वयं तं ब्राह्मणं ब्रूमः. कीदृशं? जातरूपं

स्वर्णमिवामृष्टं, तेजोवृद्धये मनःशिलादिना परामृष्टं, कृतवर्णिकावर्धनं, अनेन बाह्यगुण उक्तः. यथाशब्द इवार्थे. पुनः कीदृशं तं? 'निद्धंतमलपावगं' नितरामतिशयेन ध्मातं मलं किट्टं तद्रूपं पातकं यस्य स निर्ध्मातमलपापकस्तं, अनेन चांतरो गुण उक्तः. पुनः कथंभूतं? रागद्वेषभयातीतं, रागः प्रेमरूपः, द्वेषोऽप्रीतिरूपः, ताभ्यामतीतो दूरीभूतस्तं विप्रं वदामः. ॥२१॥

॥ मूलम् ॥—तवस्सियं किसं दंतं। अवचियमंससोणियं ॥ सुव्वयं पत्तनिव्वाणं। तं वयं बूम माहणं ॥ २२ ॥ व्याख्या—हे विजयघोष वयं तं ब्राह्मणं ब्रूमः. तं कं? तपस्विनमत एव कृशं दुर्बलं. पुनः कीदृशं? दांतं जितेंद्रियं. पुनः कीदृशं? अपचितमांसशोणितं शोषितमांसरुधिरं. पुनः कीदृशं? सुव्रतं सम्यग्व्रतानां धर्तारं. पुनः कीदृशं? प्राप्तनिर्वाणं प्राप्तं कषायाग्निशमनेन निर्वाणं शीतीभावं येन स प्राप्तनिर्वाणस्तं. ॥ २२ ॥

॥ मूलम् ॥——तसपाणे वियाणित्ता। संगहेण य थावरे ॥ जो न हिंसइ तिविहेणं। तं वयं बूम माहणं ॥ २३ ॥ व्याख्या—हे ब्राह्मण! तं वयं ब्राह्मणं ब्रूमः. तमिति कं? यस्त्रसान् प्राणान्, पुनः स्थावरान् संग्रहेण समासेन संक्षेपेण विज्ञाय त्रिविधेन मनोवाक्काये-

न, करणकारणानुमतिन्नेदेन नवविधेन न हंति, तं ब्राह्मणं वच्म इति न्नावः. ॥ २३ ॥ ( यडुक्तमारण्यके—यदा न कुरुते पापं । सर्वभूतेषु दारुणं ॥ कर्मणा मनसा वाचा । ब्रह्म संपद्यते तदा ॥ १ ॥ ).

॥ मूलम् ॥—कोहा वा जइ वा हासा । लोहा वा जइ वा न्नया ॥ मुसं न वयई जो ज । तं वयं बूम माहणं ॥ २४ ॥ व्याख्या—हे विजयघोष! यः क्रोधात्, यदि वाऽथवा हासात्, वाथवा लोन्नात्, अथवा भयात् मृषामसत्यवाणीं न वदति, तं वयं ब्राह्मणं ब्रूमः. ॥ ॥ २४ ॥ ( यडुक्तमारण्यके—यदा सर्वानृतं त्यक्तं । मिथ्या न्नाषा विवर्जिता ॥ अनवद्यं च न्नाषेत । ब्रह्म संपद्यते तदा ॥ १ ॥ ).

॥ मूलम् ॥—चित्तमंतमचित्तं वा । अप्पं वा यदि वा बहुं ॥ न गिण्हइ अदत्तं जो । तं वयं बूम माहणं ॥ २५ ॥ व्याख्या—हे ब्राह्मण! यश्चित्तमंतं सचित्तं, वाऽथवाऽचित्तं प्रासुकं, अल्पकं स्तोकं, यदि वाऽथवा बहुं प्रचुरं, अदत्तं दायकेनाऽनर्पितं स्वयमेव न गृह्णाति, तं वयं ब्राह्मणं ब्रूमः. ॥ २५ ॥ ( इदमप्युक्तमारण्यके—परद्रव्यं यदा दृष्ट्वा । आकुले ह्य-

थवा रन्हे ॥ धर्मकामो न गृह्णाति । ब्रह्म संपद्यते तदा ॥ १ ॥ ).

॥ मूलम् ॥—दिव्वमाणुस्सतेरिच्छं । जो न सेवइ मेहुणं ॥ मणसा कायवक्केणं । तं वयं बूम माहणं ॥ २६ ॥ व्याख्या—पुनर्यो दिव्यमानुष्यतिरश्चीनं मैथुनं मनसा कायेन वचसा च कृत्वा न सेवेत, वयं तं ब्राह्मणं ब्रूमः. ॥ २६ ॥ ( तथोक्तं—देवमानुषतिर्यक्षु । मैथुनं वर्जयेद्यदा ॥ कामरागविरक्तश्च । ब्रह्म संपद्यते तदा ॥ १ ॥ )

॥ मूलम् ॥—जहा पोमं जले जायं । नोवलिप्पइ वारिणा ॥ एवं अलित्तं कामेहिं । तं वयं बूम माहणं ॥ २७ ॥ व्याख्या—हे ब्राह्मण! पुनस्तं वयं ब्राह्मणं ब्रूमः. तं कीदृशं? एवममुना प्रकारेणानेन दृष्टांतेन कामैरलिप्तं, भोगैरसंलग्नं. केन दृष्टांतेन? यथा पद्मं जले जातं. परं तत्पद्मं वारिणा नोपलिप्यते, जलं त्यक्त्वोपरि तिष्ठति, तथा भोगैरुत्पन्नोऽपि भोगैरलिप्तो यस्तिष्ठति स ब्राह्मणो ज्ञेयः. ॥ २७ ॥ ( यदुक्तमारण्यके—यदा सर्वं परित्यज्य । निःसंगो निःपरिग्रहः ॥ निश्चितश्च चरेद्धर्मं । ब्रह्म संपद्यते तदा ॥ १ ॥ ).

॥ मूलम् ॥—अलोलुयं मुहाजीवी । अणगारं अकिंचणं ॥ असंसत्तं गिहत्थेसु । तं

वयं बूम माहणं ॥ २८ ॥ व्याख्या—मूलगुणमुक्त्वोत्तरगुणमाह—पुनर्वयं तं ब्राह्मणं ब्रूमः. कीदृशं तं? अलोलुपमाहारादिषु लांपट्यरहितं, पुनः कीदृशं? मुधाजीविनं, अज्ञातगृहेष्वाहारादिगृहीत्वाऽऽजीविकां कुर्वाणं, संयमजीवितव्यधारकमित्यर्थः. पुनः कीदृशं? गृहस्थेष्वसंसक्तं गृहस्थेषु प्रतिबंधरहितं. ॥ २८ ॥

॥ मूलम् ॥—जहित्ता पुव्वसंजोगं । नायसंगे य बंधवे ॥ जो न सज्जइ एएसु । तं वयं बूम माहणं ॥ २९ ॥ व्याख्या—पुनस्तं वयं ब्राह्मणं ब्रूमः. तमिति कं? यो ज्ञातौ स्वकीयगोत्रे, च पुनः संगे स्वसुरादिसंबंधे, पुनर्बांधवे पूर्वसंयोगं मातापित्रादिस्नेहं त्यक्त्वा, पुनरेतेषु पूर्वोक्तेषु न स्वजति, रागासक्तो न भवति, तं ब्राह्मणं वयं ब्रूमः. ॥ २९ ॥

॥ मूलम् ॥—पसुबंधा सव्ववेया । जठं च पावकम्मुणा ॥ न तं तायइ दुस्सीलं । कम्माणि बलवंतिह ॥ ३० ॥ व्याख्या—भो विजयघोष! सर्ववेदाः पशुबंधा वर्तंते, पशूनां बंधो विनाशाय नियंत्रणं यैर्हेतुभिस्ते पशुबंधाः, केवलं वेदाः पशुहननहेतवो वर्तंते, न तु मोक्षहेतवः, हिंसायाः प्ररूपकत्वात्. यतो हि वेदवाक्यमिदं श्रूयतां 'भूतिकामो वायव्यां

दिशि श्वेतं छागमालभेत ' इत्यादिपशुबंधे हेतुभूतं वेदवाक्यं. च पुनः ' जठं ' इति इष्टं यजनं यज्ञः पापकर्मणोत्पद्यते, तदिष्टं पापकर्मणा पापकारणपशुवंधाद्यनुष्टानेन तं वेदानामध्येतारं यज्ञकर्तारं वा न त्रायते. कथंभूतं तं? दुःशीलं दुराचारं, पापशास्त्राणां पठनेन पापकर्मकरणेन च दुष्टाचारं. इह कर्माणि बलवंति वर्तते, दुष्टकर्माणि बलेन पापकर्मकर्तारं नरकं नयंति. अतः कारणादेतस्माद्यागाद् ब्राह्मणः पात्रभूतो नास्ति. किं त्वनंतरोक्तगुणवानेव ब्राह्मण इति भावः. ॥ ३० ॥

॥ मूलम् ॥—नवि मुंमिएण समणो । न ॐकारेण बंभणो ॥ न मुणी रन्नवासेणं । कुसचीरेण तावसो ॥ ३१ ॥ व्याख्या—हे विजयघोष! मुंमितेन स्वकेशापनयनेन श्रमणो निर्ग्रंथो न स्यात्, ॐकारेण उपलक्षणत्वाद् ॐ भूर्भुवः स्वरित्यादिना ब्राह्मणो न स्यात्. तथारण्यवासेन मुनिर्नोच्यते. कुशो दर्भस्तन्मयं चीरमुपलक्षणत्वाद्वल्कलं कुशचीरं, तेन कुशचीरेण कुशोपलक्षितवल्कलवस्त्रेण तापसो न भवेत्. ॥ ३१ ॥

॥ मूलम् ॥—समयाए समणो होइ । बंभचेरेण बंभणो ॥ नाणेण य मुणी होइ । त-

वेण होइ तावसो ॥ ३२ ॥ व्याख्या—'समयाए' समत्वेन शत्रुमित्रयोरुपरि समानभावेन श्रमणो भवति, ब्रह्मचर्येण ब्राह्मणो भवति. ब्रह्म पूर्वोक्तमाहिंसासत्यचौर्याभावमैथुननिर्लोभरूपं, तस्य ब्रह्मणश्चरणमंगीकरणं ब्रह्मचर्यं, तेन ब्राह्मण उच्यते, ब्रह्मचर्येण युक्तो ब्राह्मण इत्यर्थः. ज्ञानेन मुनिर्भवति, मन्यते जानाति हेयोपादेयविधी इति मुनिः, स च ज्ञानेनैव स्यात्, तथा तपसा द्वादशविधेन तापसो भवति. ॥ ३२ ॥

॥ मूलम् ॥—कम्मुणा बंभणो होइ । कम्मुणा होइ खत्तिओ ॥ वयसो कम्मुणा होइ । सुद्दो होइ कम्मुणा ॥ ३३ ॥ व्याख्या—कर्मणा क्रियया ब्राह्मणो भवति, क्षमा दानं दमो ध्यानं । सत्यं शौचं धृतिर्घृणा ॥ ज्ञानविज्ञानमास्तिक्य—मेतद् ब्राह्मणलक्षणं ॥ १ ॥ अनया क्रियया लक्षणभूतया ब्राह्मणः स्यात्. क्षत्रियः शरणागतत्राणलक्षणक्रियया क्षत्रिय उच्यते, न तु केवलं क्षत्रियकुले जातिसमुत्पन्ने सति शस्त्रबंधनत्वेनैव क्षत्रिय उच्यते. एवं वैश्योऽपि कर्मणा क्रिययैव स्यात्, कृषिपशुपाल्यादिक्रियया वैश्य उच्यते. कर्मणैव शूद्रो भवति, शोचनादिहेतुप्रेषणभारोद्वहनजलाद्याहरणचरणमर्दनादिक्रियया शूद्र उच्यते. अत्र ब्राह्मणल-

क्षणावसरेऽन्येषां वर्णत्रयाणां लक्षणविधानं व्याप्तिदर्शनार्थं. ॥ ३३ ॥

॥ मूलम् ॥—एए पाउकरे बुद्धे । जेहिं होइ सिणायर्ड ॥ सव्वकम्मविणिमुक्कं । तं वयं बूम माहणं ॥ ३४ ॥ व्याख्या—बुद्धो ज्ञाततत्वः श्रीमहावीरः, एतानहिंसाद्यर्थान् प्रादुरकार्षीत् प्रकटीचकार. यैर्गुणैः कृत्वा सर्वकर्मविनिर्मुक्तो भूत्वा स्नातको भवति, केवली भवति. प्राकृतत्वात्प्रथमास्थाने द्वितीया. तमेतादृशगुणयुक्तं स्नातकं वा वयं ब्राह्मणं ब्रूमः ॥ ३४ ॥

॥ मूलम् ॥—एवं गुणसमाउत्ता । जे भवंति दिउत्तमा ॥ ते समत्था उ उद्धत्तुं । परं अप्पाणमेव य ॥ ३५ ॥ व्यांख्या—एवं गुणसमायुक्ता ये द्विजोत्तमा ब्राह्मणश्रेष्ठा भवंति, ते ब्राह्मणोत्तमाः परमात्मानमप्युद्धर्तुं समर्था भवंति. ॥ ३५ ॥

॥ मूलम् ॥—एवं तु संसए छिन्ने । विजयघोसो य माहणो ॥ समादाय तउ तं तु । जयघोसं महामुणिं ॥ ३६ ॥ व्याख्या—ततस्तदनंतरं विजयघोषो ब्राह्मणो जयघोषं महामुनिमुवाचेदं वचनमुदाह कथयतीति संबंधः. किं कृत्वा? तं मुनिं जयघोषं समादाय सम्यगुपलक्ष्य ज्ञात्वा. क सति? एवं पूर्वोक्तप्रकारेण विजयघोषस्य संशये छिन्ने सति. ॥ ३६ ॥

॥ मूलम् ॥—तुट्ठो य विजयघोसो । इणं मुदाहु कयंजली ॥ माहणत्तं जहाभूयं । सुट्ठु मे उवदंसियं ॥३७॥ व्याख्या—विजयघोषस्त्विदं वचनं जयघोषमुनये आह, कीदृशो विजयघोषः? कृतांजलिः. हे मुने! मे मम ब्राह्मणत्वं यथाभूतं यथास्वरूपं सुष्टु सम्यगुपदर्शितं. ॥३७॥

॥ मूलम् ॥—तुप्भे जइया जन्नाणं । तुप्भे वेयविऊ विऊ ॥ जोइसंगविऊ तुप्भे । तुप्भे धम्माण पारगा ॥ ३८ ॥ व्याख्या—किं वचनमाह? हे महामुने! 'तुप्भे' इति यूयं यज्ञानां यष्टारो यूयं वेदविदः, वेदवित्सु विदो ज्ञातारो वेदविदां वरा यूयमेव. पुनर्यूयमेव ज्योतिषांगविदः, यूयमेव धर्माणां पारगा धर्माचारपारगाः. ॥ ३८ ॥

॥ मूलम् ॥—तुप्भे समत्था समुद्धत्तुं । परं अप्पाणमेव य ॥ तमणुग्गहं करे अम्हं । भिक्खेणं भिक्खुउत्तमा ॥ ३९ ॥ व्याख्या—पुनर्हे महामुने! यूयं परं, पुनरात्मानं समुद्धर्तुं संसारान्निस्तारयितुं समर्थाः. तमिति तस्मात्कारणान्नो भिक्षूत्तमाः साधुश्रेष्टाः! भिक्षया भिक्षाग्रहणेनास्माकमनुग्रहं यूयं कुरुथ? ॥ ३९ ॥

॥ मूलम् ॥—ण कज्जं मज्झ भिक्खेणं । खिप्पं निक्खमसू दिया मा भमिहसि भ-

॥८९८॥

यावत्ते । घोरे संसारसागरे ॥ ४० ॥ व्याख्या—तदा जयघोषमुनिराह—हे द्विज! मम भि-क्षया कार्यं नास्ति, त्वं क्षिप्रं शीघ्रं निःक्रमस्व? दीक्षां गृहाण? हे द्विज! घोरे भीषणे संसारसागरे मा भ्रमसि? मिथ्यात्वेन त्वं संसारसमुद्रे भ्रमिष्यसि, तस्मान्मिथ्यात्वं त्यज? जैनीं दीक्षां गृहाणेति भावः. कथंभूते संसारसमुद्रे? भयावर्ते सततभयजलभ्रमयुक्ते. ॥ ४० ॥

॥ मूलम् ॥—उवलेवो होइ भोगेसु । अभोगी नोवलिप्पई ॥ भोगी भमइ संसारे । अभोगी विप्पमुच्चई ॥ ४१ ॥ व्याख्या—हे विजयघोष! भोगेषु भुज्यमानेषु सत्सूपलेपः कर्मोपचयरूपो बंधः स्यात्. अभोगी भोगानामभोक्ता कर्मणा नोपलिप्यते. पुनर्भोगी भोगानां भोक्ता संसारे भ्रमति, अभोगी भोगानामभोक्ता केपलेपाद्विमुच्यते. ॥ ४१ ॥

॥ मूलम् ॥—उल्लो य सुक्को य दोवूढा । गोलया मट्टियामया ॥ दोवि आवडिआ कुडे । जो उल्लो तत्थ लग्गई ॥ ४२ ॥ व्याख्या—कर्मलेपे दृष्टांतमाह—उल्ल आर्द्रश्च पुनः शुष्कः, एतौ द्वौ मृत्तिकामयो गोलकौ कुड्ये क्षिप्तौ 'उव्वूढौ' आक्षिप्तौ, तत्रापतितौ भित्तावास्फालितौ संतौ, अत्र द्वयोर्मृत्तिकामयगोलकयोर्मध्ये य उल्ल आर्द्रो मृद्गोलकः स कु-

ड्ये लगति. ॥ ४२ ॥

॥ मूलम् ॥—एवं लग्गंति डुम्मेहा । जे नरा कामलालसा ॥ विरत्ता उ न लग्गंति ।
जहा सुक्के उ गोलए ॥ ४३ ॥ व्याख्या—एवममुना प्रकारेणार्द्रमृत्तिकागोलकदृष्टांतेन डुर्मे-
धसो दुष्टबुद्धयो ये नराः कामलालसा नोगेषु लंपटास्ते लग्नंति संसारे आसक्ता नवंति. तु
पुनर्विरक्ताः कामनोगेन्यो विमुखा नरास्ते न लग्नंति संसारासक्ता न नवंति. यथा शुष्को
मृद्गोलको नित्तौ न लगति. ॥ ४३ ॥

॥ मूलम् ॥—एवं सो विजयघोसो । जयघोसस्स अंतिए ॥ अणगारस्स निरकंतो ।
धम्मं सुच्चा अणुत्तरं ॥ ४४ ॥ व्याख्या—एवममुना प्रकारेण स विजयघोषो ब्राह्मणो जय-
घोषस्यानगारस्यांतिके समीपे निःक्रांतो दीक्षां प्राप्तः, किं कृत्वा? अनुत्तरं धर्मं श्रुत्वा. ॥४४॥

॥ मूलम् ॥—खवित्ता पुव्वकम्माइं । संजमेण तवेण य ॥ जयघोसविजयघोसा । सिद्धिं
पत्ता अणुत्तरंत्तिबेमि ॥ ४५ ॥ व्याख्या—जयघोषविजयघोषावुनावप्यनुत्तरां प्रधानां गतिं
सिद्धिं प्राप्तौ. किं कृत्वा? संयमेन च पुनस्तपसा पूर्वकर्माणि क्षपयित्वा क्षयं नीत्वा, इत्यहं

ब्रवीमि, इति सुधर्मास्वामी जंबूस्वामिनं प्राह ॥ ४५ ॥ इति यज्ञीयाख्यं पंचविंशतितममध्ययनं ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां पंचविंशतितममध्ययनं संपूर्णं ॥ श्रीरस्तु ॥

---

## ॥ अथ षड्विंशतितममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययने ब्रह्मगुणा उक्ताः, ब्रह्मगुणयुक्तस्तु साधुरेव स्यात्, साधुना चावश्यं सामाचारी विधेया, इति हेतोः सामाचारीं साधुजनकर्तव्यतारूपामत्राध्ययने कथयामि.

॥ मूलम् ॥—सामायारिं पवक्खामि । सव्वदुक्खविमुक्खणं ॥ जं चरित्ताण निग्गंथा । तिन्ना संसारसागरं ॥ १ ॥ व्याख्या—अहं तां सामाचारीं साधुकरणीयां क्रियां प्रवक्ष्यामि, तामिति कां? यां सामाचारीं चरित्वांगीकृत्य निर्ग्रंथाः संसारसागरं तीर्णाः, संसारसमुद्रस्य पारं प्राप्ताः. कीदृशीं सामाचारीं? सर्वदुःखविमोक्षणीं, सर्वदुःखेभ्यो विशेषेण मोचिकां. १.

॥ मूलम् ॥—पढमा आवस्सिया नामं । बिश्या य निसीहिया ॥ आपुछणा य तश्या । चउत्थी पकिपुछणा ॥ २ ॥ व्याख्या—प्रथमा सामाचारी आवश्यकीनाम्नी, यत उपाश्रयान्निर्गछन् साधुरावश्यकीति वदति. उपाश्रयाद्वहिर्निःसरणमावश्यकीं विना न स्यात्, तेनावश्यकीति प्रथमा सामाचारी. नैषेधिकीति द्वितीया, उपाश्रयाद्वहिर्निःसरणानंतरं यस्मिन् स्थाने प्रवेशनेन स्थितिः करणीया स्यात्, तत्रापरेषां निषेधान्नैषेधिकी करणीया, निषेधे जवा नैषेधिकी. तृतीया सामाचारी आपृछना, यतो हि श्वासोछ्वासादिकं त्यक्त्वाऽपरं सर्वं कार्यं गुरोः पृछां विना न कार्यं, न करणीयं, तस्मादेषा आपृछना. चतुर्थी सामाचारी प्रतिपृछनानाम्नी जवति. करणीयकार्यस्य गुरोः पृछाया अनंतरं पुनरपि तस्य कार्यस्य करणप्रस्तावे गुरोः पृछना प्रतिपृछना ज्ञेया. ॥ २ ॥

॥ मूलम् ॥—पंचमी छंदणाणामा । इछाकारो य छठीउ ॥ सत्तमो मिछाकारे उ । तहक्कारो य अठमो ॥ ३ ॥ व्याख्या—पंचमी छंदनानाम्नी सामाचारी, अन्नादिकमानीयोदरमेव जरणीयं नास्ति, किंतु यतीनां सर्वेषां निमंत्रणारूपा छंदनोच्यते, तस्यामेव छंदनाया-

मिच्छाकारशब्दः कर्तव्यः. इच्छाकारशब्दस्य कोऽर्थः? इच्छया स्वाभिप्रायेण करणमिच्छाकार इति व्युत्पत्तिः. यदि भवतामिच्छा भवेत्तदा मम निमंत्रणा सफला कर्तव्येति कथनं, इयं षष्ठी सामाचारी. मिथ्याकार इति सप्तमी, मिथ्याकारशब्दस्यार्थं वदति, यदा कुत्रचित्स्खलना स्यात्, तदा तत्र साधुना मिथ्यादुःकृतं मे इति वक्तव्यं. मिथ्याकरणं मिथ्याकारः, मिथ्यादुःकृतदानमित्यर्थः इयं सप्तम्यष्टमी सामाचारी. तथाकारस्तथा करणं गुरूपदेशं प्राप्य 'तहत्ति' तथास्तु इति कथनमियमष्टमीत्यर्थः. ॥ ३ ॥

॥ मूलम् ॥—अब्भुट्ठाणं नवमं । दसमा उवसंपया ॥ एसा दसंगा साहूणं । सामायारी-पवेइया ॥ ४ ॥ व्याख्या—अभ्युत्थानं, अभीत्याभिमुख्येनोत्थानमुद्यमनमुद्यमकरणमभ्युत्थानं. अभ्युत्थानस्थाने निर्युक्तिकृता निमंत्रणाया एवोक्तत्वादगृहीतेऽन्नादौ छंदना, अगृहीते तु निमंत्रणा, इत्यनयोर्भेदः, तदभ्युत्थानं हि गुरुपूजायां, गुरुपूजा च गौरवार्हाणामाचार्यग्लानादीनां यथोचिताहारपानीयादिसंपादनं, अत्राभ्युत्थानं निमंत्रणारूपमेव ग्राह्यं. गुर्वादेशस्य तथास्तु इत्यंगीकरणादनंतरं सर्वकार्ये उद्यमस्य करणमभ्युत्थानमुद्यमनं. इयं नवमी

ज्ञेया. उपसंपद् दशमी सामाचारी. अस्याः कोऽर्थः? साधुरुद्यमवान् भूत्वा आचार्यांतराद-धिकज्ञानादिगुणादिसंपत्तिनिमित्तमाचार्यादीनां पार्श्वेऽवस्थानमुपसंपत्, इति दशमी ज्ञेया. एषा सामाचारी श्रीतीर्थंकरैः प्रकर्षेण वेदिता प्रवेदिताऽधिकं ज्ञाता प्रकाशितेत्यर्थः. कथंभूता सामाचारी? दशांगा, दश अंगानि यस्याः सा दशांगा दशप्रकारेति भावः. ॥ ४ ॥ अथ का का सामाचारी कुत्र कुत्र कर्तव्या? तदाह—

॥ मूलम् ॥—गमणे आवस्सियं कुज्जा । ठाणे कुज्जा निसीहियं ॥ आपुछणा सयं करणे । परकरणे पडिपुछणा ॥ ५ ॥ व्याख्या—गमने स्वस्थानादन्यत्र गमनेऽप्रमत्तत्वेनाऽवश्यकर्तव्यव्यापारे भवा आवश्यिकी, तामावश्यिकीं. यतो हि साधोर्गमनं निःप्रयोजनं नास्ति, यद्यवश्यं किंचित्कार्यं समुत्पन्नं वर्तते, तदैव साधुः स्वस्थानादुत्थितोऽस्तीति भावः. तथा स्थाने स्वाश्रये प्रवेशसमये प्रमादादात्मनो निषेधः, तत्र भवा नैषेधिकी. उपाश्रये प्रविशता साधुना नैषेधिकी कर्तव्या, यतो हि स्वाश्रये आगमनादनंतरं तत्समययोग्यकार्याणामेव करणं, तेष्वेव कार्येषु प्रमादनिषेधः कर्तव्य इति भावः. स्वयमात्मना कार्याणां करणे

गुरोरापृच्छना कर्तव्या, न च गुरौ सति स्वबुध्ध्यैव गुरुमनापृच्छ्य कार्यं कर्तव्यमिति भावः. पररस्य कार्यकरणे गुरोरादेशं प्राप्य यदा कार्यं कर्तुमुद्यतो न भवति, तदा पुनः पृछना प्रतिपृछनोच्यते. ॥ ५ ॥

॥ मूलम् ॥—छंदणा दव्वजाएणं। इछाकारे य सारणे॥ मिछाकारेप्पनिंदाए। तहक्कारो पडिस्सुणे ॥ ६ ॥ व्याख्या—अन्नपानीयरूपद्रव्यैर्यदाऽन्यो यतिर्निमंत्र्यते, तदा छंदनोच्यते. साधूनामाहारं पानीयं दर्शयित्वा, यदि भवतां मनसि विचार आयाति, तदैतदाहारादिकं भवद्भिर्गृह्यतां. यथाहं निस्तरामीति वाक्यकथनं छंदनोच्यते. सारणे स्वस्य परस्य वा कार्यंप्रति योग्यत्वेन प्रवर्तने इछया स्वाभिप्रायेण तत्कार्यकरणमिछाकारः. तत्रात्मनो यथेछाकारेण युष्माकं वांछितं कार्यमहं करोमि. तथा सारणे मम पात्रलेपनादि इछाकारेण यूयं कुरुतेति वक्तव्यमिति भावः. मिथ्याकार आत्मनिंदायां, मयाऽभव्यं कृतमेतादृशमात्मनो निंदावाक्यं मिथ्यादुःकृतदानं मिथ्याकारकथनमुच्यते. गुरोः पार्श्वे वाक्यं श्रुत्वा गुरुंप्रतीदं कथनं, यद्भवद्भिरुक्तं तत्तथैव तथास्त्विति करणं तथाकारः. प्रतिश्रुते गुरुवाक्यांगीकारे तथाकारस्तथास्तुकरणमिति भावः.

॥ मूलम् ॥—अप्भुट्ठाणं गुरुपूया । अत्थणे उवसंपया ॥ एवं दुपंचसंजुत्ता । सामायारी पवेइया ॥ ७ ॥ व्याख्या—गुरूणामाचार्यादीनां पूजायां नयं विनैवातिशयेनाहारपानीयाद्यानीय वैयावृत्त्यविनयसंपादनं तदन्युत्थानमुच्यते. 'अत्थणे' इत्यर्थने ज्ञानाद्यर्थं परस्याचार्यस्य पार्श्वेऽवस्थाय ज्ञानादिगुणार्जनमुपसंपदुच्यते. तस्याचार्यस्य समीपेऽवस्थानाय स्वामिन्! इयंतं कालं नवतां समीपे मया स्थातव्यं, गच्छांतरे आचार्यांतरे ज्ञानाद्यर्थमिति विज्ञप्तिपूर्वकं ज्ञानाद्यन्यसनरूपोपसंपत्सामाचारीति नावः. एवममुना प्रकारेण द्विगुणाः पंच, अर्थाद्दशसंयुक्ता नेदसहिताः सामाचार्यः प्रकर्षेण वेदिताः प्रवेदितास्तीर्थंकरगणधरैः कथिताः.

॥ मूलम् ॥—पुव्विंल्लंमि चउप्नागे । आइच्चंमि समुट्ठिए ॥ नंमयं पडिलेहित्ता । वंदित्ता य तउ गुरुं ॥ ८ ॥ पुच्छिज्जा पंजलिउमो । किं कायव्वो मए इह ॥ इहं निउइउं नंते । वेयावच्चे व सिज्झाए ॥ ए ॥ युग्मं ॥ व्याख्या—अथ पूर्वमौघिकसामाचारीमाहपूर्वस्मिंश्चतुर्थनागे, यदा दिनस्य चत्वारो नागा नवंति, प्रहरप्रहरप्रमिता नवंति, तदा प्रथमो नागः प्रथमप्रहरात्मकः, तत्र प्रथमप्रहरस्य चतुर्थे नागे घटिकाद्वयरूपे, अष्टघटिकात्मकः प्रहरः,

तस्य चतुर्थो नागो घटिकाद्वयात्मकस्तस्मिन्, आदित्ये समुत्थिते सति घटिकाद्वयस्य सूर्ये सति. अथवा पूर्वस्मिन्निति प्रथमे, स्वबुद्ध्या विभागीकृते पूर्वदिक्संबंधिनि आकाशस्य चतुर्थे नागे. यदाऽऽकाशस्य दिनमध्ये चत्वारो नागा बुद्ध्या कल्प्यंते, तन्मध्ये प्रथमे आकाशस्य नागे सूर्ये आगते सति, अर्थात्प्रथमे प्रहरे, यदाऽऽकाशे प्रहरप्रमितसूर्यः समारूढः स्यात्तदेति नावः. अत्र किंचिदूनचतुर्नागे, किंचिदूने प्रहरेऽपि पादोनपोरुष्यामयमर्थो गृह्यते. यथा दशारहितोऽपि पटः पट एवोच्यते. तथात्र पादोनपौरुष्यपि पोरुष्येव गृह्यते. तस्मात्पादोनपोरुष्यां नांमकं पात्राद्युपकरणं प्रतिलेख्य चक्षुपा निरीक्ष्य प्रमार्ज्य. ततोऽनंतरं गुरुं वंदित्वा शिष्यः प्रांजलिपुटः पृच्छेत्, हे गुरो! इहास्मिन् समये मया किं कर्तव्यं? हे नंते! हे पूज्य! अहं वैयावृत्त्ये वाऽथवा स्वाध्याये नियोजितुं युष्मानिः प्रेरयितुं स्वात्मानमिच्छामि वांछामि. ॥ ए ॥

॥ मूलम् ॥—वेयावच्चे निउत्तेणं । कायव्वमगिलायउ ॥ सिज्झाए वा निउत्तेणं । सव्वदुक्खविमोक्खणे ॥ १० ॥ व्याख्या—गुरुणा वैयावृत्त्ये नियुक्तेन प्रेरितेन शिष्येणाऽग्लान्येव वै-

यावृत्यं कर्तव्यं. वाऽथवा स्वाध्याये शास्त्रपठने नियुक्तेन शिष्येण सर्वदुःखविमोक्षणः स्वाध्यायोऽग्लान्यैव कर्तव्य इति भावः. ॥ १० ॥ अथौत्सर्गिकदिवसस्य कर्तव्यमाह—

॥ मूलम् ॥—दिवसस्स चउरो भागे । कुज्जा भिक्खू वियक्खणो ॥ तउ उत्तरगुणे कुज्जा । दिणभागेसु चउसुवि ॥ ११ ॥ व्याख्या—विचक्षणः क्रियासु कुशलो भिक्षुर्दिवसस्य चतुरो भागान् कुर्यात्. ततश्चतुर्भागकरणानंतरं चतुर्ष्वपि दिनभागेषूत्तरगुणान् स्वाध्यायादीन् कुर्यात्. ॥ ११ ॥

॥ मूलम् ॥—पढमं पोरिसिं सज्झायं । बीयं झाणं झियायई ॥ तइयाए भिक्खायरियं । पुणो चउत्थी य सज्झायं ॥ १२ ॥ व्याख्या—प्रथमां पौरुषीमाश्रित्य स्वाध्यायं वाचनादिकं कुर्यात्. द्वितीयां पौरुषीमाश्रित्य ध्यानं मनस्यर्थचिंतनारूपं ध्यानं ध्यायेत कुर्यात्, इह च प्रतिलेखनाकालोऽल्पत्वान्न विवक्षितः, अन्यत्र कालाध्वनोरत्यंतसंयोगे इत्यनेन द्वितीयातृतीयायां पौरुष्यां भिक्षाचर्यामाहाराद्यर्थं गृहस्थगृहे गमनं कुर्यात्. चतुर्थ्यां पौरुष्यां पुनः स्वाध्यायं प्रतिलेखनसथंडिलप्रत्युपेक्षादिकं कुर्यात्. यस्मिन् काले यत्साधोः कर्तुं योग्यं कार्यं,

तत्तदेव कर्तव्यमिति भावः. अवसरे हि सर्वं कार्यं कृतं फलदं स्यादित्यर्थः. ॥ १२ ॥ अथ प्रथमपौरुषीपरिज्ञानार्थं गाथामाह—

॥ मूलम् ॥—आसाढे मासे दुप्पया । पोसे मासे चउप्पया ॥ चित्तासोएसु मासेसु । तिप्पया हवइ पोरिसी ॥१३॥ अंगुलं सत्तरत्तेणं । पक्खेण य दुअंगुलं ॥ वड्ढए हायए वावि । मासेणं चउरंगुलं ॥ १४ ॥ युग्मं ॥ व्याख्या—अयमाम्नायः सूत्रेऽनुक्तोऽपि गुरुकुलवासाद् ज्ञेयः. दक्षिणं कर्णं सूर्यसन्मुखं विधाय जानुमध्ये तर्जन्यंगुलीछायामूर्ध्वीकृत्य पादैर्गणयेत्, आषाढे आषाढ्यां पूर्णिमायां द्विपद्या छायया पौरुषी स्यात्, यदा जानुछाया द्वाभ्यां पादाभ्यां प्रमिता स्यात्तदा प्रहरप्रमाणं दिनं ज्ञेयमिति भावः. एवं पौषीपूर्णिमायां चतुःपद्या पौरुषी स्यात्, चतुर्भिः पादैः प्रहरं दिनं स्यात्. चैत्रीपूर्णिमायामश्विन्यां पूर्णिमायां त्रिपद्या पौरुषी स्यात्, त्रिभिः पादैः प्रहरं दिनं ज्ञेयमिति भावः. शेषमासदिनेषु पौरुष्यानयनविधिमाह—सप्तरात्रेण सप्ताहोरात्रेण सार्धेनांगुलं. एवं पक्षेण द्व्यंगुलं दक्षिणायने कर्कसिंहकन्यातुलावृश्चिकधने संक्रांतिषट्के वर्धते. एवं मकरादिषट्के उत्तरायणे सार्धं सप्ताहोरात्रेणांगुलं, पक्षेण द्व्यंगुलं हीयते, मासेन

चतुरंगुलं. एवं दक्षिणायने वर्धते, उत्तरायणे च हीयते, श्रावणादिमासषट्के वर्धते, माघादिमासषट्के हीयते. पुनर्यदा केषुचिन्मासेषु चतुर्दशदिनैः पक्षः स्यात्, तदा सप्तरात्रेणाप्यंगुलवृद्धिहान्या न कश्चिदपि दोषः. ॥ १४ ॥ अथ चतुर्दशदिनैः पक्षसंजवमाह—

॥ मूलम् ॥—आसाढबहुलपक्खे । जद्दवए कत्तिए य पोसे य ॥ फग्गुणवइसाहेसु य । नायवा उमरत्ताउ ॥ १५ ॥ व्याख्या—एतेषु मासेष्ववमरात्रयो ज्ञेयाः. आषाढे बहुलपक्षे कृष्णपक्षे, बहुलपक्षशब्दस्य जाद्रपदादिषु संबंधः कर्तव्यः. जाद्रपदे कार्तिके पौषे फाल्गुने वैशाखे कृष्णपक्षेऽवमरात्रयो जवंति. अवमा ऊना एकेनाहोरात्रेण हीना इत्यवमरात्रयः, रात्रिपदेनाहोरात्रग्रहणं कर्तव्यं. एवमेतेषु मासेषु दिनचतुर्दशकः कृष्णपक्षः स्यादिति जावः. ॥ १५ ॥ अथ पादोनपौरुषीपरिज्ञानोपायमाह—

॥ मूलम् ॥—जेट्ठामूले आसाढे । सावणे छहिं अंगुलेहिं पडिलेहा ॥ अट्ठहिं बियतियंमी । तइए दस अट्ठहिं चउत्थे ॥ १६ ॥ व्याख्या—ज्येष्ठामूले इति ज्येष्ठानक्षत्रमथ च मूलनक्षत्रं ज्येष्ठमासस्य पूर्णिमायां स्यात्तेन ज्येष्ठामूले ज्येष्ठमासे, तथाऽषाढे श्रावणे च

मासे प्रत्यहं प्रागुक्तपौरुषीमाने षड्भिरंगुलैरधिकैः प्रतिलेखा पादोनपौरुषीप्रतिलेखनाकालः स्यात्. ज्येष्ठादारभ्य प्रथमे मासत्रिके एवं ज्ञेयं. द्वितीये त्रिके भाद्रपदाश्विनकार्तिकलक्षणे मासत्रिके पूर्वोक्तपौरुषीमानेऽष्टभिरंगुलैरधिकैः प्रक्षिप्तैः पादोनपौरुषीकालः स्यात्. एवं तृतीये त्रिके मार्गशीर्षपोषमाघलक्षणे पौरुषीमाने दशभिरंगुलैरधिकैः प्रक्षिप्तैः पादोनपौरुषीकालो ज्ञेयः. तथा चतुर्थे त्रिके फाल्गुनचैत्रवैशाखलक्षणे प्रागुक्तपौरुषीमानेऽष्टभिरंगुलैरधिकैः प्रक्षिप्तैः पादोनपौरुषीकालो भवेत्. ॥ १६ ॥ दिनकृत्यमुक्त्वा रात्रिकृत्यमाह—

॥ मूलम् ॥—रत्तंपि चउरो भाए। भिक्खू कुज्जा वियक्खणो ॥ तओ उत्तरगुणे कुज्जा। राईभागेसु चउसुवि ॥ १७ ॥ पढमे पोरिसि सिज्झायं। बिए झाणं झियायई ॥ तईयाए निद्दमोक्खं तु। चउत्थी भुज्जोवि सिज्झायं ॥ १८ ॥ युग्मं ॥ व्याख्या—रात्रेरपि चतुरो भागान् विचक्षणो भिक्षुः क्रियावान् मुनिः कुर्यात्, ततश्चतुर्भागकरणादनंतरं चतुर्ष्वपि रात्रिभागेषूत्तरगुणान् कुर्याः. ॥ १७ ॥ प्रथमपौरुष्यां स्वाध्यायं कुर्यात्, द्वितीयायामधीतस्य सूत्रार्थस्य स्मरणं मनसा चिंतनं कुर्यात्. तृतीयायां पौरुष्यां निद्राया मोक्षो विधेयः. प्रथमपौरुष्यां द्वि-

२५

दोषकालग्रहणं कृत्वा पश्चात्पौरुष्यां प्रथमायां सूत्रस्वाध्यायं कुर्यात्. तस्मिन्नेव नक्षत्रे गगने आकाशस्य चतुर्थे भागे सावशेषे सति वैरात्रिकं नाम कालं, अपिशब्दात् स्वस्य स्वस्य समये कालं प्रतिलेख्य मुनिः कालग्रहणं कुर्यात्. ततश्चैतावता प्रथमे प्रहरे प्रादोषिकं कालं गृहीत्वा स्वाध्यायः कर्तव्यः, एवमन्येष्वपि ज्ञेयं. ॥ १९ ॥ २० ॥ सामान्येन दिनरात्रिकृत्यमुक्त्वा विशेषतो दिनकृत्यमाह—

॥ मूलम् ॥—पुव्विल्लंमि चउब्भागे । पडिलेहित्ताण भंडगं ॥ गुरुं वंदित्तु सज्झायं । कुज्जा दुक्खविमोक्खणं ॥ २१ ॥ व्याख्या—सूर्योदयाद्दिवसस्य चतुर्थे भागे, सूर्योदयात्प्रथमे प्रहरे, चतुर्थे भागे एतावता प्रथमपौरुष्यां प्रथमघटिकाद्वयमध्ये भांडकं वर्षाकल्पाद्युपधिवस्त्रशय्योपकरणादिकं प्रतिलेख्य गुरुं वंदित्वा स्वाध्यायं कुर्यात्. कथंभूतं स्वाध्यायं? दुःखविमोक्षणं पापनिर्मूलकं. ॥ २१ ॥

॥ मूलम् ॥—पोरिसीए चउब्भागे । वंदित्ताण तओ गुरुं ॥ अपडिक्कमित्ता कालस्स । भायणं पडिलेहए ॥ २२ ॥ व्याख्या—पौरुष्याश्चतुर्थे भागेऽवशेषे सति, पादोनपौरुष्यां जाता-

र्यां सत्यां, ततो गुरून् वंदित्वा भाजनं पात्रं प्रतिलेखयेत्. किं कृत्वा ? कालस्येति कालमप्र-
तिक्रम्य, प्राभातिककालप्रतिक्रमणार्थं कायोत्सर्गमकृत्वा, चतुर्थ्यां पौरुष्यां पुनः स्वाध्यायं क-
रिष्यते, कालप्रतिक्रमणानंतरं स्वाध्यायकरणमयुक्तं, तस्मात्कालमप्रतिक्रम्येत्युक्तं. ॥ २२ ॥
अथ प्रतिलेखनाविधिमाह—
॥ मूलम् ॥—मुहपतिं पडिलेहित्ता । पडिलेहिज्ज गोच्छगं ॥ गोच्छगलाइयंगुलिए । वत्था-
इं पडिलेहए ॥ २३ ॥ व्याख्या—मुखपोतिकां प्रतिलेख्य गोच्छकं झोलिकोपरिसत्कमूर्णामयं
वस्त्रं, तत्प्रतिलेखयेत्. ततोंगुलिलातगोच्छकः सन्, अंगुल्यां लातं गृहीतं गोच्छकं येन सोंगुलि-
लातगोच्छकः, तादृशः सन् वस्त्राणि प्रतिलेखयेत्. झोलिकोपरिरक्षणीयपटलकरूपाणि वस्त्रा-
णि प्रतिलेखयेत्, प्रस्तावात्प्रमार्जयेदित्यर्थः, दृष्ट्यादिकाः पंचविंशतिप्रतिलेखनाः कार्याः.
॥ २३ ॥ अथ पटलकगोच्छके प्रमृज्य पुनर्यत्कुर्यात्तदाह—
॥ मूलम् ॥—उड्ढं थिरं अतुरियं । पुव्वं तावत्थमेव पडिलेहे ॥ तो बिइयं पफोडे । तइयं
च पुणो पमज्जिज्जा ॥ २४ ॥ व्याख्या—पूर्वं तावत्प्रथमत ऊर्ध्वं यथा स्यात्तथा, स्थिरं यथा

स्यात्तथा, अत्वरितं यथा स्यात्तथा वस्त्रमेव प्रतिलेखयेत्. ऊर्ध्वमिति कायत उत्कटिकासनो भूत्वा. ऊर्ध्वं तिर्यग् प्रसारयेत्, भूमावलगयन् वस्त्रं प्रतिलेखयेत्. पुनः स्थिरं दृढग्रहणेन, पुनरत्वरितमनुत्तालतया प्रतिलेखनीयमित्यर्थः. वस्त्रमिति जातित्वादेकवचनं. पूर्वं दृष्ट्वा आरतः परतश्च निरीक्षतेव. ततो 'विइयं' इति द्वितीयवारं हस्तोपरि प्रस्फोटयेत्, हस्तगतान् प्राणिनः प्रमार्जयेत्. पुनस्तृतीयवारं तद्वस्त्रं प्रमार्जयेद्धस्तोपरिप्रस्फोटयेत्. २४. प्रस्फोटनविधिमाह–

॥ मूलम् ॥—अणच्चावियं अवलियं । अणाणुबंधिं अमोसलिं चेव ॥ छप्पुरिमा नव खोडा । पाणीपाणिविसोहणं ॥२५॥ व्याख्या–एवं वस्त्रप्रतिलेखनं कुर्यात्, कीदृशं वस्त्रं ? अनर्तितं, पुनरवलितं मोटनारहितं. वलदानरहितं, पुनरनानुबंधि, नैरंतर्येण युक्तमनुबंधि प्रोच्यते, तस्याऽभावोऽननुबंधि, आंतर्यसहितं. कोऽर्थः ? यथा पूर्वापरप्रस्फोटनज्ञानं स्यात्, तथा प्रस्फोटनं विदध्यादिति भावः. पुनरमोसलमिति, न विद्यते मोसली यत्र तदमोसलि, ऊर्ध्वाधस्तिर्यग् कुड्यादिपरामर्शसहितं यथा न स्यात्तथा वस्त्रं प्रस्फोटयेत् प्रतिलेखयेदित्यर्थः, पुनरिमाः पूर्वमेव क्रियमाणाः षट् प्रस्फोटनामकाः प्रतिलेखनाक्रियाभेदाः कर्तव्याः. प्रथमं

वारद्वयं वस्त्रस्य परावर्तनात् प्रस्फोटनात्रयेण त्रयेण च षट् भवंति. पश्चान्नव खोमाः हस्तोपरि प्रस्फोटनात्मकाः, क्षोटानां त्रिकत्रिककरणान्नव संभवंति. पुनः पाणौ पाणिविशोधनं हस्ते हस्तविशोधनं प्रस्फोटनं विदध्यात्, हस्तं नावाकारं विधायाक्षोटनत्रिकत्रिकोत्तरकालं, एवं नव पूर्वोक्ताः, नव पुनश्च प्रस्फोटनविशेषाः, एवमष्टादशभेदाः, सप्त पूर्वोक्ताः, एवं पंचविंशतिविधाः प्रतिलेखना भवंति. ॥ २५ ॥

॥ मूलम् ॥—आरभडा सम्मद्दा । वज्जेयव्वा य मोसली ॥ तइया पप्फोडणा चउत्थी । विक्खित्ता वेइया छठा ॥ २६ ॥ पसिढलपलंबलोला । एगमोसा अणेगरूवधुणा ॥ कुणइ पमाणपमायं । संकिए गणणोवयं कुज्जा ॥ २७ ॥ युग्मं ॥ व्याख्य—अथ प्रतिलेखनादोषत्यागमाह—आरभटा विधेर्विपरीतकरणं, त्वरितं त्वरितं पृथक् पृथक् नवीनवस्त्रग्रहणं, एषा प्रथमा प्रमादप्रतिलेखना १. संमर्दा वस्त्रांतकोणानां परस्परमेलनं, अथवोपधेरुपरि निषीदनं, एषा द्वितीया प्रमादप्रतिलेखना २. च पुनस्तृतीया मोसल्यपि वार्जितव्या, उपर्यधोभागतिर्यग्प्रदेशसंघट्टना तृतीया प्रतिलेखना सप्रमाददोषा त्याज्या. चतुर्थी प्रस्फोटना, रजसा खरंटि-

तस्य वस्त्रस्याछोटना, सापि वर्जनीया. पंचमी विक्षिप्ता, प्रतिलेखितस्य वस्त्रस्याऽप्रतिलेखितवस्त्रोपरि मोचनं, अथवा दिक्षु च विलोकनं, इयमपि सप्रमादा प्रतिलेखना त्याज्या. षष्टी प्रतिलेखना वेदिकानाम्नी, सापि सप्रमादा त्याज्या. वेदिकायाः पंच भेदाः—ऊर्ध्ववेदिका १, अधोवेदिका २, तिर्यग्वेदिका ३, उभयवेदिका ४. एकवेदिका ५ च. तत्रोर्ध्ववेदिका सा, यस्यामुभयोर्जान्वोरुपरि हस्तयो रक्षणं १. अधोवेदिका सा, यस्यां जान्वोरधः प्रचुरं हस्तयो रक्षणं २. तिर्यग्वेदिका सा, यस्यां तिर्यग् हस्तौ कृत्वा प्रतिलेखनं ३. उभयवेदिका सा, यस्यामुभाभ्यां जानुभ्यां बाह्ये उभयोर्हस्तयो रक्षणं ४. एकवेदिका सा, यस्यामेकं जानु हस्तमध्ये. अपरं जानु बाह्ये रक्ष्यते ५. एते पंचापि वेदिकादोषाः प्रतिलेखनावसरे त्याज्याः. स्त्रीलिंगत्वमत्र रूढिवशात् ज्ञेयं. ॥ २६ ॥ अथ वस्त्रग्रहणे दोषमाह—'पसिढलेत्ति' प्रशिथिलं दृढमग्रहीतं वस्त्रं १. प्रलंबं. विषमत्वग्रहणेन वस्त्रकोणकस्य ग्रहणेनाऽपरकोणानां लंबनं २. लोला यत्र भूमौ वस्त्रस्य मलनं स्यात् ३. एते त्रयोऽपि दोषास्त्याज्या इति योज्यं. एकामर्षा, एकस्मिन् काले उभयोः पार्श्वयोर्वस्त्रस्याकर्षणं ४. स्त्रीत्वं रूढिवशात्. अनेकरूपधुना, अनेकरूपा सं-

ख्यात्रयादधिका धुना कंपना यस्यां साऽनेकरूपधुना. तथा यत्प्रमाणे प्रस्फोटनादिसंख्यानां प्रमादं कुरुते. तथा शंकिते शंकोत्पत्तौ मुखेन तथांगुलिरेखास्पर्शनादिना गणनस्योपयोगं गणनोपयोगं कुर्यात्, तदपि दूषणं त्याज्यं, एतत्प्रतिलेखनादूषणं ज्ञेयं. ॥ २७ ॥ पुनरेनामेव भंगकद्वारेण सदोषां निर्दोषां चाह—

॥ मूलम् ॥—अणूणा इरित्तपडिलेहा । अविवच्चासा तहेव य ॥ पढमं पयं पसत्थं । सेसाणि य अप्पसत्थाणि ॥ २७ ॥ व्याख्या—अनूना ऊना न कर्तव्या १, अतिरिक्ता अधिका न कर्तव्या २, अविव्यत्यासा, विविधो व्यात्यासो यस्यां सा विव्यत्यासा, न विव्यत्यासा अविव्यत्यासा, विपर्यासरहिता, विपरीतत्वेन रहितेत्यर्थः. ३. एतेषां त्रयाणां भेदानामष्टौ भंगा उत्पद्यंते, तेषु भंगेषु प्रथमं पदं प्रशस्तं, प्रथमो भंगः समीचीनः, अन्यूना १, अनतिरिक्ता २, अविपर्यासा ३ इत्येवंरूपं प्रथमभंगरूपपदं प्रशस्तं, निर्दोषत्वाच्छुद्धमित्यर्थः. शेषाणि च सप्तभंगान्यप्रशस्तानि. ॥ २७ ॥ पुनर्दूषणोत्पत्तिकारणमाह—

॥ मूलम् ॥—पडिलेहणं कुणंतो । मिहोकहं कुणइ जणवयकहं वा ॥ देइ व पच्चक्खा-

णं । वाएइ सयं पडिछइ वा ॥ २९ ॥ व्याख्या—प्रतिलेखनां कुर्वन् साधुर्मिथः परस्परं कथां वार्तां चेत्करोति, अथवा जनपदकथां देशकथां करोति, पुनः प्रतिलेखनां कुर्वन् कस्मैचित्प्रत्याख्यानं चेद्ददाति, पुनः प्रतिलेखनां कुर्वन्नपरं साधुं वाचयति वाचनां ददाति, वाऽथवा प्रतिलेखनां कुर्वन् चेत्स्वयमालापादि प्रतीछति गृह्णाति, ॥ २९ ॥

॥ मूलम् ॥—पुढवी आउक्काए । तेऊवाऊवणस्सइतसाणं ॥ पडिलेहणापमत्तो । छण्हंपि विराहओ होइ ॥ ३० ॥ व्याख्या—एतानि पूर्वोक्तानि कार्याणि कुर्वन् प्रतिलेखनायां प्रमत्तः प्रमादकर्ता साधुः षण्णामपि कायानां विराधको भवति. तेषां षट्कायानां नामान्याह—पृथ्वीकायः १ अप्कायः २ तेजस्कायः ३ वायुकायः ४ वनस्पतिकायः ५ त्रसकायश्च ६. एतेषां संमर्दकः स्यात्, तत्कथं विराधको भवति ? कुंभकारादिशालायां स्थितस्तत्र प्रमादवशात्प्रतिलेखनायां जलकुंभादिपातनात्तेन पानीयेन मृत्तिकाग्निवायुकुंथुकादिकास्त्रसाः स्थावराश्च जायंते, तदा षण्णामपि विराधना स्यात्, यदाहार्हन्—जत्थ जलं तत्थ वणं । जत्थ वणं तत्थ सासओ अग्गी ॥ तेऊवाऊसहिया । एयं छण्हंपि सह जोओ ॥१॥ इति वचनात्. ॥ ३०॥

॥ मूलम् ॥—पुढवी आउक्काए । तेऊवाऊवणस्सइतसाणं ॥ पडिलेहण आउत्तो । छ-एहंपि आराहओ होइ ॥ ३१ ॥ व्याख्या—प्रतिलेखनायामायुक्तः सावधानोऽप्रमादी साधुः पृथिव्यादीनां षणामपि कायानामाराधको भवति. ॥ ३१ ॥ इत्यनेन प्रथमपौरुष्याः कर्तव्यमुक्तं, द्वितीयपौरुष्याः कर्तव्यं स्वाध्यायादिकं पूर्वमुक्तमेवाभूत्. अथ तृतीयपौरुष्याः कृत्यमाह—

॥ मूलम् ॥—तइयाए पोरिसीए । भत्तं पाणं गवेसए ॥ छण्हमन्नतरागम्मि । कारणंमि समुट्ठिए ॥ ३२ ॥ व्याख्या—तृतीयायां पौरुष्यां भक्तपानं गवेषयेत्, अयमुत्सर्गिको नयः, स्थविरकल्पिकानां हि यथाकालं भक्तपानगवेषणमुक्तं. क सति? षणां कारणानां मध्येऽन्यतरस्मिन्नेकस्मिन् कारणे समुत्थिते सति. आहारग्रहणस्य षट् कारणानि संति, तैः कारणैराहारं कर्तव्यं. ॥ ३२ ॥ तानि षट् कारणान्याह—

॥ मूलम् ॥—वेयणवेयावच्चे । इरियट्ठाए य संयमट्ठाए ॥ तह पाणवत्तियाए । छठं पुण धम्मचिंताए ॥ ३३ ॥ व्याख्या—वेदनायै क्षुत्पिपासादिरोगादिवेदनाया उपशमनाय, वेदना दंतुं न शक्यते, प्राकृतत्वाद्विभक्तिलोपः, इति प्रथमं कारणं १. तथा वैयावृत्त्याय वै-

याहृत्यर्थं, यतो हि क्षुत्पिपासया पीडितो वैयावृत्यकृत्साधुराचार्यादीनां वैयावृत्यं कर्तुं न शक्नोति, एतद् द्वितीयं कारणं. २. तथा 'इरियट्ठाए' ईर्यार्थायेर्यासमित्यर्थं, क्षुधातृषार्दितस्य निर्जरार्थिनोऽपि साधोश्चक्षुरिंद्रियबलहीनस्य लघुजीवादिकमपश्यत ईर्यायाः पालनं न स्यात्, तदर्थमाहारकरणं तृतीयं कारणं. ३. तथा पुनः संयमार्थाय चारित्रस्य क्रियानुष्ठानातापनावश्यकाद्याराधनार्थं, यथा शकटांगं घृतादिना संस्कृतमेव चलति, अन्यथा न चलति, एतच्चतुर्थं कारणं ४. तथा पुनः प्राणप्रत्ययाय, प्राणानां प्रत्ययो जीवितावधिधारणं प्राणप्रत्ययस्तस्मै प्राणप्रत्ययाय प्राणधारणार्थं, जीवितावधौ संपूर्णे जाते सत्येव प्राणमोचनं कर्तव्यं, अन्यथात्महत्यादोषः स्यात्, तस्माज्जीवितव्यधारणार्थं, इदं पंचमं कारणं ५. षष्ठं पुनरिदं, यदुत धर्मचिंतायै धर्मध्यानश्रुताभ्यासरूपायै भक्तपानं गवेषयेत्, क्षुत्तृषापीडितस्यार्त्तध्यानयुक्तस्य धर्मध्यानश्रुताभ्यासो न स्यात्, आगतमपि श्रुतं विस्मरतीति षष्ठं कारणं ६. ॥३३॥

॥ मूलम् ॥—निग्गंथो धिइमंतो। निग्गंथीवि न करिज्ज छहिं चेव ॥ ठाणेहिं उ इमेहिं। अणइक्कमणा य से होइ ॥ ३४ ॥ व्याख्या—निर्ग्रंथः साधुर्धृतिमान् धैर्यवान्, तथा

निर्ग्रंथ्यपि साध्व्यपि षड्भिर्वक्ष्यमाणैः कारणैर्भक्तपानगवेषणां न कुर्यात्, यत एभिः स्थानैः 'से' इति तस्य साधोः साध्व्या वा आहारमकुर्वतोऽनतिक्रमणं भवति, संयमयोगानामुल्लंघनं न भवति. अन्यथाऽहारं त्यजतः साधोः संयमयोगस्यातिक्रमणमुल्लंघनं स्यादिति भावः. ॥ ३४ ॥ तानि षट् कारणानि दर्शयति—

॥ मूलम् ॥—आयंके उवसग्गे । तितिक्खया बंभचेरगुत्तीसु ॥ पाणिदयातवहेऊ । सरीरवुच्छेयणट्ठाए ॥ ३५ ॥ व्याख्या—आतंके ज्वरादिरोगे १, उपसर्गे देवादिकृतस्योपसर्गस्यागमने २, तथा ब्रह्मचर्यगुप्तिषु तितिक्षया हेतुभूतया यद्याहारं क्रियेत, तदेंद्रियाणि बलवंति स्युः, तदा ब्रह्मगुप्तिरक्षापि दुष्करा, तस्माद्ब्रह्मगुप्तितितिक्षयाऽहारनिषेधः, एतत् तृतीयं कारणं ३. तथा प्राणिदयाहेतोः, वर्षादौ निपतदप्कायादिजीवदयार्थं दर्दुरिकादिरक्षायै ४. तपसो हेतोश्चतुर्थषष्ठादिवर्गतपोघनतपसोः करणहेतोर्वा पंचमं कारणं ५. पुनः शरीरव्यवच्छेदार्थाय, उचितकाले संलेखनामनशनं कृत्वा शरीरत्यागायाहारं साधुर्न गवेषयेदिति संबंधः, इति षष्ठं कारणं ६. ॥ ३५ ॥ अथ तद्गवेषणायां विधिं क्षेत्रावधिं चाह—

॥ मूलम् ॥—अवसेसं नंमगं गिझ । चक्खुसा पमिलेहए ॥ परमद्धजोयणाउ । विहारं विहरए मुणी ॥ ३६ ॥ व्याख्या—साधुरवशेषं समस्तं नांमकमुपकरणं गृहीत्वा चक्षुषा प्रतिलेखयेत्, ततः साधुः परमुत्कृष्टमर्धयोजनादर्धयोजनमाश्रित्य विहारं विहरेत्, अधिकं व्रजतो हि साधोः क्षेत्रातीत आहारदोषः स्यात्, तस्माद्योजनार्धं क्रोशद्वयमाहारार्थं विहारं विहृत्याहारमानीयोपाश्रये गुरोरग्रे आलोच्य विधिपूर्वकमाहारं कृत्वा यत्कर्तव्यं तदाह—॥३६॥

॥ मूलम् ॥—चउत्थीए पोरिसीए । निक्खिवित्ताण भायणं ॥ सज्झायं तउ कुज्जा । सव्वनावविनावणं ॥ ३७ ॥ व्याख्या—ततश्चतुर्थ्यां पौरुष्यां नाजनं निक्षिप्य झोलिकादौ बध्वा ततः स्वाध्यायं कुर्यात्. कीदृशं स्वाध्यायं? सर्वनावविनावनं सर्वजीवादिपदार्थप्रकाशकं.

॥ मूलम् ॥—पोरिसीए चउब्भाए । वंदित्ताण तउ गुरुं ॥ पमिक्कमित्ता कालस्स । सिज्जं तु पमिलेहए ॥ ३८ ॥ व्याख्या—मुनिः पौरुष्या अर्थाच्चतुर्थ्याः पौरुष्याश्चतुर्भागे शेषे गुरुं वंदित्वा, ततः स्वाध्यायादनंतरं कालस्य कालं प्रतिक्रम्य, तु पुनः शय्यां वसतिं प्रतिलेखयेत्. ॥ ३८ ॥

॥ मूलम् ॥—पासवणुच्चारभूमिं च । पडिलेहिज्ज जयं जई ॥ काउस्सग्गं तउ कुज्जा । सव्वदुक्खविमोक्खणं ॥ ३९ ॥ व्याख्या—ततः पश्चाद्यतिः साधुर्यत्नावान् सन् यत्नया प्रश्रवणोच्चारभूमिं प्रत्येकं द्वादशस्थंडिलात्मकां, चशब्दात्कालभूमिं च स्थंडिलात्मकां प्रतिलेखयेत्, लघुनीतिस्थाने द्वादशमंडलानि, बृहन्नीतिस्थाने च द्वादशमंडलानि, कालग्रहणभूमिस्थाने मंडलानि त्रीणि, एवं सप्तविंशतिमंडलानि कुर्यात्. दिनकृत्यमुक्त्वोत्तरार्धेन रात्रिकृत्यमारभ्यते—ततो भूमिप्रतिलेखनानंतरं कायोत्सर्गं कुर्यात्, कीदृशं कायोत्सर्गं? सर्वदुःखविमोक्षणं, कायोत्सर्गेण महती कर्मनिर्जरा, यदुक्तं—काउस्सग्गे जह सु–ठियस्स भज्जंति अंगुवंगाइं ॥ इह भज्जंति सुविहिया । अट्ठविहं कम्मसंघायं ॥ १ ॥ कायोत्सर्गस्यैहिकामुष्मिकफलं स्यात्, ऐहिकं यशोदेवाकर्षणादिकं, आमुष्मिकं च स्वर्गापवर्गादिकसुखप्राप्तिरूपं. अत्र सुदर्शनकथा. ॥ ३९ ॥

॥ मूलम् ॥—देवसियं च अइयारं । चिंतिज्ज अणुपुव्वसो ॥ नाणे य दंसणे चेव । चरित्तंमि तहेव य ॥ ४० ॥ व्याख्या—कायोत्सर्गं च कृत्वा, च पुनर्दैवसिकमतीचारं ' अणु-

पुव्वसो ' अनुक्रमेण ज्ञाने दर्शने चारित्रे, तथैवानुक्रमेणैव चिंतयेत्. ॥ ४० ॥

॥ मूलम् ॥—पारियकाउस्सग्गो । वंदित्ताण तओ गुरुं ॥ देवसियं अइयारं । आलोइज्ज जहक्कमं ॥ ४१ ॥ व्याख्या—ततः पालितकायोत्सर्गः सन् साधुर्गुरुं द्वादशावर्त्तवंदनेन वंदित्वा, तु पुनर्यथाक्रमं दैवसिकमतीचारमालोचयेत्. ॥ ४१ ॥

॥ मूलम् ॥—पडिक्कमित्ता निस्सल्लो । वंदित्ताण तओ गुरुं ॥ काउस्सग्गं तओ कुज्जा । सव्वदुक्खविमोक्खणं ॥ ४२ ॥ व्याख्या—ततः प्रतिक्रम्याऽपराधस्थानेभ्यः प्रतिकूलं निवृत्य, प्रतिक्रमणसूत्रमुक्त्वा निःशल्यः सन् शल्यरहितो भूत्वा, ततः पश्चाद्गुरुं द्वादशावर्तवंदनेन वंदित्वा, श्रीगुरुं च क्षमयित्वा ' आयरियउवज्झाए ' इति गाथात्रयं पठित्वा, ततः पश्चात्कायोत्सर्गं चारित्रदर्शनश्रुतज्ञानशुद्ध्यर्थं कुर्यात्, जातित्वादेकवचनं. कीदृशं कायोत्सर्गं ? सर्वदुःखविमोक्षणं. ॥ ४२ ॥

॥ मूलम् ॥—पारियकाउस्सग्गो । वंदित्ताण तओ गुरुं ॥ थुइमंगलं च काउं । कालं संपडिलेहए ॥ ४३ ॥ व्याख्या—पश्चात्पालितकायोत्सर्गो नमस्कारपूर्वं ' लोग्गस्सुज्जोयगरे '

इत्यनेन पारयित्वा, ततोऽनंतरं द्वादशावर्त्तवंदनेन गुरुं वंदित्वा ' इच्छामो अणुसिट्ठियं ' इत्युक्त्वा, स्थित्वा पश्चात्स्तुतिमंगलं च स्तुतित्रयात्मकं वर्धमानाक्षरस्तुतित्रयपाठरूपं मंगलं कृत्वा कालं प्रत्युपेक्षते प्रतिजागर्ति, तदवसरसत्कं कालं कालग्रहणं साधुर्गृह्णातीत्यर्थः. ॥४३॥ ततोऽनंतरं यत्करणीयं तदाह—

॥ मूलम् ॥—पढमं पोरिसि सिझायं । बीइए झाणं झियायई ॥ तईयाए निद्दमोरकं तु । सज्जायं तु चउत्थीए ॥ ४४ ॥ व्याख्या—प्रथमपौरुष्यां स्वाध्यायं कुर्यादिति शेषः. द्वितीयायां ध्यानं पिंडस्थादिकं धर्मध्यानादिकं चाधीतसूत्रार्थं ध्यायेच्चिंतयेत्. तृतीयायां निद्राया मोक्षो निद्रामुत्कलता विधेया, चतुर्थ्यां पुनरपि स्वाध्यायं कुर्यात्. द्वितीयवारकथनाच्छिष्याय गुरुभिरुपदेशो दातव्यः, न तु पाठने प्रयासश्चिंतनीय इति ज्ञेयं. ॥ ४४ ॥ चतुर्थ्याः पौरुष्याः कृत्यमाह—

॥ मूलम् ॥—पोरिसीए चउत्थीए । कालं तु पडिलेहए ॥ सझायं तु तओ कुज्जा । अबोहं तु असंयए ॥ ४५ ॥ व्याख्या—चतुर्थ्यां पौरुष्यां पुनः कालं प्रतिलेख्य प्रत्युपेक्ष्य प्र-

तिजागर्यं, प्राग्वद्गृहीत्वा ततः स्वाध्यायं कुर्यात्, परं किं कुर्वन् स्वाध्यायं कुर्यात्? असंयतीन् गृहस्थानबोधयन्नजागरयन्, शनैः शनैः पठन्नित्यर्थः. उच्चैः पठनश्रवणाद्गृहस्थाः सावद्यव्यापारं कुर्वंति, तदा साधुरप्यारंभक्रियाभाक् स्यादिति भावः. ॥ ४५ ॥

॥ मूलम् ॥—पोरिसीए चउब्भाए । वंदिऊण तओ गुरुं ॥ पडिक्कमित्ता कालस्स । कालं तु पडिलेहए ॥ ४६ ॥ व्याख्या—चतुर्थ्याः पौरुष्याश्चतुर्थभागेऽवशेषे सति घटिकाद्वये रजन्या अवशिष्टे सति, तदा हि कालवेलासंभवान्न कालस्य ग्रहणं, तस्मात्ततो गुरुं वंदित्वा द्वादशावर्त्तवंदनं दत्वा कालस्येति तत्समययोग्यं कालं प्रतिक्रम्य तत्संबंधिनीं क्रियां कृत्वा, तु पुनः कालं प्राभातिकं कालं प्रतिलेखयेत्, प्राभातिकालग्रहणं गृह्णीयात्, इत्यनेनावश्यकवेलां ज्ञात्वाऽवश्यकानि कुर्यात्. ॥ ४६ ॥

॥ मूलम् —आगए कायवुस्सग्गे । सव्वदुक्खविमोक्खणे ॥ काउस्सग्गं तओ कुज्जा । सव्वदुक्खविमोक्खणं ॥ ४७ ॥ व्याख्या—रात्रिप्रतिक्रमणस्थापनानंतरं कायव्युत्सर्गे आगते सति कायोत्सर्गवेलायां प्राप्तायां कायोत्सर्गसमये प्रमादो न विधेयः. कथंभूते समये? सर्वदुःख-

विमोक्षणे. ततः कायोत्सर्गं कुर्यात्, कीदृशं कायोत्सर्गं? सर्वदुःखविमोक्षणं, अत्र पुनः सर्वदुःखविमोक्षणमिति विशेषणेन कायोत्सर्गस्यात्यंतकर्मनिर्जराहेतुत्वं प्रतिपादितं. तथेह कायोत्सर्गग्रहणेन चारित्रदर्शनज्ञानशुद्ध्यर्थं कायोत्सर्गत्रयं ग्राह्यं. तत्र तृतीयकायोत्सर्गे रात्रिकोऽतिचारश्चिंतनीयः. ॥ ४७ ॥ एतदेवाग्रेतनगाथायामाह—

॥ मूलम् ॥—राईयं च अईयारं । चिंतिज्ज अणुपव्वसो ॥ नाणंमि दंसणंमि । चरित्तंमि तवंमि य ॥ ४८ ॥ व्याख्या—रात्रौ भवं रात्रिकं, च पादपूरणे, अतीचारं चिंतयेत्, आनुपूर्व्याऽनुक्रमेण ज्ञाने दर्शने चारित्रे तपसि, चशब्दाद्वीर्ये. शेषकायोत्सर्गेषु चतुर्विंशतिस्तवचिंत्यतया प्रतीतः साधारणश्चेति नोक्तः. ॥ ४८ ॥ ततश्च—

॥ मूलम् ॥—पारियकाउस्सग्गो । वंदित्ताण तओ गुरुं ॥ राईयं तु अईयारं । आलोएज्ज जहाक्कमं ॥ ४९ ॥ पडिक्कमित्तु निसल्लो । वंदित्ताण तओ गुरुं ॥ काउसग्गं तओ कुज्जा । सव्वदुक्खविमोक्खणं ॥ ५० ॥ युग्मं ॥ व्याख्या—ततः पारितकायोत्सर्गः सन् साधुर्गुरुं वंदित्वा द्वादशावर्त्तवंदनं दत्वा रात्रिकमतीचारमालोचयेत्, यथाक्रमं यथा यथाऽनुक्रमेणातीचारा-

वस्यांते वर्धमानस्तुतित्रयरूपं पाठं कुर्यात्. तदनु चैत्यसद्भावे तद्वंदनं कार्यं शक्रस्तवपाठेन, पश्चात्सर्वा क्रिया यथायोग्यं कर्तव्या. ॥ ५२ ॥ अथाध्ययनोपसंहारमाह—

॥ मूलम् ॥—एसा सामाचारी । समासेण वियाहिया ॥ जं चरित्ता बहुजीवा । तिस्रा संसारसागरं तिबेमि ॥ ५३ ॥ व्याख्या—एषा भगवदुक्ता दशविधसामाचारी समासेन संक्षेपेण 'वियाहिया' व्याख्याता. याः सामाचारीश्चरित्वांगीकृत्य बहवो जीवाः संसारसागरं तीर्णाः, इत्यहं ब्रवीमि, इति सुधर्मास्वामी जंबूस्वामिनंप्रत्याह ॥ ५३ ॥ इति सामाचार्याख्यं षड्विंशतितममध्ययनं संपूर्णं. २६. इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां सामाचार्याख्यं षड्विंशतितममध्ययनं संपूर्णं ॥ श्रीरस्तु ॥

———

णि लग्नानि, तथा तथाऽऽलोचयेदित्यर्थः, आलोचनापाठं पठेत्. ॥ ४ए ॥ ततः पश्चात्पदसंपदासहितं प्रतिक्रम्य प्रतिक्रमणसूत्रमुक्त्वा निःशल्यो नूत्वा, ततः पुनर्गुरुं द्वादशावर्त्तवंदनेन वंदित्वा 'आयरियउवज्झाय' इति गाथात्रयं पठित्वा, ततः कायोत्सर्गं कुर्यात्. कथंभूतं कायोत्सर्गं? सर्वदुःखविमोक्षणं ॥ ५० ॥ कायोत्सर्गे स्थितः किं चिंतयेदित्याह—

॥ मूलम् ॥—किं तवं पडिवज्जामि । एवं तत्थ विचिंतए ॥ काउसग्गं तु पारित्ता । वंदई य तउ गुरुं ॥५१॥ व्याख्या—अथाहं किं तपो नमस्कारसहितादियावत्षएमासोपवासादिकं प्रतिपद्ये? एवं तत्र कायोत्सर्गे चिंतयेत्. नगवान् श्रीमहावीरः षएमासं यावन्निरशनो विहृतवान्. तत्किमहमपि स्थातुं समर्थो नवामि? न वेति? एवं पंचमासाद्यपि यावन्नमस्कारसहितं तावत्परिज्ञावयेत्. ततः कायोत्सर्गं पारयित्वा गुरुं द्वादशावर्त्तवंदनेन वंदयेत्.

॥ मूलम् ॥—पारियकाउसग्गो । वंदित्ताण तउ गुरुं ॥ तवं संपडिवज्जित्ता । करिज्ज सिद्धाण संथवं ॥५२॥ व्याख्या—ततः पारितकायोत्सर्गः सन् गुरुं वंदित्वा, द्वादशावर्त्तवंदनेन वंदित्वा तपः संप्रतिपद्य यथाशक्त्युपवासादिकमंगीकृत्य सिद्धानां संस्तवं दैवसिकप्रतिक्रमण-

## ॥ अथ सप्तविंशमध्ययनं प्रारभ्यते ॥

सामाचार्यशठेन पाल्यते, तेन शठस्य विपक्षभूताया अशठतायाः कथनेनाऽशठत्वज्ञापनार्थं खलुंकाख्यमध्ययनं कथ्यते–

॥ मूलम् ॥—थेरे गणहरे गग्गे । मुणी आसि विसारए ॥ आइन्ने गणिभावंमि । समाहिं पडिसंधए ॥ १ ॥ व्याख्या—गार्ग्यो नाम गणधरो मुनिः स्थविर आसीत्, गणस्य गच्छस्य धारकत्वाद्गणधरः, धर्मे स्थिरीकरणत्वात्स्थविरः, गर्गगोत्रोत्पन्नत्वाद्गार्ग्यः, मनुते सर्वसावद्यविरमणस्य प्रतिज्ञां कुरुते इति मुनिः. पुनः कीदृशो गार्ग्यः? विशारदः सर्वशास्त्रनिपुणः. पुनः कीदृशः सः? आकीर्ण आचार्यगुणैर्व्याप्तः. पुनः कीदृशः सः? गणिभावे आचार्यत्वे स्थितः. पुनः स गार्ग्यो गणधरः समाधिं धत्ते, कुशिष्यैस्त्रोटितं ज्ञानदर्शनचारित्राणां समाधिं प्रतिसंधयतीत्यर्थः. ॥ १ ॥

॥ मूलम् ॥—वहणे वहमाणस्स । कंतारं अइवत्तइ ॥ जोए य वहमाणस्स । संसारे

अइवत्तई ॥ २ ॥ व्याख्या—यथा यथा वाहने शकटादौ विनीततुरगवृषन्नादीन् 'वहमाणस्स' इत्युह्यमानस्य सारथ्यादेः कांतारमरण्यमतिवर्तते संपूर्णं नवति, तथा योगे संयमव्यापारे सुशिष्यान् वाहयत आचार्यस्य संसारोऽतिवर्तते, शिष्याणां विनीतत्वं दृष्ट्वा स्वयं समाधिमान् जायते, शिष्यास्तु विनीतत्वेन स्वयं संसारमुल्लंघयंते एव. एवमुन्नयोर्विनीतशिष्यसदाचार्ययो- र्योगः संबंधः संसारछेदकर इति नावः. ॥ २ ॥

॥ मूलम् ॥—खलुंके जो उ जोएइ । विहम्माणो किलिस्सई ॥ असमाहिं च वेएई । तोत्तउ य स नज्जई ॥ ३ ॥ व्याख्या—यस्तु सारथिः खलुंकान् गलिवृषन्नान् योजयति, र- थे स्थापयति, स सारथिः 'विहम्माणो' इति विशेषेण तान् खलुंकान् घ्नन् प्राजनकेन ता- डयन् संक्लिश्यते, संक्लेशं प्राप्नोति. अत एवाऽसमाधिमसातां वेदयते प्राप्नोति. च पुनस्तस्य खलुंकवृषन्नयोजयितुः पुरुषस्य तोत्रकः प्राजनको नज्यते. खलुंकानामतिकुट्टनात्प्राजनको न- ज्यते इति नावः. ॥ ३ ॥

॥ मूलम् ॥—एगं डसइ पुछंमि । एगं विंधइ नि‌क्खणं ॥ एगं नंजइ समिलं । एगो उ-

प्पहपट्ठिते ॥ ४ ॥ व्याख्या—पुनः खलुंकवृषभस्वामी रथारोहको रुष्टः सन् तं खलुंकं पुच्छे दंतैर्दशति, एकः स एवैकं गलिवृषभमभीक्ष्णं वारंवारं विध्यति, प्राजनस्याऽरया व्यथति. एको गलिवृषभः समिलां युगकीलिकां भनक्ति, एकः पुनर्गलिवृषभ उत्पथमार्गे प्रस्थितो भवति.

॥ मूलम् ॥—एगो पडइ पासेणं । निवेसइ निवज्जई ॥ उक्कुद्दइ उप्फडई । सढे बालगवीं वए ॥ ५ ॥ व्याख्या—एको गलिस्ताडितः सन् पार्श्वेन वामदक्षिणभागेन पतति, अन्यः कश्चिद्भूमौ निवशते नीचैस्तिष्ठति. एकः कश्चिन्निपद्यते स्वपिति, प्रलंबो भूत्वा शेते, एक उत्कूर्दत्युच्छलति, च दर्दुरवच्चतुःफालो भवति. अन्यः शठो भवति, धूर्तत्वमाचरति. अन्यः कश्चिद्गलिर्बलीवर्दो बालगवीं लघिष्टां धेनुं दृष्ट्वा तामनुव्रजति. ॥ ५ ॥

॥ मूलम् ॥—माई मुद्धेण पडई । कुद्धे गच्छइ पडिपहं ॥ मयलक्खेण चिट्ठइ । वेगेण य पहावई ॥ ६ ॥ व्याख्या—एको मायी मायावान् भूत्वा मस्तकं भूमौ निक्षिप्य पतति. एकः कश्चित् क्रुद्धः सन् प्रतिपथं, प्रतिकूलः पंथा प्रतिपथस्तं प्रतिपथं, अग्रेतनमार्गं त्यक्त्वा पश्चान्मार्गे गच्छति. एकः कश्चिन्मृतलक्ष्येण तिष्ठति, मृतस्य लक्षणं कृत्वा तिष्ठति, निश्चेष्टो

नूत्वा पततीत्यर्थः. यदा च पुनः कथंचित्सज्जीकृत्योत्थापितस्तदा वेगेन प्रधावति, अनया रीत्या धावति, यथा पश्चात्स्वामी ग्रहीतुं न शक्नोति. ॥ ६ ॥

॥ मूलम् ॥—ग्निालो बिंदई सालं । दुदंते नंजई जुगं ॥ सेवि य सुस्सुयाइत्ता । उज्जहित्ता पलायई ॥ ७ ॥ व्याख्या—एकश्छिन्नालो दुष्टजातीयः कश्चित् 'सल्लं' इति रश्मिं बंधनरज्जुं बिनत्ति बलात्त्रोटयति, अन्यो दुर्दांतो दमितुमशक्यो युगं जूसरं ननक्ति. 'सेवि' इति स च दुष्टो बलीबर्दः सुतरामतिशयेन सूत्कृत्यात्यंतं फूत्कारं कृत्वा, उत्प्राबल्येन 'उज्जहित्ता' इति स्वामिनं शकटं वोन्मार्गे लात्वा कुत्रचिद्विषमप्रदेशे मुक्त्वा स्वयं पलायते.

॥ मूलम् ॥—खलुंका जारिसा जोज्जा । दुस्सीसावि हु तारिसा ॥ जोइया धम्मजाणंमि । नज्जंति धिइदुब्बला ॥ ८ ॥ व्याख्या—गार्ग्यनामाचार्य एवं वदति, नो मुनयः! यथा लोके खलुंका अलोक्तलक्षणा गलिवृषना योज्या रथस्याग्रे धुरि योत्कृताः संतो यादृशा नवंति, रथारोहकस्याऽसमाधिक्लेशकरा नवंति, हु इति निश्चयेनाचार्यस्यापि दुःशिष्या दुष्टाः शिष्या विनयरहिताः कुशिष्यास्तादृशा नवंति. धर्मयाने मुक्तिनगरप्रापकत्वेन संयमरथे योजिता

व्यापारिना जज्यंते, संयमक्रियानुष्ठानात् स्खलंते, सम्यग् न प्रवर्तते इत्यर्थः. कीदृशास्ते? धृतिदुर्बला धैर्येण दुर्बला निर्बलचित्ताः, धर्मेऽस्थिरा इत्यर्थः. ॥ ८ ॥

॥ मूलम्॥ —इड्डिगारवए एगे । एगेत्थ रसगारवे ॥ सायागारविए एगे । एगे सुचिरकोहणे ॥ ए ॥ भिक्खालसिए एगे । एगे उमाणजीरुए ॥ थद्धे एगं च अणुसासम्मी । हेऊहिं कारणाहि य ॥ १० ॥ युग्मं ॥ व्याख्या—एकः कश्चिद् ऋद्धिगौरविकः, ऋद्ध्या गौरवमस्यास्तीति ऋद्धिगौरविकः, मम श्राद्धा आढ्याः, मम श्राद्धा वश्याः, ममोपकरणं वस्त्रपात्रादि समीचीनं, इत्यात्मानं बहुमानरूपं मनुते स ऋद्धिगौरवक उच्यते. एतादृशो गुर्वादेशे न प्रवर्तते. एकः कश्चित्पुनरत्र रसगौरविक आहारादिषु रसलोलुपः, एतादृशो हि ग्लानाद्याहारदानतपसोर्न प्रवर्तते. एकः कश्चित्कुशिष्यः सातागौरविको जवति, सातागौरवे जवः सातागौरविकः. एतादृशो हि विहारं कर्तु न शक्नोति. एकः कश्चित्कुशिष्यः सुचिरक्रोधनश्चिरं क्रोधकरणशीलः, एतादृशो हि तपःक्रियानुष्ठानकरणे योग्यो न भवति. ॥ ए ॥ एकः कश्चिद्भिक्षालसिको भिक्षायामालस्ययुक्तः, तादृशो हि गोचरीपरीषहसहनयोग्यो न जवति.

एकः कश्चिदपमानभीरुर्भवति, अपमानाद्भीरुरपमानभीरुः, एतादृशो हि यस्य तस्य गृहे न प्रविशति. एकः कश्चित् स्तब्धोऽहंकारी भवति, एतादृशो निजकुग्रहाद्विनयं कर्तुं न शक्नोति. एकं कुशिष्यंप्रति शिक्षादाने आचार्य एवं विचारयति, हेतुभिः कारणैरहमेनं कुशिष्यमनुशास्मि, कथमित्यध्याहारः, कथं शिक्षयिष्यामि? आचार्य इति चिंतापरो भवतीति भावः. ॥ १० ॥

॥ मूलम् ॥—सोवि अंतरभासिल्लो । दोसमेव पकुव्वई ॥ आयरियाणं जं वयणं । पडिकूलेइ अभिक्खणं ॥ ११ ॥ व्याख्या—सोऽपि कुशिष्य आचार्येण शिक्षितः सन्नंतरभाषावान्, गुरुवचनांतराले एव स्वाभिमतभाषकः. पुनर्दोषमेवापराधमेव प्रकरोति, आचार्यस्य शिक्षायां दोषमेव प्रकाशयति, अपगुणग्राही भवतीत्यर्थः. पुनः स कुशिष्य आचार्याणां यद्वचनं तद्वचनं वारंवारं प्रतिकूलयति, सन्मुखं जल्पति. यदाचार्याः किंचिच्छिक्षावचनं वदंति, तदा सोऽभीक्ष्णं मुहुरेवं वदति, किं मां यूयं वदत? यूयमेव किं न कुरुथेत्यर्थः. ॥ ११ ॥

॥ मूलम् ॥—न सा ममं वियाणाइ । नवि सा मज्झ दाहिई ॥ निग्गया होहित्ति मन्ने ।

साहु अन्नोत्थ वच्चउ ॥ १२ ॥ व्याख्या—तदाऽऽचार्यः कंचित्कुशिष्यंप्रति वदति, जो शिष्य! अमुकस्य गृहस्थस्य गृहात्मह्यन्माहाराद्यानीय देहि? तदा स कुशिष्यो वदति, सा श्राद्धी 'ममं' इति मां न विजानाति, मां नोपलक्ष्यति, सा श्राद्धी मह्यमाहारादिकं न दास्यति. अथवा स गुरुंप्रत्येवं वदति, हे गुरो! अहमेवं मन्ये सा श्राद्धी निर्गता जविष्यति, स्वगृहाद्परत्रेदानीं गता जविष्यति. अथवान्यः साधुरस्मिन् कार्ये व्रजतु, अहं न व्रजामीत्यर्थः १२.

॥ मूलम् ॥—पेसिया पलिउंचंति । पलियंति समंतउ ॥ रायवेट्ठिव मन्नंता । करिंति जिउडिं मुहे ॥ १३ ॥ व्याख्या—पुनस्ते कुशिष्या आचार्येण कुत्रचिद्गृहस्थगृहे आहारार्थं, गृहस्थस्याकारणाय वा प्रेपिताः संतः पलिउंचिंति अपह्नुवंत्यपलपंति. वयं जवद्भिः कुत्र मुक्ताः? अस्माकं स न स्मरति, अथवा गृहस्थेन दत्तं मिष्टाहारादिकं गोपयंति, अथवोक्तं कार्यं न निष्पादयंति. अनुत्पादितमप्युत्पादितमिति वदंति. उत्पादितं चाऽनुत्पादितं वदंति. अथवा यत्र जवद्भिर्वयं प्रेपिताः, स गृही न कश्चिद् दृष्टः, इति पृष्टाः संतोऽपलपंति. पुनस्ते कुशिष्याः समंततः सर्वासु दिक्षु परियंति पर्यटंति, गुरुपार्श्वे कदाचिन्नायांति, नोपवि-

शंति. कदाचिद्वयं गुरूणां पार्श्वे स्थास्यामस्तदास्माकं किंचित्कार्यं कथयिष्यंति, इति मत्वान्यत्र भ्रमंतीति भावः. कदाचित्कस्मिन् कार्ये गुरुभिः प्रेषितास्तदा राजवेष्टिमिव मन्यमानास्तत्कार्यं कुर्वंति. नृपस्य वेठिः पतितेति जानंतो मुखे भृकुटीं भ्रूभंगरचनां कुर्वंति अन्यामपीर्ष्यासूचिकां चेष्टां कुर्वंतीति भावः. ॥ १३ ॥

॥ मूलम् ॥—वाइया संगहिया चेव । भत्तपाणेण पोसिया ॥ जायपक्खा जहा हंसा । पक्कमंति दिसोदिसिं ॥ १४ ॥ व्याख्या—पुनस्ते कुशिष्या गुरुभिर्वाचिताः सूत्रं ग्राहिताः, शास्त्राभ्यासं कारयित्वा पंडितीकृताः. पुनः संगृहीताः सम्यक् स्वनिश्रायां रक्षिताः, पुनर्भक्तपानैः पोषिताः पुष्टिं नीताः, चकाराद्दीक्षिताः स्वयमेवोपस्थापिताः, पश्चात्ते कार्ये सृते दिशि दिशि प्रक्रमंति, यथेच्छं विहरंति ते कुशिष्याः. के इव? यथा जातपक्षा हंसाः, जाताः पक्षास्तनूरुहाणि येषां ते जातपक्षा हंसा इव. यथोत्पन्नपक्षा हंसाः स्वजननीं जनकं च त्यक्त्वा दशसु दिक्षु व्रजंति, तथा ते कुशिष्या अपीति भावः. ॥ १४ ॥

॥ मूलम् ॥—अह सारही विचिंतेइ । खलुंकेहिं समं गउ ॥ किमझ दुठसीसेहिं । अ-

ष्पा मे अवसीयई ॥ १५ ॥ व्याख्या—अथानंतरं सारथिर्गर्गाचार्यो धर्मयानस्य प्रेरकश्चेतसि चिंतयति, खलुंकैर्गलिवृषभसदृशैः कुशिष्यैः समं गतः सहितः. किं चिंतयति? एभिर्दुष्टशिष्यैः प्रेरितैः सद्भिः ' किमप्र ' इति किमैहिकामुष्मिकफलं वा मम प्रयोजनं सिद्ध्यति? दुष्टशिष्यैः प्रेरितैः केवलं मे ममात्मैवाऽवसीदति, तेषां प्रेरणात्स्वकृत्यहानिरेव भविष्यति, नान्यत्किमपि फलं. तत एतेषां कुशिष्याणां त्यागेन मयोद्यतविहारिणैव भाव्यमिति चिंतयति.

॥ मूलम् ॥—जारिसा मम सीसाउ । तारिसा गलिगद्दहा ॥ गलगद्दहे चइत्ताणं । दढं पगिण्हई तवं ॥१६॥ व्याख्या—पुनः स आचार्यश्चिंतयति, यादृशा मम शिष्याः संति, तादृशा गलिगर्दभा भवंति. अत्र गलिगर्दभदृष्टांतेन शिष्याणामत्यंतनिंदा सूचिता. ते हि गलिगर्दभाः स्वरूपतोऽप्यनिप्रेरणयैव प्रवर्तंते, तेषां तथैव कालो याति. ततः गर्गाचार्यो गलिगर्दभसदृशान् कुशिष्यांस्त्यक्त्वा दृढं यथास्यात्तथा तपो बाह्यमभ्यंतरं च प्रगृह्णाति, प्रकर्षेणांगीकरोति. तु शब्दः पदपूरणे. यदेतान् कुशिष्यानहं न त्यक्ष्यामि, तदा मदीयः कालः क्लेशे एव प्रयास्यतीत्याचार्यो विचारयति. ॥ १७ ॥

॥ मूलम् ॥—मिउमद्दवसंपन्ने । गंभीरे सुसमाहिए ॥ विहरइ महिं महप्पा । सीलभूएण अप्पणेत्तिबेमि ॥१७॥ व्याख्या—स गार्ग्य आचार्यस्तदेदृशः सन् महीं पृथिवीं ग्रामानुग्रामं विहरति. कीदृशः सः? मृदुर्बहिर्वृत्त्या विनयवान्. पुनः कीदृशः? मार्दवसंपन्नोंतःकरणेऽपि कोमलतायुक्तः, पुनः कीदृशः? गंभीरोऽलब्धमध्यः, पुनः कीदृशः? सुसमाहितः, सुतरामतिशयेन समाधिसहितः, पुनः कीदृशः? शीलभूतेनात्मनोपलक्षितः. शीलं चारित्रं भूतः प्राप्तो यः स शीलभूतः, तेन शीलभूतेन, शीलयुक्तेनात्मना सहितः. यतो हि खलुंकत्वं कुशिष्यत्वं, तत्त्वविनीतत्वं, तच्च स्वस्य गुरोश्च दोषहेतुरस्ति, अतोऽविनीतत्वं त्यक्त्वा विनीतत्वमंगीकर्तव्यमिति भावः. इत्यहं ब्रवीमीति सुधर्मास्वामी जंबूस्वामिनं प्राह. ॥ १७ ॥ इति खलुंकीयाख्यं सप्तविंशतितममध्ययनं संपूर्णं. २७. इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां खलुंकीयाख्यं सप्तविंशतितममध्ययनं संपूर्णं २७.

## ॥ अथाष्टाविंशाततममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययनेऽशठस्य मोक्षमार्गप्राप्तिः स्यात्, अतो मोक्षमार्गप्राप्तिविधायकमध्ययनमष्टाविंशं प्रारभ्यते—

॥ मूलम् ॥—मोक्खमग्गगइं तच्चं । सुणेह जिणभासियं ॥ चउकारणसंजुत्तं । नाणदंसणलक्खणं ॥ १ ॥ व्याख्या—श्रीसुधर्मास्वामी जंबूस्वाम्यादीन् शिष्यान् वदति, भो मुनयः! मोक्षमार्गगतिं यूयं श्रृणुत ? मोक्षोऽष्टकर्मणां नाशस्तस्य मार्गो ज्ञानादिर्मोक्षमार्गस्तेन गतिः सिद्धिगमनरूपा मोक्षमार्गगतिस्तां मोक्षमार्गगतिं यूयं श्रृणुत ? कीदृशीं मोक्षमार्गगतिं ? जिनभाषितां जिनोक्तां, पुनः कीदृशीं ? 'तच्चं' इति तथ्यामवितथां सत्यां तत्वरूपां, पुनः कीदृशीं ? चतुर्भिः कारणैः संयुक्तां चतुःकारणसंयुक्तां, पुनः कीदृशीं ? ज्ञानदर्शनलक्षणां, ज्ञानं च दर्शनं च लक्षणं स्वरूपं यस्याः सा ज्ञानदर्शनलक्षणा, तां. ॥ १ ॥ अथ तानि चतुःकारणान्याह—

॥ मूलम् ॥—नाणं च दंसणं चेव । चरित्तं च तवो तहा ॥ एय मग्गे सुपन्नत्ते । जिणेहिं वरदंसिहिं ॥ २ ॥ व्याख्या—एष चतुःकारणरूपो मोक्षमार्गो जिनैः केवलिभिस्तीर्थकरैश्च प्रज्ञप्तः कथितः, कीदृशैर्जिनैः ? वरदर्शिभिः, वरमव्यभिचारित्वेन वस्तुस्वरूपं द्रष्टुं शीलं येषां ते वरदर्शिनः, तैर्वरदर्शिभिः, सम्यग्ज्ञानदर्शनवद्भिरित्यर्थः. अथ चतुर्णां कारणानां नामानि—प्रथमं कारणं ज्ञानं, यथास्वरूपस्थानां वस्तूनां विशेषेणावबोधो ज्ञानं, ज्ञायतेऽनेनेति ज्ञानं, तदिह सम्यग्ज्ञानमुच्यते. च पुनर्द्वितीयं कारणं दर्शनं, वस्तूनां यथास्वरूपस्थानां सामान्यप्रकारेणावबोधो दर्शनं, दृश्यतेऽनेनेति दर्शनं, तदप्यत्र सम्यग्दर्शनमुच्यते. चैवशब्दः पादपूरणे. विशेषावबोधात्मकं ज्ञानं, सामान्यावबोधात्मकं दर्शनमिति ज्ञानदर्शनयोर्भेदः. च पुनस्तृतीयं कारणं चारित्रं, चर्यते प्राप्यते मोक्षोऽनेनेति चारित्रं संयमरूपं, चरित्रमेव चारित्रं, तदिह सम्यग्चारित्रमेव ज्ञेयं. तथा चतुर्थं तपःकारणं, तप्येत कर्मवर्गोऽनेनेति तपः, येन कर्मवर्गः प्रज्वलति तत्तपो द्वादशविधं. अत्र तपसश्चारित्रात्पृथगुपादानं कर्मक्षये तपसोऽसाधारणकारणत्वख्यापनार्थं. ॥ २ ॥ एतदनुवादद्वारेण फलमाह—

॥ मूलम् ॥—नाणं च दंसणं चेव । चरित्तं च तवो तहा ॥ एयमग्गमणुपत्ता । जीवा गच्छंति सग्गइं ॥ ३ ॥ व्याख्या—जीवा नव्यजीवा इमं मार्गमनुप्राप्ताः संतः सद्गतिं मोक्षगतिं गच्छंति. इमं मार्गं कं? ज्ञानं च पुनर्दर्शनं, च पुनश्चारित्रं, तथा तपो जिनाज्ञाशुद्धं द्वादशविधमित्यनेन ज्ञानदर्शनचारित्रतपांसि मोक्षमार्गः, ये पुरुषा अत्र सावधानास्ते मोक्षगामिनो ज्ञेया इति नावः. ॥ ३ ॥

॥ मूलम् ॥—तत्थ पंचविहं नाणं । सुयं आनिणिवोहियं ॥ ओहिनाणं च तइयं । मणनाणं च केवलं ॥ ४ ॥ व्याख्या—तत्र ज्ञानादिषु मध्ये पंचविधं पंचप्रकारं ज्ञानं कथितं. तान् प्रकारानाह—प्रथमं श्रुतं श्रुतज्ञानं. अक्षरशब्दात्मकं द्वादशांगीरूपं, श्रूयते यत्तत् श्रुतं श्रुतज्ञानं भावश्रुतं गृह्यते. द्वितीयमाभिनिवोधिकं, अभिमुखो नियतः स्वस्य विपयस्य वोधो यस्मात्सोऽभिनिवोधः, अभिनिवोध एवाभिनिवोधिकं. आभिनिवोधिकशब्देन मतिज्ञानमुच्यते. पंचेंद्रियैः समनस्कैरुत्पन्नमित्यर्थः. तृतीयमवधिज्ञानं, अवेत्यधोऽधो विस्तारभावेन धावतीत्यवधिर्मर्यादा; अवधिनोपलक्षितं ज्ञानमवधिज्ञानमुच्यते. कोऽर्थः? यद् ज्ञानं मर्या-



=निक्षेपरु१=

दासहितं स्यात्, तत्तृतीयं ज्ञानं. अथ चतुर्थं मनोज्ञानं, मनः शब्देन मनोद्रव्यपर्यायाः, तेषु मनोद्रव्यपर्यायेषु मनोद्रव्यपर्यायाणां नामभेदकारणज्ञानं मनोज्ञानं. यस्य कस्यचिन्मनःपुद्गला यादृक्स्वभावेन वर्तते, तेषां तादृग्प्रकारेण ज्ञानं मनःपर्यायज्ञानमित्यर्थः. पंचमं केवलमेकं सकलमनंतं च ज्ञानं केवलज्ञानं, केवलं च तद् ज्ञानं च केवलज्ञानं, यस्योदये सत्यन्येषां ज्ञानानामकिंचित्करत्वं भवतीति भावः. यद्यपि नंदीसूत्रादौ पूर्वं मतिज्ञानमुक्तं, अत्र चादौ श्रुतग्रहणं कृतं, तच्छेषज्ञानानां स्वरूपं श्रुतज्ञानेनैव ज्ञेयत्वात्सर्वाण्यपि ज्ञानानि श्रुतज्ञानानीत्यर्थः. ॥ ४ ॥

॥ मूलम् ॥—एयं पंचविहं नाणं । दव्वाण य गुणाण य ॥ पज्जवाणं च सव्वेसिं । नाणं नाणीहि देसियं ॥ ५ ॥ व्याख्या—एतत्पंचविधं ज्ञानं सर्वेषां द्रव्याणां गुणानां पर्यायाणां च यद् ज्ञानं तद् ज्ञानिभिः केवलिभिर्देशितं कथितं. ज्ञायते यत्तद् ज्ञानमिति भावव्युत्पत्तिः. ॥ ५ ॥ अथ द्रव्यलक्षणमाह—

॥ मूलम् ॥—गुणाणमासयो दव्वं । एगदव्वसिया गुणा ॥ लक्खणं पज्जवाणं तु । उभओ

अस्सिया जवे ॥ ६ ॥ व्याख्या—गुणानां रूपरसस्पर्शादीनामाश्रयः स्थानं द्रव्यं, यत्र गुणा उत्पद्यंतेऽवतिष्ठंते विलीयंते च तद् द्रव्यं, इत्यनेन रूपादिवस्तु द्रव्यात् सर्वथाऽतिरिक्तमपि नास्ति. द्रव्ये एव रूपादिगुणा लज्यंत इत्यर्थः. गुणा ह्येकद्रव्याश्रिताः, एकस्मिन् द्रव्ये आधारजूते आधेयत्वेनाश्रिता एकद्रव्याश्रितास्ते गुणा उच्यंते. इत्यनेन ये केचिद् द्रव्यमेवेछंति, तद्व्यतिरिक्तान् रूपादींश्चेछंति, तेषां मतं निराकृतं, तस्माद्रूपादीनां गुणानां द्रव्येज्यो-ऽन्नेदोऽप्यस्ति. तु पुनः पर्यायाणां नवपुरातनादिरूपाणां जावानामेतल्लक्षणं ज्ञेयं. एतल्लक्षणं किं? पर्याया ह्युजयाश्रिता जवेयुः, उजयोर्द्रव्यगुणयोराश्रिता उजयाश्रिताः, द्रव्येषु नवीन-नवीनपर्याया नाम्नाऽकृत्या च जवंति. गुणेष्वपि नवपुराणादिपर्यायाः प्रत्यक्षं दृश्यंते एव. ॥ ६ ॥ पूर्वं द्रव्यन्नेदानाह—

॥ मूलम् —धम्मो १ अधम्मो २ आगासं ३ । कालो ४ पुग्गल ५ जंतवो ६ ॥ एस लोगुत्ति पन्नत्तो । जिणेहिं वरदंसिहिं ॥ ७ ॥ व्याख्या—धर्म इति धर्मास्तिकायः १, अधर्म इत्यधर्मास्तिकायः २, आकाशमित्याकाशास्तिकायः ३, कालः समयादिरूपः ४, ‘ पुग्गलत्ति ’

पुद्गलास्तिकायः ५, जंतव इति जीवाः ६. एतानि षट् द्रव्याणि ज्ञेयानीत्यन्वयः. एष इति सामान्यप्रकारेणेत्येवंरूप उक्तः षड्द्रव्यात्मको लोको जिनैः प्रज्ञप्तः कथितः. कीदृशैर्जिनैः ? वरदर्शिभिः सम्यक् यथास्थितवस्तुरूपज्ञैः. ॥ ७ ॥

॥ मूलम् ॥—धम्मो १ अधम्मो २ आगासं ३ । दव्वं इक्किक्कमाहियं ॥ अणंताणि य दव्वाणि । कालो पुग्गल जंतवो ॥ ७ ॥ व्याख्या—धर्मादिभेदानाह—धर्मः १, अधर्मः २, आकाशं ३, द्रव्यमिति प्रत्येकं योज्यं. धर्मद्रव्यमधर्मद्रव्यमाकाशद्रव्यं चेत्यर्थः. एतद् द्रव्यत्रयमेकैकमित्येकत्वयुक्तमेव तीर्थकरैराख्यातं, अग्रेतनानि त्रीणि द्रव्याण्यनंतानि स्वकीयस्वकीयानंतभेदयुक्तानि भवंति. तानि त्रीणि द्रव्याणि कानि? कालः समयादिरनंतः, अतीतानागताद्यपेक्षया. पुद्गला अप्यनंताः, जंतवो जीवा अप्यनंता एव. ॥ ८ ॥ अथ षड्द्रव्याणां लक्षणमाह—

॥ मूलम् ॥—गइलक्खणो उ धम्मो । अहम्मो ठाणलक्खणो ॥ भायणं सव्वदव्वाणं । नहं ओगाहलक्खणो ॥ ९ ॥ व्याख्या—धर्मो धर्मास्तिकायो गतिलक्षणो ज्ञेयः, लक्ष्यते ज्ञा-

यतेऽनेनेति लक्षणं. एकस्माद्देशाज्जीवपुद्गलयोर्देशांतरंप्रति गमनं गतिः, गतिरेव लक्षणं यस्य स गतिलक्षणः. अधर्मोऽधर्मास्तिकायः स्थितिलक्षणो ज्ञेयः, स्थितिः स्थानं गतिनिवृत्तिः, सैव लक्षणमस्येति स्थानलक्षणोऽधर्मास्तिकायो ज्ञेयः. स्थितिपरिणतानां जीवपुद्गलानां स्थितिलक्षणकार्येण ज्ञायते सोऽधर्मास्तिकायः. यत्पुनः सर्वद्रव्याणां जीवादीनां भाजनमाधाररूपं नभ आकाशमुच्यते, तच्च नभोऽवगाहलक्षणं. अवगाढुं प्रवृत्तानां जीवपुद्गलानामालंबो भवतीत्यवगाहोऽवकाशः, स एव लक्षणं यस्य तदवगाहलक्षणं नभ उच्यते. ॥ ९ ॥

॥ मूलम् ॥—वत्तणालरकणो कालो । जीवो उवर्ओगलरकणो ॥ नाणेणं दंसणेणं च । सुहेण य दुहेण य ॥ १० ॥ व्याख्या—वर्ततेऽनवच्छिन्नत्वेन निरंतरं भवतीति वर्तना, सा वर्तनैव लक्षणं लिंगं यस्येति वर्तनालक्षणः काल उच्यते. तथोपयोगो मतिज्ञानादिकः, स एव लक्षणं यस्य स उपयोगलक्षणो जीव उच्यते. यतो हि ज्ञानादिभिरेव जीवो लक्ष्यते, उक्तलक्षणत्वात्. पुनर्विशेषलक्षणमाह—ज्ञानेन विशेषाववोधेन, च पुनर्दर्शनेन सामान्याववोधरूपेण. च पुनः सुखेन, च पुनर्दुःखेन च ज्ञायते स जीव उच्यते १०. पुनर्लक्षणांतरमाह—

॥ मूलम् ॥—नाणं च दंसणं चेव । चरित्तं च तवो तहा ॥ वीरियं उवउगो य । एयं जीवस्स लक्खणं ॥ ११ ॥ व्याख्या—ज्ञानं, ज्ञायतेऽनेनेति ज्ञानं, च पुनर्दृश्यतेऽनेनेति दर्शनं, च पुनश्चारित्रं क्रियाचेष्टादिकं, तथा तपो द्वादशविधं, तथा वीर्यं वीर्यांतरायक्षयोपशमादुत्पन्नं सामर्थ्यं, पुनरुपयोगो ज्ञानादिष्वेकाग्रत्वं, एतत्सर्वं जीवस्य लक्षणं. ॥ ११ ॥ अथ पुद्गलानां लक्षणमाह—

॥ मूलम् ॥—सद्दंधयारउज्जोउ । पहा छायातवोवि य ॥ वन्नगंधरसा फासा । पुग्गलाणं तु लक्खणं ॥ १२ ॥ व्याख्या—शब्दो ध्वनिरूपपौद्गलिकः, तथांधकारं, तदपि पुद्गलरूपं, तथोद्योतो रत्नादीनां प्रकाशः, तथा प्रभा चंद्रादीनां प्रकाशः, तथा छाया वृक्षादीनां छाया शैत्यगुणा. तथाऽऽतपो रवेरुष्णप्रकाशः, इति पुद्गलस्वरूपं. च शब्दः समुच्चये. वर्णगंधरसस्पर्शाः पुद्गलानां लक्षणं ज्ञेयं. वर्णाः शुक्लपीतहरितरक्तकृष्णादयः, गंधो दुर्गंधसुगंधात्मको गुणः. रसाः षट् तिक्तकटुककषायाम्लमधुरलवणाद्याः. स्पर्शाः शीतोष्णखरमृदुस्निग्धरूक्षलघुगुर्वादयः. एते सर्वेऽपि पुद्गलास्तिकायस्कंधलक्षणवाच्या ज्ञेया इत्यर्थः. एभिर्लक्षणैरेव पुद्गला

लपुन्नलरूपाः, बंधो जीवकर्मणोः संश्लेषः, पुण्यं शुन्नप्रकृतिरूपं, पापमशुन्नं मिथ्यात्वादि,
आश्रवः कर्मबंधहेतुर्हिंसामृषाऽदत्तमैथुनपरिग्रहरूपः. तथा संवरः समितिगुप्त्यादिन्निराश्रव-
द्वारनिरोधः. निर्जरा तपसा पूर्वार्जितानां कर्मणां परिशाटनं. मोक्षः सकलकर्मक्षयादात्म-
स्वरूपेणात्मनोऽवस्थानं. एते नवसंख्याकास्तथ्या अवितथा न्नावाः संतीति संबंधः. नवसं-
ख्यात्वं ह्येतेषां न्नावानां मध्यमापेक्षं. जघन्यतो हि जीवाजीवयोरेव बंधादीनामंतर्न्नावाद्
द्वयोरेव संख्यास्ति. उत्कृष्टतस्तु तेषामुत्तरोत्तरन्नेदविवक्षयाऽनंतत्वं स्यात्. ॥ १४ ॥

॥ मूलम् ॥—तहियाणं तु न्नावाणं । सप्नावे उवएसणं ॥ न्नावेण सद्दहंतस्स । सम्म-
त्तं तं वियाहियं ॥ १५ ॥ व्याख्या—अर्हद्भिस्तस्य पुरुषस्य सम्यक्त्वं सम्यग्न्नावोऽर्थाद्दर्शनं
व्याख्यातं कथितमित्यर्थः. कीदृशस्य पुरुषस्य ? तथ्यानां सत्यानां न्नावानां जीवाजीवादित-
त्वानां सद्भावे सद्भावविषये उपदेशेन गुरूणां शिक्षावाक्येन न्नावेन शुद्धमनसा श्रद्दधानस्य,
तथेत्यंगीकुर्वाणस्य. यो हि जीवादिपदार्थान् सम्यग्जानाति, न्नावेन च श्रद्दधाति, स पुमा-
न् सम्यक्त्ववानित्यर्थः. ॥ १५ ॥ अथ सम्यक्त्वन्नेदानाह—

॥ मूलम् ॥–निस्सग्गु १ वएसरुई २ । आणारुइ ३ सुत्त ४ वीयरुइमेव ५ ॥ अभिगम ६ विभ्थाररुई ७ । किरिया ८ संखेव ९ धम्मरुई १० ॥१६॥ व्याख्या–एते दश भेदाः सम्यक्त्वस्य ज्ञेयाः. तत्र प्रथमो निसर्गरुचिः, निसर्गः स्वभावस्तेन रुचिस्तत्वानामभिलाषो यस्य स निसर्गरुचिर्विज्ञेयः १. द्वितीय उपदेशरुचिः, उपदेशेन गुरूक्तेन रुचिर्यस्य स उपदेशरुचिः, यदा गुरुर्धर्ममुपदिशति, तदैकाग्रचित्तो यः शृणोति स उपदेशरुचिर्द्वितीयो ज्ञेयः २. तृतीय आज्ञया सर्वज्ञवचनेन रुचिर्यस्य स आज्ञारुचिर्विज्ञेयः ३. सूत्रेणागमेनैव रुचिर्यस्य स सूत्ररुचिश्चतुर्थो ज्ञेयः ४. पंचमो बीजरुचिः, बीजेन रुचिर्यस्य स बीजरुचिः, बीजं ह्येकमप्यनेकार्थप्रबोधकं वचनं, तेन रुचिर्यस्येति बीजरुचिः, ५. अभिगमरुचिः षष्टः, अभिगमेन ज्ञानेन रुचिर्यस्य सोऽभिगमरुचिः ६. सप्तमो विस्ताररुचिः, विस्तारेण रुचिर्यस्य स विस्ताररुचिः ७. तथा क्रियारुचिः, क्रियया धर्मानुष्टानेन रुचिर्यस्य स क्रियारुचिरष्टमो ज्ञेयः. ८. तथा संक्षेपरुचिः, संक्षेपेण संग्रहेण रुचिर्यस्य स संक्षेपरुचिर्नवमः ९. तथा धर्मेण श्रुतधर्मेण रुचिर्यस्य स धर्मरुचिः, श्रुतधर्माभ्यासरुचिर्दशमः १०. यद्यपि सम्यक्त्वस्य जीवाद्भेदो नास्ति, जीवस्य स्वरूपं सम्यक्त्वं, तथापि लक्ष्य-

॥ मूलम् ॥—निस्सग्गु १ वएसरुई २ । आणारुइ ३ सुत्त ४ वीयरुइमेव ५ ॥ अभिगम ६ वित्थाररुई ७ । किरिया ८ संखेव ९ धम्मरुई १० ॥१६॥ व्याख्या—एते दश भेदाः सम्यक्त्वस्य ज्ञेयाः. तत्र प्रथमो निसर्गरुचिः, निसर्गः स्वभावस्तेन रुचिस्तत्वानामभिलाषो यस्य स निसर्गरुचिर्विज्ञेयः १. द्वितीय उपदेशरुचिः, उपदेशेन गुरुक्तेन रुचिर्यस्य स उपदेशरुचिः, यदा गुरुर्धर्ममुपदिशति, तदेकाग्रचित्तो यः शृणोति स उपदेशरुचिर्द्वितीयो ज्ञेयः २. तृतीय आज्ञया सर्वज्ञवचनेन रुचिर्यस्य स आज्ञारुचिर्विज्ञेयः ३. सूत्रेणागमेनैव रुचिर्यस्य स सूत्ररुचिश्चतुर्थो ज्ञेयः ४. पंचमो बीजरुचिः, बीजेन रुचिर्यस्य स बीजरुचिः, बीजं ह्येकमप्यनेकार्थप्रबोधकं वचनं, तेन रुचिर्यस्येति बीजरुचिः, ५. अभिगमरुचिः षष्ठः, अभिगमेन ज्ञानेन रुचिर्यस्य सोऽभिगमरुचिः ६. सप्तमो विस्ताररुचिः, विस्तारेण रुचिर्यस्य स विस्ताररुचिः ७. तथा क्रियारुचिः, क्रियया धर्मानुष्ठानेन रुचिर्यस्य स क्रियारुचिरष्टमो ज्ञेयः. ८. तथा संक्षेपरुचिः, संक्षेपेण संग्रहेण रुचिर्यस्य स संक्षेपरुचिर्नवमः ९. तथा धर्मेण श्रुतधर्मेण रुचिर्यस्य स धर्मरुचिः, श्रुतधर्माभ्यासरुचिर्दशमः १०. यद्यपि सम्यक्त्वस्य जीवाद्भेदो नास्ति, जीवस्य स्वरूपं सम्यक्त्वं, तथापि लक्ष्य-

लक्षणयोर्गुणगुणिनोः कथनमात्रेण कथंचिद्भेदोऽप्यस्ति. ॥ १६ ॥ अथ सम्यक्त्वभेदान्नाममात्रेणोक्त्वा विस्तरेणाह—

॥ मूलम् ॥— भूयत्थेणाहिगया । जीवाजीवा य पुन्नपावं च ॥ सहसंमुइया सहसं—वरो य रोएइ उ निसग्गो ॥ १७ ॥ व्याख्या—स निसर्गरुचिः कथ्यते, यत्तदोर्नित्याभिसंबंधात्, स इति कः? येन जीवा अजीवाश्च, पुण्यं पापं च, एते पूर्वोक्ता भावा भूतार्थेन सत्यार्थेनाधिगताः, भूतः सद्भूतोऽर्थो विषयो यस्य तद्भूतार्थं ज्ञानमुच्यते. तेनामी जीवादयो भावाः सद्भूताः संतीति कृत्वा गृहीताः. च पुनः पूर्वोक्ता जीवाजीवाः, पुण्यपापं च, पुनराश्रवसंवरौ, च शब्दाद्बंधमोक्षौ, इत्यादिनवापि भावान् सह संमत्या सहात्मना संगता मतिः सहसंमतिस्तया सह संमत्या स्वबुद्ध्या परोपदेशं विना जातिस्मृत्यादिविशदबुद्ध्या यस्मै रोचंते स निसर्गरुचिः सम्यक्त्ववानुच्यते ॥ १७ ॥ अमुमेवार्थं पुनराह—

॥ मूलम् ॥—जो जिणदिट्ठभावे । चउव्विहे सद्दहाइ सयमेव ॥ एमेय तत्तहत्ति य । स निसग्गरुइत्ति नायव्वो ॥ १८ ॥ व्याख्या—स निसर्गरुचिर्ज्ञातव्यः, स इति कः? यश्चतु-

र्विधान् द्रव्यक्षेत्रकालभावरूपान् जिनोद्दिष्टान् भावान् जिनोक्तान् पदार्थान् स्वयमेव परोपदेशं विनैव श्रद्दधाति मनसि धारयति, पुनर्यो जिनोक्तेषु तत्त्वेष्वेवमेवैतत्, यथा जिनैर्दृष्टं जीवादि तत्तथैवेति, नान्यथेति बुद्धिं कुरुते, स निसर्गरुचिरुच्यते. ॥ १८ ॥ अथोपदेशरुचेः स्वरूपमाह—

॥ मूलम् ॥—एए चेव हु भावे । उवइठे जो परेण सद्दहई ॥ छउमत्थेण जिणेण य । उवएसरुइत्ति नायव्वो ॥ १९ ॥ व्याख्या—स उपदेशरुचिरिति ज्ञातव्यः, स इति कः? य एतांश्चैव भावान् जीवाजीवादीन् परेणान्येन छद्मस्थेन, वाऽथवा जिनेन केवलिना तीर्थकरेणोपदिष्टान् श्रद्दधाति, हुशब्दो निश्चये, चेवशब्दः पदपूरणे. ॥१९॥ अथाज्ञारुचेः स्वरूपमाह—

॥ मूलम् ॥—रागो दोसो मोहो । अन्नाणं जस्स अवगयं होइ ॥ आणाए रोयंतु । सो खलु आणारुई नाम ॥ २० ॥ व्याख्या—स खलु निश्चयेनाज्ञारुचिर्नामेति प्रसिद्धो भवति. स इति कः? यस्य रागः स्नेहः, द्वेषोऽप्रीतिः. मोहः शेषमोहनीयप्रकृतयः, अज्ञानं मिथ्यात्वरूपं. एतत्सर्वं नष्टं भवति, अस्य देशतोऽपगतं गम्यते, न सर्वतः. अपगतशब्दस्य प्रत्येकं

संबंधः. यस्य रागो देशतोऽपगतः, यस्य द्वेषोऽपि देशतोऽपगतः, यस्य मोहोऽपि देशतोऽपगतः, यस्याज्ञानं देशतोऽपगतं, एतेषामपगमादाज्ञया आचार्याद्युपदेशेन रोचमानजीवाजीवादितत्वं तथेति प्रतिपद्यमानो यो भवति, स आज्ञारुचिरित्यर्थः. अत्र माषतुषदृष्टांतः, मा रूस, मा तुसेति स्थाने माषतुषेति दृष्टांतोऽस्ति. ॥ २० ॥

॥ मूलम् ॥—जो सुत्तमहिज्जंतो । सुएण उगाहई उ सम्मत्तं ॥ अंगेण बाहिरेण य । सो सुत्तरुइत्ति नायव्वो ॥ २१ ॥ व्याख्या—स सूत्ररुचिर्ज्ञातव्यः, स इति कः? यः सूत्रमागममधीयानः पठन् सन् सूत्रेणागमेन सम्यक्त्वमवगाहते प्राप्नोति. कीदृशेन सूत्रेण? अंगेनाचारांगादिना, अथवा बाहिरेण बाह्येनानंगप्रविष्टेनोत्तराध्ययनादिना सम्यक्त्वं गोविंदवाचकवल्लभते, स सूत्ररुचिर्ज्ञेयः. ॥ २ ॥ अथ बीजरुचेः स्वरूपमाह—

॥ मूलम् ॥—एगेण अणेगाइं । पयाई जो पसरइ उ सम्मत्तं ॥ उदएव तिल्लबिंदू । सो बीयरुइत्ति नायव्वो ॥ २२ ॥ व्याख्या—स बीजरुचिरिति ज्ञातव्यः, स इति कः? यः 'सम्मत्तं' इति सम्यक्त्ववान्, गुणगुणिनोरभेदोपचारात् सम्यक्त्वशब्देन सम्यक्त्वधार्या-



=रुचा हुवा= २ (स्वीकार करनेवाला

स्यैव गृह्यते, तस्माद्यः सम्यक्त्वी एकेन पदेन जीवादिना, अनेकेषु बहुषु पदेषु जीवादिषु तु निश्चयेन प्रसरति, व्यापकबुद्धिमत्त्वेन जानातीत्यर्थः. कस्मिन् क इव? उदके तैलबिंदुरिव, यथोदकस्यैकदेशतो गतोऽपि तैलबिंदुः सर्वमुदकमाक्रामति, तथा तत्त्वैकदेशोत्पन्नरुचिरप्यात्मा तथाविधक्षयोपशमादशेषेषु तत्त्वेषु रुचिमान् भवति, स एवंविधो बीजरुचिर्ज्ञातव्य इत्यर्थः. यथा बीजमेकमपि क्रमेणानेकबीजानां जनकं स्यात्, तथास्यापि रुचिर्विषयभेदतो रुच्यंतराणां जनयित्री स्यादिति भावः. ॥ २२ ॥ अथाभिगमरुचेः स्वरूपमाह—

॥ मूलम् ॥—सो होइ अभिगमरुई । सुअनाणं जेण अत्थओ दिट्ठं ॥ एक्कारससंगाई । पइन्नगं दिट्ठिवाओ य ॥ २३ ॥ व्याख्या—सोऽभिगमरुचिर्भवति. स इति कः? येन श्रुतज्ञानमर्थतोऽर्थमाश्रित्य दृष्टं. येन श्रुतज्ञानस्यार्थोऽधिगतो भवति. किं तत् श्रुतज्ञानमित्याह—एकादशांगान्याचारांगादीनि, तथा प्रकीर्णकमिति जातित्वादेकवचनं. प्रकीर्णकान्युत्तराध्ययनादीनि, दृष्टिवादः परिकर्मसूत्रादिः, चशब्दादुपांगान्युपपातिकादीनि, सर्वाणि येनार्थतो ज्ञातानि भवंति, सोऽभिगमरुचिर्भवतीत्यर्थः. ॥ २३ ॥ अथ विस्ताररुचेः स्वरूपमाह—

॥ मूलम् ॥—दव्वाण सव्वन्नावा । सव्वपमाणेहिं जस्स उवलद्धा ॥ सव्वाहि नयविहीहि
य । वित्थाररुइत्ति नायव्वो ॥ २४ ॥ व्याख्या—स विस्ताररुचिरिति ज्ञातव्यः. स इति
कः? यस्य पुरुषस्य द्रव्याणां धर्मास्तिकायादीनां सर्वे न्नावाः, एकत्वपृथक्त्वसंयोगविन्नागा-
दिसमस्तपर्यायाः सर्वप्रमाणैः प्रत्यक्षानुमानोपमानागमैश्च पुनः सर्वैर्नयविधिभिर्नैगमसंग्रह-
व्यवहारऋजुसूत्रशब्दसमन्निरूढैवंन्नूतैरुपलब्धा यथारूपेण ज्ञाताः संति, स विस्ताररुचिर्वि-
ज्ञेय इत्यर्थः. ॥ २४ ॥ अथ क्रियारुचिस्वरूपमाह—

॥ मूलम् ॥—दंसणं नाणचरित्ते । तवविणए सच्चसमिइगुत्तीसु । जो किरिया न्नावरुई
। सो खलु किरियारुई नाम ॥ २५ ॥ व्याख्या—स खलु निश्चयेन क्रियारुचिर्नाम प्रसिद्धो
ज्ञेयः. स इति कः? यः पुरुषो दर्शनज्ञानचारित्रे, तथा तपोविनये क्रियान्नावरुचिर्न्नवति, त-
था सत्यसमितिगुप्तिषु क्रियान्नावरुचिर्न्नवति. दर्शनं च ज्ञानं च चारित्रं च दर्शनज्ञानचारि-
त्रं, तस्मिन्. तपांसि च विनयाश्च तेषां समाहारस्तपोविनयं, तस्मिंस्तपोविनये. तपस्सु द्वा-
दशविधेषु, तथा विनयेष्वाचार्यादीनां न्नक्तिषु, तथा सत्या याः समितयः सत्यसमितयस्तासु

सत्यसमितिषु. क्रियायां दर्शनज्ञानचारित्रतपोविनयसत्यसमितीनामाराधनानुष्ठानविधौ न्नावेन रुचिर्यस्य स क्रियान्नावरुचिः. ॥ २५ ॥ अथ संक्षेपरुचिस्वरूपमाह—

॥ मूलम् ॥—अणन्निग्गहियकुदिट्ठी । संखेवरुइत्ति होइ नायव्वो ॥ अविसारउ पवयणे । अणन्निग्गहिउ य सेसेसु ॥ २६ ॥ व्याख्या—स संक्षेपरुचिर्न्नवतीति ज्ञातव्यः. स इति कः? योऽनन्निगृहीतकुदृष्टिः, अनन्निगृहीताऽनंगीकृता कुदृष्टिर्बौद्धमतादिरूपा येन सोऽनन्निगृहीतकुदृष्टिः, येन मिथ्यात्विनां कुमतिश्चांगीकृता नास्तीत्यर्थः. पुनर्यः प्रवचने जिनोक्तसिद्धांतेऽविशारदोऽचतुरः, पुनर्यस्तु शेषेषु मतेष्वपि कपिलादिमतेष्वपि कुशलो नास्ति, स चैतादृशः पुरुषः संक्षेपरुचिः स्यात्. ॥ २६ ॥ अथ धर्मरुचेः स्वरूपमाह—

॥ मूलम् ॥—जो अत्थिकायधम्मं । सुयधम्मं खलु चरित्तधम्मं च ॥ सद्दहइ जिणान्निहियं । सो धम्मरुइत्ति नायव्वो ॥ २७ ॥ व्याख्या—स धर्मरुचिर्न्नवतीति ज्ञातव्यं. यः पुमान्ऽस्तिकायानां धर्मादीनां, अर्थाद्धर्मास्तिकायाऽधर्मास्तिकायाकाशास्तिकायादीनां धर्ममसाधारणलक्षणं स्वन्नावं चलनस्वन्नावस्थिरसंस्थानावकाशदानादिकं जिनान्निहितं तीर्थक-

रोक्तं श्रद्दधाति. पुनर्यो जिनोक्तमेव श्रुतधर्ममंगप्रविष्टादिरूपं, च पुनश्चारित्रधर्मं सामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातादिकं जिनोक्तं श्रद्दधाति, न तु यो धर्मादीनां लक्षणं पाखंडिभिरुक्तं श्रद्धत्ते. अत्र हि पृथगुपाधिभेदेन सम्यक्त्वभेदकथनं शिष्यव्युत्पादनार्थं. अन्यथा तु निसर्गरुचिरुपदेशरुचिश्च, एतावुभौ भेदावभिगमरुचावेवांतर्भवतः. ॥ २७ ॥ अथ सम्यक्त्वलिंगान्याह—

॥ मूलम् ॥—परमत्थसंथवो वा । सुदिट्ठपरमत्थसेवणा वावि ॥ वावन्नकुदंसणवज्जणा य सम्मत्तसद्दहणा ॥ २८ ॥ व्याख्या—एतत्सम्यक्त्वश्रद्धानं सम्यक्त्वस्य लक्षणं सम्यक्त्ववतः पुरुषस्य चिह्नं ज्ञेयं. किं तल्लक्षणं? परमार्थसंस्तवः, परमाश्च तेऽर्थाश्च परमार्था जीवादितत्वानि, तेषां परमार्थानां जीवादिभावानां संस्तवः स्वरूपज्ञानादुत्पन्नपरिचयः परमार्थसंस्तवः, एतत्प्रथमं सम्यक्त्ववतो लक्षणं. वाशब्दः पदपूरणे. वाऽथवाऽन्यल्लक्षणमिदं. सुदृष्टपरमार्थसेवनं. सुष्टु यथास्वरूपं दृष्टाः दर्शिता वा परमार्था जीवादयो यैस्ते सुदृष्टपरमार्था गीतार्थाः, तेषां सेवनं सुदृष्टपरमार्थसेवनं. बहुश्रुतानामाचार्यादीनां यथाशक्ति वैयावृ-

रयस्य करणं, एतदपि सम्यक्त्वलक्षणं. च पुनर्व्यापन्नकुदर्शनवर्जनं, व्यापन्नं विनष्टं दर्शनं येषां ते व्यापन्नदर्शनाः, यैः पूर्वं सम्यक्त्वं लब्ध्वा सम्यक्त्वघातकर्मोदयात्पुनः सम्यक्त्वं वांतं, ते व्यापन्नदर्शना निह्नवादयः. तथा कुत्सितं दर्शनं येषां ते कुदर्शनाः शाक्यादयः. व्यापन्नदर्शनाश्च कुदर्शनाश्च व्यापन्नकुदर्शनाः, तेषां वर्जनं व्यापन्नदर्शनकुदर्शनवर्जनं. एतदपि सम्यक्त्वलक्षणं ज्ञेयं. यः सम्यक्त्ववान् भवति, स निह्नवैः कुलिंगिभिश्च परिचयं न करोति.

॥ मूलम् ॥—नत्थि चरित्तं सम्मत्त विहूणं । दंसणे उ भवियव्वं ॥ सम्मत्तचरित्ताइं । जुगवं पुव्वं च सम्मत्तं ॥ २९ ॥ व्याख्या—सम्यक्त्वमाहात्म्यमाह—हे शिष्य ! सम्यक्त्वविहीनं चारित्रं नास्ति, सम्यक्त्वेन विना चारित्रं नासीत्, न भविष्यति नास्ति च. कोऽर्थः ? यावत्सम्यक्त्वं नोत्पद्यते तावच्चारित्रं न स्यात्. तु पुनर्दर्शने तु सम्यक्त्वे तु चारित्रेण भवितव्यं. अथवा सम्यक्त्वे चारित्रं भक्तव्यं भजनीयं. सम्यक्त्वं च चारित्रं च सम्यक्त्वचारित्रे, युगपदेककालमुत्पद्येते इति शेषः. तथापि तत्रानुक्रमोऽस्ति. पूर्वं सम्यक्त्वं पश्चाच्चारित्रमुत्पद्यते. सम्यक्त्वचारित्रयोर्युगपदुत्पादेऽप्ययं नियमोऽस्तीति भावः. ॥ २९ ॥ पुनर-

पि तदेवाह—

॥ मूलम् ॥—नादंसणस्स नाणं । नाणेण विणा न होइ चरणगुणा ॥ अगुणस्स नत्थि मुक्को । नत्थि अमोक्खस्स निव्वाणं ॥ ३० ॥ व्याख्या—अदर्शनिनः सम्यक्त्वरहितस्य ज्ञानं नास्ति, इत्यनेन सम्यक्त्वं विना सम्यग्ज्ञानं न स्यादित्यर्थः. ज्ञानंविना चारित्रगुणाः, चारित्रं पंचमहाव्रतरूपं, तस्य गुणाः पिंडविशुद्ध्यादयः करणचरणसप्ततिरूपा न भवंति. अगुणिनश्चारित्रगुणै रहितस्य मोक्षः कर्मक्षयो नास्ति, अमोक्षस्य कर्मक्षयरहितस्य निर्वाणं मुक्तिसुखप्राप्तिर्नास्ति. ॥ ३० ॥ अथ सम्क्त्वस्याष्टावाचारानाह—

॥ मूलम् —निस्संकिय निक्कंखिय । निव्वितिगिछा अमूढदिट्ठी य ॥ उववूहथिरीकरणे । वच्छल्लपभावणे अट्ठ ॥ ३१ ॥ व्याख्या—निःशंकितत्वं देशतः सर्वतश्च शंकारहितत्वं, पुनर्निःकांक्षितत्वं शाक्याद्यन्यदर्शनग्रहणवांछारहितत्वं. निर्विचिकित्स्यं, फलंप्रति संदेहकरणं विचिकित्सा, निर्गता विचिकित्सा निर्विचिकित्सा, तस्या भावो निर्विचिकित्स्यं. किमेतस्य तपःप्रभृतिक्लेशस्य फलं वर्तते न वेति लक्षणं. अथवा विदंतीति विदः साधवः, तेषां

विजुगुप्सा, किमेते मलमलिनदेहाः ? अचित्तपानीयेन देहं प्रक्षालयतां को दोषः स्यादित्या- दिनिंदा, तदभावो निर्विजुगुप्स्यं. प्राकृतार्षत्वात्सूत्रे निर्विचिकित्स्यमिति पाठः. अमूढा दृ- ष्टिरमूढदृष्टिः, ऋद्धिमत्कुतीर्थिकानां परिव्राजकादीनामृद्धिं दृष्ट्वाऽमूढा, किमस्माकं दर्शनं ? य- त्परतीर्थिनां भूयसीमृद्धिं त्सर्वथा दरिद्राभिभूतं, इत्यादिमोहरहिता दृष्टिर्बुद्धिरमूढदृष्टिः. यत्परतीर्थिनां भूयसीमृद्धिं दृष्ट्वापि स्वकीयेऽकिंचने धर्मे मतेः स्थिरीभावः. अयं चतुर्विधोऽप्याचारोंतरंग उक्तः अथ बा- ह्याचारमाह—उपबृंहणा दर्शनादिषु गुणवतां प्रशंसा. पुनः स्थिरीकरणं, धर्मानुष्ठानंप्रति सीदतां धर्मवतां पुरुषाणां साहाय्यकरणेन धर्मे स्थिरीकरणं. पुनर्वात्सल्यं साधार्मिकाणां भक्तपानीयैर्भक्तिकरणं. पुनः प्रभावना च स्वतीर्थोन्नतिकरणं. एतेऽष्टावाचाराः सम्यक्त्वस्य ज्ञेया इत्यर्थः. ॥ ३१ ॥ अथ चारित्रभेदानाह—

॥ मूलम् ॥—सामाइयत्थ पढमं । छेओवट्ठावणं भवे बीयं ॥ परिहारविसुद्धीयं । सुहुमं तह संपरायं च ॥ ३२ ॥ अकसायमहक्खायं । छउमत्थस्स जिणस्स वा ॥ एयं चयरित्तकरं । चारित्तं होइ आहियं ॥ ३३ ॥ युग्मं॥ व्याख्या—अथ प्रथमं सामायिकं चारित्रं ज्ञेयं. समो

रागद्वेषरहितश्चित्तपरिणामः, तस्मिन् समेऽयो गमनं समायः, समाय एव सामायिकं. अथवा समानां ज्ञानदर्शनचारित्राणामायो लाभः समायः, समाय एव सामायिकं सर्वसावद्यपरिहाररूपं. यद्यपि सर्वमपि चारित्रं सामायिकमेवोच्यते, तथापि छेदोपस्थापनादिभेदेषु प्रथमत्वात्प्रथमं नाम्नां भेदाद् ज्ञेयं. यतो हि शब्दाधिक्यादर्थाधिक्यं प्रथमं कथनमात्रत्वेन. तदपि सामायिकं नाम चारित्रं द्विविधं, इत्वरं १ यावत्कथितं च २. भरतैरवतमहाविदेहेषु मध्यमजिनतीर्थेषु चोपस्थापनायाः सद्भावे यावत्कथितं संभवति, उपस्थापनाया अभावे यावज्जीवमपि भवति. इत्वरं छेदोपस्थपनीयानां साधूनां भवति. तथा द्वितीयं छेदोपस्थापनीयं, अस्य शब्दस्य कोऽर्थः? सातिचारस्य निरतिचारस्य वा साधोस्तीर्थांतरं प्रतिपाद्यमानस्य पूर्वपर्यायव्यवच्छेदश्छेदः, तस्मै छेदाय योग्योपस्थापना महाव्रतारोपणा यस्मिंस्तच्छेदोपस्थापनं चारित्रं द्वितीयं ज्ञेयं. तदपि द्विविधं, सातिचारं निरतिचारं च. अथ परिहारविशुद्धं तृतीयं, परिहारस्तपोविशेषः, तेन विशुद्धिर्यस्मिंस्तत्परिहारविशुद्धिकं भवति. तद्विधिश्चायं —नव यतयो गणात्पृथग्भूयाष्टादशमासान् यावत्साधयंति. तत्र नवसाधूनां मध्ये चत्वारः

परिहारिका नवंति, चत्वारोऽन्ये तेषां वैयावृत्त्यकराः, तेऽनुपरिहारिका नवंति. एकस्तु नवमः कल्पस्थितो वाचनाचार्यो नवति. एवं षण्मासं यावत्तपः कृत्वा, पश्चात् षण्मासं यावद्ये परिहारिकास्तेऽनुपहारिका नवंति, अनुपहारिकाश्च परिहारिका नवंति. षण्मासं यावदेवं तपः कुर्वंति. ततश्च यः कल्पस्थितः, सोऽपि तेनैव विधिना षण्मासं यावत्तपः करोति, शेषेषु सर्वेऽप्यनुपहारिकाश्च नवंति. एवं विपट्सु मासेष्वेकः कश्चित् कल्पस्थितो नूत्वा, तेऽन्ये सर्वेऽप्यनुपहारिकाश्च नवंति. एवं विधिनाऽष्टादशमासप्रमाणः कल्पो ज्ञातव्यः. कल्पसमाप्तौ तु पुनः परिहारविशुद्धिमंतो नवापि यतयो जिनकल्पं वा गणं वाऽऽश्रयंति. एतदाचारवंतः साधवो हि जिनस्य जिनपार्श्वे स्थितस्य स्थविरस्य गणधरस्य वा समीपं प्रतिपद्यंते, नान्यस्य पार्श्वे तिष्ठंति. तेषां चारित्रं परिहारविशुद्धिकं तृतीयं ज्ञेयं. तथा सूक्ष्मसंपरायं चतुर्थं नवति. सूक्ष्मः किट्टीकरणात् स्वल्पीकृतः संपरायो लोनाख्यः कषायो यत्र तत् सूक्ष्मसंपरायं. एतच्चारित्रं ह्युपशमश्रेणिक्षपकश्रेण्यारूढस्य साधोर्लोनानुवेदनसमये नवति. 'सूक्ष्मं संपरायं' इत्यनुस्वारः प्राकृतत्वात्. ॥ ३२ ॥

अकषायं कषायरहितं क्षपितकषायावस्थायामेतद्भवति, यथाख्यातनामकं तीर्थकरोक्तं पंचमं

ज्ञेयं. इदं हि यथाख्यातं चारित्रं छद्मस्थस्योपशांतमोहाख्ये एकादशे, तथा क्षीणमोहाख्ये द्वादशे गुणस्थाने वर्तमानस्य भवति. वाऽथवा जिनस्य केवलिनस्त्रयोदशे सयोगाख्ये गुणस्थाने, तथाऽयोगाख्ये च चतुर्दशे गुणस्थाने वर्तमानस्य भवति, एतत्पंचविधं चारित्रं भवति. कीदृशं चारित्रं? 'चयरित्तकरं' चयानां कर्मराशीनां रिक्तमभावं करोतीत्येवंशीलं चयानां रिक्तकरं तीर्थंकरैराख्यातं, कर्मराशीनामभावकरं, सामायिकादिपंचविधं चारित्रं कर्मक्षयकारकमित्यर्थः. ॥ ३३ ॥ अथ तपोभेदमाह—

॥ मूलम् ॥—तवो य दुविहो वुत्तो । बाहिरोब्भिंतरो तहा ॥ बाहिरो छव्विहो वुत्तो । एवमब्भिंतरो तवो ॥ ३४ ॥ व्याख्या—तपो द्विविधं प्रोक्तं, बाह्यं तथाभ्यंतरं, बाह्यं षड्विधं प्रोक्तं, एवमिति षड्विधमेवाभ्यंतरमपि तपः प्रोक्तं. ॥ ३४ ॥ अथ ज्ञानदर्शनचारित्राणां मध्ये मोक्षमार्गे कस्य कीदृशो व्यापारो वर्तते? तमाह—

॥ मूलम् ॥—नाणेण जाणई भावं । दंसणेण य सद्दहे ॥ चरित्तेण निगिण्हाइ । तवेण परिसुज्झई ॥ ३५ ॥ व्याख्या—ज्ञानेन मतिज्ञानादिना भावान् जीवाजीवादीन् जाना-

ति, च पुनर्दर्शनेन नगवद्वचनं श्रद्धया श्रद्धत्ते सत्यत्वेनांगीकुरुते. चारित्रेण विरतिप्रत्याख्यानेन निगृह्णाति, विपक्षेभ्यो निवर्तते. तपसा परि समंतात् शुध्यति कर्ममलापगमान्निर्मलो नवतीत्यर्थः. ॥ ३५ ॥ अथ मोक्षफलभूतां गतिमाह—

॥ मूलम् ॥—खवित्ता पुव्वकम्माइं । संजमेण तवेण य ॥ सव्वडुक्खपहीणठा । पक्कमंति महेसिणोत्तिबेमि ॥ ३६ ॥ व्याख्या—महर्षयो महामुनयः संयमेन सप्तदशविधेन, पुनस्तपसा द्वादशविधेन, चशब्दात् ज्ञानदर्शनाभ्यां च पूर्वकर्माणि पूर्वोपार्जितकर्माणि क्षपयित्वा प्रहीणसर्वडुःखार्थाः संतो मोक्षानिलाषिणः संतः प्रक्रमंति पराक्रमं कुर्वतीति सिद्धिं गच्छंति. प्रहीणानि प्रकर्षेण हानिं प्राप्तानि सर्वडुःखानि यत्र तत्प्रहीणसर्वडुःखं मोक्षस्थानं, तदर्थयंतेऽनिलषंतीति प्रहीणसर्वडुःखार्थाः, मोक्षानिलाषिण इत्यर्थः. प्रहीनसर्वडुःखार्था इति स्थाने सर्वडुःखप्रहीनार्था इति पाठस्तु आर्षत्वात्. इत्यहं ब्रवीमीति सुधर्मास्वामी जंबूस्वामिनं प्राह. ॥ ३६ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लनगणिविरचितायां मोक्षमार्गीयाख्यमष्टाविंशमध्ययनं संपूर्णं. २७.

## ॥ अथैकोनत्रिंशत्तममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययने मोक्षमार्गगतिरुक्ता, सा च वीतरागत्वपूर्विकेति यथा वीतरागत्वं स्यात्तथाभिधायकमेकोनत्रिंशत्तमं कथ्यते—

॥ मूलम् ॥ सुयं मे आउसंतेणं भगवया एवमक्खायं, इह खलु सम्मत्तपरिक्कमे नामज्झयणे समणेणं भगवया महावीरेणं कासवेणं पवेइया, जं सम्मं सद्दहित्ता, पत्तियाइत्ता, रोइत्ता, फासित्ता, पालइत्ता, तीरइत्ता, किट्टइत्ता, सोहइत्ता, आराहित्ता आणाए, अणुपालइत्ता बहवे जीवा सिज्झंति बुज्झंति मुच्चंति परिनिव्वाइंति, सव्वदुक्खाणमंतं करंति. इत्यालापकं. ॥ १ ॥ व्याख्या—हे आयुष्मन्निति संबोधनं, हे जंबू! मया श्रुतं, तेन भगवता ज्ञानवता आयुष्मता जीवता विद्यमानेन श्रीमहावीरेणैवमाख्यातमेवं कथितं. एवमिति किमुक्तं? तदाह–इहास्मिन् जगत्यागमे वा खलु निश्चयेन सम्यक्त्वपराक्रमं नामाध्ययनं, सम्यक्त्वे

सति वर्धमानैर्गुणैः कर्मशत्रुजयलक्षणः पराक्रमो वलं यस्मिंस्तत्सम्यक्त्वपराक्रमं नामाध्ययनं श्रमणेन तपस्विना, जगवतैश्वर्ययुक्तेन श्रीमहावीरेण काश्यपगोत्रीयेण प्रवेदितं, यत्सम्यक्त्वपराक्रममध्ययनं श्रद्धाय सूत्रार्थाभ्यां सामान्येन प्रतिपद्य, प्रतीत्य विशेषेण प्रतीतिमानीय, रोचयित्वा तस्याध्ययनस्यार्थाभिलापमनुष्ठानाभिलापमात्मन्युत्पाद्य, पुनः स्पृष्ट्वा मनोवाक्कायैस्तदुक्तानुष्ठानं संस्पृश्य, पालयित्वा तस्याध्ययनस्य गुणेनातीचारवर्जनेन रक्षयित्वा, तीरयित्वाऽनुष्ठानं पारं नीत्वा, कीर्तयित्वा गुरुंप्रति विनयपूर्वकं मया जवद्भ्यः सकाशात्सम्यक्प्रकारेण संपूर्णमधीतमिति कथनेन, शोधयित्वा गुरोर्वचनात् पश्चाच्छुद्धं कृत्वा, आराध्य यथोक्तोत्सर्गापवादनयविज्ञानेन सेवनं कृत्वा, आज्ञया गुर्वादेशेनानुपाल्य, नित्यमासेव्य बहवो जीवाः सिध्यंति, सिद्धिगुणयुक्ता जवंति, बुध्यंति घातिकर्मनिवारणेन तत्त्वज्ञा जवंति, मुच्यंते जवोपग्राहिकर्मचतुष्टयबंधान्मुक्ता जवंति, परिनिर्वांति कर्मदावानलोपशमेन शीतलत्वं प्राप्नुवंति, सर्वदुःखानां शारीरमानसानामंतं कुर्वंति, इत्यालापकार्थः. ॥ १ ॥

॥ मूलम् ॥—तस्स णं अयमठे एवमाहिज्जइ. ॥ २ ॥ व्याख्या—तस्य सम्यक्त्वपरा-

क्रमाध्ययनस्यायं वक्ष्यमाणोऽर्थ एवममुना प्रकारेण श्रीमहावीरेणाख्यायते कथ्यते—॥ २ ॥

॥ मूलम् ॥—तं जहा—संवेगे १ निव्वेए २ धम्मसद्धा ३ गुरुसाहम्मियसुस्सूसणया ४ आलोयणा ५ निंदणया ६ गरहणया ७ सामाइए ८ चउवीसत्थए ९ वंदणे १० पडिक्कमणे ११ काउस्सग्गे १२ पच्चक्खाणे १३ थवथुइमंगले १४ कालपडिलेहणया १५ पायच्छित्तकरणे १६ खमावणया १७ सज्झाए १८ वायणा १९ पडिपुच्छणया २० परियट्टणया २१ अणुप्पेहा २२ धम्मकहा २३ सुयस्स आराहणया २४ एगग्गमणसंनिवेसणया २५ संजमे २६ तवे २७ वोदाणे २८ सुहसाए २९ अप्पडिबद्धया ३० विवित्तसयणासणसेवणया ३१ विणियट्टणया ३२ संभोगपच्चक्खाणे ३३ उवहिपच्चक्खाणे ३४ आहारपच्चक्खाणे ३५ कसायपच्चक्खाणे ३६ जोगपच्चक्खाणे ३७ सरीरपच्चक्खाणे ३८ सहायपच्चक्खाणे ३९ भत्तपच्चक्खाणे ४० सब्भावपच्चक्खाणे ४१ पडिरूवणया ४२ वेयावच्चे ४३ सव्वगुणसंपन्नया ४४ वीयरागया ४५ खंती ४६ मुत्ती ४७ मद्दवे ४८ अज्जवे ४९ भावसच्चे ५० करणसच्चे ५१ जोगसच्चे ५२ मणगुत्तया ५३ वयगुत्तया ५४ कायगुत्तया ५५ मणसमाहारणया ५६ वयसमाहारणया ५७ कायसमाहारणया ५८ नाणसं-

पन्नया ५९ दंसणसंपन्नया ६० चरित्तसंपन्नया ६१ सोइंदियनिग्गहे ६२ चक्खिंदियनिग्गहे ६३ घाणिंदियनिग्गहे ६४ जिब्भिंदियनिग्गहे ६५ फासिंदियनिग्गहे ६६ कोहविजये ६७ माणविजये ६८ मायाविजये ६९ लोहविजये ७० पेज्जदोसमिच्छादंसणविजये ७१ सेलेसी ७२ अकम्मया ७३ इति सूत्रं. ॥ ३ ॥ व्याख्या—एतस्य सम्यक्त्वपराक्रमाध्ययनस्य श्रीमहावीरेण यथानुक्रममर्थो व्याख्यायते, तद्यथा—संवेगो मोक्षाभिलाषः १, निर्वेदः संसाराद्विरक्तता २, धर्मे श्रद्धा धर्मे रुचिः ३, गुरुस्तत्त्वोपदेष्टा, तस्य गुरोः, साधर्मिणः समानधर्मकर्तुश्च शुश्रूषणा सेवा ४, आलोचना गुरोरग्रे पापानां प्रकाशनं ५, निंदना आत्मसाक्षिकमात्मनो निंदा ६, गर्हणा अपरलोकानां पुरतः स्वदोषप्रकाशनं ७, सामायिकं शत्रौ मित्रे साम्यं ८, चतुर्विंशतिस्तवो 'लोगस्सुज्जोयगरे' इत्यादिचतुर्विंशतिजिननामपठनं ९, वंदनं द्वादशावर्त्तवंदनेन गुरोर्वंदना १०, प्रतिक्रमणं पापान्निवर्तनं ११, कायोत्सर्गोऽतीचारशुद्ध्यर्थं कायस्य व्युत्सर्जनं कायममत्ववर्जनं १२, प्रत्याख्यानं मूलगुणोत्तरगुणधारणं १३, स्तवस्तुतिमंगलं, स्तवः शक्रस्तवपाठः, स्तुतिरूर्ध्वीभूय जघन्येन चतुष्टयस्तुतिकथनं, मध्यमेनाष्टस्तुतिकथनं, उत्कृष्टेन

१०७ कथनं. स्तवश्च स्तुतयश्च स्तवस्तुतयः, स्तवस्तुतय एव मंगलं स्तवस्तुतिमंगलं १४. कालप्रतिलेखना, कालस्य व्याघातिकप्रभृतिकालचतुष्टयस्य प्रतिलेखना प्ररूपणाकालग्रहणरूपा कालप्रतिलेखना १५, प्रायश्चित्तकरणं, लग्नस्य पापस्य निवृत्त्यर्थं तपसः करणं १६. क्षामणा अपराधक्षामणं १७. स्वाध्यायश्चतुर्विधो वाचनादिकः १८. वाचना गुरुसमीपे सूत्राक्षराणां ग्रहणं १९. प्रतिपृच्छना गुरोः पुरतः संदेहस्य पृच्छनं २०.

परिवर्तना सूत्रपाठस्य मुहुर्मुहुर्गुणनं २१. अनुप्रेक्षा सूत्रस्य चिंतनं २२. धर्मकथा धर्मसंबद्धाया वार्तायाः कथनं २३. श्रुताराधना सिद्धांतस्याराधना २४. एकाग्रमनःसन्निवेशना, चित्तस्यैकस्मिन् प्रधाने ध्येयवस्तुनि स्थिरीकरणं २५. संयम आश्रवाद्विरतिरूपः २६. तपो द्वादशविधं २७. व्यवदानं, विशेषेणावदानं कर्मशुद्धिर्व्यवदानं, कर्मणां निर्जरा २८. सुखशातं, सुखस्य विषयसुखस्य शातं शातनं स्पृहानिवारणं २९. अप्रतिबद्धता नीरागत्वं ३०. विविक्तशयनासनसेवना स्त्रीपशुपंडकादिरहितशयनासनानामासेवना ३१. विनिवर्तना पंचेंद्रियाणां विषयेभ्यो विशेषेण निवर्तनं ३२. संभोगप्रत्याख्यानं, संभोग एकमंडलीभोक्तृत्वं, तस्य प्र-

त्याख्यानं. गीतार्थावस्थायां जिनकल्पाचारग्रहणेन परिहारः संभोगप्रत्याख्यानं ३३. उपधिप्रत्याख्यानं, रजोहरणमुखवस्त्रिकां विहायाऽन्योपधिपरिहारः ३४. आहारप्रत्याख्यानं सदोषाहारपरिहारः ३५. कषायप्रत्याख्यानं, क्रोधादिपरिहारः ३६. योगप्रत्याख्यानं, मनोवाक्कायानां व्यापारो योगस्तस्य प्रत्याख्यानं परिहारः ३७. शरीरप्रत्याख्यानं, प्रस्तावे समागते शरीरस्यापि व्युत्सर्जनं ३८. साहाय्यप्रत्याख्यानं, साहाय्यकारिणां परिहारः ३९. भक्तपानप्रत्याख्यानमनशनग्रहणं ४०. सद्भावप्रत्याख्यानं, सद्भावेन पुनरकरणेन परमार्थवृत्त्या प्रत्याख्यानं सद्भावप्रत्याख्यानं ४१. प्रतिरूपता, प्रतिः सादृश्ये, ततः प्रतिः स्थविरकल्पिमुनिसदृशो रूपं वेषो यस्य स प्रतिरूपः, प्रतिरूपस्य भावः प्रतिरूपता, स्थविरकल्पिसाधुयोग्यवेषधारित्वं ४२. वैयावृत्त्यं (व्यावृतो गुर्वादिकार्येषु व्यापारवान्,तद्भावो वैयावृत्त्यं.) साधूनामाहाराद्यानयनसाहाय्यं ४३. सर्वगुणसंपन्नता, ज्ञानादिगुणसहितत्वं ४४. वीतरागता रागद्वेषनिवारणं ४५. क्षांतिः क्षमा ४६. मुक्तिर्निर्लोभता ४७. मार्दवं मानपरिहारः ४८. आर्जवं सरलत्वं ४९. भावसत्यमंतरात्मनः शुद्धत्वं ५०. करणसत्यं प्रतिलेखनादिक्रियाविषये निरालस्यं ५१.

योगसत्यं मनोवाक्काययोगेषु सत्यं योगसत्यं ५२. मनोगुप्तित्वं मनसोऽशुभपदार्थाद्गोपनं ५३. वचोगुप्तित्वं वचसोऽशुभपदार्थाद्गोपनं ५४. कायगुप्तित्वं कायस्याऽशुभव्यापाराद्गोपनं ५५. मनःसमाधारणा मनसः शुभस्थाने स्थिरत्वेन स्थापनं ५६. वचःसमाधारणा वचनस्य शुभकार्ये स्थापनं ५७. कायसमाधारणा कायस्य शुभकार्ये स्थापनं ५८. ज्ञानसंपन्नता श्रुतज्ञानसहितत्वं ५९. दर्शनसंपन्नत्वं सम्यक्त्वसहितत्वं ६०. चारित्रसंपन्नत्वं यथाख्यातचारित्रयुक्तत्वं ६१. श्रोत्रेंद्रियनिग्रहः ६२. चक्षुरिंद्रियनिग्रहः ६३. घ्राणेंद्रियनिग्रहः ६४. जिह्वेंद्रियनिग्रहः ६५. स्पर्शेंद्रियनिग्रहः ६६. क्रोधविजयः ६७. मानविजयः ६८. मायाविजयः ६९. लोभविजयः ७०. प्रेयद्वेषमिथ्यादर्शनविजयः, प्रेयं प्रेमरागरूपं. द्वेषोऽप्रीतिरूपः, मिथ्यादर्शनं सांशयिकादि, तेषां विजयः, प्रेयं च द्वेषश्च मिथ्यादर्शनं च प्रेयद्वेषमिथ्यादर्शनानि, तेषां विजयः प्रेयद्वेषमिथ्यादर्शनविजयः ७१. शैलेशी चतुर्दशगुणस्थानस्थायित्वं ७२. अकर्मता कर्मणामभावः ७३. इत्येतेषां त्रिसप्ततिवचनानामर्थमुक्त्वा, अथैतेषामेव प्रत्येकं फलमाह—

॥ मूलम् ॥—संवेगेणं भंते किं जणयइ? संवेगेणं अणुत्तरं धम्मसद्धं जणयइ, अणुत्त-

णाए धम्मसद्धाए संवेगं हव्वमागच्छइ, अणंताणुबंधिकोहमाणमायालोभे खवेइ, नवं च कम्मं न बंधइ, तप्पच्चइयं च णं मिच्छत्तविसोहिं काऊण दंसणाराहए भवइ, दंसणविसोहिएणं विसुद्धाए अत्थेगइए तेणेव भवग्गहणेणं सिज्झइ, सोहिएणं विसुद्धाए तच्च पुणब्भवग्गहणं नाइक्कमइ. ॥ १ ॥ व्याख्या—शिष्यः पृच्छति, हे भदंत! हे पूज्य! संवेगेन मोक्षाभिलाषेण कृत्वा जीवः किं जनयति? किमुत्पादयति? तदा गुरुराह—हे शिष्य! संवेगेन कृत्वा जीवोऽनुत्तरां प्रधानां धर्मश्रद्धां धर्मरुचिं जनयति, तया प्रधानया धर्मस्य श्रद्धया संवेगं मोक्षाभिलाषं 'हव्व' इति शीघ्रमागच्छति प्राप्नोति. ततो नरकानुबंधिनो नरकगतिदायिनोऽनंतानुबंधिक्रोधमानमायालोभांश्चतुरोऽपि कषायान् क्षपयति, नवं च कर्म न बध्नाति. तत्प्रत्ययां, स एवाऽनंतानुबंधिचतुःकषायक्षय एव प्रत्ययः कारणं यस्याः सा तत्प्रत्यया, तां तत्प्रत्ययामनंतानुबंधिकषायक्षयादुत्पन्नां मिथ्यात्वविशुद्धिं सर्वथा मिथ्यात्वक्षातिं कृत्वा दर्शनाराधको भवति. क्षायकशुद्धसम्यक्त्वस्याराधको निरतिचारपालको भवति. ततः सम्यक्त्वविशुद्ध्या विशुद्धयाऽतिनिर्मलयाऽस्त्येकः कश्चिद्भव्यो यः स तेनैव भवग्रहणेन, तेनैव जन्मोपादानेन

सिद्ध्यति सिद्धिं प्राप्नोति. एकः पुनः सम्यक्त्वस्य निर्मलया विशुद्ध्या तृतीयं पुनर्भवग्रहणं नातिक्रामति. इत्यनेन शुद्धक्षायकसम्यक्त्ववान् भवत्रयमध्ये मोक्षं व्रजत्येव. ॥ १ ॥

॥ मूलम् ॥—निव्वेएणं भंते जीवे किं जणयइ? निव्वेएणं दिव्वमाणुसतेरिच्छिएसु कामभोगेसु निव्वेयं हव्वमागच्छइ, सव्वविसएसु विरज्जइ, सव्वविसएसु विरज्जमाणो आरंभपरिग्गहपरिच्चायं करेइ, आरंभपरिग्गहपरिच्चायं करेमाणे संसारमग्गं वोच्छिंदइ, सिद्धिमग्गपडिवन्ने भवइ ॥ २ ॥ व्याख्या—हे भगवन्! पूज्य! निर्वेदेन सामान्येन संसाराद्विरागभावेन जीवः किं जनयति? गुरुराह—निर्वेदेन देवमनुष्यतिर्यग्संबंधिषु कामभोगेषु निर्वेदं विरागं, एते कामभोगा विरसाः, एतेषु कोऽनुरागः? इति बुद्धिः शीघ्रमायाति. तदा सर्वविषयेषु सर्वविषयेभ्यो विरक्तः स्यात्, सर्वविषयेभ्यो विरज्यमानः पुमानारंभः कर्षणादिः, परिग्रहो धनधान्यादिषु मूर्छारूपः, तयोः परित्यागं करोति. आरंभपरिग्रहपरित्यागं कुर्वाणः संसारमार्गं मिथ्यात्वाऽविरत्यादिकं व्युच्छिनत्ति, सिद्धिमार्गं प्रतिपन्नो भवति, शुद्धक्षायकसम्यक्त्वरूपं मुक्तिमार्गप्रत्युन्मुखो भवति. ॥ २ ॥


॥ ૯૩૪ ॥

२८

॥ मूलम् ॥—धम्मसद्धाएणं भंते जीवे किं जणयइ? धम्मसद्धाएणं सायासोक्खेसु रज्जमाणे विरज्जइ, आगारधम्मं च णं चयइ, अणगारेणं जीवे सारीरमाणसाणं दुक्खाणं छेयणभेयणसंजोगादीणं वोच्छेदं करेइ, अव्वाबाहं च णं सुहं निव्वत्तेइ ॥ ३ ॥ व्याख्या—हे स्वामिन्! हे पूज्य! धर्मश्रद्धया धर्मविषये रुच्या जीवः किं जनयति? गुरुराह—हे शिष्य! धर्मश्रद्धया सातासुखेषु सातावेदनीयकर्मजनितसुखेषु विषयसुखेषु रज्यमानः पूर्वं रागं कुर्वाणो विरज्यते विरक्तो भवति. तदाऽगारधर्मं गृहस्थधर्मं त्यजति, ततश्चानगारः साधुः सन् जीवः शारीरमानसानां दुःखानां व्याधीनां छेदनभेदनसंयोगवियोगादीनां कष्टानां व्युच्छेदं करोति, तन्निबंधनकर्मोच्छेदं करोति. ततश्चाऽव्याबाधसुखं मोक्षसुखं निर्वर्तयति. मोक्षसुखं निष्पादयतीत्यर्थः. ॥ ३ ॥ धर्मश्रद्धानंतरं गुर्वादीनां शुश्रूषको भवति, अतस्तत्फलं प्रष्टुकामः शिष्य आह—

॥ मूलम् ॥—गुरुसाहम्मियसुस्सुसणयाणं भंते जीवे किं जणयइ? गुरुसाहम्मियसुस्सुसणयाएणं विणयपडिवत्तिं जणयइ, विणयपडिवन्नयेणं जीवे अणच्चासायणसीले नेरइयति-

रकजोणियमणुस्सदेवकुगइओ निरुंनइ, वन्नसंजलणनत्तिबहुमाणयाए मणुस्सदेवसुग्गइओ निबंधइ, सिद्धिसुगइं च विसोहेइ, पसत्थाइं च विणयमूलाइं सव्वकज्जाइं सोहेइ, अन्ने य बहवे जीवे विणयत्ता नवइ. ॥ ४ ॥ व्याख्या—हे नगवन्! गुरूणामाचार्याणां साधर्मिकाणामेकधर्मवतां शुश्रूषया सेवया जीवः किं जनयति? तदा गुरुराह—गुरुसाधर्मिकशुश्रूषया विनयप्रतिपत्तिं विनयधर्मस्याराधनां विनयांगीकारत्वं जनयति. विनयं प्रतिपन्नः प्रतिपन्नविनयोंगीकृतविनयो जीवोऽनत्याशातनशीलः सन्नाचार्यादीनामन्नक्तिनिंदाहीलाऽवर्णवादाद्याशातनानिवारकः सन् नरकतिर्यग्योनिं, तथा मनुष्यदेवयोः कुगतिं च रुणद्धि निषेधयति. आचार्याणामत्याशातनानिवारको नरो नरकयोनौ नोत्पद्यते, तिर्यग्योनौ च नोत्पद्यते, मनुष्येषु कुयोनौ म्लेछादौ, देवेषु कुयोनौ किल्विषादौ नोत्पद्यते.

तथा पुनर्वर्णसंज्वलननक्तिबहुमानतया मानवेषूच्चैःकुलेषु सर्वसुखनाग् मनुष्यः स्यात्. वर्णः श्लाघा, तेन वर्णेन संज्वलनं गुणप्रकटीकरणं वर्णसंज्वलनं, नक्तिरन्युत्थानादिका, बहुमानोऽन्यंतरप्रीतिविशेषः, वर्णश्च संज्वलनं च नक्तिश्च बहुमानश्च वर्णसंज्वलननक्तिबहु-



२८

मानाः, तेषां नावो वर्णसंज्वलनन्नक्तिबहुमानता, तया वर्णसंज्वलनन्नक्तिबहुमानतया पुमान् नवेत. यस्य गुणश्लाघानक्तिप्रीनयः सर्वैः क्रियते. तादृगुत्तमकुलप्रसूतो नरः स्यादित्यर्थः. देवोऽपि च महर्द्धिकः स्यात्. च पुनः स सिद्धिसद्गतिं च मोक्षरूपां समीचीनगतिं विशेषेण शोधयति. प्रशस्तानि च विनयमूलानि श्रुतज्ञानादीनि सर्वाणि धर्मकार्याणि शोधयति. स च स्वयं विनयमूलसर्वकार्यविशोधकः सन्नन्यानपि बहून् जीवान् विनेता विनयं ग्राहयिता नवति. ॥४॥ गुरुशुश्रूषां कुर्वाणस्याऽतीचारसंनवेऽतीचारालोचनायत्फलं नवति, तत्प्रश्नपूर्वमाह—

॥ मूलम् ॥—आलोयणाएणं नंते जीवे किं जणयइ? आलोयणाएणं मायानियाणमिच्छादरिसणसल्लाणं मोरकमग्गविग्घाणं अणंतसंसारवद्धणाणं उद्धरणं करेइ, उज्जुनावं च जणयइ. उज्जुनावपडिवन्नेवि य णं जीवे अमाई इत्थिवेयं नपुंसगवेयं ण बंधइ, पुव्वबद्धं च निज्जरेइ. ॥ ५ ॥ व्याख्या—हे नगवन्! हे नदंत! हे पूज्य आलोचनया गुर्वग्रे आत्मनो दोषप्रकाशनेन किं जनयति? तदा गुरुराह—आलोचनया कृत्वा जीवो मायानिदानमिथ्यादर्शनशल्यानामुद्धरणं करोति. तत्र माया कापट्यं, निदानं तपसो विक्रयः, समास्य

२८

तपसः फलं स्यात्तर्हि राज्येंद्रादिपदत्नागहं स्यामिति निदानं. मिथ्यादर्शनं सांशयिकादिवि-
परीतमतिरूपं, माया च निदानं च मिथ्यादर्शनं च मायानिदानमिथ्यादर्शनानि, तान्ये-
व शल्यानि मायानिदानमिथ्यादर्शनशल्यानि, तेषामुद्धरणं दूरीकरणं करोतीत्यर्थः. कीदृशा-
नां मायानिदानमिथ्यादर्शनशल्यानां? मोक्षमार्गे विघ्नानां विघ्नकारकाणां, पुनः कीदृशानां?
अनंतसंसारवर्धनानां. पुनः ऋजुत्नावं सरलत्वं जनयति, ऋजुत्नावं प्रतिपन्नोऽपि निश्चयेन, णं
वाक्यालंकारे, जीवोमायी मायारहितः सन् स्त्रीवेदं नपुंसकवेदं न बध्नाति. स्त्रीवेदनपुंसक-
वेदं चेत्पूर्वं बद्धं स्यात्तर्हि निर्जरयति. ॥ ५ ॥ आलोचना हि दुःकृतनिंदाकारकस्यैव सफला
स्यात्, अतस्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—निंदणयाएणं त्नंते जीवे किं जणयइ? निंदणयाएणं पच्छाणुतावं जणय-
इ, पच्छाणुतावेणं विरज्जमाणे करणगुणसेढिं पडिवज्जइ, करणगुणसेढिं पडिवन्ने य अणगारे
मोहणियं कम्मं उग्घाएइ. ॥ ६ ॥ व्याख्या—हे त्नदंत! निंदनया जीवः किं जनयति? गु-
रुराह हे शिष्य! आत्मनः पापस्य निंदनेन पश्चात्तापं जनयति, हा! मया दुष्कृतं कृतं, इ-

त्यादिबुद्धिमुत्पादयति, पश्चात्तापेन विरज्यमानो वैराग्यं प्राप्नुवन् सन् करणगुणश्रेणिं. अपूर्वकरणेन पूर्वं कदाप्यप्राप्तेन विशदमनःपरिणामविशेषेण गुणश्रेणिं क्षपकश्रेणिं प्रतिपद्यतेंगीकुरुते. करणगुणश्रेणिं प्रतिपन्नः प्रतिपन्नापूर्वगुणश्रेणिः सन्ननगारः साधुर्मोहनीयं कर्म दर्शनमोहनीयादिकं कर्मोद्घातयतेऽतिशयेन क्षपयति. ॥ ६ ॥ कश्चित्स्वदोषान्निंदन्नपि पापभीरुतया गर्हामपि कुर्यात्, अतस्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् —गरहणाएणं भंते जीवे किं जणयइ? गरहणाएणं अपुरक्कारं जणयइ, अपुरक्कारगएणं जीवे अप्पसत्थेहिंतो जोगेहिंतो निवत्तेइ, पसत्थे य पवत्तेइ, पसत्थजोगपडिवन्ने य णं अणगारे अणंतघाइपज्जवे खवेइ. ॥ ७ ॥ व्याख्या—शिष्यः पृच्छति. हे स्वामिन्! गर्हणेन परसमक्षमात्मनो दोषोद्भावनेन जीवः किं जनयति? तदा गुरुराह—हे शिष्य! जीवो गर्हणेनाऽपुरस्कारं जनयति, आत्मनि गुरुत्वारोपणं पुरस्कारः, न पुरस्कारोऽपुरस्कारस्तमपुरस्कारमात्मनोऽवहीलां जनयति. यदा हि स्वस्य गर्हणां करोति, स्वस्य धिक्क्रियां करोति, तदाऽवहीलावान् भवति. अपुरस्कारगतो जीवोऽप्रशस्तेभ्यः कर्मबंधहेतुभ्यो

योगेभ्यो निवर्तते, अप्रशस्तकर्मबंधहेतुयोगान्नांगीकुरुते, प्रशस्तयोगांस्तु प्रतिपद्यते. प्रशस्तयोगप्रतिपन्नश्च, प्राकृतत्वात्प्रतिपन्नप्रशस्तयोगोंगीकृतसम्यग्योगोऽनगारोऽनंतघातिनः पर्यायान् क्षपयति. अनंतविषयतयाऽनंते ज्ञानदर्शने हंतुं विनाशयितुं शीलं येषां तेऽनंतघातिनः, तान् पर्यायान् ज्ञानावरणादिकर्मणां पर्यवान् परिणतिविशेषान् क्षपयति. ॥ ७ ॥ आलोचनादीनि सामायिकवत एव भवंतीत्यतस्तत्प्रश्नोत्तरपूर्वं फलमाह—

॥ मूलम् ॥—सामाइएणं भंते जीवे किं जणयइ? सामाइएणं सावज्जजोगविरइं कुणइ. ॥ ८ ॥ व्याख्या—हे भदंत! सामायिकेन समतारूपेण जीवः किं जनयति? गुरुराह—हे शिष्य! सामायिकेन सावद्ययोगविरतिं जनयति, कर्मबंधकारणेभ्यः सपापमनोवाक्काययोगेभ्यो विरतिं पश्चान्निवर्तनं जनयति. ॥ ८ ॥ अथ सामायिकवांश्चतुर्विंशतिजिनस्तुतिं विधत्ते, तत्कारकस्य फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—चउवीसत्थएणं भंते किं जणयइ? चउवीसत्थएणं दंसणविसोहिं जणयइ. ॥ ९ ॥ व्याख्या—हे भदंत! हे स्वामिन्! चतुर्विंशतिस्तवेन 'लोगस्सुज्जोयगरे' इ-

ल्यादिपठनेन जीवः किं जनयति? गुरुराह—हे शिष्य! चतुर्विंशतिस्तवेन दर्शनविशुद्धिं जनयति, सम्यक्त्वनैर्मल्यं करोति. ॥ ए ॥

॥ मूलम् ॥—वंदणएणं भंते जीवे किं जणयइ? वंदणएणं नीयागोयं कम्मं खवेइ, उच्चागोयं कम्मं निबंधइ, सोहग्गं च अप्पडिहयं आणाफलं निवत्तेइ, दाहीणभावं च जणयइ. ॥ १० ॥ व्याख्या—हे भदंत! हे पूज्य! वंदनकेन गुरूणां द्वादशावर्त्तविधिवंदनेन जीवः किं जनयति? गुरुराह—हे शिष्य! श्रीगुरूणां वंदनकेन नीचैर्गोत्रं कर्म क्षपयति, गुरूणां वंदनकारी नीचैर्गोत्रे नावतरतीत्यर्थः, पूर्वबद्धं च क्षपयति. उच्चैर्गोत्रकर्म बध्नाति, उच्चैर्गोत्रेऽवतरतीत्यर्थः. पुनरुच्चैर्गोत्रेऽवतीर्णः सन् सौभाग्यं सर्वलोकेषु वल्लभत्वं, पुनरप्रतिहतं केनापि निवारयितुमशक्यमाज्ञाफलमाज्ञासारं प्रभुत्वं निर्वर्तयत्युत्पादयति. च पुनर्दाक्षिण्यभावं सर्वलोकानामनुकूलत्वं जनयति. ॥ १० ॥ एतद्गुणोपयुक्तेन साधुना आदीश्वरमहावीरयोस्तीर्थे प्रवर्तमानेनावश्यं प्रतिक्रमणं कार्यं, अतस्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—पडिक्कमणेणं भंते जीवे किं जणयइ? पडिक्कमणेणं वयछिद्दाइ पेहेइ, पि-

हियछिद्दे पुण जीवे निरुद्धासवे असबलचरित्ते, अठसु पवयणमायासु उवउत्ते, अपहुत्ते सुप्पणिहिए विहरइ. ॥ ११ ॥ व्याख्या—हे भदंत! प्रतिक्रमणेन जीवः किं जनयति? गुरुराह—हे शिष्य! प्रतिक्रमणेनाऽपराधेभ्यः पश्चान्निवर्तनेन व्रतछिद्राणि पिदधाति, व्रतानां प्राणातिपातविरमणादीनां छिद्राण्यतीचारान् स्थगयति रुणद्धि, पिहितव्रतछिद्रः सन् पुनर्जीवो निरुद्धाश्रवो भवति, निरुद्धाश्रवश्च पुनरशबलचारित्रो निर्मलचारित्रोऽष्टसु प्रवचनमातृषूपयुक्तः सन् समितिगुप्तिषु सावधानः सन्नपृथक्त्वः संयमयोगेभ्योऽभिन्नः सन् सुप्रणिहितो विहरति, सुप्रणिहितान्यसन्मार्गान्निषेध्य सन्मार्गे व्यवस्थापितानींद्रियाणि येन स सुप्रणिहितेंद्रियः सन्मार्गप्रस्थापितेंद्रियः साधुः स्वमार्गे विहरतीत्यर्थः. ॥११॥ अत्रातीचारविशुद्ध्यर्थं कायोत्सर्गं करोति, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—काउसग्गेणं भंते जीवे किं जणयइ? काउसग्गेणं तीयपडुप्पन्नं पायच्छित्तं विसोहेइ, विसुद्धपायच्छित्तेणं जीवे निव्वुइयहियए ओहरियभरुव्वभारवहो पसत्थझाणोवगए सुहेणं विहरइ. ॥१२॥ व्याख्या—हे भदंत! कायोत्सर्गेऽतीचारविशुद्ध्यर्थं कायस्य व्युत्सर्जनेन

जीवः किं जनयति? गुरुराह—हे शिष्य! कायोत्सर्गेणातीतं चिरकालसंभूतं, प्रत्युत्पन्नमासन्नकाले वर्तमानं प्रायश्चित्तमुपचारात्प्रायश्चित्तार्हमतीचारं विशोधयत्यपनयति. विशुद्धप्रायश्चित्तश्च जीवो निर्वृतं स्वस्थीकृतं हृदयं यस्य स निर्वृतहृदयः प्रशस्तसद्भावनायामुपगतः सुखंसुखेन विहरति, सुखानां परंपरया विचरति. क इव? अपहृतभारो भारवह इव, यथोत्तारितभारनरो भारवाहकः सुखंसुखेन विहरति, तथा कायोत्सर्गेण प्रायश्चित्तविशुद्धिं विधाय स्वस्थीकृतहृदयो जीवः सुखेन विचरतीति भावः. ॥ १२ ॥ एवमपि शुद्ध्यमानेन प्रत्याख्यानं कार्यं. अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—पच्चक्खाणेणं भंते जीवे किं जणयइ? पच्चक्खाणेणं आसवदाराइं निरुंभइ, पच्चक्खाणेणं इच्छानिरोहं जणयइ, इच्छानिरोहगएणं जीवे सव्वदव्वेसु विणीयतण्हे सीयलभूए विहरइ. ॥ १३ ॥ व्याख्या—हे भदंत! प्रत्याख्यानेन मूलगुणोत्तरगुणरूपप्रत्याख्यानेन रूपेण जीवः किं जनयति? गुरुराह—हे शिष्य! प्रत्याख्यानेनाश्रवद्वाराणि निरुणद्धि, अतिशयेनावृणोति. अत्र प्रत्यंतरे कुत्रचिदयं प्रश्नोति—हे स्वामिन्! प्रत्याख्यानेन जीवः किं ज-

नयति? अत्रोत्तरं—हे शिष्य! प्रत्याख्यानेनेछानिरोधमाहारादिवांछाया निरोधं जनयति. इछानिरोधं प्राप्तो जीवः सर्वद्रव्येषु सुविनीततृष्णो भवति, सुतरामतिशयेन विनीता स्फेटिता तृष्णा येन स सुविनीततृष्णः, अत्यंतदूरीकृततृष्णः सन् शीतलीभूतो विहरति, बाह्याभ्यंतरसंतापरहितो विचरति. ॥ १३ ॥ प्रत्याख्यानानंतरं चैत्यवंदना कार्या, अतस्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—थवथुइमंगलेणं भंते जीवे किं जणयइ? थवथुइमंगलेणं नाणदंसणचरित्तबोहिलाभं जणयइ, नाणदंसणचरित्तबोहिलाभसंपन्ने य जीवे अंतकिरियं कप्पविमाणोववत्तियं आराहणं आराहेइ. ॥ १४ ॥ व्याख्या—हे भदंत! स्तवः शक्रस्तवरूपः, स्तुतिर्योध्वीभूयकथनरूपा, अथवैकादिसप्तश्लोकांता यावदष्टोत्तरशतश्लोका वाच्याः. स्तुतिश्च स्तवश्च स्तुतिस्तवौ, तावेव मंगलं भावमंगलरूपं स्तुतिस्तवरूपं मंगलं, तेन स्तुतिस्तवमंगलेन जीवः किं जनयति? स्तवस्तुतिमंगलेनेति पाठस्तु आर्षत्वात्. गुरुः प्रश्नोत्तरमाह—हे शिष्य! स्तुतिस्तवमंगलेन जीवो ज्ञानदर्शनचारित्रबोधिलाभं जनयति. तत्र ज्ञानं मतिश्रु-

॥ ८७४ ॥

नादि. दर्शनं क्षायिकसम्यक्त्वं, चारित्रं विरतिरूपं, तद्रूप एव बोधिलाभो जैनधर्मप्राप्तिर्ज्ञानदर्शनचारित्रबोधिलाभस्तं जनयति. ज्ञानदर्शनचारित्रबोधिलाभसंपन्नश्च जीव आराधनां ज्ञानादीनामासेवनामाराधयति साधयति. कीदृशीमाराधनां? कल्पविमानोत्पत्तिकां, कल्पाश्च विमानानि च तेषूत्पत्तिर्यस्याः सा कल्पविमानोत्पत्तिका, तां. पुनः कीदृशीमाराधनां? अंतक्रियां, अंतस्य संसारस्य कर्मणां वाऽवसानस्य क्रियांतक्रिया, तां, एवंभूतां ज्ञानाद्याराधनां साधयति. कल्पाः सौधर्मादयो देवलोकाः, विमानानि नवग्रैवेयकपंचानुत्तरविमानानि. ज्ञानाद्याराधनया कश्चिद्भरतादिवद्दीर्घकालेन मुक्तिं प्राप्नोति, कश्चिद्गजसुकुमालवत्स्वल्पकालेनैव मुक्तिं प्राप्नोतीति भावः. ॥ १४ ॥ अर्हच्चैत्यवंदनानंतरं स्वाध्यायो विधेयः, स च कालं दृष्ट्वैव विधीयते, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—कालपडिलेहणयाएणं भंते जीवे किं जणयइ? कालपडिलेहणयाएणं नाणावरणिज्जं कम्मं खवेइ. ॥ १५ ॥ व्याख्या—हे भदंत! कालप्रतिलेखनया, कालस्य प्रादोषिकप्राभातिकादिकस्य प्रतिलेखना प्रत्युप्रेक्षणा, सिद्धांतोक्तविधिना सत्यप्ररूपणाग्रहणप्रति-

जागरणासावधानत्वं कालप्रतिलेखना, तया जीवः किं जनयति? गुरुराह—हे शिष्य! कालप्रतिलेखनया जीवो ज्ञानावरणीयं कर्म क्षपयति. ॥ १५ ॥ कदाचिदकालपाठे प्रायश्चित्तं कर्तव्यं, तदा प्रायश्चित्तकरणे यत्फलं तदपि प्रश्नपूर्वमाह—

॥ मूलम् ॥—पायच्छित्तकरणेणं भंते जीवे किं जणयइ? पायच्छित्तकरणेणं पावकम्मविसोहिं जणयइ, निरइयारे आवि भवइ, सम्मं च णं पायच्छित्तं पडिवज्जमाणे मग्गं च मग्गफलं च विसोहेइ, आयारं च आयारफलं च आराहेइ. ॥ १६ ॥ व्याख्या—हे भदंत! प्रायश्चित्तकरणेन पापशुद्धिकरणेनालोचनादिकेन जीवः किं जनयति? गुरुर्वदति, हे शिष्य! प्रायश्चित्तकरणेन पापकर्मविशोधिं जनयति, ततश्च निरतीचारोऽतीचाररहितो भवति. सम्यक् प्रायश्चित्तं प्रतिपद्यमानः सन् मार्गं सम्यक्त्वं, च पुनर्मार्गफलं, मार्गस्य सम्यक्त्वस्य फलं ज्ञानं, तद्विशोधयति, च पुनराचारमाराधयति, आचारशब्देन चारित्रमाराधयति. पुनराचारस्य चारित्रस्य फलं मोक्षमाराधयति साधयति. ॥ १६ ॥ प्रायश्चित्तं यदा करोति, तदा क्षामणामपि करोत्येव, अतस्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—खमावणयाएणं जंते जीवे किं जणयइ? खमावणयाएणं पल्हायणभावं जणयइ. पल्हायणजावगए सवपाणभूयजीवसत्तेसु मित्तीजावं उप्पाएइ, मित्तीजावमुपगएयावि जीवे जावविसोहिं काऊण निप्नए जवइ. ॥ १७ ॥ व्याख्या—हे जदंत! क्षामणया, दुःकृतानंतरं क्षंतव्यमिदं ममेत्यादिरूपया जीवः किं जनयति? गुरुराह—हे शिष्य! क्षामणया गुरोरग्रे स्वकृतनिंदया प्रह्लादनजावं चित्तप्रसत्तिरूपं जनयति, प्रह्लादनजावमुपगतो जीवः सर्वप्राणभूतजीवसत्वेषु, प्राणाश्च भूताश्च जीवाश्च सत्वाश्च प्राणभूतजीवसत्वाः, सर्वे च ते प्राणभूतजीवसत्वाश्च सर्वप्राणभूतजीवसत्वाः, तेषु मैत्रीजावमुत्पादयति. मैत्रीजावं गतस्तु जीवो जावविशोधिं कृत्वा रागद्वेषनिवारणं विधायेहलोकादिसप्तजयानि निवार्य निर्जयो जवति. ॥ १७ ॥ क्षामणाकारिणा साधुना स्वाध्यायः कर्तव्यः, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—सप्ताएणं जंते जीवे किं जणयइ? सप्ताएणं नाणावरणिज्जं कम्मं खवेइ. ॥ १८ ॥ व्याख्या—हे भदंत! स्वाध्यायेन पंचप्रकारेण जीवः किं जनयति? गुरुराह—हे शिष्य! स्वाध्यायेन ज्ञानावरणीयं कर्म क्षपयति. ॥ १८ ॥ तत्र पंचविधस्य स्वाध्यायस्य पृ-

थकफलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—वायणयाएणं भंते जीवे किं जणयइ? वायणयाएणं निज्जराणं जणयइ, सुयस्स अणासायणाए वट्टइ, सुयस्स अणासायणाए वट्टमाणे तित्थधम्मं अवलंबइ, तित्थधम्मं अवलंबमाणे महानिज्जरे महापज्जवयाणे भवइ. ॥ १९ ॥ व्याख्या—हे पूज्य ! वाचनया, वाचयतीति वाचना पाठना, तया जीवः किं जनयति? गुरुराह—हे शिष्य! वाचनया सिद्धांतवाचनेन निर्जरां कर्मशाटनं जनयति, तथा पुनः श्रुतस्याऽनाशातनायां प्रवर्तते, तत्र च प्रवर्तमानो जीवस्तीर्थो गणधरस्तस्य धर्म आचारः श्रुतप्रदानरूपस्तीर्थधर्मस्तमालंबते. ततस्तीर्थधर्ममवलंबमानस्तीर्थधर्ममाश्रयन् महानिर्जरो भवति, महानिर्जरा यस्य स महानिर्जरो महाकर्मविध्वंसको भवति. पुनर्महापर्यवसानो महत्प्रशस्यं मुक्त्यवाप्त्या पर्यवसानमंतः कर्मणो भवस्य वा यस्य स महापर्यवसानश्च भवति, मुक्तिभाग्भवतीति हार्दं. ॥ ॥१९॥ अथ गृहीतवाचनेन पुनः संशयादौ पुनः पृच्छनं प्रतिपृच्छना, अतस्तत्फलं प्रश्नपूर्वकमाह-

॥ मूलम् ॥—पडिपुच्छणयाएणं भंते जीवे किं जणयइ? पडिपुच्छणयाएणं सुत्तत्थतदु-

नयाइं विसोहेइ, कंखामोहणिज्जं कम्मं वुच्छिंदइ. ॥ २० ॥ व्याख्या—हे स्वामिन्! प्रतिपृ-
च्छनया पूर्वाधीतस्य सूत्रादेः पुनःपृच्छनेन जीवः किं जनयति? गुरुराह—हे शिष्य! प्रतिपृच्छ-
नया सूत्रार्थतदुभयानि विशोधयति, सूत्रार्थयोः संशयं निवार्य निर्मलत्वं विधत्ते, तथा कां-
क्षामोहनीयं कर्म व्युच्छिनत्ति, कांक्षाशब्देन संदेहः, कांक्षया संदेहेन मोहनं कांक्षामोहनं,
तत्र नवं कांक्षामोहनीयं, एतत्कर्म विशेषेणापनयति. इदमित्थं तत्वं, अथवेदमित्थं नास्ति,
वेदं समाध्ययनाय योग्यमयोग्यं वेत्यादिघटना कांक्षा वांछा, तद्रूपमेव मोहनीयं कर्माऽनभिग्र-
हिकमिथ्यात्वरूपं. तद्विनाशयति. ॥ २० ॥ अधीत्य पुनः संदेहमपि प्रतिपृच्छनेन निराकृत्य
यदि परावर्तनं गुणनं न क्रियते, तदा सुष्ठ्वधीतमपि शास्त्रं विस्मरति, अतः परावर्तनेन यत्फ-
लं स्यात्तदपि प्रश्नपूर्वमाह—

॥ मूलम् ॥—परियट्टणयाएणं भंते जीवे किं जणयइ? परियट्टणयाएणं वंजणाइं जणयइ,
वंजणलद्धिं च उप्पाएइ. ॥ २१ ॥ व्याख्या—हे पूज्य! हे स्वामिन्! परिवर्तनया शास्त्रस्य
गुणनेन जीवः किं जनयति? गुरुराह—हे शिष्य! परिवर्तनया जीवो व्यंज्यतेऽर्थ एभिरिति

व्यंजनान्यक्षराणि जनयति, विस्मृतान्यक्षराण्यानयति. तथाविधकर्मक्षयोपशमाद्व्यंजनलब्धिं व्यंजनसमुदायरूपां पदलब्धिं पदानुसारिणीं लब्धिं जनयति. ॥ २१ ॥ सूत्रवदर्थस्यापि विस्मरणसंभवात्सूत्रार्थयोश्चिंतनं विधेयं, अतस्तत्फलमपि प्रश्नपूर्वमाह—

॥ मूलम् ॥—अणुप्पेहाएणं भंते जीवे किं जणयइ? अणुप्पेहाएणं आउयवज्जाउ सत्तकम्मपयडीउ धणियबंधणबद्धाउ सिथिलबंधणबद्धाउ पकरेइ, दीहकालठियाउ हस्सकालठियाउ पकरेइ, तिव्वाणुभावाउ मंदाणुभावा पकरेइ, बहुपएसग्गाउ अप्पपएसग्गाउ पकरेइ, आउसं च णं कम्मं सियबंधइ सिय नो बंधइ, असायावेयणिज्जं च णं कम्मं नो भुज्जो भुज्जो उवचिणइ, अणाइयं च णं अणवयग्गं दीहमद्धं चाउरंतसंसारकंतारं खिप्पामेव वीईवयइ. ॥ २२ ॥ व्याख्या—हे भदंत! हे स्वामिन्! अनुप्रेक्षया सूत्रार्थचिंतनिकया जीवः किं जनयति? गुरुराह—हे शिष्य! अनुप्रेक्षया कृत्वा जीवः सप्तकर्मप्रकृतीर्ज्ञानावरणदर्शनावरणवेदनीयमोहनीयनामगोत्रांतरायरूपाणां सप्तानां कर्मणां प्रकृतय एकशतचतुःपंचाशत्प्रमाणाः सप्तकर्मप्रकृतयस्ताः सप्तकर्मप्रकृतीः, धणियबंधणबद्धा गाढबंधनबद्धा निका-

चिता बद्धाः शिथिलबंधनबद्धाः प्रकरोति. यतो ह्यनुप्रेक्षा स्वाध्यायविशेषः, सा तु मनसस्त-स्यैव नियोजनाद्भवति, स चानुप्रेक्षास्वाध्यायो ह्यभ्यंतरं तपः, तपस्तु निकाचितकर्माणि शि-थिलीकर्तुं समर्थं भवत्येव. कथंभूताः सप्तकर्मप्रकृतीः? आयुर्वर्जाः, प्रकृष्टभावहेतुत्वेनायुर्वर्ज-यंतीत्यायुर्वर्जाः, पुनर्हे शिष्य! अनुप्रेक्षया कृत्वा जीवस्ता एव कर्मप्रकृतीर्दीर्घकालस्थितिकाः शु-भाध्यवसाययोगात् स्थितिखंडानामपहारेण ह्रस्वकालस्थितिकाः प्रकरोति, प्रचुरकालभोग्यानि कर्माणि स्वल्पकालभोग्यानि करोतीत्यर्थः. पुनस्तीव्रानुभावाः कर्मप्रकृतीर्मंदानुभावाः प्रकरोति. तीव्र उत्कटोऽनुभावो रसो यासां तास्तीव्रानुभावाः, ईदृशीः कर्मप्रकृतीर्मंदो निर्बलोऽनुभावो यासां ता मंदानुभावास्तादृशीः प्रकर्षेण विदधाति. पुनर्बहुप्रदेशाग्रा अल्पप्रदेशाग्राः प्रकरोति, बहुप्रदेशाग्रं कर्मपुद्गलदलिकप्रमाणं यासां ता बहुप्रदेशाग्राः, एतादृशीः कर्मप्रकृतीरल्पप्रदेशाग्राः प्रकरोति. इत्यनेनानुप्रेक्षयाऽशुभश्चतुर्विधोऽपि बंधः, प्रकृतिबंधः, स्थितिबंधः, अनुभागबंधः, प्रदेशबंधश्च, शुभत्वेन परिणमतीत्यर्थः. अत्र चायुर्वर्जमित्युक्तं तत्त्वेकस्मिन् भवे सकृदेवांत-र्मुहूर्तकाले एवायुर्जीवो बध्नाति, च पुनरायुःकर्मापि स्याद्बध्नाति, स्यान्न बध्नाति, संसारमध्ये

तिष्ठति चेत्तर्ह्यशुन्नमायुर्न बध्नाति, शुन्नं चायुर्बध्नाति, जीवेन तृतीयन्नागादिशेषायुष्केणायुः-
कर्म बध्यते, अन्यथा न बध्यते, तेनायुःकर्मबंधे निश्चयो नोक्तः, इत्यनेन मुक्तिं व्रजति त-
दायुर्न बध्नातीत्युक्तं. पुनरनुप्रेक्षया कृत्वा जीवोऽसातावेदनीयं कर्म शारीरादिदुःखहेतु च क-
र्म, चशब्दादन्याश्चाऽशुन्नप्रकृतीर्नो नूयोनूय उपचिनोति. अत्र भूयोनूयग्रहणेनैवं ज्ञेयं,
कश्चिद्यतिः प्रमादस्थानके प्रमादं व्रजेत्तदा बध्नात्यपीति हार्दं. पुनरनुप्रेक्षया कृत्वा जीवश्चातु-
रंतं संसारकांतारं क्षिप्रमेव ' वीईवयइ ' इति व्यतिव्रजति. चत्वारश्चतुर्गतिलक्षणा अंता
अवयवा यस्य तच्चातुरंतं, तदेव संसारकांतारं संसारारण्यं, तच्छीघ्रमुल्लंघयति. कीदृशं संसा-
रारण्यं? अनादिकमादेरन्नावादादिरहितं. पुनः कीदृशं संसारकांतारं? अनवदग्रं, अनवद-
नागब्दग्रं परिमाणं यस्य तदनवदग्रमनंतमित्यर्थः. प्रवाहापेक्षयाऽनाद्यनंतं. पुनः कीदृशं? दी-
र्घाध्वं दीर्घकालं. ' दीहमद्धं ' इत्यत्र मकारोऽलाक्षणिकः प्राकृतत्वात्. ॥ २२ ॥ एवमन्यस्त-
शास्त्रेण धर्मकथा कर्तव्या. ततो धर्मकथाकर्तुः किं फलं स्यात्? अतस्तत्फलमपि प्रश्नपूर्वमाह—

॥ मूलम् ॥—धम्मकहाएणं नंते जीवे किं जणयइ? धम्मकहाएणं पवयणं पन्नावेइ,

पवयणप्पत्नावएणं जीवे आगमेसिस्स भद्दत्ताए कम्मं निबंधइ. ॥ २३ ॥ व्याख्या—हे स्वामिन्! धर्मकथया जीवः किं जनयति? गुरुराह—हे शिष्य! धर्मकथया धर्मव्याख्यानेन जीवः प्रवचनं श्रीसिद्धांतं जगवद्वचनं प्रज्ञावयति प्रकाशयति. प्रवचनप्रज्ञावकः सिद्धांतोद्दीपको जीव आगमिष्यद्भद्रतयोपलक्षितंकर्म निबध्नाति, आगामिनि काले जद्रत्वेनोपलक्षितमर्थात्शुत्तं कर्म समुपार्जयतीति जावः. ॥२३॥ पंचविधस्वाध्यायरतेन श्रुतमाराधितं स्यादतस्तस्य फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—सुयस्स आराहणयाएणं जंते जीवे किं जणयइ? सुयस्स आराहणयाए अन्नाणं खवेइ, न य संकिलिस्सइ. ॥ २४ ॥ व्याख्या—हे जदंत! श्रुतस्याराधनया जीवः किं जनयति? गुरुराह—हे शिष्य! श्रुतस्याराधनया सम्यगासेवनयाऽज्ञानं क्षपयति, विशिष्टतत्वावबोधस्यावाप्तेः. च पुनर्न संक्लिश्यते, रागद्वेषजनितं क्लेशं न जजतीति जावः. ॥२४॥ श्रुताराधना चैकाग्रमनःसंनिवेशनावत एव स्यादतस्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—एगग्गमणसंनिवेसणयाएणं जंते जीवे किं जणयइ? एगग्गहणसंनिवेस-

णयाएणं चित्तनिरोहं जणयइ. ॥ २५ ॥ व्याख्या—हे नदंत! हे स्वामिन्! एकमग्रं प्रस्तावाच्छुनमालंबनमस्येत्येकाग्रं, एकाग्रं च तन्मनश्चैकाग्रमनस्तस्य संनिवेशना स्थापना, तयैकाग्रमनःसंनिवेशनया शुनावलंबनेन चित्तस्य स्थिरीकरणेन जीवः किं फलं जनयति? गुरुराह—हे शिष्य! एकाग्रमनःसंनिवेशनया चित्तनिरोधं जनयति, चित्तस्येतस्तत उन्मार्गप्रस्थितस्य निरोधो नियंत्रणं चित्तनिरोधस्तं करोतीति नावः. ॥ २५ ॥ एवंविधस्य साधोः संयमादेरिष्टफलस्य प्राप्तिरिति नियमात्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—संजमेणं नंते जीवे किं जणयइ? संजमेणं अणण्हयत्तं जणयइ. ॥ २६ ॥ व्याख्या—हे नगवन्! संयमेन जीवः किं जनयति? गुरुराह—संयमेन अनंहस्कत्वं, न विद्यतेंहः पापं यस्मिंस्तदनंहस्कं, तस्य नावोऽनंहस्कत्वं, तज्जनयति. संयमेनाश्रवनिरोधं जनयतीत्यर्थः. ॥ २६ ॥ संयमवान् साधुस्तपोनिरतः स्यादतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—तवेणं नंते जीवे किं जणयइ? तवेणं वोदाणं जणयइ. ॥ २७ ॥ व्याख्या—हे नगवन्! तपसा कृत्वा जीवः किं फलं जनयति? गुरुराह—हे शिष्य! तपसा

२८

जीवो व्यवदानं जनयति, पूर्ववद्धकर्मापगमनेन विशेषेण शुद्धिं जनयति. ॥ २७ ॥ व्यवदानेन किं फलं स्यात्? अतस्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥ वोदाणेणं भंते जीवे किं जणयइ? वोदाणेणं अकिरियं जणयइ, अकिरियए भवित्ता तओ पच्छा सिज्झइ, बुज्झइ, मुच्चइ, परिनिव्वायइ, सव्वदुक्खाणमंतं करेइ. ॥ २८ ॥

व्याख्या—हे भदंत! व्यवदानेन जीवः किं जनयति? गुरुराह—हे शिष्य! व्यवदानेन जीवोऽक्रियं जनयति, न विद्यते क्रिया यस्मिन् सोऽक्रियस्तमक्रियं व्यपरतक्रियाख्यं शुक्लध्यानस्य चतुर्थं भेदं जनयति. अक्रियको भूत्वा व्यपरतक्रियाख्यशुक्लध्यानवर्ती भूत्वा, ततः पश्चात्सिद्धिं व्रजति, बुध्यति ज्ञानदर्शनाभ्यां सम्यग् वस्तुवेत्ता भवति, मुच्यते संसारान्मुक्तो भवति, परिनिर्वाति, परि समंतान्निर्वाति, कर्माग्निं विध्याप्य शीतलो भवति, सर्वदुःखानामंतं करोति. ॥ २८ ॥ संयमादिषु सत्स्वपि सुखशातेनैव प्रवर्तनीयमतस्तत्फलमाह—

॥ मूलम् ॥—सुहसाएणं भंते जीवे किं जणयइ? सुहसाएणं अणुसुयत्तं जणयइ, अणुस्सुएणं जीवे अणुकंपए अणुब्भडे विगयसोगे चरित्तमोहणिज्जं कम्मं खवेइ. ॥ २९ ॥ व्या-

ख्या—हे भदंत! हे स्वामिन्! सुखस्य वैषयिकस्य शातस्तज्जतस्पृहानिवारणेनापनयनं सुखशातस्तेन जीवः किं जनयति? गुरुराह—हे शिष्य! सुखशातेनाऽनुत्सुकत्वं जनयति, विषयसुखेऽनुत्तालत्वं जनयति. अनुत्सुकश्च जीवोऽनुकंपते, अग्रेतनं जीवं दृष्ट्वाऽनुकंपको दयावान् भवतीत्यर्थः. पुनरनुद्भटोऽभिमानरहितः शृंगारादिशोभारहितः स्यात्. पुनस्तादृशः सन् विगतशोकः, इहलौकिकार्यभ्रंशादावपि शोचनं न कुरुते. पुनस्तादृशो मोक्षार्थी शुभाध्यवसायवर्ती कषायनोकषायरूपचारित्रमोहनीयरूपं कर्म क्षपयति. ॥ २९ ॥ अथ सुखशातस्थितस्य चाप्रतिबद्धता भवति, अतस्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—अप्पडिबद्धयाएणं भंते जीवे किं जणयइ? अप्पडिबद्धयाएणं निस्संगत्तं जणयइ, निस्संगत्तेणं जीवे एगे एगग्गचित्ते दिया वा राओ असज्जमाणे अप्पडिबद्धे विहरइ ॥ ३० ॥ व्याख्या—हे भदंत! अप्रतिबद्धतया मनसि निरभिष्वंगतया जीवः किं जनयति? गुरुराह—हे शिष्य! अप्रतिबद्धतया निःसंगत्वं बाह्यसंगाभावं जनयति, निःसंगत्वंगतो जीव एको रागादिरहितः स्यात्, तादृशश्चैकाग्रचित्तो धर्मे एव दृढमनस्कः स्यात्. पु-

नर्दिवा दिवसे रात्रौ वाऽसज्जन् सदा बाह्यसंगं त्यजन्नप्रतिबद्धो विहरति, मासकल्पेनोद्यत-विहारेण पर्यटतीति भावः. ॥ ३० ॥ अप्रतिबद्धता च विविक्तशयनासनसेवकस्य स्यात्, अतस्तत्फलमाह—

॥ मूलम् ॥—विवित्तसयणासणयाएणं भंते जीवे किं जणयइ? विवित्तसयणासणयाएणं जीवे चरित्तगुत्तिं जणयइ, चरित्तगुत्ते य णं जीवे विवित्ताहारे दढचरित्ते एगंतरए मोक्खभावपडिवन्ने अट्ठविहकम्मगंठिं निज्जरेइ. ॥ ३१ ॥ व्याख्या—हे भदंत! विविक्तानि स्त्रीपशुपंडकवर्जितानि शयनासनान्युपाश्रयस्थानानि यस्य स विविक्तशयनासनः, तस्य भावो विविक्तशयनासनता, तया स्त्रीपशुपंडकादिरहितस्थितिनिवासत्वेन जीवः किं जनयति? गुरुराह—हे शिष्य! विविक्तशयनासनतया जीवश्चारित्रगुप्तिं चारित्रस्य रक्षां जनयति. गुप्तचारित्रश्च जीवो विविक्तो विकृत्यादिशरीरपुष्टिकारकवीर्यवृद्ध्यादिकृद्वस्तुरहित आहारो यस्य स विविक्ताहारः. तादृशः स्यात्. तथा दृढं निश्चलं चरित्रं यस्य स दृढचरित्रः, पुनरत एवैकांतेन निश्चयेन रक्त आसक्त एकांतरतः संयमे सावधानः स्यात्, तथा मोक्षं भावेन मन-

सा प्रतिपन्न आश्रितो मोक्षभावप्रतिपन्नः, मोक्ष एव मया साध्य इति बुद्धिमान्, क्षपक-श्रेणिं प्रतिपद्याष्टविधकर्मग्रंथिं निर्जरयति क्षपयति. ॥ ३१ ॥ विविक्तशयनासनश्च विनिवर्तनावान् स्यात्, अतो विनिवर्तनायाः फलमाह—

॥ मूलम् ॥—विणिवट्टणयाए णं भंते जीवे किं जणयइ? विणिवट्टणयाएणं पावाणं कम्माणं अकरणयाए अब्भुट्ठेइ, पुव्वबद्धाण य निज्जरणयाए तं नियत्तेइ, तओ पच्छा चाउरंतसंसारकंतारं वीईवयइ. ॥ ३२ ॥ व्याख्या—हे स्वामिन्! विनिवर्तनया विषयेभ्य आत्मनः पराङ्मुखीभावेन जीवः किं जनयति? गुरुराह—हे शिष्य! विनिवर्तनया पापकर्मणामकरणत्वेन सावद्यकर्मत्यागेनाऽभ्युत्तिष्ठते, धर्माय सावधानो भवति. पूर्वबद्धानां पापकर्मणां निर्जरया, नूतनपापकर्मणामनुत्पादनेन तत्पापकर्म निवर्तयति निवारयति. ततश्च पश्चाच्चातुरंतसंसारकांतारं 'वीईवयइ' व्यतिव्रजति, व्युत्क्रामतीत्यर्थः. ॥ ३२ ॥ विषयनिवृत्तश्च कश्चित्साधुः संभोगप्रत्याख्यानवान् भवति, अतस्तत्फलमाह—

॥ मूलम् ॥—संभोगपच्चक्खाणेणं भंते जीवे किं जणयइ? संभोगपच्चक्खाणेणं आलंब-

॥ ९९७ ॥

णाइ खवेइ, निरालंबणस्सायतठ्ठा जोगा भवंति, सएणं लाभेणं संतुस्सइ, परलाभं नो आसाएइ, नो तक्केइ, नो पीहेइ, नो पठ्ठेइ, नो अहिलसइ, परस्स लाभं अणासाएमाणे अतक्केमाणे अपिहेमाणे अप्पठ्ठेमाणे अणभिलसमाणे दोच्चं सुहसिज्जं उवसंपज्जित्ताणं विहरेइ. ॥ ३३ ॥ व्याख्या—हे भदंत! संभोगप्रत्याख्यानेन, एकमंडल्यां स्थित्वाऽऽहारस्य करणं संभोगः, तस्य प्रत्याख्यानेनोत्कृष्टत्वेन पृथगाहारकरणेन जीवः किं जनयति? तदा गुरुराह—हे शिष्य! संभोगप्रत्याख्यानेनालंबनानि क्षपयति, यतोऽहं ग्लानोऽस्मि, रोग्यस्मीत्यादिकथनानि क्षपयति, धीरो भवतीत्यर्थः. निरालंबनस्य चायतार्था योगा भवंति. आयतो मोक्षः, स एवार्थः प्रयोजनं येषां ते आयतार्थाः, एतादृशा योगा भवंति. मनोवाक्काययोगा भवंति. स्वेन लाभेन संतुष्यति, परस्य लाभं नास्वादयति, न वांछयति, ततश्च परस्य लाभं नो तर्कयति, यदिदं मह्यं दास्यतीति मनसा न विकल्पयति. नो स्पृहयति, परलाभे श्रद्धालुतया स्वस्य स्पृहां न प्रकटीकरोति. पुनः परस्य लाभं न प्रार्थयति, मह्यं देहीति न याचते. पुनर्नाभिलषति, परस्य लाभं लालसापूर्वकं न वांछति. अथ परस्य लाभं ' अणासायमाणो '

अनास्वादयन्, अतर्कयन्, अनीहमानः, अप्रार्थयन्, अनभिलषन् द्वितीयां सुखशय्यामुपसंपद्य विहरति, अपरेभ्यः साधुभ्यः पृथगुपाश्रयमंगीकृत्य प्रवर्तते, यादृशी स्थानांगे उक्तास्ति, तां प्रतिपद्य विहरति. अत्र ह्येते शब्दा एकार्थाः प्रतिपादितास्तदनेकदेशीयशिष्याणां प्रतिबोधनार्थं पर्यायत्वेन प्रतिपादिताः. ॥ ३३ ॥ संभोगप्रत्याख्यानवतः साधोरुपधिप्रत्याख्यानं संभवति, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—उवहिपच्चक्खाणेणं भंते जीवे किं जणयइ? उवहिपच्चक्खाणेणं अपलिमंथं जणयइ, निरुवहिएणं जीवे निकंखे उवहिमंतरेण न संकिलिस्सइ. ॥ ३४ ॥ व्याख्या—हे भदंत! उपधिप्रत्याख्यानेन रजोहरणमुखवस्त्रिकापात्रादिव्यतिरिक्तस्योपधेः प्रत्याख्यानेनोपधित्यागेन जीवः किमुपार्जयति? गुरुराह—हे शिष्य! उपधिप्रत्याख्यानेनाऽपरिमंथं जनयति. परिमंथः स्वाध्यायव्याघातः, न परिमंथोऽपरिमंथः स्वाध्यायादौ निरालस्यं जनयति. पुनर्निरुपधिको निःपरिग्रहो जीवो निःकांक्षो भवति, वस्त्रादावभिलाषरहितः स्यादित्यर्थः. तादृशो ह्युपधिमंतरेणोपधिं विना न संक्लिश्यते, क्लेशं न प्राप्नोति. सपरिग्रहो हि क्लेशं प्रा-

न्नावं जणयइ, वीयरायन्नावं पमिवज्जेयणं जीवे समसुहदुक्खे न्नवइ. ॥ ३६ ॥ व्याख्या—हे स्वामिन्! कषायप्रत्याख्यानेन जीवः किं जनयति? गुरुराह—हे शिष्य! कषायप्रत्याख्यानेन क्रोधमानमायालोन्नत्यागेन जीवो वीतरागन्नावं जनयति. प्रतिपन्नवीतरागन्नावो जीवः समसुखदुःखो न्नवति. ॥ ३६ ॥ निःकषायोऽपि योगप्रत्याख्यानवान् न्नवति, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—जोगपच्चक्खाणेणं न्नंते जीवे किं जणयइ? जोगपच्चक्खाणेणं जीवे नवं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ. ॥ ३७ ॥ व्याख्या—हे न्नगवन्! योगप्रत्याख्यानेन, योगो मनोवाक्कायानां व्यापारस्तस्य प्रत्याख्यानं योगप्रत्याख्यानं, तेन जीवः किं जनयति? तदा गुरुराह—हे शिष्य! योगप्रत्याख्यानेनाऽयोगित्वं जनयति, शैलेशीन्नावं भजति. अयोगी हि जीवश्चतुर्दशगुणस्थाने प्रवर्तमानो नवं कर्म न बध्नाति, पूर्वबद्धं च कर्म निर्जरयति क्षपयतीति न्नावः. ॥ ३७ ॥ योगप्रत्याख्यानतः शरीरप्रत्याख्यानं करोति, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—सरीरपच्चक्खाणेणं भंते जीवे किं जणयइ? सरीरपच्चक्खाणेणं सिद्धाइसयगुणत्तं निव्वत्तेइ, सिद्धाइसयगुणसंपन्ने य णं जीवे लोगग्गमुवगए परमसुही होइ. ॥ ३८ ॥ व्याख्या—हे भगवन्! शरीरप्रत्याख्यानेन शरीरव्युत्सर्जनेन जीवः किं लाभं जनयति? गुरुराह—शरीरप्रत्याख्यानेन सिद्धातिशयगुणत्वं निर्वर्तयति, कोऽर्थः? सिद्धानां येऽतिशयगुणाः सर्वोत्कृष्टगुणास्तेषां भावः सिद्धातिशयगुणत्वं, यतो हि सिद्धा न नीलाः, न लोहिताः, न हारिद्राः, न शुक्ला इत्याद्येकत्रिंशद् गुणाः, तद्भत्वं प्राप्नोतीत्यर्थः. प्राप्तसिद्धातिशयगुणो जीवो लोकाग्रं मोक्षमुपगतः सन् परमसुखी भवति. यद्यपि योगप्रत्याख्यानेन शरीरप्रत्यानः समागतः, तथापि मनोवाग्योगयोः शरीरस्य प्राधान्यख्यापनार्थं पृथगुपादानं. ॥ ३७ ॥ संभोगादिप्रत्याख्यानानि प्रायः साहाय्यप्रत्याख्यानयुक्तस्य भवंति, अतस्तत्फलं प्रश्नपूर्वमाह.

॥ मूलम् ॥—साहायपच्चक्खाणेणं भंते जीवे किं जणयइ? साहायपच्चक्खाणेणं जीवे एगीभावं जणयइ, एगीभावभूए य जीवे एगग्गं भावेमाणे अप्पसद्दे अप्पझंझे अप्पकसाए अप्पकलहे अप्पतुमंतुमे संयमबहुले संवरबहुले समाहिएआवि भवइ. ॥ ३९ ॥ व्याख्या—

॥ मूलम् ॥—सरीरपच्चक्खाणेणं भंते जीवे किं जणयइ? सरीरपच्चक्खाणेणं सिद्धाइसयगुणत्तं निव्वत्तेइ, सिद्धाइसयगुणसंपन्ने य णं जीवे लोगग्गमुवगए परमसुही होइ. ॥ ३८ ॥ व्याख्या—हे भगवन्! शरीरप्रत्याख्यानेन शरीरव्युत्सर्जनेन जीवः किं लाभं जनयति? गुरुराह—शरीरप्रत्याख्यानेन सिद्धातिशयगुणत्वं निर्वर्तयति, कोऽर्थः? सिद्धानां येऽतिशयगुणाः सर्वोत्कृष्टगुणास्तेषां भावः सिद्धातिशयगुणत्वं, यतो हि सिद्धा न नीलाः, न लोहिताः, न हारिद्राः, न शुक्ला इत्याद्येकत्रिंशद् गुणाः, तद्भूत्वं प्राप्नोतीत्यर्थः. प्राप्तसिद्धातिशयगुणो जीवो लोकाग्रं मोक्षमुपगतः सन् परमसुखी भवति. यद्यपि योगप्रत्याख्यानेन शरीरप्रत्यानः समागतः, तथापि मनोवाग्योगयोः शरीरस्य प्राधान्यख्यापनार्थं पृथगुपादानं. ॥ ३७ ॥ संभोगादिप्रत्याख्यानानि प्रायः साहाय्यप्रत्याख्यानयुक्तस्य भवंति, अतस्तत्फलं प्रश्नपूर्वमाह.

॥ मूलम् ॥—साहायपच्चक्खाणेणं भंते जीवे किं जणयइ? साहायपच्चक्खाणेणं जीवे एगीभावं जणयइ, एगीभावभूए य जीवे एगग्गं भावेमाणे अप्पसद्दे अप्पझंझे अप्पकसाए अप्पकलहे अप्पतुमंतुमे संयमबहुले संवरबहुले समाहिएआवि भवइ. ॥ ३९ ॥ व्याख्या—

सहायाः साहाय्यकारिणः, संघाटकस्य साधवः, तेषां प्रत्याख्यानं साहाय्यप्रत्याख्यानं, तेन साहाय्यप्रत्याख्यानेन हे जगवन्! जीवः किं फलं जनयति? गुरुराह—हे शिष्य! साहाय्यप्रत्याख्यानेनैकीजावं जनयति. एकीजावजूतश्चैकत्वं प्राप्तो जीव एकाग्रं जावयन्नेकावलंबनत्वं चान्यसन्नल्पशब्दोऽल्पजल्पको जवति, अल्पझंझो जवति, अविद्यामनझंझोऽविद्यमानवाक्कलहो जवति. पुनरल्पकषायो जवति, पुनरल्पकलहोऽविद्यमानरोषसूचकवचनो जवति. तथाऽल्पतुमंतुमो जवति, अविद्यमानं तुमंतुममिति त्वं त्वमिति वाक्यं यस्य सोऽल्पतुमंतुमः, त्वमेवैतत्कार्यं कृतवान्, त्वमेक एव सदाऽकृत्यकारी वर्तसे, इत्यादिप्रलपनं न करोति. पुनः साहाय्यप्रत्याख्यानेन संयमबहुलो जवति, संयमः सप्तदशविधः, स बहुलः प्रचुरो यस्य स संयमबहुलः. स च पुनः संवरबहुलो जवति. संवर आश्रवद्वारनिरोधः, स बहुलः प्रचुरो यस्य स संवरबहुलस्तादृशो जवति. स च पुनः समाधिबहुलो जवति, समाधिश्चित्तस्वास्थ्यं, तेन बहुलः समाधिबहुलः समाधिप्रधानो जवति. पुनः समाहितश्चापि जवति, ज्ञानदर्शनवांश्च जवतीत्यर्थः. ॥ ३९ ॥ एवंविधः साधुरंते जक्तप्रत्याख्यानवान् स्यात्, अतस्त-

रफलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—भत्तपच्चक्खाणेणं भंते जीवे किं जणयइ? भत्तपच्चक्खाणेणं जीवे अणेगाइं भवसहस्साइं निरुंभइ. ॥ ४० ॥ व्याख्या—हे भदंत! भक्तप्रत्याख्यानेनाऽऽहारत्यागेन भक्तपरिज्ञानादिना जीवः किं फलं जनयति? गुरुराह—हे शिष्य! भक्तप्रत्याख्यानेन जीवोऽनेकानि भवसहस्राणि निरुणद्धि. ॥ ४० ॥ अथ सर्वप्रत्याख्यानप्रधानं सद्भावप्रत्याख्यानं, अनस्तस्य फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—सब्भावपच्चक्खाणेणं भंते जीवे किं जणयइ? सब्भावपच्चक्खाणेणं अणियट्टिं जणयइ, अणियट्टिं पडिवन्ने य अणगारे चत्तारि कम्मंसे खवेइ, तं जहा—वेयणिज्जं १ आउयं २ नमं ३ गोयं ४, पच्छा सिज्झइ. ॥ ४१ ॥ व्याख्या—हे भगवन्! सद्भावेन प्रत्याख्यानं सद्भावप्रत्याख्यानं, तेन सद्भावप्रत्याख्यानेन. सर्वथा पुनः करणस्याऽसंभवादीदृशेन विधिना प्रत्याख्यानं करोति, यथा पुनः करणीयं न स्यात्, इत्यनेन सर्वप्रकारेण शैलेशीकरणं, चतुर्दशगुणस्थाने वर्तनेन जीवः किं जनयति? गुरुराह—हे शिष्य! सद्भावप्रत्याख्यानेनाऽ-

निवृत्तिं जनयति, शुक्लध्यानस्य चतुर्थं भेदं जनयति. अनिवृत्तिं प्रतिपन्नः, प्रतिपन्नानिवृत्ति-रनगारश्चत्वारि केवलिनः कर्मांशानि संति कर्माणि भवोपग्राहीणि क्षपयति. अंशशब्दः स-त्पर्यायः, विद्यमानकर्माणि क्षपयति. तानि कानि चत्वारि कर्माणि? तद्यथा—वेदनीयं क-र्म १, आयुःकर्म २, नामकर्म ३, गोत्रकर्म ४, एतेषां चतुर्णामपि कर्मणां क्षयं कृत्वा, ततः पश्चात्सिध्यति, सकलार्थं साधयति. सकलार्थं साधयित्वा सिद्धो भवति, ततो बुध्यति त-त्वज्ञो भवति. मुच्यते कर्मभ्यो मुक्तो भवति, परिनिर्वाति, परि समंतात् कर्मतापाऽभावाच्छी-तलो भवति, सर्वदुःखानामंतं करोति. ॥ ४१ ॥ एतत्प्रत्याख्यानं प्रायशः प्रतिरूपतायामेव स्यात्, अतः प्रतिरूपतायाः फलमाह—

॥ मूलम् ॥–पडिरूवयाएणं भंते जीवे किं जणयइ? पडिरूवयाएणं लाघवं जणयइ, लहुभूएणं जीवे अप्पमत्ते पागडलिंगे पसत्थलिंगे विसुद्धसमत्ते सत्तसमितिसम्मत्ते सव्वपाण-भूयजीवसत्तेसु विससणिज्जरूवे अप्पडिलेहे जिइंदिए विपुलतवसमिइसमन्नागएआवि वि-हरइ. ॥ ४२ ॥ व्याख्या—हे भगवन्! प्रतिरूपतया जीवः किं फलं जनयति? प्रतिरूपता-

या: कोऽर्थः? प्रतीति स्थविरकल्पिसदृशं रूपं यस्य स प्रतिरूपः, तस्य भावः प्रतिरूपता त-या, स्थविरकल्पिसाधुवेषधारित्वेन जीवः किं जनयति? गुरुराह—हे शिष्य! प्रतिरूपतया जीवो लघुत्वं जनयति, अधिकोपधित्यागेन लघुत्वमुपार्जयतीत्यर्थः. द्रव्यत उपध्यादिपरिग्रहपरित्यागेन, भावतस्त्वप्रतिबद्धविहारत्वेन लघुर्भवति. लघूभूतश्च जीवोऽप्रमत्तो भवति, तादृशः प्रकटलिङ्गः, प्रकटं स्थविरकल्पादिवेषेण स्फुटं लिंगं चिह्नं यस्य स प्रकटालिंगः. पुनः प्रशस्तलिंगः, प्रशस्तं समीचीनं रजोहरणमुखपोतिकादिकं यस्य स प्रशस्तलिंगः, पुनर्विशुद्धसम्यक्त्वो निर्मलसम्यक्त्वः, पुनः सत्वसमितिसमाप्तः, सत्वं च समितयश्च सत्वसमितयस्ताभिः समाप्तः संपूर्णो धैर्यसमितियुक्त इत्यर्थः. ततः पुनः सर्वप्राणभूतजीवसत्वेषु विश्वसनीयो विश्वासयोग्यो भवति. पुनस्तादृशोऽल्पप्रतिलेखः, प्रतिलेखनं प्रतिलेखः, अल्पः प्रतिलेखो यस्य सोऽल्पप्रतिलेखः, अल्पोपकरणत्वादल्पप्रतिलेखनावान् भवतीत्यर्थः. पुनः स जितेंद्रियो भवति. पुनर्विपुलतपःसमितिसमन्वागतश्चापि विहरति, विपुलानि विस्तीर्णानि तपांसि समितयश्च विपुलतपःसमितयस्ताभिरन्वागतिः सहितः सन् विहरति. द्वादशविधेन तपसा

समितिगुप्तिसहितो भूत्वा ग्रामनगरादौ विचरति. ॥ ५२ ॥ प्रतिरूपतायामपि वैयावृत्यं क-
र्तव्यं, अतस्तत्फलमाह—
॥ मूलम् ॥—वेयावच्चेणं भंते जीवे किं जणयइ? वेयावच्चेणं तित्थयरनामगोयं कम्मं
निबंधेइ. ॥ ४३ ॥ व्याख्या—हे भगवन्! वैयावृत्येनाऽऽहारादिसाहाय्येन जीवः किं जनय-
ति? तदा गुरुराह—हे शिष्य! वैयावृत्येन तीर्थकरनामगोत्रं कर्म निबध्नाति. वैयावृत्यं कु-
र्वंस्तीर्थकरनामगोत्रं कर्म बध्नातीत्यर्थः. ॥ ४३ ॥ अथ वैयावृत्यवान् सर्वगुणभाक् स्यात्, अ-
तः सर्वगुणसंपन्नतायाः फलं प्रश्नपूर्वमाह—
॥ मूलम् —सव्वगुणसंपन्नयाएणं भंते जीवे किं जणयइ? सव्वगुणसंपन्नयाएणं अपुण-
रावत्तिं जणयइ, अपुणरावत्तिपत्तए यणं जीवे सारीरमाणसाणं दुक्खाणं नो भागी भवइ.
॥ ४४ ॥ व्याख्या—हे भदंत! स्वामिन्! सर्वगुणसंपन्नतया जीवः किं जनयति? सर्वे च ते
गुणाश्च सर्वगुणाः, ज्ञानदर्शनचारित्रादयस्तैः संपन्नता सहितत्वं सर्वगुणसंपन्नता, तया स-
र्वगुणसंपन्नतया किं फलमुत्पादयति? गुरुराह—हे शिष्य! सर्वगुणसंपन्नतया जीवोऽपुनरा-

वृत्तिं जनयति, मुक्तिमुपार्जयति. अपुनरावृत्तिं प्राप्तो जीवः प्राप्ताऽपुनरावृत्तिः प्राप्तमोक्षो जीवः शारीरमानसानां दुःखानां विभागी नो भवति. ॥ ४४ ॥ सर्वगुणसंपन्नतया वीतरागो भवति, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—वीयराययाएणं भंते जीवे किं जणयइ? वीयराययाएणं नेहाणुबंधणाणि य तण्हाणुबंधणाणि य वोच्छिंदइ, मणुन्नेसु सद्दफरिसरूवगंधेसु विरज्जइ. ॥ ४५ ॥ व्याख्या—हे भगवन्! वीतरागतया जीवः किं जनयति? वीतो गतो रागो यस्मात्स वीतरागस्तस्य भावो वीतरागता, तया वीतरागतया रागद्वेषाऽभावेन किं फलं जनयति? गुरुराह—हे शिष्य! वीतरागतया स्नेहानुबंधनानि, स्नेहस्याऽनुकूलानि बंधनानि, पुत्रमित्रकलत्रादिषु प्रेमपाशान्, तथा तृष्णानुबंधनानि, द्रव्यादिष्वाशापाशान् व्यवच्छिनत्ति, विशेषेण त्रोटयति. पुनर्मनोज्ञेषु मनोहरेषु शब्दस्पर्शरसरूपगंधेभ्यो विरज्यते, विषयेभ्यो विरक्तो भवतीति भावः. ॥ ४५ ॥ वीतरागतायुक्तस्तु श्रामण्यसंयुक्तो भवति, श्रामण्यधर्मे च क्षांतिरेवाद्या, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—खंतिएणं भंते जीवे किं जणयइ? खंतिएणं परीसहे जयइ. ॥ ४६ ॥ व्याख्या—हे भगवन्! क्षांत्या क्षमया कृत्वा जीवः किं फलं जनयति? तदा गुरुराह—हे शिष्य! क्षमया परीषहान् जयति. ॥ ४६ ॥ अथ पुनः क्षमावान् मुक्तियुक्तो भवति, निर्लोभी भवति, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—मुत्तीएणं भंते जीवे किं जणयइ? मुत्तीएणं अकिंचणं जणयइ, अकिंचणेणं जीवे अत्थलोभाणं अप्पत्थणिज्जे भवइ. ॥ ४७ ॥ व्याख्या—हे भगवन्! मुक्त्या निर्लोभत्वेन जीवः किं जनयति? गुरुराह—हे शिष्य! मुक्त्याऽकिंचिनत्वं निःपरिग्रहत्वमुत्पादयति, अकिंचनत्वेन जीवोऽर्थलोभानामप्रार्थनीयो भवति. कोऽर्थः? योऽकिंचनो निःपरिग्रहो भवति, स पुरुषोऽर्थे लोभो येषां तेऽर्थलोभा द्रव्यार्थिनश्चौरादयः पुरुषास्तेषामप्रार्थनीयस्तैरवांछनीयः, चौरादयो हि निःपरिग्रहं किं कुर्वंति? परिग्रहवतां चौरेभ्यो भीतिः स्यात्. ॥ ४७ ॥ लोभे सति माया स्यात्, लोभाऽभावे मायाऽभावः, मायाया अभावे आर्जवं सरलत्वं स्यात्, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥मूलम्॥—अज्जवयाएणं भंते जीवे किं जणयइ? अज्जवयाएणं काउज्जुययं भावुज्जुययं भासुज्जुययं अविसंवादणं जणयइ. अविसंवादणसंपन्नेणं जीवे धम्मस्स आराहए भवइ ॥४८॥ व्याख्या—हे भदंत! आर्जवेण मायापरिहारेण जीवः किं फलं जनयति? ऋजोर्भाव आर्जवं, तेन किं फलमुत्पादयति? तदा गुरुराह—हे शिष्य! आर्जवेन कायर्जुकतां, भावर्जुकतां, भाषर्जुकतां, अविसंवादनां जयति. ऋजुरेव ऋजुकः, कायेन ऋजुकः कायर्जुकः, तस्य भावः कायर्जुकता, वक्रशरीरभ्रूविकारादिरहितत्वेन सरलतामुत्पादयति. एवं भावश्चित्ताभिप्रायस्तस्य ऋजुकता भावर्जुकता, तां भावर्जुकतां चित्तसरलतामुत्पादयति. पुनर्भाषाया वचनस्य ऋजुकता भाषर्जुकता, तां भाषर्जुकतां वचनसरलत्वमुत्पादयति. पुनरविसंवादनं परजीवानामवंचनत्वं जनयति. स प्राप्ताऽविसंवादः कायेन वाचा मनसा संप्राप्ताऽविसंवादः परवंचकतारहितो जीवो धर्मस्य वीतरागधर्मस्याराधको भवति. ॥ ४८ ॥ एवमार्जवगुणयुक्तेन मार्दवं विधेयं, अतो मार्दवफलं प्रश्नपूर्वकमाह—मार्दवं हि मानत्यागरूपं, तत्तु विनयस्य कारणं, धर्मे हि विनयस्य प्राधान्यं.

॥ मूलम् ॥—मद्दवयाएणं भंते जीवे किं जणयइ? मद्दवयाएण जीवे अणुस्सियत्तं जणयइ, अणुस्सियत्तेणं जीवे मिउमद्दवसंपन्ने अठमयठाणाइ निट्ठवेइ.॥ ४९ ॥ व्याख्या—हे स्वामिन्! मार्दवेन कोमलपरिणामेन जीवः किं जनयति? गुरुराह—हे शिष्य! मार्दवेन मानपरिहारेण जीवोऽनुत्सृतत्वमनहंकारित्वमहंकाराऽभावं जनयति. अनुत्सृतत्वेनाहंकाराभावेन जीवो मृदुः कोमलः सकलभव्यजनमनःसंतोषहेतुत्वाद् द्रव्यतो भावतश्च सरलोऽवनमनशीलः, मृदोर्भावो मार्दवं, मृदुगुणमार्दवगुणयोरयं भेदः, अवसरेऽवनमनं मृदुगुणः, यत्सर्वदा कोमलत्वभवनं तन्मार्दवं, यद्वा कायेन मानत्यागो मृदुगुणः, मनसा मानपरिहारो मार्दवं. ताभ्यां संपन्नो भवति संयुक्तो भवति. तादृशः सन्नष्टौ मदस्थानानि निष्ठापयति क्षपयति. ॥ ४९ ॥ एतत्प्रायः सत्यसंस्थितस्य साधोर्भवति, सत्येषु भावसत्यमेव प्रधानं, अतस्तत्फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—भावसच्चेणं भंते जीवे किं जणयइ? भावसच्चेणं भावविसोहिं जणयइ, भावयिसोहिए वट्टमाणे जीवे अरहंतपन्नत्तस्स धम्मस्स आराहणयाए अब्भुट्ठेइ, अरहंतप-

भत्तस्स धम्मस्स आराहणायाएणं अब्भुठेत्ता परलोगधम्मस्स आराहए भवइ. ॥ ५० ॥ व्याख्या—हे भदंत! भावसत्येन, भावेऽभ्यंतरात्मनि सत्यं भावसत्यं, तेन भावसत्येन जीवः किं जनयति? गुरुराह—हे शिष्य! भावसत्येन जीवो भावविशुद्धिं जनयति, निर्मलाध्यवसायं जनयति. भावविशुद्धौ वर्तमानोऽर्हत्प्रज्ञप्तस्य श्रीजिनप्रणीतस्य धर्मस्याराधनायै अभ्युत्तिष्ठति सावधानो भवति, अर्हत्प्रज्ञप्तस्य धर्मस्याराधनायै अभ्युत्थाय सावधानो भूत्वा परलोके धर्मस्याराधको भवति. परलोके सम्यग्गतिं प्राप्य धर्ममाराधयतीत्यर्थः. ॥५०॥ भावसत्यं च करणसत्ययुक्ते संभवति, अतः करणसत्यस्य फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—करणसच्चेणं भंते जीवे किं जणयइ? करणसच्चेणं करणसत्तिं जणय, इकरणसच्चे वट्टमाणे जीवे जहावाई तहाकारीआवि भवइ. ॥ ५१ ॥ व्याख्या—हे भदंत! करणसत्येन जीवः किं जनयति? करणे प्रतिलेखनादिक्रियायां सत्यं यथोक्तविधिनाऽऽराधनं करणसत्यं, तेन करणसत्येन जीवः किं फलमुपार्जयति? तदा गुरुराह—हे शिष्य! करणसत्येन करणशक्तिं क्रियासामर्थ्यं जनयति. पुनः करणसत्ये वर्तमानो जीवो यथावादी

तथाकारी भवति. क्रियासत्यः पुमान् यादृशं सूत्रार्थं पठति, यादृशं क्रियाकलापं वदति, तथैव करोतीति भावः. ॥ ५१ ॥ एवंविधस्य योगसत्यमपि स्यात्, अतो योगसत्यस्य फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—जोगसच्चेणं भंते जीवे किं जणयइ? जोगसच्चेणं जोगे विसोहइ ॥ ५२ ॥ व्याख्या—हे भदंत! योगसत्येन, मनोवाक्काययोगानां सत्यं योगसत्यं, तेन योगसत्येन मनोवाक्कायसाफल्येन जीवः किं जनयति? तदा गुरुराह—हे शिष्य! योगसत्येन योगान् विशोधयति, मनोवाक्काययोगान् विशदीकरोति, कर्मबंधाऽभावान्निर्दोषान् करोतीति भावः. ॥ ५२ ॥ इदं सत्यं हि गुप्तिसहितस्य भवति, गुप्तीनामादौ मनोगुप्तिरस्ति, तस्मात्पूर्वं तस्याः फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—मणगुत्तयाएणं भंते जीवे किं जणयइ? मणगुत्तयाएणं जीवे एगग्गं जणयइ, एगग्गचित्तेणं जीवे मणगुत्ते संजमाराहए भवइ. ॥ ५३ ॥ व्याख्या—हे भदंत! मनोगुप्तया जीवः किं जनयति? तदा गुरुराह—हे शिष्य! मनोगुप्ततया जीव एकाग्र्यं धर्मे ए-

२८

कांतत्वमुपार्जयति. एकाग्रचित्तो जीवो गुप्तमनाः सन् संयमस्याराधकः पालको भवति. ॥ ॥ ५३ ॥ अथ वचोगुप्तिफलमाह—

॥ मूलम् ॥—वयगुत्तयाएणं भंते जीवे किं जणयइ? वयगुत्तयाएणं निव्विकारत्तं जणयइ, निव्विकारेणं जीवे गुत्ते अज्झप्पजोगसाहणजुत्तेआवि भवइ. ॥ ५४ ॥ व्याख्या—हे भदंत! वचोगुप्ततया जीवः किं फलं जनयति? गुरुराह हे शिष्य! वचोगुप्ततया निर्विकारत्वं विरागभावमुत्पादयति. निर्विकारो जीवो वाग्गुप्तो गुप्तवचनश्च सर्वविकथात्यागाद्वाग्निरोधी वाग्गुप्तिमान् सन्नध्यात्मयोगसाधनयुक्तश्चापि भवति. आत्मन्यधितिष्ठतीत्यध्यात्मं मनस्तस्य योगाः शुभव्यापारा धर्मध्यानादयस्तेषां साधनमेकाग्र्यमध्यात्मयोगसाधनं, तेन युक्तोऽध्यात्मयोगयुक्तः. तादृशश्चापि स्यादित्यर्थः. ॥ ५४ ॥ अथ तृतीयगुप्तेः फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—कायगुत्तयाएणं भंते जीवे किं जणयइ? कायगुत्तयाएणं संवरं जणयइ, संवरेणं कायगुत्ते पुणो पावासवनिरोहं करेइ. ॥ ५५ ॥ व्याख्या—हे भदंत! कायगुप्ततया जीवः किं जनयति? गुरुराह—हे शिष्य! कायगुप्ततया जीवः संवरं जनयति, संवरेण गुप्त-

काय: पुनः पापाश्रवनिरोधं करोति. ॥ ५५ ॥ अथ गुप्तित्रयधारकस्य साधोर्मनोवाक्कायानां समाधारणा भवति, अतस्तत्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—मणसमाहरणयाएणं भंते जीवे किं जणयइ? मणसमाहारणयाएणं एगग्गं जणयइ, एगग्गं जणइत्ता नाणपज्जवे जणयइ, नाणपज्जवे जणइयत्ता समत्तं विसोहेइ, मिच्छत्तं च निज्जरेइ. ॥ ५६ ॥ व्याख्या—हे भदंत! मनःसमाधारणया जीवः किं जनयति? मनसः सम्यक् प्रकारेण आ मर्यादया सिद्धांतोक्तमार्गमभिव्याप्य वा धारणा स्थापनं मनःसमाधारणा, तया जीवः किं फलमुत्पादयति? तदा गुरुराह—हे शिष्य! मनः समाधारणया मनसो मर्यादया रक्षणेनैकाग्र्यं धर्मे स्थैर्यं जनयति. धर्मे एकाग्र्यमुत्पाद्य ज्ञानपर्यवान् जनयति, विशिष्टान् मतिज्ञानश्रुतज्ञानादीनां पर्यायांस्तत्त्वावबोधरूपान् विशेषान् जनयति, पुनः सम्यक्त्वविशुद्धिं जनयति, मिथ्यात्वं च निर्जरयति निवारयति. ॥ ५६ ॥ वचःसमाधारणाया अपि फलमाह—

॥ मूलम् ॥—वयसमाहारणयाएणं भंते जीवे किं जणयइ? वयसमाहारणयाएणं व-

यसाहारणदंसणपज्जवे विसोहेइ, वयसाहारणदंसणपज्जवे विसोहित्ता सुलभबोहियत्तं निव्वत्तेइ, दुल्लहबोहियत्तं निज्जरेइ. ॥ ५७ ॥ व्याख्या—हे भगवन्! सिद्धांतोक्तमार्गे वचनसाधारणया स्वाध्याये एव वाग्निवेशनेन जीवः किं फलं जनयति? तदा गुरुराह—हे शिष्य! वचःसमाधारणया वाक्साधारणदर्शनपर्यवान् विशोधयति, वाचा साधारणा वाक्साधारणाः, वाचा कथयितुं योग्या ये पर्यवाः, शब्दविशेषाः, तथा दर्शनस्य सम्यक्त्वस्य ये पर्यवा भेदास्तान् विशोधयति निर्मलीकरोति. यतो हि वाक्समाधारणं कुर्वन् स्वाध्यायं करोति, स्वाध्यायं कुर्वन् द्रव्यानुयोगाद्यभ्यासं विदधदनेकनयज्ञो भूत्वा शंकादिदोषान्निवारयति. अतः सम्यक्त्वं निर्मलं करोति. यतो वाक्साधारणदर्शनपर्यवान् विशोध्य सुलभबोधित्वं निर्वर्तयति. सुलभबोधिः परभवे जैनधर्मप्राप्तिर्यस्य स सुलभबोधिस्तस्य भावः सुलभबोधित्वं, तदुत्पादयति, दुर्लभबोधित्वं निर्जरयति क्षपयति. ॥ ५७ ॥ अथ कायसमाधारणाया अपि फलमाह—

॥ मूलम् ॥—कायसमाहारणयाएणं भंते जीवे किं जणयइ? कायसमाहारणयाएणं

जीवे चरित्तपज्जवे विसोहेइ, चरित्तपज्जवे विसोहित्ता अहक्खायचरित्तं विसोहेइ, अहक्खायचरित्तं विसोहित्ता चत्तारि केवलकम्मं खवेइ, तओ पच्छा सिज्झइ बुज्झइ. ॥ ५७ ॥ व्याख्या— हे भगवन्! कायसमाधारणया जीवः किं जनयति? कायस्य समाधारणा संयमयोगेषु देहस्य सम्यग्व्यवस्थापना कायसमाधारणा, तया जीवः किं फलमुत्पादयति? तदा गुरुराह— हे शिष्य! कायसमाधारणया चारित्रपर्यवान् चारित्रभेदान् क्षायोपशमिकान् विशोधयति. चारित्रपर्यवान् विशोध्य यथाख्यातचारित्रं विशोधयति, यथाख्यातचारित्रं निर्मलं कुरुते. ननु यथाख्यातचारित्रमविद्यमानं कथं निर्मलं भवति? अत्रोत्तरं—यथाख्यातचारित्रं सर्वथाऽविद्यमानं नास्ति, अविद्यमानस्य निर्मलाऽसंभवात्. तस्माद्यथाख्यातचारित्रं पूर्वमस्ति, परं चारित्रमोहनीयेन मलिनमस्ति. तदेव यथाख्यातचारित्र चारित्रमोहोदयनिर्जरेण निर्मलीकुरुते. यथाख्यातचारित्रं विशोध्य चतुरः केवलिसत्कर्मांशान्, चत्वारि विद्यमानकर्माणि घनघातीनि वेदनीयायुर्नामगोत्रलक्षणानि भवोपग्राहीणि क्षपयति. ततः सिद्ध्यति बुध्यति च. ।५७। एवं समाधारणात्रयमुक्त्वा यथाक्रमं ज्ञानादित्रयस्य संपन्नतायाः फलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—नाणसंपन्नयाएणं भंते जीवे किं जणयइ? नाणसंपन्नयाएणं जीवे सव्व-
भावाभिगमं जणयइ, नाणसंपन्नेणं जीवे चाउरंतसंसारकंतारे न विणस्सइ, जहा सूईससुत्ता
पडिया न विणस्सई. तहा जीवोवि ससुत्तो संसारे न विणस्सइ, णाणविणयतवचरित्तजोगं
संपाउणइ. ससमयपरसमयविसारए संघायणिज्जे भवइ. ॥ ५९ ॥ व्याख्या—हे भदंत! ज्ञा-
नसंपन्नतया, ज्ञानस्य श्रुतज्ञानस्य संपन्नता श्रुतज्ञानसंपत्तिस्तया जीवः किं फलं जनयति?
तदा गुरुराह—हे शिष्य! श्रुतज्ञानसंपन्नतया जीवः सर्वभावाभिगमं, सर्वे च ते भावाश्च स-
र्वभावा जीवाजीवादयस्तेषामभिगमः सर्वभावाभिगमस्तं सर्वभावाभिगमं जीवाजीवादितत्व-
ज्ञानं जनयति. तथा ज्ञानसंपन्नो जीवश्चतुरंतसंसारकांतारे चतुर्गतिलक्षणे संसारवने न
विनश्यति, मोक्षाद्विशेषेण दूरं नाऽदृश्यो भवति. यथा हि ससूत्रा सूची कचवरादिषु प-
तिता सती न नश्यति, अदृश्या न भवति, नाशं न प्राप्नोति, तथा जीवोऽपि ससूत्रः श्रुत-
ज्ञानसहितः संसारे विनष्टो न भवतीति भावः. ततश्च श्रुतज्ञानी विनयतपश्चारित्रयोगान्
संप्राप्नोति. ज्ञानं च विनयश्च तपश्च चारित्रयोगाश्च ज्ञानविनयतपश्चारित्रयोगास्तान् सम्यक्

प्रकारेण प्राप्नोति. तत्र ज्ञानमवध्यादि, विनयः प्रसिद्धः, तपो द्वादशविधं, चारित्रयोगाश्च चारित्रव्यापारास्तान् सर्वान् लभते. पुनः श्रुतज्ञानी स्वसमयपरसमयसंघातनीयो भवति, स्वमतपरमतयोः संघातनीयो मीलनीयः स्यात्. एतावता स्वमतपरमताभिज्ञत्वेन प्रधानपुरुषत्वात् पङ्क्तिषु गणनीयो भवतीति भावः. ॥ ५९ ॥

॥ मूलम् ॥—दंसणसंपन्नयाएणं भंते जीवे किं जणयइ? दंसणसंपन्नयाएणं भवमिच्छत्तछेयणं करेइ, परं नो विज्झाइ, परं अणुत्तरेणं नाणदंसणेणं अप्पाणं संजोएमाणे सम्मं भावमाणे विहरइ. ॥ ६० ॥ व्याख्या—हे भगवन्! दर्शनसंपन्नतया दर्शनस्य क्षायोपशमिकस्य संपन्नता दर्शनसंपन्नता, तया दर्शनसंपन्नतया क्षायोपशमसम्यक्त्वसहितत्वेन जीवः किं फलं जनयति? तत्र गुरुरुत्तरमाह—हे शिष्य! दर्शनसंपन्नतया जीवो भवमिथ्यात्वछेदनं करोति, अर्थात् क्षायिकसम्यक्त्वं प्राप्नोति, परं ततः पश्चान्न विध्यायति, ज्ञानदर्शनचारित्राणां प्रकाशं नो निवारयति. ततः परं च ज्ञानदर्शनचारित्राणां प्रकाशमविध्यापयन् ज्ञानदर्शनचारित्राणां तेजोऽविनाशयन्ननुत्तरेण सर्वोत्कृष्टेन क्षायिकत्वात्प्रधानेन

ज्ञानदर्शनेनात्मानं संयोजयन्, सम्यक् प्रकारेणात्मानमात्मनैव वशीकुर्वन् विहरति, नवस्थकेवलतया मुक्ततया वा विचरतीति नावः. ॥ ६० ॥

॥ मूलम् ॥—चरित्तसंपन्नयाएणं नंते जीवे किं जणयइ? चरित्तसंपन्नयाएणं सेलेसीनावं जणयइ, सेलेसीं पमिवन्ने य अणगारे चत्तारि केवलकम्मंसे खवेइ, तर्ज पच्छा सिज्फइ, वुज्फइ, विमुच्चइ, परिनिव्वायइ, सव्वडुक्खाणमंतं करेइ. ॥ ६१ ॥ व्याख्या—हे स्वामिंश्चारित्रसंपन्नतया, चारित्रेण यथाख्यातचारित्रेण संपन्नता चारित्रसंपन्नता तया, यथाख्यातचारित्रसहितत्वेन जीवः किं जनयति? तदा गुरुराह—हे शिष्य! चारित्रसंपन्नतया यथाख्यातचारित्रसहितत्वेन शैलेशीनावं जनयति. शैलानां पर्वतानामीशः शैलेशो मेरुस्तस्येयमवस्था शैलेशी, तस्या नवनं शैलेशीभावस्तमुत्पादयति. अंशशब्दः सत्तार्थवाचकश्चतुर्दशगुणस्थानं भजते. ततः पश्चात्सिध्यति, सकलकर्माणि क्षपयित्वा सिद्धिं प्राप्नोति, बुध्यति तत्त्वज्ञो नवति, मुच्यते कर्मन्यो मुक्तो नवति, परिनिर्वाति कषायाग्नेरुपशमाच्छीतलो नवति, सर्वडुःखानामंतं करोति. ॥ ६१ ॥ अथ चारित्रे सति पंचेंद्रियनिग्रहो युज्यते, अतस्त-

त्फलं प्रश्नपूर्वमाह—

॥ मूलम् ॥—सोइंदियनिग्गहेणं भंते जीवे किं जणयइ? सोइंदियनिग्गहेणं मणुन्नामणुन्नेसु सद्देसु रागदोसनिग्गहं जणयइ, तप्पच्चइयं कम्मं न बंधइ, पुव्वबद्धं च निज्जरइ. ॥६२॥ व्याख्या—हे भदंत! हे स्वामिन्! श्रोत्रेंद्रियनिग्रहेण कर्णेंद्रियविजयेन जीवः किं जनयति? तदा गुरुराह—हे शिष्य! श्रोत्रेंद्रियनिग्रहेण मनोज्ञामनोज्ञेषु शब्देषु रागद्वेषनिग्रहं जनयति. पुना रागद्वेषाऽभावे सति तत्प्रत्ययिकं कर्म न बध्नाति. तौ रागद्वेषावेव प्रत्ययो निमित्तं यस्य तत्तत्प्रत्ययं, तत्प्रत्यये भवं तत्प्रत्ययिकं. रागद्वेषाभावे रागद्वेषनैमित्तिकं कर्म न बध्नाति. पूर्वबद्धं रागद्वेषोपार्जितं कर्म निर्जरयति क्षपयति. ॥ ६२ ॥

॥ मूलम् ॥—चक्खिंदियनिग्गहेणं भंते जीवे किं जणयइ? चक्खिंदियनिग्गहेणं मणुन्नामणुन्नेसु रूवेसु रागद्दोसनिग्गहं जणयइ, तप्पच्चइयं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ. ॥ ६३ ॥ व्याख्या—हे भदंत! हे स्वामिन्! चक्षुरिंद्रियनिग्रहेण जीवः किं जनयति? तदा गुरुराह—हे शिष्य! चक्षुरिंद्रियनिग्रहेण मनोज्ञामनोज्ञेषु रूपेषु रागद्वेषनिग्रहं राग-

द्वेषजयं जनयति. ततश्च तत्प्रत्ययिकं रागद्वेषोत्पन्नं कर्म न बध्नाति. पूर्वबद्धं रागद्वेषोपार्जितं कर्म निर्जरयति क्षपयति. ॥ ६३ ॥

॥ मूलम् ॥—घाणिंदियनिग्गहेणं भंते जीवे किं जणयइ? घाणिंदियनिग्गहेणं मणुन्नामणुन्नेसु गंधेसु रागदोसनिग्गहं जणयइ, तप्पच्चइयं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ. ॥ ६४ ॥ व्याख्या—हे भदंत! हे स्वामिन्! घ्राणेंद्रियनिग्रहेण जीवः किं जनयति? गुरुर्वदति, हे शिष्य! घ्राणेंद्रियनिग्रहेण मनोज्ञामनोज्ञेषु गंधेषु रागद्वेषनिग्रहं जनयति. ततो रागद्वेषजयात्तत्प्रत्ययिकं रागद्वेषोत्पन्नं कर्म न बध्नाति, पूर्वोपार्जितं कर्म निर्जरयति. ॥ ६४ ॥

॥ मूलम् ॥—जिब्भिंदियनिग्गहेणं भंते जीवे किं जणयइ? जिब्भिंदियनिग्गहेणं मणुन्नामणुन्नेसु रसेसु रागदोसनिग्गहं जणयइ, तप्पच्चइयं कम्मं न बंधइ, पुव्वबद्धं कम्मं निज्जरेइ. ॥ ६५ ॥ व्याख्या—हे भदंत! जिह्वेन्द्रियनिग्रहेण जीवः किं जनयति? गुरुराह—हे शिष्य! जिह्वेन्द्रियनिग्रहेण जीवो मनोज्ञाऽमनोज्ञेषु रसेषु रागद्वेषनिग्रहं जनयति, ततश्च तत्प्रत्ययिकं रागद्वेषनैमित्तिकं कर्म न बध्नाति. पूर्वबद्धं रागद्वेषोपार्जितं कर्म निर्जरयति क्षपयति.



२८

॥ मूलम् ॥—फासिंदियनिग्गहेणं भंते जीवे किं जणयइ? फासिंदियनिग्गहेणं मणुन्नामणुन्नेसु फासेसु रागद्दोसनिग्गहं जणयइ, तप्पच्चइयं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ. ॥ ६६ ॥ व्याख्या—हे भगवन्! स्पर्शेंद्रियनिग्रहेण जीवः किं जनयति? तदा गुरुराह—हे शिष्य! स्पर्शेंद्रियनिग्रहेण जीवो मनोज्ञामनोज्ञेषु स्पर्शेषु रागद्वेषनिग्रहं जनयति, ततश्च तत्प्रत्ययिकं कर्म न बध्नाति, पूर्वबद्धं च निर्जरयति. ॥ ६६ ॥ इंद्रियनिग्रहकर्ता कषायविजयी स्यात्, अतः कषायविजयफलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—कोहविजएणं भंते जीवे किं जणयइ? कोहविजएणं खंतिं जणयइ कोहवेयणिज्जं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ. ॥ ६७ ॥ व्याख्या—हे भगवन्! क्रोधविजयेन जीवः किं जनयति? गुरुराह—हे शिष्य! क्रोधविजयेन जीवः क्षांतिं जनयति, क्रोधविजयी क्षांतिमान् भवतीत्यर्थः. पुनः क्रोधवेदनीयं कर्म न बध्नाति. क्रोधोदयेन वेद्यते इति क्रोधवेदनीयं, क्रोधहेतुभूतं पुद्गलरूपं मोहनीयकर्मणो भेदं न बध्नाति, पूर्वबद्धं च कर्म निर्जरयति. ॥ ६७ ॥

॥ मूलम् ॥—माणविजएणं भंते जीवे किं जणयइ? माणविजएणं मद्दवं जणयइ, माणवेयणिज्जं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ. ॥ ६८ ॥ व्याख्या—हे भगवन्! मानविजयेन जीवः किं फलं जनयति? गुरुराह—हे शिष्य! मानविजयेन जीवो मार्दवं सुकुमालत्वं जनयति. मानविजयान्नमनशीलो भवतीति भावः. पुनर्मानेन मानोदयेन वेद्यते इति मानवेदनीयं कर्म न बध्नाति, पूर्वबद्धं च कर्म निर्जरयति. ॥ ६८ ॥

॥ मूलम् ॥—मायाविजएणं भंते किं जणयइ? मायाविजएणं उज्जुभावं जणयइ, मायावेयणिज्जं कम्मं न बंधइ, पुव्वबद्धं च निज्जरेइ. ॥ ६९ ॥ व्याख्या—हे भगवन्! मायाविजयेन जीवः किं जनयति? गुरुराह—हे शिष्य! मायाविजयेन जीव ऋजुभावं सरलत्वमुत्पादयति, ततश्च मायावेदनीयं कर्म न बध्नाति, पूर्वबद्धं च कर्म निर्जरयति क्षपयति. ॥ ६९ ॥

॥ मूलम् ॥—लोभविजएणं भंते जीवे किं जणयइ? लोहविजएणं संतोसिभावं जणयइ. लोभवेयणिज्जं कम्मं न बंधइ. पुव्वबद्धं च कम्मं निज्जरेइ. ॥ ७० ॥ व्याख्या—हे भगवन्! लोभविजयेन जीवः किं जनयति? गुरुराह—हे शिष्य! लोभविजयेन जीवः संतोषिभावं,

संतोषिणो जावः संतोषित्नावस्तमुत्पादयति, लोन्नवेदनीयं कर्म न बध्नाति, पूर्वनिबद्धं च कर्म निर्जरयति. ॥७०॥ कषायविजयिना साधुना रागद्वेषमिथ्यादर्शनविजयः कर्तव्यः, अतस्तेषां जयफलं प्रश्नपूर्वकमाह—

॥ मूलम् ॥—पिज्जदोसमित्थादंसणविजएणं जंते जीवे किंजणयइ? पिज्जदोसमित्थादंसणविजएणं नाणदंसणचरित्ताराहणयाए अप्नुठेइ, अठविहस्स कम्मस्स गंठिविमोयणठाए तप्पढमयाएणं जहाणुपुव्विए अठावीसइविहं मोहणिज्जं कम्मं उग्घाएइ, पंचविहं नाणावरणिज्जं, नवविहं दंसणावरणिज्जं पंचविहमंतरायं, एए तिन्निवि कम्मंसे जुगवं खवेइ, तर्ज पछा अणुत्तरं अणंतं कसिणं पडिपुन्नं निरावरणं वितिमिरं विसुद्धलोगालोगपत्नावयं केवलवरनाणदंसणं समुप्पाडेइ, जाव सजोगी जवइ ताव इरियावहियं कम्मं बंधइ, सुहफरिसं दुसमयठिइयं तं पढमसमए बद्धं, बीयसमए वेइयं, तईयसमए निज्जिन्नं से काले अकम्मं वा जवइ. ॥ ७१ ॥ व्याख्या—हे जदंत! स्वामिन्! प्रेय्यद्वेषमिथ्यादर्शनविजयेन जीवः किं फलं जनयति? तत्र प्रेय्यशब्देन प्रेमरागः, द्वेषः प्रसिद्धः, मिथ्यादर्शनं संशयादि-

न्निर्विपरीतमतित्वं, प्रेय्यं च द्वेषश्च मिथ्यादर्शनं च प्रेय्यद्वेषमिथ्यादर्शनानि, तेषां विजयः प्रेय्यद्वेषमिथ्यादर्शनविजयस्तेन जीवः किं फलमुत्पादयति? तदा गुरुराह–हे शिष्य! मिथ्यादर्शनविजयेन जीवो ज्ञानदर्शनचारित्राणामाराधनायै अभ्युत्तिष्ठते, सावधानो भवति, अभ्युत्थाय चाष्टविधकर्मणां ग्रंथिं घातिकर्मणां कठिनजालं विमोचनार्थं क्षपयितुमभ्युत्तिष्ठते, सावधानो भवति. अथ कर्मग्रंथिविमोचनेऽनुक्रममाह—तत्प्रथमतया यथानुक्रममष्टाविंशतिविधं मोहनीयं कर्मोद्घातयति. क्षपकश्रेणिमारूढः सन् क्षपयति. षोडशकषायाः, नवनोकषायाः, मोहनीयत्रयं, एवमष्टाविंशतिविधं मोहनीयकर्म विनाशयति. ततश्चरमसमये यत्क्षपयति तत्क्रममाह—मतिश्रुतावधिमनःपर्यायकेवलज्ञानावरणरूपं कर्म, पश्चान्नवविधं दर्शनावरणीयं कर्म, चक्षुर्दर्शनाऽचक्षुर्दर्शनावधिदर्शनकेवलदर्शनावरणं, निद्रापंचकं, चैवं नवविधं दर्शनावरणीयं कर्म. ततः पश्चात्पंचविधमंतरायं, एतानि त्रीणि 'कम्मंस्से' इति सत्कर्माणि विद्यमानानि त्रीणि कर्माणि युगपत्क्षपयति, क्षपकश्रेणिमारूढः सन् समकालं क्षयं नयतीत्यर्थः. ततः पश्चादनंतरं तेषां कर्मणां क्षयीकरणादनंतरमनुत्तरं सर्वेभ्यः प्रधानं,

अनंतमनंतार्थग्राहकं, कृत्स्नं समस्तवस्तुपर्यायग्राहकं, प्रतिपूर्णं सकलैः स्वपरपर्यायैः सहितं, निरावरणं समस्तावरणरहितं, वितिमिरमज्ञानांशरहितं, विशुद्धं सर्वदोषरहितं, लोकालोकप्रभावकं, लोकालोकयोः प्रकाशकारकं, एतादृशं केवलज्ञानदर्शनं समुत्पादयति, यावत्सयोगी भवति, मनोवाक्कायानां योगो व्यापारस्तेन सह वर्तते इति सयोगी भवति, त्रयोदशगुणस्थाने यावत्तिष्ठति, तावदीर्यापथिकं कर्म बध्नाति. ईरणमीर्या गतिस्तस्याः पंथा ईर्यापथः, ईर्यापथे भवमीर्यापथिकं. पथो ग्रहणं ह्युपलक्षणं, तस्य तिष्ठतोऽपि सयोगस्येर्याया संभवात्, सयोगतायां केवलिनोऽपि सूक्ष्मसंचाराः संति. तदीर्यापथिकं कर्म कीदृशं भवति? तदुच्यते—सुखयतीति सुखः, सुखः सुखकारी स्पर्श आत्मप्रदेशैः सह संश्लेषो यस्य तत्सुखस्पर्शं, द्विसमयस्थितिकं, द्वौ समयौ यस्याः सा द्विसमया, द्विसमया स्थितिरस्येति द्विसमयस्थितिकं. तद्द्विसमयस्थितिकस्वरूपमाह—प्रथमसमये बद्धं, स्वस्य स्पर्शनायाधीनं कृतं, आधीनकरणात्स्पृष्टमपि द्वितीये समये तद्बद्धं स्पृष्टं वेदितं कायेनानुभूतं. तृतीयसमये निर्जीर्णं परिशाटितं, निष्कषायस्योत्तरकालस्थितेरभावो वर्तते, उत्तरकाले सकषायस्य बंधो भव-

ति, परं केवलिनो न जवति. तदेव पुनः सूत्रकारो भ्रांतिनिवारणार्थमाह—तदीर्यापथिकं कर्म केवलिनो बद्धमात्मप्रदेशैः सह श्लिष्टं, स्पृष्टं, ज्योत्स्ना पटवत्, तथा स्पृष्टं मसृणमपि कोमलमपि कुड्यापतितशुष्कचूर्णवदिति विशेषणद्वयेन केवलिनो हि निधत्तनिकाचितावस्थयोरजावः. पुनरुदीरितमुदयप्राप्तं सद्वेदितमनुजूतं, केवलिनो ह्युदीरणा न जवति, ततो निर्जीर्णं क्षयमुपगतं. ततः 'सेकाले' इति एष्यत्काले आगामिनि कालेऽकर्मा चापि भवति, कर्मरहितो जवतीत्यर्थः. ॥ ७१ ॥ अथ शैलेश्यकर्मताद्वारद्वयमर्थतो व्याचिख्यासुराह—

॥मूलम्॥—अहाउयं पालयित्ता अंतोमुहुत्तावसेसाउए जोगनिरोहं करेमाणे सुहुमकिरियं अप्पडिवाइं सुक्कज्झाणं झायमाणे तप्पढमयाए मणजोगं निरुंजइ, मणजोगं निरुंजित्ता वयजोगं निरुंजइ, वयजोगं निरुंजित्ता कायजोगं निरुंजइ, कायजोगं निरुंजित्ता आणपाणनिरोहं करेइ, आणपाणनिरोहं करित्ता इसिंपंचरहस्सक्खरुच्चारद्धाएणं अणगारे समुच्छिन्नकिरियं अनियट्टिसुक्कज्झाणं झियायमाणे वेयणिज्जं आउयं नाम गोयं च एए चत्तारिवि कम्मंसे जुगवं खवेइ. ॥ ७२ ॥ व्याख्या—अथ केवलप्राप्तेरनंतरमायुष्कं देशोनपूर्वकोटिप्रमि-

तमायुः प्रपाल्य, अथवाऽन्यदप्यायुः पालयित्वांतर्मुहूर्तावशेषायुष्को, यदा केवलिनोंतर्मुहूर्तप्रमाणमायुस्तिष्ठति, तदा केवली योगं मनोवाक्कायव्यापारं, तस्य निरोधं कुर्वाणः सन्, सूक्ष्मा क्रिया यत्र तत् सूक्ष्मक्रियमप्रतिपातिशुक्लध्यानं, शुक्लध्यानस्य तृतीयभेदलक्षणं, तद्ध्यायंस्तत्प्रथमतया प्रथमतो मनोयोगो मनोव्यापारो मनोद्रव्यजनितो जीवव्यापारस्तं निरुणद्धि. तं निरुध्य च वचोयोगं भाषाद्रव्यसाचिव्यजनितजीवव्यापारं निरुणद्धि. तं निरुध्य च काययोगं कायव्यापारं निरुणद्धि. तं निरुध्य चानप्राणनिरोधं श्वासप्रश्वासयोर्निरोधं करोति. तन्निरोधं कृत्वा योगत्रयनिरोधं कृत्वेषत्स्वल्पप्रयासेन यथोच्चार्यते, तथा पंचानां ह्रस्वाक्षराणामुच्चारकालेन, यावता कालेनेषत्प्रयासेन पंचाक्षराणि 'अ इ उ ऋ लृ' इत्येतानि कथ्यंते. तावता कालेनानगारः समुछिन्नक्रियं, सम्यगुछिन्नास्त्रोटिताः क्रिया यत्र तत्समुछिन्नक्रियं, पुनरनिवृत्तिशुक्लध्यानं शुक्लध्यानस्य चतुर्थभेदरूपं ध्यायन् शैलेश्यवस्थामनुभवन् सन् वेदनीयं १ आयुः २ नाम ३ गोत्रं ४ चैतांश्चत्वारः कर्मांशान्, एतानि चत्वारि सत्कर्माणि विद्यमानानि कर्माणि युगपत्समकालं क्षपयति. ॥ ७२ ॥

॥ मूलम् ॥—तर्ज उरालियकम्माइं च सव्वाहिं विप्पहाणाहिं विप्पजहित्ता उजुसेढीं पत्ते अफुसमाणगई उड्ढं एगसमएणं अविग्गहेणं गंता सागारोवउत्ते सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणमंतं करेइ. ॥ ७३ ॥ व्याख्या—ततः पश्चाद्वेदनीयादिचतुःकर्मक्षयीकरणादनंतरमौदारिककार्मणे, चशब्दात्तैजसमपि, एतच्छरीरत्रयमपि सर्वाभिर्विप्रहाणिभिर्विप्रहाय, विशेषेण प्रहाणयो विप्रहाणयः, ताभिर्विशेषेण प्रहाय परिशाट्य ऋजुश्रेणिं प्राप्तः, ऋजुः सरला चासौ श्रेणिश्च ऋजुश्रेणिस्तामृजुश्रेणिं. सरलाकाशप्रदेशपंक्तिं गतः पुनरस्पृशद्गतिः सन्, यावंतः समोर्ध्वश्रेण्यामाकाशप्रदेशावगाह्यमानास्तानेव स्वप्रदेशैः स्पृशन्नधिकान्न स्पृशन् जीवो यया गत्या व्रजति तादृग्गतिधरः सन्नूर्ध्वग एकेन समयेनाऽविग्रहगत्यभावेन तत्र मोक्षस्थाने गत्वा साकारोपयुक्तो ज्ञानोपयोगयुक्तः सन् सिध्यति बुध्यति परिनिर्वाति सर्वदुःखानामंतं करोति. ॥ ७३ ॥

॥ मूलम् ॥—एस खलु सम्मत्तपरिक्कमस्स अज्झयणस्स अट्ठे समणेणं भगवया महावीरेणं आघविए पन्नविए परूविए दंसिए णिदंसिए उवदंसिएत्ति बेमि. ॥ ७४ ॥ व्याख्या—

अथ प्रश्नोत्तरोपसंहारमाह—हे जंबू! एष इदानीमुक्तः, खलु निश्चयेन सम्यक्त्वपराक्रमस्याध्ययनस्यार्थः श्रमणेन भगवता ज्ञानवता श्रीमहावीरेण 'आवखिएत्ति' आर्षत्वादाख्यातः, पुनः प्रज्ञापितः सामान्यविशेषपर्यायैर्व्यक्तीकरणेन प्रकटीकृतः. पुनः प्ररूपितो हेतुफलादिप्रकर्षज्ञापनेन प्ररूपितः, पुनर्दार्शितो नानाभेददर्शनेन प्रकाशितः, पुनर्निदार्शितो दृष्टांतोपन्यासेन दृढीकृतः, पुनरुपदार्शितः स्वरूपकथनेन ज्ञापितः, उपसंहारेण वा ज्ञापितः, इत्यहं ब्रवीमि, इति सुधर्मास्वामी जंबूस्वामिनं प्राह. ॥ ७४ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां सम्यक्त्वपराक्रमाख्यमध्ययनमेकोनत्रिंशत्तमं संपूर्णं. ॥ २९ ॥ श्रीरस्तु ॥

## ॥ अथ त्रिंशत्तममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययनेऽप्रमत्तत्वं वीतरागत्वसम्यक्त्वपराक्रमत्वं चोक्तं, तेनाप्रमत्तेन सम्यक्त्वपराक्रमवता मोक्षमार्गाय तपस्युद्यमो विधेयः, अतस्तपोमार्गाध्ययनं त्रिंशत्तमं च कथ्यते—

॥ मूलम् ॥—जहा उ पावयं कम्मं । रागदोससमज्जियं ॥ खवेइ तवसा भिक्खू । तमेगग्गमणो सुण ॥ १ ॥ व्याख्या—यथा येन प्रकारेण भिक्षुस्तपसा रागद्वेषसमार्जितं रागद्वेषाभ्यामुपार्जितं कर्म क्षपयति, तुशब्दः पदपूरणे, तं तपोमार्गमेकाग्रमनाः सावधानचित्तः सन् त्वं शृणु? हे जंबू! अहं वदामीति संबंधः, अनाश्रवेणैव किल कर्मक्षयः क्रियते. ॥१॥

॥ मूलम् ॥—पाणिवहमुसावाए । अदत्तमेहुणपरिग्गहा विरओ ॥ राईभोयणविरओ । जीवे हवइ निरासओ ॥ २ ॥ व्याख्या—हे शिष्य! ईदृशो जीवो निराश्रवो भवति. कीदृशः? प्राणिवधमृषावादादत्तमैथुनपरिग्रहाद्विरतो रहितः, पुना रात्रिभोजनविरतः. ॥ २ ॥ पुनरनाश्रवो यथा जीवो भवति, तथाह—

॥ मूलम् ॥-पंचसमिओ तिगुत्तो । अकसाओ जिइंदिओ ॥ अगारवो य निस्सल्लो । जीवो हवइ अणासवो ॥३॥ व्याख्या-एतादृशो जीवोऽनाश्रवो भवति, आश्रवरहितो भवति. कीदृशोजीवः? पंचभिः समितिभिः समितः सहितः पंचसमितः, पुनस्तिसृभिर्गुप्तिभिर्गुप्तः पुनरकषायः कषायरहितः, पुनर्जितेंद्रियो वशीकृतेंद्रियः, पुनरगारव ऋद्धिरससातादिगर्वत्रयरहितः,

पुनर्निःशल्यो मायानिदानमिथ्यादर्शनशल्यैस्त्रिभी रहितः. एतादृशो जीवोऽनाश्रवो भवति. ॥ ३ ॥ एवंविधोऽनाश्रवश्च यथा कर्म क्षपयति तथा वदति—

॥ मूलम् ॥—एएसिं तु विवच्चासे । रागद्दोससमज्जियं ॥ खवेइ उ जहा भिक्खू । तमेगग्गमणा सुण ॥ ४ ॥ व्याख्या—हे शिष्य! यथा येन प्रकारेण भिक्षुः साधुरेतेषां पूर्वोक्तानां प्राणातिपातमृषावादादत्तमैथुनपरिग्रहरात्रिभोजनविरतिलक्षणानां व्रतानां, तथा समितिगुप्त्यादिलक्षणानामनाश्रवकारणानां विपर्यासे वैपरीत्ये प्राणिवधमृषावादादत्तमैथुनपरिग्रहरात्रिभोजनसमित्यभावसेवने सति रागद्वेषाभ्यां समार्जितं संचितं पापकर्म क्षपयति, तं प्रकारमेकाग्रमना एकचित्तः सन् त्वं शृणु? ॥ ४ ॥ अत्र दृष्टांतमाह—

॥ मूलम् ॥—जहा महातलागस्स । संनिरुद्धे जलागमे ॥ उस्सिंचणाए तवणाए । कमेणं सोसणा भवे ॥ ५ ॥ व्याख्या—यथा महातटाकस्य महाजलाश्रयस्य जलागमे पानीयागमनमार्गे संनिरुद्धे सम्यक्प्रकारेण संवृते सति, 'उस्सिंचणया' उत्सिंचनयोर्ध्वमरघट्टादिनोर्ध्वाकर्षणायाऽऽतपनेन रविकिरणादीनां संतापेन क्रमेण शोषणा जलस्य शोषणं भ-

वेत्, नवीनजलागमनमार्गो निरुध्यते, पूर्वस्थजलं च निष्कास्यते, तदा जलहृदो रिक्तः स्यादिति जावः. ॥ ५ ॥ अथ दार्ष्टांतिकमाह—

॥ मूलम् ॥—एवं तु संजयस्सावि । पावकम्मनिरासवे ॥ जवकोमीसंचियं कम्मं । तवसा निज्जरिज्जइ ॥ ६ ॥ व्याख्या—एवममुना प्रकारेण पापकर्मनिराश्रवे सति, पापकर्मणां प्राणिवधाद्यानां निरोधे सति संयतस्यापि साधोरपि तपसा द्वादशविधेन जवकोटीसंचितं कर्म निर्जीर्यते, आधिक्येन क्षयं नीयते. अत्र कोटीग्रहणं वहुत्वोपलक्षणं, कोटीनियमस्याऽसंजवात्. ॥ ६ ॥ अथ तपोजेदमाह—

॥ मूलम् ॥—सो तवो दुविहो वुत्तो । वाहिरप्जिंतरो तहा ॥ वाहिरो उव्विहो वुत्तो । एवमप्जिंतरो तवो ॥ ७ ॥ व्याख्या—तत्तपो द्विविधं प्रोक्तं, बाह्यं तथाज्यंतरं ' वाह्यं षड्विधं प्रोक्तं, एवममुना प्रकारेणाज्यंतरमपि षड्विधं प्रोक्तं. ॥ ७ ॥ प्रथमं बाह्यं षड्विधमाह—

॥ मूलम् ॥—अणसणमूणोयरिया । जिक्कायरिया य रसपरिच्चाउ ॥ कायकिलेसो संलीण—या य वप्नो तवो होइ ॥ ८ ॥ व्याख्या—अनशनमुपवासः, एकस्मादुपवासादार-

न्य षण्मासिकपर्यंतमनशनं तप उच्यते १. द्वात्रिंशत्कवलप्रमाणमाहारः प्रत्यहमेकैकेन कवलेन न्यूनीकुर्वन् यावदेकस्मिन् कवले स्थाप्यते; सोनोदरिका, ऊनोदरे नवमूनोदरिकं तपः, प्राकृतत्वाल्लिंगव्यत्ययः. भिक्षाचर्या भिक्षयाऽऽहारग्रहणार्थमुच्चावचगृहेषु भ्रमणं. रसत्यागो विकृतीनां परित्यागः. कायक्लेशस्तापशीतादीनां सहनं. संलीनतांगोपांगादिकं संवृत्य प्रवर्तनं. एतत् षड्विधं बाह्यं तपो भवति. ॥ ८ ॥ अथैतेषामेव स्वरूपमाह—

॥ मूलम् ॥ इत्तरियमरणकाला । अणसणा दुविहा भवे ॥ इत्तरियसावकंखा । निरवकंखावि इज्जिया ॥ ९ ॥ व्याख्या—अनशनं द्विविधं भवति, इत्वरिकं इत्वरे स्तोके काले भवमित्वरिकमल्पकालं नियतकालावधिकमित्यर्थः. मरणावसानः कालो यस्याः सा मरणकाला, इति द्वितीयं, यावज्जीवमित्यर्थः. स्त्रीलिंगत्वं प्राकृतत्वात्. इत्वरिकं तपसावकांक्षं भवति, सह अवकांक्षया वर्तते इति सावकांक्षं, घटिकाद्वयाद्यनंतरमहं भोजनं विधास्यामीतिवांछासहितमित्यर्थः. द्वितीयं यावज्जीवं निरवकांक्षमाहारप्रत्याख्यानादारभ्य तज्जन्मनि भोजनाशाऽसंज्ञावाञ्छांगरहितमित्यर्थः. ॥ ९ ॥

॥ मूलम् ॥—जो सो इत्तरियतवो । सो समासेण छव्विहो ॥ सेढितवो पयरतवो । घणो य तह होइ वग्गो य ॥ १० ॥ व्याख्या—यत्त्वित्वरिकं तपस्तत्समासेन संक्षेपेण षड्विधं भवति, विस्तरस्तु द्वासप्ततिविधं ७२ भेदं. अथ षड्विधत्वमाह—श्रेणितपः १, प्रतरतपः, २, घनतपः ३, तथा वर्गतपः ४. श्रेणिः पंक्तिस्तदुपलक्षितं तपः श्रेणितपः, तच्चतुर्थादिक्रमेण क्रियमाणं षण्मासांतं गृह्यते, तत्प्रथमतपो भवति. तथा श्रेणिरेव श्रेण्या गुणिता प्रतरस्तदुपलक्षितं तपः प्रतरतपः. इह सुबोधार्थं चतुर्थ षष्ठाष्टमदशमाख्यपदचतुष्टयात्मिका श्रेणिर्विवक्ष्यते, सा चतुर्भिर्गुणिता षोडशपदात्मकं प्रतराख्यं तपो भवति. तत्प्रतरतपः षोडशपदात्मकमेव यदा पदचतुष्टयात्मिकया श्रेण्या गुण्यते, तदा घनाख्यं तपो भवति. 'शोल चउका चउसट्ठि' इति भावः. अथ पुनर्यदा घनश्चतुःषष्टिपदात्मेका घनेनैव चतुःषष्टिपदात्मकेनैव गुण्यते, तदा वर्गो भवति. तदुपलक्षितं तपो वर्गतप उच्यते. चतुःषष्टिश्चतुःषष्ट्या गुणितानि जातान्यंकानि षण्णवत्यधिकानि चत्वारि सहस्राणि ४०९६. ॥ १० ॥ अथ पंचमषष्ठभेदावाह—

॥ मूलम् ॥—तत्तो य वग्गवग्गो । पंचमो छठ्ठ पइन्नतवो ॥ मणइच्छियचित्तत्थो । नायव्वो होइ इत्तरिउं ॥११॥ व्याख्या–तत इति ततो वर्गतपोऽनंतरं वर्गावर्ग इति पंचमं तपो ज्ञेयं. वर्ग एव वर्गाद्गुणितो वर्गवर्गो जवति, यथा चैककोटिः सप्तषष्टिलक्षाः सप्तसप्ततिसहस्राणि द्विशती षोडशाधिका अंकतो भवति १६७७७२१६. एतदुपलक्षितं तपो वर्गवर्गतप इत्युच्यते इत्यर्थः. एवं पंचादिपदेष्वपि जावना कर्तव्या. तथा षष्टकं तपो यत् श्रेण्यादिनियतरचनारहितं निजशक्त्या नमस्कारसहितादि पूर्वपुरुषाचरितं यवमध्यवज्रमध्यचंद्रप्रतिमादि चेति, तत्प्रकीर्णतपः, मनसीप्सित इष्टश्चित्रोऽनेकप्रकारोऽर्थः स्वर्गापवर्गादिस्तेजोलेश्यादिर्वा यस्मात्तन्मनईप्सितचित्रार्थमित्वरिकं प्रक्रमादनशनाख्यं तपो ज्ञातव्यं. ॥ ११ ॥ अथ द्वितीयं मरणकालमनशनमाह—

॥ मूलम् ॥—जा सा अणसणा मरणे । दुविहा सा वियाहिया ॥ सवियारा अवियारा । कायचेठंपई जवे ॥ १२ ॥ व्याख्या—प्राकृतत्वादत्र स्त्रीत्वं. यदनशनं मरणे मरणसमये जवति, तत्तीर्थकरैर्द्विविधं व्याख्यातं, सविचारं, सह विचारेण मनोवाक्कायजेदचेष्टारूपेण

वर्तते यत्तत्सविचारं, अंगादिचेष्टया सहितं, स्थित्युपविशनत्वग्वर्तनविश्रामणादिकया युक्तमित्यर्थः. द्वितीयमविचारं चेष्टारहितं पादपोपगममित्यर्थः. तत्सविचारं हि कायचेष्टां प्रतीत्याश्रित्य नवतीत्यर्थः. वैयावृत्त्यकरसाधुनोत्थापनं, प्रतिस्थापनमुनयपार्श्वाभ्यां स्थापनमित्यादि वैयावृत्त्यकारापणं, अथवा स्वयमेव शरीरस्योद्वर्तनपरिवर्तनादिचेष्टासहितं, अन्येन न कारापणं, ईदृशं यद्भवति तत्सविचारं ज्ञेयमित्यर्थः. त्रिविधचतुर्विधाहारत्यागेन प्रत्याख्यानमुद्वर्तनादि करोति कारयति वा तद्भक्तपरिज्ञाख्यं प्रथमं १, तथा कृतनिश्चितचतुर्विधाहारत्याग इंगितदेशे उद्वर्तनादींगितं चेष्टितमात्मनैव करोति, अन्येन कारयति, एतद् द्वितीयमिंगितमरणं २. एतद्द्वयमपि सविचारमनशनं ज्ञेयं. ॥१२॥ एतदेव सूत्रकारो वदति—

॥ मूलम् ॥—अहवा सप्पडिकम्मा । अप्पडिकम्मा य आहिया ॥ नीहारमनीहारी । आहारछेओ दोसुवि ॥ १३ ॥ व्याख्या—अथवा तत्पुनर्मरणं सप्रतिकर्म अप्रतिकर्म आहितं कथितमित्यर्थः. सह परिकर्मणा वर्तते इति सप्रतिकर्म वैयावृत्त्यसहितं भक्तपरिज्ञाख्यं इंगिनीमरणं च, सप्रतिकर्मणी एते द्वे अपि मरणे, परं तु मूलत्वेनैक एव भेदः. च पुनर-

प्रतिकर्म मरणं वैयावृत्त्यरहितं पादपोपगममित्यर्थः. तथा पुनर्निर्हार्यनशनं, ग्रामान्नगराद्बहिर्निर्हार्यते निःसार्यते इति निर्हारि, पुनरनीहारि, एतत्पादपोपगममपि द्विविधं भवति, द्वयोरपि निर्हाराऽनीहारयोर्मरणयोराहारभेदस्तु भवत्येव. ॥ १३ ॥ अथोनोदरिकामाह—

॥ मूलम् ॥—ऊनोयरियं पण्हा । समासेण वियाहियं ॥ दव्वउ खित्तकालेण । भावेणं पज्जवेहि य ॥ १४ ॥ व्याख्या—अवममूनमुदरं यस्मिंस्तदवमोदरं, तत्र भवमवमोदरिकं, तत्तपः समासेन संक्षेपेण पंचधा व्याख्यातं, द्रव्यतो द्रव्येण, क्षेत्रेण, कालेन, भावेन, च पुनः पर्यायैः. ॥ १५ ॥ तत्र द्रव्यतोऽवमोदरिकामाह—

॥ मूलम् ॥—जो जस्स उ आहारो । तत्तो ऊणं तु जो करे ॥ जहन्नेणेगसित्थाई । एवं दव्वेण उ भवे ॥ १५ ॥ व्याख्या—यस्य जीवस्य यावानाहारः स्यात्, तत आहाराद्यदूनं कुर्यात्, जघन्येनैकसिक्थकं, यत्रैकमेव सिक्थं भुज्यते, आदिशब्दात् सिक्थद्वयादारभ्य यावदेककवलभोजनं, एतच्चाल्पाहाराख्यमवमोदर्यमाश्रित्योक्तं. इदं चाष्टकवलांतं १. अथ च नवकादारभ्य द्वादशभिः कवलैरपार्धक्यं २. त्रयोदशकादारभ्य षोडशांतं द्विभागाख्यं ३. स-

तद्दशकादारभ्य चतुर्विंशतिस्तत्पर्यंतं प्राप्ताख्यं ४. पंचविंशतेरारभ्य यावदेकत्रिंशत्कवलभोजनं किंचिदूनमवमोदर्यमुक्तं च. ५ इत्येवं पंचविधमवमोदर्यमिति. उक्तं च—अप्पाहार १ अवड्ढा २। दुभाग ३ पत्ता ४ तहेव किंचूणा ५॥ अट्ठ १ दुवालस २ सोलस ३। चउवीस ४ तहेक्कतीसा य ५॥१॥ एवं द्रव्येणोपाधिभूतेनावमौदर्यमित्यर्थः. ॥१५॥ अथ क्षेत्रावमौदर्यमाह—

॥ मूलम् ॥—गामे नगरे तह राय—हाणि निगमे य आगरे पल्ली ॥ खेडे कब्बडदोणमुह—पट्टणमडंबसंबाहे ॥१६॥ आसमपए विहारे। सन्निवेसे समायघोसे य ॥ थलसेणाखंधारे। सत्थे संवट्टकोट्टे य ॥ १७ ॥ वाडेसु य रत्थासु य। घरेसु वा एव मेत्तियं खित्तं ॥ कप्पई उ एवई। एवं खित्तेणउ भवे ॥ १८ ॥ तिसृभिर्गाथाभिः कुलकं ॥ व्याख्या—एवमित्यमुना प्रकारेण हृदयस्थप्रकारेण एतावन्नियतमानं क्षेत्रं पर्यटितुं मम वर्तते इति, एवमादिर्यहशालादिपरिग्रहः, अद्यैतावत्प्रमाणं भिक्षार्थं भ्रमितव्यमिति निर्धारणं क्षेत्रेणावमौदर्यं भवेत्. तदेव भिक्षाभ्रमणक्षेत्रमाह—कुत्र कुत्र भिक्षार्थं साधुर्भ्रमति? ग्रामे, गुणान् ग्रसतीति ग्रामस्तस्मिन् ग्रामे, अथवा ग्रसति सहतेऽष्टादशविधं करमिति ग्रामस्तस्मिन्. अथवा कंटकवाटकावृतो

जनानां निवासो ग्रामस्तस्मिन् ग्रामे. पुनर्नगरे, न यत्र कराः संतीति नगरं तस्मिन्. तथा
राजधान्यां, राजा धीयते यस्यां सा राजधानी, तस्यां राजधान्यां राजपीठस्थाने. निगमे प्र-
भूतवणिग्निवासे. आकरः स्वर्णाद्युत्पत्तिस्थानं, तस्मिन्नाकरे. पल्ली वृक्षवंशादिगहनाश्रिता प्रां-
तजनस्थानं, तस्यां पल्ल्यां. खेटं धूलिप्राकारपरिक्षितं, तस्मिन् खेटे. पुनः कर्बटं कुनगरं,
द्रोणमुखं जलस्थलनिर्गमप्रवेशं, तद्भृगुकच्छादिकं. पत्तनं तु यत्र सर्वदिग्भ्यो जनाः पतंत्याग-
च्छंतीति पत्तनं. अथवा पत्तनं रत्नखानिरिति लक्षणं, तदपि द्विविधं, जलमध्यवर्ति स्थलम-
ध्यवर्ति च. मडंबं, यस्य सर्वदिक्षु सार्धतृतीययोजनांतर्ग्रामो न स्यात् तत्र. तथा संबाधः प्र-
भूतचातुर्वर्ण्यनिवासः. कर्बटशब्दादारभ्य संबाधशब्दं यावद् द्वंद्वसमासः कर्तव्यः. कर्बटं च
द्रोणमुखं च पत्तनं च मडंबं च संबाधश्च कर्बटद्रोणमुखपत्तनमडंबसंबाधास्तेषां समाहारः
कर्बटद्रोणमुखपत्तनमडंबसंबाधं, तस्मिन् कर्बटद्रोणमुखपत्तनमडंबसंबाधे. एतेषु स्थानेष्वि-
त्यर्थः. ॥ १६ ॥ पुनः कुत्र कुत्रेत्याह—आश्रमपदे तापसाश्रयोपलक्षिते स्थाने, विहारे देव-
गृहे, पुनः सन्निवेशे यात्राद्यर्थसमागतजनावासे, समाजः परिषत, घोष आभीरपल्ली, स-

माजश्च घोपश्च समाजघोपं तस्मिन् समाज घोपे. तथा 'थलसेणाखंधारे' इति, स्थलं च सेना च स्कंधावारश्च स्थलसेनास्कंधावारं, तस्मिन् स्थलसेनास्कंधावारे. तत्र स्थलमुच्चभूमिजागः, सेना चतुरंगकटकसमूहः, स्कंधावारः कटकोत्तरणनिवासः. पुनः सार्थः क्रयाणकजृतां समूहः प्रतीत एव, तत्र. तथा संवर्तो जयत्रस्तजनसमवायः, कोट्टो दुर्गः, संवर्तश्च कोट्टश्च संवर्तकोट्टं, तस्मिन् संवर्तकोट्टे. ॥ १७ ॥ पुनर्वाटेषु वृत्त्यादिपरिक्षिप्तगृहसमूहेषु. रथ्यासु सेरिकासु, च गृहेपु प्रसिद्धेषु, एतेषु स्थानेष्ववमौदर्यं कृतं क्षेत्रतो जवति. ॥ १८ ॥ अथ पुनः प्रकारांतरेण क्षेत्रावमौदर्यमाह—

॥ मूलम् ॥—पेमा य अद्धपेमा । गोमुत्तिपयंगवीहिया चेव ॥ संबूकावट्टायय—गंतु पच्चागमा छठा ॥ १९ ॥ व्याख्या—षड्विधा क्षेत्रावमौदरिका वर्तते. पेटा पेटाकारा चतुःकोणा, (यत्र चतुःश्रेणिव्यवस्थितगृहपंक्तिषु भ्रम्यते, मध्यगृहाणि च मुच्यंते सा पेटेत्यर्थः.) पेटाकारेण गोचर्यां कृत्वाऽवमोदरीकरणं, एवमर्धपेटाकारेण गोचरीकरणं. (उक्तं च—वामाउ दाहिणगिहे । भिक्खइतो दाहिणाउ वामाए ॥ पुणरवि दाहिणवामाइ । जीसे सो होइ

30

गोमुत्ती ॥ १ ॥ ) गोमूत्रिकाकारेण. पतंगवीथिका, पतंगः शलत्नस्तस्य वीथिकोड्डयनं पतंग-
वीथिका, अनियता निश्चयरहिता शलत्नोड्डयनसदृशीत्यर्थः. पुनः शंबूकावर्ता, शंबूकः शंख-
स्तद्वदावर्त्तो त्रमणं यस्यां सा शंबूकावर्त्ता, सापि द्विविधा, अन्यंतरशंबूका, बहिःशंबूका च.
शंखनान्निरूपे क्षेत्रे मध्याद्बहिर्गम्यते साभ्यंतरशंबूकावर्ता, विपरीता बाह्यान्मध्ये आगम-
नरूपा बहिः शंबूकावर्ता पंचमी. पुनः षष्ठी आयतगंतुंप्रत्यागमा ज्ञेया. आदित एवायतं स-
रलं गत्वा यस्यां प्रत्यागमो त्रवति, सा षष्ठी ज्ञेयेत्यर्थः. एतासां त्रिक्षाचर्याणामप्यवमौदर्य-
त्वं ज्ञेयं. यतो ह्यवमौदर्यार्थमेवेदृग्प्रकारेणैव साधुराहारार्थं त्रमति, तस्मान्नात्र दोषः. ॥१७॥

अथ कालावमौदर्यमाह—

॥ मूलम् ॥—दिवसस्स पोरिसीणं । चउएहंपि जत्तिउ त्रवे काला ॥ एवं चरमाणो
खलु । कालोमो एं मुणेयव्वो ॥ २० ॥ व्याख्या—दिवसस्य चतसृणां पौरुषीणां प्रहराणां या-
वान् घटिकाचतुष्टयादिकोऽविग्रहविषयः कालो त्रवति, एवममुना प्रकारेण कालेन चरमाण
इति गोचर्यां चरतः साधोः खलु निश्चयेन 'कालोवमं' इति कालेनावमं कालावमं मंतव्यं.

॥ २० ॥ पुनः कालावमौदर्यमेव प्रकारांतरेणाह—

॥ मूलम् ॥—अहवा तईयापोरिसीए । ऊणाए घासमेसंते ॥ चउन्नागूणाए वा । एवं कालेणउ नवे ॥ २१ ॥ व्याख्या—अथवा तृतीयायां पौरुष्यामूनायां किंचिद्धीनायां ग्रासमाहारमेषयन् गवेषणां कुर्वन्, वाऽथवा चतुर्भागेनोनायां तृतीयायां पौरुष्यां भिक्षाचर्या साधोर्भवति, एवं कालेनावमौदर्यं भवेत्. ॥ २१ ॥ अथ भावावमौदर्यमाह—

॥ मूलम् ॥—इत्थी वा पुरिसो वा । अलंकिउ वाणलंकिउ वावि ॥ अन्नयरवयत्थो वा । अन्नयरेणं च वत्थेणं ॥ २२ ॥ अन्नेण विसेसेणं । वन्नेणं भावमणुमुयंते उ ॥ एवं चरमाणो खलु । भावोमाणं मुणेयव्वं ॥ २३ ॥युग्मं॥ व्याख्या—एवममुना प्रकारेण चरमाण इति प्राकृतत्वाच्चरमाणस्य भिक्षायां भ्रममाणस्य साधोः खलु इति निश्चयेन 'भावोमाणं' इति भावावमत्वं भावावमौदर्यं मुणितव्यं ज्ञेयमित्यर्थः. भावेनाऽवमौदर्यं भावावमौदर्यं, कोऽर्थः? यदा कश्चित्साधुरिति चिंतयति, अद्य कश्चिद्दाता भावमेतादृशं स्वरूपं 'अणुमुयंते' इत्यनुन्मुंचन्नत्यजन्नेतादृशं स्वरूपं भजन् मह्यमाहारं दास्यति, तदाहं ग्रहीष्यामि, नान्यथेति भावः. को

3 0

दाता? कीदृशं च नावमल्यजन्? तदाह—' इत्थी ' इति स्त्री वा पुरुषो वा, अलंकृत आ-
नरणादिसहितोऽथवाऽनलंकृतोऽलंकारै रहितः, ' अन्नयरवयत्थो ' अन्यतरवयःस्थो बालत-
रुणस्थविरादिकानां त्रयाणां वयसां मध्येऽन्यतरस्मिन्नेकस्मिन् वयसि स्थितः, अन्यतरेण प-
ट्टकुलादिवस्त्रेणोपलक्षितः. ॥ २२ ॥ अन्येन विशेषेण कुपितप्रहसितादिनाऽवस्थानेदेनोपल-
क्षितः, वर्णेन श्वेतरक्तादिनोपलक्षितः, नावं पर्यायमुक्तरूपमलंकारादिकं ' अणुमुयंते ' अ-
नुन्मुंचन्नेतादृशः सन् मह्यमाहरं दास्यति, तदा लास्यामीत्यनिग्रहधारणेन नावावमौदर्यं ज्ञे-
यं. ॥ २३ ॥ अथ पर्यायावमौदर्यमाह—

॥ मूलम् ॥—दव्वे खित्ते काले । नावंमि आहिया जे नावा ॥ एएहिं ऊमचरउ । प-
ज्जवचरउ नवे निक्खू ॥ २४ ॥ व्याख्या—द्रव्येऽशनपानादौ, क्षेत्रे पूर्वोक्ते ग्रामनगरादौ,
काले पौरुष्यादौ, नावे स्त्रीत्वादौ, आख्याताः कथिता ये नावाः पर्यायास्तैः सर्वैरपि द्रव्या-
दिपर्यायैरवममवमौदर्यं चरति सेवते यः सोऽवमचरो निक्षुः पर्यवचरको नवेत्, पर्यायावमौ-
दर्यंचरको नवतीत्यर्थः. एकसिक्थकाद्यल्पाहारेण द्रव्यतोऽवमौदर्यं स्यादेव, परं ग्रामादौ क्षेत्र-

तः, पौरुष्यादौ कालतः, स्त्रीपुरुषादौ भावतः कथमवमौदर्यं स्यात्? उत्तरं—क्षेत्रकालभावादिष्वपि विशिष्टाभिग्रहवशादवमौदर्यं स्यादेव. इह पुनः पर्यायग्रहणेन पर्यवप्राधान्यविवक्षया पर्यायावमौदर्यं ज्ञेयं. ॥ २४ ॥ भिक्षाचर्यामाह—

॥ मूलम् ॥—अट्ठविहगोयरग्गं तु । तहा सत्तेव एसणा ॥ अभिग्गहा य जे अन्ने । भिक्खायरियमाहिया ॥ २५ ॥ व्याख्या—भिक्षाचर्या वृत्तिसंक्षेपापरनामिका बाह्या तपस्याऽऽख्याता. अष्टविधो गोचराग्रः, प्राकृतत्वादष्टविधोऽग्रगोचर इति पाठः. अग्रः प्रधानो गोचरोऽग्रगोचरः, अष्टविधश्चासावग्रगोचरश्चाष्टविधाग्रगोचरः. अष्टावग्रगोचरगा भेदा इत्यर्थः. पेटा १, अर्धपेटा २, गोमूत्रिका ३, पतंगवीथिका ४, अभ्यंतरशंबूकावर्ता ५, बाह्यशंबूकावर्ता च ६, आयतगंतुंप्रत्यागमा ७, ऋजुगतिः ८, एवमष्टौ भेदा ऋजुगतिवक्रगतिक्षेपणाद् ज्ञेयाः. सप्तैषणाः संसृष्टादयः. संसट्ठा १, असंसट्ठा २, उद्धृत ३, अल्पलेपिका ४, उद्गृहीता ५, प्रगृहीता ६, उज्झितधर्मा ७, एषा सप्तविधैषणा ज्ञेया. च पुनरन्ये येऽभिग्रहाः संति, अभिग्रहा यथा द्रव्यक्षेत्रकालभावादिचिंतनेन भिक्षाग्रहणरूपाः, द्रव्यतो मंडकादिकं, क्षे-

त्रतो गृहादौ देहलिकातो मध्ये बहिर्वा, कालतो भिक्षाचरेषु निवर्तितेषु, भावतो रुदन् हसन् वा दास्यति, तदाहारो ग्राह्य इति चिंतनेन भिक्षाग्रहणं. एवं भिक्षाचर्याया भेदास्तीर्थंकरैराख्याताः कथिता इत्यर्थः. ॥ २५ ॥ अथ रसत्यागाख्यं तप आह—

॥ मूलम् ॥—खीरदहिसप्पिमाई । पणीयं पाणभोयणं ॥ परिवज्जणं रसाणं तु । भणियं रसविवज्जणं ॥ २६ ॥ व्याख्या—एतद्रसविवर्जनं रसत्यागाख्यं तपस्तीर्थंकरैर्भणितं, रसानां परिवर्जनं रसपरिवर्जनं, क्षीरं दुग्धं, दधि, तथा सर्पिर्घृतं, क्षीरं च दधि च सर्पिश्च क्षीरदधिसर्पींषि, एतान्यादिर्यस्य तत्क्षीरदधिसर्पिरादि, प्रणीतं पुष्टिकारकं, पानं पानयोग्याहारं, भोजनं भक्त, रसविवर्धनं यस्मिन् पीते भुक्ते सति बहुकामोद्दीपनं स्यात्, तस्य परिवर्जनं रसत्यागाख्यं तप उच्यते. प्राकृतत्वात् षष्टीस्थाने द्वितीया ' पणीयं पाणभोयणं परिवज्जणं ' इत्यत्र ज्ञेया. ॥ २६ ॥ अथ कायक्लेशतप आह—

॥ मूलम् ॥—ठाणा वीरासणाईया । जीवस्स उ सुहावहा ॥ उग्गा जहा धरिज्जंति । कायकिलेसं वियाहियं ॥ २७ ॥ व्याख्या—तत्कायक्लेशतपो व्याख्यातं, तदिति किं? यत्र

वीरासनादीनि स्थानानि कायस्थितिविशेषाणि यथा धार्यंते क्रियंते, वीरासन गरुडासन-
लगुडासनादीनि यथा क्रियंते, तथा कायक्लेशः स्यात्. कथं भूतानि स्थानानि? जीवस्य सु-
खावहानि, कर्मनिर्मूलनक्षमाणि. पुनः कीदृशानि? उग्राणि त्नीषणानि, यैस्तैः पुरुषैः कर्तुम-
शक्यानि. प्राकृतत्वांल्लिंगव्यत्ययः. ॥ २७ ॥ अथ संलीनतामाह—

॥ मूलम् ॥—एगंतमणावाए । इत्थीपसुविवज्जिए ॥ सयणासणसेवणया । विवित्तसय-
णासणं ॥ २८ ॥ व्याख्या—एकांते जनैरनाकुले, पुनरनापाते, न विद्यते आपातः स्त्रीपुरुषा-
दीनामागमनं यत्र तदनापातं, तस्मिन्. पुनः स्त्रीपशुपंडकादिविवर्जिते, आरामोद्यानशून्य-
गृहादिस्थाने, शयनासनसेवनया कृत्वा संलीनताख्यं तपो ज्ञेयमित्यर्थः. ॥ २८ ॥

॥ मूलम् ॥—एसो बहिरंगतवो । समासेण वियाहिउं ॥ अब्भिंतरतवो एत्तो । वुच्छा-
मि अणुपुव्वसो ॥ २९ ॥ व्याख्या—एतत्पूर्वोक्तं समासेन संक्षेपेण बाह्यं तपो व्याख्यातं.
' एत्तो ' इति इतोऽनंतरमभ्यंतरं तपो वक्ष्येऽनुक्रमेण. ॥ २९ ॥ एतत्किं तदाह—

॥ मूलम् ॥—पायच्छित्तं विणउ । वेयावच्चं तहेव सज्झाउ ॥ झाणं उस्सग्गोवि य । अ-

ब्जिंतरउं तवो होइ ॥ ३० ॥ व्याख्या—पापमालोच्य तपसोंगीकरणं प्रायश्चित्तं, तथा विनयो वृद्धानामज्युत्थानादिकरणं, वैयावृत्यं वृद्धानामाहारौषधाद्यानीय दानं, तथैव स्वाध्यायः स्वाध्यायस्य चतुर्विधस्य करणं, तथा ध्यानं धर्मशुक्लादिचिंतनं, उत्सर्गः कायोत्सर्गस्य करणं, अपि च पदपूरणे. एतदज्यंतरं तपो जवति. ॥३०॥ अथ विस्तरेण षड्विधस्य जेदानाह—

॥ मूलम् ॥—आलोयणारिहादियं । पायब्बित्तं तु दसविहं ॥ जे जिरकू वहइ सम्मं । पायब्बित्तं तमाहियं ॥ ३१ ॥ व्याख्या—तत्प्रायश्चित्तमाख्यातं, तत् किं? यद्भिक्षुः साधुर्दशविधमालोचनार्हादिकं सम्यग्वहति, कायया सेवते, तत्प्रायश्चित्ताख्यमाज्यंतरं तप आख्यातं, तीर्थकरैरुपदिष्टं. आलोचनार्हादिकं किमुच्यते? आलोचनं गुरोरग्रे पापप्रकाशनं, तस्मै अर्हति योग्यो जवती त्यालोचनार्हं तपःक्रियानुष्ठानादिकं, यतो हि पापमालोचनातः शुध्यति, आलोचनार्हमादिर्यस्य तदालोचनार्हादिकं दशविधं यथा—आलोयणा १ पमिक्कमणे २ । मीस ३ विवेगे ४ तहा विउस्सग्गे ५ ॥ तव ६ छेय ७ मूल ८ अण–ट्ठिया य ९ पारंचिए १० चेव ॥ ३१ ॥ अथ विनयजेदानाह—

॥ मूलम् ॥—अब्भुट्ठाणं पंजलि—करणं तहेवासणदायणं ॥ गुरुजत्तिनावसुस्सूसा । विणओ एस वियाहिओ ॥ ३२ ॥ व्याख्या—अभ्युत्थानं गुरूनागतान् दृष्ट्वा स्वकीयस्थानादूर्ध्वीनवनं. अंजलिकरणं करद्वययोजनं, तथैवासनदापनं. गुरोरुपरि जक्तिजावः, शुश्रूषा गुरोरादेशकरणं, एष विनयो व्याख्यातः. इति विनयनामकं पंचविधतप उक्तमित्यर्थः. ॥३२॥ अथ वैयावृत्यं कथ्यते—

॥ मूलम् ॥—आयरियमाइयंमि । वेयावच्चंमि दसविहे ॥ आसेवणं जहाथामं । वेयावच्चं तमाहियं ॥ ३३ ॥ तद्वैयावृत्यमाख्यातं. तदिति किं? यत् 'जहाथामं' इति यथाबलं आचार्यादौ विषये दशविधे वैयावृत्यमुचिताहारादिदानं, तथाऽसेवनं तद्वैयावृत्याख्यं तपः कथितमित्यर्थः. आचार्यादयो दश वैयावृत्ययोग्या अमी—आचार्य १ उपाध्याय २ स्थविर ३ तपस्वि ४ ग्लान ५ सेहाण ( शिष्य ) ६ साधर्मिक ७ कुल ८ गुण ९ संघ १० एते दश वैयावृत्यार्हाः. ॥ ३३ ॥ अथ स्वाध्यायमाह—

॥ मूलम् ॥—वायणा पुच्छणा चेव । तहेव परियट्टणा ॥ अणुप्पेहा धम्मकहा । सज्झाओ

पंचहा जवे ॥ ३४ ॥ व्याख्या—वाचना, पृछना, परिवर्तना, अनुप्रेक्षा, धर्मकथा चेति स्वाध्यायः पंचधा जवति, एतेषामर्थस्तु पूर्वं कृत एवास्ति. ॥ ३४ ॥ अथ ध्यानमाह—

॥ मूलम् ॥—अट्टरोद्दाणि वज्जित्ता । जाइज्जा सुसमाहिए ॥ धम्मसुक्काइं जाणाइं । जाणं तत्तु बुहा वए ॥ ३५ ॥ व्याख्या—बुधाः पंमितास्तदा तद्ध्यानं वदंति. तदेति कदा? यदा सुसमाहितः सम्यक् समाधियुक्तः साधुरार्त्तरौद्रे दुर्ध्याने त्यक्त्वा धर्मशुक्लध्याने ध्यायति, तदा ध्यानं ध्यानाख्यं तपो ज्ञेयमित्यर्थः. ॥ ३५ ॥ अथ कायोत्सर्गतप उच्यते—

॥ मूलम् ॥—सयणासणठाणे वा । जे उ जिक्खू णवावरे ॥ कायस्सावि उस्सग्गो । बच्छो सो परिकित्तिओ ॥ ३६ ॥ व्याख्या—तत् षष्ठं कायोत्सर्गाख्यं तपः परिकीर्तितं. तत् किं? यत्र शयनासनस्थाने जिक्षुः साधुर्न व्याप्रियते, न व्यापारं कुर्यात्, शयने स्वापे, आसने उपवेशने, स्थाने उर्ध्वस्थितौ यथाशक्ति कायस्य व्युत्सर्गो ममत्वस्य त्यागः स्यात्. तदा कायोत्सर्गाख्यं तपो भवति. ॥ ३६ ॥

॥ मूलम् ॥—एवं तवं तु डुविहं । जे सम्मं आयरे मुणी ॥ से खिप्पं सवसंसारा ।

विप्पमुच्चइ पंडिए त्तिबेमि ॥ ३७ ॥ व्याख्या—यो मुनिर्यः साधुरेवममुना प्रकारेण बाह्याभ्यंतरभेदेन द्विविधं तपः सम्यगाचरति, स पंडितस्तत्वज्ञो मुनिः क्षिप्रं शीघ्रं संसाराच्चतुर्गतिभ्रमणाद्विशेषेण प्रमुच्यते. अत्र स्कंदककथा. इत्यहं ब्रवीमीति सुधर्मास्वामी जंबूस्वामिनं प्राह. ॥ ३७ ॥ इति तपोमार्गाध्ययनं त्रिंशत्तमं संपूर्णं. ३०. इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां तपोमार्गाध्ययनं त्रिंशत्तमं संपूर्णं. ॥ ३० ॥ श्रीरस्तु.

---

॥ अथैकत्रिंशत्तममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययने तपो मोक्षस्य मार्गत्वेन प्रकाशितं, अथ च तपस्तु चारित्रवतः साधोरेव पार्श्वे सम्यक् प्राप्यते, इत्यनेतनाध्ययनेन संबंधः.



30-

॥ मूलम् ॥—चरणविहिं पवक्खामि । जीवस्स उ सुहावहं ॥ जं चरित्ता बहू जीवा । तिण्णा संसारसागरं ॥ १ ॥ व्याख्या—सुधर्मास्वामी वदति, हे जंबू! अथाहं चरणविधिं चारित्रस्य विधानं प्रवक्ष्यामि. कीदृशं चरणविधिं? जीवस्य भव्यजीवस्य सुखावहं सुखपूरकं, यं चारित्रविधिं चरित्वांगीकृत्य बहवो जीवाः संसारसागरं तीर्णाः. ॥ १ ॥

॥ मूलम् ॥—एगओ विरइं कुज्जा । एगओ य पवत्तणं ॥ असंजमे नियत्तिं च । संजमे य पवत्तणं ॥ २ ॥ व्याख्या—साधुरेकत एकस्मात्स्थानाद्विरतिं कुर्यान्निवर्तनं कुर्यात्. एकत एकस्मिन् स्थाने प्रवर्तनं कुर्यात्. सार्वविभक्तिकस्तस् इत्येके इत्युक्तत्वात्. एकतो विरतिं कुर्यादित्यत्र पंचम्यर्थे तस्. अग्रे एकत एकस्मिन् स्थाने प्रवर्तनं कुर्यादित्यत्र सप्तम्यर्थे तस्प्रत्ययः. निवर्तनप्रवर्तनयोः स्थानमाह—असंयमे इत्यसंयमात् हिंसाद्याश्रवान्निवृत्तिं कुर्यात्. च पुनः संयमे सप्तदशविधे च प्रवर्तनमुद्यमं कुर्यात्. ॥ २ ॥

॥ मूलम् ॥—रागद्दोसे य दो पावे । पावकम्मपवत्तणे ॥ जे भिक्खू रुंभइ निच्चं । से न अच्छइ मंडले ॥ ३ ॥ व्याख्या—रागद्वेषौ द्वौ पापौ मलिनौ, तथा पापकर्मप्रवर्तकौ, पाप-

कर्माणि मिथ्यात्वादीनि, तेषां प्रवर्तकौ भवतः. अतो यो भिक्षुः साधुस्तौ रागद्वेषौ निरुणद्धि, कथंचिदुदयं प्राप्तौ सतौ ज्ञानेन त्वरितमत्यंतं तिरस्कुरुते, स साधुर्निक्षुर्मंडले चातुर्गतिकसंसारे न 'अच्छइ' इति न तिष्ठति, संसारान्मुक्तो भवति. ॥ ३ ॥

॥ मूलम् ॥—दंडाणं गारवाणं च । सल्लाणं च तियं तियं ॥ जे भिक्खू चयई निच्चं । से न अच्छइ मंडले ॥ ४ ॥ व्याख्या—यो भिक्षुर्दंडानां, च पुनर्गारवाणां, च पुनः शल्यानां, प्रत्येकं त्रिकं त्रिकं त्यजति, स्वस्यात्मनि न धारयति, स भिक्षुः संसारे न तिष्ठति पूर्ववत्. दंड्यते चारित्रधनापहारेण दरिद्रः क्रियते आत्मैभिरिति दंडा दुरध्यवसायाः, तेषां त्रिकं मनोवाक्कायैर्दुष्टाध्यवसायचिंतनत्वेन त्रिःप्रकारकं, एतद्दंडत्रिकं. तथा गुरोर्लोभादिसहितस्य चित्तस्य भावा अध्यवसायानि गौरवाणि, तेषां त्रिकं ऋद्धिगौरवरसगौरवसातागौरवरूपं. तथा शल्यते बाध्यते जंतुरेभिरिति शल्यानि, तेषां त्रिकं मायानिदानमिथ्यादर्शनशल्यरूपं शल्यत्रिकं ज्ञेयं. एतेषां यो निषेधकः स मुनिर्मुक्तिगामीत्यर्थः. ॥ ४ ॥

॥ मूलम् ॥—दिव्वे य जे उवस्सग्गे । तहा तेरिच्छमाणुसे ॥ जे भिक्खू सहई निच्चं । से

न अच्छइ मंडले ॥ ५ ॥ व्याख्या—यो भिक्षुर्दिव्यान् देवैः कृतान्, तथा तैरश्चांस्तिर्यग्भिः
कृतान्, तथा मानुष्यकान् मनुष्यैः कृतान्, उपसर्गान् सम्यक् कषायाऽभावेन सहते, स
मंडले संसारे न तिष्ठति. ॥ ५ ॥

॥ मूलम् ॥—विगहाकसायसन्नाणं । झाणाणं च दुयं तहा ॥ जे भिक्खू वज्जइ निच्चं ।
से न अच्छइ मंडले ॥ ६ ॥ व्याख्या—यो भिक्षुर्विकथाचतुष्कं राजदेशभोजनस्त्रीणां वर्ण-
नारूपं. क्रोधमानमायालोभरूपं कषायचतुष्कं, संज्ञाचतुष्कमाहारभयपरिग्रहमैथुनरूपविका-
रचिंतनरूपं ज्ञेयं. च पुनर्ध्यानयोर्द्विकमार्त्तरौद्ररूपं त्यजति, स साधुः संसारे न तिष्ठति. प्रा-
कृतत्वाद्ध्यानानामिति बहुवचनं. ध्यानानां चतुष्टये वर्जनीयं ध्यानद्वितयं ज्ञेयं, तस्माद् द्व-
योरेव ग्रहणं. ॥ ६ ॥

॥ मूलम् ॥—वएसु इंदियत्थेसु । समिईसु किरियासु य ॥ जे भिक्खू जयइ निच्चं । से
न अच्छइ मंडले ॥ ७ ॥ व्याख्या—यो भिक्षुर्व्रतेषु प्राणातिपातविरत्यादिषु, तथेंद्रियार्थेषु
शब्दादिषु, तथा समितिषु पंचसु, तथा क्रियासु, कायिक्यधिकरणिकीप्राद्वेषिकीपारिताप-

निकीप्राणातिपातिकीषु पंचसु यतते यत्नं कुरुते, हेयोपादेयबुद्धिं कुरुते, स मंफले न तिष्टति.

॥ मूलम् ॥—लेसासु ठसु कायेसु । ठक्के आहारकारणे ॥ जे भिक्खू जयई निच्चं । से न अच्छइ मंफले ॥ ८ ॥ व्याख्या—यः साधुः षट्लेश्यासु, पुनः षट्सु कायेषु, तथाऽहारकारणषट्के यतते, यथायोगं विपरीतलेश्यानां निरोधेन, सम्यग्लेश्यानां धारणेन, षट्कायानां रक्षणेन, षड्भिः पूर्वोक्तैः कारणैराहारकरणेन यत्नं कुरुते, स साधुर्मंफले न तिष्टति.

॥ मूलम् ॥—पिंफग्गहे पफिमासु । भयट्ठाणेसु सत्तसु ॥ जे भिक्खू जयई निच्चं । से न अच्छइ मंफले ॥ ए ॥ व्याख्या—यो भिक्षुः संसृष्टादिषु सप्तसु पिंफावग्रहप्रतिमास्वाहारग्रहणविषयाभिग्रहरूपासु, तथा पुनः सप्तसु भयस्थानेष्विहलोकादिषु यतते, पिंफग्रहणप्रतिमासु सप्तसु पालने यत्नं कुरुते, इहलोकादि सप्तसु भयस्थानेषु भयस्याऽकरणे स्थैर्यं कुरुते, स साधुर्मंफले न तिष्टति. ॥ ए ॥

॥ मूलम् ॥—मयेसु बंभगुत्तीसु । भिक्खूधम्मंमि दसविहे ॥ जे भिक्खू जयई निच्चं । से न अच्छइ मंफले ॥ १० ॥ व्याख्या—यो भिक्षुर्मदेषु जात्यादिष्वष्टसु, तथा ब्रह्मगुप्तिषु नव-

सु ब्रह्मचर्यरक्षणवाटिकासु, तथा दशविधेषु क्षांत्यादिषु साधुधर्मेषु यतते, मदानां परिहारे ब्रह्मगुप्तिनां रक्षणे, दशविधक्षांत्यादिसाधुधर्मपालने उद्यमं कुरुते, स संसारे न तिष्ठति.

॥ मूलम् ॥—उवासगाणं पडिमासु । भिक्खूणं पडिमासु य ॥ जे भिक्खू जयई निच्चं । से न अच्छई मंडले ॥ ११ ॥ व्याख्या—यः साधुरुपासकानां श्राद्धानामेकादशसु प्रतिमासु, तथा भिक्षूणां द्वादशसु प्रतिमासु यत्नं कुरुते, श्राद्धप्रतिमानां सम्यग्ज्ञानेनोपदेशदानेन, भिक्षुप्रतिमानां च सम्यग्ज्ञात्वा पालने यत्नं कुरुते, स संसारे न तिष्ठति. प्रतिमा अवग्रहविशेषा उच्यंते. ॥ ११ ॥

॥ मूलम् ॥—किरियासु भूयगामेसु । परमाहम्मिएसु य ॥ जे भिक्खू जयई निच्चं । से न अच्छइ मंडले ॥ १२ ॥ व्याख्या—यो भिक्षुः क्रियासु कर्मबंधनभूतासु चेष्टासु, स्वार्थानर्थादिभेदेन त्रयोदशसु, तथा भूतग्रामेषु, भूतानां प्राणिनां ग्रामाः संघाताः स्थानानीति यावत्, तेषु भूतग्रामेषु चतुर्दशसु 'एगिंदियसुहुमियराइ' इत्यादिषु, तथा परमाधार्मिकेषु पंचदशसु 'अंबे अंबरिसे चेव' इत्यादिषु यत्नं कुरुते, त्रयोदशक्रियाणां परिहारे, चतुर्दश-

भूतग्रामाणां रक्षणे, परमाधार्मिकाणां परिज्ञानाद् दुष्टकर्मेभ्यो निवर्तने उद्यतो जवति, स संसारे न तिष्टति. ॥ १२ ॥

॥ मूलम् ॥—गाहासोलसएहिं । तहा अस्संजमंमि य ॥ जे जिक्खू जयई निच्चं । से न अच्छइ मंरूले ॥ १३ ॥ व्याख्या—यो जिक्षुर्गाथाषोरूशकेषु, तथा असंयमे सप्तदशविधेऽपि नित्यं यतते यत्नं कुरुते, स मंरूले न तिष्टति. गीयते कथ्यते स्वसमयपरसमयरूपोऽर्थो याजिस्ता गाथाः, तासां षोरूशकानि सूत्रकृतांगाध्ययनषोरूशकानि गाथाषोरूशकानि, तेषु गाथाषोरूशकेषु, सप्तमीबहुवचने तृतीयाबहुवचनं प्राकृतत्वात्. सूत्रकृतांगाध्ययनानि षोरूश संति, 'समउं वेयालीयं' इत्यादि. असंयमस्य सप्तदश जेदाः संति, पंचाश्रवाद्विरमणं, पंचेंद्रियनिग्रहः, चतुःकषायजयः, दंरूत्रयविरतिश्चेति संयमः सप्तदशजेदः, एतस्माद्विपरीतोऽसंयमोऽपि सप्तदशविधः. तस्मात्सप्तदशविधेऽसंयमे यो न प्रवर्तते, स संसारे न तिष्टति. ॥१३॥

॥ मूलम् ॥—बंजंमि नायज्झयणेसु । ठाणेसु असमाहिए ॥ जे जिक्खू जयई निच्चं । से न अच्छइ मंरूले ॥ १४ ॥ व्याख्या—यो जिक्षुर्ब्रह्मणि ब्रह्मचर्येऽष्टादशविधे, दिव्यौदारिकमैथु-

नानां करणकारणानुमतिभेदात्, तथा मनोवाक्कायेनाष्टादशप्रकारे. तथा ज्ञाताध्ययनेष्वेकोनविंशतिसंख्येषु उत्क्षिप्तादिषु, तथाऽसमाधिस्थानेषु विंशतिसंख्येषु यत्नं कुरुते, स संसारे न तिष्ठति. विंशत्यसमाधिस्थानानि समवायांगसूत्रे उक्तानि. ॥ १४ ॥

॥ मूलम् ॥—एगवीसाइ सबलेसु । बावीसा य परीसहे ॥ जे भिक्खू जयइ निच्चं । से न अच्छइ मंडले ॥ १५ ॥ व्याख्या—यो भिक्षुरेकविंशतिशबलेषु, च पुनर्द्वाविंशतिपरिषहेषु यतते, स साधुः संसारे न तिष्ठति. शबलयंति कर्बुरयंति चारित्रं चारित्रं ये ते शबला अशुभक्रियारूपाः, तेषु शबलेषु हस्तकर्मादिषु यः परिहारबुद्धिं धत्ते. द्वाविंशतिपरीषहास्तु द्वितीयाध्ययने पूर्वमेव कथिताः, तेषां सहने स्थैर्यं कुरुते, स मंडले न तिष्ठति.॥१५॥

॥ मूलम् ॥—तेवीसे सूयगडेसु । रूवाहिएसु सुरेसु य ॥ जे भिक्खू जयई निच्चं । से न अच्छइ मंडले ॥ १६ ॥ व्याख्या—यो भिक्षुः सूत्रकृतेषु सूत्रकृताध्ययनेषु त्रयोविंशतिसंख्येषु, तथा रूपाधिकेषु, रूपमेकांकं, तेनाधिका रूपाधिकास्तेषु रूपाधिकेषु. त्रयोविंशत्यध्ययनानि सूत्रकृतांगस्य वर्तंते, तानि यदैकेनाधिकानि भवंति तदा चतुर्विंशतिसंख्याका-

नि जवंति, तेषु चतुर्विंशतिसुरेषु जुवनपत्यादिषु. अथवा देवेषु ऋषजादिचतुर्विंशतिसंख्येषु यत्नं कुरुते, एतेषु ज्ञानोपयोगं कुरुते, स मंफले न तिष्ठति. ॥ १६ ॥

॥ मूलम् ॥—पणवीसजावणाहिं । उद्देसेसु दसाइणं ॥ जे जिक्खू जयई निच्चं । से न अन्नइ मंफले ॥ १७ ॥ व्याख्या—यो जिक्षुः पंचविंशतिजावनासु, पंचमहाव्रतविषये ईर्यासमित्यादिसाधनारूपासु, तथा ' दसाइणं ' इति दशादीनां दशाश्रुतस्कंधकल्पव्यवहाराणामुद्देशेषु पंचविंशतिसंख्येषु यत्नं कुरुते स मंफले न तिष्ठति. ॥ १७ ॥

॥ मूलम् ॥—अणगारगुणेहिं च । पकप्पे य तहेव य ॥ जे जिक्खू जयई निच्चं । से न अन्नइ मंफले ॥ १८ ॥ व्याख्या—यो जिक्षुः सप्तविंशतिसंख्येष्वनगारगुणेषु, तथैव प्रकल्पे आचारांगसूत्रोक्तशास्त्रपरिज्ञानाद्यष्टाविंशत्यध्ययनात्मके साधोः प्रकृष्टाचारे आचारांगे यतते, सम्यगज्यासं कुरुते, स संसारे न तिष्ठति. ॥ १८ ॥

॥ मूलम् ॥—पापसुयप्पसंगेसु । मोहठाणेसु चेव य ॥ जे जिक्खू जयई निच्चं । से न अन्नइ मंफले ॥ १९ ॥ व्याख्या—यो जिक्षुरेकोनत्रिंशत्पापश्रुतप्रसंगेषु, तथा त्रिंशन्मोहस्था-

नेषु यतते, स संसारे न तिष्ठति. पापोपादानानि श्रुतानि पापश्रुतानि, तेषु प्रसंगास्तथावि-
धशक्तिरूपाः पापश्रुतप्रसंगास्तेष्वष्टांगनिमित्तादिशास्त्राभ्यासेषु. मोहो मोहनीयं कर्म, तत्ति-
ष्ठति येषु तानि मोहस्थानानि, तेषु त्रिंशत्संख्येषु निवृत्तिं कुरुते. ॥ १९ ॥

॥ मूलम् —सिद्धाइगुणजोगेसु । तित्तीसासायणासु य ॥ जे भिक्खू जयई निच्चं । से
न अच्छइ मंडले ॥ २० ॥ व्याख्या—यः साधुः सिद्धातिशयगुणेषु, ( सिद्धानामतिशायिनोगुणाः
सिद्धातिगुणाः संस्थानादिनिषेधरूपा एकत्रिंशत्, तेषु ) एकत्रिंशत्प्रमाणेषु तथा द्वात्रिंशत्प्र-
माणेषु योगेषु ( योगेष्विति पदैकदेशेऽपि पदप्रयोगदर्शनाद्योगसंग्रहेषु, योगाः शुभमनोवाक्का-
यव्यापाराः, सम्यग् गृह्यंते स्वीक्रियंते इति योगसंग्रहा आलोचनादयो द्वात्रिंशत्तेषु. तथा )
त्रयस्त्रिंशत्प्रमाणास्वाशातनासु नित्यं यतते य एकत्रिंशत्सिद्धगुणान् ज्ञात्वा प्ररूपयति, तथा
योगेषु योगसंग्रहेष्वालोचनादिषु यत्नं कुरुते, आशातनासु समवायांगसूत्रोक्तासु ज्ञात्वा स्व-
यं ताभ्यो निवर्तते, अन्यान्निवर्तयति, स संसारे न तिष्ठति. ॥२०॥ अथाध्ययनोपसंहारमाह—

॥ मूलम् ॥—इइएसु ठाणेसु । जे भिक्खू जयइ सया ॥ से खिप्पं सव्वसंसारा । विप्पमु-

भइ मंडिए त्तिबेमि ॥२१॥ व्याख्या—इत्यमुना प्रकारेणैतेष्वत्राध्ययनप्रोक्तेष्वसंयमादिस्थानेषु यो भिक्षुर्यतते, सदा यत्नं कुरुते, स भिक्षुः क्षिप्रं शीघ्रं सर्वसंसारात्सर्वचतुर्गतिभ्रमणाद्विशेषेण प्रमुच्यते प्रमुक्तो भवति, इत्यहं ब्रवीमीति सुधर्मास्वामी जंबूस्वामिनं प्राह. ॥ २१ ॥ इति चरणविधिनामाध्ययनं संपूर्णं. ३१.॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां चरणविध्याख्यमेकत्रिंशत्तममध्ययनं संपूर्णं. ॥ ३१ ॥ श्रीरस्तु. ॥

---

## ॥ अथ द्वात्रिंशत्तममध्ययनं प्रारभ्यते ॥

पूर्वाध्ययने चारित्रविधिरुक्तः, स चाऽप्रमादिनः साधोर्भवति, तेन साधुना प्रमादः परिहर्तव्यः, ततः प्रमादज्ञानार्थं प्रमादस्थानाख्यमध्ययनमथोच्यते—

॥ मूलम् ॥—अच्चंतकालस्स समूलयस्स । सव्वस्स दुक्खस्स उ जो पमोक्खो ॥ तं भासउ मे पडिपुन्नचित्ता । सुणेह एगंतहियं हियत्थं ॥ १ ॥ व्याख्या—भव्यान्प्रति भगवान् वदति. सुधर्मास्वाम्यपि जंबूस्वाम्यादिशिष्यान्प्रति वक्ति, भो प्रतिपूर्णचित्ताः! प्रतिपूर्णं विषयादिभ्यो विरक्तत्वेनाऽखण्डं चित्तं येषां ते प्रतिपूर्णचित्ताः, तेषां संबोधनं भो प्रतिपूर्णचित्ताः! अखण्डमनस्काः! तमेकांतेन हितं सम्यग्ज्ञानदर्शनचारित्रात्मकं मोक्षहेतुतया वक्ष्यमाणं मे मम भाषमाणस्य वचनं यूयं शृणुत? किमर्थं? हितार्थं. तमिति किं? यो हेतुः सर्वस्य दुःखस्य मोक्षोऽस्ति. अत्र दुःखशब्देन संसारस्य ग्रहणं. कीदृशस्य दुःखस्य? 'अच्चंतकालस्स' अत्यंतमित्यंतमतिक्रांतमत्यंतं, अत्यंतं कालो यत्र सोऽत्यंतकालस्तस्य. पुनः कीदृशस्य? समूलकस्य, मूलेन कषायाऽविरतिरूपेण सह वर्तते इति समूलकस्तस्य. यदुक्तं—मूलं संसारस्स । होंति कसाया अविरई चेव ॥ अथ यत्पूर्वमेव संसारस्य प्रमोक्षहेतुकं वक्तुं प्रारब्धं, तदेवाह—

॥ मूलम् ॥—नाणस्स सव्वस्स पगासणाए । अन्नाणमोहस्स विवज्जणाए ॥ रागस्स दो-

सस्स य संखएणं । एगंतसोक्खं समुवेइ मोक्खं ॥ २ ॥ व्याख्या—जीवो ज्ञानेन दर्शनेन चारित्रेणैकांतसौख्यं मोक्षं समुपैति प्राप्नोतीत्यन्वयः. एतावता ज्ञानस्य दर्शनस्य चारित्रस्य मोक्षंप्रति कारणतोक्तेत्यर्थः. ज्ञानस्यस र्वप्रकाशनया सर्वस्य वस्तुनः प्रकाशना प्रकटीकरणं, प्रकाश्यतेऽनयेति प्रकाशना, तया प्रकाशनया, इत्यनेन ज्ञानात्मको मोक्षहेतुरुक्तः. पुनरज्ञानमोहस्य विवर्जनया जीवो मोक्षं समुपैति. अज्ञानं मत्यज्ञानादि, मोहो मोहनीयं, अज्ञानं च मोहश्चानयोः समाहारोऽज्ञानमोहं, तस्याऽज्ञानमोहस्य विवर्जनया विशेषतस्त्यागेन, मिथ्याश्रुतश्रवणकुदृष्टिसंगत्यागेन मोक्षः स्यात्, इत्यनेन सम्यग्दर्शनात्मको मोक्षहेतुरुक्तः. तथा पुना रागस्य द्वेषस्य च संक्षयेण विनाशेन जीवो मोक्षं समुपैति. रागद्वेषाभावेन चारित्रस्याभिधानं, इत्यनेन चारित्रात्मको मोक्षहेतुरुक्तः. ततः सम्यग्ज्ञानदर्शनचारित्रैरेकांतसौख्यं दुःखक्लेशैरकलंकितं मोक्षं समुपैति. मोक्षश्च दुःखप्रमोक्षेणैव संसारस्य निवृत्त्यैव स्यात्. ॥२॥ अतो ज्ञानादीनां दुःखप्रमोक्षत्वमोक्षे हेतुत्वमुक्त्वेदानीं ज्ञानादीनां प्राप्तेर्हेतूनाह—

॥ मूलम् ॥—तस्सेस मग्गो गुरुवुद्धसेवा । विवजणा बालजणस्स दूरा ॥ सज्झायएगं-

तनिवेसणा य। सुत्तत्थचिंतणया धिईयं ॥ ३ ॥ व्याख्या—हे शिष्य! तस्य मोक्षोपायभूतस्य ज्ञानस्यैव समीपतरवर्ती मम हृदयस्थस्तवाग्रे वक्ष्यमाणो मार्गः प्राप्तिहेतुरुक्त इति शेषः. एष कः? तं मार्गं दर्शयति—प्रथमं गुरुवृद्धसेवा ज्ञानप्राप्तिहेतुः, गुरवश्च वृद्धाश्च गुरुवृद्धास्तेषां सेवा गुरुवृद्धसेवा. तत्र गुरवो धर्माचार्याः, वृद्धाः श्रुतपर्यायाभ्यां ये महांतः, तेषां सेवा ज्ञानदर्शनहेतुभूतेत्यर्थः. पुनर्दूराद् बालजनस्य मूर्खस्य विशेषेण वर्जना परिहरणा ज्ञानस्य हेतुभूता. पुनः पंचप्रकारस्य स्वाध्यायस्यैकांतेनैकाग्रचित्तेन निषेवणाऽभ्यसनं स्वाध्यायैकांतनिषेवणा ज्ञानप्राप्तिहेतुभूता. पुनः सूत्रार्थयोः सम्यक्प्रकारेण चिंतना सूत्रार्थसंचिंतना, सापि ज्ञानप्राप्तिहेतुभूता. पुनर्धृतिर्धैर्यं, चित्तस्यैकाग्रमुद्वेगाभावत्वं, एतदपि ज्ञानप्राप्तिहेतुभूतं. एतैरंतरेण ज्ञानप्राप्तिर्न स्यादित्यर्थः ॥३॥ एतानिच्छता पुरुषेण प्राक् किं कार्यं तदाह—

॥ मूलम् ॥—आहारमिच्छे मियमेसणीज्जं। सहायमिच्छे निउणट्ठबुद्धिं ॥ निकेयमिच्छेज्ज विवेगजोगं। समाहिकामे समणे तवस्सी ॥ ४ ॥ व्याख्या—समाधिकामः श्रमणस्तपस्व्येतदिच्छेत्. समाधिं ज्ञानदर्शनचारित्रलाभं कामयत्यभिलषतीति समाधिकामो ज्ञानदर्शनचा-



32

रित्राभिलाषुकः. श्रमणः क्रियानुष्ठानादौ श्रमकर्ता. तपस्वी षष्ठाष्टमादितपःकर्ता एतदिच्छेत्. एतत् किं? तदाह-पूर्वमेषणीयं दोषरहितमाहारमिच्छेदभिलषेत्, यादृश आहारस्तादृग्उद्गार इति वचनात्. तमपि मितं प्रमाणोपेतं, न त्वपरिमितं गृह्णीयात्. पुनः साधुर्निपुणार्थबुद्धिं सहायमिच्छेत्, निपुणार्थेषु जीवादितत्त्वेषु बुद्धिर्यस्य स निपुणार्थबुद्धिस्तं, जीवाजीवादितत्त्वज्ञं सहायं शिष्यमिच्छेत्. यतो हि सम्यग्निर्दोषाद्याहारधर्माचारवेदिकात्सहायभूताच्छिष्याद्गुरुरपि शैलकमुनिवद्धर्मे स्थैर्यं लभते. पुनर्यः साधुर्विवेकयोग्यं निकेतमिच्छेत्, विवेकः स्त्रीपशुपंडकादीनामभावेनैकांतस्तेन योग्यं विवेकयोग्यं निकेतं साधुनिवासस्थानमभिलषेत्. ॥४॥

अथ कालादिदोषवशाच्चेत्पूर्वोक्तगुणः सहायः शिष्यो न लभेत्तदा किं कर्तव्यमित्याह—

॥ मूलम् ॥—न वा लभिज्जा निउणं सहायं । गुणाहियं वा गुणओ समं वा ॥ इक्कोवि पावाइंविवज्जयंतो । विहरेज्ज कामेसु असज्जमाणो ॥ ५ ॥ व्याख्या—वाशब्दो यद्यर्थे. वा यदि निपुणं बुद्धिमंतं सहायं शिष्यं न लभेन्न प्राप्नुयात्, तं सहायं गुणाधिकं, गुणैः स्वस्मिन् स्थितैर्विनयज्ञानादिभिरधिकमुत्कृष्टं, अथवा तं शिष्यं गुणत इति स्वस्मिन् स्थितैर्ज्ञाना-

दिभिः समं सदृशं न प्राप्नुयात्, तदा स साधुरेकोऽप्येकाक्यपि शिष्यै रहितो विचरेद्विहारं कुर्यात्, न तु हीनानां कुशिष्याणां मुंरुमेलापं कुर्यात्. सम्यक्शिष्याऽभावे साधुनैकाकिनापि विहर्तव्यं, न कश्चिद्दोषः. साधुः किं कुर्वन् विहरेत्? पापानि पापकारकाणि क्रियानुष्ठानानि विवर्जयेत्. पुनः साधुः किं कुर्वन् विचरेत्? कामेषु 'असज्जमाणो' इतींद्रियसुखेष्वनुद्यतो भवन्, प्रतिबंधमकुर्वाण इत्यर्थः. ॥५॥ अथ दुःखप्रमोक्षहेतुज्ञापनार्थं दृष्टांतमाह—

॥ मूलम् ॥—जहा य अंरुप्पभवा बलागा । अंरुं बलागप्पभवं जहा य ॥ एमेव मोहाययणं सुतण्हा । मोहं च तण्हाययणं वयंति ॥ ६ ॥ व्याख्या—यथा बलाकापक्षिण्यंरुप्रभवा, अंरुं प्रभवमुत्पत्तिकारणं यस्याः सांरुप्रभवा, अंरुादुत्पन्नेत्यर्थः. यथा च पुनरंरुं बलाकाप्रभवं, बलाका पक्षिणी प्रभवो यस्य तद्बलाकाप्रभवं, अंरुंबलाकात उत्पन्नमित्यर्थः. एवममुना दृष्टांतेनैव, खु निश्चयेन तृष्णां वांछां मोहायतनं वदंति, मोहस्याऽज्ञानस्यायतनमुत्पत्तिहेतुं पंरुितास्तृष्णां वदंतीति भावः. च पुनर्मोहं तृष्णायतनं, तृष्णाया वांछाया उत्पत्तिस्थानं पंरुिता वदंति. तृष्णा हि वस्तुनि मूर्छा, सा च रागप्रधाना, अतस्तया राग उप-

लक्ष्यते, रागे सति द्वेषोऽपि स्यात्, अतस्तृष्णाग्रहणेन रागद्वेषावुक्तौ. ॥ ६ ॥ अतो रागद्वेषयोराधिक्यमाह—

॥ मूलम् ॥—रागो य दोसोवि य कम्मबीयं । कम्मं च मोहप्पभवं वयंति ॥ कम्मं च जाईमरणस्स मूलं । दुक्खं च जाईमरणं वयंति ॥ ७ ॥ व्याख्या—रागो मायालोभात्मकः, च पुनर्द्वेषः क्रोधमानात्मकः, एतौ द्वावपि कर्मबीजं कर्मणां ज्ञानावरणादीनामष्टानां बीजं कारणं कर्मबीजं कार्मकारणमित्यर्थः. च पुनः कर्माष्टप्रकारकं मोहप्रभवं. मोहो मूर्छाऽज्ञानं तदेव प्रभवो यस्य तन्मोहप्रभवं तीर्थकरा वदंति. कर्मेति जातित्वादेकवचनं, कर्मणां मोहः कारणमित्यर्थः. तथा पुनः कर्माष्टप्रकारकं जातिमरणस्य मूलं, जातिश्च मरणं चानयोः समाहारो जातिमरणं, तस्य जातिमरणस्य जन्ममरणस्य मूलं वदंति. च पुनर्दुःखं तु जातिमरणमेव वदंति. जन्ममृत्यू एव दुःखं तीर्थकरा गणधराश्च वदंति, जन्ममरणाभ्यां व्यतिरिक्तमन्यद्दुःखं नास्तीत्यर्थः. ॥ ७ ॥

॥ मूलम् ॥—दुक्खं हयं जस्स न होइ मोहो । मोहो हओ जस्स न होइ तण्हा ॥ त-

एहा इया जस्स न होइ लोहो । लोहो हर्ज जस्स न किंचिणावि ॥ ८ ॥ व्याख्या—यस्य मोहो न भवति, तस्य पुरुषस्य दुःखं हतं, येन पुरुषेण मोहो हतस्तस्य स्वयमेव दुःखं हतं मृतमित्यर्थः तृष्णाया अभावे मोहस्याप्यभावः. यस्य तृष्णा वांछा हता, तस्य लोभो न भवति, निःस्पृहस्य तृणं जगदित्युक्तत्वात्. यस्य लोभो हतो निवृत्तस्तस्य न किंचनापि, न किमपीत्यर्थः, स सर्वथाप्यकर्मको भवति. ॥ ८ ॥ अथ मोहादीनामुन्मूलनोपायमाह—

॥ मूलम् ॥—रागं च दोसं च तहेव मोहं । उद्धत्तुकामेण समूलजालं ॥ जे जे उपाया पडिवज्जियव्वा । तो कित्तइस्सामि अहाणुपुव्विं ॥ ९ ॥ व्याख्या—हे शिष्य! अहमानुपूर्व्याऽनुक्रमेण तानुपायांस्ते तव कीर्तयिष्यामि. तान् कान्? ये ये उपाया रागं च पुनर्द्वेषं, तथैव मोहं समूलजालं मूलसहितमुद्धर्तुकामेन पुरुषेण प्रतिपत्तव्या अंगीकर्तव्याः, उपायशब्देन तदुद्धरणहेतवः. ॥ ९ ॥

॥ मूलम् ॥—रसा पकामं न निसेवियव्वा । पायं रसा दित्तकरा नराणं ॥ दित्तं च कामा समभिद्दवंति । दुमं जहा सादुफलं व पक्खी ॥ १० ॥ व्याख्या—रागद्वेषमोहोन्मूल-



32

नमिच्छता नरेण रसाः शृंगारादयो दधिदुग्धघृतादयो वा प्रकाममत्यंतं रसलोलुपत्वेन न निषेवितव्याः, मुहुर्मुहुर्न सेवनीया इत्यर्थः. प्रायेण रसाः सेविताः संतो नराणां दीप्तिकरा भवंति, धातुबलवीर्यादि दीप्त्युत्पादका भवंति. च पुनर्दीप्तं धातुबलवीर्यादियुक्तं मनुष्यं कामाः समभिद्रवंति, विषयाः समभ्यायांति, तथा दीप्तं वनिता अभिलषंतीति भावः. के कमिव? पक्षिणः स्वादुफलं द्रुममिव. स्वादूनि स्वादयुक्तानि फलानि यस्य स स्वादुफलस्तं मधुरफलं वृक्षंप्रति पक्षिणस्तदभिलाषिणोऽभिमुखमायांति, तथा बलिष्टं दीप्तं पुरुषं कामा वनितादयोऽभिमुखमायांतीति भावः. इत्यनेन रसप्रसेवने दोष उक्तः. ॥ १० ॥ अथ सामान्येन प्रकामभोजने दोषमाह—

॥ मूलम् ॥—जहा दवग्गी पउरिंधणे वणे । समारुओ नोवसमं उवेइ ॥ एविंदियग्गी विपगाम भोइणो । न बंभयारिस्स हियाय कस्सई ॥ ११ ॥ व्याख्या—यथा दवाग्निर्दवानलः प्रचुरेंधने बहुलकाष्ठे वने लग्न उपशमं नोपैति नोपशाम्यति. कीदृशो दावानलः? समारुतः पवनसहितः. एवं सकाष्ठवनलग्नसपवनदवाग्निदृष्टांतेन प्रकामभोजिनो मात्राधिकाहारकारि-



32

णो ब्रह्मचारिण इंद्रियाग्निर्हिताय न नवति, ब्रह्मचर्यदूयाय नवति. अत्रेंद्रियशब्देनेंद्रियजनितरागो गृह्यते, इंद्रियजनिरागस्याऽनर्थहेतुत्वात्, दवाग्नेरुपमा धर्मवनदाहकत्वात्. मात्राधिकाहारकरणादिंद्रियग्रामो बलवान् नवति. ॥ ११ ॥ पुना रागाद्युद्धर्तुकामेन किं कर्तव्यमित्याह—

॥ मूलम् ॥-- विवित्तसयणासणजंतियाणं । उमासणाणं दमिइंदियाणं ॥ न रागसत्तू धरिसेइ चित्तं । पराइउ वाहिरिवोसहेहिं ॥ १२ ॥ व्याख्या—रागशत्रू राग एव शत्रुर्वैरी रागशत्रुरेतादृशानां साधूनां चित्तं न घर्षयति, न परानवति. एतादृशानां कीदृशानां ? विविक्तशयनासनयंत्रितानां, विविक्ताः स्त्रीपशुपंरुकादिरहिता या शयनोपाश्रयो विविक्तशयना, तत्र यदासनं निवासो विविक्तशयनासनं, तेन यंत्रिताः सहिता विविक्तशयनासनयंत्रितास्तेषां विविक्तशयनासनयंत्रितानां, एकांतस्थाननिवाससहितानां. पुनः कीदृशानां ? अवमाशनानामूनाहारकारिणां. पुनः कीदृशानां ? दमितेंद्रियाणां वशीकृतेंद्रियाणां, अर्थाद्योगिनां चित्तं रागवैरी न परानवति. क इव ? औषधैः पराजितो नेषजैस्तिरस्कृतो व्याधिरिव यथा

भेषजैर्निवारितो व्याधिर्देहं पराभवितुं न शक्नोति, तथा रागशत्रुरप्येकांतवसनतपश्चरणेन्द्रियदमनाद्युपायैः पराभूतः साधूनां चित्तं न क्षोभयति. ॥ १२ ॥ स्त्रीप्रमुखसहितस्थानस्य दूषणमाह—

॥ मूलम् ॥—जहा बिरालावसहस्स मूले । न मूसगाणं वसही पसत्था ॥ एमेव इत्थीनिलयस्स मज्झे । न बंभयारिस्स खमो निवासो ॥ १३ ॥ व्याख्या—यथा बिडालावसथस्य मूले, बिडालस्यावसथं, तस्य मूले समीपे मूषकाणामुंदराणां वसति स्थितिः प्रशस्ता न, समीचीना न भवति, बिडालगृहसमीपे मूषकस्थितिर्मरणायैव. एवममुना दृष्टांतेन स्त्रीनिलयस्य. स्त्रिया सहितो निलयं गृहं स्त्रीनिलयस्तस्य स्त्रीनिलयस्य मध्ये ब्रह्मचारिणो निवासः क्षमो न, युक्तो नास्ति. तत्र वसमानस्य ब्रह्मचारिणो ब्रह्मचर्यस्य नाश एव स्यादिति भावः. ॥ १३ ॥ स्त्र्यादिरहिते स्थाने वसमानेनापि स्त्रीसंपाते किं कर्तव्यं ? तदाह—

॥ मूलम् ॥—न रूवलावण्णविलासहासं । न जंपियं इंगियपेहियं वा ॥ इत्थीण चित्तंसि न मेवइत्ता । दहुं ववस्से समणे तवस्सी ॥ १४ ॥ व्याख्या—तपस्वी श्रमणः स्त्रीणामे-

तत्सर्वं चेष्टितं चित्ते स्वकीये मनसि संनिवेश्य सम्यगवधार्य द्रष्टुं न व्यवसेत, दर्शनाय सोद्यमो न भवेत्. कोऽर्थः? साधुः स्त्रीणामेतच्चेष्टितं हृदि धृत्वैतच्चेष्टितं द्रष्टुं व्यवसायं न कुर्यात्. यतो हि पूर्वं मनस इच्छायाः प्रवृत्तिः, ततश्चक्षुरादीनामिंद्रियाणां प्रवृत्तिरिति. तत् स्त्रीणां किं किं चेष्टितं? तदाह—रूपं स्त्रीणां गौरादिवर्णः, लावण्यं नयनाह्लादकः कश्चिद्गुणविशेषः, विलासो विशिष्टनयनचेष्टाविशेषः, अथवा मंथरगतिकरणादिकः, हास्यं स्मितमीषद्दंतानां दर्शनं. जल्पितं मन्मनोच्चारादिकं, इंगितमंगोपांगादिमोटनं स्वचित्तविकारसूचकं. प्रेक्षितं वक्रावलोकनं. रूपं च लावण्यं च विलासश्च हास्यं च रूपलावण्यविलासहास्यानि, तेषां समाहारो रूपलावण्यविलासहास्यं. एतत्सर्वं स्त्रीणां साधुना रागेण न द्रष्टव्यमिति भावः. ॥१४॥

॥ मूलम् ॥—अदंसणं चेव अपत्थणं च। अचिंतणं चेव अकित्तणं च॥ इत्थीजणस्सारियझाणजुग्गं। हियं सया बंभचेरे रयाणं॥ १५॥ व्याख्या—ब्रह्मचर्ये ब्रह्मव्रते रतानां सावधानानां साधूनामेतदार्यध्यानयोग्यं हितं वर्तते. आर्यं च तद्ध्यानं चार्यध्यानं, सम्यग्ध्यानं धर्मशुक्लादिकं, तस्य योग्यं हितं पथ्यं, धर्मध्यानस्य स्थैर्यकारकं भवति. कोऽर्थः? यदा हि

ब्रह्मचर्यधारिण एतत्कुर्वंति, तदा तेषां धर्मध्यानं स्थिरं स्यादित्यर्थः. तत् किं किमार्यध्यानयोग्यं? तदाह—स्त्रीणामदर्शनं रागेणाऽनवलोकनं, च पदपूरणे, एव निश्चये. पुनः किं? स्त्रीणामप्रार्थनमभिलापस्याऽकरणं. पुनः स्त्रीणामचिंतनं, यत्कदाचिद्रूपादिकं दृष्टं, तस्य चेतसि न स्मरणमपरिभावनमित्यर्थः. पुनः स्त्रीणामकीर्तनं, नाम्ना गुणेन वा न कीर्तनमकीर्तनं, नामगुणोच्चारणस्याऽकरणं. यदि ब्रह्मचारी स्त्रीणां दर्शनं प्रार्थनं चिंतनं कीर्तनं करोति, तदा तस्यार्यध्यानस्योत्तमध्यानस्य स्थैर्यं न स्यात्. एतत्तु धर्मध्यानस्य योग्यं हितं नास्ति. ॥ ॥ १५ ॥ ननु कश्चिद्वदति विकारहेतौ सति विक्रियंते येषां न चेतांसि ते एव धीराः, तत्किं विविक्तशयनासनसेवनेन? इति चेत्तत्राह—

॥ मूलम् ॥—कामं तु देवीहिं विभूसियाहिं । न चाइया खोभइउं तिगुत्ता ॥ तहावि एगंतहियंति नच्चा । विवित्तभावो मुणिणं पसत्थो ॥ १६ ॥ व्याख्या—हे शिष्य! तथापि मुनीनां विविक्तभाव एकांतस्थाननिवासः प्रशस्तः. किं कृत्वा? विविक्तभावमेकांतहितं मत्वा. तथेति कथं? यद्यपि त्रिगुप्तास्तिसृभिर्गुप्तिभिर्गुप्ता मुनयः काममत्यर्थं देवीभिः क्षोभयितुं

ध्यानाच्चालयितुं न ' चाइया ' इति न शकिताः. कीदृशीभिर्देवीभिः ? विभूषिताभिराभूषण-युक्ताभिः, यदि देवांगनाभिराभरणालंकृताभिरपि साधवो ध्यानान्न चालितास्तदा मानुषीभिस्तु क्षोभं प्रापयितुमशक्या एव. तथापि स्त्रीप्रसंगत्यागं मुनीनामेकांतहितं ज्ञात्वा स्त्र्यादिरहितोपाश्रये स्थितिः श्रेयसीति भावः. ॥ १६ ॥ स्त्रीप्रसंगत्यागं पुनरपि दृढयति—

॥ मूलम् ॥—मुक्खाभिकंखस्सवि माणवस्स । संसारभीरुस्स ठियस्स धम्मे ॥ न तारिसं दुत्तरमत्थि लोए । जह छिओ बालमणोहराओ ॥ १७ ॥ व्याख्या—मोक्षाभिकांक्षस्य मोक्षाभिलाषुकस्य मानवस्य संसारभीरोरपि, तथा धर्मे स्थितस्य श्रुतधर्मे स्थितस्यात्र संसारे तादृशं दुस्तरमन्यत्किमपि नास्ति, यथा लोके संसारे स्त्री दुस्तरास्ति. कीदृशी स्त्री ? बालमनोहरा, बालानामविवेकिनां मनांसि हरतीति बालमनोहरा, तुशब्दः पदपूरणे विशेषार्थे च. ॥ १७ ॥ स्त्रीसंगातिक्रमे गुणमाह—

॥ मूलम् ॥—एएसि संगं समइक्कमित्ता । सुहुत्तरा चेव भवंति सेसा ॥ जहा महासागरमुत्तरित्ता । नई भवे अवि गंगासमाणा ॥ १८ ॥ व्याख्या—मनुष्याणामेतान् स्त्रीसंबंधिसं-

गान् समतिक्रम्य शेषा धनधान्यादिसंबंधाः सुखोत्तराश्चैव नवंति. सुखेनोत्तीर्यंते इति सुखोत्तराः. यथा महासागरं स्वयंभूरमणसदृशं समुद्रमुल्लंघ्य गंगानद्यपि सुखोत्तरा सुखोल्लंघ्यैव. तथा येन स्त्रीसंगस्त्यक्तस्तस्यान्यसंगो धनधान्यादिसंयोगः सुत्यज एव. ॥ १७ ॥ अथ रागस्य दुःखहेतुत्वमाह—

॥ मूलम् ॥—कामाणुगिद्धिप्पनवं खु दुक्कं । सवस्स लोयस्स सदेवगस्स ॥ जं काइयं माणसियं च किंचि । तस्संतगं गछइ वीयरागो ॥ १९ ॥ व्याख्या—वीतरागः पुमान् रागद्वेषरहितो मनुष्यस्तस्य द्विविधस्यापि दुःखस्यांतकं पर्यंतं गछति प्राप्नोति. तद् द्विविधं दुःखं कीदृशं? कायिकं, काये नवं कायिकं रोगादि, तथा मानसिकं, मनसि भवं मानसिकं, इष्टवियोगाऽनिष्टसंयोगादि. पुनर्यद्दुःखं सर्वस्य लोकस्य प्राणिगणस्य 'खु' इति निश्चयेन कामानुगृद्धिप्रनवं विषयसततसेवनोद्भूतं वर्तते. काम्यंतेऽनिलष्यंते जनैरिति कामा विषयास्तेष्वनुगृद्धिः कामानुगृद्धिः, सतताभिकांक्षा कामानुगृद्धिः, ततः प्रनवो यस्य तत्कामानुगृद्धिप्रनवं. कीदृशस्य लोकस्य? सदेवकस्य देवैः सहितस्य वीतरागो विगतकामानुगृद्धिरिहो-

च्यते. ॥ १९ ॥ अथ कामा एव दुःखहेतव इति वदति—

॥ मूलम् ॥—जहा य किंपागफला मणोरमा । रसेण वन्नेण य जुज्जमाणा ॥ ते खुद्दए जीविये पच्चमाणे । एओवमा कामगुणा विवागे ॥ २० ॥ व्याख्या—यथा च किंपाकफलानि विषवृक्षविशेषस्य फलानि रसेन मधुरत्वेन, वर्णेन रक्तादिना, चकाराद्गंधेन जुज्यमानानि जनस्य मनोहराणि भवंति, तानि किंपाकफलानि क्षुद्रके जीविते तुच्छे सोपक्रमे मनुष्यायुषि पच्यमानान्युदरांतरे गत्वा विपाकावस्थां प्राप्तानि मरणांतदुःखानि भवंतीत्यध्याहारः. तथा विपाके परिपाककाले कामगुणा विषया एतदुपमाः, एतेषां किंपाकफलानामुपमा येषां ते एतदुपमाः, किंपाकफलसदृशा विषया इत्यर्थः. विषया हि भोगसमये मनोरमाः, विपाके परलोके नरकादिदुःखदायिनः. ॥ २० ॥ रागस्यैव द्वेषसहितस्योद्धरणोपायमाह—

॥ मूलम् ॥—जे इंदियाणं विसया मणुन्ना । न तेसु भावं न सरे कयाइ ॥ न यामणुन्नेसु मणंपि कुज्जा । समाहिकामे समणे तवस्सी ॥ २१ ॥ व्याख्या—समाधिकामः, समाधिं रागद्वेषाऽभावेन चित्तस्य स्वास्थ्यं कामयते इति समाधिकामः, चित्तस्थैर्याभिलाषी तप-

स्वी श्रमणः साधुस्तेषु विषयेषु कदाचिद्भावं चित्ताभिप्रायं न सृजेन्न कुर्यात्. तेषु केषु? ये विषया इंद्रियाणां कर्णादीनां मनोज्ञा वल्लभा वर्तंते. तथा च पुनर्येऽमनोज्ञा अप्रियास्तेष्वमनोज्ञेष्विंद्रियाणां विषयेषु मनो न कुर्यात्, इत्यनेन सुंदरेषु विषयेषु सरागं मनो न कुर्यात्, तथाऽसुंदरेषु विषयेषु सद्वेषं मनो न कुर्यात्. ॥ २१ ॥

॥ मूलम् ॥—चक्खुस्स रूवग्गहणं वयंति । तं रागहेउं तु मणुन्नमाहु ॥ तं दोसहेउं अमणुन्नमाहु । समो य जो तेसु स वीयरागो ॥ २२ ॥ व्याख्या—अथ मनोज्ञामनोज्ञयोः स्वरूपमाह—चक्षुषो लक्षणं रूपग्रहणं तीर्थंकरा वदंति. रूपं वर्णः संस्थानं वा तद्गृह्यतेऽनेनेति रूपग्रहणं, चक्षुरिंद्रियस्यैतल्लक्षणं. तमिति तद्रूपं रागहेतुकं मनोज्ञमाहुः. यस्मिन् रूपे दृष्टे राग उत्पद्यते तद्रूपं मनोज्ञमाहुः. तदेव रूपं द्वेषहेतुकममनोज्ञमाहुः. यस्मिन् रूपे दृष्टे द्वेष उत्पद्यते तद्रूपममनोज्ञमित्यर्थः. यः साधुस्तेषु मनोज्ञामनोज्ञेषु रूपेषु समः सदृशवृत्तिः स्यात्, स साधुर्वीतराग उच्यते. ॥ २२ ॥

॥ मूलम् ॥—रूवस्स चक्खुं गहणं वयंति । चक्खुस्स रूवं गहणं वयंति ॥ रागस्स हे-

उं समणुन्नमाहु । दोसस्स हेउं अमणुन्नमाहु ॥ २३ ॥ व्याख्या—तीर्थकराश्चक्षुरिंद्रियं रूपस्य विषयस्य ग्रहणं वदंति. गृह्णातीति ग्रहणं, कर्तरि युप्रत्ययः. रूपस्य ग्राहकं चक्षुरित्यर्थः. पुनस्तीर्थकराश्चक्षुरिंद्रियस्य रूपं विषयं ग्रहणं वदंति. गृह्यते इति ग्रहणं, ग्राह्यं चक्षुषा ग्राह्यं रूपं यच्चक्षुरिंद्रियेणग्राह्यं तदेव रूपमितिभावः. अनेन रूपचक्षुषोर्ग्राह्यग्राहकभावेन परस्परमुपकार्योपकारकभावेन च संबंध उक्तः. इत्यनेन रूपं रागद्वेषकारणं, तथा चक्षुरपि रागद्वेषकारणमुक्तं. तत्समनोज्ञं चक्षुरिंद्रियं रागहेतुमाहुः, सह मनोज्ञेन ग्राह्येण रूपेण वर्तते इति समनोज्ञं मनोज्ञरूपग्राहकं नेत्रं रागहेतुकमित्यर्थः. अमनोज्ञरूपग्राहकं द्वेषस्य हेतुं हेतुकमाहुः कथयंति. ॥ २३ ॥

॥ मूलम् ॥—रूवेसु जो गिद्धिमुवेइ तिव्वं । अकालियं पावइ से विणासं ॥ रागाउरे से जहा वा पयंगे । आलोयलोले समुवेइ मच्चुं ॥ २४ ॥ व्याख्या—रागस्य दूषणमाह—यः प्राणी रूपेषु तीव्रामुत्कटां गृद्धिं रागमुपैति प्राप्नोति करोति, धातूनामनेकार्थत्वात्. स प्राणी रागातुरः सन् रागपीडितः सन्नकालिकमेव विनाशं प्राप्नोति, अकाले भवमकालिकं,

आयुषः स्थितेरर्वागेव म्रियेत, यतो मनुष्या हि सोपक्रमायुषः स्युः. क इव? यथा वेति, वाशब्द इवार्थे. यथैवालोके प्रदीप्तदीपशिखादर्शने लोलो लंपट आलोकलोलः पतंगश्चक्षुरिंद्रियो जीवो मृत्युं समुपैति, तथा रागातुरो जीवोऽकालमृत्युं समुपैतीत्यर्थः. ॥ २४ ॥

॥ मूलम् ॥—जोआवि दोसं समुवेइ तिव्वं । तंसिं खणे से समुवेई दुक्खं ॥ दुद्दंतदोसेण सएण जंतु । न किंचि रूवं अवरज्झई से ॥२५॥ व्याख्या—अथ द्वेषदूषणमाह—यश्चापि जीवो रूपेष्वित्यध्याहारः, यस्मिन् क्षणे तीव्रं दोषं समुपैति, स जीवस्तस्मिन्नेव क्षणे स्वकीयेन दुर्दांतदोषेण, दुर्दांतं चक्षुस्तदेव दोषो दुर्दांतदोषस्तेन दुर्दांतदोषेण दुःखं चित्तसंतापं समुपैति. परं से इति तस्य पुरुषस्य रूपं किमपि नापराध्यति, न विरूपं करोति. रूपस्य न कोऽपि दोष इत्यर्थः. तस्य जीवस्यैव दुर्दांतेंद्रियस्यैव दोष इत्यर्थः. ॥ २५ ॥

॥ मूलम् ॥—एगंतरत्तो रुइरंसि रूवे । अयालिसे से कुणइ पओसं ॥ दुक्खस्स संपीलमुवेइ वाले । न लिप्पई तेण मुणी विरागे ॥ २६ ॥ व्याख्या—यो मनुष्यो रुचिरे मनोज्ञे रूपे एकांतरक्तो भवत्यत्यंतं रागी भवति, स च पुरुषोऽतादृशेऽसुंदरे रूपे प्रद्वेषं करोति. त-

तो बालोऽज्ञानी रागी पुमान् दुःखस्य संपीडं संघातमुपैति. विरागी मुनिस्तेन रागद्वेषजनितदुःखेन न लिप्यते, न श्लिष्यते. ॥ २६ ॥

॥ मूलम् ॥—रूवाणुगासाणुगए य जीवे । चराचरे हिंसइणेगरूवे ॥ चित्तेहिं ते परियावेइ बाले । पीलेइ अत्तट्ठ गुरू किलिट्ठा ॥ २७ ॥ व्याख्या—इदानीं रागस्यैव सकलाश्रवहेतुत्वमाह—क्लिष्टो रागबाधितो रागवशवर्ती बालोऽज्ञानी जीवश्चित्रैरनेकप्रकारैः शस्त्राद्युपायैः कृत्वा चराचरांस्त्रसस्थावराननेकरूपवान् जीवान् पीडयति, एकदेशदुःखोत्पादनेन पीडामुत्पादयति. पुनः परितापयति, परि समंताद् दुःखयति. पुनर्हिनस्ति, प्राणेभ्यः पृथक्करोति. परं स रागी जीवः कीदृशः सन्? रूपानुगाशानुगतः सन्, रूपं प्रस्तावान्मनोज्ञमनुगच्छतीच्छतीति रूपानुगा, रूपानुगा चासावाशा च रूपानुगाशा रूपविषयोऽभिलाषः, तमनुगतोऽनुप्राप्तो रूपानुगाशानुगतः, तादृशः सन् सुंदररूपविलोकनमनोरथसहितः सन्नित्यर्थः. पुनः कीदृशो बालः? ' अत्तट्ठगुरु ' इत्यात्मार्थगुरुः, आत्मनः स्वस्यार्थः प्रयोजनं गुरु यस्य स आत्मार्थगुरुः स्वप्रयोजननिरतः, स्वार्थी पुमान् किं किं न कुर्यादिति भावः. ॥ २७ ॥

॥ मूलम् ॥—रूवाणुवाएण परिग्गहेण । उप्पायणे रक्खणसंनिओगे ॥ वए विओगे य कहिं सुहं से । संभोगकाले य अतित्तिलाभे ॥ २८ ॥ व्याख्या—तस्य रूपलोभाभिभूतस्य प्राणिनः कुतः सुखं? तदेव दर्शयति—रूपानुरागे सति रूपानुरागेण वा रूपानुपाते सति परिग्रहेण मूर्छारूपेण हेतुना, 'उप्पायणे' इत्युत्पादने उपार्जने, तथा रक्षणसंनियोगे, रक्षणं चाऽपायनिवारणं, संनियोगश्च स्वपरप्रयोजनेषु सम्यग्व्यापारः, ततो द्वंद्वे रक्षणसंनियोगं, तस्मिन्, तथा व्यये विनाशे, तथा विरहे, च पुनः संभोगकालेऽतृप्तिलाभे सति, तृप्तेः संतुष्टेर्लाभस्तृप्तिलाभः, न तृप्तिलाभोऽतृप्तिलाभस्तस्मिन्नतृप्तिलाभे सति, से इति तस्य लोभयुक्तस्य जीवस्य कदापि न सुखं. पूर्वं हि लोभी जीवो रूपानुरागी सन् मूर्छया रूपवद्गजतुरगकलत्रादीनामुत्पादने दुःखं प्राप्नोति, ततस्तेषामुत्पन्नानां कष्टेभ्यो रक्षणे दुःखं प्राप्नोति. ततश्च संनियोगे स्वपरप्रयोजने सम्यग्व्यापारणे दुःखं प्राप्नोति. तेषां रूपवद्गजादीनां संभोगकालेऽपि प्राप्तावतृप्तिलाभेऽपि संतोषस्याऽभावे सति दुःखं प्राप्नोति. यदुक्तं—न जातकामः कामाना—मुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव । भूय एवाभिवर्धते ॥ १ ॥ तस्मात्परिग्रहेण जीवस्य कुतः सुखं? कदा-

पि सुखं नास्तीति भावः. ॥ २८ ॥

॥ मूलम् ॥—रूवे अतत्ते य परिग्गहंमि। सत्तोवसत्तो न लभेइ तुठिं ॥ अतुठ्ठिदोसेण दुही परस्स। लोभाविले आययई अदत्तं ॥ २९ ॥ व्याख्या—रूपेऽतृप्तश्च पुरुषः परिग्रहे मूर्छायां सक्तो प्रसक्तो भवति, सामान्येनासक्तिमान् सक्तः, उपसक्तश्च गाढमासक्तः स्यात्. तथ मूर्छायां सक्तोपसक्तः, पूर्वं सक्तः, पश्चादुपसक्तः सक्तोपसक्तः. एतादृशः सन्मनुष्यस्तुष्टिं संतोषं नोपैति. ततश्चातुष्टिदोषेणाऽसंतोषदोषेण दुःखी सन् परस्यान्यस्याऽदत्तं सुरूपं वस्त्विति शेषः, आदत्ते गृह्णाति. कीदृशः स रूपेऽतृप्तः?-लोभाविलो लोभेनाविलः कलुषो लोभाविलः. ॥ २९ ॥

॥ मूलम् ॥—तण्हाभिभूयस्स अदत्तहारिणो। रूवे अतत्तस्स परिग्गहस्स ॥ मायामुसं वड्ढइ लोभदोसा। तत्थावि दुक्खा न विमुच्चइ से ॥ ३० ॥ व्याख्या—पुनर्दोषांतरमाह—तृष्णाभिभूतस्य लोभपराजितस्य जीवस्याऽदत्तहारिणोऽदत्तग्राहकस्य, तथा रूपे रूपविषये परिग्रहेऽतृप्तस्याऽसंतुष्टस्य लोभदोषाल्लोभापराधान्मायामृषा वर्धते, तृष्णयाऽदत्तं गृह्णाति, ततो



32

लोनात्परस्य गृहीतवस्तुरक्षणपरो मायामृषां वक्ति, तत्रापि मृषाजाषणेऽपि दुःखान्न विमुच्यते. स लोनी दुःखस्य जागेव स्यादित्यर्थः. ॥ ३० ॥ दुःखयुक्तत्वमेव प्रकटयति—

॥ मूलम् ॥—मोसस्स पच्छाय पुरच्छ्ठ य । पउंगकाले य दुही दुरंते ॥ एवं अदत्ताणि समाययंतो । रूवे अतत्तो दुहिउ अणिस्सो ॥ ३१ ॥ व्याख्या—'मोसस्स' मृषावाक्यस्य पश्चात्पुरतश्च प्रयोगकाले च कालत्रयेऽपि सुरूपवस्तुलोजोददत्तग्राहकः पुमान् डुःखी जवतीति शेषः. सुरूपवस्तुलोजाददत्तग्राहकः पुमानित्यपि कर्तृपदं प्रस्तावाद्गृह्यते. कोऽर्थः? पूर्वं हि लोजान्मृषाजापणं कुरुते, मृषाजापणस्य पश्चान्मृषावचनमुक्त्वा पश्चात्पश्चात्तापं कुरुते, मनसि जानाति मया मृषोक्तं. मा ज्ञास्यत्यसौ वस्तुस्वामीति. तथा पुरतश्च मृषाजापणात्पूर्वमपि दुःखी जवति. मयासौ सुरूपवस्तुस्वामी केन प्रकारेण वंचनीय इति. पुनः प्रयोगकाले मृषाजल्पनकालेऽपि डुःखी जवति, मनस्येवं जानाति, मा कदाचिन्मम मृषावचनमसौ जानात्यपि. कीदृशः स पुरुषः? दुरंतो दुष्टोंतः पर्यवसानं यस्य स डुरंतः. इह लोके विटंबनातः, परजवे च डुर्गतिदुःखाद्दुष्टावसान इत्यर्थः. एवममुना प्रकारेण रूपेऽतृप्तोऽदत्तानि

समाचरन्ननिश्रः सन् दुःखितो भवति, न विद्यते निश्रा यस्य सोऽनिश्रोऽवष्टंभरहितः. यतो हि चौरस्य मृषाभाषिणश्च न कोऽपि रक्षक इति भावः. ॥ ३१ ॥

॥ मूलम् ॥—रूवाणुरत्तस्स नरस्स एवं । कत्तो सुहं हुज्ज कयाइ किंचि ॥ तत्थोवभोगेवि किलेसदुक्खं । निव्वत्तई जस्स कएण दुक्खं ॥ ३२ ॥ व्याख्या—एवममुना प्रकारेण प्रागुक्तसूत्रप्रकारेण रूपानुरक्तस्य रूपानुरागिणः पुरुषस्य कदापि रात्रौ दिवसे वा किंचित्स्तोकमात्रमपि कुतः कस्मात्सुखं भवेत्? अपितु कदापि किमपि सुखं न भवेत्. यतस्तत्र रूपानुरागे उपभोगेऽपि क्लेशदुःखमतृप्तिलाभत्वलक्षणपीडाजनितमसातं निर्वर्तयत्युत्पादयति. पुनः 'जस्स कएण', इति यस्य मनोज्ञरूपाद्युपभोगस्य कृते, मनोज्ञरूपाद्युपभोगार्थं दुःखमात्मनः कष्टं भवति. ॥ ३२ ॥ इति रागस्य दुःखहेतुत्वमुक्त्वा द्वेषस्य दुःखहेतुत्वमाह—

॥ मूलम् ॥—एमेव रूवंमि गओ पओसं । उवेइ दुक्खोहपरंपराओ ॥ पदुट्ठचित्तो य चिणाइ कम्मं । जं से पुणो होइ दुहं विवागे ॥ ३३ ॥ व्याख्या—एवममुना प्रकारेणैव यथा मनोज्ञरूपोपरि रागाद्दुःखं लाभप्रकारेणैव, तथा जीवोऽमनोज्ञे रूपे प्रद्वेषं गतः सन् प्रद्वे-

पपरंपरातः प्रदुष्टचित्तः संस्तत्कष्टकर्म चिनोत्युपार्जयति. ' जं ' इति यत्कर्म ' से ' इति तस्य दुष्टचित्तस्य विपाके कर्मानुभवकाले, इह परत्र च दुःखं दुखदायि भवति. ॥ ३३ ॥ रागद्वेषोद्धरणगुणमाह—

॥ मूलम् ॥—रूवे विरत्तो मणुओ विसोगो । एएण दुक्खोहपरंपरेण ॥ न लिप्पई भवमज्के वसंतो । जलेण वा पुक्खरिणीपलासं ॥ ३४ ॥ व्याख्या—रूपे विरक्तो मनुष्यो मनोज्ञरूपे रागमकुर्वन्नेतया दुःखौघपरंपरया पूर्वोक्तया दुःखसमूहश्रेण्या भवमध्ये वसन्नपि न लिप्यते, रागजनितदुःखावलिप्तो न स्यादित्यर्थः. कीदृशः स पुमान्? विशोको विगतशोकः. केन किमिव? जलेन पुष्करिणीपलाशमिव, यथा पद्मिनीपत्रं जले तिष्ठदपि जलेन नावलिप्यते, एवं विरक्तोऽपि संसारे वसन्नपि संसारदुःखैर्न लिप्यते. ॥ ३४ ॥ एवं चक्षुरिंद्रियमाश्रित्य त्रयोदश गाथा व्याख्याताः, अथ शेषेंद्रियाणां मनसश्च त्रयोदशत्रयोदश गाथा व्याख्येयाः संति. अत्र चेंद्रियाणां चक्षुषो दोषबाहुल्यप्रादुर्भावात्पूर्वं चक्षुरिंद्रियद्वारेण रागद्वेषौ दर्शितौ, अन्यथा तु दुर्दमनं रसनेंद्रियमुक्तमस्ति. अथ श्रोत्रमाश्रित्य दूषणान्याह—

॥ मूलम् ॥—सोयस्स सद्दं गहणं वयंति । तं रागहेउं तु मणुन्नमाहु ॥ तं दोसहेउं अमणुन्नमाहु । समो य जो तेसु स वीयरागो ॥ ३५ ॥ व्याख्या—तीर्थंकराः श्रोत्रेंद्रियस्य ग्रहणं विषयं शब्दं वदंति. शब्दग्राहकं श्रोत्रमिति श्रोत्रेंद्रियस्य लक्षणं. शब्दः श्रोत्रेणैव गृह्यते, तं शब्दं मनोज्ञं स्त्रीगीतादिकं रागहेतुकमाहुः, वीतरागाः कथयंति. तमेव शब्दममनोज्ञं खरवायसादिप्रोक्तं कर्कशं द्वेषहेतुकमाहुः. यस्तु मनोज्ञामनोज्ञयोः शब्दयोर्विषये समो रागद्वेषरहितः स वीतराग उच्यते. ॥ ३५ ॥

॥ मूलम् ॥—सद्दस्स सोयं गहणं वयंति । सोयस्स सद्दं गहणं वयंति ॥ रागस्स हेउं समणुन्नमाहु । दोसस्स हेउं अमणुन्नमाहु ॥ ३६ ॥ व्याख्या—तीर्थंकराः ' सोयं ' इति श्रोत्रेंद्रियं शब्दस्य ग्रहणं ग्राहकं वदंति. गृह्णातीति ग्रहणं. पुनस्तीर्थंकराः शब्दं विषयं श्रोत्रस्य श्रोत्रेंद्रियस्य ग्रहणं, गृह्यते इति ग्रहणं ग्राह्यं वदंति. शब्दः श्रोत्रेण ग्राह्यः, तस्माच्छब्दश्रोत्रयोर्ग्राह्यग्राहकत्वावसंबंध उक्तः. तत्समनोज्ञं सुंदरशब्दविषयग्राहकं रागस्य हेतुकमाहुः. पुनरमनोज्ञमसुंदरं शब्दविषयग्राहकं श्रोत्रेंद्रियं द्वेषस्य हेतुमाहुः. ॥ ३६ ॥

॥ मूलम् ॥—सद्देसु जो गिद्धिमुवेइ तिव्वं । अकालियं पावइ से विणासं ॥ रागाउरे हरिणमिगेव मुद्धे । सद्दे अतत्ते समुवेइ मच्चुं ॥ ३७ ॥ व्याख्या—यः पुरुषः शब्देषु तीव्रामधिकां गृद्धिं मूर्छामुपैति, स शब्देऽतृप्तो मनोज्ञशब्देऽसंतुष्टो रागातुरः सन् मुग्धो मूढोऽकालिकमायुःस्थितेरर्वागेव सोपक्रमायुष्कत्वान्मृत्योरवसरं विनैव विनाशं मरणं प्राप्नोति. स मूढः क इव मृत्युं समुपैति? शब्देऽतृप्तो मुग्धो हरिण इव मृग इव हरिणपशुरिव. अत्र मृगशब्दः पशुपर्यायवाचकः, हरिणश्चासौ मृगश्च हरिणमृगः. ॥ ३७ ॥

॥ मूलम् ॥—जेआवि दोसं समुवेइ तिव्वं । तंसिं खणे से उ उवेइ दुक्खं ॥ दुद्दंतदोसेण सएण जंतू । न किंचि सद्दं अवरज्झइ से ॥ ३८ ॥ व्याख्या—यश्चापि जंतुर्जीवो यस्मिन् क्षणेऽमनोज्ञे शब्दे तीव्रं द्वेषं समुपैति, स जंतुस्तस्मिन्नेव क्षणे स्वकीयेन दुर्दांतदोषेण, दुर्दांतं श्रोत्रेंद्रियं, तदेव दोषोऽथवा तस्य दोषस्तेन दुःखमुपैति प्राप्नोति, स जंतुः स्वकीयश्रोत्रेंद्रियदोषेण दुःखीक्रियते. परंतु तस्य पुरुषस्य शब्दः किंचिदपि नापराध्यति, शब्दस्य न कोऽपि दोषः, जंतोः श्रोत्रेंद्रियस्यैव दोष इत्यर्थः. ॥ ३८ ॥

॥ मूलम् ॥—एगंतरत्तो रुइरंमि सद्दे । अतालिसे से कुणई पओसं ॥ दुक्खस्स संपील-मुवेइ बाले । न लिप्पई तेण मुणी विरागे ॥ ३७ ॥ व्याख्या—यो मनुष्यो रुचिरे मनोज्ञे शब्दे एकांतरक्तोऽत्यंतमासक्तो भवति, रागं कुरुते, स मनुष्योऽतादृशेऽमनोज्ञे शब्दे प्रद्वेषं करोति. स बालो रागद्वेषासक्तो दुःखस्य संपीडामुपैति, असातासंबंधिनीमत्यंतपीडां प्राप्नोति, तेन रागद्वेषोत्पन्नदुःखेन विरागी मुनिर्न लिप्यते, वीतरागः पुमान् सदा सुखभाक् स्यादिति भावः. ॥ ३७ ॥

॥ मूलम् ॥—सद्दाणुगासाणुगए य जीवे । चराचरे हिंसइणेगरूवे ॥ चित्तेहिं ते परितावेइ बाले । पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ४० ॥ व्याख्या—अथ शब्दानुरक्तस्य रागद्वेषयोरेवाश्रवकारणत्वमाह—जीवः शब्दानुगाशानुगतः सन्, मनोज्ञशब्दश्रवणाशायुक्तः सन्, चराचराननेकरूपान् जीवान् हिनस्ति. स बालोऽज्ञानी चित्रैरनेकप्रकारैरुपायैः शस्त्रादिभिः कांश्चिज्जीवान् परितापयति, कांश्चिज्जीवान् पीडयति. कीदृशः स बालः? 'अत्तट्ठगुरु' आत्मार्थगुरुः स्वार्थपरायणः. पुनः कीदृशः? 'किलिट्ठ' क्लिष्टो रागद्वेषोपहतचित्तः. ॥ ४० ॥

॥ मूलम् ॥—सद्दाणुवाएण परिग्गहेण । उप्पायणे रक्खणसंनियोगे ॥ वए वियोगे य कहिं सुहं से । संजोगकाले य अतत्तिलाभो ॥ ४१ ॥ व्याख्या—मनोज्ञशब्दश्रवणलोभाभिभूतस्य प्राणिनः कुतः सुखं? तदेवाह—शब्दानुरागेण तथा परिग्रहेण मूर्छारूपेणोत्पादने मनोज्ञशब्दोपेतचेतनाचेतनद्रव्योत्पादने, पश्चात्तेषां रक्षणे, पश्चात्तेषां संनियोगे स्वपरप्रयोजने सम्यग्व्यापारणे, व्यये विनाशे, वियोगेऽर्थाच्छब्दार्थिनः पुरुषस्य कुतः सुखं? पुनस्तस्य शब्दानुरागिणो जंतोः संभोगकाले चातृप्तिलाभो दुःखं भवति, शब्दश्रवणे रागिणां न तृप्तिरिति भावः ॥ ४१ ॥

॥ मूलम् ॥—सद्दे अतत्ते य परिग्गहंमि । सत्तोवसत्तो न उवेइ तुट्ठिं ॥ अतुट्ठिदोसेण दुही परस्स । लोभाविले आययई अदत्तं ॥ ४२ ॥ व्याख्या—शब्देऽतृप्तो जीवः परिग्रहे सक्तः स्यात्, सामान्येन रक्तो भवेत्, उपसक्तश्च गाढमासक्तः स्यात्. ततश्च सक्तोपसक्तः स्यात्. अत्यंतं सक्त उपसक्तः, सक्तश्चासावुपसक्तश्च सक्तोपसक्तः, परिग्रहे गाढानुरक्तस्तुष्टिं संतोषं नोपैति, अतुष्टिदोषेण दुःखी भवति. पुनरसंतोषी परस्यान्यस्य संबंधि शोभनशब्दकारिव-



32

स्तुवादित्रादिलोभाविलो लोभकलुषोऽदत्तमादत्ते, अदत्तं गृह्णाति. ॥ ४२ ॥

॥ मूलम् ॥—तण्हाभिभूयस्स अदत्तहारिणो । सद्दे अतत्तस्स परिग्गहे य ॥ मायामुसं वड्ढइ लोभदोसा । तत्थावि दुक्खा न विमुच्चइ से ॥ ४३ ॥ व्याख्या—शब्देऽतृप्तस्य प्राणिनः परिग्रहे तृषाभिभूतस्याऽदत्तहारिणश्च लोभदोषान्मायामृषा संवर्धते. पुनस्तस्य प्राणिनस्तत्रापि मायामृषायामपि दुःखान्न विमुच्यते, मायामृषाजल्पनकालेऽपि दुःखभाक् स्यादित्यर्थः. ॥ ४३ ॥ तदेव दुःखं दर्शयति—

॥ मूलम् ॥—मोसस्स पच्छा य पुरओ य । पओगकाले य दुही दुरंते ॥ एवं अदत्ताणि समाययंते । सद्दे अतत्तो दुहिओ अणिस्सो ॥ ४४ ॥ व्याख्या—मृषाभाषी पुमान् मृषावाक्यस्य पश्चात्पुरतश्च प्रयोगकाले च दुरंतो दुःखांतो भवति, अंते दुःखभाक् स्यात्. मायया मृषामुक्त्वा, पश्चान्मृषाभाषणस्य पश्चात्तापं करोति, मनस्येवं जानाति, मया सुसंस्थापितं वाक्यं नोक्तमिति पश्चात्तापं करोति. पुनः शब्दलोभी मृषाभाषणस्य पुरस्ताच्च कथं मयासौ शोभनशब्दगुणवान् पदार्थो ग्राह्यो वंचना वा कार्येति मृषाभाषणात्पूर्वमपि चिंतादुः-

षोपेतः स्यात्. पुनः स च प्रयोगकाले मृषाभाषणप्रस्तावे च दुःखी स्यात्, यतो हि मृषां जल्पंतं मामसौ माजानात्वप्येवममुना प्रकारेण शब्देऽतृप्तो जीवोऽदत्तानि शब्दगुणवद्वस्तूनि समाचरन् गृह्णन् दुःखितो भवति. त्रिकालमपि दुःखभाग्भवति. कीदृशः सः? अनिश्रो निश्रारहितः, यतो ह्यदत्तग्राहिणोऽन्याययुक्तस्य न कोऽप्यवष्टंभदाता स्यात्. ॥ ४४ ॥

॥ मूलम् ॥—सद्दाणुरत्तस्स नरस्स एवं । कत्तो सुहं हुज्ज कया य किंचि ॥ तत्थोवभोगेवि किलेसदुक्खं । निव्वत्तई जस्स कएण दुक्खं ॥ ४५ ॥ व्याख्या—शब्दानुरक्तस्य मनुष्यस्यैवमनेनोक्तप्रकारेण कदापि किंचित्स्तोकमपि सुखं भवति? अपि तु सर्वथैव न सुखं. यतस्तत्र शब्दानुरागे उपभोगेऽपि क्लेशदुःखं, अतृप्तिलाभलक्षणपीडाजनितमसातं निर्वर्तयत्युत्पादयति. पुनः ' जस्स कएण ' इति यस्य मनोज्ञशब्दोपभोगस्य कृते शब्दोपभोगार्थं दुःखमात्मनः कष्टं निर्वर्तयत्युत्पादयति, तस्य कदापि सुखं नास्तीत्यर्थः, सुखस्य कारणं तत्र किमपि नास्ति. ॥ ४५ ॥

॥ मूलम् ॥—एमेव सद्दंमि गओ पओसं । उवेइ दुक्खोहपरंपराओ ॥ पदुट्ठचित्तो य चि-

णाइ कम्मं । जं से पुणो होइ दुहं विवागे ॥ ४६ ॥ व्याख्या—एवमनेन प्रकारेणैव, यथा मनोज्ञशब्दोपरि रागमुपगतस्तथाऽमनोज्ञशब्दे प्रद्वेषं गतो जीवो दुःखौघपरंपरामुपैति. ततः प्रदुष्टचित्तो द्वेषोपहतचित्तः कर्माष्टविधं चिनोति, कर्मबंधं करोति. यत्कर्म तस्य प्रदुष्टचित्तस्य पुरुषस्य विपाके दुःखं दुःखदायि भवति. ॥ ४६ ॥

॥ मूलम् ॥—सद्दे विरत्तो मणुओ विसोगो । एएण दुक्खोहपरंपरेण ॥ न लिप्पइ भवमज्झे वसंतो । जलेण वा पोक्खरिणीपलासं ॥ ४७ ॥ व्याख्या—यो मनुष्यः शब्दे विरक्तो भवति, स विशोकः शोकरहितः सन् भवमध्ये वसन्नप्येतया पूर्वोक्तदुःखौघपरंपरया न लिप्यते. किमिव? जले वसदपि पुष्करिणीपत्रमिव. ॥ ४७ ॥ अथ घ्राणेन्द्रियमाश्रित्याह—

॥ मूलम् ॥—घाणस्स गंधं गहणं वयंति । तं रागहेउं समणुन्नमाहु ॥ तं दोसहेउं अमणुन्नमाहु । समो य जो तेसु स वीयरागो ॥ ४८ ॥ व्याख्या—तीर्थकरा घ्राणस्य नासिकाया ग्रहणं विषयं गंधं वदंति. तं मनोज्ञं गंधं रागहेतुमाहुः. पुनस्तं गंधममनोज्ञं द्वेषहेतुमाहुः. तेषु मनोज्ञामनोज्ञेषु गंधेषु यः समस्तुल्यवृत्तिः स वीतरागो ज्ञेयः. ॥ ४८ ॥

॥ मूलम् ॥—गंधस्स घाणं गहणं वयंति । घाणस्स गंधं गहणं वयंति ॥ रागस्स हेउं समणुन्नमाहु । दोसस्स हेउं अमणुन्नमाहु ॥ ४९ ॥ व्याख्या—तीर्थकरा गंधस्य सुरभ्यसुरभिपुद्गलस्य ग्रहणं ग्राहकं घ्राणं वदंति. तथा घ्राणस्य नासिकाया गंधं सुरभ्यसुरभिपुद्गलं ग्रहणं ग्राह्यं वदंति. एवं गंधघ्राणयोर्ग्राह्य ग्राहकत्वाव उक्तः. तन्मनोज्ञं मनोज्ञगंधविषयसहितं घ्राणं रागहेतुमाहुः, एवममनोज्ञगंधविषयसहितं घ्राणं द्वेषस्य हेतुमाहुः. ॥ ४९ ॥

॥ मूलम् ॥—गंधेसु जो तिव्वमुवेइ गिद्धिं । अकालियं पावई से विणासं ॥ रागाउरे उसहिगंधगिद्धे । सप्पे बिलाउविव निक्खमंते ॥ ५० ॥ व्याख्या—यो मनुष्यो गंधेषु तीव्रामुत्कटां गृद्धिमुपैति, स मनुष्यो रागातुरः सन्नकालिकं विनाशं प्राप्नोति. स क इव? बिलान्निःक्रमन् सर्प इव, यथा बिलान्निस्सरन् सर्प उपधिगंधगृद्धोऽकालिकं विनाशं प्राप्नोति. सर्पो हि नागदमन्यादिकां सुरभिगंधोपेतां कांचिदौषधीमाघ्राय पश्चात्तद्गंधाकृष्टो बिलान्निर्गच्छन् म्रियते, जनैर्मार्यते. चंदनगंधाकर्षितश्च चंदनमालिंग्य तिष्ठन् म्रियते मार्यते. गंधलुब्धो नरो हि सर्पोपमो ज्ञेयः. ॥ ५० ॥

॥ मूलम् ॥—जे आवि दोसं समुवेइ तिव्वं । तंसि खणे से उ उवेइ दुक्खं ॥ दुद्दंतदोसेण सएण जंतू । न किंचि गंधं अवरज्झई से ॥ ५१ ॥ व्याख्या—यश्चापि जंतुर्यस्मिन् क्षणेऽमनोज्ञगंधमाघ्राय तीव्रं द्वेषं समुपैति, स जीवस्तस्मिन्नेव क्षणे स्वकीयेन दुर्दांतघ्राणेंद्रियदोषेण दुःखमुपैति. परंतु तस्य गंधग्राहकस्य पुरुषस्य गंधः किमपि नापराध्यति, गंधस्य न कश्चिद्दोषः, तस्य घ्राणेंद्रियस्यैव दोषोऽस्ति. ॥ ५१ ॥

॥ मूलम् ॥—एगंतरत्तो रुइरंसि गंधे । अतालिसे से कुणई पओसं ॥ दुक्खस्स संपीलमुवेइ बाले । न लिप्पई तेण मुणी विरागे ॥ ५२ ॥ व्याख्या—यो मनुष्यो रुचिरे मनोज्ञे गंधे एकांतरक्तोऽत्यंतं रागवान् भवति, स तादृशेऽमनोज्ञे गंधे प्रद्वेषं करोति, तदा स बालो दुःखस्य पीडां दुःखसंबंधिनीं पीडामसातामुपैति. तेन कारणेन विरागी मुनिस्तेन दुःखेन रागद्वेषोद्भवेन कष्टेन न लिप्यते. ॥ ५२ ॥

॥ मूलम् ॥—गंधाणुगासाणुगए य जीवे । चराचरे हिंसइणेगरूवे ॥ चित्तेहिं ते परितावेइ बाले । पीलेइ अत्तट्ठगुरु किलिट्ठे ॥ ५३ ॥ व्याख्या—बालोऽज्ञानी जीवो गंधानुगा-

शानुगतो मनोज्ञगंधोपेतपुष्पकर्पूरकस्तूरिकादिद्रव्यसुरभिग्रहणाशासहितश्चित्रैर्विविधशस्त्राद्युपायैः कृत्वा चराचराननेकरूपान् जीवान् हिनस्ति, परितापयति, पीडयति. कीदृशः सः? आत्मार्थगुरुः स्वार्थपरायणः, पुनः कीदृशः? संक्लिष्टो रागाद्युपहतचित्तः. ॥ ५३ ॥

॥ मूलम् ॥—गंधाणुवाएण परिग्गहेण । उप्पायणे रक्खणसंनिओगे ॥ वए विओगे य कहिं सुह से । संभोगकाले य अतत्तलाभो ॥ ५४ ॥ व्याख्या—गंधानुरक्तस्य जीवस्य कुतः सुखं भवति? कुतोऽपि सुखं न स्यादित्यर्थः. तथैव दर्शयति—पूर्वं तु गंधानुवादेन सुरभिगंधद्रव्यानुरागेण, सुरभिगंधद्रव्यानुरागे सति वा परिग्रहेण मूर्छारूपेण दुःखं स्यात्, ततस्तस्योत्पादने दुःखं स्यात्, ततो रक्षणे दुःखं, ततः संनियोगे स्वपरप्रयोजने सम्यग्व्यापारेण दुःखं, ततो व्यये तस्य न्यूनतायां दुःखं, ततो वियोगे विनाशे दुःखं भवति. एवं कष्टेन संप्राप्ते सुगंधवस्तुनि संभोगकालेऽप्यतृप्तिलाभः, स च दुःखं, एवमसंतोषी महादुःखीत्युक्तत्वात्. तस्मादेतादृशस्य गंधानुरक्तस्य कुतः सुखं स्यात्? अपि तु न स्यादेव. ॥ ५४ ॥

॥ मूलम् ॥—गंधे अतत्तो य परिग्गहंमि । सत्तोवसत्तो न उवेइ तुट्ठिं ॥ अतुट्ठिदोसेण

दुही परस्स । लोभाविले आययई अदत्तं ॥ ५५ ॥ व्याख्या—गंधेऽतृप्तोऽसंतुष्टः पुमान् परिग्रहे सक्तो भवति, सामान्येन रतिमान् भवति. ततः पश्चात्सक्तः सन्नुपसक्तोऽत्यंतं रतिमान् भवति, तदा च सक्तोपसक्त उच्यते. तादृशः सक्तोपसक्तश्च तुष्टिं संतोषं नोपैति. स चातुष्टिदोषेण दुःखी सन्नन्यस्याऽदत्तं द्रव्यमादत्ते. कीदृशः सः? लोभाविलो लोभेन कलुषः.

॥ मूलम् ॥—तण्हाभिभूयस्स अदत्तहारिणो । गंधे अतत्तस्स परिग्गहे य ॥ मायामुसं वड्ढइ लोभदोसा । तत्थावि डुक्का ण विमुच्चई से ॥ ५६ ॥ व्याख्या—तृष्णाभिभूतस्य सुगंधद्रव्यलोभेन पराभूतस्य, ततोऽदत्तहारिणो गंधे गंधविषयेऽतृप्तस्य पुरुषस्य लोभदोषान्मायामृषा संवर्धते. तत्रापि मायामृषायामपि स मृषावादी जीवो दुःखान्न विमुच्यते. ।५६।

॥ मूलम् ॥—दोसस्स पच्चा य पुरत्थर्ड य । पर्डगकाले य दुही दुरंते ॥ एवं अदत्ताणि समाययंतो । गंधे अतत्तो डुहिर्ड अणिस्सो ॥ ५७ ॥ व्याख्या—मृषाभाषी पुरुषो मृषावाक्यस्य पश्चाच्च पुनः पुरस्तात्पूर्वं, च पुनः प्रयोगकाले दुरंतो दुःखी भवति. मृषाभाषणस्य पश्चादेवं जानाति, मया किमर्थं मृषावाक्यमुक्तं? मृषाभाषणस्य पूर्वमेवं जानात्यसौ मम मृ-

पावाक्यं ज्ञास्यति. मृषाज्ञापणकाले चैवं जानाति, अस्याग्रेऽहं मृषा वदामि, परमसौ जानातीति चिंताकुलत्वेन सर्वदा दुरंतो दुःखी अत्यंतदुःखी स्यात्. एवमदत्तानि समाचरन् गंधेऽतृप्तो जीवो दुःखितो भवति. कीदृशः सः? अनिश्रो निश्रारहितः. ॥ ५७ ॥

॥ मूलम् ॥—गंधाणुरत्तस्स नरस्स एवं । कत्तो सुहं हुज्ज कयावि किंचि ॥ तत्थोवभोगेवि किलेसदुक्खं । निव्वत्तई जस्स कएण दुक्खं ॥ ५८ ॥ व्याख्या—एवममुना प्रकारेण गंधानुरक्तस्य नरस्य कदापि किंचित्कुतः सुखं भवेत्? तत्रापि गंधोपभोगेऽपि क्लेश एव दुःखं निर्वर्तयति, क्लेशदुःखमुत्पादयति. यस्य कृते गंधस्योपभोगार्थं दुःखमात्मनः कष्टं भवति.

॥ मूलम् ॥—एमेव गंधंमि गओ पओसं । उवेइ दुक्खोहपरंपराओ ॥ पदुट्ठचित्तो य चिणाइ कम्मं । जं से पुणो होइ दुहं विवागे ॥ ५९ ॥ व्याख्या—एवमेव यथा गंधानुरक्तो नरो दुःखौघपरंपरां प्राप्नोति, तथैव गंधे दुष्टगंधे प्रद्वेषं गतो दुःखौघपरंपरामुपैति. प्रदुष्टचित्तः सन् दुष्टं कर्म चिनोति, यत्कर्म तस्य पुरुषस्य विपाके विपाककाले दुःखं दुःखकारि भवति.

॥ मूलम् ॥—गंधे विरत्तो मणुओ विसोगो । एएण दुक्खोहपरंपरेण ॥ न लिप्पई भ-

वमज्झे वसंतो । जलेण वा पुक्खरिणीपलासे ॥ ६० ॥ व्याख्या—गंधे विरक्तो गंधाद्विरागी मनुजो विशोकः शोकरहितः सन्नेतेन दुःखौघपरंपरया न लिप्यते न स्पृश्यते. किं कुर्वन्नपि? ज्ञवमध्ये वसन्नपि, किमिव? जलेन पुष्करिणीपत्रं पद्मिनीपत्रमिव. ॥ ६० ॥ अथ रसनेंद्रियमाश्रित्य दूषणमाह—

॥ मूलम् ॥—जीहाए रसं गहणं वयंति । तं रागहेउं समणुन्नमाहु ॥ दोसस्स हेउं अमणुन्नमाहु । समो य जो तेसु स वीयरागो ॥ ६१ ॥ व्याख्या–रस्यते आस्वाद्यते इति रसो मधुरादिः, तं रसं तीर्थंकरा जिह्वाया रसं मधुरादिकं विषयं ग्रहणं वदंति. तं रसं मनोज्ञं मनोहरगुणसहितं रागहेतुमाहुः. तमेव रसं कटुकादिकममनोज्ञममनोहरं द्वेषहेतुमाहुः. यश्च तेषु मनोज्ञामनोज्ञेषु रसेषु समस्तुल्यवृत्तिः स वीतराग उच्यते इति शेषः. ॥ ६१ ॥

॥ मूलम् ॥—रसस्स जीहं गहणं वयंति । जीहाए रसं गहणं वयंति ॥ रागस्स हेउं समणुन्नमाहु । दोसस्स हेउं अमणुन्नमाहु ॥ ६२ ॥ व्याख्या–रसस्य मधुरादेर्जिह्वा जिह्वेंद्रियं ग्रहणं ग्राहकं वदंति, तथा जिह्वाया रसनेंद्रियस्य रसं मधुरादिकं ग्रहणं ग्राह्यं वदंति. रसरस-

नयोर्ग्राह्यग्राहकसंबंध उक्तः. तद्रसनेंद्रियं समनोज्ञं रागहेतुकमाहुः, अमनोज्ञं च द्वेषस्य हेतुकमाहुः. ॥ ६२ ॥

॥ मूलम् ॥—रसेसु जो गिद्धिमुवेइ तिव्वं । अकालियं पावइ से विणासं ॥ रागाउरे बिडिसविभिन्नकाए । मच्छे जहा आमिसलोभगिद्धे ॥ ६३ ॥ व्याख्या—यो मनुष्यो रसेषु मधुरादिषु तीव्रां गृद्धिमुपैति, स रागातुरोऽकालिकं विनाशं प्राप्नोति. क इव? मत्स्य इव, यथा मत्स्य आमिषलोभगृद्धो बिडिशविभिन्नकायो लोहकंटकविद्धशरीरोऽकालिकं विनाशं प्राप्नोति. तथा रसगृद्धो जीवोऽपि. ॥ ६३ ॥

॥ मूलम् ॥—जेआवि दोसं समुवेइ तिव्वं । तंसिं खणे से उ उवेइ दुक्खं ॥ दुद्दंतदोसेण सएण जंतू । रसं न किंचि अवरज्झइ से ॥ ६४ ॥ व्याख्या—यश्चापि जंतुर्यस्मिन् क्षणे तीव्रं द्वेषं समुपैति, स जीवस्तस्मिन्नेव क्षणे स्वकीयेन दुर्दांतदोषेण दुर्दांतरसनेंद्रियदोषेण दुःखमुपैति प्राप्नोति. परंतु तस्य मनुष्यस्य रसः किमपि नापराध्यति. तस्य रसनेंद्रियस्यैव दोषः, न तु रसस्य कश्चिद्दोषोऽस्तीति भावः ॥ ६४ ॥

मायामृषायामपि सोऽसंतोषी सरसवस्तुग्राही दुःखान्न विमुच्यते. ॥ ६९ ॥

॥ मूलम् ॥—मोसस्स पच्छाय पुरत्थउ य । पओगकाले य दुही दुरंते ॥ एवं अदत्ताणि समाययंतो । रसे अतत्तो दुहिउ अणिस्सो ॥ ७० ॥ व्याख्या—मृषावाक्यस्य पश्चात्पुरतश्च प्रयोगकाले च दुरंतो दुःखी नवति. दुर्दुष्टोंतो यस्य स दुरंतः, एतादृशो दुःखी नवति. एवममुना प्रकारेण रसेऽतृप्तोऽदत्तानि सभाचरंश्चौर्याणि कुर्वन् दुःखितो नवति. पुनरनिश्रो नवति, निश्रारहितो भवति. ॥ ७० ॥

॥ मूलम् ॥—रसाणुरत्तस्स नरस्स एवं । कत्तो सुहं हुज्ज कयावि किंचि ॥ तत्थोवनोगेवि किलेसदुक्खं । निव्वत्तई जस्स कएण दुक्खं ॥ ७१ ॥ व्याख्या—एवममुना प्रकारेण रसानुरक्तस्य कदापि किंचित्कुतः सुखं भवति? कुतोऽपि सुखं न नवतीत्यर्थः. तत्र रसोपनोगसमयेऽप्यतृप्तिलानरूपं क्लेशदुःखं निर्वर्तयत्युत्पादयति. तस्य रसोपनोगस्य कृते आत्मनो दुःखं कष्टं जीव उत्पादयतीत्यर्थः. ॥ ७१ ॥

॥ मूलम् ॥—एमेव रसंमि गउ पउसं । उवेइ दुक्खोहपरंपराउ ॥ पदुट्ठचित्तो य चि-

णाइ कम्मं । जं से पुणो होइ दुहं विवागे ॥ ७२ ॥ व्याख्या—एवमेव रसे गृद्धो जीवः प्रद्वेषं गतः प्रदुष्टचित्तः सन् दुःखौघपरंपरया तत्कर्म चिनोति, येन कर्मणा पुनस्तस्य जीवस्य विपाके दुःखं भवति. ॥ ७२ ॥

॥ मूलम् ॥—रसे विरत्तो मणुओ विसोगो । एएण दुक्खोहपरंपरेण ॥ न लिप्पई भवमज्झे वसंतो । जलेण वा पुक्खरिणीपलासं ॥ ७३ ॥ व्याख्या—रसे विरक्तो मनुजो विशोकः सन् भवमध्ये वसन्नप्येतेन पूर्वोक्तदुःखौघपरंपरया न लिप्यते. केन कमिव? जलेन पुष्करिणीपत्रमिव. ॥ ७३ ॥ एवं त्रयोदशगाथाः. अथ स्पर्शनेंद्रियमाश्रित्याह—

॥ मूलम् ॥—कायस्स फासं गहणं वयंति । तं रागहेउं समणुन्नमाहु ॥ तं दोसहेउं अमणुन्नमाहु । समो य जो तेसु स वीयरागो ॥ ७४ ॥ व्याख्या—तीर्थंकराः कायस्य स्पर्शनेंद्रियस्य स्पर्शं शीतोष्णखरमृद्वादिकमष्टविधं विषयं ग्रहणं वदंति. तं स्पर्शविषयं मनोज्ञं मनोहरगुणसहितं रागहेतुमाहुः, तमेवाऽमनोज्ञमसुंदरं द्वेषहेतुमाहुः. तेषु मनोज्ञामनोज्ञेषु स्पर्शेषु यः समस्तुल्यपरिणामः स वीतराग उच्यते इति शेषः. ॥ ७४ ॥

॥११०५॥

॥ मूलम् ॥—एगंतरत्तो रुइरे रसंमि । अतालिसे से कुणई पओसं ॥ से दुक्खसंपील-वेइ बाले । न लिप्पइ तेण मुणी विरागे ॥ ६५ ॥ व्याख्या—यो रुचिरे मनोज्ञे मधुरादौ रसे एकांतरक्तोऽत्यंतमासक्तो भवति, स बालोऽज्ञानी जीवोऽताद्दशेऽमनोज्ञे रसे द्वेषं करोति, ततश्च स दुःखसंपीडां स्वस्य दुःखसंबंधिनीं पीडामुपैति प्राप्नोति, तेन कारणेन विरागी न लिप्यते आसक्तो न भवति. ॥ ६५ ॥

॥ मूलम् ॥—रसाणुगासाणुगए य जीवे । चराचरे हिंसइणेगरूवे ॥ चित्तेहिं ते परितावेइ बाले । पीलेइ अत्तठ्ठगुरू किलिठ्ठे ॥ ६६ ॥ व्याख्या—बालोऽज्ञानी जीवो रसानुगाशानुगतो मधुरादिरसास्वादाभिलाषसहितश्चित्रैर्विविधैः शस्त्राद्युपायैः कृत्वाऽनेकरूपांश्चराचरान् जीवान् हिनस्ति, परितापयति, पीडयति. कीद्दशः स बालः? 'अत्तठ्ठगुरू' आत्मार्थपरायणः, पुनः कीद्दशो बालः? क्लिष्टो रागाद्युपहतचित्तः ॥ ६६ ॥

॥ मूलम् ॥—रसाणुवाएण परिग्गहेण । उप्पायणे रख्खणसंनिओगे ॥ वए वियोगे य कहिं सुहं से । संभोगकाले य अतत्तलाभे ॥ ६७ ॥ व्याख्या—रसानुरक्तस्य जीवस्य रसा-



32

नुरागेण, अथवा रसानुरागे सति वा परिग्रहेण रसयुक्तद्रव्याणां मूर्छया, तथा रसयुक्तद्रव्याणामुत्पादने, तथा तेशां रक्षणे, तथा तेषां द्रव्याणां संनियोगे स्वपरेषां प्रयोजने, तथा व्यये रसद्रव्याणां न्यूनत्वे, तथा वियोगे विरहे तस्य रसानुरक्तस्य कुतः सुखं भवति? कस्मादपि कारणात्सुखं न भवति. संभोगकाले च रसास्वादनकालेऽप्यतृप्तिलाभोऽपि दुःखमसंतुष्टिरेव दुःखमेव. ॥ ६७ ॥

॥ मूलम् ॥—रसे य अतत्ते य परिग्गहंमि । सत्तोवसत्तो न उवेइ तुट्ठिं ॥ अतुट्ठिदोसेण दुही परस्स । लोभाविले आययई अदत्तं ॥ व्याख्या—रसेऽतृप्तो जीवः परिग्रहे सक्तो भवति, ततश्च सक्तः. सन्नुपसक्तो भवति, सक्तोपसक्तश्च तुष्टिं नोपैति, अतुष्टिदोषेण दुःखी पुमान् परस्यादत्तं सरसं वस्तु गृह्णाति. कीदृशः सः? लोभाविलो लोभकलुषः. ॥ ६८ ॥

॥ मूलम् ॥—तण्हाभिभूयस्स अदत्तहारिणो । रसे अतत्तस्स परिग्गहे य ॥ मायामुसं वड्ढइ लोभदोसा । तत्थावि दुक्खा न विमुच्चई से ॥ ६९ ॥ व्याख्या—तृष्णाभिभूतस्याऽदत्तहारिणः, रसे रसविषये परिग्रहेऽतृप्तस्य पुरुषस्य लोभदोषान्मायामृषा वर्धते, तत्रापि



32

मायामृषायामपि सोऽसंतोषी सरसवस्तुग्राही दुःखान्न विमुच्यते. ॥ ६९ ॥

॥ मूलम् ॥—मोसस्स पच्छाय पुरच्छ्रओ य । पओगकाले य दुही दुरंते ॥ एवं अदत्ताणि समाययंतो । रसे अतत्तो दुहिओ अणिस्सो ॥ ७० ॥ व्याख्या—मृषावाक्यस्य पश्चात्पुरतश्च प्रयोगकाले च दुरंतो दुःखी भवति. दुर्दुष्टोंतो यस्य स दुरंतः, एतादृशो दुःखी भवति. एवममुना प्रकारेण रसेऽतृप्तोऽदत्तानि समाचरंश्चौर्याणि कुर्वन् दुःखितो भवति. पुनरनिश्रो भवति, निश्रारहितो भवति. ॥ ७० ॥

॥ मूलम् ॥—रसाणुरत्तस्स नरस्स एवं । कत्तो सुहं हुज्ज कयावि किंचि ॥ तत्थोवभोगेवि किलेसदुक्खं । निव्वत्तई जस्स कएण दुक्खं ॥ ७१ ॥ व्याख्या—एवममुना प्रकारेण रसानुरक्तस्य कदापि किंचित्कुतः सुखं भवति? कुतोऽपि सुखं न भवतीत्यर्थः. तत्र रसोपभोगसमयेऽप्यतृप्तिलाभरूपं क्लेशदुःखं निर्वर्तयत्युत्पादयति. तस्य रसोपभोगस्य कृते आत्मनो दुःखं कष्टं जीव उत्पादयतीत्यर्थः. ॥ ७१ ॥

॥ मूलम् ॥—एमेव रसंमि गओ पओसं । उवेइ दुक्खोहपरंपराओ ॥ पदुट्ठचित्तो य चि-

णाइ कम्मं । जं से पुणो होइ दुहं विवागे ॥ ७२ ॥ व्याख्या—एवमेव रसे गृद्धो जीवः प्रद्वेषं गतः प्रदुष्टचित्तः सन् दुःखौघपरंपरया तत्कर्म चिनोति, येन कर्मणा पुनस्तस्य जीवस्य विपाके दुःखं भवति. ॥ ७२ ॥

॥ मूलम् ॥—रसे विरत्तो मणुओ विसोगो । एएण दुक्खोहपरंपरेण ॥ न लिप्पई भवमज्झे वसंतो । जलेण वा पुक्खरिणीपलासं ॥ ७३ ॥ व्याख्या—रसे विरक्तो मनुजो विशोकः सन् भवमध्ये वसन्नप्येतेन पूर्वोक्तदुःखौघपरंपरया न लिप्यते. केन कमिव? जलेन पुष्करिणीपलमिव. ॥ ७३ ॥ एवं त्रयोदशगाथाः. अथ स्पर्शनेंद्रियमाश्रित्याह—

॥ मूलम् ॥—कायस्स फासं गहणं वयंति । तं रागहेउं समणुन्नमाहु ॥ तं दोसहेउं अमणुन्नमाहु । समो य जो तेसु स वीयरागो ॥ ७४ ॥ व्याख्या—तीर्थंकराः कायस्य स्पर्शनेंद्रियस्य स्पर्शं शीतोष्णखरमृद्वादिकमष्टविधं विषयं ग्रहणं वदंति. तं स्पर्शविषयं मनोज्ञं मनोहरगुणसहितं रागहेतुमाहुः, तमेवाऽमनोज्ञमसुंदरं द्वेषहेतुमाहुः. तेषु मनोज्ञामनोज्ञेषु स्पर्शेषु यः समस्तुल्यपरिणामः स वीतराग उच्यते इति शेषः. ॥ ७४ ॥

32

॥ मूलम् ॥—फासाणुवाएण परिग्गहेण । उप्पायणे रक्खणसंनिओगे ॥ वए विओगे य
कहं सुहं से । संभोगकाले य अतित्तिलाभे ॥ ८० ॥ व्याख्या—स्पर्शानुरागेण, स्पर्शानुरागे
जाते सति वा स्पर्शपरिग्रहेण स्पर्शानुरक्तस्य जीवस्य स्पर्शानामुत्पादने तथा स्पर्शानां रक्ष-
णे, तथा स्पर्शातां संनियोगे स्वपरयोग्यप्रयोजनव्यापारणे, तथा पुनः स्पर्शानां व्यये न्यून-
त्वे, तथा स्पर्शानां वियोगे विनाशे तस्य स्पर्शानुरक्तस्य कुतः सुखं स्यात्? सर्वकालेऽसुखमेव
स्यात्. च पुनः स्पर्शानां संभोगकालेऽप्यतृप्तिलाभ एव दुःखमेव भवति. ॥ ८० ॥

॥ मूलम् ॥—फासे अतत्ते य परिग्गहंमि । सत्तोवसत्तो ण उवेइ तुट्ठिं ॥ अतुट्ठिदोसेण
दुही परस्स । लोभाविले आययई अदत्तं ॥ ८१ ॥ व्याख्या—स्पर्शेऽतृप्तः पुमान् परिग्रहे
मूर्छायां सक्तो भवति, सामान्येन रक्तो भवति. ततश्चोपसक्तोऽत्यंतासक्तो भवति. ततश्च स-
क्तोपसक्तोऽतृप्तिदोषेण दुःखी सन् परस्यान्यस्य स्पर्शमदत्तमादत्ते गृह्णाति. कीदृशः सः? लो-
भाविलो लोभमलिनचित्तः. ॥ ८१ ॥

॥ मूलम् ॥—तण्हाभिभूयस्स अदत्तहारिणो । फासे अतत्तस्स परिग्गहे य ॥ मायामुसं

वड्ढइ लोजदोसा । तत्थावि दुक्खा न विमुच्चई से ॥ ७२ ॥ व्याख्या—तृष्णाजिनूतस्य मनुष्यस्य पुनरदत्तहारिणश्च पुनः स्पर्शे स्पर्शविषये परिग्रहेऽतृप्तस्य लोजदोषान्मायामृषा वर्धते, तत्रापि मायामृषायामपि दुःखादसंतोषी न विमुच्यते. ॥ ७२ ॥

॥ मूलम् ॥—मोसस्स पच्छा य पुरत्थर्ड य । पर्जगकाले य दुही डुरंते ॥ एवं अदत्ताणि समाययंतो । फासे अतत्तो दुहिर्ड अणिस्सो ॥ ७३ ॥ व्याख्या—मायामृषाजापी पुमान् मृषावाक्यस्य पश्चात्पुरतश्च पुनः प्रयोगकाले जापणप्रस्तावे दुरंतोऽत्यंतं दुःखी जवति. एवममुना प्रकारेणाऽदत्तानि समाचरन् स्पर्शेऽतृप्तः सन् डुःखी जवति. परं कीदृशः सः? अनिश्रो निश्रारहितः. ॥ ७३ ॥

॥ मूलम् ॥—फासाणुरत्तस्स नरस्स एवं । कत्तो सुहं हुज्ज कयाइ किंचि ॥ तत्थोवजोगेवि किलेसडुक्खं । निव्वत्तई जस्स कएण दुक्खं ॥ ७४ ॥ व्याख्या—एवममुना प्रकारेण स्पर्शानुरक्तस्य पुरुषस्य कदापि किंचिदपि कुतः सुखं जवेत्? अपि तु न जवेत्. तत्र स्पर्शोपजोगसमयेऽपि क्लेशडुःखं, यस्य स्पर्शस्य कृते उपजोगार्थमात्मनो दुःखं निर्वर्तयति. ॥ ७४ ॥

॥ मूलम् ॥—फासस्स कायं गहणं वयंति । कायस्स फासं गहणं वयंति ॥ तं रागहेउं समणुन्नमाहु । दोसस्स हेउं अमणुन्नमाहु ॥ ७५ ॥ व्याख्या—तीर्थकराः स्पर्शस्य शीतोष्णादेः पुद्गलस्य कायं स्पर्शनेंद्रियं ग्रहणं ग्राहकं वदंति, तथा कायस्य स्पर्शनेंद्रियस्य स्पर्श शीतोष्णादिकं ग्रहणं ग्राह्यं वदंति. तत्स्पर्शनेंद्रियं शरीरं समनोज्ञं मनोज्ञस्पर्शग्राहकं रागहेतुकमाहुः, तदेव स्पर्शनेंद्रियममनोज्ञममनोज्ञस्पर्शग्राहकं द्वेषहेतुकमाहुः. ॥ ७५ ॥

॥ मूलम् ॥—फासेसु जो गिद्धिमुवेइ तिव्वं । अकालियं पावइ से विणासं ॥ रागाउरे सीयजलावसन्ने । गाहग्गिहीए महिसेव रन्ने ॥ ७६ ॥ व्याख्या—यो मनुष्यः स्पर्शेषु स्पर्शनेंद्रियविषयेषु तीव्रामुत्कटां गृद्धिमुपैति सोऽकालिकं विनाशं प्राप्नोति. स क इव? रागेणातुरो रागातुरः, शीतजलेऽवसन्नस्तापोपशमनाय शीतलजले मग्नस्तत्र ग्राहगृहीतो महामकरेणोपात्तोऽरण्यमहिष इव नाशं प्राप्नोति. ॥ ७६ ॥

॥ मूलम् ॥—जयावि दोसं समुवेइ तिव्वं । तंसि खणे से उ उवेइ दुक्खं ॥ दुद्दंतदोसेण सएण जंतू । ण किंचि फासं अवरज्झई से ॥ ७७ ॥ व्याख्या—यश्चापि जंतुर्जीवो यस्मि-

न् क्षणे तीव्रं द्वेषं समुपैति, स च जंतुः स्वकीयेन दुर्दांतदोषेण स्पर्शनेंद्रियदोषेण तस्मिन्नेव क्षणे दुःखमुपैति, परं स्पर्शः शुभाशुभस्पर्शनेंद्रियविषयस्तस्य जीवस्य किमपि नापराध्यति, तस्य स्पर्शनेंद्रियस्यैव दोषः. ॥ ७७ ॥

॥ मूलम् ॥—एगंतरत्तो रुइरंसि फासे । अयालिसे से कुणई पओसं ॥ दुक्खस्स संपीलमुवेइ वाले । न लिप्पई तेण मुणी विरागे ॥ ७८ ॥ व्याख्या—यो मनुष्यो रुचिरे स्पर्शे एकांतरक्तो भवति, सोऽताद्दशेऽसुंदरे स्पर्शे प्रद्वेषं करोति. स च वालोऽज्ञानी दुःखस्य संपीडामुपैति. तेन कारणेन विरागी मुनिर्न लिप्यते. ॥ ७८ ॥

॥ मूलम् ॥—फासाणुगासाणुगए य जीवे । चराचरे हिंसइणेगरूवे ॥ चित्तेहिं ते परितावेइ वाले । पीलेइ अत्तट्ठगुरू किलिट्ठे ॥ ७९ ॥ व्याख्या—स्पर्शानुगाशानुगतो जीवः स्पर्शाभिलाषसहितो जीवो वालो निर्विवेकी चित्रैरनेकरूपैरुपायैः शस्त्रैः कृत्वाऽनेकरूपांस्त्रसांस्थावरान् जीवान् हिनस्ति पीडयति. कीद्दशः सः? आत्मार्थगुरुः स्वार्थपरायणः. पुनः कीद्दशः? क्लिष्टो रागाद्युपहतचित्तः. ॥ ७९ ॥

॥ मूलम् ॥—फासाणुवाएण परिग्गहेण । उप्पायणे रक्कणसंनिओगे ॥ वए विओगे य कहं सुहं से । संजोगकाले य अतत्तिलाजे ॥ ७० ॥ व्याख्या—स्पर्शानुरागेण, स्पर्शानुरागे जाते सति वा स्पर्शपरिग्रहेण स्पर्शानुरक्तस्य जीवस्य स्पर्शानामुत्पादने तथा स्पर्शानां रक्षणे, तथा स्पर्शातां संनियोगे स्वपरयोग्यप्रयोजनव्यापारणे, तथा पुनः स्पर्शानां व्यये न्यूनत्वे, तथा स्पर्शानां वियोगे विनाशे तस्य स्पर्शानुरक्तस्य कुतः सुखं स्यात्? सर्वकालेऽसुखमेव स्यात्. च पुनः स्पर्शानां संजोगकालेऽप्यतृप्तिलाज एव दुःखमेव जवति. ॥ ७० ॥

॥ मूलम् ॥—फासे अतत्ते य परिग्गहंमि । सत्तोवसत्तो ण उवेई तुट्ठिं ॥ अतुट्ठिदोसेण दुही परस्स । लोजाविले आययई अदत्तं ॥ ७१ ॥ व्याख्या—स्पर्शेऽतृप्तः पुमान् परिग्रहे मूर्छायां सक्तो जवति, सामान्येन रक्तो जवति. ततश्चोपसक्तोऽत्यंतासक्तो जवति. ततश्च सक्तोपसक्तोऽतृप्तिदोषेण दुःखी सन् परस्यान्यस्य स्पर्शमदत्तमादत्ते गृह्णाति. कीदृशः सः? लोजाविलो लोजमलिनचित्तः. ॥ ७१ ॥

॥ मूलम् ॥—तह्राजिभूयस्स अदत्तहारिणो । फासे अतत्तस्स परिग्गहे य ॥ मायामुसं



32

वड्ढइ लोभदोसा । तत्थावि दुक्खा न विमुच्चई से ॥ ७२ ॥ व्याख्या—तृष्णाभिभूतस्य मनुष्यस्य पुनरदत्तहारिणश्च पुनः स्पर्शे स्पर्शविषये परिग्रहेऽतृप्तस्य लोभदोषान्मायामृषा वर्धते, तत्रापि मायामृषायामपि दुःखादसंतोषी न विमुच्यते. ॥ ७२ ॥

॥ मूलम् ॥—मोसस्स पच्छा य पुरच्छओ य । पओगकाले य दुही दुरंते ॥ एवं अदत्ताणि समाययंतो । फासे अतत्तो दुहिओ अणिस्सो ॥ ७३ ॥ व्याख्या—मायामृषाभाषी पुमान् मृषावाक्यस्य पश्चात्पुरतश्च पुनः प्रयोगकाले भाषणप्रस्तावे दुरंतोऽत्यंतं दुःखी भवति. एवमसुना प्रकारेणाऽदत्तानि समाचरन् स्पर्शेऽतृप्तः सन् दुःखी भवति. परं कीदृशः सः? अनिश्रो निश्रारहितः. ॥ ७३ ॥

॥ मूलम् ॥—फासाणुरत्तस्स नरस्स एवं । कत्तो सुहं हुज्ज कयाइ किंचि ॥ तत्थोवभोगेवि किलेसदुक्खं । निव्वत्तई जस्स कएण दुक्खं ॥ ७४ ॥ व्याख्या—एवमसुना प्रकारेण स्पर्शानुरक्तस्य पुरुषस्य कदापि किंचिदपि कुतः सुखं भवेत्? अपि तु न भवेत्. तत्र स्पर्शोपभोगसमयेऽपि क्लेशदुःखं, यस्य स्पर्शस्य कृते उपभोगार्थमात्मनो दुःखं निर्वर्तयति. ॥ ७४ ॥

॥ मूलम् ॥—एमेव फ़ासंमि गर्ज पर्जसं । उवेइ दुरकोहपरंपराउं ॥ पदुठचित्तो य चिणाइ कम्मं । जं से पुणो होइ डुहं विवागे ॥ ७५ ॥ व्याख्या—एवमेव यथा स्पर्शे रागवान् दुःखौघपरंपरया प्रदुष्टचित्तः सन् कर्माष्टप्रकारं चिनोति, तथा स्पर्शे प्रद्वेषं गतो दुःखौघपरंपरया प्रदुष्टचित्तः संस्तत्कर्म चिनोति, तत्कर्मोपार्जयति, यत्कर्म तस्य पुरुषस्य पुनर्विपाके डुःखदायि नवति. ॥ ७५ ॥

॥ मूलम् ॥—फासे विरत्तो मणुर्ज विसोगो । एएण दुरकोहपरंपरेण ॥ न लिप्पइ नवमज्के वसंतो । जलेण वा पोरकरिणीपलासं ॥ ७६ ॥ व्याख्या—स्पर्शे विरक्तो मनुष्यो विशोकः सन्नेतया दुःखौघपरंपरया नवमध्ये वसन्नपि न लिप्यते. केन किमिव? जलेन पुष्करिणीपत्रमिव. ॥ ७६ ॥ एतान्निस्त्रयोदशगाथान्निः स्पर्शनेंद्रियदोष उक्तः पंचमोऽधिकारः.

॥ मूलम् ॥—मणस्स नावं गहणं वयंति । तं रागहेउं समणुन्नमाहु ॥ तं दोसहेउं अमणुन्नमाहु । समो य जो तेसु स वीयरागो ॥ ७७ ॥ व्याख्या—तीर्थंकरा मनसश्चित्तस्य नावमन्निप्रायं चिंतनरूपं ग्रहणं ग्राह्यं वदंति, तमन्निप्रायं समनोज्ञं मनोज्ञरूपादिविषयाचिं-

तनसहितं रागहेतुकमाहुः, अथवा स्वप्नकामादिषु भावोपस्थापितो रूपादिः, सोऽपि भाव उच्यते, तं भावं मनसो ग्राह्यं तीर्थंकरा वदंति, स्वप्नादिषु हि केवलं मनस एव व्यापारोऽस्ति, तमेव भावममनोज्ञं द्वेषहेतुमाहुः. यो मनुष्यो मनोज्ञामनोज्ञेषु भावेषु समस्तुल्यवृत्तिः स वीतराग उच्यते. ॥ ८७ ॥

॥ मूलम् ॥—भावस्स मणं गहणं वयंति । मणस्स भावं गहणं वयंति ॥ रागस्स हेउं समणुन्नमाहु । दोसस्स हेउं अमणुन्नमाहु ॥ ८८ ॥ व्याख्या—तीर्थंकरा भावस्य शुभाशुभाशयस्य मनो ग्रहणं ग्राहकं वदंति, मनसश्चित्तस्य भावं शुभाशुभाभिप्रायं ग्राह्यं वदंति. इत्यनेन भावमनसोर्ग्राह्यग्राहकभावः संबंध उक्तः. तत्र तन्मनः समनोज्ञं प्रमोदयुक्तं रागहेतुकमाहुः, अमनोज्ञं कुत्सितभावसहितं द्वेषस्य हेतुकमाहुः. ॥ ८८ ॥

॥ मूलम् ॥—भावेसु जो गिद्धिमुवेइ तिव्वं । अकालियं पावइ से विणासं ॥ रागाउरे कामगुणेसु गिद्धे । करेणुमग्गावहिएव नागे ॥ ८९ ॥ व्याख्या—यो मनुजो भावेषु विषयाभिलाषेषु तीव्रां गृद्धिमुपैति, स मनुजोऽकालिकं विनाशं प्राप्नोति. स पुना रागातुरः काम-

कहं सुहं से । संजोगकाले य अतत्तिलाजो ॥ ९३ ॥ व्याख्या—जावानुपातेन विषयादिचिंतनेन, तथा परिग्रहेण विषयादिमीलनेन, तथोत्पादने, एते विषयादिपदार्थाः कथं मे मिलिष्यंति? इति चिंतने, तथा रक्षणे आरोगबुद्धिप्रमुखजावरक्षणे, तथा संनियोगे परस्य कुबुद्धिसुबुद्ध्यादि दाने, तथा व्यये निद्रास्मृतिप्रमुखाणां हीनत्वे. वियोगे परस्योत्तरदानादो समर्थाया बुद्धेः स्फुरणस्याऽजावे जावानुरक्तस्य कुतः कस्मात्सुखं जवेत्? अपितु कुतोऽपि सुखं न स्यादेव. पुनः संजोगकाले चाऽतृप्तिलाजो दुःखं जावनां चिंतनकालेऽपि तृप्तेर्लाजो न स्यात्. सकुंजजंजकपुरुषवत् सुखं न लजते. ॥ ९३ ॥

॥ मूलम् ॥—जावे अतत्ते य परिग्गहंमि । सत्तोवसत्तो न उवेइ तुट्ठिं ॥ अतुट्ठिदोसेण दुही परस्स । लोजाविले आययई अदत्तं ॥ ९४ ॥ व्याख्या—जावे शुजाशुजाध्यवसायेऽतृप्तोऽसंतुष्टो जनः परिग्रहे सक्तो जवति, सामान्येन रक्तो जवति. ततश्च सामान्येन सक्तः सन्नुपसक्तोऽत्यंतासक्तो जवति. एतादृशश्च संस्तुष्टिं नोपैति. अतुष्टिदोषेण दुःखी सन् परस्यान्यस्य द्रव्यादौ लोजाविलो लोजकलुषोऽदत्तमादत्ते. ॥ ९४ ॥

॥ मूलम् ॥—तण्हाभिभूयस्स अदत्तहारिणो । भावे अतत्तस्स परिग्गहे य । मायामुसं वड्ढइ लोभदोसा । तत्थावि दुक्खा न विमुच्चइ से ॥ ९५ ॥ व्याख्या—तृष्णाभिभूतस्याऽदत्तहारिणः पुनर्भावे भावविषये, परिग्रहे विषयादिमीलनेऽतृप्तस्य पुरुषस्य लोभदोषान्मायामृषा वर्धते, तत्रापि मृषाभाषणेऽपि स मृषाभाषी दुःखान्न विमुच्यते. ॥ ९५ ॥

॥ मूलम् ॥—मोसस्स पच्छाय पुरत्थओ य । पओगकाले य दुही दुरंते ॥ एवं अदत्ताणि समाययंतो । भावे अतत्तो दुहिओ अणिस्सो ॥ ९६ ॥ व्याख्या—मृषावाक्यस्य पश्चात्पुरतश्च प्रयोगकाले च पुरुषो दुरंतो दुःखी, एवममुना प्रकारेण भावेऽतृप्तः संकल्पेऽसंतुष्टोऽदत्तानि च समाचरन् दुःखितो भवति. कथंभूतः सः? अनिश्रो निश्रारहितः, धर्मशुक्लाभ्यां रहित आर्तरौद्राभ्यां सहित इत्यर्थः. ॥ ९६ ॥

॥ मूलम् ॥—भावाणुरत्तस्स नरस्स एवं । कत्तो सुहं हुज्ज कयावि किंचि ॥ तत्थोवभोगेवि किलेसदुक्खं । निव्वत्तई जस्स कएण दुक्खं ॥ ९७ ॥ व्याख्या—एवममुना प्रकारेण भावानुरक्तस्य, भावे स्वाभिप्रायेऽनुरक्तो भावानुरक्तस्तस्य, कदापि कुतः सुखं भवेत्? कुतोऽपि कदा-

॥११२५॥

गुणेषु गृद्धः सन् करेणुमार्गापहृतो नाग इव, हस्तिन्या स्वमार्गे आनीतो गज इव परवशो भूत्वाऽकालिकं विनाशं प्राप्नोति. यदा हि मदोन्मत्तो हस्ती दूरात्करेणुकां हस्तिनीं दृष्ट्वा तद्रूपमोहितस्तस्या मार्गे पतितो जनैर्गृहीत्वा संग्रामादौ प्रावेश्य विनाश्यते, तथा भावातुरोऽप्यकाले म्रियते इत्यर्थः. ॥ ८ए ॥ ( ननु चक्षुरादींद्रियवशादेव गजस्स प्रवृत्तिस्तत्कथमस्यात्र भावविषये दृष्टांतत्वेनाभिधानं? उच्यते—एवमेतन्मनःप्राधान्यविवक्षया तज्ज्ञेयं. अथवा तथाविधकामदशायां चक्षुरादींद्रियव्यापाराभावेऽपि मनसः प्रवृत्तिरिति न दोषः. इह च कामस्य मनस एवोत्पादादिति भावः. )

॥ मूलम् ॥—जे यावि दोसं समुवेइ तिव्वं । तंसिं खणे से उ उवेइ दुक्खं ॥ दुद्दंतदोसेण सएण जंतू । न किंचि भावं अवरज्झई से ॥ ए० ॥ व्याख्या—यश्चापि मनुष्यो यस्मिन् क्षणे शुभाशुभभावे तीव्रं द्वेषं समुपैति, स मनुष्यः स्वकीयेन दुर्दांतदोषेण दुष्टमनोलक्षणदोषेण तस्मिन्नेव क्षणे दुःखमुपैति, परंतु तस्य मनुष्यस्य भावः शुभाशुभव्यापारः किमपि नापराध्यति, भावस्य न कोऽपि दोषः, किंतु तस्य पुरुषस्य मनस एव दोष इत्यर्थः. ॥ ए० ॥

॥ मूलम् ॥—एगंतरत्तो रुइरंमि भावे। अतालिसे से कुणई पओसं ॥ डुक्खस्स संपी-
लमुवेइ बाले। न लिप्पइ तेण मुणी विरागे ॥ ९१ ॥ व्याख्या—यो मनुष्यो रुचिरं मनो
ज्ञे भावे ऋद्धिरससातागौरवादावेकांतरक्तो भवति, स मनुष्यः 'अतालिसे' अनादृशेऽम-
नोज्ञे भावे प्रद्वेषं करोति, स च बालोऽज्ञानी डुःखस्य संपीडामुपैति, तेन कारणेन विरागी
मुनी रागद्वेषाभ्यां न लिप्यते. ॥ ९१ ॥

॥ मूलम् ॥—भावाणुगासाणुगए य जीवे। चराचरे हिंसइणेगरूवे ॥ चित्तेहिं ते प-
रियावेइ बाले। पीलेइ अत्तट्ठगुरू किलिट्ठे ॥ ९२ ॥ व्याख्या—जीवो भावानुगाशानुगतः
शुभाशुभविषयाभिलाषसहितश्चित्रैरनेकप्रकारैः संकल्पनैरनेनौषधेनाहं वशीकरणं करोमि,
अनेनौषधेन स्वर्णसिद्धिं करोमि, अनेनौषधेन पुत्रो भवति, इत्यादिचिंतनैर्बालोऽविवेकी च-
राचराननेकरूपान् जीवान् हिनस्ति, परितापयति तथा पीडयति. परं कीदृशः सः? 'अ-
त्तट्ठगुरु' स्वार्थपरायणः, पुनः कीदृशः? क्लिष्टो रागाद्युपहतचित्तः. ॥ ९२ ॥

॥ मूलम् ॥—भावाणुवाएण परिग्गहेण। उप्पायणे रक्खणसंनिओगे ॥ वए विओगे य

कहं सुहं से । संभोगकाले य अतत्तिलाभो ॥ ८३ ॥ व्याख्या—भावानुपातेन विषयादिचिंतनेन, तथा परिग्रहेण विषयादिमीलनेन, तथोत्पादने, एते विषयादिपदार्थाः कथं मे मिलिष्यंति? इति चिंतने, तथा रक्षणे आरोगबुद्धिप्रमुखभावरक्षणे, तथा संनियोगे परस्य कुबुद्धिसुबुद्ध्यादि दाने, तथा व्यये निद्रास्मृतिप्रमुखाणां हीनत्वे. वियोगे परस्योत्तरदानादौ समर्थाया बुद्धेः स्फुरणस्याऽभावे भावानुरक्तस्य कुतः कस्मात्सुखं भवेत्? अपितु कुतोऽपि सुखं न स्यादेव. पुनः संभोगकाले चाऽतृप्तिलाभो दुःखं भावनां चिंतनकालेऽपि तृप्तेर्लाभो न स्यात्. सत्कुंभभंजकपुरुषवत् सुखं न लभते. ॥ ८३ ॥

॥ मूलम् ॥—भावे अतत्ते य परिग्गहंमि । सत्तोवसत्तो न उवेइ तुट्ठिं ॥ अतुट्ठिदोसेण दुही परस्स । लोभाविले आययई अदत्तं ॥ ८४ ॥ व्याख्या—भावे शुभाशुभाध्यवसायेऽतृप्तोऽसंतुष्टो जनः परिग्रहे सक्तो भवति, सामान्येन रक्तो भवति. ततश्च सामान्येन सक्तः सन्नुपसक्तोऽत्यंतासक्तो भवति. एतादृशश्च संस्तुष्टिं नोपैति. अतुष्टिदोषेण दुःखी सन् परस्यान्यस्य द्रव्यादौ लोभाविलो लोभकलुषोऽदत्तमादत्ते. ॥ ८४ ॥

॥ मूलम् ॥—तण्हाभिभूयस्स अदत्तहारिणो । भावे अतत्तस्स परिग्गहे य। मायामुसं वड्ढइ लोभदोसा । तत्थावि दुक्खा न विमुच्चइ से ॥ ९५ ॥ व्याख्या—तृष्णाभिभृतस्याऽदत्तहारिणः पुनर्भावे भावविषये, परिग्रहे विषयादिमीलनेऽतृप्तस्य पुरुषस्य लोभदोषान्मायामृषा वर्धते, तत्रापि मृषाभाषणेऽपि स मृषाभाषी दुःखान्न विमुच्यते. ॥ ९५ ॥

॥ मूलम् ॥—मोसस्स पच्छाय पुरत्थओ य। पओगकाले य दुही दुरंते ॥ एवं अदत्ताणि समाययंतो । भावे अतत्तो दुहिओ अणिस्सो ॥ ९६ ॥ व्याख्या—मृषावाक्यस्य पश्चात्पुरतश्च प्रयोगकाले च पुरुषो दुरंतो दुःखी, एवममुना प्रकारेण भावेऽतृप्तः संकल्पेऽसंतुष्टोऽदत्तानि च समाचरन् दुःखितो भवति. कथंभूतः सः? अनिश्रो निश्रारहितः, धर्मशुक्लाभ्यां रहित आर्तरौद्राभ्यां सहित इत्यर्थः. ॥ ९६ ॥

॥ मूलम् ॥—भावाणुरत्तस्स नरस्स एवं । कत्तो सुहं हुज्ज कयावि किंचि ॥ तत्थोवभोगेवि किलेसदुक्खं । निव्वत्तई जस्स कएण दुक्खं ॥ ९७ ॥ व्याख्या—एवममुना प्रकारेण भावानुरक्तस्य, भावे स्वाभिप्रायेऽनुरक्तो भावानुरक्तस्तस्य, कदापि कुतः सुखं भवेत्? कुतोऽपि कदा-

पि किमपि सुखं न स्यादित्यर्थः. तत्र च ज्ञावोपज्ञोगेऽपि संकल्पविकल्पानुरागेऽपि चिरकालचिंतनेऽपि क्लेशदुःखमतृप्तिलाज्ञजनितं क्लेशरूपं दुःखं निवर्तयत्युत्पादयति. पुनर्यस्य कृते, यस्य ज्ञावोपज्ञोगेऽपि विषयचिंतनाद्यर्थं नरस्य दुःखं स्यात्. ॥ ए७ ॥

॥ मूलम् ॥—एमेव ज्ञावंमि गर्ज पर्जसं । जवेइ दुक्खोहपरंपराजं ॥ पदुट्ठचित्तो य चिणाइ कम्मं । जं से पुणो होइ दुहं विवागे ॥ ए८ ॥ व्याख्या—एवमेव यथा ज्ञावे रागं प्राप्तो दुःखौघपरंपरया प्रदुष्टचित्तः सन्नष्टप्रकारकं कर्म चिनोति. तथा ज्ञावे चित्ताज्ञिप्राये प्रद्वेषं गतो जंतुर्दुःखौघपरंपरया प्रदुष्टचित्तः सन् तत्कर्म चिनोति बध्नाति, यत्कर्म तस्य जीवस्य विपाके कर्मवेदनकाले दुःखं :दुखविधायि ज्ञवति. ॥ ए८ ॥

॥ मूलम् ॥—ज्ञावे विरत्तो मणुर्ज विसोगो । एएण दुक्खोहपरंपरेण ॥ न लिप्पई ज्ञवमज्झे वसंतो । जलेण वा पुक्खरिणीपलासं ॥ एए ॥ व्याख्या—ज्ञावे विरक्तः संकल्पादिमुक्तो मनुष्य एतया पूर्वोक्तया दुःखौघपरंपरया ज्ञवमध्ये वसन्नपि न लिप्यते. कीदृशः सः? विशोको विगतशोकः. केन कमिव? जलेन पद्मिनीपत्रमिव. ॥ एए ॥ एतास्त्रियोदशगाथा-

न्निर्नावाधिकारः संपूर्णः. अथ पूर्वोक्तार्थमेवोपसंहरन्नाह–

॥ मूलम् ॥—एविंदियत्था य मणस्स अत्था । दुख्खस्स हेऊ मणुयस्स रागिणो ॥ ते चेव थोवंपि कयाइ दुक्खं । न वीयरागस्स करिंति किंचि ॥ १०० ॥ व्याख्या—एवं पूर्वोक्तप्रकारेण रागिणो रागद्वेषसहितस्य मनुष्यस्येंद्रियार्थाः, इंद्रियाणां चक्षुरादीनामर्था विषया रूपादयश्च पुनर्मनसोऽर्थाः संकल्पविकल्पा दुःखहेतवो न्नवंतीत्यध्याहारः, ते एवेंद्रियार्था मनसोऽर्थाश्च कदापि किंचित्स्तोकमपि दुःखं वीतरागस्य न कुर्वंति. यो हि जितेंद्रियो न्नवति, स एव वीतराग उच्यते, स एवेंद्रियार्थानां मनःसंकल्पानां च जेता स्यात्, यश्चेदृशो न न्नवेत्, स च सुखन्नाक् न स्यात्, यथा जिनपालकः अत्र. जिनपालककथा. ॥१००॥

॥ मूलम् ॥—न कामभोगा समयं उविंति । न यावि न्नोगा विगइं उविंति ॥ जे तप्पउंसी य परिग्गहे अ । सो तेसु मोहा विगइं उवेइ ॥ १ ॥ व्याख्या—कामन्नोगाः शमतां नोपयांति, च पुनर्न्नोगा विकृतिमपि क्रोधादिरूपां विकारवुद्धिमपि नोपयांति. शमस्य क्रोधादेश्च न्नोगाः कारणं न न्नवंतीति न्नावः. तर्हि को हेतुरित्याह—यस्तत्प्रद्वेषी तेषु कामन्नो-

गेषु प्रद्वेषो यस्य स तत्प्रद्वेषी, भोगेषु विरागी, च पुनः परिग्रहीतेषु भोगेषु परिग्रही परिग्रहबुद्धिमान् भवति, स जीवो मोहाद्रागद्वेषाद्विकृतिमुपैति, यदा हि विषयेषु रागबुद्धिं विधत्ते, तदा भोगासक्तो भवति, यदा च विषयेषु द्वेषबुद्धिं विधत्ते, तदा विषयेभ्यो विरक्तो भवतीति. तस्मात्कामभोगाः शमतायाः क्रोधादिकषायाणां च कारणीभवितुं नार्हतीत्यर्थः. ॥ १ ॥ अथ विकृतेः स्वरूपमाह—

॥ मूलम् ॥—कोहं च माणं च तहेव मायं । लोभं डुगंछं अरइं रइं च ॥ हासं भयं सोगपुमत्थिवेयं । नपुंसवेयं विविहे य भावे ॥ २ ॥ आवज्जई एवमणेगरूवे । एवंविहे कामगुणेसु सत्तो ॥ अन्ने य एयप्पभवे विसेसे । कारुणदीणे हरिमे वइस्से ॥ ३ ॥ युग्मं ॥ व्याख्या—कामगुणेषु शब्दादिविषयेषु सक्तो रागी जीव एवममुना रागवत्वलक्षणप्रकारेणानेकरूपान्नानाविधान् विकारानेवंविधानुक्तस्वरूपाननंतानुबंधिप्रमुखानापद्यते प्राप्नोति. च पुनरेतत्प्रभवानेतेभ्यः क्रोधादिभ्यः प्रभवा उत्पन्नः एतत्प्रभवास्तानेतत्प्रभवान् क्रोधादिजनितान् परितापदुर्गतिपातादीन् प्राप्नोति. कीदृशः सन्? करुणायै अर्हः कारुण्यः, कारुण्यत्वेन दीनः

कारुण्यदीनोऽत्यंतं दीन इत्यर्थः. पुनः कीदृशः? ह्रीमान् लज्जितः प्रीतिविनाशादिकमिहैवानुभवन्, परत्र च विपाकमतिकटुकं परिभावयन्. पुनः कीदृशः? 'वइस्से' इत्यार्षत्वात् द्वेष्यः सर्वत्राप्रीतिकर इत्यर्थः. इति द्वितीयगाथया संबंधमुक्त्वा प्रथमाया अर्थमाह—विषयासक्तो जीवः कान् कान् स्वरूपानापद्यते? इत्याह—विषयासक्तो जीवः कदाचित्क्रोधं प्राप्नोति, च पुनर्मानं प्राप्नोति, तथैव मायां प्राप्नोति, तथा लोभं मूर्छा प्राप्नोति. 'दुगंछं' इति जुगुप्सां प्राप्नोति, विपरीतं सटितं क्वथितं वा दृष्ट्वा सूकरूपां, तथाऽरतिमुद्वेगरूपां, रतिं हर्षरूपां, हास्यं च प्राप्नोति. तथा भयमपि प्राप्नोति, तथा शोकपुंस्त्रीवेदं, शोकं प्रियवियोगजं मनोदुःखरूपं, पुंवेदं स्त्रिया सह विषयाभिलापरूपं, स्त्रीवेदं पुरुषेण सह विषयाभिलाषं, शोकश्च पुंस्त्रीवेदश्च शोकपुंस्त्रीवेदं, तदपि विषयासक्तो जीवः प्राप्नोति. तथा पुनः कदाचिन्नपुंसकवेदं प्राप्नोति, स्त्रीपुंसोरुभयोर्विषयाभिलाषरूपं नपुंसकवेदं लभते. च पुनर्विविधान् भावान् हर्षविषादादीन् प्राप्नोतीति गाथाद्वयार्थः. ॥२॥ ३॥ अथ रागद्वेषोद्धरणे उपायं, पुना रागद्वेषयोरनुद्धरणे प्रकारांतरेण दूषणं चाह—

॥ मूलम् ॥—कप्पं न इच्छिज्ज सहायलिच्छु । पच्छाणुतावे य तवप्पभावं ॥ एवं वियारे अमियप्पगारे । आवज्जई इंदियचोरवस्से ॥ ४ ॥ व्याख्या—साधुः सहायलिप्सुः सन् कल्पमपि नेच्छेत्, तदाऽकल्पं कथमिच्छेत्? च पुनः साधुः पश्चानुतापः संस्तपःप्रभावमपि नेच्छेत्. अत्र हेतुमाह—इंद्रियचौरवश्यः पुमानमितप्रकारान् बहुविधानेवं पूर्वोक्तान् विकारानापद्यते प्राप्नोति. कल्पते स्वाध्यायादिक्रियासु समर्थो भवतीति कल्पो योग्यस्तं कल्पं स्वाध्यायादियोग्यं सहायं, मम विश्रामणां करिष्यतीति बुद्ध्या शिष्यं लिप्सतीति सहायलिप्सुस्तादृशः सन् पश्चाद्व्रततपसोरंगीकारादनंतरमनुतापं यस्य स पश्चानुतापः ( किमेतावन्मया कष्टमंगीकृतमिति चित्तबाधात्मकः ) तपसः प्रभावो भवांतरे भोगानां भोक्ता स्यामित्यादिचिंतनं तपःप्रभावस्तं, अथवेहैवामर्षौषध्यादिलब्धिमान् स्यामित्यादिकं नेच्छेत्. ॥ ४ ॥

॥ मूलम् ॥—तओ से जायंति पओयणाइ । निमज्जिउं मोहमहन्नवंमि ॥ सुहेसिणो दुक्खविणोयणट्ठा । तप्पच्चयं उज्जमए य रागी ॥ ५ ॥ व्याख्या—ततः कषायवेदादिनां प्राप्तेरनंतरं, तस्येंद्रियचौराणां वशीभूतस्य मोहमहार्णवे मोहमहासमुद्रे निमज्जयितुं, तं जीवं

प्ररूपयितुं प्रयोजनानि विषयसेवनाद्हिंसादीनि जायंते उत्पद्यंते. किमर्थमेतानि विषयसेवन-हिंसादीनि प्रयोजनानि जायंते? दुःखस्य विनोदार्थं परिहारार्थं, सुखैषितायां हि दुःखपरिहाराय विषयसेवनादि प्रयोजनसंभव इति भावः. कीदृशस्य तस्य? सुखैषिण इंद्रियसुखाभिलाषिणः. ततश्च तत्प्रत्ययं, तेषां पूर्वोक्तानां विषयसेवाद्हिंसादीनां प्रयोजनानां प्रत्ययं निमित्तं तत्प्रत्ययं, तदर्थं तन्निमित्तं रागी द्वेषी च जीवः ' उज्जमए ' इत्युच्यते उद्यमं कुरुते.

॥ मूलम् ॥—विरज्जमाणस्स य इंदियत्था । सद्दाइया तावइयप्पगारा ॥ न तस्स सव्वे-वि मणुन्नयं वा । निव्वत्तयंति अमणुन्नयं वा ॥ ६ ॥ व्याख्या—तावत्प्रकारास्तावंतः प्रकारा भेदा येषां ते तावत्प्रकाराः खरमृद्वादिभेदाः शव्दरूपरसगंधस्पर्शाः सर्वेऽपींद्रियार्थास्तस्य पूर्वोक्तस्य विरज्यमानस्य विरागिणो रागद्वेषरहितस्य पुरुषस्य मनोज्ञत्वं वाऽमनोज्ञत्वं च न निर्वर्तयंति नोत्पादयंति. रागद्वेषाभ्यां विषयेषु मनोज्ञत्वममनोज्ञत्वं चोत्पाद्यते. यो हि राग-द्वेषाभ्यां रहितस्तस्य विषयाः किं कुर्वंतीति भावः. ॥ ६ ॥

॥ मूलम् ॥—एवं ससंकप्पविकप्पणासु । संजायइ समयमुवट्ठियस्स ॥ अत्थे य संकप्पयओ

तउ से । पहीयए कामगुणेसु तण्हा ॥ ७ ॥ व्याख्या—एवममुना प्रकारेण स्वसंकल्पविकल्पनासूपस्थितस्य पुरुषस्य तथार्थान् ( इंद्रियार्थान् ) संकल्पयतः पुरुषस्य च समत्वं संजायते. स्वस्यात्मनः संकल्पा रागद्वेषमोहास्तेषां विकल्पनाः स्वरूपदोषहेतुविचारणाः संकल्पविकल्पनास्तासूपस्थितस्योद्यमयुक्तस्य, च पुनरर्थानिंद्रियार्थान् शब्दादिविषयान् विचारयतः, यतो रूपादय इंद्रियार्था मत्तः सकाशात्पृथगेव तिष्टंति, त एते पापहेतवः, पापहेतवस्तु स्वस्मिन् स्थिता रागद्वेषादय इति विचारयतः, एतावता रागद्वेषादीनां स्वरूपं चिंतयतः, इंद्रियार्थस्वरूपं चिंतयतः पुरुषस्य माध्यस्थ्यमुत्पद्यते, अथवाऽर्थान् संकल्पयतो विचारयतः समता संजायते. यदुक्तं—जीवाइ नवपयत्थे । जो जाणइ तस्स होइ सम्मत्तं ॥ ‘ तउ से इति ’ ततः समत्वोत्पत्तितस्तस्य पुरुषस्य कामगुणेषु विषयेषु तृष्णा लोभः प्रकर्षेण हीयते. ॥ ७ ॥

॥ मूलम् ॥—स वीयरागो कयसवकिच्चो । खवेइ नाणावरणं खणेणं ॥ तहेव जं दरिसणमावरेइ । जं अंतरायं पकरेइ कम्मं ॥ ८ ॥ व्याख्या—यस्य पुरुषस्य कामगुणेषु शब्दा-

दिषु लोजो निवर्तते, स निर्लोजी वीतरागः कृतसर्वकृत्यः सन् कृतसर्वकार्यः सन् क्षणेन ज्ञानावरणं पंचविधं क्षपयति. तथैव यद्दर्शनं चक्षुर्दर्शनावरणं, यच्चांतरायं दानादिलब्धेर्विघ्नं प्रकरोति, तत्कर्मांतरायनामकर्मेत्यर्थः, तदपि क्षपयति. ॥ ७ ॥

॥ मूलम् —सव्वं तउ जाणइ पासए य । अमोहणे होइ निरंतराए ॥ अणासवे फाणसमाहिजुत्ते । आउरकए मोरकमुवेइ सुद्धे ॥ ९ ॥ व्याख्या—ततः कर्मक्षयानंतरं सर्वं जानाति, सर्वं पश्यति च, तदाऽमोहनो मोहनीयकर्मरहितः सन्निरंतरायोंतरायकर्मरहितो जवति. पुनरनाश्रवो भूत्वा ध्यानसमाधियुक्तश्चायुःक्षये शुद्धः सन् मोक्षमुपैति. ॥ ९ ॥

॥ मूलम् ॥—सो तस्स सव्वस्स डुहस्स मुक्को । जं वाहई सययं जंतुमेयं ॥ दीहामयविप्पमुक्को पसत्थो । तो होइ अच्चंतसुही कयत्थो ॥ १० ॥ व्याख्या—स मोक्षगामी पुरुषस्तस्माद्दुःखान्मुक्तो जवति. तस्मात् कस्मात् ? यद्दुःखमेतं जंतुमेतं प्राणिनं सततं निरंतरं बाधते पीमयति, तस्मात्सर्वस्माद्दुःखान्मुक्तो जवति. कीदृशः स मोक्षगामी पुरुषः ? दीर्घामयविप्रमुक्तः, दीर्घाणि प्रलंबस्थितीनि यानि कर्माण्येवामया रोगा दीर्घामयास्तेभ्यो विशेषेण

प्रमुक्तो ज्ञवति, दीर्घामयविप्रमुक्तो दीर्घकर्मरोगरहितः. पुनः कीदृशः? अत एव प्रशस्तः प्रशंसायोग्यस्ततः कर्मरोगाऽज्ञावादत्यंतसुखी कृतार्थः कृतकृत्यः सिद्धो ज्ञवतीत्यर्थः. ॥ १० ॥ अथ निगमनमाह—

॥ मूलम् ॥—अणाइकालप्पज्ञवस्स एसो । सव्वस्स डुक्खस्स पमोक्खमग्गो ॥ वियाहिउं जं समुविच्च सत्ता । कमेण अच्चंतसुही ज्ञवंतित्तिबेमि ॥ ११ ॥ व्याख्या—तर्थकरैरेष सर्वस्य संसारडुःखस्य प्रमोक्षमार्गो व्याख्यातः, यं प्रमोक्षमार्गं क्रमेण समुपेत्य सम्यक् प्रतिपद्य सत्वाः प्राणिनोऽत्यंतं सुखिनो ज्ञवंति. कीदृशस्य सर्वस्य डुःखस्य? अनादिकालप्रज्ञवस्येत्यहं ब्रवीमीति सुधर्मास्वामी जंबूस्वामिनं प्राह. ॥ ११ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लज्ञगणिविरचितायां द्वात्रिंशत्तमं प्रमादस्थानाख्यमध्ययनं संपूर्णं. ॥ ३२ ॥ श्रीरस्तु. ॥

———

## ॥ अथ त्रयस्त्रिंशत्तममध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययने प्रमादपरिहार उक्तः, तथा प्रमादस्थानान्युक्तानि, तैः प्रमादैः कृत्वा कर्मप्रकृतीनां बंधः स्यात्, तदर्थमिहाध्ययने कर्मप्रकृतय उच्यंते—

॥ मूलम् ॥—अट्ठकम्माइं वुच्छामि । आणुपुव्विं जहक्कमं ॥ जहिं बद्धो अयं जीवो । संसारे परिवत्तई ॥ १ ॥ व्याख्या—हे जंबू! अहं यथाक्रममानुपूर्व्याऽनुक्रमेण तान्यष्ट कर्माणि वक्ष्यामि. क्रियंते मिथ्यात्वाविरतिकषाययोगैर्हेतुभिर्जीवेनेति कर्माण्यष्टसंख्यानि. यत्रानुपूर्वी त्रिधा वर्तते, तथापि यथाक्रमं पूर्वानुपूर्व्या. प्राकृतत्वात्तृतीयास्थाने प्रथमा, तानि कानि कर्माणि? यैरष्टभिः कर्मभिर्बद्धो नियंत्रितोऽयं जीवः संसारे चतुर्गतिभ्रमणे परिवर्तते, विविधान् पर्यायान् प्राप्नोति. ॥ १ ॥

॥ मूलम् ॥—नाणावरणं चेव । दंसणावरणं तहा ॥ वेयणिज्जं तहा मोहं । आउकम्मं तहेव य ॥ २ ॥ नामकम्मं च गोयं च । अंतरायं तहेव य ॥ एवमेयाइं कम्माइं । अठेव

उ समासर्ज ॥ ३ ॥ युग्मं ॥ व्याख्या—एवममुना प्रकारेणैतान्यष्टौ कर्माणि समासतः संक्षेपतो ज्ञेयानीति शेषः. एतानि कानि ? तत्र प्रथमं ज्ञानावरणं, ज्ञानं मतिश्रुतावधिमनःपर्यवकेवललक्षणं, आवृणोत्याच्छादयतीति ज्ञानावरणं, यथा नेत्रं पट आवृणोति, तद् ज्ञानावरणं कर्म प्रथमं. १. चैव पदपूरणे. तथा द्वितीयं दर्शनावरणं, दर्शनं सम्यक्त्वमावृणोतीति दर्शनावरणं, प्रतीहारवत्सम्यक्त्वरूपं न दर्शयति. २. तथा वेदनीयं, वेद्यते साताऽसाताऽनेनेति वेदनीयं, मधुलिप्तखड्गधारातुल्यं तृतीयं कर्म. ३. तथा पुनर्मोहं, मुह्यते मूर्छितो भवति जीवोऽनेनेति मोहः, मद्यवच्चतुर्थं मोहनीयं, मोहाय योग्यं मोहनीयकर्म ज्ञेयं. ४. तथैव चायाति स्वकीयावसरे इत्यायुर्गतिः, निःसरितुमिच्छन्नपि जीवो निर्गंतुं न शक्नोति, यस्मिन् सति निगडबद्ध इव तिष्ठतीत्यायुषः स्वभावः, इति पंचममायुः कर्म. ५. तथा नामयति चतसृषु गतिषु नवीनान्नवीनान् पर्यायान् प्रापयति जीवंप्रतीति नाम, चित्रकारवन्नामकर्म षष्ठं ज्ञेयं. ६. गोत्र्यंते आहूयंते लघुना दीर्घेण वा शब्देन जीवोऽनेनेति गोत्रं, कुंभकारवद्घटकलशशरावकुंडकादिभांडकृद्भवति, इदं गोत्रं कर्म सप्तमं ७. तथांतर्मध्ये दातृग्राहकयोर्विचाले

आयातीत्यंतरायः, यथा राजा कस्मैचिद्दातुमुपदिशति, तत्र भांडागारिकोंतराले विघ्नकृद्भवति. तादृगंतरायकर्माष्टमं भवति. ७. तत्र चाष्टानां कर्मणामादौ ज्ञानावरणं दर्शनावरणं च प्रतिपादितं, तत्रात्मनः स्वभावस्तु ज्ञानदर्शनरूप एवास्ति, अतस्तदावरणमादावुक्तं, याभ्यां कर्मभ्यां जीवस्य स्वभाव आव्रियते, अतस्तयोर्मुख्यत्वं. ज्ञानदर्शनयोश्च समानत्वेऽप्यंतरंगत्वेन विशेषतो ज्ञानोपयोगे एव सर्वलब्धीनां प्राप्तिः स्यात्, तस्माद् ज्ञानस्य प्राधान्यादादौ तदावरणमुक्तं. तदनु सामान्यज्ञानोपयोगत्वाद्दर्शनावरणमुक्तं. एवं शेषकर्मणामपि विशेषस्तु स्वयमेव ज्ञेयः. ॥ ३ ॥ इत्थं कर्मणां मूलप्रकृतीरुक्त्वोत्तरप्रकृतीराह—

॥ मूलम् ॥—नाणावरणं पंचविहं । सुयं आभिणिवोहियं ॥ ओहिनाणं च तइयं । मणनाणं च केवलं ॥ ४ ॥ व्याख्या—ज्ञानावरणं कर्म पंचविधं कथितं, श्रुतं श्रुतज्ञानावरणं १. तथा आभिनिबोधकं मतिज्ञानं, तदावरणं द्वितीयं २. तृतीयमवधिज्ञानावरणं ३. तथा मनोज्ञानं मनःपर्यायज्ञानावरणं चतुर्थं. तथा पंचमं केवलज्ञानावरणं ५. ॥ ४ ॥ अथ दर्शनावरणस्य द्वितीयकर्मणो भेदानाह—

सातं सातावेदनीयं, ततोऽन्यदसातावेदनीयमित्यर्थः. तु पुनः सातस्यापि सातावेदनीयस्यापि बहवोऽनुकंपादयो भेदा भवंति. एवमसातस्याप्यसातावेदनीयस्यापि बहव आर्त्तिशोकसंतापादयो भवंतीति शेषः. ॥ ७ ॥

॥ मूलम् ॥—मोहणिज्जंपि दुविहं । दंसणे चरणे तहा ॥ दंसणे तिविहं वुत्तं । चरणे य दुविहं भवे ॥ ८ ॥ सम्मत्तं चेव मिच्छत्तं । सम्मामिच्छत्तमेव य ॥ एयाउ तिन्नि पयडीउ । मोहणिज्जस्स दंसणे ॥ ९ ॥ चारित्तमोहनं कम्मं । दुविहं तु वियाहियं ॥ कसायमोहणिज्जं च । नोकसायं तहेव य ॥ १० ॥ सोलसविहभेएण । कम्मं तु कसायजं ॥ सत्तविह नवविहं वा । कम्मं नोकसायजं ॥ ११ ॥ चतसृणां गाथानामर्थः ॥ व्याख्या—मोहयति जीवं घूर्मयति मद्यवत्परवशं करोतीति मोहः, तदर्हं मोहनीयं कर्मापि द्विविधं भवति, दर्शने तथा चरणे. दर्शने दर्शनविषये मोहनीयं, तथा चरणे चरणविषये मोहनीयं. तत्र दर्शनं तत्वरुचिरूपं, चरणं विरतिरूपं. तत्रापि दर्शने यन्मोहनीयं तत् त्रिविधं तीर्थकरैरुक्तं. चरणे चारित्रे यन्मोहनीयं तद् द्विविधं भवेत्. ॥ ८ ॥ दृश्यंते ज्ञायंते जीवादयः पदार्था अनेनेति दर्शनं,

तत्र मोहयति मूढीकरोतीति दर्शनमोहनीयं त्रिविधं, सम्यक्त्वं १, मिथ्यात्वं २, सम्यक्मिथ्यात्वमिश्रं ३ इत्यर्थः. एव पदपूरणे, सम्यक्त्वमोहनीयं, मिथ्यात्वमोहनीयं. मिश्रमोहनीयं च. तत्र सम्यक्त्वं हि मिथ्यात्वस्यैव पुद्गलाः, अशुद्धपुद्गला अत्यंतविशुद्धा भवंति, तदा सम्यक्त्वं कथ्यते. तत्सम्यक्त्वमेव दर्शनं कथ्यते. दर्शनसम्यक्त्वयोर्नामांतरमत्र गृह्यते. यदा हि सम्यक्त्वं मिथ्यात्वप्रकृतित्वं भजति, तदा सम्यक्त्वस्यातीचारा लगंति, तदा मिथ्यात्वं भवति. यदा दर्शनप्रकृतिषु मोहो भवति. अथवौपशमिकादिकं मोहयति. तदपि सम्यक्त्वमोहनीयमुच्यते. १. अथ मिथ्यात्वमोहनीयस्वरूपमुच्यते—सम्यक्त्वाऽभावो मिथ्यात्वमशुद्धदलिकरूपं, यतस्तत्वेऽतत्वरुचिः, अतत्वे तत्वरुचिरुत्पद्यते तन्मिथ्यात्वं, तत् मुह्यते इति मिथ्यात्वमोहनीयं. यत्तु सम्यग्मिथ्यात्वमोहनीयं तत्तु शुद्धाशुद्धदलिकरूपं, यस्माज्जिनधर्मोपरि रागोऽपि न भवति, द्वेषोऽपि न भवति, अंतर्मुहूर्तस्थितिरूपं. यथा नालिकेरद्वीपवासिपुरुषोऽन्नोपरि रागोऽपि न भवति. द्वेषोऽपि न भवति. तादृग्स्वभावं मिश्रमोहनीयं तृतीयमुच्यते. एतास्तिस्रः प्रकृतयो दर्शने सम्यक्त्वेऽर्थाद्दर्शनस्य सम्यक्त्वस्य च मोहनीयक-

॥१२३१॥

॥ मूलम् ॥—निद्दा तहेव पयला । निद्दा निद्दा य पयलपयला य ॥ तत्तो य थीणगिद्धीउ । पंचमा होइ नायव्वा ॥ ५ ॥ व्याख्या—निद्रा सुखजागरणरूपा १. तथैव प्रचला द्वितीया स्थितस्योपविष्टस्य या समायाति २. तृतीया निद्रानिद्रा दुःखप्रतिबोध्या ३. चतुर्थी प्रचलाप्रचला, चलमानस्य याऽयाति सा प्रचलाप्रचला ४. तथा पंचमी स्त्यानगृद्धिनाम्नी ज्ञेया, स्त्याना पुष्टा गृद्धिर्लोभो यस्या सा स्त्यानगृद्धिः. अथवा स्त्याना संहतोपचिता ऋद्धिर्यस्यां सा स्त्यानर्द्धिः, यस्या उदये हि वासुदेवार्धबलः प्रबलरागद्वेषवांश्च जंतुर्जायते, अत एव दिनचिंतितार्थसाधिनीयं पंचमी भवति. ५. ॥ ५ ॥

॥ मूलम् ॥—चक्खुमचक्खु उहिस्स । दरिसणे केवले य आवरणे ॥ एवं तु नवविगप्पं । नायव्वं दरिसणावरणं ॥ ६ ॥ व्याख्या—एवं त्वमुना प्रकारेण नवविकल्पं नवविधं दर्शनावरणं कर्म ज्ञातव्यं. दर्शनं सम्यक्त्वमावृणोतीति दर्शनावरणं, पंच निद्राः पूर्वगाथायामुक्ताः. चत्वारोऽमी भेदाः, ते के? उच्यंते–' चक्खुमचक्खुउहिस्स दरिसणे ' इति, तत्र 'चक्खुमचक्खुउहिस्स ' इत्येकपदं, चक्षुश्च अचक्षुश्चावधिश्च चक्षुरचक्षुरवधिस्तस्य चक्षुरचक्षुर-

वधेरावरणं. चक्षुरचक्षुरवधेरित्यत्र प्राकृतत्वात् द्वंद्वे एकत्वं पुंस्त्वं. तथा दर्शने रूपसामान्यग्रहणे यदावरणं, च पुनः केवले केवलज्ञाने यदावरणं, एवं नवविधं. चक्षुषा दृश्यते ज्ञायते इति चक्षुर्दर्शनं, तदावृणोत्याच्छादयतीति चक्षुर्दर्शनावरणं १. तथा चक्षुषोऽन्यदचक्षुः, श्रोत्रनकरसनास्पर्शरूपमिंद्रियचतुष्कं, तेनाचक्षुषा दृश्यते इत्यचक्षुर्दर्शनं, तदावृणोतीत्यचक्षुर्दर्शनावरणं. रूपवद्द्रव्यं सामान्यप्रकारेण मर्यादासहितं दृश्यते इत्यवधिदर्शनं, तदावृणोतीत्यवधिदर्शनावरणं. एवं त्रयो भेदाः. चतुर्थं पुनः केवले केवलदर्शनेऽप्यावरणं ज्ञेयं. केवलं सर्वद्रव्यपर्यायाणां सामान्येन स्वरूपं दृश्यते इति केवलदर्शनं, तत्र यदावरणं तत्केवलदर्शनावरणं. एवं पंचानां निद्राणां, चतुर्णामावरणानां चैकत्रीकरणान्नवविधं दर्शनावरणं ज्ञातव्यमित्यर्थः. ॥ ६ ॥

॥ मूलम् ॥—वेयणियंपि य दुविहं । सायमसायं च आहियं ॥ सायस्स य बहुभेया । एमेवासायस्सवि ॥ ७ ॥ व्याख्या—वेदनीयकर्मापि द्विविधं, वेदितुं योग्यं वेदनीयं कर्म द्विभेदमाख्यातं कथितं. एकं सातं च पुनरसातं. तत्र स्वाद्यते शारीरं मानसं च सुखमनेनेति

सातं सातावेदनीयं, ततोऽन्यदसातावेदनीयमित्यर्थः. तु पुनः सातस्यापि सातावेदनीयस्यापि बहवोऽनुकंपादयो भेदा भवंति. एवमसातस्याप्यसातावेदनीयस्यापि बहव आर्त्तिशोकसंतापादयो भवंतीति शेषः. ॥ ७ ॥

॥ मूलम् ॥—मोहणिज्जंपि दुविहं । दंसणे चरणे तहा ॥ दंसणे तिविहं वुत्तं । चरणे य दुविहं भवे ॥ ८ ॥ सम्मत्तं चेव मिच्छत्तं । सम्मामिच्छत्तमेव य ॥ एयाउ तिन्नि पयडीउ । मोहणिज्जस्स दंसणे ॥ ९ ॥ चारित्तमोहनं कम्मं । दुविहं तु वियाहियं ॥ कसायमोहणिज्जं च । नोकसायं तहेव य ॥ १० ॥ सोलसविहभेएण । कम्मं तु कसायजं ॥ सत्तविह नवविहं वा । कम्मं नोकसायजं ॥ ११ ॥ चतसृणां गाथानामर्थः ॥ व्याख्या—मोहयति जीवं मूर्छयति मद्यवत्परवशं करोतीति मोहः, तदर्हं मोहनीयं कर्मापि द्विविधं भवति, दर्शने तथा चरणे. दर्शने दर्शनविषये मोहनीयं, तथा चरणे चरणविषये मोहनीयं. तत्र दर्शनं तत्वरुचिरूपं, चरणं विरतिरूपं. तत्रापि दर्शने यन्मोहनीयं तत् त्रिविधं तीर्थकरैरुक्तं. चरणे चारित्रे यन्मोहनीयं तद् द्विविधं भवेत्. ॥ ८ ॥ दृश्यंते ज्ञायंते जीवादयः पदार्था अनेनेति दर्शनं,

तत्र मोहयति मूढीकरोतीति दर्शनमोहनीयं त्रिविधं, सम्यक्त्वं १, मिथ्यात्वं २, सम्यक्मिथ्यात्वमिश्रं ३ इत्यर्थः. एव पदपूरणे, सम्यक्त्वमोहनीयं, मिथ्यात्वमोहनीयं. मिश्रमोहनीयं च. तत्र सम्यक्त्वं हि मिथ्यात्वस्यैव पुद्गलाः, अशुद्धपुद्गला अत्यंतविशुद्धा भवंति, तदा सम्यक्त्वं कथ्यते. तत्सम्यक्त्वमेव दर्शनं कथ्यते, दर्शनसम्यक्त्वयोर्नामांतरमत्र गृह्यते. यदा हि सम्यक्त्वं मिथ्यात्वप्रकृतित्वं भजति, तदा सम्यक्त्वस्यातीचारा लगंति, तदा मिथ्यात्वं भवति. यदा दर्शनप्रकृतिषु मोहो भवति, अथवौपशमिकादिकं मोहयति. तदपि सम्यक्त्वमोहनीयमुच्यते. १. अथ मिथ्यात्वमोहनीयस्वरूपमुच्यते—सम्यक्त्वाऽभावो मिथ्यात्वमशुद्धदलिकरूपं, यतस्तत्वेऽतत्वरुचिः, अतत्वे तत्वरुचिरुत्पद्यते तन्मिथ्यात्वं, तत्र मुह्यते इति मिथ्यात्वमोहनीयं. यत्तु सम्यग्मिथ्यात्वमोहनीयं तत्तु शुद्धाशुद्धदलिकरूपं, यस्माज्जिनधर्मोपरि रागोऽपि न भवति, द्वेषोऽपि न भवति, अंतर्मुहूर्तस्थितिरूपं. यथा नालिकेरद्वीपवासिपुरुषोऽन्नोपरि रात्यपि न भवति. द्वेष्यपि न भवति. तादृक्स्वभावं मिश्रमोहनीय तृतीयमुच्यते. एतास्तिस्रः प्रकृतयो दर्शने सम्यक्त्वेऽर्थाद्दर्शनस्य सम्यक्त्वस्य च मोहनीयक-

तुरस्रसंस्थानं ९ वज्रर्षभनाराचसंहननं १० औदारिकांगोपांगं ११ वैक्रियांगोपांगं १२ आहारकांगोपांगं १३ प्रशस्तवर्णः १४ प्रशस्तगंधः १५ प्रशस्तरसः १६ प्रशस्तस्पर्शः १७ मनुष्यानुपूर्वी १८ देवानुपूर्वी १९ अगुरुलघु २० पराघातं २१ उच्छ्वासं २२ आतपं २३ उद्योतं २४ प्रशस्तविहायोगतिः २५ त्रसं २६ बादरं २७ पर्याप्तं २८ प्रत्येकं २९ स्थिरं ३० शुभं ३१ सुभगं ३२ सुस्वरं ३३ आदेयं ३४ यशःकीर्तिः ३५ निर्माणं ३६ तीर्थंकरनामकर्म ३७. एताः सर्वा अपि शुभानुभावाद्भुभनामकर्मण प्रकृतयो ज्ञेयाः.

तथाऽशुभनामकर्मणोऽपि मध्यमभेदविवक्षया चतुस्त्रिंशद्भेदा भवंति. तद्यथा—नरकगतिः १ तिर्यग्गतिः २ एकेंद्रिय ३ द्वींद्रिय ४ त्रींद्रिय ५ चतुरिंद्रियजातिः ६ ऋषभनाराच ७ नाराच ८ अर्धनाराच ९ कीलिका १० सेवार्तकसंहननानि ११. न्यग्रोधपरिमंडलसंस्थान १२ सादि १३ वामन १४ कुब्ज १५ हुंडक १६ संस्थानानि. अप्रशस्तवर्ण १७ अप्रशस्तगंध १८ अप्रशस्तरस १९ अप्रशस्तस्पर्शाः २०. नरकानुपूर्वी २१ तिर्यगानुपूर्वी २२ उपघातं २३ अप्रशस्तविहायोगतिः २४ स्थावरं २५ सूक्ष्म २६ साधारणं २७ अपर्याप्तं २८ अस्थिरं २९

अशुभं ३० दुर्नगं ३१ दुःस्वरं ३२ अनादेयं ३३ अयशोऽकीर्तिश्च ३४. एताश्चाऽशुभनारकत्वादिनिबंधनत्वेनाऽशुभाः. अत्र बंधनसंघाते शरीरेभ्यो वर्णाद्यवांतरभेदा वर्णादिभ्यः पृथग् विवक्ष्यंते. एताः प्रकृतयस्तु मध्यमविवक्षया प्रोक्ताः. उत्कृष्टविवक्षया तु १०३ प्रोक्ताः संति. ॥ १३ ॥ अथ गोत्रकर्मप्रकृतीर्व्यनक्ति–

॥ मूलम् ॥—गोयं कम्मं दुविहं । उच्चं नीयं च आहियं ॥ उच्चं अठविहं होइ । एवं नीयंपि आहियं ॥ १४ ॥ व्याख्या—गोत्रं कर्म द्विविधं, उच्चं च पुनर्नीचं. तत्रोच्चमुच्चैर्गोत्रमीक्ष्वाकुजात्यादि. उच्चैर्व्यपदेशहेतुजातिकुलरूपबलश्रुततपोलाभाद्यष्टविधबंधहेतुत्वादष्टविधमुच्चैर्गोत्रं भवति. एवमित्यष्टविधमेव जातिकुलादिमदाष्टनिबंधहेतुत्वान्नीचमपि नीचैर्गोत्रमपि नीचैर्व्यपदेशहेत्वाख्यातं, ॥ १४ ॥ अथांतरायप्रकृतीराह–

॥ मूलम् ॥–दाणे लाभे य भोगे य । उवभोगे वीरिये तहा ॥ पंचविहमंतरायं । समासेण वियाहियं ॥ १५ ॥ व्याख्या—अंतरायं समासेन संक्षेपेण पंचविधं व्याख्यातं, तत्पंचभेदमाह–दाने लाभे भोगे उपभोगे तथा वीर्ये, एतेषु पंचस्वंतरायत्वात्पंचविधमंतरायं.

मेणो ज्ञेया इति शेषः. सम्यक्त्वस्याऽज्ञानं सम्यक्त्वमोहनीयं, मिथ्यात्वस्याऽज्ञानं मिथ्यात्वमोहनीयं, मिश्रस्य मोहो मिश्रमोहनीयं. इह हि सम्यक्त्वमिथ्यात्वमिश्ररूपा जीवस्य धर्मा उच्यंते. ॥ ९ ॥ दर्शनमोहनीयं त्रिविधमुक्त्वाऽथ चारित्रमोहनीयभेदानाह—'चरित्तेति' गाथा पूर्वमेवोक्ता. अथान्वयः—तीर्थकरैश्चारित्रमोहनं कर्म द्विविधं व्याख्यातं. चरित्रे चारित्रग्रहणे मोहयति मूढं करोतीति चारित्रमोहनं, यत्र चारित्रफलं जानन्नपि तन्नाद्रियते, तद्द्वैविध्यमाह—कषायमोहनीयं प्रथमं, कषायाः क्रोधादयश्चत्वारस्तैर्मोहयतीति कषायमोहनीयं १. तथा नोकषायैर्नवभिर्हास्यादिषट्कवेदत्रिकरूपैर्मोहयतीति नोकषायमोहनीयं. ॥ ॥ १० ॥ तत्र यत्प्रथमं कषायजं मोहनीयं कर्म, तत् षोडशविधं भवति. कषाया हि क्रोधमानमायालोभाः, प्रत्येकमनंतानुबंधाऽप्रत्याख्यानप्रत्याख्यानसंज्वलनरूपैश्चतुर्भिर्भेदैः षोडशभेदा भवंति. अथ नोकषायजं मोहनीयं कर्म सप्तविधं नवविधं वा भवति. हास्य १ रति २ अरति ३ भय ४ शोक ५ जुगुप्सा ६ वेदत्रयाणां च सामान्यगणनयैकत्वमेव गम्यते, हास्यादिषट्कं वेदश्चैवं सप्तविधं. यदा हि त्रयो वेदाः पुंस्त्रीनपुंसकरूपा गण्यंते तदा नवविधं

नोकषायजं मोहनीयं भवतीत्यर्थः. ॥ ११ ॥ अथायुःकर्मप्रकृतीराह—

॥ मूलम् ॥—नेरइयतिरिक्खाउ । मणुस्साउं तहेव य ॥ देवाउयं चउत्थं तु । आउकम्मं चउव्विहं ॥ १२ ॥ व्याख्या—आयुःकर्म चतुर्विधं भवति, तथाहि—नैरयिकतिर्यगायुः, निरये भवा नैरयिकाः, नैरयिकाश्च तिर्यंचश्च नैरयिकतिर्यंचः, तेषामायुर्नैरयिकतिर्यगायुः, आयुः शब्दस्य प्रत्येकं संबंधः. तथैव तृतीयं मनुष्यायुः. च पुनश्चतुर्थं देवायुः, एवं चतुर्विधमायुर्भवति. ॥ १२ ॥ अथ नामकर्मप्रकृतीराह—

॥ मूलम् ॥—नामकम्मं तु दुविहं । सुहं असुहं च आहियं ॥ सुहस्स उ बहूभेया । एमेव असुहस्सवि ॥ १३ ॥ व्याख्या—नामकर्म द्विविधं व्याख्यातं, शुभं १ च पुनरशुभं २. शुभनामकर्म १ अशुभनामकर्म २, एवं द्विविधं. तत्र शुभस्य शुभनामकर्मणो बहुभेदाः संति, एवमेवाऽशुभस्याऽशुभनामकर्मणोऽपि बहुभेदा भवंति. तत्र शुभस्योत्तरोत्तरभेदत्तोऽनंतभेदत्वेऽपि मध्यमापेक्षया सप्तत्रिंशद्भेदा भवंति, ते चामी—मनुष्यगतिः १ देवगतिः २ पंचेंद्रियगतिः ३ औदारिक ४ वैक्रिय ५ आहारिक ६ तैजस ७ कार्मण ८ शरीराणि समच-

तुरस्रसंस्थानं ए वज्रर्षन्ननाराचसंहननं १० औदारिकांगोपांगं ११ वैक्रियांगोपांगं १२ आहारकांगोपांगं १३ प्रशस्तवर्णः १४ प्रशस्तगंधः १५ प्रशस्तरसः १६ प्रशस्तस्पर्शः १७ मनुष्यानुपूर्वी १८ देवानुपूर्वी १ए अगुरुलघु २० पराघातं २१ उच्छ्वासं २२ आतपं २३ उद्योतं २४ प्रशस्तविहायोगतिः २५ त्रसं २६ बादरं २७ पर्याप्तं २८ प्रत्येकं २ए स्थिरं ३० शुन्नं ३१ सुन्नगं ३२ सुस्वरं ३३ आदेयं ३४ यशःकीर्तिः ३५ निर्माणं ३६ तीर्थंकरनामकर्म ३७. एताः सर्वा अपि शुन्नानुन्नावाहुन्ननामकर्मण प्रकृतयो ज्ञेयाः.

तथाऽशुन्ननामकर्मणोऽपि मध्यमन्नेदविवक्षया चतुस्त्रिंशद्भेदा न्नवंति. तद्यथा—नरकगतिः १ तिर्यग्गतिः २ एकेंद्रिय ३ द्वींद्रिय ४ त्रींद्रिय ५ चतुरिंद्रियजातिः ६ ऋषन्ननाराच ७ नाराच ८ अर्धनाराच ए कीलिका १० सेवार्तकसंहननानि ११. न्यग्रोधपरिमंरुलसंस्थान १२ सादि १३ वामन १४ कुब्ज १५ हुंरुक १६ संस्थानानि. अप्रशस्तवर्ण १७ अप्रशस्तगंध १८ अप्रशस्तरस १ए अप्रशस्तस्पर्शाः २०. नरकानुपूर्वी २१ तिर्यगानुपूर्वी २२ उपघातं २३ अप्रशस्तविहायोगतिः २४ स्थावरं २५ सूक्ष्म २६ साधारणं २७ अपर्याप्तं २८ अस्थिरं २ए

अशुनं ३० डुर्नगं ३१ दुःस्वरं ३२ अनादेयं ३३ अयशोऽकीर्तिश्च ३४. एताश्चाऽशुभनारकत्वादिनिबंधनत्वेनाऽशुजाः. अत्र बंधनसंघाते शरीरेच्यो वर्णाद्यवांतरन्नेदा वर्णादिन्यः पृथग् विवक्ष्यंते. एताः प्रकृतयस्तु मध्यमविवक्षया प्रोक्ताः. उत्कृष्टविवक्षया तु १०३ प्रोक्ताः संति. ॥ १३ ॥ अथ गोत्रकर्मप्रकृतीर्व्यनक्ति—

॥ मूलम् ॥—गोयं कम्मं डुविहं । उच्चं नीयं च आहियं ॥ उच्चं अठविहं होइ । एवं नीयंपि आहियं ॥ १४ ॥ व्याख्या—गोत्रं कर्म द्विविधं, उच्चं च पुनर्नीचं. तत्रोच्चमुच्चैर्गोत्रमीक्ष्वाकुजात्यादि. उच्चैर्व्यपदेशहेतुजातिकुलरूपबलश्रुततपोलानाद्यष्टविधबंधहेतुत्वादष्टविधमुच्चैर्गोत्रं नवति. एवमित्यष्टविधमेव जातिकुलादिमदाष्टनिबंधहेतुत्वान्नीचमपि नीचैर्गोत्रमपि नीचैर्व्यपदेशहेत्वाख्यातं, ॥ १४ ॥ अथांतरायप्रकृतीराह—

॥ मूलम् ॥—दाणे लान्ने य नोगे य । उवन्नोगे वीरिये तहा ॥ पंचविहमंतरायं । समासेण वियाहियं ॥ १५ ॥ व्याख्या—अंतरायं समासेन संक्षेपेण पंचविधं व्याख्यातं, तत्पंचविध्यमाह—दाने लान्ने नोगे उपन्नोगे तथा वीर्ये, एतेषु पंचस्वंतरायत्वात्पंचविधमंतरायं.

तत्र दीयते इति दानं तस्मिन् दाने. लभ्यते इति लाभस्तस्मिन् लाभे. सकृद्भुज्यते पुष्पहारादिपदार्थ इति भोगस्तस्मिन् भोगे. उपेति पुनः पुनर्भुज्यते भुवनांगनांशुकादीनीत्युपभोगस्तस्मिन्नुपभोगे. तथा विशेषेणेर्यते वेद्यतेऽनेनेति वीर्यं, तस्मिन् वीर्ये. सर्वत्रांतरायमिति संबंधः. ततो विषयभेदात्पंचविधमंतरायं. तत्र यस्मिन् सति चतुरे ग्रहीतरि, देये वस्तुनि, तस्य फलं जानन्नपि दाने न प्रवर्तते तद्दानांतरायं १. यस्मिन् विशिष्टे दातरि सति याचनानिपुणोऽपि याचको न लभते तल्लाभांतरायं २. पुनर्विभवादौ सत्यपि भोक्तुं न शक्नोति तद्भोगांतरायं ३. येनोपभोगयोग्ये वस्तुनि सत्युपभोक्तुं न शक्यते तदुपभोगांतरायं ४. यद्बशाद्बलवान् नीरोगस्तरुणोऽपि तृणमपि भंक्तुं न शक्नोति, तस्य पुरुषस्य वीर्यांतरायं कर्म ज्ञेयं. ५. ॥ १५ ॥ उक्तार्थस्य निगमनायोत्तरग्रंथयोजनायाह—

॥ मूलम् ॥—एयाउ मूलपयडीउ । उत्तराउ य आहिया ॥ पएसग्गं खित्तकाले य । भावं वा अउत्तरं सुण ॥ १६ ॥ व्याख्या—एता मूलप्रकृतयोऽष्टावाख्याताः, तु पुनरुत्तरा अवांतरा ज्ञानावरणदर्शनावरणादीनां पंचनवाद्या अग्रे कर्मणां प्रकृतय आख्याताः. अथ

प्रदेशाग्रं क्षेत्रकालौ च, वाशब्दः पुनरर्थे, पुनश्चैवं, अतः प्रकृत्यभिधानादुत्तरमग्रे त्वं शृणु? अहं वदामीति शेषः. तत्र प्रदेशाग्रं किं? उच्यते—प्रदेशानां परमाणूनामग्रं परिमाणं प्रदेशाग्रं, क्षेत्रमाकाशं, कालश्च बद्धस्य कर्मणो जीवप्रदेशाऽविघटनात्मकः स्थितिकालः. तावसनुभागादिककर्मपर्यायलक्षणं चतुर्विधं प्रकृतिस्थितिप्रदेशानुभागस्वरूपमहं वदामि, त्वं शृणु? ॥ १६ ॥ अथ तावत्प्रदेशाग्रं वदति—

॥ मूलम् ॥—सव्वेसिं चेव कम्माणं । पएसग्गमणंतयं ॥ गंठियसत्ताईयं । अंतो सिद्धाण आहियं ॥ १७ ॥ व्याख्या—सर्वेषां ज्ञानावरणीयादिकर्मणां प्रदेशाग्रं परमाणुपरिमाणं ग्रंथिगसत्वातीतं वर्तते. ग्रंथिं घनरागद्वेषपरिणतिरूपां गच्छंतीति ग्रंथिगाः, ग्रंथिगाश्च ते सत्वाश्च ग्रंथिगसत्वाः, तेभ्योऽतीतं, तान् वाऽतीतमतिक्रांतं ग्रंथिकसत्वातीतं. कोऽर्थः? रागद्वेषमयीं ग्रंथिं यावद्भेदनायागताः संतः, परं भेत्तुमशक्ताः पश्चादेव व्याघुटिताः. एतादृशा ये सत्वा अर्थादभव्या जीवास्तेभ्यः कर्मणां प्रदेशाग्रं परमाणूनां परिमाणमनंतगुणाधिकं, अभव्येभ्योऽधिकमित्यर्थः. पुनः सर्वेषां कर्मणां प्रदेशाग्रं सिद्धजीवानामंतराख्यातं, सिद्धेभ्योऽ-

तर्मध्ये एवाख्यातं तीर्थकरैः कथितं. कोऽर्थः? सिद्धजीवेभ्यः कर्मपरमाणुपरिमाणमनंतगुणे-न हीनमित्यर्थः. कर्माण्वपेक्षया सिद्धा अनंतगुणा इति भावः. अत एव कर्मपरमाणूनामनं-तकं सिद्धानामंतर्वर्ति प्रकाशितं. इदं संख्यानमेकसमयग्राह्यकर्मपरमाण्वपेक्षमुक्तं वर्तते. ॥ ॥ १७ ॥ प्रदेशाग्रमुक्त्वा कर्मणां क्षेत्रं वदंति—

॥मूलम्॥—सव्वजीवाण कम्मं तु । संगहे छद्दिसागयं ॥ सव्वेसुवि पएसेसु । सव्वं सव्वेण बद्धगं ॥१८॥ व्याख्या—कर्म ज्ञानावरणीयादिकं सर्वजीवानामेकेंद्रियादीनां, तुः पादपूरणे, संग्रहे संग्रहक्रियायां योग्यं स्यादिति शेषः. कीदृशं सदित्याह—'छद्दिसागयत्ति' षट्दिशागतं, षसां दिशां समाहारः षड्दिशं, तत्र गतं षड्दिशागतं, षड्दिक्स्थितमित्यर्थः. तत्र चतस्रः पूर्वाद्या दिशः, ऊर्ध्वाधोदिग्द्वयं चेदं दिक्षट्कं. अत्र षड्दिग्गतं कर्म द्वींद्रियादिजीवानेवाधिकृत्य संग्रहक्रियायां योग्यं स्यादिति नियमः. एकेंद्रियाणां तु आगमे त्र्यादिदिक्स्थं कर्मग्रहणक्रियायां योग्यमप्युक्तमस्ति, अपरत्रागमे च तदाह—' एगिंदियाणं भंते तेया कम्मपुग्गलाणं गहणं करेमाणे किं तिदिसिं करेइ? जाव छद्दिसिं करेइ? गोयमा! सिय तिदिसिं सिय चउदि-

म्मि सिय पंचदिसिं सिय छद्दिसिं करेइ. वेंदियाणं भंते पुछा, गोयमा! वेंदिया जाव पंचेंदिया नियमा छद्दिसिं करेइ'. तच्च संगृहीतं सत् केन सह? कियत्? कथं वा स्यादित्याह—'सव्वेसुवि' सर्वैरप्यात्मप्रदेशैः सर्वं ज्ञानावरणादि सर्वेण प्रकृतिस्थित्यादिना प्रकारेण बद्धं अन्योन्यं संबंधतया क्षीरोदकवदात्मप्रदेशैः श्लिष्टं, तदेव बद्धकं कर्म संग्रहे योग्यं भवति, न त्वन्यत. आत्मा हि सर्वप्रकृतिप्रायोग्यपुद्गलान् सामान्येनादाय तान् पुद्गलानध्यवसायविशेषात् पृथग् ज्ञानावरणादिरूपत्वेन परिणमयति. यत्र ह्याकाशे जीवोऽवगाढस्तत्र ये आकाशप्रदेशा आत्मन्याश्रितास्तेषु ये कर्मपुद्गला रागादिस्नेहयोगत आत्मनि लगंति, ते एव कर्मपुद्गला जीवानां संग्रहयोग्याः, न तु क्षेत्रांतरावगाढाः कर्मपुद्गला जीवानां संग्रहणार्हाः, भिन्नप्रदेशस्थानां ग्रहणयोग्याऽभावात्. 'सव्वेसु पएसेसु' इति प्राकृतत्वात्तृतीयाबहुवचनस्थाने सप्तमीबहुवचनं. भिन्नप्रदेशस्थाः कर्मपुद्गलाः कथं ग्रहणयोग्या न भवंति? स्वावगाढाकाशप्रदेशस्थाः कर्मपुद्गलाः कथं ग्रहणयोग्या भवंति? अत्र दृष्टांतः—यथाग्निः स्वप्रदेशस्थान् प्रायोग्यपुद्गलानात्मसात्करोति, एवं जीवोऽपि स्वप्रदेशस्थान् कर्मपुद्गलानात्मसात्करोति.

किंचिद्विदिक्स्थितमपि कर्मात्मा गृह्णाति, परमल्पत्वान्न विवक्षितं. ॥१८॥ अथ कालमाह—

॥ मूलम् ॥—उदहिसरिसनामाणं । तीसई कोडिकोडीउ ॥ उक्कोसिया ठिई होइ । अंतोमुहुत्तं जहन्निया ॥ १९ ॥ आवरिज्जाण दुण्हंपि । वेयणिज्जे तहेव य ॥ अंतराए य कम्मंमि । ठिई एसा वियाहिया ॥२०॥ उदहिसरिसनामाणं । सत्तरिं कोडिकोडीउ ॥ मोहणिज्जस्स उक्कोसा । अंतोमुहुत्तं जहन्निया ॥ २१ ॥ तित्तिससागरोवम । उक्कोसेण वियाहिया ॥ ठिईउ आउकम्मस्स । अंतोमुहुत्तं जहन्निया ॥२२॥ उदहिसरिसनामाणं । वीसई कोडिकोडीउ ॥ नामगोयाण उक्कोसा । अट्ठमुहुत्ता जहन्निया ॥ २३ ॥ एतासां गाथानां व्याख्या—प्रथमद्वितीयगाथायोरर्थः—पूर्वमावरणयोर्द्वयोरर्थाद् ज्ञानावरणदर्शनावरणयोर्द्वयोः कर्मणोरुदधिसदृग्नाम्नां, उदधिः समुद्रस्तेन सदृग्नाम येषां तान्युदधिसदृङ्नामानि सागरोपमाणि, तेषामुदधिसदृङ्नाम्नां सागरोपमाणां त्रिंशत्कोटाकोट्युत्कृष्टा स्थितिर्भवति. तथा जघन्यिका हीनांतर्मुहूर्तं स्थितिः. तथैव वेदनीये इति वेदनीयस्य कर्मणः, तथांतरायेऽतरायकर्मणोऽप्येषैव स्थितिः, उत्कृष्टा त्रिंशत्कोटाकोटीस्थितिः, जनन्यिका चांतर्मुहूर्तं स्थितिः. ज-



33

अत्र वेदनीयस्य जघन्या स्थितिरंतर्मुहूर्तमाना सूत्रकृतोक्ता, अन्ये तु द्वादशमुहूर्तमानामेव तां वेदनीयस्य स्थितिमिच्छंति. तदभिप्रायं न विद्मः. ॥ २० ॥ मोहनीयस्य सप्ततिकोटाकोटीसागरोपमानोत्कृष्टा स्थितिः, जघन्यिकांतर्मुहूर्तं स्थितिः. ॥ २१ ॥ त्रयस्त्रिंशत्सागरोपमाण्यायुःकर्मण उत्कृष्टेन स्थितिर्व्याख्याता, प्राकृतत्वाद्विभक्तिलोपः. जघन्यिकांतर्मुहूर्तं स्थितिः. ॥ २२ ॥ नामगोत्रयोर्द्वयोः कर्मणोरुत्कृष्टा विंशतिः कोटाकोटयः सागरोपमाणां स्थितिर्व्याख्याता. जघन्यिकांतर्मुहूर्तिका इयं. तु मूलप्रकृतीनां स्थितिरस्ति. उत्तरप्रकृतीनां स्थितिर्विस्तरटीकातो ज्ञेया. ॥ २३ ॥ अथ भावमाह—

॥ मूलम् ॥—सिद्धाणणंतभागो । अणुभागा हवंति उ ॥ सव्वेसुवि पएसग्गं । सव्वजीवे सइच्छियं ॥ २४ ॥ व्याख्या—सिद्धानामनंतसंख्याकानां सिद्धजीवानामनंतमोभागोऽनुभागाः कर्मरसविशेषा भवंति. सिद्धानंतभागोऽनंतसंख्य एव, इत्यनेनानुभागानामप्यानंत्यमुक्तं, सर्वेष्वप्यनुभागेषु प्रदेशबुद्ध्या विभज्यमाना अनुभागैकदेशास्तेषामग्रं परिमाणं प्रदेशाग्रं, 'सव्वजीवे सइच्छियं' सर्वजीवेभ्यो ( भव्याभव्येभ्यः ) ऽतिक्रांतं, ततोऽपि तेषामनंतगुणत्वं ॥

॥ २४ ॥ अथाध्ययनार्थमुपसंहरन्नाह—

॥ मूलम् ॥—तम्हा एएसि कम्माणं । अणुभागे वियाणिया ॥ एएसिं संवरे चेव । खवणे य जए बुहेत्तिबेमि ॥ २५ ॥ व्याख्या—तस्मादेतेषां कर्मणामनुभागान् कर्मणां रसविशेषान् विज्ञायैतेषां कर्मणां संवरे, अनुपागतानां निरोधे, च पुनः क्षपणे उपागतानां क्षयीकरणे बुधः पंडितो यतते यत्नं कुरुते. इति सुधर्मास्वामी जंबूस्वामिनं प्राह, हे जंबू! अहं ब्रवीमि. ॥ २५ ॥ इति कर्मप्रकृत्याख्यमध्ययनं संपूर्णं. ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां कर्मप्रकृत्याख्यं त्रयस्त्रिंशत्तममध्ययनं संपूर्णं. ॥ ३३ ॥ श्रीरस्तु ॥

## ॥ अथ चतुस्त्रिंशमध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययनेऽष्टकर्मप्रकृतय उक्ताः, ताश्च कर्मप्रकृतयः षड्भिर्लेश्याभिर्जायंति, ततो लेश्याध्ययनं चतुस्त्रिंशं कथ्यते—



33-3

॥ मूलम् ॥—लेसज्झयणं पवक्खामि । आणुपुव्विं जहक्कमं ॥ छण्हंपि कम्मलेसाणं । अ-णुभावे सुणेह मे ॥ १ ॥ व्याख्या—अथाहमित्यध्याहारः, अथ यथाक्रममानुपूर्व्याऽनुक्रमेण त्रिविधाऽतिमलिनतरमलिनतरमलिनादिभेदेनाहं लेश्याध्ययनं प्रवक्ष्यामि. लेश्या अध्यवसायविशेषाः, लेश्याविधायकमध्ययनं लेश्याध्ययनमहं कथयिष्यामि, मे मम कथयतः षण्णामपि कर्मलेश्यानां कर्मस्थितिविधायकतत्तद्धिशिष्टपुद्गलरूपाणामनुभावान् रसविशेषांस्त्वं शृणु ? ॥ १ ॥

॥ मूलम् ॥—नामाइ वण्णरसगंध—फासपरिणामलक्खणं ॥ ठाणं ठिईगइं चाउ । लेसाणं तु सुणेह मे ॥ २ ॥ व्याख्या—हे शिष्य ! लेश्यानामेकादशवचनानि मे मम कथयतस्त्वं शृणु ? तानि कानि वचनानि ? तावन्नामानि वक्ष्यामि, तथा वर्णरसगंधस्पर्शपरिणामलक्षणं वक्ष्यामि. तथा स्थानं वक्ष्यामि, तथा स्थितिगती वक्ष्यामि, च पुनरायुर्वक्ष्यामि. वर्णश्च रसश्च गंधश्च स्पर्शश्च परिणामश्च लक्षणं च, तेषां समाहारो वर्णरसगंधस्पर्शपरिणामलक्षणं. तत्र वर्णाः श्यामादयः, रसास्तीक्ष्णादयः, गंधाः सुरभ्यादयः, स्पर्शाः खरादयः, परिणामा

जघन्यादयः, लक्षणं पंचाश्रवासेवनादि, स्थानमुत्कर्षापकर्षरूपं, स्थितिमवस्थानकालं, गतिं नरकादिकां, यतो याऽवाप्यते आयुर्यावत्यायुष्यवशिष्यमाणे आगामिभवलेश्यापरिणामस्त- दिह गृह्यते. ॥ २ ॥ तदेवानुक्रमेणाह—

॥ मूलम् ॥—किण्हा नीला य काऊ य । तेऊ पऊमा तहेव य ॥ सुक्कलेसा य छट्ठीउ । नामाइं तु जहक्कमं ॥ ३ ॥ व्याख्या—एतानि लेश्यानां यथाक्रमं नामानि ज्ञेयानि. प्रथमा कृष्णा १, च पुनर्द्वितीया नीला २, तृतीया कापोतनाम्नी ३, चतुर्थी तेजोलेश्या ४, पंचमी पद्म- लेश्या ५, च पदपूरणे, च पुनः षष्ठी शुक्ललेश्या. एवं षण्णामपि नामानि. ॥३॥ अथ वर्णानाह—

॥ मूलम् ॥—जीमूतनिद्धसंकासा । गवलरिट्ठगसन्निभा ॥ खंजंजणनयणनिभा । किण्हा- लेसाउ वण्णउ ॥ ४ ॥ व्याख्या—पूर्वं कृष्णलेश्या वर्णतो ज्ञेया, कीदृशी कृष्णलेश्या ? स्नि- ग्धजीमूतसंकासा, प्राकृत्वात् स्निग्धशब्दस्य परनिपातः. स्निग्धश्चासौ जीमूतश्च स्निग्धजीमू- तस्तेन संकाशा स्निग्धजीमूतसंकाशा, सजलघनसदृशा. पुनः कीदृशी ? गवलारिष्टकसन्नि- भा, गवलं चारिष्टकं च गवलारिष्टके, ताभ्यां संनिभा गवलारिष्टकसंनिभा, गवलं माहिषं

श्रृंगं, अरिष्टमरिष्टफलमरिष्टरत्नं वा, ताभ्यां सदृशी. पुनः कीदृशी? खंजांजननयननिभा, खंजं च अंजनं च नयनं च खंजांजननयनानि, तैर्निभा खंजांजननयननिभा. खंजं शकटचक्रांतर्गततैलोद्भवमलोपरिगृताभ्यक्तशणादिवंधनं श्यामीभूतं, अंजनं कज्जलं, नयनं नेत्रकनीनिका, तैर्निभा सदृशी. ॥ ४ ॥ अथ नीललेश्याया वर्णमाह—

॥ मूलम् ॥—नीलाशोकसंकासा । चासपिछसमप्पभा ॥ वेरुलियनिद्धसंकासा । नीललेसाउ वण्णउ ॥ ५ ॥ व्याख्या—तु पुनर्नीललेश्या वर्णत ईदृशी भवति, कीदृशी? नीलश्चासावशोकश्च नीलाशोकस्तेन संकाशा सदृशी नीलाशोकसंकाशा. अशोकवृक्षो रक्तोऽपि भवति, तद्व्यवच्छेदार्थं नीलपदं. पुनः कीदृशी? चापपिछसमप्रभा. पुनः कीदृशी? स्निग्धवैडूर्यसंकाशा जात्यनीलमणिसदृशी ॥ अथ कापोतवर्णमाह—

॥ मूलम् ॥—अयसीपुप्फसंकासा । कोइलछदसन्निभा ॥ पारावयगीवनिभा । काउलेसाउ वन्नउ ॥ ६ ॥ व्याख्या—कापोतलेश्या वर्णत ईदृशी भवति. ईदृशी कीदृशी? अतसी धान्यविशेषस्तस्य पुष्पमतसीपुष्पं, तेन संकाशाऽतसीपुष्पसंकाशा. पुनः कीदृशी? को-

किलब्दसन्निभा कोकिलपक्षिपिञ्छसदृशी, पुनः कीदृशी? पारापतग्रीवानिभा. ॥ ६ ॥ अथ तेजोलेश्यावर्णमाह—

॥ मूलम् ॥—हिंगुलयधाउसंकासा । तरुणाइच्चसंनिहा ॥ सुयतुंडपईवनिभा । तेउलेसा उ वन्नओ ॥ ७ ॥ व्याख्या—तेजोलेश्या वर्णत ईदृशी भवति. ईदृशी कीदृशी? हिंगुलुकः प्रतीतः, स चासौ धातुश्च हिंगुलुकधातुस्तेन संकाशा हिंगुलुकधातुसंकाशा. अथवा हिंगुलुकः प्रसिद्धः, धातुर्गैरिका, ताभ्यां सदृशी. पुनः कीदृशी? तरुणादित्यसन्निभा सदृशी. पुनः कीदृशी? शुकतुंडप्रदीपनिभा, शुकचंचुप्रदीपार्चिस्सदृशी. ॥ ७ ॥ अथ पद्मलेश्यावर्णमाह—

॥ मूलम् ॥—हरियालभेयसंकासा । हालिद्दाभेयसप्पभा ॥ सणासणकुसुमनिभा । पम्हलेसा उ वन्नओ ॥ ८ ॥ व्याख्या—पद्मलेश्या वर्णत ईदृशी भवति. ईदृशी कीदृशी? हरितालभेदसंकाशा, हरितालस्य नटमंडनस्य भेदाः खंडा हरितालभेदास्तैः संकाशा तत्सदृशी. पुनर्हरिद्राभेदसत्प्रभा, पुनः शणासनकुसुमनिभा, शणं च असनश्च शणासनौ, तयोः कुसुमं, तेन सन्निभा शणासनकुसुमसन्निभा. शणं धान्यविशेषं, अशनो बीयकाख्यो वृ-

दास्तत्पुष्पसदृशी. ॥ ८ ॥ अथ शुक्ललेश्यावर्णमाह—

॥ मूलम् ॥—संखंककुंदसंकासा । खीरपूरसमप्पभा ॥ रययहारसंकासा । सुक्कलेसा उ वन्नओ ॥ ए ॥ व्याख्या—शुक्ललेश्या वर्णत ईदृशी भवति. ईदृशी कीदृशी? शंखश्च अंकश्च कुंदं च शंखांककुंदानि, तैः संकाशा शंखांककुंदसंकाशा. शंखः प्रसिद्धः, अंकः शुक्लमणिविशेषः. कुंदं कुंदवृक्षपुष्पं, एतैः सदृशी. पुनः क्षीरपूरसमप्रभा दुग्धपूरसदृशवर्णा. पुना रजतहाराभ्यां संकाशा, रजतं जातीयरूप्यं, हारो मुक्ताहारस्ताभ्यां सदृशीत्यर्थः. ॥ ए ॥ अथ षणां लेश्यानां रसमाह—

॥मूलम्॥—जह कडुयतुंबगरसो । निंबरसो कडुयरोहिणिरसो वा ॥ एत्तोवि अणंतगुणो । रसो उ किण्हाए नायव्वो ॥१०॥ व्याख्या—कृष्णायाः कृष्णलेश्याया ईदृशो रसो ज्ञातव्यः. ईदृशः कीदृशः? यथा यादृशः कटुकतुंबकरसस्तथा निंबस्य रसस्तथा कटुकरोहिणीरसः. कटुका चासौ रोहिणी च कटुकरोहिणी, तस्या रसः कटुकरोणीरसः. रोहिणी वनस्पतिविशेषः, एतेभ्योऽप्यनंतगुणोऽनंतसंख्यराशिना गुणितो रसः कृष्णलेश्याया भवतीत्यर्थः. ॥ १० ॥ अथ

नीललेश्याया रसमाह—

॥ मूलम् ॥—जह तिकडुयस्स रसो । तिक्खो जह हत्थिपिप्पलीए वा ॥ एत्तोवि अणंतगुणो । रसो उ नीलाए नायव्वो ॥ ११ ॥ व्याख्या—नीलाया नीललेश्याया ईदृशो रसो ज्ञातव्यः. यथा यादृशस्त्रिकटुकस्य त्रयाणां कटूनां समाहारस्त्रिकटु, त्रिकट्वेव त्रिकटुकं, सुंठीमचरिचपिप्पलात्मकं, तस्य रसो यादृक् तीक्ष्णो भवति. पुनर्यथा हस्तिपिप्पल्या गजपिप्पल्या वा रसो यादृशो भवति, इतोऽप्येभ्योऽपि नीलाया अनंतगुणो रसस्तीक्ष्णो भवति.

॥ मूलम् ॥—जह तरुणअंबयरसो । तुंवरकविट्ठस्स वावि जारिसउ ॥ इत्तोवि अणंतगुणो । रसो उ काउय नायव्वो ॥ १२ ॥ व्याख्या—कापोतलेश्याया रस ईदृशो ज्ञातव्यः. ईदृशः कीदृशः? यादृशस्तरुणाम्रकरसो भवति, तरुणमपरिपक्कं यदाम्रकमाम्रफलं तरुणाम्रकं, तस्य रसस्तरुणाम्रकरसः, तथा पुनस्तुंबरकपित्थस्य रसो यादृशो भवति, तुंबरं कच्चं कपित्थं तुंबरकपित्थं, तस्य रसो यादृग्भवति, एभ्योऽप्यनंतगुणो रसः कापोतलेश्याया ज्ञातव्यः.

॥ मूलम् ॥—जह परिणयंबगरसो । पक्ककविठ्ठस्स वावि जारिसउ ॥ इत्तोवि अणंत-

गुणो । रसो य तेऊए नायव्वो ॥ १३ ॥ व्याख्या—तेजोलेश्याया ईदृशो रसो भवति. ईदृशः कीदृशः? यादृशः परिणताम्रकरसो भवति, पक्वाम्रफलस्य रसो भवति. पुनर्यादृशः पक्वकपित्थस्यापि रसो भवति. 'इत्तो' एभ्योऽप्यनंतगुणो रसस्तेजोलेश्याया ज्ञातव्यः, इत्यनेन किंचिदाम्लः किंचिन्मधुरश्चेति हार्द. ॥ १३ ॥

॥ मूलम् ॥—वरवारुणीयरसो । विविहाण व आसवाण जारिसउ ॥ महुमेरगस्स य रसो । इत्तो पम्हाए परएणं ॥ १४ ॥ व्याख्या—पद्मायाः पद्मलेश्याया रस ईदृशो ज्ञातव्यः. ईदृशः कीदृशो? यादृशः वरवारुण्याः प्रधानमदिराया रसो भवति, पुनर्विविधानामासवानां कुसुमोत्पन्नानां मद्यानां यादृशो रसो भवति, तथा पुनर्मधुमैरेयकस्य रसो यादृशो भवति, मधु मद्यविशेषं. मैरेयं सरकाभिधानं, मधु च मैरेयं च मधुमैरेयं, तस्य मधुमैरेयस्य रसो यादृग्भवति, अत एभ्यो रसेभ्यः पद्मायाः पद्मलेश्याया रसः परकेणानंतगुणाधिकत्वेन भवति. अयं च रस. किंचिदाम्लकषायो मधुरश्चेति भाव्यं. ॥ १४ ॥

॥ मूलम् ॥—खज्जूरमुद्दियरसो । खीररसो खंमसक्कररसो वा ॥ इत्तोवि अणंतगुणो । रसो

३४

उ सुक्काए नायव्वो ॥ १५ ॥ व्याख्या—शुक्लायाः शुक्ललेश्याया ईदृशो रसो नवति. ईदृशः कीदृशः? यादृशः खर्जूरमृद्धीकयो रसः, खर्जूरं पिंमखर्जूरं, मृद्धीका द्राक्षा, तयोर्यादृग् रसः स्यात्, तथा पुनर्यादृक् क्षीरस्य दुग्धस्य रसो नवति, तथा खंमशर्कररसो यादृशो नवति, खंमश्चेक्षुरसविकारसंस्कारः, शर्करा च तत्प्रनवा, तयो रसो यादृशो नवति, अत एन्यो र-सेन्योऽपि शुक्ललेश्याया अनंतगुणो रसो ज्ञातव्यः. अत्यंतमधुररसो ज्ञेय इत्यर्थः. ॥ १५ ॥

अथ षमां लेश्यानां गंधमाह—

॥ मूलम् ॥—जह गोमरुस्स गंधो । सुणगमरुस्स व जहा अहिमरुस्स ॥ एत्तोवि अ-णंतगुणो । लेसाणं अप्पसत्थाणं ॥ १६ ॥ व्याख्या—अप्रशस्तानां लेश्यानां कृष्णनीलकापो-तानां तिसृणामतोऽप्येन्यो दुर्गंधेन्योऽप्यनंतगुणो डुर्गंधो नवति. एन्यः केन्यः? यादृशो गोमृतकस्य गोकलेवरस्य, तथा शुनो मृतकस्य वा, अथवा यथाऽहिमृतकस्य सर्पकलेवरस्य गंधो नवति, ततोऽनंतगुणो डुर्गंधो नवति. इह लेश्यानामप्रशस्तत्वं गंधाद्यशुनत्वादिति नावः.

॥ मूलम् ॥—जह सुरहिकुसुमगंधो । गंधवासाण पिस्समाणाणं ॥ एत्तोवि अणंतगुणो ।

पसत्थलेसाण तिण्हंपि ॥ १७ ॥ व्याख्या—तिसृणामपि प्रशस्तलेश्यानां तैजसीपद्मशुक्लानामेतादृशो गंधो भवति. एतादृशः कीदृशः? यादृशः सुरभिकुसुमानां जातिचंपकादीनां पुष्पाणां गंधवासानां यादृशो गंधो भवति, गंधाश्च वासाश्च गंधवासाः, गंधाः कुष्टपुटपाकनिष्पन्नाः. वासा इतरे कर्पूरकर्चरिकाद्याः, तेषां चूर्णीक्रियमाणानां गंधो भवति, अत एभ्योऽपि गंधेभ्योऽनंतगुणो गंधः प्रशस्तलेश्यानां ज्ञेय इत्यर्थः. ॥ १७ ॥ अथ लेश्यानां स्पर्शमाह—

॥ मूलम् ॥—जह करगयस्स फासो । गोजिब्भाए व सागपत्ताणं ॥ एत्तोवि अणंतगुणो । लेसाणं अप्पसत्थाणं ॥ १८ ॥ व्याख्या—अप्रशस्तानां लेश्यानां कृष्णनीलकापोतानां स्पर्श एतादृशो भवति. एतादृशः कीदृशः? यादृशः क्रकचस्य स्पर्शः, पुनर्यादृशो गोजिह्वायाः स्पर्शः. तथा शागवृक्षस्य पत्राणां स्पर्शो भवति, एभ्यः स्पर्शेभ्योऽप्यशुभानां लेश्यानामनंतगुणः स्पर्शो ज्ञेयः. ॥ १८ ॥

॥ मूलम् ॥—जह बूरस्स व फासो । नवणीयस्स य सिरीसकुसुमाणं ॥ एत्तोवि अणंतगुणो । पसत्थलेसाण तिण्हंपि ॥ १९ ॥ व्याख्या—प्रशस्तलेश्यानां तिसृणामपि तेजोले-

श्यापद्मलेश्याशुक्कलेश्यानां स्पर्श ईदृशो जवति. ईदृशः कीदृशः? यादृशो बूरस्य वनस्पतिविशेषस्य स्पर्शो जवति, च पुनर्नवनीतस्य म्रक्षणस्य स्पर्शो यादृशो जवति, पुनः शिरीषवृक्षस्य कुसुमानां यादृशः स्पर्शो जवति, एतेज्यः स्पर्शेज्योऽप्यनंतगुणः स्पर्शो जव्यानां लेश्यानां ज्ञेयः. ॥ १९ ॥ अथ सर्वलेश्यानां परिणामा उच्यंते—

॥ मूलम् ॥—तिविहोवि नवविहो वा । सत्तावीसइविहेक्कसीउ वा ॥ दुसउ तेयालो वा । लेसाणं होइ परिणामो ॥ २० ॥ व्याख्या—लेश्यानां परिणामस्तद्रूपगमनात्मकस्त्रिविधोऽपि जवति, पुनर्नवविधो जवति, तथा सप्तविंशतिविधः, तथैकाशीतिविधः, तथा पुनस्त्रिचत्वारिंशदधिकद्विशतविधो वा लेश्यानां परिणामो जवति. तत्र त्रिविधो यथा—जघन्यमध्यमोत्कृष्टभेदेन जवति प्रत्येकं. यदैतेषामपि जघन्यादीनां स्वस्थानतारतम्यचिंतायां त्रयेण गुणना क्रियते तदा नवविधः. एवं पुनस्त्रिकगुणनया सप्तविंशतिविधत्वं जवति, एवं पुनः पुनर्गुणनयैकाशीतिविधत्वं भवति, पश्चात्पुनरेवं त्रिचत्वारिंशदधिकद्विशतविधत्वं जावनीयं, उपलक्षणं चेदं, तरतमयोगविचारणया संख्यानियमो नास्ति. तथा च प्रज्ञापनासूत्रे—किएहले-

साणं भंते कइविहं परिणामं परिणमइ? गोयमा! तिविहं वा, नवविहं वा, सत्तावीसइविहं वा, इक्कासीइविहं वा, तेयालसएहिय डुसयविहं वा बहुं वा परिणामं परिणमइ, जाव सुक्कलेसाइत्ति. ॥ २० ॥ अथ तावत्कृष्णलेश्यापरिणाममाह—

॥ मूलम् ॥—पंचासवप्पवत्तो । तीहिं अगुत्तो छसु अविरओ य ॥ तिव्वारंभपरिणओ । खुद्दो साहस्सिओ नरो ॥२१॥ निद्धंसपरिणामो । निस्संसो अजिइंदिओ ॥ एयजोगसमाउत्तो किण्हलेसं तु परिणामो ॥ २२ ॥ युग्मं ॥ व्याख्या—एतद्योगसमायुक्तो नरः प्राणी कृष्णां लेश्यांप्रति परिणमेत्, कृष्णलेश्यां भजेदित्यर्थः. अत्र नरशब्देन केवलं पुरुष एव न गृह्यते, स्त्र्यादिष्वपि कृष्णलेश्यायाः संभवात्. एते सूत्रे उच्यमाना योगा एतद्योगास्तैः समायुक्तः सम्यग्प्रवर्तित एतद्योगसमायुक्तः. ते के योगाः? इत्याह—पंच च ते आश्रवाश्च पंचाश्रवाः प्राणातिपातादयः, तेषु प्रवृत्तः सन्. पुनः कीदृशः? तिसृभिरगुप्तो मनोगुप्तिवाग्गुप्तिकायगुप्तिरहितः. पुनर्यः षट्सु पृथ्व्यादिकायेष्वविरतः, षट्कायोपमर्दयुक्त इत्यर्थः. पुनस्तीव्रा उत्कटा आरंभाः सावद्यव्यापारास्तेषु परिणतस्तद्रूपतां प्राप्तस्तीव्रारंभपरिणतः. क्षुद्रो हि सर्वे-

ष्वप्यहितवांछकः. पुनः साहसिकः, सहसा अविचाय प्रवर्तते इति साहसिकः, चौर्यपरदारासेवाकारीत्यर्थः. ॥ २१ ॥ पुनः कीदृशः? निद्धंसपरिणामो नितरां ध्वंसो निध्वंशोऽत्यंतलोकद्वयविरुद्धाचिंताविकलः परिणामो यस्य स निद्धंसपरिणामः. पुनर्यो नृशंसो जवति, निस्त्रिंशो जीवान् हिंसन् यो मनागपि शंकां न करोति स निस्त्रिंश इत्युच्यते. पुनः कीदृशः? अजितेंद्रियो जुत्कलेंद्रियः, एतादृशो यो जवति, स कृष्णलेश्यां प्राप्नोतीति जावः. ॥ २२ ॥

॥ मूलम् ॥—इस्सा अमरिस अतवो । अविज्जा माया अहीरिया ॥ गिद्धी पउसो य सढे । पमत्ते रसलोलुए ॥ २३ ॥ सायगवेसेयारंजा—विरउ खुद्दो साहस्सिउ नरो ॥ एय जोगसमाउत्तो । नीललेसं तु परिणमे ॥ २४ ॥ व्याख्या—एतद्योगसमायुक्तः प्राणी नीललेश्यांप्रति परिणमेत्, नीललेश्यां जजेत्. ते के योगाः? ईर्ष्या परगुणासहनं, अमर्षो महाकदाग्रहः, अतपस्तपसामजावः, ईर्ष्या च अमर्षश्च अतपश्चेर्ष्यामर्षातपः, तथा पुनरविद्या कुशास्त्ररूपा, पुनर्माया कापट्यं, अहीक्ता निर्लज्जता, गृद्धिर्विषयलांपट्यं, प्रद्वेषः प्रकृष्टद्वेषजावः, एते सर्वे योगा दोषरूपा यस्मिंस्तिष्ठति, गुणगुणिनोरजेदात्, स प्राणी नीलले-

ल्यापरिणामवान् भवति. पुनः कीदृशः? शठो मिथ्याप्रलापी, पुनः कीदृशः सः? प्रमत्तोऽष्टमदयुक्तः. पुनर्यो रसलोलुपः. ॥ २३ ॥ पुनर्यः प्राणी सातगवेषक इंद्रियसुखाभिलाषी, कथं मम सुखं स्यादिति बुद्धिमान्. पुनर्य आरंभात्प्राणिसंमर्दादविरत आरंभाऽविरतः, पुनर्यः क्षुद्रो नीचः साहसिकः. एतादृशः प्राणी नीललेश्यावानित्यर्थः. ॥ २४ ॥ अथ कापोतलेश्यालक्षणमाह—

॥ मूलम् ॥—वंके वंकसमायारे । नियडिल्ले अणुज्जुए ॥ पलिउंचग उवहिए । मिच्छादिट्ठी अणायरिए ॥ २५ ॥ उप्फालग दुट्ठवाई य । तेणे यावि य मच्छरी ॥ एयजोगसमाउत्तो । काउलेसं तु परिणमे ॥ २६ ॥ व्याख्या—एतद्योगसमायुक्तः प्राणी कापोतलेश्यां प्रति परिणमेत् प्राप्नुयादित्यर्थः. कीदृशः? यो वंको वचसा वक्रः, पुनः कीदृशः? वंकसमाचारः. वक्रः समाचारो यस्य स वक्रसमाचारो वक्रक्रियाकारी. पुनर्यः 'नियडिल्ले' इति निकृतिमान्, निकृतिः शाठ्यं, तद्विद्यते यस्येति निकृतिमान्. पुनर्योऽनृजुकोऽसरलः, कथंचित्सरलं कर्तुमशक्य इत्यर्थः. पुनर्यः 'पलिउंचग' इति प्रतिकुंचकः स्वदोषप्रच्छादनपरः, पु-

34

नः कीदृशः? औपधिक उपधिना कपटेन चरतीत्यौपधिकः, पुनर्यो मिथ्यादृष्टिर्विपरितश्रद्धा
वान्. पुनर्योऽनार्यः सम्यग्लक्षणरहितः. ॥ २५ ॥ पनर्य उत्फालकदुष्टवादी, उत्फालयति वि-
दारयति परं यदुत्फालकं दुःखोत्पादकं दुष्टं वदते इत्येवंशील उत्फालकदुष्टवादी. पुनर्यः
स्तेनश्चापि नवति चौरोऽपि भवति. पुनर्यो मत्सरी, अन्यस्य संपदं दृष्ट्वाऽसहनः, एतद्योग-
समायुक्त एतादृशः कापोतलेश्यावान् ज्ञेयः. ॥ २६ ॥ अथ तेजोलेश्यालक्षणमाह—

॥ मूलम् ॥—नीयावत्ती अचवले । अमाई अकुतूहले विणीयविणए दंते । जोगवं उ-
वहाणवं ॥ २७ ॥ पियधम्मे दढधम्मे-वज्जनीरू हिएसए ॥ एयजोगसमाउत्ते । तेउलेसं तु
परिणमे ॥ २८ ॥ व्याख्या—एतद्योगसमायुक्तः प्राणी तेजोलेश्यां परिणमेत्. कीदृशः प्रा-
णी? नीचैर्वृत्तिः कायवाङ्मनोनिरनुत्सेको नम्रतायुक्त इत्यर्थः. पुनर्यः प्राप्यचपलो नवति, पु-
नरमायो मायारहितः, पुनर्योऽकुतूहली कुतूहलरहितः, पुनर्यो विनीतविनयः कृतगुर्वादियो-
ग्यव्यवहारः, पुनर्यो दांत इंद्रियदमनपरायणः, पुनर्योगवान् सिद्धांतपाठव्यापारवान्. पुन-
र्य उपधानवहननिरतः. पुनर्यः प्रियधर्मा, पुनर्यो दृढधर्मा, पुनर्योऽवद्यनीरुः पापनीरुको न-

वति. पुनर्यो हितैषकः सर्वजीवेषु हितान्वेषी, अथवा हितं मोक्षमिच्छतीति हितैषकः, एतादृशस्तेजोलेश्यावान् भवति. ॥ २८ ॥ अथ पद्मलेश्यालक्षणमाह—

॥ मूलम् ॥—पयणुक्कोहमाणे य । माया लोजे य पन्नुए ॥ पसंतचित्ते दंतप्पा । जोगवं उवहाणवं ॥ २९ ॥ तहा पयणुवाई य । उवसंते जिइंदिए ॥ एयजोगसमाउत्तो । पम्हलेसं तु परिणमे ॥ ३० ॥ व्याख्या—एतद्योगसमायुक्तः प्राणी पद्मलेश्यां तु परिणमेत्. कीदृशः? प्रकर्षेण तनू क्रोधमानौ यस्य स प्रतनुक्रोधमानः, पुनर्यस्य मायालोजौ च प्रतनुकौ नवतः, पुनर्यः प्रशांतचित्तो जवति. पुनर्यो दांतात्मा, पुनर्योगवांस्तथोपधानवान् जवति. ॥ ॥ २९ ॥ तथा प्रतनुवादी स्वल्पजापी, पुनरुपशांतः कषायाजावेन शीतीभूतः, पुनर्यो जितेंद्रियः. एतैर्योगैः समायुक्त एतद्योगसमायुक्तः पद्मलेश्यावान् जवतीत्यर्थः. ॥ ३० ॥ अथ शुक्ललेश्यालक्षणमाह—

॥ मूलम् ॥—अट्टरुद्दाणि वज्जित्ता । धम्मसुक्काणि झायए ॥ पसंतचित्ते दंतप्पा । समीए गुत्ते य गुत्तिसु ॥ ३१ ॥ सरागे वीयरागे वा । उवसंते जिइंदिए ॥ एयजोगसमाउत्ते । सु-

क्लेसं तु परिणमे ॥ ३२ ॥ व्याख्या—अनयोरर्थः—एतद्योगसमायुक्तः प्राणी शुक्लेश्यां परिणमेत्. एतादृशः कीदृशः? य आर्त्तध्यानरौद्रध्याने वर्जयित्वा धर्मशुक्लौ धर्मध्यानशुक्लध्याने ध्यायेत्. पुनर्यः प्रशांतचित्तो दांतात्मा च भवेत्. पुनः समितः पंचसमितियुक्तस्तिसृषु गुप्तिषु गुप्तो भवेत्. ॥ ३१ ॥ स पुनः सरागोऽक्षीणानुपशांतकषायो वीतरागस्ततोऽन्यः ( क्षीणोपशांतकषायः ) उपशांतो जितेंद्रियः, एतैर्लक्षणैर्लक्षितः शुक्लेश्यां भजते इत्यर्थः. ॥ ३२ ॥ इह हि प्रशस्तलेश्यानां तेजःपद्मशुक्लानां विशेषणे पुनरुक्तिदूषणं न ज्ञेयं. तासां लेश्यानां हि तेजःपद्मशुक्लानामुत्तरोत्तरविशुद्ध्या शुभा, शुभतराः शुभतमाः परिणामा भावनीयाः. लेश्यानां लक्षणेषु दृष्टांतो जंबूवृक्षं निरीक्ष्य षट्पुरुषाणां परिणामविचारणेन भावनीयः. तथाहि—एकस्मिन् मार्गे षट्पुरुषाश्चेलुः, तैश्च क्षुधातुरैर्मार्गे चैकः फलितो जंबूवृक्षो दृष्टः. तदैकेन कृष्णलेश्यावता प्रोक्तमेनं वृक्षं मूलाच्छित्वैनं प्रपात्यास्य फलान्यद्मः १. तदा द्वितीयेन नीललेश्यावता चोक्तं किमर्थं मूलाच्छियते? एका महत्तमा शाखा छेदनीया, तस्याः फलान्यद्मस्तृप्तिं च कुर्मः २. तत् श्रुत्वा तृतीयः कापोतलेश्यावान् प्राह किमर्थं भो

अस्य वृक्षस्य महाशाखा छिद्यते? एकाया: प्रतिशाखाया अपि फलै: सर्वेषां तृप्ति: स्यात्, तस्मादेका लघ्वी प्रतिशाखैव छेदनीया. ३. ततश्चतुर्थस्तेजोलेश्यावानवादीत्, किमर्थं प्रतिशाखायाश्छेद:? बहवो गुच्छा: संति, तेन गुच्छा एव ग्राह्या:, तैरेव तृप्तिर्भविष्यति. ४. तत: पंचमेन पद्मलेश्यावता चैवमूचे, किमर्थं भो गुच्छा: पात्यंते? गुच्छेषु तु कच्चान्यपि फलानि भवंति, तस्मात्पक्कान्येव फलानि गृहीत्वा गृहीत्वाऽश्न:. ५. तत: षष्ठ: शुक्ललेश्यावान् पुमानाह—किमर्थं भो वृक्षात्फलानि पात्यंते? बहून्येवाध एव पतितानि संति, तैरेव क्षुधाया उपशमो भावीति. एवं लेश्योदाहरणं ज्ञेयं. ॥ ३२ ॥ अथ लेश्यानां स्थानान्याह—

॥ मूलम् ॥—असंखिज्जाणोसप्पिणीण । उसप्पिणीण जे समया ॥ संखाईया लोगा । लेसाण हवंति ठाणाइं ॥ ३३ ॥ व्याख्या—लेश्यानां सर्वासां तावंति स्थानानि भवंति, स्थानानि प्रकर्षाप्रकर्षकृतानि, अशुभानां लेश्यानां संक्लेशरूपाणि, शुभानां लेश्यानां विशुद्धरूपाणि भाजनानीत्यर्थ:. लेश्यानां कियंति स्थानानि भवंति? यथाऽसंख्येया उत्सर्पिण्यो वर्धमानवर्धमानभावरूपा:, तथा पुनरसंख्येया अवसर्पिण्यो हीयमानभावरूपा:, तासामुत्सर्पि-

के परमा स्थितिर्ज्ञातव्या. इयं त्वीशानदेवलोकापेक्षया प्रोक्तास्ति. ॥ ३७ ॥

॥ मूलम् ॥—मुहुत्तद्धं तु जहन्ना । दस उदही होंति मुहुत्तमब्भहिया ॥ उक्कोसा होइ ठिई । नायव्वा पम्हलेसाए ॥ ३८ ॥ व्याख्या—पद्मलेश्याया इयं स्थितिर्ज्ञातव्या. जघन्या त्वंतर्मुहूर्तमेव स्थितिर्भवति, उत्कृष्टा तु दशसागरोपमाण्यंतर्मुहूर्ताधिकानि परमा स्थितिरेतावती पद्मलेश्याया भवति. इयं ब्रह्मदेवलोकापेक्षयोक्तास्ति. ॥ ३८ ॥

॥ मूलम् ॥—मुहुत्तद्धं तु जहन्ना । तित्तीसं सागरा मुहुत्तहिया ॥ उक्कोसा होइ ठिई । नायव्वा सुक्कलेसाए ॥ ३९ ॥ व्याख्या—शुक्ललेश्याया इयं स्थितिर्ज्ञातव्या—जघन्या स्थितिरंतर्मुहूर्तं, शुक्ललेश्यायास्त्रयस्त्रिंशत्सागरोपमाणि मुहूर्ताधिकान्युत्कृष्टा स्थितिर्भवति.

॥ मूलम् ॥—एसा खलु लेसाणं । ओहेणं ठिई उ वन्निया होइ ॥ चउसुवि गईसु एत्तो । लेसाण ठिई उ वोछामि ॥ ४० ॥ व्याख्या—एषा लेश्यानां षण्णामप्योघेन सामान्यप्रकारेण गतिविवक्षांविना स्थितिर्वर्णिता भवति. इतश्चतसृषु गतिषु लेश्यानां सर्वासां स्थितिं वक्ष्यामि. ॥ ४० ॥

॥ मूलम् ॥—दसवाससहस्साइं। काऊए ठिई जहन्निया होइ ॥ तिण्णुदही पलिओवम—मसंखभागं च उक्कोसा ॥ ४१ ॥ व्याख्या—कापोतायाः कापोतलेश्याया दशवर्षसहस्राणि जघन्यिका स्थितिर्भवति, प्रथमायां पृथिव्यां रत्नप्रभायां प्रथमप्रस्तटेऽस्ति, तत्रस्थानां हि जघन्यतो दशवर्षसहस्रायुष्कत्वात्. उत्कृष्टा स्थितिस्तु कापोतलेश्यायास्त्रीणि सागरोपमाणि पल्योपमासंख्येयभागयुक्तानि. इयं तु स्थितिस्तृतीयपृथिव्या वालुकप्रभाया उपरितनप्रस्तटनारकाणामेतावती स्थितिरस्तीति. ॥ ४१ ॥

॥ मूलम् ॥—तिन्नुदही पलिओवम—असंखभागं जहन्ननीलठिई ॥ दसउदही पलिओवम—मसंखभागं च उक्कोसा ॥ ४२ ॥ व्याख्या—नीलाया जघन्या स्थितिस्त्रीणि सागरोपमाणि पल्योपमासंख्येयभागयुक्तानि. इयती जघन्या स्थितिस्तृतीयाया वालुकप्रभायाः पृथिव्या अपेक्षया ज्ञेया. पुनर्नीललेश्यायाश्च दशसागरोपमाणि पल्योपमासंख्येयभागयुक्तान्युत्कृष्टा स्थितिर्ज्ञेया. इयमपि पंचम्या धूमप्रभाया पृथिव्या उपरितनप्रस्तटापेक्षया ज्ञेया.

॥ मूलम् ॥—दसउदही पलिओवम—संखभागं जहन्निया होइ ॥ तेत्तीससागराइं।

एयवसर्पिणीनां यावंतः समया ज्ञवंति, पुनर्यावंतोऽसंख्येया लोकाकाशप्रदेशा ज्ञवंति, तावंति लेश्यानां स्थानान्यारुहंत्यारुहंति, पतंति पतंति च. शुज्ञान्यशुज्ञानि निर्मलानि कलुषाणि च स्थानानि ज्ञवंतीत्यर्थः. ॥ ३३ ॥ अथ लेश्यानां स्थितिमाह—

॥ मूलम् ॥—मुहुत्तद्धं तु जहन्ना । तित्तीसं सागरा मुहुत्तहिया ॥ उक्कोसा होइ ठिई । नायव्वा किएहलेसाए ॥ ३४ ॥ व्याख्या—कृष्णलेश्याया इति स्थितिर्ज्ञातव्या—जघन्या मुहूर्तार्धं, कैश्चिदंशैर्न्यूनं घटिकाद्वयमंतर्मुहूर्तमेव कृष्णलेश्यायाः स्थितिर्ज्ञवति. तथोत्कृष्टा स्थितिस्त्रयस्त्रिंशत्सागरोपमाणि मुहूर्ताधिकानि. अथ संप्रदायान्मुहूर्तार्धशब्देनांतर्मुहूर्तं गृह्यते. अतः कारणात् त्रयस्त्रिंशत्सागरोपमाण्यंतर्मुहूर्ताधिकानि परमा स्थितिः कृष्णलेश्याया ज्ञवति. ॥ ३४ ॥

॥ मूलम् ॥—मुहुत्तद्धं तु जहन्ना । दसउदहिपलियमसंखज्ञागमज्झहिया ॥ उक्कोसा होइ ठिई । नायव्वा नीललेसाए ॥ ३५ ॥ व्याख्या—नीललेश्याया जघन्यं स्तोककालं चेत्स्थितिर्ज्ञवति, तदांतर्मुहूर्तमेव. उत्कृष्टा स्थितिश्च दशसागरोपमाणि पल्योपमासंख्येयज्ञागा-

धिकानि. इह पूर्वोत्तरन्नवांतर्मुहूर्तद्वयप्रक्षेपेऽपि पल्योपमासंख्येयन्नाग एव. यतोऽसंख्येयन्नागानामसंख्येयन्नेदत्वादिति न्नावः, एवमुत्तरत्रापि न्नावनीयं. नीलायाः स्थितिर्न्नवतीति जघन्योत्कृष्टा च स्थितिर्ज्ञातव्या. इयं स्थितिश्च पंचमपृथिव्या धूमप्रन्नाया उपरितनप्रस्तटमाश्रित्योक्ता. ॥ ३५ ॥

॥ मूलम् ॥—मुहुत्तद्धं तु जहन्ना । तिन्नुदहिपलियमसंखन्नागमब्भहिया ॥ उक्कोसा होइ ठिई । नायव्वा काउलेसाए ॥ ३६ ॥ व्याख्या—कापोतलेश्याया इयं स्थितिर्ज्ञातव्या, जघन्या स्थितिस्तु कापोतलेश्याया अंतर्मुहूर्तं न्नवति, तथा पुनः कापोतलेश्यायास्त्रीणि सागरोपमाणि पल्योपमासंख्येयन्नागाधिकान्युत्कृष्टा स्थितिर्न्नवतीति ज्ञातव्या. इति स्थितिस्तु तृतीयनरकपृथिव्या वालुकाया अपेक्षयोक्तास्ति. ॥ ३६ ॥

॥ मूलम् ॥—मुहुत्तद्धं तु जहन्ना । दोउदहिपलियमसंखन्नागमब्भहिया ॥ उक्कोसा होइ ठिई । नायव्वा तेउलेसाए ॥ ३७ ॥ व्याख्या—तेजोलेश्यायाश्चेयं स्थितिर्ज्ञातव्या, जघन्या त्वंतर्मुहूर्तं, उत्कृष्टा च तेजोलेश्याया द्वावुदधी द्वे सागरोपमे पल्योपमासंख्येयन्नागाधि-

के परमा स्थितिर्ज्ञातव्या. इयं त्वीशानदेवलोकापेक्षया प्रोक्तास्ति. ॥ ३७ ॥

॥ मूलम् ॥—मुहुत्तद्धं तु जहन्ना । दस उदही होंति मुहुत्तमब्भहिया ॥ उक्कोसा होइ ठिई । नायव्वा पम्हलेसाए ॥ ३८ ॥ व्याख्या—पद्मलेश्याया इयं स्थितिर्ज्ञातव्या. जघन्या त्वंतर्मुहूर्तमेव स्थितिर्भवति, उत्कृष्टा तु दशसागरोपमाण्यंतर्मुहूर्ताधिकानि परमा स्थितिरेतावती पद्मलेश्याया भवति. इयं ब्रह्मदेवलोकापेक्षयोक्तास्ति. ॥ ३८ ॥

॥ मूलम् ॥—मुहुत्तद्धं तु जहन्ना । तित्तीसं सागरा मुहुत्तहिया ॥ उक्कोसा होइ ठिई । नायव्वा सुक्कलेसाए ॥ ३९ ॥ व्याख्या—शुक्कलेश्याया इयं स्थितिर्ज्ञातव्या—जघन्या स्थितिरंतर्मुहूर्तं, शुक्कलेश्यायास्त्रयस्त्रिंशत्सागरोपमाणि मुहूर्ताधिकान्युत्कृष्टा स्थितिर्भवति.

॥ मूलम् ॥—एसा खलु लेसाणं । ओहेणं ठिई उ वन्निया होइ ॥ चउसुवि गईसु एत्तो । लेसाण ठिई उ वोच्छामि ॥ ४० ॥ व्याख्या—एषा लेश्यानां षण्णामप्योघेन सामान्यप्रकारेण गतिविवक्षांविना स्थितिर्वर्णिता भवति. इतश्चतसृषु गतिषु लेश्यानां सर्वासां स्थितिं वक्ष्यामि. ॥ ४० ॥

उक्कोसा होइ किण्हाए ॥ ४३ ॥ व्याख्या—कृष्णायाः कृष्णलेश्याया दशसागरोपमाणि पल्योपमासंख्येयभागयुक्तानि जघन्यिका स्थितिर्भवति. इयं तु पंचम्या धूमप्रभाया नरकपृथिव्या अपेक्षया ज्ञेया. कृष्णायाः पुनरुत्कृष्टा स्थितिस्त्रयस्त्रिंशत्सागरोपमाणि. इयमप्युत्कृष्टा स्थितिः कृष्णलेश्यायाः सप्तम्यास्तमस्तमःप्रभाया नरकपृथिव्या अपेक्षया ज्ञेया. ॥ ४३ ॥

॥ मूलम् ॥—एसा नेरईयाणं । लेसाण ठिई उ वण्णिया होइ ॥ तेण परं वुच्छामि । तिरियमणुयाण देवाणं ॥ ४४ ॥ व्याख्या—एषा नैरयिकाणां नरकवासिनां जीवानां लेश्यानां जघन्योत्कृष्टभेदेन स्थितिर्वर्णिता भवति. 'तेण परं' इति ततः परं तिर्यग्मनुष्याणां तिरश्चां तथा मनुष्याणां च देवानां च स्थितिं वक्ष्यामि. ॥ ४४ ॥

॥ मूलम् ॥—अंतोमुहुत्तमद्धा । लेसाण ठिई जहिं जहिं जाउ ॥ तिरियाण नराणं च । वज्जित्ता केवलं लेसं ॥ ४५ ॥ व्याख्या—यस्मिन् यस्मिन् पृथ्वीकायादौ तिरश्चां यस्मिन् यस्मिन् स्थाने संमूर्छिमनराणां च यास्तु कृष्णाद्या लेश्या वर्तते, तासां लेश्यानां जघन्योत्कृष्टा च स्थितिरंतर्मुहूर्ताद्धा ज्ञेया. अंतर्मुहूर्तमद्धा कालो यस्या सांतर्मुहूर्ताद्धा. जघन्याप्यंतर्मुहू-

र्तकालं स्थितिः. उत्कृष्टाप्यंतर्मुहूर्तकालमेव स्थितिरस्ति. किं कृत्वा? केवलां शुक्लां लेश्यां वर्जयित्वा. तत्र शुक्ललेश्याया अभावो वर्तते, अन्याः कृष्णाद्याः कचित्कचित्काचित्काचिल्लेश्या संभवतीति भावः. तत्र पृथिव्यप्वनस्पतीनां कृष्णादिलेश्याचतुष्टयं, तेजोवायुविकलसंमूर्छिमतिर्यग्मनुष्यनारकाणां प्रथमलेश्यात्रयं भवतीत्यर्थः. ॥ ४५ ॥

॥ मूलम् ॥—मुहुत्तद्धं तु जहन्ना । उक्कोसा होइ पुव्वकोडीउ ॥ नवहिं वरसेहिं ऊणा । नायव्वा सुक्कलेसाए ॥ ४६ ॥ व्याख्या—शुक्ललेश्याया जघन्या स्थितिर्मुहूर्ताद्धेत्यंतर्मुहूर्तकालं स्थितिर्ज्ञातव्या. तथा पुनः शुक्ललेश्याया उत्कृष्टा स्थितिस्तु पूर्वकोटी नववर्षैर्न्यूना ज्ञातव्या. इह यद्यपि कश्चिदष्टवार्षिकोऽपि पूर्वकोट्यायुर्व्रतपरिणाममाप्नोति, तथापि नैतावद्वयःस्थस्य नववर्षपर्यायादर्वाक् शुक्ललेश्या संभवति, अतो नववर्षोना पूर्वकोटिरुक्ता. ॥४६॥

॥ मूलम् ॥—एसा तिरियनराणं । लेसाण ठिई उ वन्निया होइ ॥ तेण परं वुच्छामि । लेसाण ठिई उ देवाणं ॥ ४७ ॥ व्याख्या—एषा स्थितिस्तिरश्चां नराणां च वर्णिता भवति. 'तेणेति' पंचमीस्थाने प्राकृतत्वात्तृतीया, ततः परं देवानां लेश्यानां स्थितिं वक्ष्यामि. ॥४७॥

॥११६५॥

॥ मूलम् ॥—दसवाससहस्साइं । किण्हाए ठिई जहन्निया होइ ॥ पलियमसंखिज्जइमो । उक्कोसा होइ किण्हाए ॥ ४७ ॥ व्याख्या—कृष्णायाः कृष्णलेश्याया द्वादशवर्षसहस्राणि जघन्यका स्थितिर्भवति. पुनः कृष्णलेश्यायाः पल्योपमासंख्येयतमो भाग उत्कृष्टा स्थितिर्भवति. इयं च द्विविधा स्थितिर्भुवनपतिव्यंतराणामेतावदायुषामपेक्षयोक्तास्ति. ॥४७॥

॥ मूलम् ॥—जा किण्हाए ठिई खलु । उक्कोसा सा उ समयमज्झहिया ॥ जहन्नेण नीलाए । पलियमसंखं च उक्कोसा ॥ ४९ ॥ व्याख्या—या कृष्णायाः कृष्णलेश्यायाः खलु इति निश्चयेनोत्कृष्टा स्थितिरुक्ता, सैव स्थितिः समयाभ्यधिका समयेनैकेनाभ्यधिका समयाभ्यधिका जघन्येन ज्ञेया. च पुनर्नीलायाः पल्योपमासंख्येयभाग उत्कृष्टा स्थितिर्भवति. परमयमेव विशेषः—अयं यः पल्योपमासंख्येयो भागो वर्तते, स बृहत्तरो भागो ज्ञेयः. ॥ ४९ ॥

॥ मूलम् ॥—जा नीलाए ठिइ खलु । उक्कोसा सा उ समयमज्झहिया ॥ जहन्नेणं काऊए । पलियमसंखं च उक्कोसा ॥ ५० ॥ व्याख्या—खलु निश्चयेन या नीलाया उत्कृष्टा स्थितिरुक्ता, सा पुनः समयाभ्यधिका जघन्येन कापोतायाः कापोतलेश्यायाः स्थितिर्ज्ञेया.

च पुनः कापोतलेश्यायाः पल्योपमासंख्येयो भाग उत्कृष्टा स्थितिर्भवति. परमयमपि पल्योपमासंख्येयो भागो वृहत्तमो ज्ञेयः. इत्यनेन भवनपतिव्यंतराणामेव तावदायुषां लेश्यात्रयं दर्शितं. ॥५०॥ इत्थं निकायद्वयस्याद्यलेश्यात्रयमुक्त्वा चतुर्निकायस्य भाविनीं तेजोलेश्यास्थितिमाह—

॥ मूलम् ॥—तेण परं वुछामि । तेउलेसा जहा सुरगणाणं ॥ भवणवइवाणमंतर—जोइसवेमाणियाणं च ॥ ५१ ॥ व्याख्या—ततः परं 'भुवणवइवाणमंतरजोइसवेमाणियाणं' इति भुवनपतिव्यंतरज्योतिष्कवैमानिकानां सुरगणानां यथा येन प्रकारेण तेजोलेश्या जघन्योत्कृष्टस्थित्या भवति, तथाहं वक्ष्यामि. ॥ ५१ ॥

॥ मूलम् ॥—पलिउवमं जहन्ना । उक्कोसा सागरा उ दोन्निहिया ॥ पलियमसंखिज्जेणं । होइ भागेण तेऊए ॥ ५२ ॥ व्याख्या—तेजोलेश्याया जघन्या स्थितिः पल्योपमं भवति, उत्कृष्टा स्थितिस्तु द्वे सागरोपमे अधिके पल्योपमासंख्येयेन भागेन भवति. इयं परमा स्थितिस्तेजोलेश्याया भवति. इयं च सामान्योपक्रमेऽपि वैमानिकनिकायविषयतया ज्ञेया. तत्र सौधर्मेशानदेवानां जघन्योत्कृष्टाभ्यामेतावदायुर्वर्तते. उपलक्षणाच्छेषनिकायानामपि तेजोले-

श्यायाः स्थितिर्ज्ञेया. ॥ ५२ ॥

॥ मूलम् ॥—दसवाससहस्साइं । तेऊए ठिई उ जहन्निया होइ ॥ दोन्नुदही पलि-उवम—असंखनागं च उक्कोसा ॥ ५३ ॥ व्याख्या—तेजोलेश्यायाः स्थितिर्दशवर्षसहस्राणि जघन्या नवति. तथा पुनर्द्वे सागरोपमे पल्योपमासंख्येयनागयुक्ते उत्कृष्टा स्थितिस्तेजोलेश्याया नवति. तत्र व्यंतरनवनपतिदेवानाश्रित्य तेजोलेश्यायाः स्थितिर्दशवर्षसहस्राण्युक्ता, पुनर्द्वे सागरोपमे पल्योपमासंख्येयनागयुक्ते, इयं तु द्वितीयदेवलोकापेक्षया तेजोलेश्याया उत्कृष्टा स्थितिरुक्तेति तात्पर्यं. ॥ ५३ ॥

॥ मूलम् ॥—जा तेऊए ठिई खलु । उक्कोसा सा उ समयमब्भहिया ॥ जहन्नेणं पह्माए । दसमुहुत्ताहिया उ उक्कोसा ॥ ५४ ॥ व्याख्या—या तेजोलेश्यायाः खलु निश्चयेनोत्कृष्टा स्थितिर्वर्तते, सो तु सैव स्थितिः समयाभ्यधिका पद्मलेश्यायाः स्थितिर्ज्ञेया. इयं तु पद्मलेश्याया जघन्या स्थितिस्तृतीयसनत्कुमारदेवलोकापेक्षया नवति. उत्कृष्टा तु पद्मलेश्याया दशसागरोपमाण्यंतर्मुहूर्ताधिकानि स्थितिर्नवति. इयं च पद्मलेश्यायाः स्थितिः पंचमब्रह्मदे-

वलोकापेक्षया ज्ञेया. ॥ ५४ ॥

॥ मूलम् ॥—जा पह्माए ठिई खलु । उक्कोसा सा उ समयमप्नहिया ॥ जहन्नेणं सुक्काए । तेत्तीसमुहुत्तमप्नहिया ॥ ५५ ॥ व्याख्या—या पद्मलेश्यायाः खलु निश्चयेनोत्कृष्टा स्थितिर्वर्तते. सैव स्थितिरेकसमयाज्यधिका जघन्येन शुक्लायाः स्थितिर्जवति. इयं शुक्ललेश्यायाः स्थितिः षष्टस्य लांतकदेवलोकस्यापेक्षयोक्ता. अथ पुनः शुक्ललेश्याया उत्कृष्टा स्थितिस्त्रयास्त्रिंशत्सागरोपमाण्यंतर्मुहूर्ताज्यधिकानि जवति. इयं स्थितिस्तु पंचानुत्तरविमानापेक्षया ज्ञेया. ॥ ५५ ॥ अथ लेश्यानां गतिद्वारमाह—

॥ मूलम् ॥—किण्हा नीला काऊ । तिन्निवि एया उ अहमलेसाउं ॥ एयाहिं तिहिं जीवो । दुग्गइं उववज्जई ॥ ५६ ॥ व्याख्या—कृष्णा नीला कापोती, एतास्तिस्रोऽपि लेश्या अधमा ज्ञेयाः. एताजिस्तिसृजिर्जीवो दुर्गतिमुपपद्यते. ॥ ५६ ॥

॥ मूलम् ॥—तेउ पह्मा सुक्का । तिन्निवि एयाउ धम्मलेसाउं ॥ एयाहिं तिहिं जीवो । सुग्गइं उववज्जई ॥ ५७ ॥ व्याख्या—तेजस्यास्तेजःपद्मशुक्ला एतास्तिस्रोऽपि लेश्या धर्मा-

धर्मनिबंधिन्यो ज्ञेयाः. एताभिस्तिस्रभिर्लेश्याभिर्जीवः सद्गतिमुपपद्यते. ॥ ५७ ॥

॥ मूलम् ॥—लेसाहिं सव्वाहिं । पढमे समयंमि परिणयाहिं तु ॥ न हु कस्सवि उववाओ । परे भवे अत्थि जीवस्स ॥ ५८ ॥ लेसाहिं सव्वाहिं । चरमे समयंमि परिणयाहिं तु ॥ नवि कस्सवि उववाओ । परे भवे अत्थि जीवस्स ॥ ५९ ॥ युग्मं ॥ व्याख्या—सर्वाभिर्लेश्याभिः कृष्णनीलकापोततेजःपद्मशुक्लाभिः षड्भिः प्रथमे समये तत्प्रतिपत्तिकालापेक्षया परिणताभिरात्मरूपत्वं प्राप्ताभिः सतीभिः परभवे कस्यापि जीवस्योपपातो नास्ति न भवतीत्यर्थः. उपपत्तिर्न भवतीत्यनेन प्रथमसमये लेश्यासूत्पन्नासु परभवे जीवेनोत्पद्यते. सर्वाभिर्लेश्याभिश्चरमसमयेंत्यसमये परिणताभिरात्मरूपतामापन्नाभिः सतीभिः परभवे कस्यापि जीवस्योपपातो नास्तीति. ॥ ५८ ॥ ५९ ॥ तर्हि कदोत्पद्यते? इत्याह—

॥ मूलम् ॥—अंतोमुहुत्तंमि गए । अंतमुहुत्तंमि सेसए चेव ॥ लेसाहिं परिणयाहिं । जीवा गच्छंति परलोयं ॥ ६० ॥ व्याख्या—लेश्याभिः परिणताभिः सतीभिः शुभाशुभाभिः षड्भिः सतीभिरंतर्मुहूर्ते गते सत्यंतर्मुहूर्ते च शेषे च सति जीवाः परलोकं परभवं गच्छंतीत्य-

नेन जीवस्य मरणकाले आगामिभवलेश्यांतर्मुहूर्तं यावदवश्यं भवति. तथा पुनर्जीवस्योत्पत्तिकालेऽतीतभवलेश्यांतर्मुहूर्तं यावदवश्यं भवति. अन्यथा नराणां तिरश्चां च देवत्वे नारकत्वे चोत्पत्स्यमानानां मृत्युकालेतर्मुहूर्तमुत्तरभवलेश्याः कथं संभवंति ? तथा देवानां नारकाणां च च्यवनानंतरं नरतिर्यक्षूत्पन्नानां प्राग्भवलेश्या अंतर्मुहूर्तं कथं संभवंति ? तस्मादंतर्मुहूर्तविशेष आयुषि परभवलेश्यापरिणामो भवत्येव. यदुक्तमागमे—तिरिनरआगामियभव—लेसाए अइगए सुरा निरया ॥ पुव्वभवलेससेसे । अंतमुहुत्ते मरणमिंति ॥ १ ॥ अत एव देवानां नारकाणां लेश्यायाः प्रागुत्तरभवांतर्मुहूर्तद्वयसहितनिजायुःकालं यावत्स्थितिमत्त्वमुक्तं. ॥ ६० ॥ संप्रत्यध्ययनार्थमुपसंजिहीर्षुराह—

॥ मूलम् ॥—तम्हा एयासिं लेसाणं । अणुभागे वियाणिया ॥ अप्पसत्था उ वज्जित्ता । पसत्थाउ अहिट्ठिए त्तिवेमि ॥ ६१ ॥ व्याख्या—मुनिस्तस्मात्कारणादप्रशस्ता लेश्या दुर्गतिकारणं, प्रशस्ता लेश्याः सद्गतिहेतुः, सर्वासां प्रशस्ता प्रशस्तानां लेश्यानामनुभागान् रसान् विज्ञाय, अप्रशस्ता लेश्याः कृष्णनीलकापोताख्यास्तिस्रो वर्जयित्वा, प्रशस्तास्तेजःप-

34-35

ध्शुक्लाख्यास्तिस्रो लेश्या अधितिष्ठेत्, भावप्रतिपत्त्याश्रयेदिति सुधर्मास्वामी जंबूस्वामिनं प्राह, हे जंबू! अहं श्रीवीरवाक्यादिति ब्रवीमि. ॥ ६१ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां चतुस्त्रिंशमध्ययनमर्थतः संपूर्णं. ॥ ३४ ॥ श्रीरस्तु ॥

---

## ॥ अथ पंचत्रिंशमध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययनेऽप्रशस्तलेश्यास्त्याज्याः, प्रशस्ता लेश्याश्च ग्राह्या इत्युक्तं, अग्रेतनेऽध्ययने च भिक्षूणां गुणा उच्यंते. प्रशस्ता लेश्या हि गुणवतां भिक्षूणामेव संभवंतीति पूर्वापरयोः संबंधः.

॥ मूलम् ॥—सुणेह मे एगग्गमणे । मग्गं बुद्धेहिं देसियं ॥ जमायरंतो भिक्खू । दुक्खाणंतकरो भवे ॥ १ ॥ व्याख्या—हे शिष्याः! मम कथयतो यूयमेकाग्रमनसः संतस्तं मार्गं

गुणवत्साधुमार्गं शृणुत? तमिति किं? यं मार्गं समाचरन् भिक्षुर्दुःखानामंतं करोति. कीदृशं तं मार्गं? बुधैस्तीर्थकरैर्देशितं विस्तरत्वेन प्रकाशितं. ॥ १ ॥

॥ मूलम् ॥—गिहवासं परिच्चज्ज । पव्वज्जामस्सिउ मुणी ॥ इमे संगे वियाणिज्जा । जेहिं सज्जंति माणवा ॥ २ ॥ व्याख्या—गृहवासं परित्यज्य प्रव्रज्यामाश्रितो मुनिरिमान् वक्ष्यमाणांस्तान् संगान् पुत्रकलत्रादीन् संसारहेतून् विजानीयात्. तान् कान् संगान्? यैः संगैर्बंधनैः कृत्वा मानवाः सज्यंते कर्मबंधनैः कृत्वा संसारिणो बध्यंते इत्यर्थः. ॥ २ ॥

॥ मूलम् ॥—तहेव हिंसं अलियं । चोज्जं अबंभसेवणं ॥ इछाकामं च लोहं च । संजउ परिवज्जए ॥ ३ ॥ व्याख्या–ते के संगा मुनिना त्याज्याः? इत्याह–संयत एतान् संगान् परिवर्जयेत्. प्रथमं हिंसां, तथैवशब्दः पदपूरणे, पुनरलीकं मृषाभाषणं, चौर्यं तथाऽब्रह्मसेवनं मैथुनसेवनं. इछा वांछारूपः कामं भोगसुखं, लोभं परिग्रहरूपं परिवर्जयेत्समंतात्त्यजेत्.

॥ मूलम् ॥—मणोहरं चित्तघरं । मल्लधूवणवासियं ॥ सकवाडं पंडुरुल्लोयं । मणसावि न पछए ॥ ४ ॥ व्याख्या–पुनर्मनोहरं चित्रगृहं विचित्रमंदिरं, चित्रैः सहितं गृहं वा चित्र-

गृहं पुनः कथंभूतं गृहं? मल्लधूपनवासितं, माल्यानि च धूपनानि, माल्यधूपनानि, तैर्वासितं माल्यधूपनवासितं. तत्र माल्यानि ग्रथितपुष्पाणि, धूपनानि दशांगादीनि, तैः सुगंधीकृतमित्यर्थः. पुनः कीदृशं चित्रमंदिरं? सकपाटं कपाटसहितं. पुनः कीदृशं? पांडुरोल्लोचमुज्ज्वलचंद्रोपकं. साधुरेतादृशं गृहं मनसापि न प्रार्थयेत्. अपि शब्दाद्वचसा न प्रार्थयेत्. ॥ ४ ॥ तादृशे गृहे तिष्ठतः साधोः को दोषः? तमाह—

॥ मूलम् ॥—इंदियाणि उ भिक्खुस्स । तारिसंमि उवस्सए ॥ दुक्कराइं निवारेउं । कामरागविवड्ढणे ॥ ५ ॥ व्याख्या—तादृशे मनोहरे चित्रमाल्यधूपादिसहिते उपाश्रये भिक्षोः साधोरिंद्रियाणि तु निवारयितुं विषयेभ्यो व्यावर्तयितुं दुष्कराणि दुःशक्यानि. पुनः कीदृशे मंदिरे? कामरागविवर्धने, कामा इष्टेंद्रियविषयाः, तेषु रागः स्नेहस्तं विवर्धयतीति कामरागविवर्धनं, तस्मिन्. ॥ ५ ॥ तदा कुत्र स्थातव्यमित्याह—

॥ मूलम् ॥—सुसाणे सुन्नगारेसु । रुक्खमूले व एगओ ॥ पइरिक्के परकडे वा । वासं तत्थाभिरोयए ॥ ६ ॥ व्याख्या—एकक एकाकी द्रव्यतो भावतश्च, द्रव्यतः सहायरहितः,

भावतो रागादिरहितः, परिवारयुतोऽपि मनसैकत्वं चिंतयन् साधुस्तत्र तेषु स्थानेषु वासं निवासं रोचयेत, आत्मने रोचयेत्. केषु केषु स्थानेष्वित्याह—स्मशाने, पुनः शून्यागारे, वाशब्दश्चार्थे, तथा पुनर्वृक्षमूले, पुनर्वान्यत्र गृहादौ. 'पइरिक्के' इति देशीभाषयैकांते स्त्रीपशुपंडकादिरहिते. पुनः कीदृशे स्थाने? परकृते, परैरात्मार्थं कृते. ॥ ६ ॥

॥ मूलम् ॥—फासुयंमि अणाबाहे । इत्थीहिं अणभिदुए ॥ तथा संकप्पए वासं । भिख्खू परमसंजए ॥ ७ ॥ व्याख्या—भिक्षुर्भिक्षावृत्तिः परमसंयतः सप्तदशविधसंयमवान् साधुस्तत्र पूर्वोक्तस्थाने स्मशानादौ वासं संकल्पयेत्कुर्यात्. कथंभूते स्थाने? प्रासुके जीवरहिते, अनाबाधे स्वाध्यायांतरायकारणरहिते, पुनः स्त्रीभिरनभिद्रुतेऽकृतोपद्रवे स्त्र्यादिसमीपवासरहिते इत्यर्थः. ॥ ७ ॥

॥मूलम्॥—न सयं गिहाइं कुविज्जा । नेव अन्नेहिं कारए ॥ गिहकम्मसमारंभे । भूयाणं दिस्सए वहो ॥८॥ व्याख्या—साधुः स्वयं गृहाणि न कुर्यात्, न च साधुरन्यैरन्यजनैः कारयेत्. साधुर्गृहं न कुर्यान्न च कारयेत्. तत्र को हेतुस्तमाह—यतो गृहकर्मसमारंभे गृहकर्म इष्टि-

कामृत्तिकहाखननजलाद्यानयनकाष्ठादिनिमित्तवृक्षादिछेदनादिकर्म गृहकर्म, तस्य समारंभो गृहकर्मसमारंभः, तत्र भूतानां प्राणिनां वधो दृश्यते. ॥ ८ ॥

॥ मूलम् ॥—तसाणं थावराणं च । सुहमाणं बायराण य ॥ तम्हा गिहसमारंभे । संजउ परिवज्जए ॥ ए ॥ व्याख्या—केषां प्राणिनां वधो दृश्यते? गृहकर्मसमारंभे त्रसाणां, द्वींद्रियत्रींद्रियचतुरिंद्रियपंचेंद्रियाणां, तथा स्थावराणां, पृथिव्यप्तेजोवायुवनस्पतीनां सूक्ष्माणां लघुतरशरीराणां, अथवा सूक्ष्माणां चर्मचक्षुरगोचराणां, बादराणां स्थूलशरीराणां वधो दृश्यते. तस्मादारंभस्य प्राणिवधहेतुत्वात्संयतः साधुरारंभं परिवर्जयेत्. ॥ ए ॥ अथाहारविधिमाह—

॥ मूलम् ॥—तहेव भत्तपाणेसु । पयणे पयावणेसु य ॥ पाणभूयदयट्ठाए । न पए न पयावए ॥ १० ॥ व्याख्या—तथैव साधुर्भक्तपानेष्वन्नपानीयेषु पचने पाचने च त्रसानां स्थावराणां च वधत्वेन प्राणभूतदयार्थं त्रसस्थावराणां दयार्थं स्वयमन्नपानीयं न पचेत्, तथा साधुर्नान्नपानीयमन्येन पाचयेत्. ॥ १० ॥ अन्नपानीयपचनपाचने जीवहिंसां दर्शयति—

॥ मूलम् ॥—जलधन्ननिस्सिया जीवा । पुढवीकट्ठनिस्सिया ॥ हम्मंति भत्तपाणेसु । तम्हा भिक्खु न पयावए ॥ ११ ॥ व्याख्या—भक्तपानेषु पच्यमानेषु तथा पाच्यमानेषु सत्सु जलधान्यनिश्रितास्त्रसथा जीवास्तथा पृथ्वीकाष्टनिश्रिता जीवा हन्यंते. जलं च धान्यं च जलधान्यं, तत्र निश्रितास्तत्रोत्पन्नास्तत्रागताः, जलरूपा एकेंद्रिया जीवाः, तथा तत्र भवाः पूतरकादयो जीवाः, ते पचनकाले ततोऽन्यत्र निश्रिता वा हन्यंते यतो हि ये जीवा यत्र तिष्टंति, यत्रोत्पद्यंते तत्र स्थिता एव ते सुखिनो भवंति. तदाश्रयनाशे तेषामपि नाशो भवति. एवं पृथ्वी च काष्टं च पृथ्वीकाष्टे, तत्र निश्रिताः पृथ्वीकाष्टनिश्रिता घूणाद्या हन्यंते. भक्तपानपाके हि पृथ्वीकायवनस्पतिकाययोर्विराधना स्यादेव. तस्मात् त्रसस्थावरविनाशहेतुत्वाद् भिक्षुर्न पचेन्न पाचयेदिति भावः. ॥ ११ ॥ अथाग्नेरारंभो हिंसाकारणमाह—

॥मूलम्॥—विसप्पे सव्वउ धारे । वहुपाणविणासणे ॥ नत्थि जोइसमे सत्थे । तम्हा जोइं न दीवए ॥१२॥ व्याख्या—साधुस्तस्मात्कारणाज्ज्योतिर्न दीपयेत्, अग्निं न प्रज्ज्वालयेत्, किं कारणं? तदाह—ज्योतिःसममग्नितुल्यं वहुप्राणिविनाशनमन्यच्छस्त्रं नास्ति. अग्निः सर्वान् प्राणिनो वि-

नाशयति. कथंभूतं ज्योतिःशस्त्रं? विसर्पद्विशेषेण सर्पतीति स्फुरतीति विसर्पत्, प्रसरणशीलं. पुनः कीदृशं ज्योतिःशस्त्रं? सर्वतो धारं, सर्वतश्चतुर्दिक्षु धारा शक्तिर्यस्य तत्सर्वतोधारं, सर्वदिशास्थितजीवविनाशहेतुकमित्यर्थः. प्राकृतत्वादत्र लिंगव्यत्ययः. पचनपाचनं त्वग्निप्रज्वालनं विना न स्यात्, अग्निप्रज्वालननिषेधेन पचनपाचनयोर्निषेधः. पुनरग्निप्रज्वालननिषेधेन च शीतकालादावप्यग्निसमारंभो निषिद्धः. यदा पचनपाचनाग्निप्रज्वालनादिनिषेधो भवति, तदा क्रयविक्रयाभ्यां निर्वाहः क्रियते, अतः साधूनां तन्निषेधोऽप्युच्यते. ॥ १२ ॥

॥ मूलम् ॥—हिरण्णं जायरूवं च । मणसावि न पत्थए ॥ समलेठुकंचणे भिक्खू । विरए कयविक्कए ॥ १३ ॥ किणंतो कइओ होइ । विक्किणंतो य वाणिओ ॥ कयविक्कयंमि वट्टंतो । भिक्खू हवइ न तारिसो ॥ १४ ॥ युग्मं ॥ अनयोर्व्याख्या—भिक्षुः साधुर्हिरण्यं हेम, जातरूपं रूप्यं, चशब्दाद्धनधान्यादि मनसापि न प्रार्थयेत्. यदि मनसापि न प्रार्थयेत्तदा कथं गृह्णीयात्? कीदृशो भिक्षुः? समलेष्टुकांचनः, लेष्टु च कांचनं च लेष्टुकांचने, समे लेष्टुकांचने यस्य स समलेष्टुकांचनः, तुल्यकांचनपाषाणः. पुनः कीदृशः? क्रयविक्रयाद्विरतः, क-



34

यश्च विक्रयश्च क्रयविक्रयं, तस्माद्विरतो रहितः. ॥ १३ ॥ क्रयविक्रये दूषणमाह—' किणंत ' इत्यादि, यतो हि साधुः क्रीणन् मूल्येन वस्तु गृह्णन् क्रयको भवति, इतरलोकवद् ग्राहको भवति. तथा पुनर्विक्रीणानश्च वणिग्भवति. क्रयविक्रये वर्तमानो भिक्षुस्तादृशो न भवति, भिक्षुगुणयुक्तो न भवति. सूत्रे हि भिक्षोर्लक्षणमेतादृशं नास्तीत्यर्थः. ॥ १४ ॥

॥ मूलम् ॥—भिक्खियव्वं न केयव्वं । भिक्खुणा भिक्खुवत्तिणा ॥ कयविक्कओ महादोसो । भिक्खवत्ति सुहावहा ॥ १५ ॥ व्याख्या—भिक्षुणा साधुना भिक्षितव्यं याचितव्यं, न तु साधुना क्रेतव्यं, मूल्येन हट्टादौ गृहीतव्यं. कीदृशेन भिक्षुणा ? भिक्षावृत्तिना, भिक्षया वृत्तिरुदरपूरणं यस्य स भिक्षावृत्तिस्तेन. यतो हि भिक्षोः क्रयविक्रययोर्महान् दोषोऽस्ति. साधोर्भिक्षावृत्तिः सुखावहास्ति. भिक्षया वृत्तिर्भिक्षावृत्तिः, सा सुखमावहति पूरयतीति सुखावहा सुखपूरका. ॥ १५ ॥

॥ मूलम् ॥—समुयाणं उंछमेसिज्जा । जहासुत्तमणिंदियं ॥ लाभालाभंमि संतुट्ठे । पिंडवायं चरे मुणी ॥ १६ ॥ व्याख्या—मुनिः साधुर्यथासूत्रं सूत्रोक्तरीत्याऽनिंदितं निंदारहितं

समुदानं भैक्ष्यं भिक्षासमूहमेषयेद्गवेषयेत्. कथंभूतं भैक्ष्यं ? उंछमिवोंछमन्यान्यपृथक्पृथक्कणग्रहणमिवान्यान्यगृहादल्पाल्पमीलनेन मधुकरवृत्त्या भ्रमन्भिक्षेदित्यर्थः. पुनः साधुर्लाभालाभे आहारप्राप्तावप्राप्तौ वा संतुष्टः सन् संतोषी सन् पिंडपातं भिक्षाटनं चरेदासेवेत. पिंडाय भिक्षाग्रहणाय पतनं पातः पिंडपातो भिक्षार्थं भ्रमणं तमासेवेतेत्यर्थः. ॥ १६ ॥ अथ भोजनविधिमाह—

॥ मूलम् ॥—अलोले न रसे गिद्धे । जिप्भादंते अमुच्छिए ॥ न रसट्ठाए भुंजिज्जा । जवणट्ठाए महामुणी ॥ १७ ॥ व्याख्या—महामुनिर्यापनार्थं, यापना संयमनिर्वाहः, यापनायै इति यापनार्थं संयमनिर्वाहार्थमाहारं भुंजीत. रसो धातुविशेषस्तदर्थमिति रसार्थं धातुवृद्ध्यर्थं सरसाहारं न भुंजीत, केवलं संयमनिर्वाहार्थमेव भुंजीतेत्यर्थः. कीदृशो महामुनिः ? अलोलः सरसाहारप्राप्तावचपलः. पुनः कथंभूतः ? रसे न गृद्धो मधुरादौ तीव्राभिलाषवान्नास्ति. पुनः कीदृशो महामुनिः ? जिह्वादांतः, प्राकृतत्वाद्दांतजिह्वो वशीकृतरसनः. पुनः कीदृशः ? अमूर्छितः संनिधेरकरणेन, आगामिदिनेषु भक्षणार्थं घृतगुडादिसंचयकरणरहितः. १७

34

॥ मूलम् ॥—अच्चणं सेवणं चेव । वंदणं पूयणं तहा ॥ इड्ढीसक्कारसम्माणं । मणसा-
वि न पत्थए ॥ १८ ॥ व्याख्या—पुनः साधुरेतन्मनसापि न प्रार्थयेन्नाभिलपेत्. यदि मनसा-
पि न प्रार्थयेत्तदा वचनकायाभ्यां दूरत एवापास्तं. तत् किं किं? अर्चनं पुष्पादिभिः सत्का-
रणं. तथा सेवनं पर्युपासनं. चैव पदपूरणे, पुनर्वंदनं स्तुतिकरणं, तथा पूजनं वस्त्रादिभिः
प्रतिलाभनं न प्रार्थयेत्. पुनः साधुः ऋद्धिसत्कारसन्मानं मनसापि न प्रार्थयेत्. ऋद्धिश्च स-
त्कारश्च सन्मानं च ऋद्धिसत्कारसन्मानं, ऋद्धिः श्राद्धानां संपत्, अथवा वस्त्रपात्रादिसंपत्,
सत्कारोऽर्थप्रदानादिर्गुणकथनं वा. सन्मानमभ्युत्थानादि, एतत्सर्वं साधुर्नाभिलपेत्. ॥१८॥

॥ मूलम् ॥—सुक्कझाणं झियाइज्जा । अनियाणे अकिंचणे ॥ वोसट्ठिकाये विहरिज्जा ।
जावकालस्स पज्जउ ॥ १९ ॥ व्याख्या—साधुः शुक्लध्यानं प्रागुक्तं ध्यायेत्. पुनः साधुरनि-
दानो निदानरहितोऽकिंचनो धनादिरहितः, पुनर्व्युत्सृष्टकायः सन् शरीरममत्वरहितः सन्
यावत्कालस्य पर्यायो यावन्मृत्योः समयस्तावदेतादृशः सन् विहरेत्, अप्रतिबद्धविहारत्वेन
विचरेदित्यर्थः. ॥ १९ ॥


34

॥ मूलम् ॥—निज्जूहिऊण आहारं । कालधम्मे उवट्ठिए ॥ चईऊण माणुसं बोंदिं । पहू दुक्खे विमुच्चई ॥ २० ॥ व्याख्या—स साधुरेतादृशो मार्गे संचरन् कालधर्मे उपस्थिते सति मरणे प्राप्ते सति प्रभुर्वीर्यांतरायक्षयतो विशिष्टसामर्थ्यवान् दुःखाच्छरीरमानसाद्दुःखाद्विशेषेण मुच्यते, मुक्तो भवतीत्यर्थः. किं कृत्वा? आहारं 'निज्जूहिऊण' इति संलेखनया परित्यज्य, पुनः किं कृत्वा? मानुषीं बुंदिं तनुं त्यक्त्वौदारिकशरीरं त्यक्त्वा दुःखरहितो भवतीत्यर्थः. ॥ २० ॥

॥ मूलम् ॥—निमम्मे निरहंकारे । वीयरागे अणासवे ॥ संपत्ते केवलं नाणं । सासए परिनिव्वुडेत्तिबेमि ॥ २१ ॥ व्याख्या—एतादृशो यतिः शाश्वतोऽविनश्वरो मरणधर्मरहितः केवलज्ञानं संप्राप्तः सन् परिनिर्वृत्तो भवति, कर्माभावाच्छीतीभूतो भवति, सिद्धिगतिभाग्भवतीत्यर्थः. कीदृशो यतिः? निर्ममो लोभरहितः, पुनः कीदृशः? अनाश्रवः प्राणातिपातादिपंचाश्रवरहितः, पुनः कीदृशः? निरहंकारोऽहंकाररहितः, पुनः कीदृशः? वीतरागो रागद्वेषरहितः. सुधर्मास्वामी जंबूस्वामिनंप्रति वक्ति, अहमिति ब्रवीमि वीतरागवचनात्. ॥ २१ ॥

इत्यनगारमार्गाध्ययनं. इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायामनगारमार्गनामकं पंचत्रिंशमध्ययनं संपूर्णं. ॥३५॥ श्रीरस्तु.

---

## ॥ अथ षट्त्रिंशमध्ययनं प्रारभ्यते ॥

पूर्वस्मिन्नध्ययनेऽनगारमार्ग उक्तः, स च जीवाजीवादितत्वज्ञानं विना न स्यात्, अतो जीवाजीवविभक्त्याख्यं षट्त्रिंशमध्ययनं व्याख्यायते—

॥ मूलम् ॥—जीवाजीवविभत्तिं । सुणेह मे एगमणाइओ ॥ जं जाणिऊण भिक्खू । सम्मं जयइ संजमे ॥ १ ॥ व्याख्या—भो शिष्याः ! एकाग्रमनसः संतो यूयं तां जीवाजीवविभक्तिं जीवाजीवादीनां लक्षणं मे मम कथयतः सतः शृणुत ? जीवाश्च अजीवाश्च जीवाजीवास्तेषां विभक्तिर्लक्षणज्ञानेन पृथक्पृथक्करणं जीवाजीवविभक्तिस्तां, उपयोगवान् जीव एकेंद्रियादिः, उपयोगरहितो जीवः काष्टादिः, इत्यादिजैनमतोक्तलक्षणेन लक्ष्यज्ञानं. ता-

मिति कां ? यां जीवाजीवविभक्तिं ज्ञात्वा भिक्षुः संयमे संयममार्गे सम्यग् यतते यत्नं कुरुते.

॥ मूलम् ॥—जीवा चेव अजीवा य । एस लोए वियाहिए ॥ अजीवदेसे आगासे । अलोगे से वियाहिए ॥ २ ॥ व्याख्या—जीवाश्चेतनालक्षणात्मकाः, च पुनरजीवा अचेतनात्मकाः, चकार एवकारश्च पदपूरणे. एष लोको व्याख्यातस्तीर्थकरैरुक्तः. अजीवदेश आकाशमलोको व्याख्यातः. अजीवस्य धर्मास्तिकायादिकस्य देशोंशोऽजीवदेशो धर्मास्तिकायादिवृत्तिरहितस्याकाशस्यैव देशः सोऽलोको व्याख्यातः, जीवाजीवानामाधेयभूतानां लोकाकाशमाधारभूतं, अतो लोकाकाशलक्षणमुक्तं. ॥ २ ॥ जीवाजीवविभक्तिर्यथा स्यात्तथाह—

॥ मूलम् ॥—दव्वओ खित्तओ चेव । कालओ भावओ तहा ॥ परूवणा तेसि भवे । जीवाणमजीवाण य ॥ ३ ॥ व्याख्या—द्रव्यतो द्रव्यमाश्रित्येदं द्रव्यमियद्भेदं, क्षेत्रत इदं द्रव्यमेतावति क्षेत्रे स्थितं, कालत इदं द्रव्यमियत्कालस्थितिमद्वर्तते, भावतोऽस्य द्रव्यस्येयंतः पर्यायाः. एवं तेषां जीवद्रव्याणामजीवद्रव्याणां च द्रव्यक्षेत्रकालभावेन चतुर्धा प्ररूपणा भवेत्. ॥ ३ ॥ अथ तावदजीवद्रव्यप्ररूपणायाः स्वल्पत्वादजीवद्रव्यस्यैव प्ररूपणाकथ्यते—

॥ मूलम् ॥—रूविणो य अरूवी य । अजीवा दुविहा नवे ॥ अरूवी दसहा वुत्ता । रूविणोवि चउविहा ॥ ४ ॥ व्याख्या—अजीवा द्विविधा नवेयुः, एकेऽजीवा रूपिणो रूपवंतः, च पुनरन्येऽजीवा अरूपिणोऽरूपवंतः, तत्र रूपं स्पर्शाद्याश्रयमूर्तं मूर्तं, तदस्ति येषु ते रूपिणः, तद्व्यतिरिक्ता अरूपिण इत्यर्थः. तत्राऽरूपिणोऽजीवा दशधा उक्ताः, रूपिणो जीवाश्चतुर्विधाः प्रोक्ताः. ॥ ४ ॥ पूर्वं दशविधत्वमाह—

॥ मूलम् ॥—धम्मत्थिकाए तद्देसे । तप्पएसे य आहिए ॥ अहम्मे तस्स देसे य । तप्पएसे य आहिए ॥ ५ ॥ आगासे तस्स देसे य । तप्पएसे य आहिये ॥ अद्धासमए चेव । अरूवी दसहा नवे ॥ ६ ॥ युग्मं ॥ व्याख्या—अरूप्यजीव एवं दशधा नवेदिति द्वितीयगाथयान्वयः. प्रथमं धर्मास्तिकायः, धरति जीवपुद्गलौप्रति गमनोपकारेणेति धर्मः, तस्यास्तयः प्रदेशसद्भावास्तेषां कायः समूहो धर्मास्तिकायः, सर्वदेशप्रदेशानुगतसमानपरिणतिमद्द्रव्यमिति नावः. १. पुनस्तद्देशस्तस्य धर्मास्तिकायस्य कतमो विभागो देशस्तृतीयचतुर्थादिभागस्तद्देशो धर्मास्तिकायदेशः २. पुनस्तत्प्रदेशस्तस्य धर्मास्तिकायविभागस्या-

मिति कां ? यां जीवाजीवविभक्तिं ज्ञात्वा भिक्षुः संयमे संयममार्गे सम्यग् यतते यत्नं कुरुते.

॥ मूलम् ॥—जीवा चेव अजीवा य । एस लोए वियाहिए ॥ अजीवदेसे आगासे । अलोगे से वियाहिए ॥ २ ॥ व्याख्या—जीवाश्चेतनालक्षणात्मकाः, च पुनरजीवा अचेतनात्मकाः, चकार एवकारश्च पदपूरणे. एष लोको व्याख्यातस्तीर्थंकरैरुक्तः. अजीवदेश आकाशमलोको व्याख्यातः. अजीवस्य धर्मास्तिकायादिकस्य देशोंशोऽजीवदेशो धर्मास्तिकायादिवृत्तिरहितस्याकाशस्यैव देशः सोऽलोको व्याख्यातः, जीवाजीवानामाधेयभूतानां लोकाकाशमाधारभूतं, अतो लोकाकाशलक्षणमुक्तं. ॥ २ ॥ जीवाजीवविभक्तिर्यथा स्यात्तथाह—

॥ मूलम् ॥—दव्वओ खित्तओ चेव । कालओ भावओ तहा ॥ परूवणा तेसि भवे । जीवाणमजीवाण य ॥ ३ ॥ व्याख्या—द्रव्यतो द्रव्यमाश्रित्येदं द्रव्यमियद्भेदं, क्षेत्रत इदं द्रव्यमेतावति क्षेत्रे स्थितं, कालत इदं द्रव्यमियत्कालस्थितिमद्वर्तते, भावतोऽस्य द्रव्यस्येयंतः पर्यायाः. एवं तेषां जीवद्रव्याणामजीवद्रव्याणां च द्रव्यक्षेत्रकालभावेन चतुर्धा प्ररूपणा भवेत्. ॥ ३ ॥ अथ तावदजीवद्रव्यप्ररूपणायाः स्वल्पत्वादजीवद्रव्यस्यैव प्ररूपणाकथ्यते—

॥ मूलम् ॥—रूविणो य अरूवी य । अजीवा दुविहा भवे ॥ अरूवी दसहा वुत्ता । रूविणोवि चउव्विहा ॥ ४ ॥ व्याख्या—अजीवा द्विविधा भवेयुः, एकेऽजीवा रूपिणो रूपवंतः, च पुनरन्येऽजीवा अरूपिणोऽरूपवंतः, तत्र रूपं स्पर्शाद्याश्रयभूतं मूर्तं, तदस्ति येषु ते रूपिणः, तद्व्यतिरिक्ता अरूपिण इत्यर्थः. तत्राऽरूपिणोऽजीवा दशधा उक्ताः, रूपिणो जीवाश्चतुर्विधाः प्रोक्ताः. ॥ ४ ॥ पूर्वं दशविधत्वमाह—

॥ मूलम् ॥—धम्मत्थिकाए तद्देसे । तप्पएसे य आहिए ॥ अहम्मे तस्स देसे य । तप्पएसे य आहिए ॥ ५ ॥ आगासे तस्स देसे य । तप्पएसे य आहिये ॥ अद्धासमए चेव । अरूवी दसहा भवे ॥ ६ ॥ युग्मं ॥ व्याख्या—अरूप्यजीव एवं दशधा भवेदिति द्वितीयगाथयान्वयः. प्रथमं धर्मास्तिकायः, धरति जीवपुद्गलौप्रति गमनोपकारेणेति धर्मः, तस्यास्तयः प्रदेशसद्भावास्तेषां कायः समूहो धर्मास्तिकायः, सर्वदेशप्रदेशानुगतसमानपरिणतिमद्द्रव्यमिति भावः. १. पुनस्तद्देशस्तस्य धर्मास्तिकायस्य कतमो विभागो देशस्तृतीयचतुर्थादिभागस्तद्देशो धर्मास्तिकायदेशः २. पुनस्तत्प्रदेशस्तस्य धर्मास्तिकायविभागस्या-

तिसूक्ष्मो निरंशोंशप्रदेशो धर्मास्तिकायप्रदेशस्तीर्थंकरैराख्यातः कथितः. ३. एवमधर्मो जीवपुद्गलयोः स्थिरकारी धर्मास्तिकायाद्विरुद्धोऽधर्मास्तिकायः. ४. पुनस्तस्याऽधर्मास्तिकायस्यापि देशस्तद्देशः, एकः कश्चिद्भागोऽधर्मास्तिकायदेशः. ५. एवं पुनस्तस्याऽधर्मास्तिकायस्य प्रदेशोंशस्तत्प्रदेश आख्यातः, अधर्मास्तिकायप्रदेश इत्यर्थः. ६. इत्यनेन षट् भेदा अरूपिणोऽजीवद्रव्यस्य. अथ शेषाश्चत्वार उच्यंते—' आगास ' इति सप्तमो भेद आकाशमाकाशास्तिकायः, जीवपुद्गलयोरवकाशदाय्याकाशं ७. तस्याकाशस्य देशः कतमो विभाग आकाशास्तिकायदेशः ८. तस्याकाशास्तिकायस्य निरंशो देशस्तत्प्रदेश आकाशास्तिकायप्रदेशः ९. दशमो दश्चाद्धासमयोऽद्धाकालो वर्तमानलक्षणस्तद्रूपः समयोऽद्धासमयः, अस्यैक एव भेदो निर्भागत्वाद्देशप्रदेशौ कालस्य न संभवतः. १०. एवं दश भेदा अरूपिणो ज्ञेयाः. ॥ ६ ॥ एतानरूपिणः क्षेत्रत आह—

॥ मूलम् ॥—धम्माधम्मे य दो एए । लोगमित्ता वियाहिया ॥ लोगालोगे य आगासे । समए समयखित्तिए ॥ ७ ॥ व्याख्या—धर्माधर्मौ धर्मास्तिकायाधर्मास्तिकायावेतौ द्वाव-

जयसिएवि य ॥ ए ॥ व्याख्या—समयोऽपि कालोऽप्येवमेव यथा धर्माधर्माकाशान्यनाद्यनं-
तानि तथा कालोऽप्यनाद्यनंत इत्यर्थः. किं कृत्वा? संततिं प्राप्य, अपरापरोत्पत्तिरूपप्रवा-
हात्मिकामाश्रित्य. कोऽर्थः? यदा हि कालस्योत्पत्तिर्विलोक्यते, तदा कालस्यादिरपि नास्ति,
अंतोऽपि नास्तीत्यर्थः. पुनरादेशं प्राप्य कार्यारंभमाश्रित्य कालः सादिक आदिसहितः, तथा
सपर्यवसितोऽवसानसहितो व्याख्यातः. यदा च यत्किंचित्कार्यं यस्मिन् काले आरभ्यते, त-
दा तत्कार्यारंभवशात्कालस्याप्युपाधिवशादादिः, एवं कार्यारंभसमाप्तौ कालस्याप्यंतो व्या-
ख्यात इत्यर्थः. ॥ ए ॥ अथ रूपिणोऽजीवाश्चतुर्विधाश्चतुर्भेदा उच्यंते—

॥ मूलम् ॥—खंधा य खंधदेसा य। तप्पएसा तहेव य ॥ परमाणुणो य बोधव्वा। रू-
विणोवि चउव्विहा ॥ १० ॥ व्याख्या—रूपिणोऽप्यजीवाश्चतुर्विधाश्चतुःप्रकाराः, के ते भेदाः?
तानाह—स्कंधाः १, यत्र पुंजे परमाणवो विचटनान्मिलनाच्च न्यूना अधिका अपि भवंति ए-
तादृशाः परमाणुपुंजाः स्कंधदेशाः २. तथा तत्प्रदेशास्तेषां स्कंधानां निर्विभागा अंशाः स्कं-
धप्रदेशाः ३. तथैवेति पूर्ववत्. च पुनः परमाणवो बोधव्याः, परमाणव एव परस्परममिलिता

:. ४. एवं चत्वारो रूपिणश्चतुर्विधा बोधव्या इति नावः. अत्र च मुख्यवृत्त्या परमाणवः स्कंधाश्च, देशप्रदेशयोः स्कंधेष्वेवांतर्नावः ॥ १० ॥ अथ स्कंधपरमाणूनां लक्षणमाह—

मूलम् ॥—एगत्तेण पुहत्तेण । खंधा य परमाणुणो ॥ लोएगदेसे लोए य । नइव्वा ते उ खित्तर्ज ॥ इत्तो कालविनागं तु । तेसिं वुछं चउविहं ॥ ११ ॥ व्याख्या—एते स्कंधाः ( स्कंधा हि संहतानेकपरमाणुरूपाः ) च पुनः परमाणव एकत्वेन पुनः पृथक्त्वेन, एकत्वेन समानपरिणतिरूपेण लक्ष्यंते, पृथक्त्वेन परमाण्वंतरैरसंघातरूपेण लक्ष्यंते उपलभ्यन्ते. इति द्रव्यतो लक्षणमुक्तं. अथैतानेव क्षेत्रत आह—ते स्कंधाः परमाणवश्च 'लोए' इति लोकस्य चतुर्दशरज्ज्वात्मकस्यैकदेशः, एकद्व्यादिसंख्यातासंख्यातप्रदेशात्मकः प्रतिनियतो नागो लोकैकदेशस्तस्मिन् लोके च नक्तव्या नजनीयाः क्षेत्रतः क्षेत्रमाश्रित्य. अत्र च स्कंधपरमाणूनां ग्रहणेऽपि परमाणूनामेवैकप्रदेशावस्थानत्वात्, स्कंधाश्च बहुप्रदेशोपचिता अपि केचिदेकप्रदेशे तिष्टंति, अन्ये तु संख्येयेष्वसंख्येयेषु च प्र-

देशेषु यावत्सकललोके तिष्टंति, परिणतेर्विचित्रत्वात्. ' इत्तोत्ति ' इतः क्षेत्रप्ररूपणातोऽनतरं तेषां स्कंधानां परमाणूनां च कालविभागं कालभेदं चतुर्विधं वक्ष्ये, साद्यनादिसपर्यवसिताऽपर्यवसितभेदेन कथयिष्यामि. इदं च सूत्रं षट्पादं गाथेत्युच्यते. ॥ ११ ॥

॥ मूलम् ॥—संतइं पप्पतेणाई। अपज्जवसियावि य ॥ ठिइं पडुच्च साइया । सपज्जवसियावि य ॥ १२ ॥ व्याख्या—ते स्कंधाः परमाणवश्च संततिमपरापरोत्पत्तिप्रवाहरूपां प्राप्याऽनादय आदिरहिताः, तथा अपर्यवसिता अंतरहिताः. स्थितिं प्रतीत्य क्षेत्रावस्थानरूपां स्थितिमंगीकृत्य सादिकाः सपर्यवसिताश्च वर्तंते. ॥ १२ ॥ सादिसपर्यवसितत्वेऽपि कियत्कालमेषां स्थितिरित्याह–

॥ मूलम् ॥—असंखकालमुक्कोसं इक्कं समय जहन्नयं ॥ अजीवाण य रूवीणं । ठिई एसा वियाहिया ॥ १३ ॥ व्याख्या—स्कंधानां परमाणूनां चोत्कृष्टाऽसंख्यकालं स्थितिः, जघन्यिका नैकसमया स्थितिः. एषा अजीवानां रूपिणां पुद्गलानां स्थितिर्व्याख्याता, एतस्मादुक्तकालात्परतोऽवश्यमेव विचटनात्. ॥ १३ ॥ अथ कालतः स्थितिमुक्त्वा तदंतर्गतमंतरमाह–

॥ मूलम् ॥—अणंतकालमुक्कोसं । इक्कं समयं जहन्नयं ॥ अजीवाण य रूवीणं । अंतरेयं वियाहियं ॥ १४ ॥ व्याख्या—अजीवानां रूपिणां पुद्गलानां स्कंधदेशप्रदेशपरमाणूनामंतरं विक्षितक्षेत्रावस्थितेः प्रच्युतानां पुनस्तत्क्षेत्रप्राप्तेर्व्यवधानमंतरमुत्कृष्टमनंतकालं भवति. जघन्यमेकसमयं भवति. इदमंतरं तीर्थंकरैर्व्याख्यातं. पुद्गलानां हि विवक्षितक्षेत्रावस्थितितः प्रच्युतानां कदाचित्समयावलिकादिसंख्यातकालतो वा पल्योपमोदर्यावदनंतकालादपि तत्क्षेत्रावस्थितिः संभवतीति भावः. ॥ १४ ॥ अथ भावतः पुद्गलानाह—

॥ मूलम् ॥—वन्नओ गंधओ चेव । रसओ फासओ तहा ॥ संठाणओ य विन्नेओ । परिणामो तेसिं पंचहा ॥ १५ ॥ व्याख्या—तेषां पुद्गलानां परिणामो वर्णतो गंधतो रसतः स्पर्शतस्तथा संस्थानतश्च पंचधा पंचप्रकारो ज्ञेयः. यतो हि पूरणगलनधर्माणः पुद्गलाः, तेषामेव परिणतिः संभवति. परिणमनं स्वस्वरूपावस्थितानां पुद्गलानां वर्णगंधरसस्पर्शसंस्थानादेरन्यथाभवनं परिणामः, स पुद्गलानां पंचप्रकार इत्यर्थः. ॥ १५ ॥ एषामेव प्रत्येकमुत्तरभेदानाह—

॥ मूलम् ॥—वण्णओ परिणया जे उ । पंचहा ते पकित्तिया ॥ किण्हा नीला य लोहि-

या । हालिद्दा सुक्किला तहा ॥ १६ ॥ व्याख्या—ये पुद्गला वर्णतः परिणताः संति, ते पुद्गलाः पंचधा प्रकीर्तितास्तीर्थकरैः कथिताः. ते के? तानाह—कृष्णाः कज्जलवर्णाः, पुनर्नीलाः शुकपिच्छनिभाः, गुलिकासदृशा वा. लोहिता रक्ता हिंगुलवर्णाः. तथा हारिद्राः पीता हरितालनिभाः. तथा शुक्लाः शंखकुंदस्फटिकसदृशाः ॥ १६ ॥

॥ मूलम् ॥—गंधओ परिणया जे उ । दुविहा ते वियाहिया ॥ सुब्भिगंधपरिणामा । दुब्भिगंधा तहेव य ॥ १७ ॥ व्याख्या—ये तु पुद्गला गंधतः परिणताः संति, ते पुद्गला द्विविधा व्याख्याताः, सुरभिगंधः परिणामो येषां ते सुरभिगंधपरिणामाः, सुगंधत्वेन परिणताश्चंदनादिवदित्यर्थः. तथैव दुरभिगंधो येषां ते दुरभिगंधाः, दुर्गंधत्वेन लशुनादिवत्परिणताः. ॥१७॥

॥ मूलम् ॥—रसओ परिणया जे उ । पंचहा ते पकित्तिया ॥ तित्तकडुआ कसाया । अंबिला महुरा तहा ॥ १८ ॥ व्याख्या—ये तु पुद्गलाः पुना रसतः परिणतास्ते पंचधा परिकीर्तिताः, तिक्ता निंबसदृशाः, कटुकाः सुंठीमरिचसदृशाः, कषायाः खदिरसदृशाः, आम्ला निंबुकरससदृशाः, मधुराः शर्करासदृशाः. ॥ १९ ॥

॥ मूलम् ॥—फासओ परिणया जे उ । अट्ठहा ते पकित्तिया ॥ कक्खडा मउया चेव ।
गुरुआ लहुया तहा ॥ २० ॥ व्याख्या—स्पर्शतश्च ये परिणताः पुद्गलास्तेऽष्टधा प्रकीर्तिताः,
कर्कशा अजालोमसदृशाः, च पुनर्मृदुकाः सुकुमालाः पट्टकूलसदृशाः, गुरुका लोहपारदसदृ-
शाः, तथा पुनर्लघुका अर्कतूलसदृशाः. ॥ २० ॥
॥ मूलम् ॥—सीया उण्हा य निद्धा य । तहा लुक्खा य आहिया ॥ इइ फासपरिण-
या एए । पुग्गला समुदाहिया ॥ २१ ॥ व्याख्या—तथा पुनः केचित्पुद्गलाः शीता हिमस-
दृशाः, च पुनरुष्णा अग्निसदृशाः, च पुनः स्निग्धा घृतसदृशाः, तथा रूक्षाश्चाख्याताः. इत्य-
मुना प्रकारेणैते पुद्गलाः स्पर्शपरिणता अष्टप्रकारेण तीर्थकरैरुदाहृताः. ॥ २१ ॥
॥ मूलम् ॥—संठाणपरिणया जे उ । पंचहा ते पकित्तिया ॥ परिमंडला य वट्टा । तं-
सा चउरंसमायया ॥ २२ ॥ व्याख्या—ये तु पुद्गलाः संस्थानपरिणतास्ते पंचधा प्रकीर्तिताः,
ते के? तानाह—परिमंडलाः कंकणाकाराः, पुनर्वर्तुला लड्डुकाकृतयः, पुनस्त्रिस्राः संघाट-
काकाराः, पुनश्चतुरस्राश्चतुष्कोणाश्चतुष्किकाकाराः, तथा पुनरायताः प्रलंबा रज्ज्वाकाराः.

॥ २२ ॥ संप्रत्येषामेव परस्परं संबंधमाह—

॥ मूलम् ॥—वर्णउ जे नवे किएहे । नइए जे उ गंधउ ॥ रसउ फासउ चेव । नइए संठाणउवि य ॥ २३ ॥ व्याख्या—पुद्गलो वर्णतः कृष्णः कज्जलनिनो नवेत्, स कृष्णः पुद्गलो गंधतो भज्यः सुगंधो नवति, दुर्गंधोऽपि नवति, न तु सुरनिरेव, न तु दुरनिरेव, किं तु कृष्णवर्णपुद्गलः सुगंधोऽपि नवति, दुर्गंधोऽपि नवति. सुरनिर्दुरनित्वेन परिणमति, दुरभिः सुरनित्वेन परिणमति, न तु नियतगंध एवेति नावः. एवं रसतः स्पर्शतश्चैव नाज्यः रसानां पंचानां मध्ये एकस्माद्रसाद्रसांतरपरिणतो नवति. स्पर्शानामष्टानां मध्ये एकस्मात्स्पर्शात्स्पर्शांतरपरिणतो नवतीति नावः. तथा पुनः स एव पुद्गलः संस्थानतोऽपि नाज्यः, पंचानां संस्थानानां मध्ये एकस्मात्संस्थानांतरपरिणतो नवतीति नावः. अत्र गंधौ द्वौ, रसाः पंच, स्पर्शा अष्टौ, संस्थानानि पंच, मीलिता विंशतिः, इत्येक एव कृष्णवर्णो विंशतिविधो नवति. ॥ २३ ॥ अथ नीलस्य नंगानाह—

॥ मूलम् ॥—वन्नउ जे नवे नीले । नइए से उ गंधउ ॥ रसउ फासउ चेव । नइए

संठाणओवि य ॥ २४ ॥ व्याख्या—यः पुद्गलो वर्णतो नीलो भवति, स पुद्गलोऽपि गंधतः सुरभिगंधदुरभिगंधतो भाज्यः. च पुनः स पुद्गलो रसतः पंचविधतिक्तकटुकादितो भाज्यः, च पुनः स्पर्शतोऽष्टविधः खरमृदुशीतोष्णादितो भाज्यः. संस्थानतश्च पंचविधपरिमंडलादितो भाज्यः, तदा विंशतिविधो भवति. ॥ २४ ॥ अथ रक्तस्य भेदानाह—

॥ मूलम् ॥—वण्णओ लोहिए जे उ । भइए से उ गंधओ ॥ रसओ फासओ चेव । भइए संठाणओवि य ॥ २५ ॥ व्याख्या—यः पुनः पुद्गलो वर्णतो लोहितो भवति, हिंगुलसदृशो भवति, सोऽपि पूर्वोक्तविधिना गंधतो रसतः स्पर्शतः संस्थानतो भज्यः, तदा सोऽपि विंशतिविधो भवति. ॥ २५ ॥ अथ पीतस्य भेदानाह—

॥ मूलम् ॥—वण्णओ पीयए जे उ । भइए से उ गंधओ ॥ रसओ फासओ चेव । भइए संठाणएवि य ॥२६॥ व्याख्या—यः पुनः पुद्गलो वर्णतः पीतः स्वर्णवर्णः, स पुद्गलोऽपि गंधतो रसतः स्पर्शतः संस्थानतश्च भाज्यः, तदा विंशतिविधो भवति. ॥ २६ ॥ अथ शुक्लस्य भेदानाह—

॥ मूलम् ॥—वन्नर्ड सुक्किले जे उ। नइए से उ गंधर्ड ॥ रसर्ड फासर्ड चेव। नइर्ड संठाणर्डवि य ॥ २७ ॥ व्याख्या—यः पुनः पुद्गलो वर्णतः शुक्लश्चंद्रसदृशो नवति, सोऽपि पुद्गलो गंधतो रसतः स्पर्शतः संस्थानतश्च नाज्यः, तदा विंशतिविधो नवति. एवं पंचनिर्वर्णैर्विंशत्या गुणितैः शतं ( १०० ) नवति. ॥२७॥ इति वर्णनेदानुक्त्वा गंधपुद्गलनेदानाह—

॥ मूलम् ॥—गंधर्ड जे नवे सुप्नी। नइए से उ वन्नर्ड ॥ रसर्ड फासर्ड चेव। नइए संठाणर्डवि य ॥ २८ ॥ व्याख्या—यः पुद्गलो गंधतः सुरनिश्चंदनपरिमलादिवत् सुगंधो नवति, स पुद्गलो वर्णतो रसतः स्पर्शतश्च नाज्यः, तथा संस्थानतश्च नाज्यः. कोऽर्थः? सुगंधपुद्गले पंचानां वर्णानां मध्येऽन्यतरकेचिद्वर्णा नवंति. रसानामपि पंचानां मध्ये केचिद्रसा नवंति. एवं स्पर्शानामष्टानां मध्ये केचित्स्पर्शा नवंति. स्थानानां पंचानां मध्येऽन्यतरत्परिमंरुलादिसंस्थानमपि नवति. इह रसादयोऽष्टादश, ते च पंचनिर्वर्णैर्मीलितास्त्रयोविंशतिर्नवंति. ॥ २८ ॥

॥ मूलम् ॥—गंधर्ड जे नवे दुप्नी। नइए से उ वन्नवं ॥ रसर्ड फासर्ड चेव। नइए

संठाणर्वर्ठवि य ॥ २९ ॥ व्याख्या—यः पुनः पुद्गलो गंधतो दुरभिर्दुर्गंधो भवति, स च पुद्गलो वर्णतो रसतः स्पर्शतः संस्थानतश्च भाज्यः, सुगंधपुद्गलवद्दुर्गंधपुद्गलोऽपि ज्ञेयः, दुर्गंधविषया अप्येतावंत एव, ततश्च गंधद्वयेन भंगानां षट्चत्वारिंशत् (४६). ॥ २९ ॥ अथ रसपुद्गलानां भेदानाह—

॥ मूलम् ॥—रसर्ठ तित्तर्ठ जे ठ । भइए से ठ वन्नर्ठ ॥ गंधर्ठ फासर्ठ चेव । भइए संठाणर्ठवि य ॥ ३० ॥ व्याख्या—यः पुद्गलो रसतस्तीक्ष्णो भवति, स पुद्गलो वर्णतो गंधतः स्पर्शतः संस्थानतश्च भाज्यः. यत्र पुद्गले एकस्तीक्ष्णो रसो भवति, तत्र वर्णानां मध्ये एकः कश्चिद्वर्णो भवति, सुगंधदुर्गंधयोरेकः कश्चिद्गंधो भवति, स्पर्शानामष्टानां मध्येऽन्यतरः कश्चित्स्पर्शो भवति, संस्थानानां मध्येऽन्यतरदेकं संस्थानं भवति. इह तिक्तेन भंगानां विंशतिः. ॥ ३० ॥ अथ कटुकरसभेदानाह—

॥ मूलम् ॥—रसर्ठ कडुए जे ठ । भइए से ठ वन्नर्ठ ॥ गंधर्ठ फासर्ठ चेव । भइए संठाणर्ठवि य ॥ ३१ ॥ व्याख्या—यः पुद्गलो रसतः कटुको भवति, स पुद्गलस्तिक्तपुद्ग-

॥ मूलम् ॥—वन्नओ सुक्किले जे उ । भइए से उ गंधओ ॥ रसओ फासओ चेव । भइओ संठाणओवि य ॥ २९ ॥ व्याख्या—यः पुनः पुद्गलो वर्णतः शुक्लश्चंद्रसदृशो भवति, सोऽपि पुद्गलो गंधतो रसतः स्पर्शतः संस्थानतश्च भाज्यः, तदा विंशतिविधो भवति. एवं पंचभिर्वर्णैर्विंशत्या गुणितैः शतं ( १०० ) भवति. ॥२९॥ इति वर्णभेदानुक्त्वा गंधपुद्गलभेदानाह—

॥ मूलम् ॥—गंधओ जे भवे सुब्भी । भइए से उ वन्नओ ॥ रसओ फासओ चेव । भइए संठाणओवि य ॥ ३० ॥ व्याख्या—यः पुद्गलो गंधतः सुरभिश्चंदनपरिमलादिवत् सुगंधो भवति, स पुद्गलो वर्णतो रसतः स्पर्शतश्च भाज्यः, तथा संस्थानतश्च भाज्यः. कोऽर्थः? सुगंधपुद्गले पंचानां वर्णानां मध्येऽन्यतरकेचिद्वर्णा भवंति. रसानामपि पंचानां मध्ये केचिद्रसा भवंति. एवं स्पर्शानामष्टानां मध्ये केचित्स्पर्शा भवंति. स्थानानां पंचानां मध्येऽन्यतरत्परिमंडलादिसंस्थानमपि भवति. इह रसादयोऽष्टादश, ते च पंचभिर्वर्णैर्मीलितास्त्रयोविंशतिर्भवंति. ॥ ३० ॥

॥ मूलम् ॥—गंधओ जे भवे दुब्भी । भइए से उ वन्नवं ॥ रसओ फासओ चेव । भइए

संठाणउवि य ॥ २९ ॥ व्याख्या—यः पुनः पुद्गलो गंधतो दुरभिर्दुर्गंधो भवति, स च पुद्गलो वर्णतो रसतः स्पर्शतः संस्थानतश्च भाज्यः, सुगंधपुद्गलवद्दुर्गंधपुद्गलोऽपि ज्ञेयः, दुर्गंधविषया अप्येतावंत एव, ततश्च गंधद्वयेन भंगानां षट्चत्वारिंशत् ( ४६ ). ॥ २९ ॥ अथ रसपुद्गलानां भेदानाह—

॥ मूलम् ॥—रसउ तित्तउ जे उ । भइए से उ वन्नउ ॥ गंधउ फासउ चेव । भइए संठाणउवि य ॥ ३० ॥ व्याख्या—यः पुद्गलो रसतस्तीक्ष्णो भवति, स पुद्गलो वर्णतो गंधतः स्पर्शतः संस्थानतश्च भाज्यः. यत्र पुद्गले एकस्तीक्ष्णो रसो भवति, तत्र वर्णानां मध्ये एकः कश्चिद्वर्णो भवति, सुगंधदुर्गंधयोरेकः कश्चिद्गंधो भवति, स्पर्शानामष्टानां मध्येऽन्यतरः कश्चित्स्पर्शो भवति, संस्थानानां मध्येऽन्यतरदेकं संस्थानं भवति. इह तिक्तेन भंगानां विंशतिः. ॥ ३० ॥ अथ कटुकरसभेदानाह—

॥ मूलम् ॥—रसउ कडुए जे उ । भइए से उ वन्नउ ॥ गंधउ फासउ चेव । भइए संठाणउवि य ॥ ३१ ॥ व्याख्या—यः पुद्गलो रसतः कटुको भवति, स पुद्गलस्तिक्तपुद्ग-

लवद्भवर्णतो गंधतः स्पर्शतः संस्थानतश्च भाव्यः. ॥ ३१ ॥

॥ मूलम् ॥–रसओ कसाओ जे उ । भइए से उ वन्नओ ॥ गंधओ फासओ चेव । भइए संठाणओवि य ॥ ३२ ॥ व्याख्या—यः पुद्गलो रसतः कषायो भवति, स पुद्गलो वर्णतो गंधतः स्पर्शतश्च भाव्यः, संस्थानतश्चापि भाव्यः. ॥ ३२ ॥

॥ मूलम् ॥–रसओ अंबिले जे उ । भइए से उ वन्नओ ॥ गंधओ फासओ चेव । भइए संठाणओवि य ॥ ३३ ॥ व्याख्या–यः पुद्गलो रसत आम्लो भवति, स पुद्गलो वर्णतो गंधतः स्पर्शतः संस्थानतश्च भाव्यः. ॥ ३३ ॥

॥ मूलम् ॥–रसओ महुरए जे उ । भइए से उ वन्नओ ॥ गंधओ फासओ चेव । भइए संठाणओवि य ॥ ३४ ॥ व्याख्या–यः पुद्गलो रसतो मधुरः शर्करातुल्यो भवति, स पुद्गलो वर्णतो गंधतः स्पर्शतश्च भाव्यः, तथा संस्थानतोऽपि भाव्यः. ॥ ३४ ॥ एवं रसपंचकसंयोगे शतं ( १०० ) भंगाः, इति रसभेदानुक्त्वा स्पर्शभेदानाह—

॥ मूलम् ॥–फासओ कक्खडे जे उ । भइए से उ वन्नओ ॥ गंधओ रसओ चेव । भइए सं-

गाणर्जवि य ॥ ३५ ॥ व्याख्या—यः पुद्गलः स्पर्शतः कर्कशो भवति, स च पुद्गलो वर्णतो भाज्यः. गंधतो रसतश्च भाज्यः, एवं संस्थानतोऽपि भाज्यः. तथाहि—एकः कर्कशः पाषाणादिसदृशस्पर्शपुद्गलः, तत्र पुद्गले वर्णानां पंचानां मध्ये केचिद्वर्णाः संति भवंति. गंधयोरुभयोर्मध्ये एकः कश्चिद्गंधो भवति. रसानां पंचानां मध्ये केचिद्रसा भवंति. संस्थानानां पंचानां मध्येऽन्यतरदेकं संस्थानं भवतीति भावः. ॥ ३५ ॥

॥ मूलम् ॥—फासर्ज मउए जे उ । भइए से उ वन्नर्ज ॥ गंधर्ज रसर्ज चेव । भइए संगाणर्जवि य ॥ ३६ ॥ व्याख्या—यः पुद्गलः स्पर्शतो मृदुर्भवति, स पुद्गलो वर्णतो गंधतो रसतः संस्थानतश्च भाज्यः, खरस्पर्शवद् ज्ञेय इत्यर्थः. ॥ ३६ ॥

॥ मूलम् ॥—फासर्ज गुरुए जे उ । भइए से उ वन्नर्ज ॥ गंधर्ज रसर्ज चेव । भइए संगाणर्जवि य ॥ ३७ ॥ व्याख्या—यः पुद्गलः स्पर्शतो गुरुर्भवति, स पुद्गलो वर्णतो गंधतो रसतश्च संस्थानतश्च भाज्यः. ॥ ३७ ॥

॥मूलम्॥—फासर्ज लहुर्ज जे उ । भइए से उ वन्नर्ज ॥ गंधर्ज रसर्ज चेव । भइए संगा-

णओवि य ॥ ३७ ॥ व्याख्या—यः पुद्गलः स्पर्शतो लघुर्भवति, स पुद्गलो वर्णतो गंधतो रसतः संस्थानतश्च भाज्यः. ॥ ३७ ॥

॥ मूलम् ॥—फासओ सीयए जे उ । भइओ से उ वन्नओ ॥ गंधओ रसओ चेव । भइए संठाणओवि य ॥ ३८ ॥ व्याख्या—यः पुद्गलः स्पर्शतः शीतलो भवति, स पुद्गलो वर्णतो गंधतो रसतः संस्थानतश्चापि भाज्यः. ॥ ३८ ॥

॥ मूलम् ॥—फासओ उण्हओ जे उ । भइए से उ वन्नओ ॥ गंधओ रसओ चेव । भइए संठाणओवि य ॥ ४० ॥ व्याख्या—यः पुद्गलः स्पर्शत उष्णो भवति, स पुद्गलो वर्णतो गंधतो रसतः संस्थानतश्चापि भाज्यः. ॥ ४० ॥

॥ मूलम् ॥—फासओ णिद्धओ जे उ । भइए से उ वण्णओ ॥ गंधओ रसओ चेव । भइए संठाणओवि य ॥ ४१ ॥ व्याख्या—यः पुद्गलः स्पर्शतः स्निग्धो भवति, घृतादितुल्यो भवति, स पुद्गलो वर्णतो गंधतो रसतः संस्थानतश्च भाज्यः. ॥ ४१ ॥

॥ मूलम् ॥—फासओ लुक्खए जे उ । भइए से उ वन्नओ ॥ गंधओ रसओ चेव । भइए

संठाणउवि य ॥ ४२ ॥ व्याख्या—यः पुद्गलः स्पर्शतो रूक्षो भवति, स पुद्गलो वर्णतो गंधतो रसतः संस्थानतश्च भाज्यः. एवं स्पर्शाष्टकमीलने जातं षट्त्रिंशं शतं (१३६). ॥ ४२ ॥

अथ संस्थानभेदानाह—

॥ मूलम् ॥—परिमंडलसंठाणे । भइए से उ वन्नउ ॥ गंधउ रसउ चेव । भइए फासउवि य ॥ ४३ ॥ व्याख्या—यः परिमंडलसंस्थानपुद्गलः, स वर्णतो गंधतो रसतो भाज्यः, तथा स्पर्शतोऽपि भाज्यः. एकस्मिन् परिमंडलसंस्थाने चूडिकाकृतिमति पुद्गले वर्णानां पंचानां मध्ये कश्चिद्वर्णो भवति, गंधयोरुभयोर्मध्ये कश्चिद्गंधो भवति, रसानां पंचानां मध्ये कश्चिद्रसो भवति, स्पर्शानामष्टानां मध्ये कश्चित्स्पर्शो भवति. ॥ ४३ ॥

॥ मूलम् ॥—संठाणउ भवे वट्टे । भइए से उ वन्नउ ॥ गंधउ रसउ चेव । भइए फासउवि य ॥ ४४ ॥ व्याख्या—यः पुद्गलः संस्थानतो ' वट्टे ' इति वर्तुलो लड्डुकाकृतिर्भवति, स पुद्गलो वर्णतो गंधतो रसतश्च भाज्यः. तथा स्पर्शतोऽपि भाज्यः. ॥ ४४ ॥

॥ मूलम् ॥—संठाणउ भवे तं से । भइए से उ वन्नउ ॥ गंधउ रसउ चेव । भइए फा-

सउवि य ॥ ४५ ॥ व्याख्या—यः पुद्गलः संस्थानतस्त्रिस्रो भवेत्, सोऽपि पुद्गलो वर्णतो गंधतो रसतश्च भाज्यः, तथा स्पर्शतोऽपि भाज्यः. ॥ ४५ ॥

॥ मूलम् ॥—संठाणउ य चउरंसो । भइए से उ वन्नउ ॥ गंधउ रसउ चेव । भइए फासउवि य ॥ ४६ ॥ व्याख्या—यः पुद्गलः संस्थानतश्चतुरस्रो भवेत्, सोऽपि वर्णतो गंधतो रसतश्च स्पर्शतश्चापि भाज्यः. ॥ ४६ ॥

॥ मूलम् ॥—जे आययसंठाणे । भइए से उ वन्नउ ॥ गंधउ रसउ चेव । भइए फासउवि य ॥४७॥ व्याख्या—यः पुद्गल आयतसंस्थानः स वर्णतो गंधतो रसतः स्पर्शतश्चापि भाज्यः. एवं संस्थानपंचकभंगसंयोगे लब्धं शतं. ॥४७॥ इति पुद्गलानां वर्णगंधरसस्पर्शसंस्थानानां भेदा उक्ताः. अथ तेषां क्रमेण प्रत्येकं प्रत्येकं संख्यां वदंति, तद्यथा—एकस्मिन्नेकस्मिन् पुद्गलाश्रितवर्णे गंधौ द्वौ, रसाः पंच, स्पर्शा अष्टौ, संस्थानानि पंच, एवं सर्वेऽपि विंशतिर्भेदा भवंति. कृष्णनीललोहितपीतशुक्लानां पंचानां वर्णानां प्रत्येकं प्रत्येकं विंशतिर्विंशतिर्भेदमीलनाच्छतं भेदा वर्णपुद्गलस्य. अथ गंधयोर्द्वयोः षट्चत्वारिंशद्भेदा भवंति,

तद्यथा—वर्णाः पंच, रसाः पंच, स्पर्शा अष्टौ. संस्थानानि पंच, एवं सर्वे त्रयोविंशतिसंख्याकाः. ते च सुगंधदुर्गंधयोस्त्रयोविंशतित्रयोविंशतिप्रमिताः, उभयमीलने षट्चत्वारिंशद्भवंति. अथ रसपुद्गलानां शतं भेदा भवंति, तद्यथा—वर्णाः पंच, गंधौ द्वौ, स्पर्शा अष्टौ, संस्थानानि पंच, इति विंशतिर्भेदाः, प्रत्येकं प्रत्येकं तिक्तकटुकषायाम्लमधुरादिपंचभिर्भक्ताः संतः शतं भेदा भवंति. अथ स्पर्शभेदाः षट्त्रिंशदधिकं शतं, तद्यथा—वर्णाः पंच. गंधौ द्वौ, रसाः पंच, संस्थानानि पंच. एवं सप्तदश भेदाः, ते च खरमृदुगुरुलघुरूक्षस्निग्धशीतोष्णपुद्गलैरष्टभिर्गुणिताः षट्त्रिंशदधिकशतं भेदा भवंति. प्रज्ञापनायां स्पर्शपुद्गलानां चतुरशीत्यधिकशतं (१८४) भेदा उक्ताः संति. तद्यथा—वर्णाः पंच, रसाः पंच, गंधौ द्वौ. स्पर्शाः षडत्र गृह्यंते. यतो हि यत्र खरस्पर्शः पुद्गलो गण्यते. तत्र तदा मृदुः पुद्गलो न गण्यते. यत्र स्निग्धो गण्यते.तदा तत्र रूक्षो न गण्यते, परस्परविरोधिनो ह्येकत्र न तिष्ठतः, तस्मात् स्पर्शाः षट्, संस्थानानि पंच, एवं सर्वे मीलितास्त्रयोविंशतिर्भवंति. ते त्रयोविंशतिभेदाः प्रत्येकं खरमृदुगुरुलघुस्निग्धरूक्षशीतोष्णाख्यैरष्टभिः पुद्गलैर्गुणिताश्चतुरशीत्यधिकशतं (१८४) भेदा भवंति. वीतरागोक्तं वचः प्रमाणं, येन

याहशं ज्ञातं, तेन ताहशं व्याख्यातं. तत्वं केवली वेद. एवं वर्णगंधरसस्पर्शसंस्थानानां सकलभंगकसंकलनातो जातानि घ्यशीत्यधिकानि चत्वारि शतानि ( ४७२ ) सर्वत्र जातावेकवचनं, परिस्थूलन्यायेनैतडुक्तं, अन्यथा प्रत्येकमप्येषां तारतम्यतोऽनंतत्वादनंता एव भंगाः संभवंति. ॥ ४७ ॥ अथोपसंहारेणोत्तरग्रंथसंबंधमाह—

॥ मूलम् ॥—एसाऽजीवविभत्ती । समासेण वियाहिया ॥ इत्तो जीवविभत्तिं । वुच्छामि अणुपुव्वसो ॥ ४८ ॥ व्याख्या—एषाऽजीवविभक्तिः समासेन संक्षेपेण व्याख्याता. ' इत्तो ' इतीतोऽनंतरं ' अणुपुव्वसो ' इत्यानुपूर्व्याऽनुक्रमेण जीवविभक्तिं प्रवक्ष्यामि. ॥ ४८ ॥

॥ मूलम् ॥—संसारत्था य सिद्धा य । डुविहा जीवा वियाहिया ॥ सिद्धाणेगविहा वुत्ता । तं मे कित्तयर्ड सुण ॥ ४९ ॥ व्याख्या—जीवा द्विधा व्याख्याताः, ते के? संसारस्थाः, संसारो गतिचतुष्टयात्मकः, तत्र तिष्ठंतीति संसारस्थाः, च पुनः सिद्धाः कर्ममलरहिता भवभ्रमणान्निवृत्ताः. तत्र च सिद्धा अनेकविधा उक्ताः, तमिति तान् सिद्धभेदान् मे मम कीर्तयतः कथयतस्त्वं शृणु? ॥ ४९ ॥

॥ मूलम् ॥—इत्थी पुरिससिद्धा य । तहेव य नपुंसगा ॥ सलिंगा अन्नलिंगा य । गिहलिंगे तहेव य ॥ ५० ॥ व्याख्या—' इत्थी ' इति स्त्रियः पूर्वपर्यायापेक्षया सिद्धाः स्त्रीसिद्धाः १. एवं पुरुषपर्यायात्सिद्धाः पुरुषसिद्धाः २. तथैव तेनैव प्रकारेण नपुंसकपर्यायात्सिद्धा नपुंसकसिद्धाः, नपुंसकाच्च कृत्रिमा एव सिद्धा भवंति, न तु जन्मनपुंसकाः सिध्यंति. ३. स्वलिंगसिद्धा यतिवेषेण सिद्धाः ४. अन्यलिंगसिद्धा बौद्धपरिव्राजकादिवेषेण सिद्धाः ५. तथैव गृहलिंगे सिद्धा गृहस्थवेषे सिद्धाः ६. षड् भेदाः सिद्धानामुक्ताः. ग्रंथांतरे पंचदश भेदा अपि. जिनसिद्धस्तीर्थंकरः १, अजिनसिद्धो गणधरः २, तीर्थसिद्धः पुंडरीकादिः ३, अतीर्थसिद्धो मरुदेव्यादिः ४, गृहलिंगसिद्धो भरतादिः ५, अन्यलिंगसिद्धो वल्कलचीरिप्रमुखः ६, स्वलिंगसिद्धः साधुः ७, स्त्रीलिंगसिद्धश्चंदनबालादिः ८, नरसिद्धः स्थविरः ९, नपुंसकसिद्धो गांगेयादिः १०. प्रत्येकबुद्धः करकंड्वादिः ११, स्वयंबुद्धः कपिलकेवल्यादिः १२, बुद्धबोधितसिद्धः १३. एकसमये एकसिद्धः १४, एकसमयेऽनेकसिद्धः १५. एवं पंचदश भेदा अपि षट्स्वेवांतर्भवंति. ॥ ५० ॥ अथ सिद्धानेवाऽवगाहनातः क्षेत्रतश्चाह—

॥ मूलम् ॥–उक्कोसोगाहणाए य। जहन्नमज्झिमाइ य ॥ उड्ढे अहे य तिरियं च। समुद्दंमि जलंमि य ॥ ५१ ॥ व्याख्या—अस्यां गाथायामुत्कृष्टावगाहनायां, तथा जघन्यावगाहनायां च पुनर्मध्यमावगाहनायां कति सिद्धाः कुत्र कुत्र स्थाने भवंति? तदाह–उत्कृष्टावगाहनायां, अवगाह्यते जीवेनाकाशोऽनयेत्यवगाहना, उत्कृष्टा चासाववगाहना चोत्कृष्टावगाहना, तस्यामुत्कृष्टावगाहनायां सिद्धाः. च पुनर्जघन्यमध्यमयोः, जघन्या च मध्यमा च जघन्यमध्यमे, तयोर्जघन्यमध्यमयोर्जघन्यावगाहनायां तथा मध्यमावगाहनायां, उत्कृष्टावगाहनाया जघन्यावगाहना याश्चांतर्वर्तिनी मध्यमावगाहना, तस्यां सिद्धाः. 'उड्ढे' इत्यूर्ध्वलोके मेरुचूलादौ चैत्यवंदनां कर्तुं गतानां केषांचिच्चारणश्रमणानां सिद्धिः स्यात्, तदा ते श्रमणास्तत्र कियंतः सिद्धा भवंति? एवमधोलोके ग्रामनगरादौ सिद्धाः कियंतो भवंति? एवं तिर्यग्लोके सार्धतृतीयद्वीपेषु, समुद्रे, जले नद्यादौ, एतेषु स्थानेष्वेकस्मिन् समये कियंतः सिद्धा भवंतीति प्रश्नः. ॥ ५१ ॥ अथैतेषामेवोत्तरं वदंति–

॥ मूलम् ॥–दस य नपुंसएसु। वीसई इत्थियासु य ॥ पुरिसेसु य अट्ठसयं। समयेगे-

ण सिद्धाइ ॥ ५१ ॥ चत्तारि य गिहिलिंगे । अन्नलिंगे दसेव य ॥ सलिंगेण य अठसयं । स- मयेगेगेण सिज्झइ ॥ ५२ ॥ उक्कोसावगाहणाए उ । सिज्झंते जुगवं दुवे ॥ चत्तारि जहन्नाए । जवमज्झमठुत्तरं सयं ॥ ५३ ॥ चउरुद्धलोए य दुवे समुद्दे । तओ जले वीसमहे तहेव य ॥ सयं च अठुत्तर तिरियलोए । समएण एगेण उ सिज्झइ धुवं ॥ ५४ ॥ व्याख्या—एतासां तचस्- णां गाथानामर्थः—च शब्दः समुच्चये, दशेति दशसंख्याका नपुंसकेष्वेकस्मिन् समये सिद्ध्यं- ते, च पुनर्विंशतिः स्त्रीषु सिद्ध्यंति, पुरुषेषु च 'अठसयं' इत्यष्टभिरधिकं शतमष्टशतमेकस्मिन् समये सिद्ध्यंति. ॥५१॥ गृहिणो गृहस्थस्य लिंगं गृहलिंगं, तस्मिन् गृहलिंगे चत्वारः सिद्ध्यं- ति, एकस्मिन् समये सिद्धिं प्राप्नुवंति. अन्यलिंगे बौद्धादिवेषे दशसंख्याकाः सिद्ध्यंति. स्व- लिंगेन रजोहरणादिसाधुवेषेणैकेन समयेनाष्टोत्तरशतं सिद्ध्यंति. ॥ ५२ ॥ उत्कृष्टावगाहना- यां पंचशतधनुःप्रमाणायां युगपत्समकालमेकेन समयेन द्वौ सिद्ध्यतः. जघन्यावगाहनायां द्विहस्तप्रमाणायां चत्वारः सिद्ध्यंति. तथा ' जवमज्झत्ति ' यवमध्यमिव यवमध्यं मध्यमा- वगाहना, तस्यां मध्यमावगाहनायामेकेन समयेनाष्टोत्तरशतं सिद्ध्यंति. ॥ ५३ ॥ चत्वार ऊ-

ऊर्ध्वलोके, द्वौ समुद्रे, जले त्रयः सिद्ध्यंत्येकेन समयेन, विंशतिरध इत्यधोलोके, तिर्यग्लोके एकेन समयेनाष्टोत्तरशतं सिद्ध्यंति. तुशब्दः पुनरर्थे, ध्रुवमिति निश्चयार्थे. इति गाथाचतुष्टयार्थः. ॥ ५४ ॥ अथ तेषामेव प्रतिघातादिप्रतिपादनायाह—

॥ मूलम् ॥—कहिं पडिहया सिद्धा । कहिं सिद्धा पइट्ठिया ॥ कहिं बोंदिं चइत्ताणं । कत्थ गंतूण सिज्झइ ॥ ५५ ॥ व्याख्या—'कहिं' इति कस्मिन् सिद्धाः प्रतिहताः स्खलिताः संति? कोऽर्थः? कुत्र सिद्धाः निरुद्धगतयो वर्तंते? ते सिद्धा कस्मिन् प्रतिष्ठिताः संति? साद्यपर्यवसितं कालं स्थिताः संति? पुनः सिद्धाः क बुंदिं शरीरं त्यक्त्वा कुत्र गत्वा 'सिज्झइ' इति सिद्ध्यंति? प्राकृतत्वाद्वचनव्यत्ययः. क सिद्धजीवा देहं त्यक्त्वा निष्ठितार्था भवंति? ॥ ५६ ॥ एतत्प्रश्नस्योत्तरमाह—

॥ मूलम् ॥—अलोए पडिहया सिद्धा । लोयग्गे य पइट्ठिया ॥ इह बुंदिं चइत्ताणं । तत्थ गंतूण सिज्झई ॥ ५७ ॥ व्याख्या—सिद्धा अलोके केवलाकाशलक्षणे प्रतिहताः स्खलिताः संति. तत्र हि धर्मास्तिकायाऽभावेन तेषां गतेरसंभवोऽस्ति. तथा पुनः सिद्धा लो-

काग्रे लोकस्योपरितने नागे प्रतिष्ठिताः सदाऽवस्थिताः संति. इह तिर्यग्लोकादौ बोंदिं श-रीरं त्यक्त्वा तत्र लोकाग्रे गत्वा सिध्यंति, पूर्वापरकालस्याऽसंजवायश्चैव समये जवक्षयस्त-स्मिन्नेव समये मोक्षस्तत्र गतिश्च जवतीति जावः. ॥ ५७ ॥ अथ लोकाग्रे चेषत्प्राग्नारा य-त्संस्थाना यत्प्रमाणा यद्वर्णा च वर्तते, तत्सर्वं प्राह—

॥ मूलम् ॥—बारसजोयणेहिं । सव्वठस्सुवरिं जवे ॥ ईसपप्नारनामा उ । पुढवी उत्त-संठिया ॥ ५८ ॥ पणयालसयसहस्सा । जोयणाणं तु आयया ॥ तावइयं चेव विछिन्ना । ति-गुणो साहियपरिरउ ॥ ५९ ॥ अठजोयणबाहुल्ला । एसा मज्फंमि वियाहिया ॥ परिहायंती चरिमंते । मछियपत्ताउ तणुयरी ॥ ६० ॥ अज्जुणसुवन्नगमई । सा पुढवी निम्मला सहावे-णं ॥ उत्ताणयछत्तयसं—ठिया य जणिया जिणवरेहिं ॥ ६१ ॥ संखंककुंदसंकासा । पंडुरा निम्मला सुना ॥ सीआउ जोयणे तत्तो । लोयंतो उ वियाहिउ ॥ ६२ ॥ पंचजिः कुलकं ॥

व्याख्या—एताजिः पंचजिर्गाथाजिः सिद्धशिलामीषत्प्राग्नारानाम्नीं वर्णयति—सर्वार्थसि-द्धस्य नाम्नो विमानस्योपरि द्वादशजिर्योजनैरीषत्प्राग्नारानाम्नी पृथ्वी जवेत्. कीदृशी सा भू-

मिः ? छत्रसंस्थिता, छत्रमातपत्रं, तस्य संस्थितं संस्थानमाकृतिर्यस्याः सा छत्रसंस्थिता. इह सामान्योक्तावपि छत्रमुत्तानमेव ज्ञेयं. ॥ ५८ ॥ सेषत्प्राग्भारा पृथ्वी कीदृशी वर्तते ? तत्स्वरूपमाह—सेषत्प्राग्भारा योजनानां पंचचत्वारिंशच्छतसहस्राण्यायता दीर्घा वर्तते, पंचचत्वारिंशल्लक्षयोजनदीर्घास्तीत्यर्थः. च पुनस्तावंतिकं तावत्प्रमाणमेव विस्तीर्णा वर्तते, विस्तारेणापि पंचचत्वारिंशल्लक्षयोजनप्रमाणेति भावः. तथा तस्या ईषत्प्राग्भारायाः इति शेषः, 'परिरउ' इति परिधिस्त्रिगुणः साधिको ज्ञेयः. तदैककोटिद्विचत्वारिंशल्लक्षत्रिंशत्सहस्रद्विशतैकोनपंचाशद्योजनानि किंचिदधिकानि, एतावांस्तस्याः सर्वः परिधिर्भवति. ॥ ५९ ॥ पुनः कथंभूता सा ? अष्टयोजनबाहल्या, अष्ट योजनानि बाहल्यं यस्यां साष्टयोजनबाहल्या, सेषत्प्राग्भारा मध्यप्रदेशे इयत्प्रमाणस्थौल्यवती जिनैर्व्याख्याता. चरिमांतेषु सर्वदिग्वर्तिषु पर्यंतप्रदेशेषु परिहीयमाना (हानिश्चात्र विशेषाऽनभिधानेऽपि प्रतियोजनमंगुलपृथक्त्वं दृष्टव्या.) परिसमंतात् हायंतीति हीयमाना पत्तलाभवंती, मक्षिकायाः पत्रं मक्षिकापिछं, तस्मान्मक्षिकापत्रादपि तनुतराऽतिसूक्ष्मेत्यर्थः. ॥ ६० ॥ पुनः कीदृशी सा पृथ्वी ? अर्जुनसुवर्णमयी श्वेतकां-

चनस्वरूपा. पुनः सा पृथ्वी स्वन्नावेन निर्मला. पुनः सा कीदृशी? उत्तानकमूर्ध्वमुखं यच्छत्रकं तच्छत्रसंस्थितं संस्थानं यस्याः सोत्तानछत्रकसंस्थिता, सा जिनवरैर्व्याख्याता नणिता. पूर्वं सामान्येन छत्रसंस्थितेत्युक्त्वेह तूत्तानछत्रसंस्थितेत्युक्तं. तद्विशेषत इति न पुनरुक्तिदोषः. अथवान्यकर्तृकेयं गाथा. ॥ ६१ ॥ पुनः सा पृथ्वी शंखांककुंदशंकाशा, शंखांककुंदानि प्रतीतानि, तत्संकाशा वर्णतस्तत्तुल्या, अत एव पांकुरा धवला निर्मला निःकलंका शुन्ना नव्या सा पृथ्वी सीतानिधा वर्तते. सीतेत्यपरं नाम, तस्याः सीतान्निधायाः पृथिव्या उपरीत्यनेन सिद्धशिलाया उपरिष्टादेकं योजनं लोकांतस्तु व्याख्यातः. ॥ ६२ ॥ इति सिद्धशिलास्वरूपमुक्त्वा तत्र सिद्धाः क तिष्टंतीत्याह—

॥ मूलम् ॥—जोयणस्स उ जो तत्थ । कोसो उवरिमो नवे ॥ तस्स कोसस्स नप्पाए । सिद्धाणोगाहणा नवे ॥ ६३ ॥ व्याख्या–योजनस्य तत्रोपरिम उपरिवर्ती यः क्रोशो नवेत्तस्य क्रोशस्य षष्ठे नागे, इत्यनेन सत्रिनागत्रयस्त्रिंशदधिकधनुःशतत्रितयरूपे (३३३) धनुः परिमाणे सिद्धानां तत्रावगाहनाऽवस्थितिर्नवेदित्यर्थः. ॥ ६३ ॥ पुनः सिद्धानां स्वरूपमाह—

॥ मूलम् ॥—तत्र सिद्धा महाभागा । लोयग्गंमि पइट्ठिया ॥ भवप्पवंचउमुक्का । सिद्धिं वरगइं गया ॥ ६४ ॥ व्याख्या—तत्र तस्मिन् लोकाग्रे सिद्धाः प्रतिष्टिताः संति. कीदृशाः सिद्धाः? महाभागा अचिंत्यशक्तिमंतः, पुनः कीदृशाः? भवप्रपंचोन्मुक्ताः, भवा नारकादयोऽवतारास्तेषां प्रपंचो विस्तारस्तत उन्मुक्ता भवप्रपंचोन्मुक्ता भवभ्रमणरहिता इत्यर्थः. पुनः कीदृशाः? सिद्धिं वरगतिं गताः, सिद्धिनाम्नीं प्रधानगतिं प्राप्ताः. अत्र हि सिद्धानां भवप्रपंचोन्मुक्ता इति विशेषणेनाऽचलस्वभाव उक्तोऽस्ति. ॥ ६३ ॥ अथ सिद्धानां कियत्यवगाहना भवतीत्याह—

॥ मूलम् ॥—उस्सेहो जस्स जो होइ । भवंमि चरमंमि य ॥ तिभागहीणा तत्तो य । सिद्धाणोगाहणा भवे ॥ ६४ ॥ व्याख्या—यस्य मनुष्यस्य चरमे भवेंऽत्ये भवे मोक्षगमनार्हे जन्मनि यादृश उत्सेधो भवति देहप्रमाणं भवति, ततो देहप्रमाणात्सिद्धानां मोक्षप्राप्तानां तृतीयभागहीनाऽवगाहना भवेत्. ॥ ६५ ॥ अथ सिद्धानां कालत आह—

॥ मूलम् ॥—एगत्तेण य साईया । अपज्जवसियावि य ॥ पुहुत्तेण अणाईया । अपज्जव-

मित्वावि य ॥ ६६ ॥ व्याख्या—ते सिद्धा एकत्वेनैकस्य कस्यचिन्नामग्रहणापेक्षया सादिकाः, अमुको मुनिस्तदा सिद्ध इत्यादिसहिताः सिद्धा भवंति. च पुनस्ते सिद्धा अपर्यवसिता अंतरहिताः, मोक्षगमनादनंतरमत्रागमनाऽभावादंतरहिताः. ते सिद्धाः पृथक्त्वेन बहुत्वेन सामस्त्यपेक्षयाऽनादयोऽनंताश्च. ॥ ६६ ॥ पुनस्तेषामेव स्वरूपमाह—

॥ मूलम् ॥—अरूविणो जीवघणा । नाणदंसणसन्निया ॥ अउलं सुहं संपत्ता । उवमा जस्स नत्थि उ ॥ ६७ ॥ व्याख्या—ते सिद्धा अरूपिणो वर्तंते, रूपरहितत्वेन रसगंधस्पर्शानामप्यभावः, लेश्यारहिता अपि. पुनः कीदृशाः सिद्धाः? जीवघनाः, जीवाश्च ते घनाश्च जीवघनाः, जीवाः सचिदुपयोगयुक्ताः, घना अंतररहितत्वेन जीवप्रदेशमयाः, पुनः कीदृशाः? ज्ञानदर्शनसंज्ञिताः, केवलज्ञानकेवलदर्शने एव संज्ञा जाता येषां ते ज्ञानदर्शनसंज्ञिताः, ज्ञानदर्शनोपयोगवंत इत्यर्थः. यतः—कर्मक्लेशविमोक्षाच्च मोक्षे सुखमनुत्तरं.

॥ मूलम् ॥—लोएगदेसे ते सव्वे । नाणदंसणसन्निया ॥ संसारपारनिच्छिन्ना । सिद्धिं वरगइं गया ॥ ६८ ॥ व्याख्या—अथ सिद्धानां क्षेत्रस्वरूपमाह—ते सिद्धाः सर्वलोकैकदेशे

तिष्टंति, इत्यनेन—मुक्ताः सर्वत्र तिष्टंति । व्योमवत्पापवार्जिताः ॥ इति सर्वगतत्वमतमपा-
स्तं. तथात्वे सति सर्वत्र वेदनादिप्रसंगात्. पुनः कीदृशाः? ज्ञानदर्शनसंज्ञिता इत्यनेन के-
षांचिद् ज्ञानसंज्ञा, केषांचिद्दर्शनसंज्ञा, जैनमते तु सर्वेषां सिद्धानामुन्ने ज्ञानदर्शने संज्ञे
जाते स्तः, ज्ञानदर्शनमयाः सिद्धा इत्यर्थः. पुनः कीदृशाः ? संसारपारनिस्तीर्णाः, पुनरागम-
नाभावात्संसारमतिक्रांता इत्यनेन केषांचिन्मते भक्तोद्धारार्थं दानवानां विनाशार्थं भूयोभू-
यो भूमाववतीर्य भक्तकार्यं विधाय मुक्तिं व्रजति प्रभुरिति मतमपि निराकृतं. पुनः कीदृ-
शाः? सिध्धिं वरगतिं गता इत्यनेन क्षीणकर्माणोऽपि लोकाग्रगमनस्वभावेनोत्पत्तिसमये स-
क्रियत्वमप्यस्तीति गाथाभिप्रायः. ॥ ६८ ॥ अथ सिद्धानभिधाय संसारिणो जीवानाह—

॥ मूलम् ॥—संसारत्था य जे जीवा । दुविहा ते वियाहिया ॥ तसा य थावरा चेव ।
थावरा तिविहा तहिं ॥ ६९ ॥ व्याख्या—ये जीवाः संसारस्थास्ते जीवा द्विविधास्तीर्थक-
रैर्व्याख्याताः. ते के? त्रसाः स्थावराश्च. एते द्विविधाः. अथ द्वैविध्ये सत्यप्यल्पकथनत्वा-
त्पूर्वं स्थावराणां निर्देशं करोति. तत्र त्रसेषु स्थावरेषु त्रिविधाः स्थावराः संति. ॥ ६९ ॥

॥ मूलम् ॥—पुढवी आउजीवा य । तहेव य वणस्सई ॥ एचेए थावरा तिविहा । तेसिं भेए सुणेह मे ॥ ७० ॥ व्याख्या—स्थावरास्त्रिविधाः, जीवशब्दस्य प्रत्येकं संबंधात् पृथ्व्येव जीवाः पृथ्वीजीवाः. आपो जलं, ता एव जीवा अंबुजीवाश्च. पृथिवी चापश्च पृथिव्यापस्तद्रूपा जीवाः पृथिव्यप्जीवाः, तथैव च वनस्पतिर्वनस्पतिजीवाः, जीवशरीरयोरन्योन्यानुगतत्वेन कथंचिदभेदात्पृथिव्याप्वनस्पतिषु जीवव्यपदेशः. इत्येते पृथिव्यादयस्त्रिविधाः स्थावराः संति. तेषां त्रयाणां स्थावराणां भेदान् मे मम कथयतस्त्वं शृणु? ॥ ७० ॥ पृथिवीभेदानाह—

॥ मूलम् ॥—दुविहा पुढवीजीवा । सुहुमा बायरा तहा ॥ पज्जत्तमपज्जत्ता । एवमेए दुहा पुणो ॥ ७१ ॥ व्याख्या—पृथिवीजीवास्तु द्विविधा उक्ताः, सूक्ष्माश्चर्मचक्षुरगोचराः केवलज्ञानगम्याः, तथा पुनः पृथ्वीजीवा बादराः, ते च पर्याप्ता अपर्याप्ताश्च, आहारशरीरेंद्रियोच्छ्वासनिःश्वासरूपाभिः पर्याप्तिभिश्चतसृभिः शक्तिभिर्युक्ताः पर्याप्ताः, तथा तेभ्यो विपरीता अपर्याप्ताः. सूक्ष्माः पृथ्वीजीवाः पर्याप्ता अपर्याप्ताः, बादराः पृथ्वीजीवाः पर्याप्ता अप-

र्याप्ताः, एवं द्विविधाः. ॥ ७१ ॥

॥ मूलम् ॥—बायरा जे उ पज्जत्ता । दुविहा ते वियाहिया ॥ सण्हा खरा य बोधव्वा । सण्हा सत्तविहा तहिं ॥ ७२ ॥ व्याख्या—तत्र पुनरेषामुत्तरभेदानाह—ये बादराः पृथ्वीजीवाः पर्याप्ता उक्तास्ते द्विविधा व्याख्याताः. एके बादराः पृथ्वीजीवाः पर्याप्ताः श्लक्ष्णाश्चूर्णरूपाः, च पुनरेके बादराः पृथ्वीजीवा पर्याप्ताः खराः कठिनाश्च बोधव्याः. तत्र श्लक्ष्णखरयोः पृथ्वीजीवयोर्मध्ये श्लक्ष्णाः पृथ्वीजीवाः सप्तविधा ज्ञातव्याः. ॥७२॥ सप्तविधत्वमेवाह—

॥ मूलम् ॥—किण्हा नीला य रुहिरा य । हालिद्दा सुक्किला तहा ॥ पंडुपणगमट्टिया । खरा छत्तीसईविहा ॥ ७३ ॥ व्याख्या—कृष्णाः श्यामवर्णाः, नीला नीलवर्णाः, रुधिरा रक्तवर्णाः, हारिद्राः पीतवर्णाः, शुक्ला धवलवर्णाः, तथा ' पंडुत्ति ' पांडुवर्णा ईषच्छुभ्रा इत्यर्थः. इत्थं वर्णभेदेन षड्विधत्वमुक्तं. इह च पांडुग्रहणं कृष्णादिवर्णानामपि स्वस्थानभेदांतरसंभवसूचकं. सप्तमो भेदस्तु पनकमृत्तिकारूपः. पनको ह्यत्यंतसूक्ष्मत्वेनाकाशे वर्तमानो लोके पृथ्वीत्वेनारूढस्तस्माद्भेदत्वेन गृहीतः. इत्यनेन श्लक्ष्णा पृथ्वी सप्तविधोक्ता. अथ खरा पृथ्वी

षट्त्रिंशद्विधा तीर्थंकरैर्व्याख्याता. ॥ ७३ ॥ तान् भेदानाह—

॥ मूलम् ॥—पुढवी य सक्करा वालु—या य उवले सिला य लोणोसे ॥ अय तउ य तंबसीसग । रुप्प सुवण्णे य वयरे य ॥ ७४ ॥ हरियाले हिंगुलेए । मणोसिला सीसगंजणपवाले ॥ अब्भपडलब्भवालुय । बायरकाए मणिविहाणा ॥ ७५ ॥ गोमिज्जाए य रुयगे । अंके फलिहे य लोहियक्खेय ॥ मरगयमसारगल्ले । भुयमोयग इंदनीले य ॥ ७६ ॥ चंदणगेरूयहंसगब्भ—पुलए सोगंधिए य बोधव्वे ॥ चंदप्पहवेरुलिए । जलकंते सूरकंते य ॥ ७७ ॥ चतुर्भिः कुलकं ॥ व्याख्या—पृथ्वी शुद्धा लिंपनयोग्या १, शर्करा मरुंफादिरूपा कर्करमयी २, वालुका च स्थलीभूमौ प्रसिद्धा ३, उपलो गंडशैलपाषाणखंडादिरूपा ४, शिला बृहत्पाषाणमयी ५, 'लोणोसे' इति लवणोषे, लवणं च उषा च लवणोषे, लवणं समुद्रादिभ्य उत्पन्नं, तदपि पृथ्वीरूपमेव ६. ऊषा ऊषरमयी ६. अयो लोहं ७, त्रपुकं कस्तीरं ९, ताम्रं प्रसिद्धं १०. सीसकं ११. रूप्यं १२, सुवर्णं १३. अयश्च त्रपुकं च ताम्रं च सीसकं च रूप्यं च सुवर्णं चायस्त्रपुकताम्रसीसकरूप्यसुवर्णानि, एतेऽपि पृथ्वीभेदा इत्यर्थः. च पुनर्वज्रं हीरकं १४ इति

चतुर्दश भेदाः. ॥ ७४ ॥ हरितालः १५, हिंगुलः १६, मनःशिला १७ प्रसिद्धा. सीसको धातुविशेषो जसद इति लोके १८, अंजनं सुरमकं १९, प्रवालं विद्रुमं २०, अभ्रपटलं भोडल इति प्रसिद्धः २१ अभ्रवालुका अभ्रपटलमिश्रा वालुकाऽभ्रवालुका २२, बादरकाये बादरपृथ्वीकायेऽमी भेदा उक्ताः. अथ मण्यभिधानापि पृथ्व्यस्ति, तस्मान्मण्यभिधानानि मणीनां नामान्युच्यंते, मणिभेदा अपि पृथ्वीभेदा एवेत्यर्थः. ॥ ७५ ॥ कानि कानि मणिनामानि? गोमयको गोमेधमणिः २३, च पुना रुचको रुचकनामा मणिः २४, अंकरत्नं २५ स्फटिकरत्नं २६, लोहिताख्यो मणिः २७, मरकतमणिः २८, मसारगल्लश्च २९, भुजगमोचको मणिः ३०, च पुनरिंद्रनीलरत्नं ३१, चंदनः ३२, गैरिकनामा मणिः ३३, हंसगर्भः ३४, पुलकः ३५, पुनः सौगंधिको मणिर्बोधव्यः ३६, चंद्रप्रभः ३७, वैडूर्यो मणिः ३८, जलकांतो मणिः ३९, सूर्यकांतो मणिः ४०. अत्रैतासु गाथासु खरपृथिव्याः षट्त्रिंशद्भेदा उक्ताः, गणनायां तु चत्वारिंशद्भेदाः संजातास्तत्कथं? तत्रोत्तरं—अत्र हि रत्नानां केचिद्भेदाः केषुचिद्रत्नभेदेष्वंतर्भवंति, तस्मान्नात्र कश्चिद्वीतरागवचनेषु दोषावकाशः. ॥ ७७ ॥

॥ मूलम् ॥—एए खरपुढवीए । भेया छत्तीसमाहिया ॥ एगविहमनाणत्ता । सुहुमा तत्थ वियाहिया ॥ ७७ ॥ व्याख्या—एते खरपृथिव्या भेदाः षट्त्रिंशत्समाख्यातास्तीर्थंकरैः, पृथ्वीभेदात्पृथ्वीस्था जीवा अपि भिन्ना भिन्नाः, तत्र सूक्ष्मबादरपृथ्वीजीवेषु सूक्ष्मपृथ्वीजीवा एकविधा अनानात्वास्तीर्थंकरैर्व्याख्याताः. न विद्यते नानात्वं येषां तेऽनानात्वा एवंविधा उक्ता इत्यर्थः. पूर्वं सूक्ष्मबादरौ मुख्यभेदौ द्वौ पृथ्वीकायजीवानामुक्तौ. एते हि सूक्ष्माणां बादराणामवांतरभेदा उक्ताः, मुख्यवृत्त्या त्वेक एव सूक्ष्मो बादरो वैक एक भेदोऽस्ति, नानात्वं नास्तीत्यर्थः. ॥ ७७ ॥

॥ मूलम् ॥—सुहुमा सव्वलोयंमि । लोयदेसे य बायरा ॥ इत्तो कालविभागं तु । तेसिं वुच्छं चउव्विहं ॥ ७८ ॥ व्याख्या—अथ तान् पृथ्वीजीवान् क्षेत्रत आह—सूक्ष्मा ये पृथ्वीकायजीवास्ते सर्वस्मिंश्चतुर्दशरज्ज्वात्मके लोके संत्यभिव्याप्य स्थिताः संति. बादराः पृथ्वीकायजीवा लोकदेशे तिष्ठंति, लोकस्य देशो विभागो लोकदेशस्तस्मिंस्तिष्ठंति, बादरा हि कचित्कस्मिंश्चित्प्रदेशे कदाचित्संभवंति, कदाचित्कस्मिंश्चित्स्थाने न संभवंति. ' इत्तो ' इति इतः

क्षेत्रप्ररूपणानंतरं तेषां पृथ्वीकायजीवानां चतुर्विधं कालविभागं कालतो भेदं वक्ष्ये. ॥७९॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ ८० ॥ व्याख्या—संततिं प्राप्य प्रवाहमाश्रित्यैते सूक्ष्मा बादराश्च पृथ्वीकायजीवा अनादय आदिरहिताः, च पुनरपर्यवसिता अप्यंतररहिता अपि. स्थितिं प्रतीत्य, भवस्थितिकायस्थितिरूपां स्थितिमाश्रित्य, संसारवर्ती जीवः संसारे पृथ्वीकायांतर्वर्ती सन् पृथ्वीकाये कियत्कालं तिष्ठतीति स्थितिविचारमाश्रित्य जीवाः सादिकाः सपर्यवसिताश्चापि वर्तंते. ॥ ८० ॥

॥ मूलम् ॥—बावीससहस्साइं । वासाणुक्कोसिया भवे ॥ आउठिई पुढवीणं । अंतोमुहुत्तं जहन्निया ॥ ८१ ॥ असंखकालमुक्कोसं । अंतोमुहुत्तं जहन्निया ॥ कायठिई पुढवीणं । तं कायं तु अमुंचओ ॥ ८२ ॥ व्याख्या—पृथ्वीनां पृथ्वीकायजीवानां वर्षाणां द्वाविंशतिसहस्राण्युत्कृष्टायुःस्थितिर्भवेत्, जघन्यिका चांतर्मुहूर्तं स्थितिर्भवेत्. ॥ ८२ ॥ भवस्थितिमुक्त्वा कायस्थितिं वदति, ' असंखेति ' पृथ्वीनामिति पृथ्वीकायजीवानां पृथ्वीकायममुंचतां पृथ्वीका-

ये स्थितिः संसारे चेद्भवति तर्ह्युत्कृष्टाऽसंख्यकालं स्थितिर्भवेत्, जघन्यिका चांतर्मुहूर्तं स्थितिर्भवेत्. कोऽर्थः? यदि पृथ्वीकायस्थो जीवः पृथ्वीकायतश्च्युत्वा पुनः पुनर्निरंतरं पृथ्वीकाये एवोत्पद्यते. तदोत्कृष्टमसंख्यं कालं यावत्तिष्ठति, जघन्यं त्वंतर्मुहूर्तं तिष्ठतीति भावः. इत्थं द्विविधाया अपि स्थितेः सादिपर्यवसितत्वमुक्तं. ॥८१॥ अथ कालस्यांतरमेव कालांतरमाह—

॥ मूलम् ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नियं ॥ विजढम्मि सए काए । पुढवीजीवाण अंतरं ॥ ८२ ॥ व्याख्या—पृथ्वीजीवानां स्वकीये काये 'विजढंमि' इति त्यक्ते उत्कृष्टमनंतं कालमंतरं भवति, जघन्यकमंतरमंतर्मुहूर्तं भवति. कोऽर्थः? यदा हि पृथ्वीकायस्थो जीवः पृथ्वीकायाच्च्युत्वाऽपरस्मिन् काये उत्पद्येत, ततश्च्युत्वा पुनः पृथ्वीकाये एवोत्पद्येत तदा कियदंतरं भवति? उत्कृष्टमनंतकालं, जघन्यमंतर्मुहूर्तं. यदा पृथ्वीजीवस्य पृथ्वीकायाच्च्युतिर्भूत्वा वनस्पतिकाये उत्पत्तिः स्यात्तदाऽनंतकालस्यांतरं जायते. वनस्पतिकायस्य जीवस्यानंतकालस्थितित्वात्, जघन्यमंतरमंतर्मुहूर्तं भवति. ॥ ८२ ॥ एतान्येव भावत आह—

॥ मूलम् ॥—एएसिं वन्नउ चेव । गंधउ रसफासउ ॥ संठाणादेसउवावि । विहाणाइ सहस्ससो ॥ ७३ ॥ व्याख्या—एतेषां पृथ्वीजीवानां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतः संस्थाननामतश्चापि सहस्रशो विधानानि भेदा भवंति. सहस्रश इत्युपलक्षणं, वर्णादितारतम्यस्य बहुभेदत्वेनासंख्यातभेदत्वाद्वर्णादीनां भावरूपत्वात्. ॥ ७३ ॥ अथाप्कायभेदानाह—

॥ मूलम् ॥—डुविहा आउजीवा उ । सुहुमा बायरा तहा ॥ पज्जत्तमपज्जत्ता । एवमेए डुहा पुणो ॥ ७४ ॥ बायरा जे उ पज्जत्ता । पंचहा ते पकित्तिया ॥ सुद्धोदए य उस्से य । हरितणू महिया हिमे ॥ ७५ ॥ एगविहमनाणत्ता । सुहुमा तत्थ वियाहिया ॥ सुहुमा सव्वलोयंमि । लोयदेसे य बायरा ॥ ७६ ॥ व्याख्या—तिसृणां गाथानामर्थः—अप्जीवास्तु द्विविधाः, सूक्ष्मास्तथा बादरा अपि, पर्याप्ता अपर्याप्ताश्च, एवमेते द्विविधाः पुनर्वर्तंते इति शेषः. ॥ ७४ ॥ अथ पुनर्बादरा ये पर्याप्ता अपूजीवास्ते पंचधाः प्रकीर्तिताः, शुद्धोदकं मेघसमुद्रादेर्जलं, अवश्यायः शरदादिषु ऋतुषु प्राभातिकसूक्ष्मवर्षारूपः, हरितनुः स पृथ्वीभव-

स्तृणाग्रबिंदुः, महिका धूमरी, गर्त्तमासेषु सूक्ष्मधूमरूपजलवृष्टिरूपा. 'हिमे' इति हिमजलं चंधारदेशादौ प्रसिद्धं. ॥ ८६ ॥ तत्र सूक्ष्मा अप्कायजीवा एकविधा अनानात्वास्तीर्थंकरैर्व्याख्याताः. तत्र सूक्ष्मा अप्कायजीवाः सर्वस्मिंश्चतुर्दशरज्ज्वात्मके लोके वर्तंते बादरा अप्कायजीवा लोकस्यैकदेशे वर्तंते. ॥ ८७ ॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ ८८ ॥ व्याख्या—संततिं प्रवाहमार्गमाश्रित्याप्कायजीवा अनादिकाः, पुनरपर्यवसिता अपि. स्थितिं नवस्थितिं कायस्थितिं चाश्रित्य सादिकास्तथा सपर्यवसिता अवसानरहिता अपि वर्तंते. ॥ ८८ ॥

॥ मूलम् ॥—सत्तेव सहस्साइं । वासाणुक्कोसिया नवे ॥ आउठिई आऊणं । अंतोमुहुत्तं जहन्नियं ॥ ८९ ॥ व्याख्या—अपामप्कायजीवानां सप्तैव सहस्राणि वर्षाणामुत्कृष्टायुषःस्थितिर्नवेत्, जघन्यतोंतर्मुहूर्तं नवेत्. ॥ ८९ ॥

॥ मूलम् ॥—असंखकालमुक्कोसं । अंतोमुहुत्तं जहन्निया ॥ कायठिई आऊणं । तं

स्वकायमर्थादप्कायममुंच-
कायं तु अमुंचर्ज ॥ ए० ॥ व्याख्या—अपामप्कायजीवानां स्वं स्वकायमर्थादप्कायममुंच-
तामुत्कृष्टा कायस्थितिरसंख्यकालं ज्ञवति. जघन्यिका कायस्थितिरंतर्मुहूर्तं ज्ञवति. ॥ए०॥

॥ मूलम् ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ विजढम्मि सए काए । आ-
उजीवाणमंतरं ॥ ए१ ॥ व्याख्या—अप्कायजीवानां स्वकीये काये त्यक्ते सत्यपरस्मिन् काये
उत्पद्य पुनः स्वकीये काये उत्पत्तिः स्यात्तदोत्कृष्टमंतरमनंतकालं ज्ञवति. जघन्यकमंतरमं-
तर्मुहूर्तं ज्ञवति. वनस्पतिकाये जीवोऽनंतकालं तिष्ठति, तदाऽनंतकालमंतरं ज्ञवतीति ज्ञावः.

॥ मूलम् ॥—एएसिं वन्नर्ज चेव । गंधर्ज रसफासर्ज ॥ संठाणादेसर्ज वावि । विहाणा-
इ सहस्ससो ॥ ए२ ॥ व्याख्या—एतेषामप्कायजीवानां वर्णतो गंधतो रसतः स्पर्शतः सं-
स्थानादेशतश्चापि संस्थाननामतश्चापि सहस्रशो बहवो ज्ञेदा ज्ञवंति. ॥ ए२ ॥ अथ वन-
स्पतिजीवानाह—

॥ मूलम् ॥—डुविहा वणस्सईजीवा । सुहुमा बायरा तहा ॥ पज्जत्तमपज्जत्ता । एवमेव
दुहा पुणो ॥ ए३ ॥ व्याख्या—वनस्पतिजीवा द्विविधाः, सूक्ष्मास्तथा बादराः, ते सूक्ष्मा



३५

बादराश्चापि पर्याप्ता अपर्याप्ताश्च द्विविधा आख्याताः. ॥ ९३ ॥

॥ मूलम् ॥–बायरा जे उ पज्जत्ता । दुविहा ते वियाहिया ॥ साहारणसरीरा य । पत्तेयगा तहेव य ॥ ९४ ॥ व्याख्या–ये बादरा वनस्पतिजीवाः पर्याप्तास्तेऽपि द्विधा व्याख्याताः, साधारणशरीराश्च पुनः प्रत्येका वनस्पतिजीवाः. ॥ ९४ ॥

॥ मूलम् ॥—पत्तेयसरीराउ–णेगहा ते पकित्तिया ॥ रुक्खा गुच्छा य गुम्मा य । लया वल्ली तणा तहा ॥ ९५ ॥ व्याख्या—तत्र साधारणशरीरवनस्पतिप्रत्येकशरीरवनस्पत्योर्मध्ये प्रत्येकवनस्पतिजीवास्त्वनेकधाः प्रकीर्तिताः, ते के? उच्यंते—वृक्षाः सहकारादयः १, गुच्छा वृंताककंटकारिकाद्याः २, गुल्मा नवमालतीप्रमुखाः ३, लताश्चंपकाद्याः ४, वल्लयः कुष्मांडाद्याः ५. तथा तृणाः कुशाद्याः ६. ॥ ९५ ॥

॥ मूलम् ॥—वलया पव्वया कुहणा । जलरुहा उसही तहा ॥ हरियकाय बोधव्वा । पत्तेया इइ आहिआ ॥ ९६ ॥ व्याख्या–वलया नालिकेरकदल्याद्याः, इह तेषां शाखांतराऽभावेन लतारूपत्वमुक्तं, ( त्वचो वलयाकारत्वेन च वलयता ) ७. पर्वजा इक्ष्वाद्याः ८. कुहना

कायं तु अमुंचओ ॥ ए० ॥ व्याख्या—अपामप्कायजीवानां स्वं स्वकायमर्थादप्कायममुंचतामुत्कृष्टा कायस्थितिरसंख्यकालं नवति. जघन्यिका कायस्थितिरंतर्मुहूर्तं नवति. ॥ए०॥

॥ मूलम् ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ विजढम्मि सए काए । आउजीवाणमंतरं ॥ ए१ ॥ व्याख्या—अप्कायजीवानां स्वकीये काये त्यक्ते सत्यपरस्मिन् काये उत्पद्य पुनः स्वकीये काये उत्पत्तिः स्यात्तदोत्कृष्टमंतरमनंतकालं नवति. जघन्यकमंतरमंतर्मुहूर्तं नवति. वनस्पतिकाये जीवोऽनंतकालं तिष्ठति, तदाऽनंतकालमंतरं नवतीति नावः.

॥ मूलम् ॥—एएसिं वन्नओ चेव । गंधओ रसफासओ ॥ संठाणादेसओ वावि । विहाणाइ सहस्ससो ॥ ए२ ॥ व्याख्या—एतेषामप्कायजीवानां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि संस्थाननामतश्चापि सहस्रशो बहवो नेदा नवंति. ॥ ए२ ॥ अथ वनस्पतिजीवानाह—

॥ मूलम् ॥—दुविहा वणस्सईजीवा । सुहुमा बायरा तहा ॥ पज्जत्तमपज्जत्ता । एवमेव दुहा पुणो ॥ ए३ ॥ व्याख्या—वनस्पतिजीवा द्विविधाः, सूक्ष्मास्तथा बादराः, ते सूक्ष्मा

बादराश्चापि पर्याप्ता अपर्याप्ताश्च द्विविधा आख्याताः. ॥ ९३ ॥

॥ मूलम् ॥–बायरा जे उ पज्जत्ता । दुविहा ते वियाहिया ॥ साहारणसरीरा य । पत्तेयगा तहेव य ॥ ९४ ॥ व्याख्या–ये बादरा वनस्पतिजीवाः पर्याप्तास्तेऽपि द्विधा व्याख्याताः, साधारणशरीराश्च पुनः प्रत्येका वनस्पतिजीवाः. ॥ ९५ ॥

॥ मूलम् ॥—पत्तेयसरीराउ–णेगहा ते पकित्तिया ॥ रुक्खा गुछा य गुम्मा य । लया वल्ली तणा तहा ॥ ९५ ॥ व्याख्या—तत्र साधारणशरीरवनस्पतिप्रत्येकशरीरवनस्पत्योर्मध्ये प्रत्येकवनस्पतिजीवास्त्वनेकधाः प्रकीर्तिताः, ते के? उच्यंते—वृक्षाः सहकारादयः १, गुछा वृंताककंटकारिकाद्याः २, गुल्मा नवमालतीप्रमुखाः ३, लताश्चंपकाद्याः ४, वल्लयः कुष्मांडाद्याः ५, तथा तृणाः कुशाद्याः ६. ॥ ९५ ॥

॥ मूलम् ॥—वलया पव्वया कुहणा । जलरुहा उसही तहा ॥ हरियकाय बोधव्वा । पत्तेया इइ आहिआ ॥ ९६ ॥ व्याख्या–वलया नालिकेरकदल्याद्याः, इह तेषां शाखांतराऽभावेन लतारूपत्वमुक्तं, ( त्वचो वलयाकारत्वेन च वलयता ) ७. पर्वजा ईक्षाद्याः ८. कुहना

भूमिस्फोटाद्याः ए. जलरुहाः कमलाद्याः १०. तथौषधयः शालिप्रमुखाः ११. च पुनर्हरितकाया-
श्च तंदुलीयकाद्याः १२. वोधव्याः, इत्यमुना प्रकारेण प्रत्येकाः प्रत्येकवनस्पतिजीवा आख्याताः.

॥ मूलम् ॥—साहारणसरीराउ—णेगहा ते पकीत्तिया ॥ आलुए मूलए चेव । सिंगवे-
रे तहेव य ॥ ए७ ॥ हरिलीसिरिली सिस्सिरिलि । जावई के य कंदली ॥ पलंडुलसण कं-
दे य । कंदलीय कुहुवए ॥ ए८ ॥ लोहिणी । हूयढी हूय । तुहग्गय तहेव य ॥ कण्हे य
वज्जकंदे य । कंदे सूरणए तहा ॥एए॥ अस्सकन्नी य वोधव्वा । सीहकन्नी तहेव य ॥ मुसंढी
य हलिद्दे य । णेगहा एवमाइउ ॥ १०० ॥ व्याख्या—अथ चतसृभिर्गाथाभिः साधारणवन-
स्पतीनां नामान्याह—ये तु साधारणशरीराः साधारणवनस्पतिजीवा अनंतकायवनस्पतिजीवा-
स्तेऽप्यनेकधा अनेकप्रकाराः प्रकीर्तिताः, तेषां च मध्ये केषांचित्प्रसिद्धानां नामान्याह—आ-
लुकः, आलूपिंडालुरक्तालुककंदः १, तथा मूलकं प्रसिद्धं २, श्रृंगबेरकमार्द्रकं ३, तथैव च ॥
॥ ए७ ॥ हरिलीनामा कंदः ४, सिरिलीनामा कंदः ५, सिस्सिरिलीनामापि कंदः ६, एते कं-
दविशेषाः. यावतिकोऽपि कंदविशेषः ७, कंदली कंदः ८, पलांडुकंदः ए यो देशविशेषे मांस-

रूपः कंदो जवति. लसूनकंदस्तु प्रसिद्धः १०, कुहुव्रतकंदलीकंदोऽपि कंदविशेषः ११, ॥९८॥ लोहिनीकंदः १२, हुताक्षीकंदः १३, हूतकंदः १४, तुहकंदः १५, कृष्णकंदः १६, वज्रकंदः १७, सूरणकंदस्तथा १८ ॥ ९९ ॥ अश्वकर्णी कंदो बोधव्यः १९, तथैव सिंहकर्णीकंदः २०, मुसंढीकंदः २१, हरिद्राकंदः २२, चैवमादिका अनेकधाः कंदजातयो ज्ञेयाः. ॥ १०० ॥ साधारणलक्षणमिदं–गूढसिरागं पत्तं । सच्छीरं जं च होइ निच्छीरं ॥ जंपि य पणट्ठसंधिं । अणंतजीवं वियाणाहि ॥ १ ॥

॥ मूलम् ॥–एगविहमनाणत्ता । सुहुमा तत्थ वियाहिया ॥ सुहुमा सव्वलोगंमि । लोगदेसे य बायरा ॥ १ ॥ व्याख्या–सूक्ष्मा वनस्पतिकायजीवा एकविधा अनानात्वा व्याख्याताः. तत्र सूक्ष्मा वनस्पतिजीवा निगोदनामानः सर्वस्मिंश्चतुर्दशरज्ज्वात्मके लोके व्याप्ताः संति. बादरा वनस्पतिजीवा लोकदेशेऽभिव्याप्य स्थिताः संति. कुत्रचित्प्रदेशे जवंति, कुत्रचित्प्रदेशे न जवंतीत्यर्थः. ॥ १ ॥

॥ मूलम् ॥–संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जव-

सियावि य ॥ २ ॥ व्याख्या—संततिं प्राप्यैते वनस्पतिजीवा अनादयः पुनरपर्यवसिताः संति. कायस्थितिं च प्रतीत्याश्रित्य सादिकाः सपर्यवसिताश्च संतीत्यर्थः. ॥ २ ॥

॥ मूलम् ॥—दस चेव सहस्साइं । वासाणुक्कोसिया भवे ॥ वणस्सईण आउं तु । अंतोमुहुत्तं जहन्निया ॥ ३ ॥ व्याख्या—वनस्पतीनां प्रत्येकवनस्पतिजीवानां वर्षाणां दश सहस्राण्युत्कृष्टायुःस्थितिर्भवेत्. जघन्यिका स्थितिश्चांतर्मुहूर्तं भवेत्. साधारणानां तु जघन्यत उत्कृष्टतश्चांतर्मुहूर्तमेव स्थितिरस्ति, तस्मादत्र प्रत्येकवनस्पतिजीवानामेव स्थितिर्ज्ञेया. ॥३॥

॥ मूलम् ॥—अनंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ कायठिई पणगाणं । तं कायं तु अमुंचओ ॥ ४ ॥ व्याख्या—पनकानां पनकोपलक्षितफूलणिवनस्पतिजीवानां तं स्वकीयं कायममुंचतां कायस्थितिरुत्कृष्टतोऽनंतं कालं, जघन्यतश्चांतमुहूर्तं कायस्थितिर्ज्ञेया. कोऽर्थः? यदा हि पनकजीवः पनकाच्च्युत्वा पुनरनंतरत्वेन पनकत्वे एवोत्पद्यते, तदैवमुत्कृष्टतोऽनंतकालं तिष्टति. जघन्यतोंतर्मुहूर्तमेव तिष्टतीति भावः. पनकानां चेह सामान्येन वनस्पतिजीवान्निगोदत्वेनोत्कृष्टतोऽनंतकालमुच्यते, विशेषापेक्षया हि प्रत्येकवनस्पतीनां तथा नि-

गोदानां बादराणां सूक्ष्माणां वाऽसंख्येयकालेवाऽवस्थितिः. उक्तं च भगवत्यां—पत्तेयसरीर-बायरवणस्सइकाइयाणं भंते केवइयं काइठिई पणत्ता? गोयमा! जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं सत्तरि सागरोवमकोडाकोडीउ. निगोदेणं भंते निउदेत्ति कालतो किच्चिरं होंति? जहन्नेणं तं चेव. उक्कोसेणं असंखेज्जं कालंति. ॥ ४ ॥ अथ कालस्यांतरमाह—

॥ मूलम् ॥—असंखकालमुक्कोसं अंतोमुहुत्तं जहन्नियं ॥ विजढंमि सए काए । पणगजीवाणमंतरं ॥ ५ ॥ व्याख्या—पनकजीवानां स्वकीये काये त्यक्ते सत्यपरस्मिन् पृथिव्यादिषु कायेषूत्पद्य पुनः पनकत्वेनोत्पद्यमानानामुत्कृष्टमसंख्यकालमंतरं भवति, जघन्यमंतरमंतर्मुहूर्तं भवति. इति कालांतरं प्रतिपादितं. ॥५॥ अथ प्रकृतमुपसंहृत्याग्रेतनं संबंधं सूचयति—

॥ मूलम् ॥—एएसिं वन्नउ चेव । गंधउ रसफासउ ॥ संठाणादेसउवावि । विहाणाइ सहस्ससो ॥ ६ ॥ व्याख्या—एतेषां सूक्ष्मबादरवनस्पतिजीवानां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि सहस्रशो विधानानि भवंति. सहस्रशः शब्देनासंख्येया अनंताश्च भेदा भवंतीत्युच्यते. ॥ ६ ॥

॥ मूलम् ॥—इच्चेए थावरा तिविहा । समासेण वियाहिया ॥ इत्तो य तसे तिविहे । वुच्छामि अणुपुव्वसो ॥ ७ ॥ व्याख्या—इत्यमुना प्रकारेणैते त्रिविधाः स्थावराः पृथ्वीजलवनस्पतिजीवाः, तिष्टंतीत्येवंशीलाः स्थावराः समासेन व्याख्याताः, विस्तरतोऽमी बहुभेदाः संति. इतोऽनंतरं त्रिविधांस्त्रसाननुपूर्वशोऽनुक्रमेण वक्ष्यामि. ॥ ७ ॥

॥ मूलम् ॥—तेऊ वाऊ य बोधव्वा । उराला य तसा तहा ॥ इच्चेए तसा तिविहा । तेसिं भेए सुणेह मे ॥ ८ ॥ व्याख्या—तेजोयोगात्तेजांस्यग्नयस्तद्वर्तिनो जीवा अपि तथोक्ताः, एवं वायवश्च, तथा उराला इत्युदारा एकेंद्रियापेक्षया स्थूला द्वींद्रियादयश्च त्रसाः, इत्येते त्रसास्त्रिविधाः संति. तेषां तेजोवायुद्वींद्रियादीनां च भेदान् मे कथयतो यूयं शृणुतेति. अत्र यद्यपि तेजोवाय्वोश्च स्थावरनामकर्मोदयेऽपि त्रसनमस्ति, ततस्तेजोवाय्वोर्गतिमत्त्वादुदाराणां च लब्धितोऽपि त्रसत्वमस्ति, यतो हि त्रस्यंति देशाद्देशांतरं संक्रामंतीति त्रसा इति व्युत्पत्तिः ॥ ८ ॥

॥ मूलम् ॥—दुविहा तेउजीवा य । सुहुमा बायरा तहा ॥ पज्जत्तमपज्जत्ता । एवमेए दु-

हा गुणो ॥ ए ॥ व्याख्या—तेजोजीवाः सूक्ष्मास्तथा वादराश्च, ते पुनः पर्याप्ताऽपर्याप्तभेदेन द्विविधाः संति. सूक्ष्मा अग्निजीवाः पर्याप्ता अपर्याप्ताश्च वर्तंते. ॥ ए ॥

॥ मूलम् ॥—वायरा जे उ पज्जत्ता—णेगहा ते वियाहिया ॥ इंगाले मुम्मुरे अगणी । अच्चिजाला तहेव य ॥ १० ॥ व्याख्या—ये वादराः पर्याप्ता अग्निजीवास्तेऽनेकधा व्याख्याताः. अंगारः प्रज्वलितेंधनखंडरूपः, मुर्मुरो भस्ममिश्रिताग्निकणरूपोऽग्निः, अग्निश्चोक्तभेदादतिरिक्तः, अर्चिः प्रदीपादेः, ज्वाला छिन्नमूला या ज्वालोपरिष्टात् स्फुरंती दृश्यते, तथैवेति पादपूरणे. ॥ १० ॥

॥ मूलम ॥—उक्का विज्जू य वोधवा–णेगहा एवमाइउ ॥ एगंविह अनाणत्ता । सुहुमा ते वियाहिया ॥ ११ ॥ व्याख्या–उल्काभिस्तारावदाकाशात्पतन् यो दृश्यते, विद्युत्तडिद ग्निः, एवमादिका अनेकधा अग्निजीवा वोधव्याः. तेऽग्नयः सूक्ष्मा एकविधा एव, अनानात्वा व्याख्याताः. ॥ ११ ॥

॥ मूलम् ॥—सुहुमा सवलोगंमि । लोगदेसे य वायरा ॥ एत्तो कालविज्ञागं तु । तेसिं

वुत्तं चउव्विहं ॥ १२ ॥ व्याख्या—सूक्ष्माग्निजीवाः सर्वस्मिंश्चतुर्दशरज्ज्वात्मके लोके संति. बादरा अग्निकायजीवा लोकदेशे चतुर्दशरज्ज्वात्मलोकस्यैकदेशे सार्धद्वितयद्वीपे संति. इति क्षेत्रविज्ञाग उक्तः, इतोऽनंतरं तेषामग्निकायजीवानां चतुर्विधं कालविज्ञागं वक्ष्ये. ॥ १२ ॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ १३ ॥ व्याख्या—अग्निकायजीवाः संततिं प्राप्याऽनादिका आदिरहितास्तथाऽपर्यवसिताः. स्थितिं प्रतीत्यायुराश्रित्य सादिकाः सपर्यवसिता अपि अंतेनापि सहिता वर्तंते.

॥ मूलम् ॥—तिन्नेव अहोरत्ता । उक्कोसेण वियाहिया ॥ आउठिई तेऊणं । अंतोमुहुत्तं जहन्निया ॥ १४ ॥ व्याख्या—तेजसां तेजोजीवानामुत्कृष्टेन त्रीण्यहोरात्राण्यायुःस्थितिर्व्याख्याता, जघन्यिका चायुःस्थितिरंतर्मुहूर्तं ज्ञेयेत्यर्थः. ॥१४॥ जवस्थितिमुक्त्वा कायस्थितिमाह—

॥ मूलम् ॥—असंखकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ कायठिई तेऊणं । तं कायं तु अमुंचओ ॥ १५ ॥ व्याख्या—तेजसां तेजस्कायजीवानां स्वं कायममुंचतामुत्कृष्टमसंख्यं कालं स्थितिर्जवति. तेजस्कायस्थो जीवो मृत्वाऽनंतरं तेजस्काये एवोत्पद्यते, तदाऽसंख्यं का-

लं तेजस्काये तिष्ठतीत्यर्थः. जघन्यमंतर्मुहूर्तं तिष्ठति. ॥१५॥ अथ कालस्यांतरं वदति—

॥ मूलम् ॥–अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ विजढम्मि सए काए । तेउजीवाणमंतरं ॥ १६ ॥ व्याख्या–तेजोजीवानां स्वकीये तेजस्काये त्यक्ते सत्युत्कृष्टमंतरमनंतकालं, तेजस्कायजीवास्तेजस्कायाच्च्युत्वाऽपरस्मिन् काये उत्पद्य पुनस्तेजस्काये उत्कृष्टमनंतकालस्यांतरेणोत्पद्यते, जघन्यमंतरं चेद्भवति, तदांतर्मुहूर्तं भवति. नवसमयादारभ्य किंचिदूनं घटिकाद्वयमंतर्मुहूर्तमुच्यते. ॥ १६ ॥

॥ मूलम् ॥—एएसिं वन्नओ चेव । गंधओ रसफासओ ॥ संठाणादेसओ वावि । विहाणाइं सहस्ससो ॥ १७ ॥ व्याख्या—एतेषामग्निकायजीवानां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि सहस्रशो विधानानि भेदा भवंति. ॥ १७ ॥

॥ मूलम् ॥—दुविहा वाउजीवा उ । सुहुमा बायरा तहा ॥ पज्जत्तमपज्जत्ता । एवमेए दुहा पुणो ॥ १८ ॥ व्याख्या—वायुजीवा द्विविधाः सूक्ष्मा बादराः, ते पुनः पर्याप्तापर्याप्तभेदेन द्विधा संति. ॥ १८ ॥

॥ मूलम् ॥–बायरा जे उ पज्जत्ता । पंचहा ते पकित्तिया ॥ उक्कलिया मंडलिया । घ-
णगुंजा सुद्धवाया य ॥ १९ ॥ व्याख्या–ते बादरा वायुकायजीवाः पर्याप्तापर्याप्तास्ते पुनः पं-
चधा प्रकीर्त्तिताः, पंच कथनमात्रतः, वायवो ह्यनेकविधाः संति. उत्कलिकावायुर्यः स्थित्वा
स्थित्वा वाति १. मंडलिकावायुर्वातूलिकावायुः २. घनो घनरूपो वायुर्घनवायू रत्नप्रभाद्यधो-
वर्ती, घनोदधिस्तु विमानानामाधारो हिमपटलकल्पो महावायुः ३. गुंजन् वातीति गुंजावा-
युः ४. शुद्धा वायवः स्तोकं स्तोकं ये वांति. ॥ १९ ॥
॥ मूलम् ॥–संवट्टगवाया य–णेगहा एवमाईआ ॥ एगविहमनाणत्ता । सुहुमा ते वि-
याहिया ॥ २० ॥ व्याख्या—संवर्तकवायवस्ते, यैर्वायुभिस्तृणादय एकस्मात्स्थानात्स्थानांतरं
नीयंते, एवमादयोऽनेकधा व्याख्याताः. परं वायुजातिसामान्येनैकविधा अनानात्वास्तीर्थक-
रैस्ते सूक्ष्मवायुकायजीवा व्याख्याताः. ॥ २० ॥
॥ मूलम् ॥–सुहुमा सव्वलोयम्मि । लोगदेसे य बायरा ॥ एत्तो कालविभागं तु । तेसिं
वुच्छं चउविहं ॥ २१ ॥ व्याख्या—सूक्ष्मा वायुकायजीवाः सर्वस्मिंश्चतुर्दशरज्ज्वात्मकलोके

भिन्नाः संति. बादरा वायुकायजीवा लोकैकदेशे स्थिताः संतीति क्षेत्रविभाग उक्तः. इतोऽनंतरं तेषां वायुकायजीवानां चतुर्विधं कालविभागं वक्ष्ये. ॥ २१ ॥

॥ मूलम् ॥—संतइं पप्पणाइया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ २२ ॥ व्याख्या—संततिं प्रवाहमार्गमाश्रित्य वायुकायजीवा अनादयस्तथाऽपर्यवसिता अपि. पुनः स्थितिं प्रतीत्य ते सादिकाः सपर्यवसिताश्च वर्तन्ते. ॥ २२ ॥

॥ मूलम् ॥—तिन्नेव सहस्साइं । वासाणुक्कोसिया भवे ॥ आउठिई वाऊणं । अंतोमुहुत्तं जहन्निया ॥ २३ ॥ व्याख्या—वायूनां वायुकायजीवानां त्रीणि वर्षसहस्राण्युत्कृष्टायुःस्थितिर्भवति. जघन्यिका स्थितिरंतर्मुहूर्तं भवति. ॥ २३ ॥

॥ मूलम् ॥—असंखकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ कायठिई वाऊणं । तं कायं तु अमुंचओ ॥ २४ ॥ व्याख्या—अथ कायस्थितिमाह—वायूनां वायुकायजीवानां स्वं कायं वायुकायममुंचतामसंख्येयकालमुत्कृष्टा स्थितिर्व्याख्याता, जघन्यिका स्थितिरंतर्मुहूर्तं भवति. वायुकायाच्च्युत्वा पुनर्वायुकाये एवोत्पद्यते, तदोत्कृष्टाऽसंख्येयकालं, जघन्यतश्चाप्यं-

तर्मुहूर्तं स्थितिर्व्याख्यातेत्यर्थः. ॥ २४ ॥

॥ मूलम् ॥–अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ विजढम्मि सए काए । वाउजीवाणमंतरं ॥ २५ ॥ व्याख्या–अथ कालस्यांतरमाह–वायुजीवानां स्वकीये काये त्यक्ते सत्युत्कृष्टमनंतकालं, जघन्यमंतर्मुहूर्तमंतरं भवति. एतावता वायुकायस्थो जीवो वायुकायाच्च्युत्वाऽपरस्मिन् काये उत्पद्य पुनर्वायुकाये उत्पद्यते, तदा कियत्कालस्यांतरं भवति? तदोत्कृष्टतोऽनंतकालस्यांतरं भवति, जघन्यतश्चांतर्मुहूर्तमंतरं भवति. ॥ २५ ॥

॥ मूलम् ॥—एएसिं वन्नउ चेव । गंधउ रसफासउ ॥ संठाणादेसउ वावि । विहाणाइ सहस्ससो ॥ २६ ॥ व्याख्या–एतेषामुत्कलिकादिवायूनां वायुकायजीवानां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि सहस्रशो विधानानि बहवो भेदा भवंतीत्यर्थः. ॥ २६ ॥

एवं तेजोवायुत्रसानुक्त्वोदारत्रसानाह—

॥ मूलम् ॥—उराला य तसा जे उ । चउव्विहा ते पकित्तिया ॥ बेइंदिय तेंदिय । चउरो पंचेंदिया चेव ॥ २७ ॥ व्याख्या—ये उदारास्त्रसा द्वींद्रियादयस्ते चतुर्विधाः प्रकीर्तिताः,

द्वींद्रियाः १. त्रींद्रियाः २, चतुरिंद्रियाः ३, पंचेंद्रियाः ४. चेव पदपूरणे. एते त्रसा उदारा वृद्धशरीराः. ॥ २७ ॥

॥ मूलम् ॥—बेंदिया य जे जीवा । डुविहा ते पकित्तिया ॥ पज्जत्तमपज्जत्ता । एवमेए सुणेह मे ॥ २८ ॥ व्याख्या—द्वींद्रियाः कायरसनेंद्रिययुक्ता जीवास्ते द्विविधाः प्रकीर्तिताः. ते के द्वींद्रियाः? पर्याप्ता अपर्याप्ताश्च. एवममुना प्रकारेणैते द्वींद्रियाः संतीति वाक्यं मे कथयतो यूयं शृणुत? ॥ २८ ॥

॥ मूलम् ॥—किमिणो सोमंगला चेव । अलसा मायवाहया ॥ वासीमुहा य सिप्पी-य । संखा संखणगा तहा ॥ २९ ॥ पल्लोयाणुपल्लया चेव । तहेव य वराडगा ॥ जलूगा जालगा चेव । चंदणा य तहेव य ॥ ३० ॥ व्याख्या—कृमयोऽपवित्रजीवाः, च पुनः सोमंगला द्वींद्रियजीवविशेषाः, अलसा वर्षाकाले मृत्तिकोद्भवाः, मातृवाहकाश्चूडेलगिजाई इति लोकप्रसिद्धिमंतो द्वींद्रियजीवाः. वासीमुखा वासीसदृशवदना जीवाः, तथा शुक्तयो मुक्ताफलयोनयः, शंखा वृद्धजलजाः, तथा शंखनका लघवो वर्षासु मृत्तिकोद्भवाः. ॥ २९ ॥ पल्ल-

काश्च पुनरणुपल्लकास्तथैव वराटकाः कपर्दकाः, जलूका रुधिरपाः, जालका अपि द्वींद्रियजीवविशेषाः, तथैव चंदना अक्षाः, येषामवयवाः स्थापनायां स्थाप्यंते. द्वींद्रियाणां मध्ये केचित्प्रसिद्धाः केचिदप्रसिद्धाः संति. ॥ ३० ॥

॥ मूलम् ॥—इइ बेंदिया एए—णेगहा एवमाइउ ॥ लोएगदेसे ते सव्वे । न य सव्वत्थ वियाहिया ॥ ३१ ॥ व्याख्या—इत्यमुना प्रकारेणैते द्वींद्रिया एवमादयोऽनेकधा अनेकनामानो वर्तन्ते. सर्वे द्वींद्रिया जीवा लोकैकदेशे चतुर्दशरज्ज्वात्मकलोकस्यैकदेशे जलाश्रयादौ तिष्टंति, सर्वत्र न व्याख्याताः संति. ॥ ३१ ॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपजवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ ३२ ॥ व्याख्या—ते द्वींद्रियाः संततिं प्राप्य प्रवाहमाश्रित्यानादयस्तथाऽपर्यवसिता अपि संति. स्थितिं भवस्थितिं कायस्थितिं च प्रतीत्य सादिकाः सपर्यवसिता अपि संति. ॥ ३२ ॥ पूर्वं भवस्थितिं वदति—

॥ मूलम् ॥—वासाइं बारसे चेव । उक्कोसेणं वियाहिया ॥ बेंदियआउठिई । अंतोमुहु-

तं जहन्निया ॥ ३३ ॥ व्याख्या– द्वींद्रियाणां द्वादशवर्षाण्यायुःस्थितिरुत्कृष्टा व्याख्यातास्ति, जघन्यतोंतर्मुहूर्तं, नवसमयादारभ्य किंचिदूने घटिकाद्वयमायुषः स्थितिर्व्याख्याता. ॥३३॥ अथ कायस्थितिमाह–

॥ मूलम् ॥–संखिज्जकालमुक्कोसं । अंतोमुहुत्तं जहन्नियं ॥ बेंदियकायठिई । तं कायं तु अमुंचओ ॥ ३४ ॥ व्याख्या–द्वींद्रियजीवानां तं स्वकीयकायं द्वींद्रियकायममुंचतां कायस्थितिरुत्कृष्टा संख्येयकालं स्थितिः जघन्यतोंतर्मुहूर्तं स्थितिरस्तीत्यर्थः. ॥ ३४ ॥ अथ कालस्यांतरमाह—

॥ मूलम् ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ बेइंदियजीवाणं । अंतरेयं वियाहियं ॥ ३५ ॥ व्याख्या—द्वींद्रियजीवानां स्वकीययोनित्यागे सत्यपरस्मिन् काये उत्पद्य पुनर्द्वींद्रिययोनावेवोत्पद्यते, तदोत्कृष्टमंतरमनंतकालं, जघन्यतोंतर्मुहूर्तं कालस्यांतरं भवति. यदा हि द्वींद्रियो जीवः स्वयोनेश्च्युत्वा वनस्पतावुत्पद्यते, तदानंतं कालं तिष्ठति. ततोऽनंतकालस्यांतरं भवति. पश्चात्पुनर्द्वींद्रियत्वे उत्पद्यते इत्यर्थः. ॥ ३५ ॥

काश्च पुनरणुपल्लकास्तथैव वराटकाः कपर्दकाः, जलूका रुधिरपाः, जालका अपि द्वींद्रियजीवविशेषाः, तथैव चंदना अक्षाः, येषामवयवाः स्थापनायां स्थाप्यंते. द्वींद्रियाणां मध्ये केचित्प्रसिद्धाः केचिदप्रसिद्धाः संति. ॥ ३० ॥

॥ मूलम् ॥—इइ बेंदिया एए—णेगहा एवमाइओ ॥ लोएगदेसे ते सव्वे । न य सवत्थ वियाहिया ॥ ३१ ॥ व्याख्या—इत्यमुना प्रकारेणैते द्वींद्रिया एवमादयोऽनेकधा अनेकनामानो वर्तन्ते. सर्वे द्वींद्रिया जीवा लोकैकदेशे चतुर्दशरज्ज्वात्मकलोकस्यैकदेशे जलाश्रयादौ तिष्ठंति, सर्वत्र न व्याख्याताः संति. ॥ ३१ ॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ ३२ ॥ व्याख्या—ते द्वींद्रियाः संततिं प्राप्य प्रवाहमाश्रित्यानादयस्तथाऽपर्यवसिता अपि संति. स्थितिं भवस्थितिं कायस्थितिं च प्रतीत्य सादिकाः सपर्यवसिता अपि संति. ॥ ३२ ॥ पूर्वं भवस्थितिं वदति—

॥ मूलम् ॥—वासाइं बारसे चेव । उक्कोसेणं वियाहिया ॥ बेंदियआउठिई । अंतोमुहु-

त्तं जहन्निया ॥ ३३ ॥ व्याख्या– द्वींद्रियाणां द्वादशवर्षाण्यायुःस्थितिरुत्कृष्टा व्याख्यातास्ति, जघन्यतोंतर्मुहूर्तं, नवसमयादारभ्य किंचिदूनं घटिकाद्वयमायुषः स्थितिर्व्याख्याता. ॥३३॥ अथ कायस्थितिमाह–

॥ मूलम् ॥–संखिज्जकालमुक्कोसं । अंतोमुहुत्तं जहन्नियं ॥ बेंदियकायठिई । तं कायं तु अमुंचओ ॥ ३४ ॥ व्याख्या–द्वींद्रियजीवानां तं स्वकीयकायं द्वींद्रियकायममुंचतां कायस्थितिरुत्कृष्टा संख्येयकालं स्थितिः जघन्यतोंतर्मुहूर्तं स्थितिरस्तीत्यर्थः. ॥ ३४ ॥ अथ कालस्यांतरमाह—

॥ मूलम् ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ बेइंदियजीवाणं । अंतरेयं वियाहियं ॥ ३५ ॥ व्याख्या—द्वींद्रियजीवानां स्वकीययोनित्यागे सत्यपरस्मिन् काये उत्पद्य पुनर्द्वींद्रिययोनावेवोत्पद्यते, तदोत्कृष्टमंतरमनंतकालं, जघन्यतोंतर्मुहूर्तं कालस्यांतरं भवति. यदा हि द्वींद्रियो जीवः स्वयोनेश्च्युत्वा वनस्पतावुत्पद्यते, तदानंतं कालं तिष्टति. ततोऽनंतकालस्यांतरं भवति. पश्चात्पुनर्द्वींद्रियत्वे उत्पद्यते इत्यर्थः. ॥ ३५ ॥

॥ मूलम् ॥—एएसिं वन्नर्ज चेव । गंधर्ज रसफासर्ज ॥ संगणादेसर्ज वावि । विहाणाइं सहस्सर्ज ॥ ३६ ॥ व्याख्या—एतेषां द्वींद्रियाणां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्च सहस्रशो बहूनि विधानानि भेदा भवंतीति शेषः. ॥ ३६ ॥ अथ त्रींद्रियानाह—

॥ मूलम् ॥—तेंदिया उ जे जीवा । डुविहा ते पकित्तिया ॥ पज्जत्तमपज्जत्ता । तेसिं भेए सुणेह मे ॥ ३७ ॥ व्याख्या—ये त्रींद्रियजीवाः शरीररसनाघ्राणेंद्रियत्रययुक्तास्ते पर्याप्तापर्याप्तभेदेन द्विविधाः प्रकीर्तिताः. तेषां त्रींद्रियजीवानां भेदान् मे मम कथयतो यूयं शृणुत ? ॥ ३७ ॥

॥ मूलम् ॥—कंथूपिपीलिउद्दंसा । उक्कलुद्देहिया तहा ॥ तणहारकट्ठहारा । मालूगा पत्तहारगा ॥ ३८ ॥ कप्पासट्ठिंमि जाया । तिंदुगा तउसमिंजगा ॥ सदावरीय गुम्मी य । बोधवा इंदगायगा ॥ ३९ ॥ इंदगोवगमाईया—णेगविहा एवमाईर्ज ॥ लोएगदेसे ते सवे । न सवज्ञ वियाहिया ॥ ४० ॥ व्याख्या—'कुंथूपिपीलिउद्दंसा' कुंथुर्लघुशरीरस्त्रींद्रियजीवः, पिपीलिः कीटिका, उद्दंसास्त्रींद्रियजातिविशेषाः, उत्कलिको जंतुविशेषः, तथोपदेहिका तृण-

हारकाश्चैव एतेऽपि त्रींद्रियजीवविशेषाः, मालूकाः पत्रहारकाः, एतेऽपि त्रींद्रियजीवविशेषाः. ॥ ३८ ॥ कर्पासास्थिजातास्तिंडुकाः. पुनस्तंतुसामिंजिका अपि त्रींद्रियजीवविशेषाः, सदावरी. च पुनर्गुल्मीति यूकाः, तथेंद्रकायका इत्यपि कुत्रचिल्लोकप्रसिद्धाः. ॥ ३९ ॥ इंद्रिगोपकादिकाः इंद्रगोपको ममोल इति प्रसिद्धः. एवमादिकास्त्रींद्रिया अनेकधा जीवास्ते सर्वे लोकैकदेशे व्याख्याताः. ॥ ४० ॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ ४१ ॥ व्याख्या—एते त्रींद्रियजीवाः संततिं प्राप्यानादयोऽपर्यवसिताः, स्थितिं भवस्थितिं कायस्थितिं च प्रतीत्य सादिकाः सपर्यवसिता अपि. ॥ ४१ ॥

॥ मूलम् ॥—एगूणपन्नहोरत्ता । उक्कोसेण वियाहिया ॥ तेंदियआउठिई । अंतोमुहुत्तं जहन्निया ॥४२॥ व्याख्या—त्रींद्रियजीवानामेकोनपंचाशद्दिनान्युत्कृष्टायुःस्थितिर्व्याख्याता, जघन्यकांतर्मुहूर्तमायुःस्थितिरस्तीति भावः. ॥ ४२ ॥ अथ कायस्थितिमाह—

॥ मूलम् ॥—संखिज्जकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ तेंदियकायठिई । तं कायं तु

अमुंचर्ज ॥ ४३ ॥ व्याख्या—त्रींद्रियाणां स्वं कायं त्रींद्रियकायममुंचतां मृत्वा तत्रैवोत्पद्य- मानानामुत्कृष्टा संख्येयकालं स्थितिः, जघन्यतस्त्वंतर्मुहूर्तमेव स्थितिरस्ति. ॥४३॥ अथ कालस्यांतरमाह—

॥ मूलम् ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ तेइंदियजीवाणं । अंतरं तु वियाहियं ॥ ४४ ॥ व्याख्या—त्रींद्रियजीवानां स्वकायाच्च्युत्वाऽन्यत्र योनावुत्पद्य पुनस्त्रींद्रिययोनावुत्पद्यते, तदोत्कृष्टमनंतकालमंतरं नवति. वनस्पतिकायेऽनंतकालस्य संनवात्. जघन्यमंतरमंतर्मुहूर्तं व्याख्यातं. ॥ ४४ ॥

॥ मूलम् ॥—एएसिं वन्नर्ज चेव । गंधर्ज रसफासर्ज ॥ संठाणादेसर्जवावि । विहाणाइ सहस्ससो ॥ ४५ ॥ व्याख्या—एतेषां त्रींद्रियजीवानां वर्णतो गंधतो रसतः स्पर्शतश्च संस्थानादेशतश्चापि सहस्रशो विधानानि नवंति. ॥ ४५ ॥ अथ चतुरिंद्रियानाह—

॥ मूलम् ॥—चर्जरिंदिया य जे जीवा । डुविहा ते पकित्तिया ॥ पज्जत्तमपज्जत्ता । तेसिं नेए सुणेह मे ॥ ४६ ॥ व्याख्या—चतुरिंद्रिया ये जीवाः स्पर्शनरसनघ्राणचक्षुःसहितास्ते च

पर्याप्तापर्याप्तभेदेन द्विधा प्रकीर्तिताः, तेषां भेदान् मे मम कथयतो यूयं शृणुत ? ॥ ४६ ॥

॥ मूलम् ॥—अंधिया पोत्तिया चेव । मछिया मसगा तहा ॥ भमरे कीडपयंगे य । ढिंकणे कुंकणे तहा ॥ ४७ ॥ कुक्कुडे सिंगरीडीय । नंदावत्ते य विछिए ॥ डोले य भिंगरीडीय । विरली अछिवेहए ॥ ४८ ॥ अछिले माहए अछि—रोडए चित्तपत्तए ॥ उहिंजलिया जलकारी य । नीयया तंबगाइया ॥ ४९ ॥ व्याख्या—तिसृभिर्गाथाभिश्चतुरिंद्रियजीवानां नामानि—अंधिका, च पुनः पोत्तिका, मक्षिका तथा मशका, भ्रमरस्तथा कीटः पतंगश्च, तथा ढिंकणस्तथा कुंकणः, एते चतुरिंद्रिया जंतवः. ॥ ४७ ॥ पुनः कुर्कुटः, शृंगरीटी, नंद्यावर्तः, वृश्चिकः, डोलः, भृंगरीटकः, वीरली अक्षिवेधकः. ॥ ४८ ॥ अक्षिलो मागधः, अक्षो रोडकश्चित्रपत्रा, उपधिजलकः, जलकारी, नीचकस्ताम्रकः. ॥ ४९ ॥ एतानि देशीयनामानि तत्तद्देशप्रसिद्धानि.

॥ मूलम् ॥—इइ चउरिंदिया एए- णेगहा एवमाईओ ॥ लोगस्स एगदेसंमि । ते सव्वे परिकित्तिया ॥ ५० ॥ व्याख्या—इत्यमुना प्रकारेणैते चतुरिंद्रिया एवमादिका अनेकधाः

संति. ते सर्वे चतुरिंद्रिया लोकस्य चतुर्दशरज्ज्वात्मकलोकस्यैकदेशे परिकीर्तिताः. ॥ ५० ॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साइया । सपज्जवसियावि य ॥ ५१ ॥ व्याख्या—संततिं प्राप्य ते जीवा अनादयस्तथाऽपर्यवसिताश्चापि. स्थितिं जवस्थितिं कायस्थितिं च प्रतीत्य सादयः सपर्यवसिता अपि संति. ॥ ५१ ॥

॥ मूलम् ॥—छच्चेव य मासाऊ । उक्कोसेण वियाहिया ॥ चउरिंदियआउठिई । अंतोमुहुत्तं जहन्निया ॥ ५२ ॥ व्याख्या—चतुरिंद्रियाणामुत्कृष्टा षण्मासायुःस्थितिर्व्याख्याता, जघन्यिका चांतर्मुहूर्तस्थितिर्व्याख्याता. ॥ ५२ ॥ जवस्थितिमुक्त्वा कायस्थितिमाह—

॥ मूलम् ॥—संखेज्जकालमुक्कोसं । अंतोमुहुत्तं जहन्निया ॥ चउरिंदियकायठिई । तं कायं तु अमुंचओ ॥ ५३ ॥ व्याख्या—चतुरिंद्रियाणां स्वं कायममुंचतां पुनः पुनस्तत्रैवोत्पद्यमानानां संख्येयकालमुत्कृष्टा स्थितिरस्ति, जघन्यिका चांतर्मुहूर्तं यावद्व्याख्याता. ॥ ५३ ॥ अथ कालांतरमाह—

॥ मूलम् ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नियं ॥ विजढंमि सए काए । अंत-

रेयं वियाहियं ॥ ५४ ॥ व्याख्या—चतुरिंद्रियाणां स्वकाये त्यक्ते सति पुनरन्यस्मिन् काये उत्पद्य पुनश्चतुरिंद्रियकाये उत्पद्यते, तदोत्कृष्टमंतरमनंतकालं, जघन्यतोंतर्मुहूर्तमंतरं ज्ञेयं. ॥

॥ मूलम् ॥—एएसिं वन्नओ चेव । गंधओ रसफासओ ॥ संठाणादेसओवावि । विहाणाइं सहस्ससो ॥ ५५ ॥ व्याख्या–एतेषां चतुरिंद्रियजीवानां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि सहस्रशो विधानानि बहवो भेदा भवंति. ॥५५॥ अथ पंचेंद्रियभेदानाह–

॥ मूलम् ॥—पंचेंदिया य जे जीवा । चउव्विहा ते वियाहिया ॥ नेरइया तिरिक्खा य । मणुआ देवा य आहिया ॥ ५६ ॥ व्याख्या–पंचेंद्रियाश्च ये जीवास्ते चतुर्विधा व्याख्याताः, ते पंचेंद्रिया जीवा नैरयिकास्तिर्यंचो मनुजाश्च पुनर्देवा आख्यातास्तीर्थकरैर्व्याख्याताः.

॥ मूलम् ॥—नेरइया सत्तविहा । पुढवीसु सत्तसू भवे ॥ पज्जत्तमपज्जत्ता । तेसिं भेए सुणेह मे ॥ ५७ ॥ व्याख्या–सप्तसु रत्नप्रभादिषु नरकपृथ्वीषु सप्तधास्ते नैरयिका भवेयुः, ते पुनर्नैरयिकाः पर्याप्ता अपर्याप्ताश्च संति. सप्त नैरयिकाः पर्याप्ताः, सप्त नैरयिका अपर्याप्ताः. एवं चतुर्दशप्रकारांस्तेषां भेदान् मे मम कथयतः सतो यूयं शृणुत ? ॥ ५७ ॥ पूर्वं सप्तनर-

कपृथ्वीनां स्वरूपमाह—

॥ मूलम् ॥—रयणाभा १ सक्कराभा २। वालुयाभा ३ य आहिया ॥ पंकाभा ४ धूमाभा ५। तमा ६ तमतमा ७ तहा ॥ ५७ ॥ व्याख्या—रत्नानां वैडूर्यादीनामाभा इवाभा यस्याः सा रत्नाभा, रत्नकांडस्य भवनपतिभवनस्याभा इवाभा यस्याः सा रत्नाभा १. शर्करा श्लक्ष्णपाषाणरूपा, तदाकारा आभा यस्याः सा शर्कराभा २. वालुका श्लक्ष्णरजः सदृगाभा यस्याः सा वालुकाभा ३. पंकस्येवाभा यस्याः सा पंकाभा ४. धूमस्येवाभा यस्याः सा धूमाभा. यद्यपि तत्र धूमस्याभावोऽस्ति, तथापि तत्र तदाकारपुद्गलानां परिणामोऽस्तीति धूमाभा ५. तमःप्रभा तमोरूपांधकारमयी तमाभा ६. तमस्तमा, प्रकृष्टं तमस्तमस्तमः, तन्मयी अत्यंतांधकारमयीत्यर्थः. ७. सप्तविधनरकपृथ्वीत्वेन तदंतर्वर्तिनोऽपि नरकजीवाः सप्तधा व्याख्याताः, ते पुनः पर्याप्तापर्याप्तभेदाच्चतुर्दशधा ज्ञेयाः. ॥ ५७ ॥ इति सप्तनरकपृथ्वीनां स्वरूपमुक्त्वाऽथ नामान्याह—

॥ मूलम् ॥—घम्मा वंसगा सेला। तहा अंजणरिट्ठगा ॥ मघा माघवई चेव। णारया

य पुणो नवे ॥ ५ए ॥ व्याख्या— घम्मा प्रथमा पृथ्वी १, द्वितीया वंशका २, तृतीया शैला ३, तथा चतुर्थ्यंजना ४, अरिष्टा पंचमी ५, मघा षष्ठी ६, माघवती सप्तमी ७. अत्र वासिनो नारकाः सप्तधा नवेयुः. ॥ ५ए ॥

॥ मूलम् ॥—रयणाइ गुत्तर्ड चेव । तहा घम्माइ णामर्ड ॥ इइ नेरईया एए । सत्तहा परिकित्तिया ॥ ६० ॥ व्याख्या—रत्नप्रनादयो गोत्रतो ज्ञेयाः, तथा घर्मादयो नामतो ज्ञेयाः. इत्यमुना प्रकारेणैते नैरयिकाः सप्तधा परिकीर्तिताः. ॥ ६० ॥ अत्र क्षेत्रविनागमाह—

॥ मूलम् ॥—लोगस्स एगदेसंमि । ते सवे उ वियाहिया ॥ इत्तो कालविनागं तु । तेसिं वुछं चउविहं ॥ ६१ ॥ व्याख्या—ते सर्वे नारका लोकस्यैकदेशे व्याख्याताः, अन्यत्र सर्वत्र न संतीत्यर्थः. ' इत्तो ' इतोऽनंतरं तेषां नारकाणां चतुर्विधं कालविनागं वक्ष्ये. ॥६१॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ ६२ ॥ व्याख्या—संततिं प्राप्य प्रवाहमाश्रित्य ते नारका अनादयोऽपर्यवसिताश्रपि. स्थितिं कायस्थितिमाश्रित्य सादयः सपर्यवसिताश्चापि वर्तंते. ॥ ६२ ॥

न्नुक्कोसिया न्नवे ॥ ७० ॥ व्याख्या—नारकाणां या जघन्योत्कृष्टत आयुःस्थितिर्व्याख्याता, सैव तेषां नारकाणां कायस्थितिर्जघन्योत्कृष्टतश्च व्याख्याता. यतो हि नारको जीवो मृत्वा पुनर्नरकभूमौ नोत्पद्यते, अन्यत्र गर्न्नजपर्याप्तसंख्येयवर्षायुष्केपूत्पद्यते, पश्चान्नरके उत्पद्यते नोत्पद्यते च. ॥ ७० ॥ अथ कालांतरमाह—

॥ मूलम् ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्निया ॥ विजढंमि सए काए । नेरइयाणं तु अंतरं ॥ ७१ ॥ व्याख्या—नारकाणां तु स्वे काये त्यक्ते सत्युत्कृष्टं कालस्यांतरमनंतकालं न्नवति, जघन्यतोंतर्मुहूर्तं कालांतरं भवति. यदान्यतरनरकात्कश्चिन्नारकश्च्युत्वा गर्न्नजपर्याप्तमत्स्यादिषूत्पद्यते, तत्र चात्यंतदुष्टाध्यवसायत्वादंतर्मुहूर्तमायुः प्रपाल्य मृत्वान्यतमनरके उत्पद्यते. ॥ ७१ ॥

॥ मूलम् ॥— एएसिं वन्नउं चेव । गंधउ रसफासउं ॥ संठाणादेसउ वावि । विहाणाइ सहस्ससो ॥ ७२ ॥ व्याख्या—एतेषां नारकाणां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि सहस्रशो विधानानि बहवो न्नेदा न्नवंति. ॥ ७२ ॥ अथ पंचेंद्रियतिरश्चां न्नेदानाह—

॥ मूलम् ॥—पंचेंदिया । तिरिक्खा य । दुविहा ते वियाहिया ॥ समुच्छिमा तिरिक्खा य । गब्भवक्कंतिया तहा ॥ ७१ ॥ व्याख्या—पंचेंद्रियास्तिर्यंचो द्विविधा व्याख्याताः, ते के? संमूर्छिमास्तिर्यंचस्तथा गर्भव्युत्क्रांतिकास्तिर्यंचश्च. तत्र संमूर्छोऽतिशयमूढत्वावस्तेन निर्वृत्ता निष्पन्नाः संमूर्छिमाः. संमूर्छिमाश्च ते तिर्यंचश्च संमूर्छिमतिर्यंचो मनःपर्याप्तिरहिताः सदा संमूर्छिता इव तिष्ठंति. गर्भव्युत्क्रांतिका गर्भजा मनःपर्याप्तिसहिताः. ॥ ७१ ॥

॥ मूलम् ॥—दुविहा ते भवे तिविहा । जलयरा थलयरा तहा ॥ खहयराय बोधव्वा । तेसिं भेए सुणेह मे ॥ ७२ ॥ व्याख्या—ते द्विविधास्संमूर्छिमा गर्भजाश्च तिर्यंचः पुनस्त्रिविधा बोधव्याः. तत् त्रैविध्यं यथा जलचराः स्थलचरास्तथा खचराः संति. एते त्रयोऽपि द्विविधाः, गर्भजाः संमूर्छिमाश्च ज्ञेयाः. तेषां भेदान् मे कथयतो यूयं श्रृणुत? ॥ ७२ ॥ अथ जलचरभेदानाह—

॥ मूलम् ॥—मच्छा य कच्छभायावि । गाहाय मगरा तहा ॥ सिसुमारा य बोधव्वा । पंचहा जलयराहिया ॥ ७३ ॥ व्याख्या—एते जलचराः पंचधा आख्याताः. एते के? मत्स्या

36

॥ मूलम् ॥—सागरोवममेगं तु । उक्कोसेण वियाहिया ॥ पढमाए जहन्नेणं । दसवा-
ससहस्सिया ॥ ६३ ॥ व्याख्या–प्रथमायां नरकपृथिव्यां रत्नप्रभायामुत्कृष्टेन त्रयोदशे प्रस्तटे
एकं सागरोपममायुःस्थितिर्व्याख्याता, जघन्येन दशवर्षसहस्रिकायुःस्थितिर्व्याख्याता. ।६३।

॥ मूलम् ॥—तिन्नेव सागराउ । उक्कोसेण वियाहिया ॥ दोच्चाए जहन्नेणं । एगं तु
सागरोवमं ॥ ६४ ॥ व्याख्या–द्वितीयायां नरकपृथिव्यां शर्कराप्रभायामंतिमे प्रस्तटे नारका-
णामुत्कृष्टत्वेन त्रीणि सागरोपमाण्यायुःस्थितिर्व्याख्याता. जघन्येन त्वेकं सागरोपममायुःस्थि-
तिर्व्याख्याता. ॥ ६४ ॥

॥ मूलम् ॥—सत्तेव सागराऊ । उक्कोसेण वियाहिया ॥ तइयाए जहन्नेणं । तिन्नेव
सागरोवमा ॥ ६५ ॥ व्याख्या–तृतीयायां नरकपृथिव्यां वालुकप्रभायामंतिमे प्रस्तटे उत्कृष्ट-
तः सप्तसागरोपमाण्यायुःस्थितिर्व्याख्याता, जघन्यतस्त्रीणि सागरोपमाणि स्थितिर्व्याख्याता.

॥ मूलम् ॥–दससागरोवमाउ । उक्कोसेण वियाहिया ॥ चउत्थीए जहन्नेणं । सत्तेव सा-
गरोवमा ॥ ६६ ॥ व्याख्या–चतुर्थ्यां नरकपृथिव्यां पंकप्रभायामंत्ये प्रस्तटे उत्कृष्टेन दश सा-

गरोपमाणि स्थितिर्व्याख्याता. जघन्येन सप्तसागरोपमाण्यायुःस्थितिः कथिता. ॥ ६६ ॥

॥ मूलम् ॥—सतरससागराउ । उक्कोसेण वियाहिया ॥ पंचमाए जहन्नेणं । दस उ सागरोवमा ॥ ६७ ॥ व्याख्या—पंचमायां नरकपृथिव्यां धूमप्रभायामंत्ये प्रस्तटे सप्तदशसागरोपमाण्यायुःस्थितिर्व्याख्याता. जघन्येन तु दशसागरोपमाण्यायुःस्थितिर्व्याख्याता. ॥६७॥

॥ मूलम् ॥—बावीससागराउ । उक्कोसेण वियाहिया ॥ छट्टीए जहन्नेणं । सत्तरससागरोवमा ॥ ६८ ॥ व्याख्या—षष्ठ्यां नरकपृथिव्यां तमःप्रभायामंत्ये प्रस्तटे उत्कृष्टेन द्वाविंशतिसागरोपमाण्यायुःस्थितिर्व्याख्याता. जघन्येन सप्तदशसागरोपमाण्यायुःस्थितिर्व्याख्याता.

॥ मूलम् ॥—तित्तीससागराउ । उक्कोसेण वियाहिया ॥ सत्तमाए जहन्नेणं । बावीसं सागरोवमा ॥ ६९ ॥ व्याख्या—सप्तम्यां नरकपृथिव्यां तमस्तमःप्रभायामंत्ये प्रस्तटे उत्कृष्टेन त्रयस्त्रिंशत्सागरोपमाण्यायुःस्थितिर्व्याख्याता. जघन्येन द्वाविंशतिसागरोपमाण्यायुःस्थितिर्व्याख्याता. ॥ ६९ ॥

॥ मूलम् ॥—जा चेव आउठिई । नेरईयाणं वियाहिया ॥ सा तेसिं कायठिई । जह-

न्नुक्कोसिया नवे ॥ ७० ॥ व्याख्या—नारकाणां या जघन्योत्कृष्टत आयुःस्थितिर्व्याख्याता, सैव तेषां नारकाणां कायस्थितिर्जघन्योत्कृष्टतश्च व्याख्याता. यतो हि नारको जीवो मृत्वा पुनर्नरकभूमौ नोत्पद्यते, अन्यत्र गर्नजपर्याप्तसंख्येयवर्षायुष्केषूत्पद्यते, पश्चान्नरके उत्पद्यते नोत्पद्यते च. ॥ ७० ॥ अथ कालांतरमाह—

॥ मूलम् ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्निया ॥ विजढंमि सए काए । नेरइयाणं तु अंतरं ॥ ७१ ॥ व्याख्या—नारकाणां तु स्वे काये त्यक्ते सत्युत्कृष्टं कालस्यांतरमनंतकालं नवति, जघन्यतोंतर्मुहूर्तं कालांतरं भवति. यदान्यतरनरकात्कश्चिन्नारकश्च्युत्वा गर्नजपर्याप्तमत्स्यादिषूत्पद्यते, तत्र चात्यंतदुष्टाध्यवसायत्वादंतर्मुहूर्तमायुः प्रपाल्य मृत्वान्यतमनरके उत्पद्यते. ॥ ७१ ॥

॥ मूलम् ॥— एएसिं वन्नउं चेव । गंधउ रसफासउ ॥ संठाणादेसउ वावि । विहाणाइ सहस्ससो ॥ ७२ ॥ व्याख्या—एतेषां नारकाणां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि सहस्रशो विधानानि बहवो नेदा नवंति. ॥ ७२ ॥ अथ पंचेंद्रियतिरश्चां नेदानाह—

॥ मूलम् ॥—पंचेंदिया । तिरिक्खा य । दुविहा ते वियाहिया ॥ समुछिमा तिरिक्खा य । गप्नवक्कंतिया तहा ॥ ७१ ॥ व्याख्या—पंचेंद्रियास्तिर्यंचो द्विविधा व्याख्याताः, ते के? संमूर्छिमास्तिर्यंचस्तथा गर्भव्युत्क्रांतिकास्तिर्यंचश्च. तत्र संमूर्छोऽतिशयमूढनावस्तेन निर्वृत्ता निष्पन्नाः संमूर्छिमाः, संमूर्छिमाश्च ते तिर्यंचश्च संमूर्छिमतिर्यंचो मनःपर्याप्तिरहिताः सदा संमूर्छिता इव तिष्ठंति. गर्भव्युत्क्रांतिका गर्भजा मनःपर्याप्तिसहिताः. ॥ ७१ ॥

॥ मूलम् ॥—डुविहा ते नवे तिविहा । जलयरा थलयरा तहा ॥ खहयराय बोधवा । तेसिं नेए सुणेह मे ॥ ७२ ॥ व्याख्या—ते द्विविधास्संमूर्छिमा गर्भजाश्च तिर्यंचः पुनस्त्रिविधा बोधव्याः. तत् त्रैविध्यं यथा जलचराः स्थलचरास्तथा खचराः संति. एते त्रयोऽपि द्विविधाः, गर्भजाः संमूर्छिमाश्च ज्ञेयाः. तेषां नेदान् मे कथयतो यूयं शृणुत? ॥ ७२ ॥ अथ जलचरनेदानाह—

॥ मूलम् ॥—मछा य कछनायावि । गाहाय मगरा तहा ॥ सिसुमारा य बोधवा । पंचहा जलयराहिया ॥ ७४ ॥ व्याख्या—एते जलचराः पंचधा आख्याताः. एते के? मत्स्या

न्नुक्कोसिया नवे ॥ ७० ॥ व्याख्या—नारकाणां या जघन्योत्कृष्टत आयुःस्थितिर्व्याख्याता, सैव तेषां नारकाणां कायस्थितिर्जघन्योत्कृष्टतश्च व्याख्याता. यतो हि नारको जीवो मृत्वा पुनर्नरकभूमौ नोत्पद्यते, अन्यत्र गर्नजपर्याप्तसंख्येयवर्षायुष्केषूत्पद्यते, पश्चान्नरके उत्पद्यते नोत्पद्यते च. ॥ ७० ॥ अथ कालांतरमाह—

॥ मूलम् ॥–अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्निया ॥ विजढंमि सए काए । नेरइयाणं तु अंतरं ॥ ७१ ॥ व्याख्या–नारकाणां तु स्वे काये त्यक्ते सत्युत्कृष्टं कालस्यांतरमनंतकालं नवति, जघन्यतोंतर्मुहूर्तं कालांतरं भवति. यदान्यतरनरकात्कश्चिन्नारकश्च्युत्वा गर्नजपर्याप्तमत्स्यादिषूत्पद्यते, तत्र चात्यंतदुष्टाध्यवसायत्वादंतर्मुहूर्तमायुः प्रपाल्य मृत्वान्यतमनरके उत्पद्यते. ॥ ७१ ॥

॥ मूलम् ॥— एएसिं वन्नउ चेव । गंधउ रसफासउ ॥ संठाणादेसउ वावि । विहाणाइ सहस्ससो ॥ ७२ ॥ व्याख्या—एतेषां नारकाणां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि सहस्रशो विधानानि बहवो नेदा नवंति. ॥ ७२ ॥ अथ पंचेंद्रियतिरश्चां नेदानाह—

॥ मूलम् ॥—पंचेंदिया । तिरिरका य । दुविहा ते वियाहिया ॥ समुछिमा तिरिरका य । गप्नवक्कंतिया तहा ॥ ७२ ॥ व्याख्या—पंचेंद्रियास्तिर्यंचो द्विविधा व्याख्याताः, ते के? संमूर्छिमास्तिर्यंचस्तथा गर्नव्युत्क्रांतिकास्तिर्यंचश्च. तत्र संमूर्छोऽतिशयमूढत्वावस्तेन निर्वृत्ता निष्पन्नाः संमूर्छिमाः, संमूर्छिमाश्च ते तिर्यंचश्च संमूर्छिमतिर्यंचो मनःपर्याप्तिरहिताः सदा संमूर्छिता इव तिष्टंति. गर्नव्युत्क्रांतिका गर्नजा मनःपर्याप्तिसहिताः. ॥ ७१ ॥

॥ मूलम् ॥—डुविहा ते नवे तिविहा । जलयरा थलयरा तहा ॥ खहयराय वोधवा । तेसिं नेए सुणेह मे ॥ ७२ ॥ व्याख्या—ते द्विविधास्संमूर्छिमा गर्नजाश्च तिर्यंचः पुनस्त्रिविधा वोधव्याः. तत् त्रैविध्यं यथा जलचराः स्थलचरास्तथा खचराः संति. एते त्रयोऽपि द्विविधाः, गर्नजाः संमूर्छिमाश्च ज्ञेयाः. तेषां नेदान् मे कथयतो यूयं शृणुत? ॥ ७३ ॥ अथ जलचरनेदानाह—

॥ मूलम् ॥—मछा य कछनायावि । गाहाय मगरा तहा ॥ सिसुमारा य वोधवा । पंचहा जलयराहिया ॥ ७४ ॥ व्याख्या—एते जलचराः पंचधा आख्याताः. एते के? मत्स्या

मीनाः, कच्छपाः कूर्माश्चापि, ग्राहास्तंतुकजीवाः, मकरा महामत्स्याः, शिशुमारा अपि मत्स्यविशेषाः. एतेषु पंचसु भेदेषु बहूनां भेदानामंतर्भावः. यतो हि यावंतः स्थलजीवास्तावंत एव जलजीवा इत्युक्तेः. ॥ ७४ ॥

॥ मूलम् ॥—लोएगदेसे ते सव्वे । न सव्वत्थ वियाहिया ॥ एत्तो कालविभागं तु । तेसिं वुच्छं चउव्विहं ॥ ७५ ॥ व्याख्या–ते सर्वे जलचरा जीवा लोकैकदेशे व्याख्याताः, जलस्थानेष्वेव, न तु सर्वत्र इतोऽनंतरं तेषां जलचरजीवानां तु कालविभागं चतुर्विधं वक्ष्ये. ।७५।

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साइया । सपज्जवसियावि य ॥ ७६ ॥ व्याख्या–ते जलचरजीवाः संततिं प्राप्य प्रवाहमार्गमाश्रित्याऽनादयोऽपर्यवसिताश्च वर्तन्ते. स्थितिं प्रतीत्य भवस्थितिं कायस्थितिं चाश्रित्य सादयः सपर्यवसिताश्च संतीति भावः. ॥ ७६ ॥

॥ मूलम् ॥–इक्का य पुव्वकोडी । उक्कोसेण वियाहिया ॥ आउठिई जलयराणं । अंतोमुहुत्तं जहन्निया ॥ ७७ ॥ व्याख्या–जलचराणां मत्स्यादीनां जीवानामुत्कृष्टेनायुःस्थितिरेका

पूर्वकोटी व्याख्याता. पूर्वस्य तु परिमाणमेतत्–सप्ततिकोटिलक्षवर्षाणि, षट्पंचाशत्सहस्रकोटिवर्षाणि, एतैर्वर्षैः पूर्वं भवति. जघन्यिकायुःस्थितिश्चैतेषामंतर्मुहुर्तमेव व्याख्याता. ॥७७॥
अथ जलचराणां कायस्थितिमाह–

॥ मूलम् ॥—पुव्वकोडीपुहुत्तं तु । उक्कोसेण वियाहिया ॥ कायठिई जलयराणं । अंतोमुहुत्तं जहन्नया ॥ ७८ ॥ व्याख्या–जलचराणां कायस्थितिरुत्कृष्टतः पूर्वकोटिपृथक्त्वं व्याख्याता. यदा जलचरजीवो मृत्वा पुनः पुनर्जलचरयोनावेवोत्पद्यते, तदा पूर्वकोटिपृथक्त्वं यावदुत्पद्यते. पृथक्त्वं द्वाभ्यामारभ्य नवांकं यावत्पृथक्त्वमिति सिद्धांतांकसंज्ञास्ति. द्वाभ्यां पूर्वकोटिभ्यामारभ्य यावन्नवकोटिं यावज्जलचरो जीवो मृत्वा मृत्वा जलचरयोनावुत्पद्यते इत्यर्थः. जघन्यतस्त्वंतर्मुहूर्तमेव कायस्थितिर्व्याख्याता. अथ कालांतरमाह—

॥ मूलम ॥—अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ विजढम्मि सए काए । जलयराणं तु अंतरं ॥ ७९ ॥ व्याख्या—जलचराणां स्वकीये काये त्यक्ते सत्यन्यत्रोत्पद्य पुनः स्वकाये उत्पद्यते, तदा कियत्कालांतरं भवति? तदुच्यते–उत्कृष्टतोऽनंतं कालांतरं भवति,

यतो हि चेज्जलचरो निगोदत्वेनोत्पद्यते, तदा निगोदस्यानंतकालस्य स्थितिरस्ति, जघन्यतस्त्वंतर्मुहूर्तमेव कालांतरं ज्ञेयं. ॥ ७९ ॥

॥ मूलम् ॥—एएसिं वन्नउ चेव । गंधउ रसफासउ ॥ संठाणादेसउ वावि । विहाणाइ सहस्ससो ॥ ७० ॥ व्याख्या—तेषां जलचराणां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि विधानानि सहस्रशो भवंति. ॥ ७० ॥ अथ स्थलचरभेदानाह—

॥ मूलम् ॥—चउप्पया य परिसप्पा । दुविहा थलयरा भवे ॥ चउप्पया चउविहा उ । तं मे कित्तयउ सुण ॥ ७१ ॥ व्याख्या—स्थलचरा द्विविधाः, चतुःपदाः परिसर्पाश्च भवेयुः, चत्वारः पदा येषां ते चतुःपदाः, परि समंतात्सर्पंतीति परिसर्पाः. तत्र चतुःपदाश्चतुर्विधाः संति. तांश्चतुर्विधान् मे मम कथयतस्त्वं शृणु? ॥ ७१ ॥

॥ मूलम् ॥—एगखुरा दुखुराउ । गंडीपयसणप्पया ॥ हयमाई गोणमाई । गयमाई सीहमाइणो ॥ ७२ ॥ व्याख्या—एकखुराः, द्विखुराः, गंडीपदाः, सनखपदाः एकः खुरश्चरणाधोवर्ति हड्डविशेषो येषां ते एकखुरास्ते चाश्वादयः. एवं द्वौ खुरौ येषां ते द्विखुरा गोणा-

दयो बलीवर्दादयः. गंडी कमलमध्यस्थकर्णिका, तद्वत्पदा येषां ते गंडीपदा गजादयः. सह नखैर्वर्तन्ते इति सनखाः, सनखाः पदा येषां ते सनखपदाः सिंहादयः. 'सणप्पया' इति प्राकृतत्वात्. ॥ ८२ ॥ अथ परिसर्पानाह–

॥मूलम्॥–भुओरगपरिसप्पा । परिसप्पा दुविहा भवे ॥ गोहाई अहिमाईया । इक्किक्काणेगहा भवे ॥८३॥ व्याख्या–परिसर्पा जीवा द्विविधा भवेयुः, ते के? भुजाभ्यां परिसर्पन्तीति भुजपरिसर्पाः. उरसा परिसर्पतीत्युरःपरिसर्पाः. तत्र गोधानकुलमूषकादयो भुजपरिसर्पाः. अहय उरःपरिसर्पाः. एते एकेऽप्यनेकधा भवेयुः. ॥ ८३ ॥ अथैतेषां क्षेत्रविभागमाह–

॥ मूलम् ॥—लोएगदेसे ते सव्वे । न सव्वत्थ वियाहिया ॥ इत्तो कालविभागं । तेसिं वुच्छं चउव्विहं ॥ ८४ ॥ व्याख्या—ते सर्वे स्थलचरा भुजपरिसर्पाश्च लोकैकदेशे व्याख्याताः. इतोऽनंतरं कालविभागं स्थलचराणां चतुर्विधं वक्ष्ये. ॥ ८४ ॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ ८५ ॥ व्याख्या—संततिं प्राप्य ते स्थलचरा अनादयोऽपर्यवसिताश्चापि. स्थि-

तिं जवस्थितिं प्रतीत्याश्रित्य सादयः सपर्यवसिताश्चापि वर्तंते. ॥ ७५ ॥

॥ मूलम् ॥—पलिउवमाइं तिन्नेउ । उक्कोसेण वियाहिया ॥ आउठिइ थलयराणं । अंतोमुहुत्तं जहन्नियं ॥ ७६ ॥ व्याख्या–स्थलचराणामुत्कृष्टेन त्रीणि पल्योपमान्यायुःस्थितिर्व्याख्याता. जघन्यतः स्थलचराणामंतर्मुहूर्तमायुःस्थितिः. ॥ ७६ ॥

॥ मूलम् ॥—पलिउवमाइं तिन्नेउ । उक्कोसेणं तु साहिया ॥ पुव्वकोडीपुहुत्तेणं । अंतोमुहुत्तं जहन्निया ॥ ७७ ॥ व्याख्या—अथ स्थलचरा मृत्वा स्थलचरेष्वेवोत्पद्यंते. तदा कियत्कालेनोत्पद्यंते? तां कायस्थितिमाह—स्थलचराणां स्वकीये काये एव समुत्पद्यमानानां त्रीणि पल्योपमानि पूर्वकोटिपृथक्त्वेन साधिकान्युत्कृष्टेन कायस्थितिर्व्याख्याता. जघन्यिका कायस्थितिस्तेषामंतर्मुहूर्तमेवोक्ता. यतो हि त्रिपल्योपमायुषः स्थलचराः पूर्वकोट्यायुषां सप्ताष्टभवग्रहणानि कुर्वंति, पंचेंद्रियतिरश्चामधिकनिरंतरभवस्याऽसंजवोऽस्ति. ॥ ७७ अथ कालांतरमाह–

॥ मूलम् ॥—कायठिई थलयराणं । अंतरे तेसिमं जवे ॥ कालं अणंतमुक्कोसं । अं-

नोमुहुत्तं जहन्नियं ॥ ८८ ॥ विजढम्मि सए काए । थलयराणं तु अंतरं ॥ एएसिं वन्नओ चेव । गंधओ रसफासओ ॥ संठाणन्नेयओ वावि । विहाणाइ सहस्ससो ॥ ८९ ॥युग्मं॥ व्याख्या—स्थलचराणां स्वकीये काये त्यक्ते सति वनस्पत्यादिमध्ये उत्पद्यते चेत्स्थलचरेषु पुनरायाति, तदोत्कृष्टमनंतकालस्यांतरं भवति. जघन्यतश्चांतर्मुहूर्तकालस्यांतरं भवति, ॥ ८८ ॥ एतेषां स्थलचराणां वर्णतो गंधतो रसतः स्पर्शतः संस्थानभेदतश्चापि सहस्रशो विधानानि भेदाः. ॥

॥ मूलम् ॥—चम्मे उ लोमपक्खी य । तइया समुग्गपक्खी य ॥ विययपक्खी य बोधव्वा । पक्खिणो य चउव्विहा ॥ ९० ॥ व्याख्या—अथ खेचरभेदानाह—पक्षिणश्चतुर्विधा बोधव्याः, चर्मपक्षिणश्चर्मचटिकाद्याः, रोमपक्षिणो राजहंसाद्याः, समुद्गपक्षिणः समुद्गकाकारपक्षयुक्ता मानुषोत्तरपर्वताद्बहिर्वर्तिनः. विततपक्षिणो ये सर्वदा विस्तारितपक्षा एव तिष्टंति.

॥ मूलम् ॥—लोएगदेसे ते सव्वे । न सव्वत्थ वियाहिया ॥ इत्तो कालविभागं तु । तेसिं वुच्छं चउव्विहं ॥ ९१ ॥ व्याख्या—ते सर्वे खचरा लोकैकदेशे व्याख्याताः. सर्वत्र चतुर्दशरज्ज्वात्मकलोके न संति. इतोऽनंतरं तेषां खचराणां चतुर्विधं कालविभागं वक्ष्ये. ॥९२॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ ८२ ॥ व्याख्या—संततिं प्राप्य ते खचरा अनाद्योऽपर्यवसिता अपि वर्तन्ते. स्थितिं प्रतीत्य ते साद्यः सपर्यवसिता अपि संति. ॥ ८२ ॥

॥ मूलम् ॥—पलिओवमस्स नागो । असंखिज्जयमो नवे ॥ आउठिई खहयराणं । अंतोमुहुत्तं जहन्निया ॥ ८३ ॥ व्याख्या— खचराणामायुःस्थितिः पल्योपमस्याऽसंख्येयतमो नागो नवति. जघन्यिकायुःस्थितिरंतर्मुहूर्तं नवति. ॥ ८३ ॥ अथ खचराणां कायस्थितिकालांतरं द्वाभ्यां गाथाभ्यां वदति—

॥ मूलम् ॥—असंखनागो पलियस्स । उक्कोसेण साहिउ ॥ पुव्वकोडी पुहत्तेणं । अंतोमुहुत्तं जहन्निया ॥ ८४ ॥ कायठिई खहयराणं । अंतरं तेसिमं नवे ॥ अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ ८५ ॥ व्याख्या—खचराणां कायस्थितिः पल्योपमस्याऽसंख्येयतमो नागः पूर्वकोटिपृथक्त्वेन साधिकश्च नवति. जघन्यिका कायस्थितिरंतर्मुहूर्तं नवति. तेषां खचराणां कालांतरं चोत्कृष्टतोऽनंतकालं यावद्भवति, जघन्यतश्चांतर्मुहूर्तं नवति. ॥ ८५ ॥

॥ मूलम् ॥—एएसिं वन्नउ चेव । गंधउ रसफासउ ॥ संठाणादेसउवावि । विहाणाइ सहस्ससो ॥ ९६ ॥ व्याख्या–एतेषां खचराणां वर्णतो गंधतो रसतः स्पर्शतश्च संस्थानादेशनश्चापि सहस्रशो विधानानि जवंति. ॥ ९६ ॥

॥ मूलम् ॥—मणुया दुविहन्नेया उ । तं मे कित्तयउ सुण ॥ समुच्छिमा य मणुया । गप्नवक्कंतिया नहा ॥ ९७ ॥ व्याख्या—मनुजा द्विविधन्नेदाः संति, तान् ज्ञेदान् मे मम कीर्तयतस्त्वं शृणु? मनुजा मनुष्याः संमूर्छिमास्तथा गर्नव्युत्क्रांतिकाः, गर्नजा मनःसहिताः, संमूर्छिमा मनोरहिताश्चतुर्दशस्थानेषूत्पन्नाः, ॥ ९७ ॥

॥ मूलम् ॥—गप्नवक्कंतिया जे उ । तिविहा ते वियाहिया ॥ अकम्मकम्मभूमा य । अंतरदीवगा तहा ॥ ९८ ॥ व्याख्या–ये तु गर्नव्युत्क्रांतिकास्ते मनुष्यास्त्रिविधा व्याख्याताः. ते के? अकर्मकर्मन्नूमिगा अंतरद्वीपकाश्च. अकर्मन्नूमौ नवा अकर्मनौमा अकर्मन्नूम्युत्पन्नाः, कर्मन्नूमौ नवाः कर्मनौमाः कर्मन्नूम्युत्पन्नाः, तथांतरद्वीपगाः. ॥ ९८ ॥

॥ मूलम् ॥—पन्नरस तीसइविहा । नेया अठ्ठावीसई ॥ संखा उ कमसो तोसिं । इइ

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ ८२ ॥ व्याख्या—संततिं प्राप्य ते खचरा अनाद्योऽपर्यवसिता अपि वर्तन्ते. स्थितिं प्रतीत्य ते सादयः सपर्यवसिता अपि संति. ॥ ८२ ॥

॥ मूलम् ॥—पलिओवमस्स भागो । असंखिज्जइमो भवे ॥ आउठिई खहयराणं । अंतोमुहुत्तं जहन्निया ॥ ८३ ॥ व्याख्या— खचराणामायुःस्थितिः पल्योपमस्याऽसंख्येयतमो भागो भवति. जघन्यिकायुःस्थितिरंतर्मुहूर्तं भवति. ॥ ८३ ॥ अथ खचराणां कायस्थितिकालांतरं द्वाभ्यां गाथाभ्यां वदति—

॥ मूलम् ॥—असंखभागो पलियस्स । उक्कोसेण साहिओ ॥ पुव्वकोडी पुहत्तेणं । अंतोमुहुत्तं जहन्निया ॥ ८४ ॥ कायठिई खहयराणं । अंतरं तेसिमं भवे ॥ अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ ८५ ॥ व्याख्या—खचराणां कायस्थितिः पल्योपमस्याऽसंख्येयतमो भागः पूर्वकोटिपृथक्त्वे न साधिकश्च भवति. जघन्यिका कायस्थितिरंतर्मुहूर्तं भवति. तेषां खचराणां कालांतरं चोत्कृष्टतोऽनंतकालं यावद्भवति, जघन्यतश्चांतर्मुहूर्तं भवति. ॥ ८५ ॥

॥ मूलम् ॥—एएसिं वन्नओ चेव । गंधओ रसफासओ ॥ संठाणादेसओवावि । विहाणाइं सहस्ससो ॥ ८६ ॥ व्याख्या-एतेषां खचराणां वर्णतो गंधतो रसतः स्पर्शतश्च संस्थानादेशतश्चापि सहस्रशो विधानानि भवंति. ॥ ८६ ॥

॥ मूलम् ॥—मणुया दुविहभेया उ । तं मे कित्तयओ सुण ॥ संमुछिमा य मणुया । गम्भवक्कंतिया तहा ॥ ८७ ॥ व्याख्या—मनुजा द्विविधभेदाः संति, तान् भेदान् मे मम कीर्तयतस्त्वं शृणु? मनुजा मनुष्याः संमूर्छिमास्तथा गर्भव्युत्क्रांतिकाः, गर्भजा मनःसहिताः, संमूर्छिमा मनोरहिताश्चतुर्दशस्थानेपूत्पन्नाः, ॥ ८७ ॥

॥ मूलम् ॥—गम्भवक्कंतिया जे उ । तिविहा ते वियाहिया ॥ अकम्मकम्मभूमा य । अंतरद्दीवगा तहा ॥ ८८ ॥ व्याख्या-ये तु गर्भव्युत्क्रांतिकास्ते मनुष्यास्त्रिविधा व्याख्याताः. ते के? अकर्मकर्मभूमिगा अंतरद्वीपकाश्च. अकर्मभूमौ भवा अकर्मभौमा अकर्मभूम्युत्पन्नाः, कर्मभूमौ भवाः कर्मभौमाः कर्मभूम्युत्पन्नाः, तथांतरद्वीपगाः. ॥ ८८ ॥

॥ मूलम् ॥—पन्नरस तीसइविहा । भेया अट्ठावीसई ॥ संखा उ कमसो तेसिं । इइ

एसा वियाहिया ॥ ९९ ॥ व्याख्या—इत्यमुना प्रकारेणैतेषां पूर्वोक्तानां कर्मभूम्यकर्मभूम्यंतरद्वीपानां संख्या क्रमशोऽनुक्रमेण व्याख्याता. सा का संख्येत्युच्यते—विधशब्दस्योभयत्र संबंधो ज्ञेयः. पंचदशविधाः कर्मभूमिजाः, भरतैरावतमहाविदेहानां प्रत्येकं पंचपंचसंख्याकत्वात् पंचदशसंख्यात्वं भवति. त्रिंशद्विधा अकर्मभौमाः, अत्र हैमवतहरिवर्षरम्यकैरण्यवतदेवकुरूत्तरकुरुरूपाणां षण्णामप्यकर्मभूमीनां प्रत्येकं पंचसंख्यागुणितानां त्रिंशत्संख्यात्वं संभवति. इह च क्रमश इत्युक्तेऽपि गणनावसरे क्रमभंगो विहितः. पूर्वमकर्मभूमिसंख्यां विहाय कर्मभूमिसंख्या प्रतिपादिता, तत्तु कर्मभूमिजानां मनुष्याणां मुक्तिसाधकत्वेन प्राधान्यख्यापनापूर्वकथनं न दोषायेति. तथांतरद्वीपानामष्टाविंशतिर्भेदाः, ते चांतरद्वीपाः क्षुल्लहिमवति पर्वते पूर्वस्यां दिश्यपरस्यां दिशि च जंबूद्वीपवेदिकांतात्परतः प्रत्येकं द्वे द्वे दंष्ट्रे विदिगभिमुखे विनिर्गते स्तः. तद्यथा—पूर्वस्यामेकेशान्यभिमुखी दंष्ट्रा, द्वितीयाग्नेय्यभिमुखी. पश्चिमायामेका नैरृत्यभिमुखी, द्वितीया वायव्यभिमुखी. एवं चतसृषु विदिक्ष्वभिमुखीषु दंष्ट्रासु प्रत्येकं त्रीणि त्रीणि योजनशतानि लवणसमुद्रमतिक्रम्य विदिक्ष्वेकैकभावेन चत्वारोंतरद्वीपाः, प्रत्येकं

योजनशतत्रयविस्ताराः संति. ततस्तत्परतस्तास्वेव चतसृषु दंष्ट्रासु प्रत्येकमेकैकशतयोजनवृद्ध्या वर्धिताः षट् षट् अंतरद्वीपाः संति. ते च द्वीपाश्चतुर्भिर्गुणिताश्चतुर्विंशतिसंख्याका भवंति. ततश्चाद्यांतरद्वीपचतुष्कसहिता अष्टाविंशतिरंतरद्वीपाः संति. एवं शिखरिणि पर्वतेऽष्टाविंशतिर्ज्ञेयाः. सर्वसाम्याच्चैषां भेदेनाऽविवक्षितत्वात्सूत्रेऽष्टाविंशतिसंख्याकथनं विरोधाय न भवति. तेष्वंतरद्वीपेषु युगलधर्मिका वसंति, तच्छरीरमानादि कथ्यते—अष्टधनुःशतोच्छ्रायाः, पल्यासंख्यभागायुषः, चतुःषष्टिपृष्टकरंडाः, चतुर्थभक्ताहाराभिलाषवंतः. एकोनाशीतिदिनकृतापत्यपालनाः. तेषां द्वीपानां नामायामविस्तारपरिध्यादिविचारस्तु क्षेत्रसमासबृहट्टीकातोऽवसेयः. ॥ ९९ ॥

॥ मूलम् ॥—समुच्छिमाण एसेव । भेउ होइ आहियो ॥ लोगस्स एगदेसंमि । ते सव्वेवि वियाहिया ॥ २०० ॥ व्याख्या-संमूर्छिमानां ह्येष एव भेदः, यत्कर्मभूम्यादिसमुत्पन्नानां गर्भजानां वातपित्तादिषु ते चतुर्दशभेदैः संभवंति. अंगुलासंख्येयभागमात्रावगाहनास्ते सर्वे मनुष्याः संमूर्छिमा गर्भजाश्च लोकैकदेशे व्याख्याताः. ॥ २०० ॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जव-

सियावि य १ ॥ व्याख्या—संततिं प्राप्य ते संमूर्छिमा गर्नजाश्च मनुष्या अनाद्योऽपर्यवसिताश्चापि वर्तंते. स्थितिमाश्रित्य साद्यः सपर्यवसिताश्चापि संति. ॥ १ ॥

॥ मूलम् ॥–पलिउवमाइ तिन्नेउ । उक्कोसेण वियाहिया ॥ आउठिई मणुआणं । अंतोमुहुत्तं जहन्निया ॥ २ ॥ व्याख्या—मनुजानां गर्नजानां त्रीणि पल्योपमान्युत्कृष्टेनायुः स्थितिर्व्याख्याता, जघन्यिका चांतर्मुहूर्तं स्थितिर्ज्ञेया. ॥ २ ॥ अथ कायस्थितिमंतरकालं चाह द्वाभ्यां गाथाभ्यां—

॥ मूलम् ॥—पलिउवमाइं तिन्नेउ । उक्कोसेण तु साहिया ॥ पुव्वकोमी पुहुत्तेणं । अंतोमुहुत्तं जहन्निया ॥ ३ ॥ कायठिई मणुआणं । अंतरं तेसिमं नवे ॥ अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नियं ॥ ४ ॥ व्याख्या–मनुजानां गर्नजानां त्रीणि पल्योपमानि पूर्वकोटिपृथक्त्वेन साधिकान्युत्कृष्टेन कायस्थितिर्व्याख्याता. जघन्यिका चांर्मुहूर्तं स्थितिर्व्याख्याता, तेषां गर्नजानां मनुजानां कालस्यांतरमुत्कृष्टमनंतकालं, जघन्यकमंतर्मुहूर्तं कालांतरं ज्ञेयं. ॥

॥ मूलम् ॥—एएसिं वन्नउ चेव । गंधउ रसफासउ ॥ संठाणादेसउवावि । विहाणाइ

सहस्ससो ॥ ५ ॥ व्याख्या—संमूर्छिमगर्भजमनुष्याणां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशनश्चापि सहस्रशो विधानानि बहवो भेदा भवंति. ॥ ५ ॥ अथ देवानाह—

॥ मूलम् ॥—देवा चउव्विहा वुत्ता । तं मे कित्तयउ सुण ॥ भोमिज्जवाणमंतर—जोइसवेमाणिया तहा ॥ ६ ॥ व्याख्या—देवाश्चतुर्विधा उक्ताः. तान् भेदान् कीर्तयतो मे मम त्वं शृणु? भौमेयका व्यंतरा ज्योतिष्कास्तथा वैमानिकाः. भूमौ भवा भौमेयका भवनवासिनो देवाः, रत्नप्रभायाः पृथ्व्या अशीतिसहस्रोत्तरयोजनलक्षपिंडाया उपर्येकं योजनसहस्रमवगाह्याधश्चैकं योजनसहस्रं मुक्त्वा मध्येऽष्टसप्तत्युत्तरयोजनलक्षे भवनवासिनां चमरेंद्रादिदेवानां भवनानि संति १. 'वाणमंतरत्ति' आर्षत्वाद्विविधान्यंतराणि निवासस्थानानि गिरिकंदरविवरादीनि येषां ते व्यंतराः २. ज्योतयंतीति ज्योतींषि विमानानि, तन्निवासिनो देवा ज्योतिष्काः ३. विशेषेण मानयंत्युपभुंजंति सुकृतिनो यानीति विमानानि, तेषु भवा वैमानिकाः ४. तथेति समुच्चये. ॥ ६ ॥ तेषामेवोत्तरभेदानाह—

॥ मूलम् ॥—दसहा उ भवणवासी । अट्ठहा वणचारिणो ॥ पंचविहा जोइसिया । दु-

ध्ययनम्

विहा वेमाणिया तहा ॥ ७ ॥ व्याख्या—दशधैव ज्ञवनवासिनः, तुशब्द एवार्थे. अष्टधा व-
नचारिणः, वनेषु क्रीमारसेन चरितुं शीलं येषां ते वनचारिणो व्यंतराः. पंचधाः ज्योतिष्का-
स्तथा वैमानिका द्विधा. ॥ ७ ॥ तानेव नामत आह—
॥ मूलम् ॥—असुरा १ नाग २ सुवन्ना ३ । विज्जू ४ अग्गी य ५ आहिया ॥ दीवो
६ दहि ७ दिसा ८ वाया ए । थणिया १० ज्ञवणवासिणो ॥ ८ ॥ व्याख्या—एते ज्ञुवनवा-
सिनः कुमारशब्दांता उच्यंते. यतो ह्येते कुमारवद्भूषज्ञाषाशस्त्रयानवाहनक्रीरूनानि कुर्वंति.
अत एते सर्वे दशापि कुमारांताः, तद्यथा—असुरकुमारनागकुमारसुवर्णकुमारविद्युत्कुमाराग्नि-
कुमारद्वीपकुमारोदधिकुमारदिक्कुमारवायुकुमारस्तनितकुमाराः. एते नामत आख्याताः ॥
॥ ८ ॥ अथ व्यंतरज्ञेदानां नामान्याह—
॥ मूलम् ॥—पिसाय १ भूया २ जक्खा य ३ । रक्खसा ४ किन्नरा य ५ किंपुरिसा ६
॥ महोरगा ७ गंधव्वा ८ । अठ्ठा वाणमंतरा ॥ ए ॥ व्याख्या—व्यंतरा अष्टविधाः—पिशा-
चाः १, भूताः २, यक्षाः ३, राक्षसाः ४. किन्नराः ५, च किंपुरुषाः ६, महोरगाः ७, गंध-

वाः, एवमष्टप्रकारा व्यंतरा ज्ञेयाः. ॥ ९ ॥ अथ ज्योतिष्काणां भेदान्नामत आह–

॥ मूलम् ॥—चंदसूरा य नक्खत्ता । गहा तारगणा तहा ॥ ठिया विचारिणो चेव । पंचहा जोइसालया ॥१०॥ व्याख्या–ज्योतिरालयाः, ज्योतिरालयो गृहं येषां ते ज्योतिरालया ज्योतिष्का देवाः पंचधा संतीति शेषः. ते ज्योतिष्का देवाः 'ठिया' इति स्थिरा मनुष्यक्षेत्राद्बहिर्ज्योतिष्कास्ते च स्थिरा अचलस्वभावाः, मनुष्यक्षेत्रांतर्वर्तिनो हि मेरुपर्वतस्य नित्यं प्रादक्षिण्यचारिणस्ते पंचधा ज्योतिष्का ज्ञेयाः. ते चामी–चंद्राः १ सूर्याश्च २ नक्षत्राणि ३ ग्रहा ४ स्तारगणाः ५ प्रकीर्णकतारकसमूहास्तथा ज्ञेयाः. ॥ १० ॥ अथ वैमानिकानां भेदानाह–

॥ मूलम् ॥—वेमाणिया उ जे देवा । दुविहा ते वियाहिया ॥ कप्पोवगा य बोधव्वा । कप्पाईया तहेव य ॥ ११ ॥ व्याख्या—तु पुनर्वैमानिका ये देवास्ते द्विविधा व्याख्याताः. कल्पा देवलोकास्तानुपगच्छंतीत्युत्पत्तिविषयतया प्राप्नुवंतीति कल्पोपगा द्वादशदेवलोकस्थाः कल्पोपगाः, च पुनस्तथैव कल्पातीताः, कल्पानतीता इति कल्पातीताः, नवग्रैवेयकपंचानुत्तरविमानस्थाः. एवं वैमानिका द्विप्रकारा ज्ञातव्याः. ॥ ११ ॥ अथ कल्पोपगतानां

नामान्याह—

॥ मूलम् ॥—कप्पोवगा बारसहा । सोहम्मीसाणगा तहा ॥ सणंकुमारमाहिंदा । बंन-लोगा य लांतगा ॥ १२ ॥ महासुक्का सहस्सारो । आणया पाणया तहा ॥ आरणा अच्चु-या चेव । इइ कप्पोवगा सुरा ॥ १३ ॥ युग्मं ॥ व्याख्या—कल्पोपगा द्वादशधाः, सुधर्मानामेन्द्रस्य सन्नाऽस्मिन्नस्तीति सौधर्मः प्रथमकल्पः, एवमीशानो द्वितीयकल्पः, सौधर्मश्चेशानश्च सौधर्मेशानौ, तौ गच्छंति प्राप्नुवंतीति सौधर्मेशानगाः, तथा पुनः सनत्कुमारदेवलोके न्नवाः सनत्कुमाराः, महेंद्रे न्नवा माहेंद्राः, सनत्कुमाराश्च माहेंद्राश्च सनत्कुमारमाहेंद्राः, पुनर्ब्राह्मलोका ब्रह्मलोके न्नवाः, च पुनर्लांतनामानं कल्पं गच्छंतीति प्राप्नुवंतीति लांतगाः ॥ १२ ॥ महाशुक्रे न्नवा महाशुक्राः, सहस्रारे न्नवाः साहस्राराः, आनते न्नवा आनताः, तथा प्राणते न्नवाः प्राणताः, अरुणे न्नवा आरुणाश्च, अच्युते न्नवा अच्युताश्चारणाच्युताः, इत्यमुना प्रकारेण द्वादशविधाः कल्पोपगताः सुरा ज्ञेयाः, ॥ १३ ॥

॥ मूलम् ॥—कप्पाईया य जे देवा । दुविहा ते वियाहिया ॥ गेविज्जाणुत्तरा चेव । गे-

विज्जा नवविहा तहिं ॥ १४ ॥ व्याख्या—च पुनस्ते कल्पातीता देवास्ते द्विविधा व्याख्याताः, ग्रैवेयका अनुत्तराश्च. तत्र ग्रैवेयका नवविधाः. तत्र ग्रीवा लोकपुरुषस्य त्रयोदशरज्ज्वात्मकस्थानीयप्रदेशः, तत्र ग्रीवायामतीवशोभाकरणहेतव आभरणभूता ग्रैवेया देवावासाः, तत्र नवा देवा ग्रैवेयकास्ते नवप्रकारा ज्ञेयाः. ॥ १४ ॥ तेषां ग्रैवेयाणां नामानि—

॥ मूलम् ॥—हिट्ठिमाहिट्ठिमा चेव । हिट्ठिमामज्झिमा तहा ॥ हिट्ठिमोवरिमा चेव । मज्झिमाहिट्ठिमा तहा ॥ १५ ॥ मज्झिमामज्झिमा चेव । मज्झिमोवरिमा तहा ॥ उवरिमाहिट्ठिमा चेव । उवरिमामज्झिमा तहा ॥ १६ ॥ युग्मं ॥ व्याख्या—उपरितनषट्कापेक्षया प्रथमेष्वधस्तना अधस्तनाः, चेव पदपूरणे, प्रथमग्रैवेयकदेवाः १. अधस्तनाश्च मध्यमाश्चाधस्तनामध्यमा द्वितीयग्रैवेयकदेवाः २. तथाधस्तनोपरितनास्तृतीयग्रैवेयकदेवाः ३. तथा मध्यमाधस्तना मध्यस्थत्रिकापेक्षयाऽधस्तना मध्यमाधस्तनाश्चतुर्थग्रैवेयकदेवाः ४. ॥ १५ ॥ च पुनर्मध्यममध्यमा मध्यमस्थत्रिकापेक्षया मध्यमा मध्यममध्यमाः पंचमग्रैवेयकदेवाः ५. तथा मध्यमोपरितना मध्यमत्रिकापेक्षयोपरितना मध्यमोपरितनाः षष्ठग्रैवेयकदेवाः ६. पुनरुपरि-

तनाधस्तनाः, उपरिस्थत्रिकापेक्षयाऽधस्तना उपरितनाधस्तनाः सप्तमग्रैवेयकदेवाः ७. तथो-परिमध्यमाः, उपरितनत्रिकापेक्षया मध्यमा मध्यस्था उपरितनमध्यमा अष्टमग्रैवेयकदेवाः ८. ॥ १६ ॥ अथ नवग्रैवेयकदेवानां नामोच्यते—

॥ मूलम् ॥—उवरिमाउवरिमा चेव । इइ गेविज्जगा सुरा ॥ व्याख्या—च पुनरुपरिमो परिमा उपरिस्थत्रिकापेक्षयोपरिमा उपरिमोपरिमा नवमग्रैवेयकदेवा इत्यमुना प्रकारेण नवग्रैवयकाः सुरा व्याख्याताः. अथानुत्तरविमानान्याह—

॥ मूलम् ॥—विजया वैजयंता य । जयंता अपराजिता ॥ १७ ॥ सव्वट्ठसिद्धिगा चेव । पंचहाणुत्तरा सुरा ॥ इइ वेमाणिया एए–णेगहा एवमाईउ ॥ १८ ॥ व्याख्या—विजया विजयविमानवासिनः, विजयंते समस्तविघ्नहेतूनिति विजया इति व्युत्पत्तिः. तथा वैजयंताः, एवं जयंतास्तथाऽपराजिताः, अपरैरन्यैरभ्युदयविघ्नहेतुभिः शत्रुभिरजिता अपराजिताः. पुनः सर्वार्थसिद्धकाः, सर्वेऽर्थाः सिद्धा इव सिद्धा येषां ते सर्वार्थसिद्धाः, सर्वार्थसिद्धा एव सर्वार्थसिद्धकाः इत्यमुना प्रकारेणैते पंचधा अनुत्तरदेवाः. एवमादिका व्याख्याता द्वा-

दशदेवलोकभवा नवग्रैवेयकभवाः पंचानुत्तरभवाः सुरा एवमादयो ज्ञेयाः. चतुरशीतिलक्षाणि सप्तनवतिसहस्राणि तथा त्रयोविंशतिरेतत्प्रमाणं, सर्वविमानापेक्षयाऽनेकविधा आख्याताः.

॥ मूलम् ॥—लोगस्स एगदेसंमि । ते सव्वे परिकित्तिया ॥ इत्तो कालविभागं तु । तेसिं वुच्छं चउव्विहं ॥ १९ ॥ व्याख्या—ते सर्वे देवा लोकस्यैकदेशे परिकीर्तिताः. इतोऽनंतरं कालविभागं तु तेषां देवानां चतुर्विधं वक्ष्ये. ॥ १९ ॥

॥ मूलम् ॥—संतइं पप्पणाईया । अपज्जवसियावि य ॥ ठिइं पडुच्च साईया । सपज्जवसियावि य ॥ २० ॥ व्याख्या—संततिं प्राप्य ते देवा अनाद्योऽपर्यवसिता अपि. स्थितिं कायस्थितिं प्रतीत्य सादयः सपर्यवसिताश्चापि वर्तन्ते. ॥ २० ॥

॥ मूलम् ॥—साहियं सागरं इक्कं । उक्कोसेण ठिई भवे ॥ भोमिज्जाणं जहन्नेणं । दसवाससहस्सिया ॥ २१ ॥ व्याख्या—' भोमिज्जाणं ' इति भवनपतीनां देवानामुत्कृष्टेनायुःस्थितिः साधिकं सागरोपमं वर्तते. जघन्येन दशवर्षसहस्रिका स्थितिर्व्याख्याता. ॥ २१ ॥

॥ मूलम् ॥—पलिओवममेगं तु । उक्कोसेण ठिई भवे ॥ वंतराणं जहन्नेणं । दसवास-

सहस्सिया ॥ २२ ॥ व्याख्या—व्यंतराणामुत्कृष्टेनैकं पल्योपममायुःस्थितिर्नवेत्. तु पुनर्व्यंतराणां जघन्येन दशवर्षसहस्रिका नवेत्. ॥ २२ ॥

॥ मूलम् ॥—पलिउंवमं तु एगं । वासलक्केण साहियं ॥ पलिउंवमठ्ठनागो । जोइसेसु जहन्निया ॥ २३ ॥ व्याख्या—ज्योतिष्काणां चंद्रार्काणां देवानामेकं पल्योपमं वर्षलक्षेण साधिकमुत्कृष्टायुःस्थितिर्व्याख्याता. पुनर्जघन्यिकायुःस्थितिः पल्योपमस्याष्टमो नागो नवति. ॥

॥ मूलम् ॥—दो चेव सागराइं । उक्कोसेण ठिई नवे ॥ सोहम्मंमि जहन्नेणं । एगं च पलिउंवमं ॥ २४ ॥ व्याख्या—सौधर्मदेवलोके द्वे सागरोपमे उत्कृष्टायुःस्थितिः, जघन्येनैकं पल्योपममायुःस्थितिर्ज्ञेया. ॥ २४ ॥

॥ मूलम् ॥—सागरा साहिया दुन्नि । उक्कोसेण ठिई नवे ॥ ईसाणंमि जहन्नेणं । साहियं पलिउंवमं ॥ २५ ॥ व्याख्या—ईशाने ईशानदेवलोके उत्कृष्टेन द्वे सागरोपमे साधिके आयुःस्थितिर्नवेत्. जघन्यतस्तु तत्रायुःस्थितिः साधिकं पल्योपममस्ति. ॥ २५ ॥

॥ मूलम् ॥—सागराणि य सत्तेव । उक्कोसेण ठिई नवे ॥ सणंकुमारे जहन्नेणं । दु-

ठिर्इ सागरोवमा ॥ २६ ॥ व्याख्या—सनत्कुमारे उत्कृष्टेन सप्तैव सागरोपमाण्यायुःस्थितिर्भवेत्. जघन्येन द्वे सागरोपमे आयुःस्थितिः. ॥ २६ ॥

॥ मूलम् ॥—साहिया सागरा सत्त । उक्कोसेण ठिई भवे ॥ माहिंदंमि जहन्नेणं । साहिया दुन्नि सागरा ॥ २७ ॥ व्याख्या—माहिंद्रे देवलोके साधिकानि सप्तसागरोपमाण्युत्कृष्टेनायुःस्थितिर्भवेत्. जघन्येन साधिके द्वे सागरोपमे आयुःस्थितिः. ॥ २७ ॥

॥ मूलम् ॥—दसेव य सागराउ । उक्कोसेण ठिई भवे ॥ बंभलोगे जहन्नेणं । सत्तउ सागरोवमा ॥ २८ ॥ व्याख्या—ब्रह्मदेवलोके दशसागरोपमाण्युत्कृष्टेनायुःस्थितिर्भवेत्. जघन्येन सप्तसागरोपमाणि स्थितिर्भवेत्. ॥ २८ ॥

॥ मूलम् ॥—चउद्दससागराइं । उक्कोसेण ठिई भवे ॥ लंतगंमि जहन्नेणं । दस उ सागरोवमा ॥ २९ ॥ व्याख्या—लांतकदेवलोके उत्कृष्टेन चतुर्दशसागरोपमाण्यायुःस्थितिर्भवेत्. जघन्यतो दशसागरोपमाण्यायुःस्थितिर्भवेत्. ॥ २९ ॥

॥ मूलम् ॥—सत्तरससागराइं । उक्कोसेण ठिई भवे ॥ महासुक्के जहन्नेणं । चउद्दस

सागरोवमा ॥ ३० ॥ व्याख्या–महाशुक्रे देवलोके उत्कृष्टेन सप्तदश सागरोपमाण्यायुःस्थितिः, जघन्येन चतुर्दशसागरोपमाण्यायुःस्थितिर्भवेत्. ॥ ३० ॥

॥ मूलम् ॥—अट्ठारससागराइं । उक्कोसेण ठिई भवे ॥ सहस्सारे जहन्नेणं । सत्तरससागरोवमा ॥ ३१ ॥ व्याख्या–सहस्रारे देवलोकेऽष्टादशसागरोपमाण्युत्कृष्टायुःस्थितिर्भवेत्. जघन्यतः सप्तदश सागरोपमाण्यायुःस्थितिर्भवेत्. ॥ ३१ ॥

॥ मूलम् ॥–सागरा अउणवीसं तु । उक्कोसेण ठिई भवे ॥ आणयंमि जहन्नेणं । अट्ठारस सागरोवमा ॥ ३२ ॥ व्याख्या–आनते देवलोके एकोनविंशतिसागरोपमाण्युत्कृष्टेनायुःस्थितिर्भवेत्. तथा जघन्येनाष्टादशसागरोपमाण्यायुःस्थितिर्भवेत्. ॥ ३२ ॥

॥ मूलम् ॥—वीसं तु सागराइं । उक्कोसेण ठिई भवे ॥ पाणयंमि जहन्नेणं । सागरा अउणवीसई ॥ ३३ ॥ व्याख्या—प्राणतदेवलोके उत्कृष्टेन विंशतिसागरोपमाण्यायुःस्थितिर्भवेत्. तथा जघन्येनैकोनविंशतिः सागरोपमाण्यायुःस्थितिर्भवेत्. ॥ ३३ ॥

॥ मूलम् ॥–सागरा इक्कवीसं तु । । उक्कोसेण ठिई भवे ॥ आरणंमि जहन्नेणं । वीसाउ

सागरोवमा ॥ ३४ ॥ व्याख्या—आरणे देवलोके एकविंशतिसागरोपमाण्युत्कृष्टायुःस्थितिः, जघन्येन तु विंशतिसागरोपमाण्यायुःस्थितिर्भवेत्. ॥ ३४ ॥

॥ मूलम् ॥-बावीससागराइं । उक्कोसेण ठिई भवे ॥ अच्चुयंमि जहन्नेणं । सागरा इक्कवीसई ॥ ३५ ॥ व्याख्या—अच्युते देवलोके द्वाविंशतिसागरोपमाण्युत्कृष्टायुःस्थितिर्भवेत्. जघन्यतस्त्वेकविंशतिसागरोपमाण्यायुःस्थितिर्भवेत्. ॥ ३५ ॥

॥ मूलम् ॥—तेवीससागराइं । उक्कोसेण ठिई भवे ॥ पढमंमि जहन्नेणं । बावीसं सागरोवमा ॥ ३६ ॥ व्याख्या—अथ नवग्रैवेयकाणामायुःस्थितिरुच्यते—त्रयोविंशतिसागरोपमाणि प्रथमग्रैवेयके उत्कृष्टायुःस्थितिर्भवेत्. जघन्येन द्वाविंशतिसागरोपमाणि. ॥ ३६ ॥

॥ मूलम् ॥—चउवीससागराइं । उक्कोसेण ठिई भवे ॥ बिइयंमि जहन्नेणं । तेवीसं सागरोवमा ॥ ३७ ॥ व्याख्या-द्वितीयग्रैवेयके चतुर्विंशतिसागरोपमाण्युत्कृष्टायुःस्थितिर्भवेत्. जघन्येन त्रयोविंशतिसागरोपमाणि. ॥ ३७ ॥

॥ मूलम् ॥-पणवीसं सागराइं । उक्कोसेण ठिई भवे ॥ तइयंमि जहन्नेणं । चउवीसं

सागरोवमा ॥ ३७ ॥ व्याख्या–तृतीये ग्रैवेयके पंचविंशतिसागरोपमाएयुत्कृष्टायुःस्थितिर्भवेत्. जघन्येन तु चतुर्विंशतिसागरोपमाणि. ॥ ३७ ॥

॥ मूलम् ॥–छवीससागराइं । उक्कोसेण ठिई नवे ॥ चउत्थंमि जहन्नेणं । सागरा पणवीसइ ॥ ३९ ॥ व्याख्या–चतुर्थे ग्रैवेयके षड्विंशतिसागरोपमाएयुत्कृष्टायुःस्थितिः. जघन्येन पंचविंशतिसागरोपमाणि. ॥ ३९ ॥

॥ मूलम् ॥–सागरा सत्तवीसं तु । उक्कोसेण ठिई नवे ॥ पंचमंमि जहन्नेणं । सागरा सत्तवीसई ॥ ४० ॥ व्याख्या–पंचमे ग्रैवेयके सप्तविंशतिसागरोपमाण्युत्कृष्टायुःस्थितिः, जघन्येन षड्विंशतिसागरोपमाणि. ॥ ४० ॥

॥ मूलम् ॥—सागरा अठवीसं तु । उक्कोसेण ठिई नवे ॥ छठंमि य जहन्नेणं । सागरा सत्तवीसइ ॥ ४१ ॥ व्याख्या–षष्ठे ग्रैवेयके उत्कृष्टेनाष्टाविंशतिसागरोपमाण्यायुःस्थितिः, जघन्येन सप्तविंशतिसागरोपमाणि. ॥ ४१ ॥

॥ मूलम् ॥—सागरा अउणतीसं तु । उक्कोसेण ठिई नवे ॥ सत्तमंमि जहन्नेणं । सा-

गरा अट्ठवीसई ॥ ४२ ॥ व्याख्या—सप्तमे ग्रैवेयके उत्कृष्टैकोनत्रिंशत्सागरोपमाण्यायुःस्थितिर्भवेत्, जघन्यतोऽष्टाविंशतिसागरोपमाणि. ॥ ४२ ॥

॥ मूलम् ॥—तीसं तु सागराइं । उक्कोसेण ठिई भवे ॥ अट्ठमंमि जहन्नेणं । सागरा अउणतीसई ॥ ४३ ॥ व्याख्या—अष्टमे ग्रैवेयके त्रिंशत्सागरोपमाण्युत्कृष्टायुः स्थितिर्भवेत्, जघन्यतस्त्वेकोनत्रिंशत्सागरोपमाणि. ॥ ४३ ॥

॥ मूलम् ॥—सागरा इक्कतीसं तु । उक्कोसेण ठिई भवे ॥ नवमंमि जहन्नेणं । तीसई सागरोवमा ॥ ४४ ॥ व्याख्या—नवमे ग्रैवेयके एकत्रिंशत्सागरोपमाण्युत्कृष्टायुःस्थितिर्भवेत्, जघन्यतस्तु त्रिंशत्सागरोपमाणि. ॥ ४४ ॥ अथ पंचानुत्तराणामायुःस्थितिमाह—

॥ मूलम् ॥ तित्तीससागराइं उक्कोसेण ठिई भवे ॥ चउसुवि विजयाईसु । जहन्नेणेक्कतीसई ॥ ४५ ॥ व्याख्या—चतुर्ष्वपि विजयवैजयंतजयंतापराजितेषु विमानेषूत्कृष्टेन त्रयस्त्रिंशत्सागरोपमाण्यायुःस्थितिर्भवेत्. जघन्येनैकत्रिंशत्सागरोपमाणि. ॥ ४५ ॥

॥ मूलम् ॥—अजहन्नमणुक्कोसं । तित्तीसं सागरोवमा ॥ महाविमाणे सव्वट्ठे । ठिई ए-

सा वियाहिया ॥ ४६ ॥ व्याख्या-सर्वार्थे इति सर्वार्थसिद्धे महाविमानेऽजघन्यं तथाऽनुत्कृष्टं यथास्यात्तथा त्रयस्त्रिंशत्सागरोपमाण्यायुःस्थितिर्भवेत्. न विद्यते जघन्या यत्र तदजघन्यं, न विद्यते उत्कृष्टा यत्र तदनुत्कृष्टं, अर्थाज्जघन्यापि नास्ति, उत्कृष्टापि नास्ति. एकैव त्रयस्त्रिंशत्सागरोपमरूपैषायुःस्थितिर्व्याख्याता. ॥ ४६ ॥ अथ देवानां कायस्थितिमाह–

॥ मूलम् ॥—जा चेव आउठिई । देवाणं तु वियाहिया ॥ सा तेसिं कायठिई । जहन्नुक्कोसिया भवे ॥ ४७ ॥ व्याख्या–या चैव देवानां चतुर्विधानामप्यायुःस्थितिर्जघन्योत्कृष्टा व्याख्याता, सैव कायस्थितिर्भवेत्. यतो हि देवा मृत्वा देवा न भवंति. ॥ ४७ ॥ अथ कालांतरमाह—

॥ मूलम् ॥–अणंतकालमुक्कोसं । अंतोमुहुत्तं जहन्नयं ॥ विजढंमि सए काए । देवाणं हुज्ज अंतरं ॥ ४८ ॥ व्याख्या–देवानां स्वकीये काये त्यक्ते सति वनस्पतिकाये व्रजति, तदोत्कृष्टमंतरमनंतकालं भवेत्. जघन्यतोंतरमंतर्मुहूर्तं भवेत्. ॥ ४८ ॥

॥ मूलम् ॥–अणंतकालमुक्कोसं । वासपुहत्तं जहन्नयं ॥ आणयाईणदेवाणं । गेविज्जाणं

तु अंतरं ॥ ४९ ॥ व्याख्या—आनतादीनां नवमदेवलोकादीनां तु पुनर्ग्रैवेयकाणां नवानां, उपलक्षणत्वात्तत्र वासिनां देवानां स्वस्थानाच्च्युत्वाऽन्यत्र संसारे निगोदे समुत्पन्नानां, पश्चात्पुनः स्वस्थाने आगच्छतामुत्कृष्टं चेत्कालांतरं भवेत्, तदानंतकालांतरं भवेत्. जघन्यं चेदंतरं भवेत्तदा वर्षपृथक्त्वं नववर्षाणि यावद्भवतीत्यर्थः. ॥ ४९ ॥

॥ मूलम् ॥—संखेज्जसागरुक्कोसं । वासपुहुत्तं जहन्नयं ॥ अणुत्तराण य देवाणं । अंतरं तु वियाहियं ॥ ५० ॥ व्याख्या—अनुत्तराणां देवानां च्यवनं भूत्वा पुनश्चेत्तत्रैवोत्पत्तिः स्यात्तदा कियदंतरं भवेत्तदाह—उत्कृष्टं तु संख्येयसागरोपमाण्यंतरं व्याख्यातं, जघन्यं तु वर्षपृथक्त्वं. नववर्षाणि यावत्. ॥ ५० ॥

॥ मूलम् ॥—एएसिं वन्नओ चेव । गंधओ रसफासओ ॥ संठाणादेसओवावि । विहाणाइं सहस्ससो ॥ ५१ ॥ व्याख्या—एतेषां देवानां चतुर्निकायानां वर्णतो गंधतो रसतः स्पर्शतः संस्थानादेशतश्चापि सहस्रशो विधानानि भवंति, अनेके भेदा भवंति. ॥ ५१ ॥

॥ मूलम् ॥—संसारत्था य सिद्धा य । इइ जीवा वियाहिया ॥ रूविणो चेवरूवी य ।

अजीवा दुविहावि य ॥ ५२ ॥ व्याख्या–अथ निगमयितुमाह–संसारस्थाश्च जीवाः सिद्धाश्च जीवा इत्यमुना प्रकारेण व्याख्याताः. च पुना रूपिणोऽरूपिणोऽजीवाश्च व्याख्याता द्विविधा अपि कथिताः. ॥ ५२ ॥ अथोपदेशमाह–

॥ मूलम् ॥—इइ जीवमजीवे य । सुच्चा सद्दहिऊण य ॥ सव्वनयाणमणुमए । रमिज्जा संजमे मुणी ॥ ५३ ॥ व्याख्या–मुनिः साधुरेवममुना प्रकारेण जीवाजीवान् गुरोर्मुखात् श्रुत्वा, पुनः श्रद्धाय संयमे सप्तदशविधे रमेद्रतिं कुर्यात. कीदृशे संयमे? सर्वनयानामनुमते, सर्वे च ते नयाश्च सर्वनया नैगमादयः सप्तनयाः, तेषां सर्वनयानां ज्ञानक्रियांतर्गतानामनुमतेऽभिप्रेते, ज्ञानसहितसम्यक्चारित्ररूपे. ॥ ५३ ॥

॥ मूलम् ॥–तओ बहूणि वासाणि । सामन्नमणुपालिया ॥ इमेण कम्मजोएण । अप्पाणं संलिहे मुणी ॥ ५४ ॥ व्याख्या–ततश्चारित्रे रमणानंतरं बहूनि वर्षाणि श्रामण्यमनुपाल्य मुनिरनेन क्रमयोगेनात्मानं संलिखेत्, द्रव्यतो भावतश्च कृशीकुर्यात्. ॥५४॥ संप्रति संलेखनापूर्वकं क्रमयोगमाह–

॥ मूलम् ॥—बारसेव उ वासाइं । संलेहुक्कोसिया नवे ॥ संवछरमज्झिमिया । छम्मासा य जहन्निया ॥ ५५ ॥ पढमे वासचउक्कंमि । विगईनिज्जूहणं करे ॥ बीए वासचउक्कंमि । विचित्तं तु तवं चरे ॥ ५६ ॥ एगंतरमायामं । कट्टु संवछरे दुवे ॥ तउ संवछरद्धं तु । नाइविगिट्ठं तवं चरे ॥ ५७ ॥ तउ संवछरद्धं तु । विगिठं तु तवं चरे ॥ परिमियं चेव आयामं । तंमि संवछरे करे ॥ ५८ ॥ कोडीसहियमायामं । कट्टु संवछरे मुणी ॥ मासद्धमासिएणं तु । आहारेणं तवं चरे ॥ ५९ ॥ एतासां गाथानां व्याख्या—द्वादशैव वर्षाण्युत्कृष्टा संलेखना भवेत्, संलेखनं द्रव्यतो भावतश्च कृशत्वकरणं. संलेखना द्रव्यतः शरीरस्य कृशीकरणं, भावतश्च कषायाणां कृशीकरणं. संवत्सरमेकवर्षं मध्यमिका संलेखना भवेत्, जघन्यिका संलेखना षण्मासी भवेत्. ॥ ५५ ॥ संलेखनायास्त्रैविध्येऽनुक्रममाह—प्रथमे आद्ये वर्षचतुष्के विकृतिनिर्यूहनं, विकृतीनां पंचानां त्यागमाचाम्लनिर्विकृत्यादितपः कुर्यादित्यर्थः. द्वितीये वर्षचतुष्के विचित्रमेव चतुर्थषष्ठाष्टमादिरूपं तपश्चरेत् ॥ ५६ ॥ ततो द्वौ संवत्सरौ यावदेकेन चतुर्थलक्षणेन तपसांतरं व्यवधानं यस्मिंस्तदेकांतरमायाममाचाम्लं कृत्वा तपश्चरे-

त्. ततस्तदनंतरं संवत्सरार्धं यावन्मासषट्कं यावदतिविकृष्टमष्टमद्वादशादितपोनाचरेन्न सेवेत. ॥ ५७ ॥ ततस्तु संवत्सरार्धं मासषट्कं तु विकृष्टं षष्टाष्टमादितप आचरेत्. परं तत्रायं विशेषः—परिमितमेव स्तोकमेवाचाम्लं तपस्तस्मिन् संवत्सरे कुर्यात्. कोऽर्थः ? पूर्वस्मिन् संवत्सरार्धेऽस्मिन् संवत्सरार्धे च, एवमेकादशे संवत्सरे चतुर्थषष्टाष्टमद्वादशादीनां पारणे आचाम्लं विदध्यादित्यर्थः. ततः कोटीसहितं तपः स्यात्. ॥ ५८ ॥ इत्थमेकादशसु वर्षेषु व्यतीतेषु द्वादशवर्षे यत्कुर्यात्तदाह—कोटीभ्यां प्रत्याख्यानस्याद्यंताभ्यां सहितं तपो द्वादशे संवत्सरे मुनिः कुर्यात्. कोऽर्थः ? विवक्षितदिने प्रभातसमये आचाम्लप्रत्याख्यानं कृत्वा पुनर्द्वितीयदिने तपोंतरं विधाय तस्यांते पुनराचाम्लमिति कोटीसहितमुच्यते ( कोटावग्रभागे प्रत्याख्यानाद्यंतकोणरूपे सहिते मिलिते यस्मिंस्तत्कोटीसहितं. कोऽर्थः ? विवक्षितदिने प्रातराचाम्लं प्रत्याख्याय, तच्चाहोरात्रं प्रतिपाल्य पुनर्द्वितीयेऽह्नि आचाम्लमेव प्रत्याचष्टे, ततो द्वितीयस्यारंभकोटिः, आद्यस्य तु पर्यंतकोटिः, उभे अपि मिलिते भवतः, इति तत्कोटीसहितमुच्यते इत्यन्ये.) इत्यनेन द्वादशवर्षाणि तपः कुर्यात्. तु पुनः पश्चान्मासिकेन, तु पुन-

र्धमासिकेनाहारेण, अर्थान्मासक्षपणप्रत्याख्यानेन, तथार्धमासक्षपणेनाहारेणेत्याहारानादरणेन तपः प्रस्तावाद्भक्तपरिज्ञयाऽनशनरूपं तपश्चरेत्. एतद्विस्तरस्तु निशीथचूर्णितोऽवसेयः. ॥ ८९ ॥ अंगीकृतानशनस्याऽशुभभावनापरिहारः कर्तव्यः, अतोऽशुभभावनाज्ञापनार्थमाह—

॥ मूलम् ॥—कंदप्पमाभिओगं । किव्विसियं मोहमासुरत्तं च ॥ एयाओ दुग्गईओ । मरणंमि विराहिया हुंति ॥ ९० ॥ व्याख्या—एताः पंच भावना विराधिकाः सम्यग्दर्शनचारित्रादीनां भंगकराः सत्यो मरणांते मरणसमये दुर्गतयो दुर्गतिकारणत्वाद् दुर्गतयो भवंति. कारणे कार्योपचारः. एताः का भावनाः? कंदर्प इति कंदर्पभावना, पदैकदेशे पदसमुदायोपचारात्, एवमभियोग्यभावना, किल्बिषिभावना, मोहभावना, असुरत्वभावना, दुर्गतिश्चात्र, अर्थाद् देवदुर्गतिः स्यात्. तद्वशाद्व्यवहारेण चारित्रे सत्यपि तादृग्देवनिकायोत्पत्तौ चारित्रभावेन नानागतिभाक्त्वं स्यात्. यदुक्तं-यः संशयमपि कुर्या—देतासु भावनासु मनुजस्तु ॥ ॥ स च गच्छेत् सुरयोनौ । यत्र हि चारित्रहीनत्वं ॥ १ ॥ मरण समये यादृशी मतिस्तादृशी गतिः स्यादिति दर्शितं. मरणसमये यद्येता भावना न स्युस्तदा सुगतिः स्यादित्यर्थः. ॥ ९० ॥

॥ मूलम् ॥—मिछादंसणरत्ता । सनियाणा हु हिंसगा ॥ इइ जे मरंति जीवा । तेसिं पुण दुल्लहा बोही ॥ ६१ ॥ व्याख्या—इत्यमुना प्रकारेण ये जीवा म्रियंते, तेषां जीवानां पुनर्जन्मांतरे बोधिर्जैनधर्मरुचिर्दुर्लभा दुःप्रापा भवेत्. इतीति किं? ये जीवा मिथ्यादर्शनरक्ताः, अतत्वे तत्वाभिनिवेशरूपं मिथ्यादर्शनं, तत्र रक्ता मिथ्यादर्शनरक्ताः, तादृशाः संतो म्रियंते, पुनर्ये जीवाः सनिदानाः, निदानेन विषयाद्याशया सह वर्तंते इति सनिदानास्तादृशाः संतो म्रियंते, तथा हु इति निश्चयेन ये जीवा हिंसका जीवहिंसाकारिणः संतो म्रियंते, तादृशानां भवांतरे जिनधर्मप्राप्तिर्दुर्लभा स्यादित्यर्थः. ॥ ६१ ॥

॥ मूलम् ॥—समदंसणरत्ता । अनियाणा सुक्कले समोगाढा ॥ इइ जे मरंति जीवा । सुलहा तेसिं भवे बोही ॥ ६२ ॥ व्याख्या—इत्यमुना प्रकारेण ये जीवा म्रियंते, तेषां जीवानां बोधिर्जैनधर्मप्राप्तिर्भवांतरे सुलभा भवेत्. इतीति किं? ये जीवाः सम्यग्दर्शनरक्ताः, देवतत्वगुरुतत्वधर्मतत्वरक्ताः. एतादृशाः संतो म्रियंते, तथा पुनर्ये जीवा अनिदाना निदानरहिताः संतो म्रियंते, पुनर्ये जीवाः शुक्ललेश्यामवगाढाः शुक्ललेश्यां प्रविष्टाः शुद्धपरिणामाः



३६

संतो म्रियंते. तेषां बोधिर्नवांतरे सुलना नवेदित्यर्थः. ॥ ६२ ॥

॥ मूलम् ॥—मिच्छादंसणरत्ता । सनियाणा किण्हलेसमोगाढा ॥ इइ जे मरंति जीवा । तेसिं पुण दुल्लहा बोही ॥ ६३ ॥ व्याख्या— इत्यमुना प्रकारेण ये म्रियंते, तेषां पुनर्जन्मांतरे बोधिर्दुर्लना नवेत्. इतीति किं? कृष्णलेश्यामवगाढाः कृष्णलेश्यां प्रविष्टाः संतो मिथ्यादर्शनरक्ताः. पुनः सनिदानाः, एतादृशाः संतो म्रियंते, तेषां जिनधर्मप्राप्तिर्दुर्लना भवेत्. अत्र ' मिच्छादंसणरत्ता ' इति गाथां पूर्वमुक्त्वा पुनरपि मिथ्यादर्शनरक्तेति गाथोक्तास्ति, तत्र न पुनरुक्तिदूषणं न ज्ञेयं. अत्र गाथायां कृष्णलेश्यावतां म्रियमाणानां नवसंततावपि बोधिप्राप्तेरनाव इति सूचितं. पूर्वगाथायां तु कृष्णलेश्यारहितानां मृतानां तु मरणानंतरमपरे जन्मनि बोधिदुर्लनत्वं दर्शितं, इति न पुनरुक्तिदूषणं. ॥ ६३ ॥

॥ मूलम् ॥—जिणवयणे अणुरत्ता । जिणवयणं जे करंति नावेण ॥ अमला असंकिलिट्ठा । ते हुंति परित्तसंसारी ॥ ६४ ॥ व्याख्या—ते जीवाः परित्तसंसारिणो नवंति,, प्राकृतत्वाद्बहुवचनस्थाने एकवचनं. परीतः खंडितः संसारः परीतसंसारः, परीतसंसारो विद्यते



35

येषां ते परीतसंसारिण इति भिन्नसंसारिणः स्युरित्यर्थः. ते इति के? ये जीवा जिनवचनेऽर्हद्वाक्येऽनुरक्ताः संतो भावेन जिनवचनं कुर्वंति, इत्यनेन मनोवाक्कायैर्जिनधर्ममाराधयंति. पुनः कीदृशास्ते? अमला मिथ्यामलरहिताः, पुनः कीदृशाः? असंक्लिष्टा मोहमत्सरादिक्लेशरहिताः, एतादृशा जीवाः संसारपारं कृत्वा मोक्षं व्रजंतीत्यर्थः. ॥ ६४ ॥

॥ मूलम् ॥—बालमरणाणि बहुसो । अकाममरणाणि चेव बहुयाणि ॥ मरिहंति ते वराया । जिणवयणं जे न याणंति ॥ ६५ ॥ व्याख्या—ये मनुष्या जिनवचनं न जानंति, ज्ञानक्रियाभ्यां मोक्ष इत्यर्हद्वाक्यं न श्रद्दधंति ते मनुष्या बहुशो वारंवारं वराका दयाभाजनं संतो 'बालमरणानि' इति प्राकृतत्वात्तृतीयाबहुवचनस्थाने द्वितीयाबहुवचनं, बालमरणैरुद्बंधनविषभक्षणादिमरणैस्तथाऽकाममरणैश्चेच्छां विना क्षुधातृषाशीतातपादिमरणैर्मरिष्यंति. तस्माद्भावेन जिनवचनं श्रद्धेयं, भावस्त्वालोचनया स्यात्, आलोचना त्वालोचनार्हाणां देया, आलोचनायोग्यास्त्वेतैर्हेतुभिः स्युस्तान् हेतुनाह. ॥ ६५ ॥

॥ मूलम् ॥—बहुआगमविन्नाणा । समाहिउप्पायगा य गुणगाही ॥ एएण कारणेणं ।

अरिहा आलोयणं सोउं ॥ ६६ ॥ व्याख्या—एतैः कारणैर्जना आलोचनां श्रोतुमर्हा भवंति. तानि कानि कारणानि? बह्वागमविज्ञानत्वसमाध्युत्पादनत्वगुणग्राहित्वादीन्यालोचनाश्रवणार्हत्वकारणानि ज्ञेयानि. गुणगुणिनोरभेदविवक्षयेमान्येव कारणान्यालोचनाश्रवणार्हाणां विशेषणत्वेन प्रतिपादयति. ते नरा आलोचनां श्रोतुमर्हा भवंति. ते इति के? ये बह्वागमविज्ञानाः, बहुः सूत्रार्थाभ्यां विस्तारो विपुल आगमो बह्वागमस्तस्य विशिष्टं ज्ञानं येषां ते बह्वागमविज्ञाना भवंति. च पुनर्ये मुनयः समाध्युत्पादकाः, समाधिं देशकालयोग्यैर्मधुरवचनैरन्यस्य स्वास्थ्यमुत्पादयंतीति समाध्युत्पादका भवंति, च पुनर्ये गुणग्राहिणो भवेयुः. परदूषणोद्घाटका न स्युस्ते आलोचनाश्रवणार्हा भवेयुरिति भावः. ॥ ६६ ॥ अथ कंदर्पादिभावनानां वत्परिहार्यत्वमुक्तं, अतस्ताभ्यामेव स्वरूपमाह—

॥ मूलम् ॥—कंदप्पकुक्कुयाइं । तह सीलसहावहासविगहाहिं ॥ विम्हावितोय परं । कंदप्पं भावणं कुणइ ॥ ६७ ॥ व्याख्या—नरः कंदर्पकौकुच्ये कुर्वन्. तथा शीलस्वभावहास्यविकथादिभिः परमन्यं विस्मापयन् कंदर्पभावनां करोति. कंदर्पश्च कौकुच्यं च कंदर्पकौकुच्ये,

ते कंदर्पकौकुच्ये, तत्र कंदर्पोऽट्टाहास्यादिपूर्वं वक्रत्वेन जल्पनं, कौकुच्यं कायदुश्चेष्टितं वाग्दुश्चेष्टितं च, एते उभे कुर्वन् जीवः कंदर्पभावनां जनयति. तथा शीलस्वभावस्य हास्यं शीलस्वभावहास्यं, शीलस्वभावहास्यं च विकथाश्च शीलस्वभावहास्यविकथाः, ताभिरन्यं साश्चर्यं कुर्वन् कंदर्पभावनां जनयति. ॥ ६७ ॥

॥ मूलम् ॥—मंताजोगं काउं। भूयकम्मं च जे पउंजंति ॥ सायरस्स इड्ढिहेउं। अभिओगं भावणं कुणइ ॥ ६८ ॥ व्याख्या—यः पुरुषः सातरसर्द्धिहेतवे मंत्रायोगं कृत्वा, मंत्रं च आयोगश्च मंत्रायोगं, मंत्रं ओंकारादिस्वाहांतं, आयोग औषधीमीलनं, अथवा मंत्राणामायोगः साधनं मंत्रायोगस्तं कृत्वा, तथा भूत्या भस्मना मृत्तिकया सूत्रेण वा यत्कर्म तद्भूतिकर्म, मनुष्याणां तिरश्चां गृहाणां वा रक्षार्थं कौतुकादिकरणं भूतिकर्म, एतानि सुखार्थं सरसाहारार्थं वस्त्रादिप्राप्त्यर्थं यः साधुः कुर्यात्, स आभियोगिकीं भावनां करोति, आभियोगिकीभावनां चोत्पाद्य स आभियोगिदेवत्वेन मृत्वोत्पद्यते इत्यर्थः. आभियोगदेवा हि देवानामाज्ञाकारिणः किंकरप्राया दासप्रायाश्च. ॥ ६८ ॥

३६

॥ मूलम् ॥—नाणस्स केवलीणं । धम्मायरिया य संघसाहूणं ॥ माई अवन्नवाई । किव्विसियं भावणं कुणइ ॥ ६९ ॥ व्याख्या-स पुरुषः किल्विषीं भावनां कुरुते, किल्विषदेवयोनित्वदायिकां भावनामुत्पादयति. स कः ? यः पुरुषो ज्ञानस्य श्रुतज्ञानस्य तथा श्रुतज्ञानवतोऽवर्णवादी भवति. तथा केवलिनः केवलज्ञानिनः केवलदर्शनस्य वाऽवर्णवादी भवति. तथा यः पुरुषो धर्माचार्यस्य धर्मदायकस्याऽवर्णवादी भवति, अयं जातिहीनः, अयं मूर्खः, अयं कषायीत्याद्याशातनाकृद्भवति. तथा संघसाधूनां, संघश्च साधवश्च संघसाधवस्तेषां संघसाधूनामवर्णवादी भवति. तथा पुनर्यो मायी, आत्मनः सतोऽवगुणानाच्छादयति, परेषामसतोऽवगुणान् वक्ति, सतो गुणान्न वक्ति, एतादृशो जीवो मृत्वा किल्विषिदेवत्वेनोत्पद्यते इत्यर्थः.

॥ मूलम् ॥—अणुबद्धरोसपसरो । तह य निमित्तंमि होइ पडिसेवी ॥ एएहिं कारणेहिं । आसुरियं भावणं कुणइ ॥ ७० ॥ व्याख्या-एताभ्यां कारणाभ्यां पुरुष आसुरीं भावनां करोति. असुरनिकायोत्पादिकां भावनां जनयति. एतौ कौ कारणौ? इत्याह—यः पुरुषोऽनुबद्धरोषप्रसरः, अनुबद्धश्चिरकालस्थायी रोषप्रसरः क्रोधप्रसरो यस्य सोऽनुबद्धरोषप्रसरः. तथा

यः पुरुषो निमित्तेऽतीतानागतवर्तमानरूपे त्रिविधे निमित्ते विषये, अथवा निमित्ते भूमांतरिक्षादिके प्रतिसेवी भवति, कारणं विनापि शुभाशुभनिमित्तप्रयोक्ता भवति, स मृत्वाऽसुरत्वेनोत्पद्यते, इति भावः. ॥ ७० ॥

॥ मूलम् ॥—सत्थग्गहणं विसभक्खणं च । जलणं जले पवेसो य ॥ अणायारभंडसेवी । जम्मणमरणाणि बंधंति ॥ ७१ ॥ व्याख्या—यः शस्त्रग्रहणं, शस्त्राणां खड्गक्षुरिकादीनामात्मवधार्थमुदरादौ ग्रहणं शस्त्रग्रहणं, तथा विषभक्षणं तालपुटादिकालकूटानामदनं, तथा ज्वलनमग्निप्रवेशकरणं, तथा जले प्रवेशकरणं कूपवाप्यादौ ब्रुडनं, पर्वतादिभ्यः पतनं च शब्दाद् गृह्यते. पुनरनाचार भांडसेवा, एतानि कारणानि कुर्वतो जना जन्ममरणकारणानि बध्नंति, संसारभ्रमणमुत्पादयंतीत्यर्थः, अत्राचारः शास्त्रोक्तव्यवहारः, न आचारोऽनाचारस्तेन भांडस्योपकरणस्य सेवा हास्यमोहादिभिः परिभोगोऽनाचारभांडसेवा. इयमपि क्लेशोत्पादनादनंतरभवोत्पादिकेत्यर्थः. एतेन चोन्मार्गप्रतिपत्त्या सन्मार्गविप्रतिपत्तिराक्षिप्ता. तथा चार्थतो मोहीभावनोक्ता, यतस्तल्लक्षणं चेदं—उम्मग्गदेसओ मग्ग—नासओ मग्गा विपक्खिवत्ति



35

य ॥ मोहेण य मोहित्ता । संमोहं जावणं कुणइत्ति. ॥ १ ॥ एतासां च फलं यदाहुः—एया-उ जावणाउ । जावित्ता देवदुग्गइं जंति ॥ तत्तो य चुया संता । पमंति जवसागरमणंतं ॥ ॥ १ ॥ इति. ॥ ७१ ॥

॥ मूलम् ॥—इइ पाउकरे बुद्धे । नायए परिनिव्वुए ॥ छत्तीसं उत्तरज्झाए । जवसिद्धी य संमएत्तिबेमि ॥ ७२ ॥ व्याख्या—ज्ञातनो बुद्धस्तीर्थकरो ज्ञातात् सिद्धार्थकुलाज्जात उत्पन्नो ज्ञातजः श्रीमहावीरः परिनिर्वृतो निर्वाणं गत इत्यन्वयः. किं कृत्वा? इत्यमुना प्रकारेण षट्त्रिंशत्संख्यानुत्तराध्यायान् प्रादुःकृत्य. उत्तराः प्रधाना अध्याया अध्ययनानि, उत्तराश्च तेऽध्यायाश्चोत्तराध्यायाः. तानर्थतः प्रकटीकृत्येत्यर्थः. कीदृशानुत्तराध्यायान्? जवसिद्धिकसंमतान्, जवसिद्धिका जव्यास्तेषां संमता मान्याः पठनीयास्तान्. ॥ ७२ ॥ इति जीवाजीवविजक्तिनामकमध्ययनं षट्त्रिंशं संपूर्णं. ॥ ३६ ॥

अथ निर्युक्तिकार एतेषामध्ययनानां नामान्याह गाथाजिः—विणय ( १–गाथा– ४७) परीसह ( २–गाथा–४६ ) चउरंग ( ३–गाथा–२० ) । संखया ( ४–गाथा–१३ )ऽकाममर-

ण (५-गाथा-३२) खुड्डागं (६-गाथा-१८) ॥ एलिज्ज (७-गाथा-३०) काविलिज्जं (८-गाथा-२०)। नमिपवज्जा य (९-गाथा-६२) दुमपत्तं (१०-गाथा-३७) ॥ १ ॥ बहुसुयपुज्ज (११-गाथा-३२) हरिएस (१२-गाथा-४७)। चित्तसंभूययं च (१३-गाथा-५३) इसुयारं (१४-गाथा-५३) ॥ सभिक्खु (१५-गाथा-१६) बंभचेरं च (१६-गाथा-१७) पावसमणिज्ज (१७-गाथा-२१) संजईयं (१८-गाथा-५४) ॥२॥ मियापुत्त (१९-गाथा-९९) महनियंठिय (२०-गाथा-६०)। समुद्दपालियज्ज (२१-गाथा-२४) तहय रहनेमि (२२-गाथा-९१) ॥ केसीगोयम (२३-गाथा-८९) समिईयं (२४-गाथा-२७)। जन्नइज्जं च (२५-गाथा-४३) तह समाचारी (२६-गाथा-५२) ॥ ३ ॥ सखलुंक (२७-गाथा-१४) मुक्खमग्गं (२८-गाथा-३६)। सम्मत्तपरक्कमं च (२९-गाथा-७३) तवमग्गं (३०-गाथा-३७) ॥ चरणविहि (३१-गाथा-२१) पमायठाणं (३२-गाथा-११)। तह कम्मपयडि (३३-गाथा-२५) लेसाणं (३४-गाथा-६१ ॥ ४ ॥ अणगारमग्ग (३५-गाथा-२१) जीवाजीवविभत्ति (३६-गाथा-२९२) बत्तीस अज्झयणे ॥ जो पढ-

इ सुणइ गुणइ । सो पावे णिज्जरा विउला ॥ ५ ॥ इति श्रीउत्तराध्ययननामसंबद्धं गाथापंचकं. अथ निर्युक्तिकार एवास्य ग्रंथस्य माहात्म्यमाह—

॥ मूलम् ॥—जे किर भवसिद्धिया । परित्तसंसारिया य जे भव्वा ॥ ते किर पढंति एए । छत्तीसं उत्तरज्झाए ॥ १ ॥ व्याख्या—किलेति संभावनायां ये केचिन्मनुष्या भवसिद्धिका भव्याः. च पुनः परीत्तसंसारिकास्ते भव्या एतानि षट्त्रिंशदुत्तराध्ययनान्यधीयंते, अर्थाद्येऽभव्या बहुलसंसारिणस्ते एतान्युत्तराध्ययनानि नाधीयंते. न पठंति. ॥ १ ॥

॥ मूलम् ॥—तम्हा जिणपण्णत्ते । अणंतगमपज्जवेहिं संजुत्ते ॥ अज्झाए जहजोगं । गुरुप्पसाया अहिज्जिज्जा ॥ २ ॥ व्याख्या—तस्मात्कारणाज्जिनप्रज्ञप्तानध्यायान् प्रक्रमादुत्तराध्यायान् यथायोगं गुरुप्रसादादधीयेत. यथायोगमिति, योग उपधानादुचितव्यापारस्तमनतिक्रम्येति यथायोगं. गुरूणां प्रसादश्चित्तप्रसन्नता गुरुप्रसादस्तस्माद्धेतोः पठेत. कथंभूतानुत्तराध्यायान्? अनंतागमपर्यवैः संयुक्तान्. अनंताश्च ते आगमाश्चानंतागमाः शब्दपरिच्छित्तिप्रकाराः. तथा पर्यवाश्चार्थपर्यवरूपाः, अनंतागमाश्च पर्यवाश्चानंतागमपर्यवाः, तैरनंताग-

मपर्यवैः, शब्दार्थनयैः पर्यायार्थनयैश्च संयुक्तान्. ॥ २ ॥

॥ मूलम् ॥—जोगविहीइ वहित्ता । एए जो लहइ सुतअछं वा ॥ भासेइ य भविय-जणो । सो पावइ निज्जरा विउला ॥ ३ ॥ व्याख्या—स भव्यो विपुलां निर्जरां प्राप्नोति. स कः ? यो योगविधिं वहित्वा योगोपधानतपोऽनुष्ठानविधिं कृत्वैतानुत्तराध्यायान् सूत्रार्थतो लभेत. पश्चाद्गुरुमुखात्सूत्रार्थं लब्ध्वा परं भाषेत, स क्षीणकर्मा भवतीत्यर्थः. ॥ ३ ॥

॥ मूलम् ॥—जस्साढत्ता एए । कहवि समप्पंति विग्घरहियस्स ॥ सो लक्खिजइ भ-व्वो । पुव्वरिसि एव भासंति ॥ ४ ॥ व्याख्या—स मनुष्यो भव्यो मुक्तिगामीति लक्ष्यते, पूर्वर्षयः पूर्वाचार्या एवं भाषंते. स इति कः ? यस्य पुरुषस्य विघ्नरहितस्य निर्विघ्नस्य सतः कथमपि यत्नेनाप्येते उत्तराध्यायाः ' आढत्ता ' पठनायारब्धाः संतः समाप्यंते संपूर्णीभवंति, स भव्यो भाग्यवान् ज्ञेय इत्यर्थः. भाग्यवतः पुरुषस्यैव निर्विघ्नमेतेऽध्यायाः संपूर्णीभवंति. यतः—श्रेयांसि बहुविघ्नानि । भवंति महतामपि ॥ इत्युक्तेः. ॥ ४ ॥ इति श्रीमदुत्तराध्ययन-सूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां जीवाजीव-

विनक्तिनामकं षट्त्रिंशमध्ययनं संपूर्ण. ३६. ॥ श्रीरस्तु. ॥



॥ अथ टीकाकारस्य प्रशस्तिः ॥

गच्छे श्वच्छतरे बृहत्खरतरे जागृद्यशोभासुरे । श्रीमान् सूरिरभूज्जिनादिकुशलः प्रौढप्रतापान्वितः ॥ यन्नाम स्मृतमात्रमेव हृदये विघ्नौघविद्रावणे । संधत्ते महिमानमत्र विततं दत्ते मनोवांछितं ॥ १ ॥ तच्छिष्यो विनयप्रभः समभवत् श्रीपाठकः पुण्यवान् । सिद्धांतोदधितत्वरत्ननिकरविष्कारदेवाचलः ॥ यद्वाक्सिंधुरपाकरोन्मतिमतां मिथ्यामलं मानसं । श्रोत्रद्वारगता मह्यातिसरला ह्यानवद्या सदा ॥ २ ॥ तदनु सदनं कारुण्यस्य प्रभावनिधिर्महान् । विजयतिलकः ख्यातो भूमौ बभूव महामतिः ॥ सकलविशदोपाध्यायानां शिरोमणिसन्निभः । विविधविबुधश्रेणिस्तुत्यः सदागममर्मवित् ॥ ३ ॥ तुष्टा वाचकपुंगवाय तपसा ध्यानेन शीले-

मपर्यवैः, शब्दार्थनयैः पर्यायार्थनयैश्च संयुक्तान् . ॥ २ ॥

॥ मूलम् ॥—जोगविहीइ वहित्ता । एए जो लहइ सुतअत्थं वा ॥ भासेइ य भवियजणो । सो पावइ निज्जरा विउला ॥ ३ ॥ व्याख्या—स भव्यो विपुलां निर्जरां प्राप्नोति. स कः? यो योगविधिं वहित्वा योगोपधानतपोऽनुष्ठानविधिं कृत्वैतानुत्तराध्यायान् सूत्रार्थतो लभेत. पश्चाद्गुरुमुखात्सूत्रार्थं लब्ध्वा परं भाषेत, स क्षीणकर्मा भवतीत्यर्थः. ॥ ३ ॥

॥ मूलम् ॥—जस्साढत्ता एए । कहवि समप्पंति विग्घरहियस्स ॥ सो लक्खिजइ भव्वो । पुव्वरिसि एव भासंति ॥ ४ ॥ व्याख्या—स मनुष्यो भव्यो मुक्तिगामीति लक्ष्यते, पूर्वर्षयः पूर्वाचार्या एवं भाषंते. स इति कः? यस्य पुरुषस्य विघ्नरहितस्य निर्विघ्नस्य सतः कथमपि यत्नेनाप्येते उत्तराध्यायाः ' आढत्ता ' पठनायारब्धाः संतः समाप्यंते संपूर्णीभवंति, स भव्यो भाग्यवान् ज्ञेय इत्यर्थः. भाग्यवतः पुरुषस्यैव निर्विघ्नमेतेऽध्यायाः संपूर्णीभवंति. यतः—श्रेयांसि बहुविघ्नानि । भवंति महतामपि ॥ इत्युक्तेः. ॥ ४ ॥ इति श्रीमदुत्तराध्ययनसूत्रार्थदीपिकायामुपाध्यायश्रीलक्ष्मीकीर्तिगणिशिष्यलक्ष्मीवल्लभगणिविरचितायां जीवाजीव-



35

विभक्तिनामकं षट्त्रिंशमध्ययनं संपूर्णं. ३६. ॥ श्रीरस्तु. ॥



॥ अथ टीकाकारस्य प्रशस्तिः ॥

गच्छे स्वच्छतरे बृहत्खरतरे जाग्रद्यशोभासुरे । श्रीमान् सूरिरभूज्जिनादिकुशलः प्रौढप्रतापान्वितः ॥ यन्नाम स्मृतमात्रमेव हृदये विघ्नौघविद्रावणे । संधत्ते महिमानमत्र विततं दत्ते मनोवांछितं ॥ १ ॥ तच्छिष्यो विनयप्रभः समभवत् श्रीपाठकः पुण्यवान् । सिद्धांतोदधितत्वरत्ननिकराविष्कारदेवाचलः ॥ यद्वाक्सिंधुरपाकरोन्मतिमतां मिथ्यामलं मानसं । श्रोत्रद्वारगता महातिसरला ह्यानवद्या सदा ॥ २ ॥ तदनु सदनं कारुण्यस्य प्रभावनिधिर्महान् । विजयतिलकः ख्यातो भूमौ बभूव महामतिः ॥ सकलविशदोपाध्यायानां शिरोमणिसन्निभः । विविधविबुधश्रेणिस्तुत्यः सदागममर्मवित् ॥ ३ ॥ तुष्टा वाचकपुंगवाय तपसा ध्यानेन शीले-

न वा । यस्मै पार्श्वजिनांह्रिसेवनपरा पद्मा ददौ वाग्वरं ॥ शिष्यान् भूरितरांश्चकार स ततः श्रीक्षेत्रशाखा ततः । शाखीव व्यरुचत्तया च मरुतां श्रीक्षेमकीर्तिर्गुरुः ॥४॥ सुशिष्यं क्षेमस्य प्रकटशमशिक्षां प्रददतं । ह्युपाध्यायं ध्यानं हृदि जिनवराणां विदधतं ॥ महामेधानावागमजलधिलब्धोत्तमतटं । तपोरत्नं रत्नं मुनिषु भजत भ्रांतिरहितं ॥ ५ ॥

तच्छिष्योऽभूच्छेदको दुर्नयाना—माचारज्ञोऽन्वर्थनामा पृथिव्यां ॥ सत्साधूनां पाठको द्वादशांग्या—स्तेजोराजः पाठकः पापहंता ॥ ६ ॥ तत्सद्विनेय इह वाचकमुख्य आसी—द्विद्याविनोदभवनं भुवनादिकीर्तिः ॥ श्रीहर्षकुंजरगणिश्च तदीयशिष्यो । वैराग्यमेव स च वाचकमुद्दधार ॥ ७ ॥ लब्धिमंडनगणिश्च ततोऽभू— द्वाचको विबुधवृंदसुवंद्यः ॥ हेमकांतिविनयांकितगात्रो । दुर्निवारहतमारविकारः ॥ ८ ॥ तच्छिष्यः परवादिवृंदवदनप्रोद्भूतयुक्त्युच्छलत्कल्लोलोत्करचंचलस्य महतो दुर्वादवारांनिधेः ॥ निःपाने विलसन्मतिर्वरयतिर्यः कुंभजन्माकृति—र्लक्ष्मीकीर्तिरिति स्फुरद्गुणततिः श्रीमानभूत्पाठकः ॥ ९ ॥ श्रीमल्लक्ष्मीकीर्तिसत्पाठकस्य । द्वौ गुर्वाज्ञाकारिणौ सद्विनेयौ ॥ तत्राप्येको वाचकः सोमहर्षः । साध्वाचारासेवने ल-

ग्धर्षेः १० ॥ साधुः श्रीगुरु वल्लभः सज्ञानानां । लक्ष्मीपूर्वो वल्लभश्च द्वितीयः ॥ तेनाकारि प्रस्फुटा दीपिकेयं । सिद्धांतस्य ह्युत्तराध्यायनाम्नः ॥ ११ ॥ न्यूनाधिक्यं बुद्धिमांद्याद्यदुक्तं । तद्दोषस्तद्वाग्रूपणं शोधनीयं ॥ भ्रांतिर्धर्मो ह्यस्ति छद्मस्थपुंसो । जात्याश्वोवा प्रस्खालत्येव गच्छन् ॥ १२ ॥ धुर्यप्रणीतास्वतिविस्तरासु । टीकासु नो मत्सरिता ममास्ति ॥ तेजस्तु ताभ्यः समवाप्य नाल्वत् । कृतात्मबोधाय सुदीपिकेयं ॥ १३ ॥ श्रीरस्तु ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात्. ॥

ॐ शांति! ॐ शांति!



॥ इति श्रीउत्तराध्ययनसूत्रं समाप्तं ॥

